ओं तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति
चेदेवमप्यनिर्मोक्षप्रसङ्गः ओं
ओं एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ओं

**५) भोक्त्रधिकरणम्**

ओं भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ओं

**६) आरम्भणाधिकरणम्**

ओं तदनन्यत्वं आरम्भणशब्दादिभ्यः ओं
ओं भावे चोपलब्धेः ओं
ओं सत्वाच्चावरस्य ओं
ओं असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण
वाक्यशेषात् ओं
ओं युक्तेः शब्दान्तराच्च ओं
ओं पटवच्च ओं
ओं यथा प्राणादिः ओं

**७) इतरव्यपदेशाधिकरणम्**

ओं इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ओं
ओं अधिकन्तु भेदनिर्देशात् ओं
ओं अश्मादिवच्च तदनुपपत्तिः ओं
ओं उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ओं
ओं देवादिवदपि लोके ओं
ओं कृत्स्नप्रसक्तिः निरवयत्वशब्दकोपो वा ओं

**८) श्रुतेस्तु शब्दमूलत्वाधिकरणम्**

ओं श्रुतेस्तु शब्दमूलत्वात् ओं
ओं आत्मनि चैव विचित्राश्च हि ओं
ओं स्वपक्षदोषाच्च ओं
ओं सर्वोपेता च तद्दर्शनात् ओं
ओं विकरणत्वान्नेति चेत्तदुक्तम् ओं

**९) न प्रयोजनाधिकरणम्**

ओं न प्रयोजनवत्वात् ओं
ओं लोकवत्तु लीलाकैवल्यम् ओं

**१०) वैषम्यनैर्घृण्याधिकरणम्**

ओं वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ओं
ओं न कर्माविभागादिति चेन्नानादित्वात् ओं
ओं उपपद्यते चाप्युपलभ्यते च ओं

**११) सर्वधर्मोपपत्यधिकरणम्**

ओं सर्वधर्मोपपत्तेश्च ओं

**इति द्वितीयाध्यायस्य प्रथमः पादः**

**अथ द्वितीयाध्यायस्य द्वितीयः पादः**

**१) रचनानुपपत्यधिकरणम्**

ओं रचनानुपपत्तेश्च नानुमानम् ओं
ओं प्रवृत्तेश्च ओं
ओं पयोम्बुवच्चेत्तत्रापि ओं
ओं व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ओं

**२) अन्यत्राभावाधिकरणम्**

ओं अन्यत्राभावाच्च न तृणादिवत् ओं

**३) अभ्युपगमाधिकरणम्**

ओं अभ्युपगमेऽप्यर्थाभावात् ओं

**४) पुरुषाश्माधिकरणम्**

ओं पुरुषाश्मवदिति चेत्तत्रापि ओं
ओं अङ्गित्वानुपपत्तेः ओं

**५) अन्यथानुमित्यधिकरणम्**

ओं अन्यथानुमितौ च ज्ञशक्तिवियोगात् ओं
ओं विप्रतिषेधाच्चासमञ्जसम् ओं

**६) वैशेषिकाधिकरणम्**

ओं महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ओं
ओं उभयथापि न कर्मातस्तदभावः ओं
ओं समवायाभ्युपगमाच्च साम्यादनवस्थितेः ओं
ओं नित्यमेव च भावात् ओं
ओं रूपादिमत्वाच्च विपर्ययो दर्शनात् ओं
ओं उभयथापि च दोषात् ओं
ओं अपरिग्रहाच्चात्यन्तमनपेक्षा ओं

**७) समुदायाधिकरणम्**

ओं समुदाय उभयहेतुकेऽपि तदप्राप्तिः ओं
ओं इतरेतरप्रत्यत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ओं
ओं उत्तरोत्पादे च पूर्वनिरोधात् ओं
ओं असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ओं
ओं प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ओं
ओं उभयथा च दोषात् ओं

ओं आकाशे चाविशेषात् ओं
ओं अनुस्मृतेश्च ओं

**८) असदधिकरणम्**

ओं नासतो दृष्टत्वात् ओं
ओं उदासीनानामपि चैवं सिद्धिः ओं
ओं नाभाव उपलब्धेः ओं
ओं वैधर्म्याच्च न स्वप्नादिवत् ओं

**९) अनुपलब्ध्यधिकरणम्**

ओं न भावोनुपलब्धेः ओं
ओं क्षणिकत्वाच्च ओं
ओं सर्वथानुपपत्तेश्च ओं

**१०) नैकस्मिन्नधिकरणम्**

ओं नैकस्मिन्नसम्भवात् ओं
ओं एवञ्चात्माकात्स्न्र्यम् ओं
ओं न च पर्यायादप्यविरोधो विकारादिभ्यः ओं
ओं अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ओं

**११) पत्युरधिकरणम्**

ओं पत्युरसामञ्जस्यात् ओं
ओं सम्बन्धानुपपत्तेश्च ओं
ओं अधिष्ठानानुपपत्तेश्च ओं
ओं करणवच्चेन्न भोगादिभ्यः ओं
ओं अन्तवत्वमसर्वज्ञता वा ओं

**१२) उत्पत्यधिकरणम्**

ओं उत्पत्यसम्भवात् ओं
ओं न च कर्तुः करणम् ओं
ओं विज्ञानादिभावे वा तदप्रतिषेधः ओं
ओं विप्रतिषेधाच्च ओं

**इति द्वितीयाध्यायस्य द्वितीयः पादः**

**अथ द्वितीयाध्यायस्य तृतीयः पादः**

**१) वियदधिकरणम्**

ओं न वियदश्रुतेः ओं
ओं अस्ति तु ओं
ओं गौण्यसम्भवात् ओं
ओं शब्दाच्च ओं
ओं स्याच्चैकस्य ब्रह्मवत् ओं
ओं प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ओं
ओं यावद्विकारन्तु विभागो लोकवत् ओं

**२) मातरिश्वाधिकरणम्**

ओं एतेन मातरिश्वा व्याख्यातः ओं

**३) असम्भवाधिकरणम्**

ओं असम्भवस्तु सतोऽनुपपत्तेः ओं

**४) तेजोधिकरणम्**

ओं तेजोऽतः तथा ह्याह ओं

**५) अबधिकरणम्**

ओं आपः ओं

**६) पृथिव्यधिकरणम्**

ओं पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ओं

**७) तदभिध्यानाधिकरणम्**

ओं तदभिध्यानादेव तु तल्लिङ्गात्सः ओं

**८) विपर्ययाधिकरणम्**

ओं विपर्ययेण तु क्रमोऽत उपपद्यते ओं

**९) अन्तराधिकरणम्**

ओं अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ओं
ओं चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ओं

**१०) आत्माधिकरणम्**

ओं नात्माश्रुतेः नित्यत्वाच्च ताभ्यः ओं

**११) ज्ञाधिकरणम्**

ओं ज्ञोऽत एव ओं
ओं युक्तेश्च ओं

**१२) उत्क्रान्त्यधिकरणम्**

ओं उत्क्रान्तिगत्यागतीनाम् ओं
ओं स्वत्मना चोत्तरयोः ओं
ओं नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ओं
ओं स्वशब्दोन्मानाभ्यां ओं
ओं अविरोधश्चन्दनवत् ओं
ओं अवस्थितिवैशेष्यादिति चेन्न अभ्युपगमात् हृदि हि ओं
ओं गुणाद्वाऽऽलोकवत् ओं

**१३) व्यतिरेकाधिकरणम्**

ओं व्यतिरेको गन्धवत्तथा च दर्शयति ओं

**१४) पृथगधिकरणम्**

ओं पृथगुपदेशात् ओं

ओ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ओं

**१५) यावदधिकरणम्**

ओं यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ओं

**१६) पुंस्त्वधिकरणम्**

ओं पुंस्त्वावत्वस्य सतोऽभिव्यक्तियोगात् ओं

ओं नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ओं

**१७) कर्तृत्वाधिकरणम्**

ओं कर्ता शास्त्रार्थवत्वात् ओं

ओं विहारोपदेशात् ओं

ओं उपादानात् ओं

ओं व्यपदेशाच्च क्रियायां न चेत् निर्दोषविपर्ययः ओं

ओं उपलब्धिवदनियमःओं

ओं शक्तिविपर्ययात् ओं

ओं समाध्यभावाच्च ओं

ओं यथा च तक्षोभयथा ओं

ओं परात्तु तच्छ्रुतेः ओं

ओं कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधा-वैयर्थ्यादिभ्यःओं

**१८) अंशाधिकरणम्**

ओं अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ओं

ओं मन्त्रवर्णात् ओं

ओं अपि स्मर्यते ओं

ओं प्रकाशादिवन्नैवं परः ओं

ओं स्मरन्ति च ओं

ओं अनुज्ञापरिहारौ देहसम्बन्धात् ज्योतिरादिवत् ओं

अं असन्ततेश्चाव्यतिकरः ओं

ओं आभास एव च ओं

**१९) अदृष्टाधिकरणम्**

ओं अदृष्टानियमात् ओं

ओं अभिसन्ध्यादिष्वपि चैवम् ओं

ओं प्रदेशादिति चेन्न अन्तर्भावात् ओं

**इति द्वितीयाध्यायस्य तृतीयः पादः**

**अथ द्वितीयाध्यायस्य चतुर्थः पादः**

**१) प्राणोत्पत्यधिकरणम्**

ओं तथा प्राणा :ओं

ओं गौण्यसम्भवात् ओं

ओं प्रतिज्ञानुपरोधाच्च ओं

**२) तत्प्रागधिकरणम्**

ओं तत्प्राक् श्रुतेश्च ओं

**३) तत्पूर्वकत्वाधिकरणम्**

ओं तत्पूर्वकत्वाद्वाचः ओं

**४) सप्तगत्यधिकरणम्**

ओं सप्त गतेर्विशेषितत्वाच्च ओं

ओं हस्तादयस्तु स्थितेऽतो नैवम् ओं

**५) अण्वधिकरणम्**

ओं अणवश्च ओं

**६) श्रेष्टाधिकरणम्**

ओं श्रेष्ठश्च ओं

ओं न वायुक्रिये पृथगुपदेशात् ओं

**७) चक्षुराद्यधिकरणम्**

ओं चक्षुरादिवत्तु तत्सह शिष्ट्यादिभ्यः ओं

ओं अकरणत्वाच्च न दोषः तथा हि दर्शयति ओं

**८) पञ्चवृत्यधिकरणम्**

ओं पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ओं

**९) अण्वधिकरणम्**

ओं अणुश्च ओं

**१०) ज्योतिराद्यधिकरण्**

ओं ज्योतिराद्यधिष्ठानं तु तदामननात् ओं

ओं प्राणवता शब्दात् ओं

ओं तस्य च नित्यत्वात् ओं

**११) त इन्द्रियाधिकरणम्**

ओं त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ओं

ओं भेदश्रुतेः ओं

ओं वैलक्षण्याच्च ओं

१२) **संज्ञाधिकरणम्**

ओं संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ओं

१३) **मांसाधिकरणम्**

ओं मांसादिभौमं यथाशब्दमितरयोश्च ओं

ओं वैशेष्यात्तु तद्वादस्तद्वादः ओं

**इति द्वितीयाध्यायस्य चतुर्थ पादः**

**अथ तृतीयाध्यायस्य प्रथमः पादः**

१) **तदन्तराधिकरणम्**

ओं तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ओं

२) **त्र्यात्मकत्वाधिकरणम्**

ओं त्र्यात्मकत्वात्तु भूयस्त्वात् ओं

३) **प्राणगत्यधिकरणम्**

ओं प्राणगतेश्च ओं

४) **अग्न्याद्यधिकरणम्**

ओं अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ओं

५) **प्रथमाधिकरणम्**

ओं प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ओं

६) **अश्रुतत्वाधिकरणम्**

ओं अश्रुतत्वादिति चेन्न इष्टादिकारिणां प्रतीतेः ओं

७) **भाक्ताधिकरणम्**

ओं भाक्तं वा अनात्मवित्वात्तथाहि दर्शयति ओं

८) **कृतात्ययाधिकरणम्**

ओं कृतात्ययेऽनुशयान् दृष्टस्मृतिभ्याम् ओं

९) **यथेताधिकरणम्**

ओं यथेतमनेवं च ओं

१०) **चरणाधिकरणम्**

ओं चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ओं

ओं आनर्थक्यमिति चेन्न तदपेक्षत्वात् ओं

ओं सुकृतदुष्कृते एवेति तु बादरिः ओं

११) **अनिष्टाधिकरणम्**

ओं अनिष्टादिकारिणामपि च श्रुतम् ओं

ओं संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ओं

ओं स्मरन्ति च ओं

१२) **अपि सप्ताधिकरणम्**

ओं अपि सप्त ओं

१३) **तत्राप्यधिकरणम्**

ओं तत्रापि तद्व्यापरादविरोधः ओं

१४) **विद्याधिकरणम्**

ओं विद्याकर्मणोरिति तु प्रकृतत्वात् ओं

१५) **तृतीयाधिकरणम्**

ओं न तृतीये तथोपलब्धेः ओं

ओं स्मर्यतेऽपि च लोके ओं

ओं दर्शनाच्च ओं

ओं तृतीये शब्दावरोधः संशोकजस्य ओं

ओं स्मरणाच्च ओं

१६) **तत्स्वाभाव्याधिकरणम्**

ओं तत्स्वाभायापत्तिरुपपत्तेः ओं

१७) **नातिचिरेणाधिकरणम्**

ओं नातिचिरेण विशेषात् ओं

१८) **अन्याधिकरणम्**

ओं अन्याधिष्ठिते पूर्ववदभिलापात् ओं

ओं अशुद्धमिति चेन्न शब्दात् ओं

१९) **रेतोधिकरणम्**

ओं रेतः सिग्योगोऽथ ओं

२०) **योन्यधिकरणम्**

ओं योनेः शरीरम् ओं

**इति तृतीयाध्यायस्य प्रथमः पादः**

**अथ तृतीयाध्यायस्य द्वितीयः पादः**

१) **सन्ध्याधिकरणम्**

ओं सन्ध्ये सृष्टिराह हि ओं

ओं निर्मातारं चैके पुत्रादयश्च ओं

ओं मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ओं

ओं सूचकश्च हि श्रुतेराचक्षते च तद्विदः ओं

२) **पराभिध्यानाधिकरणम्**

ओं पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ओं

३) **देहयोगाधिकरणम्**

ओं देहयोगाद्वासोऽपि ओं

**४) तदभावाधिकरणम्**

ओं तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ओं

**५) प्रबोधाधिकरणम्**

ओं अतः प्रबोधोऽस्मात् ओं

**६) कर्मानुस्मृत्यधिकरणम्**

ओं सएव च कर्मानुस्मृतिशब्दविधिभ्यः ओं

**७) सम्पत्यधिकरणम्**

ओं मग्धेर्धसम्पत्तिः परिशेषात् ओं

**८) न स्थानतोऽप्यधिकरणम्**

ओं न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ओं

ओं न भेदादिति चेन्न प्रत्येकमतद्वचनात् ओं

ओं अपि चैवमेके ओं

**९) अरूपाधिकरणम्**

ओं अरूपवदेव हि तत्प्रधानत्वात् ओं

ओं प्रकाशवच्चावैयर्थ्यम् ओं

ओं आह च तन्मात्रम् ओं

ओं दर्शयति चाऽथो अपि स्मर्यते ओं

**१०) उपमाधिकरणम्**

ओं अत एव नोपमा सूर्यकादिवत् ओं

**११) अम्बुवदधिकरणम्**

ओं अम्बुवदग्रहणात्तु न तथात्वम् ओं

**१२) वृद्धिह्रासाधिकरणम्**

ओं वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्या-
देवम् ओं

ओं दर्शनाच्च ओं

**१३) पालकत्वाधिकरणम्**

ओं प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च
भूयः ओं

**१४) अव्यक्तत्वाधिकरणम्**

ओं तदव्यक्तमाह हि ओं

ओं अपि संराधने प्रत्यक्षानुमानाभ्याम् ओं

ओं प्रकाशवच्चावैशेष्यम् ओं

ओं प्रकाशश्च कर्मण्यभ्यासात् ओं

ओं अतोनन्तेन तथा हि लिङ्गम् ओं

**१५) अहिकुण्डलाधिकरणम्**

ओं उभयव्यपदेशात्त्वहिकुण्डलवत् ओं

ओं प्रकाशाश्रयवद्वा तेजस्त्वात् ओं

ओं पूर्ववद्वा ओं

ओं प्रतिषेधाच्च ओं

**१६) परमताधिकरणम्**

ओं परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ओं

ओं दर्शनाच्च ओं

ओं बुध्यर्थः पादवत् ओं

**१७) स्थानविशेषाधिकरणम्**

ओं स्थानविशेषात् प्रकाशादिवत् ओं

ओं उपपत्तेश्च ओं

**१८) तथान्यत्वाधिकरणम्**

ओं तथान्यत्प्रतिषेधात् ओं

**१९) सर्वगतत्वाधिकरणम्**

ओं अनेनसर्वगतत्वमायामयशब्दादिभ्यः ओं

**२०) फलाधिकरणम्**

ओं फलमत उपपत्तेः ओं

ओं श्रुतत्वाच्च ओं

ओं धर्मं जैमिनिरत एव ओं

ओं पूर्वन्तु बादरायणो हेतुव्यपदेशात् ओं

**इति तृतीयाध्यायस्य द्वितीयः पादः**

**अथ तृतीयाध्यायस्य तृतीयः पादः**

**१) सर्ववेदाधिकरणम्**

ओं सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ओं

ओं भेदान्नेति चेदेकस्यामपि ओं

ओं स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ओं

ओं सलिलवच्च तन्नियमः ओं

ओं दर्शयति च ओं

**२) उपसंहाराधिकरणम्**

ओं उपसंहारोऽर्थाभेदात् विधिशेषवत्समाने च ओं

ओं अन्यथात्वं च शब्दादिति चेन्नाविशेषात् ओं

ओं न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ओं

ओं संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ओं

### ३) प्राप्त्यधिकरणम्

ओं प्राप्तेश्च समञ्जसम्

### ४) सर्वाभेदाधिकरणम्

ओं सर्वाभेदादन्यत्रेमे ओं

### ५) आनन्दाधिकरणम्

ओं आनन्दादयः प्रधानस्य ओं

### ६) प्रियशिरस्त्वाधिकरणम्

ओं प्रियशिरस्त्वाद्यप्राप्तिरूपचयापचयौ हि भेदे ओं

### ७) इतराधिकरणम्

ओं इतरे त्वर्थसामान्यात् ओं

### ८) आध्यानाधिकरणम्

ओं आध्यानाय प्रयोजनाभावात् ओं

ओं आत्मशब्दाच्च ओं

### ९) आत्मगृहीत्यधिकरणम्

ओं आत्मगृहीतिरितरवदुत्तरात् ओं

### १०) अन्वयाधिकरणम्

ओं अन्वयादिति चेत्स्यादवधारणात् ओं

### ११) कार्याधिकरणम्

ओं कार्याख्यानादपूर्वम् ओं

### १२) समानाधिकरणम्

ओं समान एवञ्चाभेदात् ओं

ओं सम्बन्धादेवमन्यत्रापि ओं

### १३) नवाधिकरणम्

ओं न वा विशेषात् ओं

ओं दर्शयति च ओं

### १४) सम्भृत्यधिकरणम्

ओं सम्भृतिद्युव्याप्त्यपि चाऽतः ओं

### १५) पुरुषाधिकरणम्

ओं पुरुषविद्यायामपि चेतरेषामनाम्नानात् ओं

### १६) वेधाधिकरणम्

ओं वेधाद्यर्थभेदात् ओं

### १७) हान्यधिकरणम्

ओं हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्यु-
पगानवत्तदुक्तम् ओं

ओं साम्पराये तर्तव्याभावात्तथा ह्यन्ये ओं

### १८) छन्दाधिकरणम्

ओं छन्दत उभयविरोधात् ओं

ओं गतेरर्थवत्वमुभयथान्यथा हि विरोधः ओं

ओं उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ओं

### १९) अनियमाधिकरणम्

ओं अनियमः सर्वेषामविरोधात् शब्दानुमानाभ्याम् ओं

### २०) यावदधिकरणम्

ओं यावदधिकारमवस्थितिराधिकारिकाणाम् ओं

ओं अक्षरधियान्त्वविरोधः सामान्यतद्भा-
वाभ्यामौपसदवत्तदुक्तम् ओं

### २१) इयदामननाधिकरणम्

ओं इयदामननात् ओं

ओं अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ओं

ओं अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ओं

### २२) व्यतिहाराधिकरणम्

ओं व्यतिहारो विशिंषन्ति हीतरवत् ओं

### २३) सत्याधिकरणम्

ओं सैव हि सत्यादयः ओं

### २४) कामाधिकरणम्

ओं कामादितरत्र तत्र चायतनादिभ्यः ओं

ओं आदरादलोपः ओं

ओं उपस्थितेस्तद्वचनात् ओं

### २५) निर्धारणाधिकरणम्

ओं तन्निर्धारणार्थनियमस्तद् दृष्टेः पृथग्ध्यप्रति-
बन्धफलम् ओं

### २६) प्रदानाधिकरणम्

ओं प्रदानवदेव हि तदुक्तम् ओं

### २७) लिङ्गभूयस्त्वाधिकरणम्

ओं लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ओं

### २८) पूर्वविकल्पाधिकरणम्

ओं पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ओं

ओं अतिदेशाच्च ओं

### २९) विद्याधिकरणम्

ओं विद्यैव तु निर्धारणात् ओं

**३०) श्रुत्यधिकरणम्**

ओं श्रुत्यादिबलीयस्त्वाच्च न बाधः ओं

**३१) अनुबन्धाधिकरणम्**

ओं अनुबन्धादिभ्यः ओं

**३२) प्रज्ञान्तराधिकरणम्**

ओं प्रज्ञान्तरपृथक्त्ववद् दृष्टिश्च तदुक्तम् ओं

**३३) न सामान्याधिकरणम्**

ओं न सामान्यादप्युपलब्धेः मृत्युवन्न हि लोकापत्तिः ओं

**३४) परेणाधिकरणम्**

ओं परेण च शब्दस्य ताद्विध्यं ताद्विध्यं भूयस्त्वात्वनुबन्धः ओं

**३५) एकाधिकरणम्**

ओं एक आत्मनः शरीरे भावात् ओं

ओं व्यतिरेकस्तद्भावभावित्वात् न तूपलब्धिवत् ओं

**३६) अङ्गावबद्धाधिकरणम्**

ओं अङ्गावबद्धस्तु न शाखासु हि प्रतिवेदम् ओं

ओं मन्त्रादिवद्वाविरोधः ओं

**३७) भूमाधिकरणम्**

ओं भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ओं

**३८) नानाशब्दाधिकरणम्**

ओं नानाशब्दादिभेदात् ओं

**३९) विकल्पाधिकरणम्**

ओं विकल्पो विशिष्टफलत्वात् ओं

**४०) काम्याधिकरणम्**

ओं काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ओं

**४१) अङ्गाधिकरणम्**

ओं अङ्गेषु यथाश्रयभावःओं

ओं शिष्टेश्च ओं

ओं समाहारात् ओं

ओं गुणसाधारण्यश्रुतेश्च ओं

**४२) नवाधिकरणम्**

ओं न वाऽतत्सहभावश्रुतेः ओं

ओं दर्शनाच्च ओं

**इति तृतीयाध्यायस्य तृतीयः पादः**

**अथ तृतीयाध्यायस्य चतुर्थः पादः**

**१) पुरुषार्थाधिकरणम्**

ओं पुरुषार्थोऽतः शब्दादिति बादरायणः ओं

ओं शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ओं

ओं आचारदर्शनात् ओं

ओं तच्छ्रुतेःओं

ओं समन्वारम्भणात् ओं

ओं तद्वतो विधानात् ओं

ओं नियमाच्च ओं

ओं अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ओं

ओं तुल्यन्तु दर्शनम् ओं

**२) असार्वत्रिकाधिकरणम्**

ओं असार्वत्रिकी ओं

ओं विभागः शतवत् ओं

ओं अध्ययनमात्रवतः ओं

**३) अविशेषाधिकरणम्**

ओं नाविशेषात् ओं

**४) स्तुत्यधिकरणम्**

ओं स्तुतयेऽनुमतिर्वा ओं

ओं कामकारेण चैके ओं

ओं उपमर्दं च ओं

ओं ऊर्ध्वरेतस्तु च शब्दे हि ओं

ओं परमर्शं जैमिनिरचोदना चोपवदति हि ओं

ओं अनुष्ठेयं बादरायणः साम्यश्रुतेः ओं

ओं विधिर्वा धारणवत् ओं

ओं स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ओं

ओं भावशब्दाच्च ओं

ओं पारिप्लवार्था इति चेन्न विशेषितत्वात् ओं

ओं तथाचैकवाक्योपबन्धात् ओं

ओं अत एव चाग्नीन्धनाद्यनपेक्षा ओं

ओं सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ओं

ओं शमदमाद्युपेतः स्यात्तथापि तु तद्विधेः तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ओं

ओं सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ओं

ओं अबाधाच्च ओं

ओं अपि स्मर्यते ओं
ओं शब्दश्चातोऽकामचारे ओं
ओं विहितत्वाच्चाश्रमकर्मापि ओं
ओं सहकारित्वेन च ओं

**५) उभयलिङ्गाधिकरणम्**

ओं सर्वथापि तु त एवोभयलिङ्गात् ओं
ओं अनभिभवं च दर्शयति ओं
ओं अन्तरा चापि तु तद्दृष्टेः ओं
ओं अपि स्मर्यते ओं
ओं विशेषानुग्रहं च ओं
ओं अतस्त्वितरज्ज्यायो लिङ्गाच्च ओं
ओं तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ओं

**६) आधिकारिकाधिकरणम्**

ओं न चाधिकारिकमपि पतनानुमानात्तदयोगात् ओं
ओं उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ओं
ओं बहिस्तूभयथापि स्मृतेराचाराच्च ओं

**७) फलश्रुत्यधिकरणम्**

ओं स्वामिनः फलश्रुतेरित्यात्रेयः ओं
ओं आर्त्विज्यमित्यौडुलोमिः तस्मै हि परिक्रियते ओं
ओं सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ओं

**८) कृत्स्नभावाधिकरणम्**

ओं कृत्स्नभावात्तु गृहिणोपसंहारः ओं
ओं मौनवदितरेषामप्युपदेशात् ओं

**९) अन्वयाधिकरणम्**

ओं अनाविष्कुर्वन्नन्वयात् ओं

**१०) ऐहिकाधिकरणम्**

ओं ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ओं

**११) मुक्तिफलाधिकरणम्**

ओं एवं मुक्तिफलानियमः तदवस्थावधृतेः तदवस्थावधृतेः ओं

**इति तृतीयाध्यायस्य चतुर्थः पादः**

**अथ चतुर्थाध्यायस्य प्रथमः पादः**

**१) आवृत्त्यधिकरणम्**

ओं आवृत्तिरसकृदुपदेशात् ओं
ओं लिङ्गाच्च ओं

**२) आत्माधिकरणम्**

ओं आत्मेति तूपगच्छन्ति ग्राहयन्ति च ओं

**३) न प्रतीकाधिकरणम्**

ओं न प्रतीके न हि सः ओं

**४) ब्रह्माधिकरणम्**

ओं ब्रह्मदृष्टिरुत्कर्षात् ओं

**५) आदित्याधिकरणम्**

ओं आदित्यादिमतयश्चाङ्ग उपपत्तेः ओं

**६) आसीनाधिकरणम्**

ओं आसीनः सम्भवात् ओं
ओं ध्यानाच्च ओं
ओं अचलत्वं चापेक्ष्य ओं
ओं स्मरन्ति च ओं
ओं यत्रैकाग्रता तत्राविशेषात् ओं

**७) आप्रायणाधिकरणम्**

ओं आप्रायणात्तत्रापि हि दृष्टम् ओं

**८) तदधिगमाधिकरणम्**

ओं तदधिगम उत्तरपूर्वाघयोः अश्लेषविनाशौ तद्व्यपदेशात् ओं
ओं इतरस्याप्येवमसंश्लेषः पाते तु ओं
ओं अनारब्धकार्ये एव तु पूर्वे तदवधेः ओं
ओं अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ओं
ओं अतोऽन्यदपीत्येकेषामुभयोः ओं
ओं यदेव विद्ययेति हि ओं
ओं भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ओं

**इति चतुर्थाध्यायस्य प्रथमः पादः**

**अथ चतुर्थाध्यायस्य द्वितीयः पादः**

**१) वाङ्मनसाधिकरणम्**

ओं वाङ्मनसि दर्शनाच्छब्दाच्च ओं
ओं अत एव च सर्वाण्यनु ओं

**२) मनः प्राणाधिकरणम्**

ओं तन्मनः प्राण उत्तरात् ओं

**३) अध्यक्षाधिकरणम्**

ओं सोऽध्यक्षे तदुपगमादिभ्यः ओं

**४) भूताधिकरणम्**

ओं भूतेषु तच्छ्रुतेः ओं

**५) नैकस्मिन्नधिकरणम्**

ओं नैकस्मिन् दर्शयतो हि ओं

**६) समनाधिकरणम्**

ओं समना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ओं
ओं तदपीतेः संसारव्यपदेशात् ओं
ओं सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ओं
ओं नोपमर्देनाऽतः ओं
ओं अस्यैव चोपपत्तेरूष्मा ओं
ओं प्रतिषेधादिति चेन्न शारीरात् ओं
ओं स्पष्टो ह्येकेषाम् ओं
ओं स्मर्यते ओं

**७) पराधिकरणम्**

ओं तानि परे तथा ह्याह ओं

**८) अविभागाधिकरणम्**

ओं अविभागो वचनात् ओं

**९) तदोकोधिकरणम्**

ओं तदोकोग्रज्वलनं तत्प्रकाशितद्वारो
विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च
हार्दानुगृहीतः शताधिकया ओं
ओं रश्म्यनुसारी ओं
ओं निशि नेति चेन्न सम्बन्धात् ओं
ओं यावद्देहभावित्वात् दर्शयति ओं
ओं अतश्चायनेऽपि हि दक्षिणे ओं

**१०) ओं योग्यधिकरणम्**

ओं योगिनः प्रति स्मर्यते स्मार्ते चैते ओं

**इति चतुर्थाध्यायस्य द्वितीयः पादः**

**अथ चतुर्थाध्यायस्य तृतीयः पादः**

**१) अर्चिराद्यधिकरणम्**

ओं अर्चिरादिना तत्प्रथितेः ओं

**२) वायुशब्दाधिकरणम्**

ओं वायुशब्दादविशेषविशेषाभ्याम् ओं

**३) तटिदधिकरणम्**

ओं तटितोऽधि वरुणः सम्बन्धात् ओं

**४) आतिवाहिकाधिकरणम्**

ओं आतिवाहिकस्तल्लिङ्गात् ओं
ओं उभयव्यामोहात् तत्सिद्धेः ओं

**५) वैद्युताधिकरणम्**

ओं वैद्युतेनैव ततस्तच्छ्रुतेः ओं

**६) कार्याधिकरणम्**

ओं कार्यं बादरीरस्य गत्युपपत्तेः ओं
ओं विशेषितत्वाच्च ओं
ओं सामीप्यात्तु तद्व्यपदेशः ओं
ओं कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ओं
ओं स्मृतेश्च ओं
ओं परं जैमिनर्मुख्यत्वात् ओं
ओं दर्शनाच्च ओं
ओं न च कार्ये प्रतिपत्यभिसन्धिः ओं
ओं अप्रतीकालम्बनान्नयतीति बादरायण उभयथा
च दोषात्तत्क्रतुश्च ओं
ओं विशेषं च दर्शयति ओं

**इति चतुर्थाध्यायस्य तृतीयः पादः**

**अथ चतुर्थाध्यायस्य चतुर्थः पादः**

**१) सम्पद्याधिकरणम्**

ओं सम्पद्याविहाय स्वेन शब्दात् ओं

**२) मुक्त्यधिकरणम्**

ओं मुक्तः प्रतिज्ञानात् ओं

**३) आत्माधिकरणम्**

ओं आत्मा प्रकरणात् ओं

**४) अविभागाधिकरणम्**

ओं अविभागेन दृष्टत्वात् ओं

### ५) ब्राह्माधिकरणम्

ओं ब्राह्मेण जैमिनिः उपन्यासादिभ्यः ओं

ओं चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ओं

ओं एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ओं

### ६) सङ्कल्पाधिकरणम्

ओं सङ्कल्पादेव च तच्छ्रुतेः ओं

### ७) अनन्याधिपत्यधिकरणम्

ओं अत एव चाऽनन्याधिपतिः ओं

### ८) अभावाधिकरणम्

ओं अभावं बादरिराह ह्येवम् ओं

ओं भावं जैमिनिः विकल्पाम्नानात् ओं

ओं द्वादशाहवदुभयविधं बादरायणोऽतः ओं

ओं तन्वभावे सन्ध्यवदुपपत्तेः ओं

ओं भावे जाग्रद्वत् ओं

ओं प्रदीपवदावेशस्तथाहि दर्शयति ओं

ओं स्वाप्ययसम्पत्योरन्यतरापेक्षमाविष्कृतम् ओं

### ९) जगद्व्यापाराधिकरणम्

ओं जगद्व्यापारवर्जम् ओं

ओं प्रकरणादसन्निहितत्वाच्च ओं

ओं प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डल-
स्थोक्तेः ओं

ओं विकारावर्ती च तथा हि दर्शयति ओं

### १०) स्थित्यधिकरणम्

ओं स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ओं

ओं भागमात्रसाम्यलिङ्गाच्च ओं

### ११) अनावृत्त्यधिकरणम्

ओं अनावृत्तिः शब्दादनावृत्तिः शब्दात् ओं

**इति श्रीवेदव्यासकृतब्रह्मसूत्रेषु
चतुर्थाध्यायस्य चतुर्थः पादः**

अणुभाष्यम्

## प्रथमोऽध्यायः

नारायणं गुणैसर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ।।१।।

विष्णुरेव विजिज्ञास्यस्सर्वकर्ताऽऽगमोदितः।
समन्यादीक्षतेश्च पूर्णानन्दोऽन्तरः खवत् ।। २ ।।

प्रणेता ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु ।
उच्यते विष्णरेवैकः सर्वैस्सर्वगुणत्वतः ।।३।।

सर्वगोऽत्ता नियन्ता च दृश्यत्वादुझ्झितः सदा।
विश्वजीवान्तरत्वाद्यैर्लिंगैस्सर्वैर्युतस्स हि ।।४।।

सर्वाश्रय पूर्णगुणः सोऽक्षरः सन् हृदब्जगः।
सूर्यादिभासकः प्राणप्रेरको दैवतैरपि ।।५।।

ज्ञेयो न वेदैः शूद्राद्यैः कम्पकोऽन्यस्य जीवतः।
पतित्वादिगुणैर्युक्तः तदन्यत्र च वाचकैः ।।६।।

मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः।
अव्यक्त कर्मवाक्यै(च्यै)श्च वाच्य एकोऽमितात्मकः।।७।।

अवान्तरं कारणं च प्रकृतिश्शून्यमेव च।
इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः।।८।।

शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः।।९।।

इति प्रथमोध्यायः

## अथ द्वितीयोध्यायः

श्रौतस्मृतिविरुद्धत्वात्स्मृतयो न गुणान्हरेः।
निषेद्धुं शक्नुयुर्वेदा नित्यत्वान्मानमुत्तमम् ।।१।।

देवतावचनादापो वदन्तीत्यादिकं(दिना) वचः।
नायुक्तवाद्यसन्नैव कारणं दृश्यते क्वचित् ।।२।।

असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् ।

वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः ।।३।।

स्वातन्त्र्यात्सर्वकर्तृत्वान्नायुक्तं तद्वेच्छ्रुतिः ।
भ्रान्तिमूलतया सर्वसमयानामयुक्तितः।।४।।

न तद्विरोधाद् वचनं वैदिकं शंक्यतां(शंकितां) व्रजेत् ।
आकाशादिसमस्तं च तज्जं तेनैव लीयते ।।५।।

सोऽनुत्पत्तिलयःकर्ता जीवस्तद्वशगः सदा।
तदाभासो हरिः सर्वरूपेष्वपि समः सदा।।६।।

मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः।
मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा ।।७।।

सर्वदोषोझ्झितस्तस्माद्भगवान् पुरुषोत्तमः।
उक्ता गुणाश्चाविरुद्धास्तस्य वेदे न सर्वशः ।।८।।

**इति द्वितीयोध्यायः**

## अथ तृतीयोध्यायः

शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा।
मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् ।।१।।

याति तस्माद्विरक्तस्सन् ज्ञानमेव समाश्रयेत्।।२।।

सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान्।
सर्वदेशेषु कालेषु स एक परमेश्वरः।।३।।

तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ।
सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः(सुरादिकैः)।
यथाक्रमं बहुगणैर्ब्रह्मणा त्वखिलैर्गुणैः।।४।।

उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम्(क्रमम्) ।
ज्ञेयो विष्णुर्विशेषश्च ज्ञाने स्यादुत्तरोत्तरम् ।।५।।

सर्वेऽपि पुरुषार्थास्स्युर्ज्ञानादेव न संशयः।
न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् ।।६।।

गुणदोषैस्सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ।
नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ।।७।।

**इति तृतीयोध्यायः**

## अथ चतुर्थाध्यायः

विष्णुर्ब्रह्म तथा दातेत्येवं नित्यमुपासनम्।
कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् ।।१।।

प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः।
अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः।।२।।

उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः (वायुर्विमुक्तिगः)।
प्रविश्य भुंजते भोगांस्तन्दतर्बहिरेव वा।।३।।

वायुर्विष्णुं प्रविश्यैव भोगांश्चैवोत्तरोत्तरम् ।
उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात्सुराः।।४।।

अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।
यान्त्युत्तमा न्नरोच्चाद्या ब्रह्मलोकात्सहामुना।।५।।

यथासंकल्पभोगांश्च चिदानन्दशरीरिणः।
जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते ।।६।।

यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान्।
अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः।
दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम् ।।७।।

पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः।
कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः।।८।।

नमो नमोऽशेषदोषदूरपूर्णगुणात्मने ।
विरिंचशर्वपूर्वेड्य वन्द्याय श्रीवराय ते ।।९।।

**।। इति चतुर्थाध्यायः ।।**

**।। कृष्णार्पणमस्तु ।।**

## अथ प्रथमोऽध्यायः

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम् अणुभाष्यम्

**नारायणं गुणैसर्वैरुदीर्णं दोषवर्जितम् ।**
**ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ।।१।।**

## श्रीसत्यनाथतीर्थविरचितं अणुभाष्यविवरणम्

इन्दिरापतिमानम्य पूर्णबोधादिकान् गुरून् ।
ब्रह्मसूत्राऽणुभाष्यस्य करिष्याम्यर्थसंग्रहम् ।

अधिकारिणां ब्रह्मज्ञानसिद्ध्यर्थं वेदाः प्रवृत्ताः । तन्निर्णयाय व्यासो ब्रह्मसूत्राणि चकार । पूर्णप्रज्ञस्तेषामणुभाष्यं कर्तुं सद्गुणविशिष्टं हरिं नत्वा चिकीर्षितं प्रतिजानीते **नारायणं** इति।

## श्रीराघवेन्द्रतीर्थविरचिता तत्वमञ्जरी

समस्तगुणसम्पूर्णं सर्वदोषविवर्जितम् ।
लक्ष्मीनारायणं वन्दे भक्ताभीष्टफलप्रदम् ।। १ ।।

संसारक्लेशसंभ्रान्तसज्जनावनतत्पराः ।
दयालवो महान्तस्तान् गुरून्नत्वा गुरुं (गिरं) भजे ।। २ ।।

ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ।
इत्युक्तिसाम्यात्सङ्क्षेपभाष्यं चात्यर्थविस्तरम् ।। ३ ।।

अनन्तोऽर्थप्रकटितस्त्वयाणौ भाष्यसंग्रहे ।
इत्याहुः श्रीमदानन्दतीर्थार्यौपसदा अपि ।। ४ ।।

अतोऽनेकार्थयुक्तस्य नैतद्भाष्यस्य विस्तृतौ ।
शक्तोऽस्म्यथापि लेशेन व्याख्यां कुर्यां यथामति ।। ५ ।।

**सूत्रार्थं हृदि कृत्वैव भाष्यार्थं सम्प्रकाशये ।**
**अविक्षेपेण बोधार्थं बुध्यन्तां तद्विवेकिनः ।। ६ ।।**

इह खल्वधिकारिणां अखिलक्लेशनिवृत्तिविशिष्टपरमानन्दावाप्तिनिदानभगवज्ज्ञानाय प्रवृत्तानां अनन्ताम्नायानां इतिकर्तव्यतारूपाणि नारायणावतारबादरायणकृतानि ब्रह्मसूत्राण्यन्यैः अन्यथाव्याख्यातानि अकृतप्रायाणि मन्वानो भगवानानन्दतीर्थमुनिः यथावद्व्याचिख्यासुः भाष्यानुभाष्ये विधाय संक्षेपभाष्यमपि विधित्सुरध्यायचतुष्टयोक्तगुणविशिष्टेष्टदेवतागुरुनतिपूर्वं चिकीर्षितं प्रतिजानीते **नारायणं** इति ।

## श्रीनृसिंहतीर्थविरचितं अणुभाष्यभावप्रकाशिका

**नत्वा मध्वस्थितं व्यासं सत्यानन्दान्गुरुन्मम ।**
**प्रकाश्यतेऽणुभष्यस्य भावस्तेषामनुग्रहात् ।।**

इह खलु सुखमेव मे स्याद्दुःखं मनागपि माभूदिति निखिलापेक्षितमाकांक्षमाणं तदुपायाज्ञानात् संसारक्लेशिनं सज्जनं प्रति भगवानेव तदुपाय इति ज्ञापनायाऽऽप्तो बन्धुरिव समस्तोऽप्याम्नायः प्रवृत्तः। स च कालादिबलेनोत्सन्नत्वात् इतिकर्तव्यताशून्यत्वाच्च तद्ज्ञापनासमर्थ इति पुनः मोक्षोपायाज्ञानात् क्लिश्यमानं सज्जनमवलोक्योत्पन्नकृपैः ब्रह्मरुद्रादिभिरर्थितो भगवान्नारायणो व्यासत्वेनावतीर्णः सन् मूलसंज्ञिकवेदराशेः हयग्रीवरूपेणधृतं ऋगादिरूपेण विभज्य पंचमं वेदनामकं व्यक्तीकृत्यैकैकस्मादेकैको भाग इति चतुर्धा विभज्य एकैके च अवान्तरसंज्ञकं ऋगादिवेदं चतुर्विंशत्यादिशाखाभेदेन विभज्य तदर्थनिर्णयाय तदितिकर्तव्यतात्वेन ब्रह्मसूत्राणि चकार। तानि अविद्यापटलपिहितनयनैरन्यैरन्यथाव्याख्यातानि ब्रह्मसूत्राणि भाष्यानुव्याख्यानन्यायविवरण-लक्षणप्रस्थानत्रयैः यथावद्व्याख्याय तेषामतिविस्तृतत्वेनाल्पबुद्धीनां पठनार्थज्ञानयोरशक्यत्वात्, अल्पबुद्धीनां पठनाद्यर्थं सूत्रार्थग्रहणव्याजेन प्रस्थानत्रयार्थसंग्रहरूपं च, तथा च वदति उपान्त्यश्लोके **सर्वशास्त्रार्थसंग्रह** इति, अणुभाष्यं व्याकरिष्यन्भगवानाचार्यवर्यः प्रारिप्सितभाष्यस्य कैवल्याद्यखिलफलसाधनतासिद्ध्यर्थं निरन्तराय परिसमाप्त्यर्थं च नारायणनमस्कारं ग्रथयति ग्रन्थारम्भं च प्रतिजानीते **नारायणं** इति ।

**नारायणं गुणैसर्वैरुदीर्णं दोषवर्जितम् ।**
**ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते।।१।।**

**सत्यनाथीया–** यो हि बहुगुणो विदोषः शास्त्रज्ञेयोऽधीतशास्त्रगम्यः स वन्द्यः। अतः सर्वैर्गुणैरुदीर्णं इति प्रथमाध्यायप्रतिपाद्यम्। दोषवर्जितं इति द्वितीयाध्यायविषयम्। ज्ञेयं इति तृतीयाध्यायविषयम् । ज्ञेयं गम्यं इति चतुर्थाध्यायविषयम् । दोषविरुद्धा गुणाः, गुणाश्रयं नारायणं

नत्वा गुरूंश्च नत्वा ब्रह्मसूत्राणामर्थः उच्यते वर्ण्यते इति श्लोकार्थः। नन्वधिकारि-विषयप्रयोजनसम्बन्धवच्छास्त्रं व्याख्येयमित्यतोऽनेनैव शास्त्राधिकारिविषयसम्बन्धाश्च श्रोतृप्रत्यंगभूताः प्रदर्शिताः। ज्ञेयत्वगम्यत्वयोः ज्ञातृगन्तृसापेक्षत्वाद्योग्यः तदिच्छुरेवाधिकारी । हरिरेव विषयः। तज्ज्ञानमनेन प्रयोजनम् । यथायोग्यं सम्बन्ध इति ज्ञातव्यम् । ईक्षतेरीक्षणविषयत्वात्समन्वया-दुपक्रमादिलिंगात्सम्यग्विचार्यमाणसर्वागमोक्तो विश्वजन्मादिकर्ता विष्णुरेव विशेषतो जिज्ञास्यः श्रवणादिना विचार्यो न रुद्रादिरित्यन्वयः।

**तत्वमञ्जरी–** सर्वैरानन्दज्ञानद्युतिबलौदार्यवीर्यादिभिर्गुणैः परिपूर्णम् । चिन्तासन्तापपुण्यपाप-लेपजनिमृतिप्रभृतिदोषवर्जितम् । सद्भिः वैराग्यभक्तिश्रवणमननध्यानजन्यापरोक्षज्ञानेन विषयीकर्तव्यम् । अत एव ज्ञानरूपोपायात्सद्भिः प्राप्यमपि नारायणं नत्वेति विशेषसमुच्चयेऽपिशब्दः। तेन विशिष्टस्यैव ज्ञेयत्वलाभात् विशिष्टं मन्दोपास्यं शुद्धं मुमुक्षुज्ञेयमिति प्रत्युक्तम्। गुरूंश्च नत्वेति गुरुदेवातानतिसमुच्चये चशब्दः। यद्वा टीकारीत्या गुरुदेवताभेदेऽरुचिसूचको अपिशब्दः। गुरुत्वाद्बहुवचनम् । उक्तश्च गीताभाष्यव्याख्याने बहुवचनं गौरवादेवेति। तमेव शास्त्रप्रभवं इत्यादिभिर्बहुभिः प्रकारैर्यद्गुरुत्वोपपादनं तेन गुरूंश्चेति बहुवचनान्तं पदं विवृतमिति सुधाशयं वा। सूत्रार्थो ब्रह्मसूत्रार्थः। अत्र नारायणमित्युक्त्यैवानन्दचिदाद्यात्मकदेहमिति लाभाद्देहसत्त्वे दोषवर्जितमित्ययुक्तं तदसत्त्वे ज्ञानादिगुणोदीर्णता न युक्तेति निरस्तम्। देहोऽयं मे सदानन्दो नैव प्रकृतिनिर्मितः। परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम् ।। इति द्वितीयाध्यायगीता-भाष्योक्तब्रह्मवैवर्तस्मृतेर्गुणैरुदीर्णमित्यस्य गुणोदीर्णदेहमित्यर्थः। यद्वा "आह च तन्मात्रं" इत्यत्र वक्ष्यमणदिशा तस्य गुणोदीर्णतोक्त्यैव तदभिन्नदेहस्यापि लाभः। अधिकं तु टीकायां बोध्यम् ।

**नृसिंहतीर्थ –** अत्र निरुपपदसूत्रशब्देन ब्रह्मसूत्रमुच्यते। तस्य च मुख्यार्थाभिधायकत्वात्। तेषां च तादृशत्वात्। वक्ष्यमाणसूत्रार्थं श्रोतृशेमूषीमनुकूलयिष्यन् आदौ प्रस्थावयितुं विशेषणचतुष्टयेन इष्टदेवतां विशनष्टि। तथाहि, आदिसूत्रे भगवतः प्रसक्त्या पुरुषार्थो भवतीति सूचिते अधिकारिणः शंकोन्मिषति। पुरुषान्तरे अनुपलभ्यमानं पुरुषार्थप्रदत्वं तस्य चेत्कीदृशोऽसाविति तां निवारयत् आद्याध्यायस्यार्थो **गुणैस्सर्वैरुदीर्णं** इति। तत्र ह्यपर्यायानंतशब्दानां महायोगवृत्या हरौ समन्वय-समर्थनद्वारा सर्वगुणोदीर्णतैव वर्णितेति। स च युक्त्यादिभिरुक्तसमन्वये विरोधिते दोषवानपि स्यादित्याशंकापरिहरतो द्वितीयस्यार्थो **दोषवर्जितं** इति। तत्र युक्त्यादीनामाभासत्ववर्णनेन निर्दोषत्वस्यैव भाषितत्वात् । एवंविधस्य प्रसादः कया विधया सिद्ध्यतीत्याकांक्षां पूरयतः तृतीयाध्यास्यार्थो **ज्ञेयं** इति। तत्र विरक्त्यादिभिस्तत्प्रीत्यर्थं तस्य ज्ञेयतायाः कथितत्वात् । प्रसन्नश्च कीदृशं पुमर्थं प्रयच्छतीत्याकांक्षां पूरयतस्तुरीयाध्यायार्थो **गम्यं** इति। तत्र ज्ञानिनो भगवत्प्राप्तिलक्षणमोक्षस्योदितत्वात्। अथ वा नैतन्नारायणपदं देवदत्तादिपदवत्साङ्केतिकं किंतु

विशिष्टगुणानाचष्टे इत्याशयवान् विशेषणचतुष्टयेन तन्निर्वक्ति। "दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्तत" इत्यादिना दोषारशब्दयोः पर्यायत्वात् । तदन्यतद्विरुद्धतदभावेषु तत्र वर्तन्त इत्यनेनास्य विरुद्धवाचित्वात्। दोषविरुद्धाः गुणाः नाराः। अयपयगतौ इत्यतः लुड्भावे करणाधिकरणयोश्च (पा.सू.३-३-११७) इत्यनेन अधिकरणे लुट् प्रत्यये लशक्तद्धिते(पा.सू.१-३-८) तद्धितवर्जितप्रत्ययाद्या लशकवर्गा इतः स्युरिति लकास्येत्संज्ञायां तस्य लोप(पा.सू.१-३-९) इति लोपे सति य इत्यस्य युवोरनाकौ(पा.सू.७-१-१) युवु इत्येतयोरनाकौ इत्यादेशौ भवत इत्यनादेशे सति अयनशब्दो गत्यधिकरणवाची। गतिश्च प्राप्तिः। तथा च नराणां अयनः प्राप्त्यधिकरण इति नारायणस्य गुणपूर्णत्वं नारायणशब्दार्थः। पूर्वोक्तवचनेन नञो अभावार्थत्वात्। अरशब्दस्य दोषवाचित्वात्। अयनशब्दस्यात्राश्रयवाचित्वात्। अराणां अयनः अरायणः अरायणो न भवतीति नारायण इति। निर्दोषत्वं नारायणशब्दार्थः। नरशब्दात् तस्येदम्(पा.सू.४-३-१२०) इति सम्बन्धार्थो अण्प्रत्यये णकारस्य लोपे सति नर अ इति स्थिते यस्येति च(पा.सू.६-४-१४८) भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च पर इत्यनेन नरशब्दादकारलोपः। अणप्रत्ययस्य तद्धितत्वात्। तद्धितेष्वचामादेः(पा.सू.७-२-११७) ञिति णिति च प्रत्यये परे अचां मध्ये आदेरचो वृद्धिः स्यादित्यनेनादिवृद्धौ नारं ज्ञानम्। अथवा नञ् उपपदाद्रीङ् क्षय इत्यस्मात् करणे डप्रत्यये च प्रत्ययाद्यौ चुटु इतौ स्त(पा.सू.१-३-७) इति डकारलोपे अ इति स्थिते टेः(पा.सू.६-४-१४३) डिति परे भस्य टेर्लोपस्स्यादिति ईकारलोपे र इति स्थिते न रीयते अनेनेति नर इति स्थिते प्रज्ञादिभ्यश्च(पा.सू.५-४-३८) इति स्वार्थिके अण् प्रत्यये यस्येति च(६-४-१४८) इति अकार लोपे आदिवृद्धौ नारं ज्ञानम् । अथवा नञ् उपपदादाटपूर्वात् री क्षय इत्यस्माद्भावे डप्रत्यये पूर्वोक्तरीत्या टिलोपे, आरः सम्यक् नाशः, न विद्यतेआरो येन तत् नारं ज्ञानम् । तत्र योग्यसर्वनाशाभावसम्पादकत्वात् दाङ्प्रयोगः। अथवा रमु क्रीडायामित्यस्माद् भावे ड प्रत्यये टेः(पा.सू.६-४-१४३) इति सूत्रेण रमू इति टिलोपे सति र इति रमणम् । अरं इत्यरमणं न विद्यते अरं येन तन्नारं ज्ञानम् । सकलदोषनिवर्तकत्वात् । "भिद्यते हृदयग्रंथिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "दृष्ट एवात्मनीश्वरे" इत्युक्तेः।

यद्वा न विद्यन्ते अरा दोषा येषां ते नाराः वेदाः। नाराणामिदमित्यस्मिन्नर्थे तस्येदं(पा.सू.४-३-१२०) इत्यपि कृते यस्येति च(३११) इत्यकारलोपे नारं ज्ञानम् । निर्दोषवेदोत्पन्नत्वात् तद्विषयतासम्बन्धेन तदाश्रयत्वान्नारायण इति ज्ञेयत्वं नारायणशब्दार्थः।

ननु नरसम्बन्धित्वान्नारं ज्ञानमित्यत्र वेदोत्पन्नत्वात् नारं ज्ञानमित्यत्र च नारशब्दात् वृद्धिर्यस्याचामादिस्तद्वृद्धं(पा.सू.१-१-७३)इति वृद्धसंज्ञायां वृद्धाच्छ (पा.सू.४-२-११४) इति छप्रत्यये आयनेयी(पा.सू.७-१-२) इति ईय इति छस्य ईयादेशे यस्येति च(पा.सू.६-४-१४८)

इति नरीत्यत्राकारलोपे नारीयमिति स्यान्नारमिति कथम्। मैवं। वानामधेयस्य वृद्धिसंज्ञेति रचनात्तदभावपक्षे इदं रूपम् । ओर्गुण(पा.सू.६-४-१४६) इत्यत्र गुणग्रहणेन संज्ञापूर्वोक्तविधिरनित्य इति ज्ञापनाद्वा। संज्ञया विधीयमानस्येव संज्ञानिमित्तस्यापि संज्ञापूर्वको विधिः अनित्य इति ज्ञापनाद्वा । अत एव तृतीयस्य द्वितीयपादे स्पृहिगृहि(पा.सू.३-२-१५८) इति सूत्रे श्रद्धालुरित्यत्र श्लौ(पा.सू.६-१-१०) इति द्विवचनमाशंक्य "संज्ञापूर्वको विधिरनित्य" इति द्विवचनं नेत्युक्तं पदमंजर्याम् । मुक्तगम्यत्वं च नारायणशब्दार्थः। नञो अभावार्थत्वात् । अरशब्दस्य दोषवाचित्वात् । न विद्यन्ते अराः दोषा एषां ते नाराः मुक्ताः। अथवा पूर्वोक्तरीत्या अरः क्षयः आरः सम्यक् क्षयः। तद्रहितत्वान्नाराः मुक्ताः। न विद्यते अरः तद्योग्यनाशो एषां तदिति तदाश्रयो नारायण इति। अत्र पूर्वपदात्संज्ञायामग(पा.सू.८-४-३) इति णत्वम्। ननु अरविरुद्धत्वान्नाराः गुणा इत्यादिव्युत्पत्तौ न लोपो नञः(पा.सू.६-३-७३) नञो नस्य लोप स्यादुत्तरपद इति न लोपे अर इति स्थिते तस्मान्नुडचि(पा.सू.६-३-७४) इति लुप्तनकारात्परतो नुडागमस्यादचि पर इति अकारानन्तरं नुडागमे अनरायण इति भवितव्यं नारायण इति कथं ? मैवम्। "न भ्राण्वपरान्नवेदान्नासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषुप्रकृत्या" (पा.सू.६-३-७५) "न गोप्राणिष्वन्यतरस्या" (पा.सू.६-३-७७) मिति सूत्रद्वये नगनाकादिशब्दानां निपातत्वेन तत्र यथा न लोपो नास्ति तथा अत्रापि तेष्वस्याप्युपसंख्येयत्वात्। प्रयोगबलात्। प्रयोगमूलं हि व्याकरणम् । ननु सूत्रानुसारेण नाकनगेति वक्तव्यं नगनाकेति कथम् । लघ्वक्षरं पूर्वं इत्युक्तेः नगनाकेति निर्देशः। अथवा नारायणशब्दे प्रथमं तत्पुरुषसमासः अनन्तरं बहुव्रीहिरुक्तः। तत्र तत्पुरुषपक्षे नलोपाभावस्य नगशब्दो दृष्टान्तः बहुव्रीहिपक्षे नलोपाभावस्य द्वितीयः । अतः क्रमोल्लंघनम् । अत एवानेकदृष्टान्तोपादानम् । अथवा न लोपो नञ(पा.सू.६-३-७३) इति सूत्रे रात्रेः कृतिविभाषा(पा.सू.६-३-७२) इति पूर्वसूत्राद्विभाषानुवृत्तेः । तस्य च व्यवस्थितविभाषात्वस्य न्यासकारेणोक्तत्वात्। नलोपाभावाद्युपपत्तेः। यद्वा न लोपो नञः(पा.सू.६-३-७३) इति सूत्रेण नञ्समासेन लोपो विहितः। न तु नसमासेऽपि प्रकृते नैकलेत्यादिवत् नसमासत्वात् नलोपाद्यप्राप्तिः। यद्यप्ययनशब्दस्य लुडन्तत्वात् । लुडन्तं नपुंसकमिति वचनात् नारायण इत्यनुपपन्नम्। तथापि लुटः टित्करणसामर्थ्येन त्रिलिंगत्वमपि लुडन्तस्य ज्ञायते। टित्करणे च टिड्ढ णञ(पा.सू.४-१-१५) इत्यादिना ङीप्प्राप्ते स्त्रीलिंगत्वस्य ज्ञापितत्वात्। तद्वत् पुल्लिंगत्वमपि। नित्यनपुंसकत्वे टित्करणं व्यर्थं स्यादिति। अथवा नारायणस्यैव नम्यत्वोपपादकमेतत् । यो हि बहुगुणो विदोषः शास्त्रज्ञेयो अधीतशास्त्रगम्यः स हि वन्द्यो भवति। देवतानतिसमनन्तरं गुरूनपि नमति **गुरूंश्च** इति। "गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि" इत्यतो न तन्नाम जग्राह। स्वस्य गुरुदेवताभेदे अरुचिं सूचयत्यपिपदेन । यद्यपि गुरुर्न देवताभिन्नः तथापि विशेषानुग्रहार्थं पृथङ्नतिरिति। अनेन शास्त्राधिकारिविषयप्रयोजनसम्बन्धाः श्रोतृप्रवृत्त्यंगभूताः सूचिताः ज्ञातव्याः। तत्स्मरणस्य महाफलहेतुत्वाच्च। तदुक्तं

अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत् ।
स्मृत्वा प्रारभतो ग्रंथं करोतीशो महत्फलं। इति।

नमस्काराधिकार्यादिग्रथनसूचने शिष्यशिक्षार्थम् । तथा हि ज्ञेयत्वगम्यत्वयोर्ज्ञातृगन्तृसापेक्षत्वात् योग्यस्तदिच्छुरेवाधिकारीति सूचितः। नारायण एव विषयः। ज्ञानगमने प्रयोजने। यथायोग्यं सम्बन्ध इति। ननु सूत्रार्थ उच्यते इति प्रतिज्ञा अनुपपन्ना। उत्तरत्र सर्वसूत्राणां व्याख्यानादर्शनादिति चेत्सत्यम्। भाष्यादावेव सर्वसूत्राणां व्याख्याततत्वान्नात्र प्रत्यधिकरणं व्याख्यातम्। तात्पर्यमात्रस्यैवोच्यमानत्वात् । अस्य संकोचग्रन्थत्वात् । तात्पर्यकथनस्यापि व्याख्यानत्वस्य सुप्रसिद्धत्वात् । अस्माभिस्तु भाष्याद्यनुसारेण मन्दबोधनार्थं सूत्रार्थसंग्रहस्य कृतत्वेन नेह पुनः क्रियते। किन्तु अधिकरणस्य भाष्यसम्बन्धमात्रं क्रियते। ग्रन्थगौरवभयादेव ।

## श्रीश्रीनिवासतीर्थविरचितं अणुभाष्यव्याख्यानम्

**श्रीरामं हनुमत्सेव्यं श्रीकृष्णं भीमसेवितम् ।**
**श्रीव्यासं श्रीमदानन्दतीर्थसंसेवितं भजे ।। १ ।।**

**यत्पादस्मृतिमात्रेण पाण्डित्यं प्राप्यते नरैः।**
**तान्वन्दे यादवाचार्यान्वेदेशमुनिसेवकान् ।। २ ।।**

**अथ तत्कृपया श्रीनिवासाख्यायुतसूरिणा।**
**बह्वर्थस्याणुभाष्यस्य लेशेनैकार्थ उच्यते।। ३ ।।**

शिष्टाचारपरिपालनाय देवतागुरुभक्त्योर्विद्यान्तरंगत्वपालनाय चेष्टदेवतागुरुनमस्कारं करोति **नारायणं** इति। समुद्रशायी नारायणः वासुदेवाख्यो गुणोदीर्णशब्दोक्तः। सर्ववासनोत्कर्षे क्रीडाज्ञानादिगुणैरुच्यत्वात् । सम्यक्दोषकर्षणात् संकर्षणो दोषवर्जितः इत्युक्तः। प्रकृष्टद्युतिमेयत्वात्प्रद्युम्नो ज्ञेयः। ज्ञानिप्राप्तिनिषेधरहितत्वादनिरुद्धो गम्यार्थः । तमेतं पञ्चरूपिणं गुरूंश्च ज्ञानाश्रयत्वेन नारायणशब्दवाच्यत्वात्। बहुवचनं बहुमानार्थम् । सर्वांशानां गुरुत्वद्योतनार्थं वा । (चशब्दः पृथङ्नमस्कारार्थः)। अपिशब्दात्सूत्रकारमपि नत्वा, सूत्रार्थः ब्रह्मसूत्राणामर्थः उच्यत इत्यर्थः। यद्यपि शास्त्रप्रतिपाद्या परदेवतैव भाष्यकारस्य गुरुः। स एव सूत्रकर्ताऽपि । तथापि देवताभक्त्या स्वगुरुभक्त्या शास्त्रगुरुभक्त्या च तमेव नारायणं पृथक् पृथक् नमस्करोतीति गम्यते।

नन्वाचार्यैरेव सूत्रव्याख्यानं भाष्यादौ कृतमेव। तत्किमर्थोऽयं ग्रंथ इति चेत् । अत्र वदन्ति। केचन आचार्यशिष्याः प्रतिदिनं भाष्यपठनशीलाः तद्व्यतिरेकेण किमपि न कुर्वन्ति। तदनुजिघृक्षयैतत्पाठेनापि तत्पाठफलप्राप्त्यर्थं तदर्थसंग्रहरूपमिदं ग्रंथं चकारेति ।

## छलारी शेषाचार्यविरचित अणुभाष्यतात्पर्यप्रकाशिका

**लक्ष्मीनारायणं देवं व्यासमध्वजयादिकान् ।**
**गुरून् मूलादिपरमान् वन्दे विद्यागुरूंश्च मे ।। १ ।।**

**बहुज्ञाननिबन्धेभ्यः बुद्ध्यारोहार्थमञ्जसा ।**
**ब्रह्मसूत्राऽणुभाष्यस्य तात्पर्यं सम्प्रकाश्यते ।। २ ।।**

अथ भगवान् आचार्यवर्यः – सङ्क्षेपविस्तराभ्यां च प्रवदन्ति मनीषिणः । बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात् । इति वचनात्, अन्यैः अन्यथा व्याख्यातानि ब्रह्मसूत्राणि भाष्यानुव्याख्यानन्यायविवरणप्रस्थानत्रये संक्षेपविस्तराभ्यां यथावद्व्याख्याय तेषां अतिविस्तृतत्वेन मन्दबुद्धीनां अनुदिनं पठनादावशक्तत्वात् तदर्थं अधिकरणार्थसंग्रहव्याजेन सर्वशास्त्रार्थसंग्रहरूपं अणुभाष्यं कर्तुकामः क्रमेण अध्यायचतुष्टयप्रतिपाद्यविशेषणविशिष्टदेवतात्वेन गुरुत्वेनोपाधिना च इष्टदेवतां श्रीनारायणं प्रणमन् चिकीर्षितं प्रतिजानीते – **नारायणं** इति। **गुरून्** व्यासान् । अत्र गुरुत्वादेव बहुवचनम् । उक्तं च गीताभाष्यटीकायां ''बहुवचनं गौरवादेव'' इति। अपिपदेन स्वस्य गुरुदेवताभेदे अरुचिं सूचयति। यद्यपि गुरुः न देवताभिन्नः तथापि विशेषानुग्रहार्थं पृथङ्नतिरिति। अनेनैव विषयादिकं सूचितमिति ज्ञातव्यम्। प्रेक्षावत्प्रवृत्यङ्गत्वात् , तत्स्मरणस्य महाफलहेतुत्वाच्च । तदुक्तम्– अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत् । स्मृत्वा प्रारभतो ग्रन्थं करोतीशो महत्फलम्। इति। तथाहि – ज्ञेयत्वगम्यत्वयोः ज्ञातृगन्तृसापेक्षत्वात् तद्योग्यः तदिच्छुरेवाधिकारी सूचितः। नारायण एव विषयः। ज्ञानगमने प्रयोजने। यथायोग्यं सम्बन्ध इति विशेषणचतुष्टयेन निरूपितम् । एतत्पद्यविवरणन्तु तत्त्वप्रकाशिकायां श्रीमज्जयतीर्थश्रीमच्चरणैः निपुणतरं कृतमिति तदेवानुसन्धेयम्। विस्तरभयात् नास्माभिः प्रपञ्च्यत इत्यवधेयम् ।

## श्रीनारायणाचार्यकृता अणुभाष्यटिप्पणी

**स्वानन्दविद्युतिबलादिगुणैकमूर्तिमज्ञानदुःखमुखराखिलदोषदूरम् ।**
**श्रुत्याद्युपासितदृशा सुजनैरवाप्यं तं ब्रह्मशब्दितमहं प्रणमामि विष्णुम् ।। १ ।।**

**वेदव्यासमुखारविन्दविलसत्सूत्राभिधक्षीरधेः**
**यः पूर्वोत्तरपक्षतो व्यरचयद्भाष्याभिधं मन्थनम् ।**
**तत्सारं कलशं सुधामयमिदं संक्षेपभाष्यं दधत्**
**स्वीयेभ्यः स शिवं तनोतु भगवानाचार्यधन्वन्तरिः ।। २ ।।**

**यदीयवाक्तरंगाणां विप्लुषो विदुषां गिरः ।**
**जयति श्रीधरावासो जयतीर्थपयोनिधिः ।। ३ ।।**

**संक्षेप(सज्ज्ञेय)भाष्ये निर्दिष्टानर्थान् सिद्धांतसाधितान् ।**
**सूत्राधिकरणारूढान् दर्शयामि विदां मुदे ।। ४ ।।**

**श्रीमध्ववाक्कामगवीस्तनंधयजयाननान् ।**
**प्रश्चोतदमृतस्तोकान् संगृह्णाम्यात्मतृप्तये ।। ५ ।।**

अथाविद्यापटलपिहितनयनैरन्यैरन्यथाव्याख्यातानां श्रीमद्ब्रह्मसूत्राणां यथावत्व्याख्यानरूपान् भाष्यानुव्याख्यानन्यायविवरणरूपान् ग्रंथान् विधाय तादृशातिगहनग्रंथार्थग्रहणधारणादिष्वसमर्थानां समर्थानां च प्राप्तमैहिकं परमपदं अभिलिप्सूनां पाठे च शक्तिविकलानां शक्तिमतामपि साधनद्वादश्यादौ संकुचितकाले पठितुमशक्नुवानानां शिष्याणामनुग्रहाय संक्षेपेण तदर्थप्रति-पादकतत्फलफलकं संक्षेपभाष्यमपि कर्तुकामो भगवानाचार्यवर्यः स्वयमन्तरायविधुरोऽपि शिष्यशिक्षायै प्रारिप्सितविघ्नविघातकमंगलमाचरंश्चिकीर्षितं प्रतिजानीते **नारायणं** इति। अत्राद्यविशेषणद्वयेन नारायणस्य नम्यताप्रयोजकं विशिष्टत्वं, तृतीयेन ग्रंथप्रतिपाद्यत्वरूपमधिकृतत्वं, चतुर्थेन प्राप्यत्वादिष्टत्वं च क्रमेण ध्वन्यते । **गुरून् इति** बहुवचनं स्वापेक्षया पूजार्थम् । स्वस्य नारायणैकगुरुकत्वात् । शिष्यापेक्षया गुरुपरमगुर्वादिगुरुमूलगुरूणां विद्यारम्भे प्रणामशिक्षार्थं च। **चापि**शब्दौ तु शिष्यान्प्रतिगुरुदेवताभेदसद्भावात् तदपेक्षया परस्परसमुच्चयार्थौ । स्वापेक्षया तु गुरोरेव देवतात्वात् न तत्र चशब्दप्रसक्तो भेद इत्यर्थसूचनार्थोऽपिशब्दः। तदिदमाह ''अपिशब्देन स्वस्य गुरुदेवताभेदे अरुचिं सूचयति'' इति । तेन गर्हार्थोऽयमपिशब्द इत्युक्तं भवति। ''अपिः पदार्थसंभावनान्वयसर्गगर्हासमुच्चयेषु'' इत्युक्तत्वात् । यद्यपि लक्ष्म्या अपि स्वं प्रति गुरुत्वात् तस्याश्च नारायणाद्भिन्नत्वात् चशब्दोऽप्युपपन्न एव। तथापि ब्रह्मपदयोग्यमात्मानं प्रति गुरूनिति बहुवचनसूचितपूज्यतातिशयशालिनो नारायणस्यैव मुख्यगुरुत्वम् । ''यो ब्रह्मणे प्रथमो गा अविन्दत्'' इति श्रुतिसिद्धप्रथमोपदेष्टृत्वात् । व्याचिख्यासितशास्त्रनिर्मातृत्वाच्च तमादाय भेदास्वरसो युक्त एवेति भावः। एतेनैव स्वस्य ब्रह्मपदयोग्यतां सूचयता परमाप्तिमूलकत्वेन स्वकृतभाष्ये प्रामाण्यातिशयवत्वेनात्युपादेयता ध्वन्यते । **सूत्रार्थ उच्यते** इति चिकीर्षितप्रतिज्ञायां सूत्रशब्दोऽधिकरणार्थः । अर्थशब्दस्त्वावधारणः। तेन सूत्राणां अधिकरणानां निष्कृष्टोऽर्थः सिद्धवत्कारेणोच्यते। न तु प्रतिसूत्रं विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनाभिधानमुखेन व्याख्यायते येन भाष्यादावेव तथा व्याख्यातत्वात् पुनर्व्याख्यानमनारम्भणीयं स्यात्। किन्तु उक्तरीत्या संक्षेपव्याख्यानस्यात्यावश्यकतया युक्तं ग्रंथारंभणमिति सूचितं भवति। यद्वाऽन्यैर्वृत्तिकारैः स्वाभिप्रायः सूत्रार्थतया वर्णितः । अस्माभिस्तु सूत्राणामेवार्थः सूत्रकाराभिप्रेत उच्यते । तदुपपादनार्थं **गुरून्** इति। साक्षादुपदेष्टृत्वेन मुख्यगुरूत्वमुक्तम् । तेन यथा चाचार्योपदेशं मयोच्यत इत्युक्तं भवति।

# मळगी श्रीसुब्रह्मण्याचार्यविरचिता अणुभाष्यकञ्जमालिका

पद्मापद्मभवादीड्यं पद्मार्चितपदं श्रिया ।
सद्भुत्पद्मस्वसद्मानं नौमि तं स्वात्मदं परम् ।। १ ।।

कृष्णं च वन्दे सम्मोदतीर्थं काकसरित्तटे।
वसतां चरणद्वंद्वं शरणं समियां सदा।। २ ।।

श्रीमद्वागडकोटीस्थमळगीत्युपनामकः ।
भीमार्याणामात्मबंधुः सुब्रह्मण्योऽणुभाष्यकम् ।। ३ ।।

आनन्दतीर्थरचितं विवृणोति यथामति।
सन्तः कुर्वन्त्वतितरां कृपां तस्मिन्कृपाबलाः।। ४।।

अप्यार्यैरपरैर्जनैः प्रविवृतं मायान्मनोम्लानतां
खद्योतो हरिदश्वदीपितपदे किं तत्र कुर्यादिति।
तत्पद्मानुगमेनगीस्तनुमनःशुद्ध्यै च तुष्ट्यै हरे
र्व्याख्यात्रेतनुभाष्यमत्रसुधियो यच्छन्तु चक्षुर्बलम् ।। ५।।

इह खलु भोजनादावखिलमहाभाष्यापाठनियमवतां ब्राह्मणातिक्रमे दोषो "द्वादश्यां यद्यपारणे" (भा.९-६-२७)इत्यादि भागवतादौ उक्तत्वात् अत्यल्पपारणावकाशवत्साधनद्वादश्यादौ कथं भवेत्तन्महाभाष्यमित्याकुलता तन्नियमभंगस्तत्फलराहित्यं च माभूत्सतामिति अनुक्रोशमना ब्रह्मसूत्राणि संकुच्य व्याचिख्यासुः श्रीमदाचार्यवर्यः अनायासेन तत्पठनफलं कथं केन स्यादित्यालोच्य तत्फलदं यत्सूत्राणुभाष्यमचीकरत्तस्य कैवल्याद्यखिलफलसाधनतासिद्ध्यर्थं निरन्तराय परिसमाप्त्याद्यर्थं च निखिलमंगलात्मकश्रीनारायणप्रणतिरूपमंगलं कृतं ग्रथयति। ग्रंथारंभं च प्रतिजानीते – **नारायणं** इति। नारायणं नत्वा नमस्कृत्य उच्यत इति कर्मणिप्रयोग-बलान्मयेतिकर्तृपदं लभ्यते । मया **सूत्रार्थः** सूत्राणां ब्रह्मसूत्राणां अर्थ उच्यते इत्यन्वयः। वच परिभाषण इत्यस्माद्धातोः कर्मणि लडात्मनेपदं प्रथमपुरुषैकवचनम्। कीदृशं नारायणमित्युक्ते तं विशेषणचतुष्टयेन विशिनष्टि । **गुणैस्सर्वैरुदीर्णं** इत्यादीना। **सर्वैः** समस्तैः **गुणैः** ज्ञानानन्दादिभिः **उदीर्णं** परिपूर्णं प्रथमाध्यायोक्तिरियम् । **दोषवर्जितं** दोषान् चिन्तासन्तापादीन् पारतन्त्र्यादीन्वा वर्जयतीति तथोक्तः (कर्त्तरिक्तः)स्तमिति द्वितीयाध्यायस्य। **ज्ञेयं** मुमुक्षुभिर्ज्ञातव्यम् वैराग्य-भक्त्युपेतश्रवणमननध्यानजन्यापरोक्षज्ञानविषयमिति तृतीयार्थोक्तिः। **गम्यं** गमलृ गतावित्यस्माद्गन्तुं प्राप्तुं योग्यस्तं अपरोक्षज्ञानिप्राप्यमिति चतुर्थार्थोक्तिः।

अथ वा नैतन्नारायणपदं देवदत्तादिपदवत्साङ्केतिकं किन्तु विशिष्टगुणानप्याचष्ट इत्याशय-वान्पदचतुष्टयेन तन्निर्वक्ति **गुणैः सर्वैः** इत्यादिना। दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः। गुणा

नारा इति ज्ञेयास्तद्वान्नारायणः स्मृतः ।। (१-१-८३)इत्यनुव्याख्यानोक्तेः अराः दोषास्तद्विरुद्धा नारा गुणास्तदाश्रयो नारायणः गुणोदीर्ण इत्यर्थः। अराश्रयो न भवतीति वा नारायणः दोषवर्जितः इत्यर्थः। यदि वा नाराः निर्दोषाः विपरीतबोधकत्वादिदोषशून्याः वेदास्तदुत्पन्नं ज्ञानं विषयतया तदाश्रयत्वान्नारायणः ज्ञेय इत्यर्थः । अरं अरतिः दुःखं वा तद्विधुरत्वान्नाराः मुक्ताः तेषामाश्रयो नारायणो मुक्तगम्य इति। नगनाकादिशब्दवद्ज्ञेयोऽयं शब्दः ।। सत्स्वन्यदेवेषु नारायणस्य नम्यत्वे को हेतुरित्यतस्तदुपपादयति **गुणैस्सर्वैः** इत्यादिना। अत्र गुणैः सर्वैरुदीर्णं दोषवर्जितमितिविशेषणद्वयेन विशिष्टत्वं, ज्ञेयं ज्ञानविषयमित्यनेनाधिकृतत्वं, गम्यं अपरोक्षज्ञानिप्राप्यम्, ईप्सितफलदातृत्व-कथनेनेष्टत्वं, तस्य नम्यत्वे हेतुरित्युक्तं भवति। ''गुरुप्रसादो बलवान्न तस्माद् बलवत्तरम्'' इत्युक्तेर्देवनमनानन्तरं गुरूनपि नमति । **गुरूंश्च** इति। परमोपदेष्टृत्वान्नारायणाभिन्नश्रीवेदव्यासगुरूनपि नत्वा इत्यर्थः। ''गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि'' इत्यतो न तन्नाम गृहीतम् । गुरूनिति बहुवचनप्रयोगो ''गुरावात्मनि बहुवचनं'' इति युज्यते ।।१।।

## लिंघेरीश्रीनिवासाचार्यविरचितं अणुभाष्यप्रकाशिका

**श्रीकांतं श्रीविरिञ्चादिमरुद्गणनिषेवितम् ।**
**नत्वा प्रकाशिकां कुर्वेऽणुभाष्यस्य यथामति।**

श्रीशिष्टशिखामणिः सर्वज्ञाचार्यवर्यः सूत्रार्थप्रवचनकाले समस्तमंगलस्वरूपं नारायणनतिरूपं मंगलं कृत्वा स्वचिकीर्षितं प्रतिजानीते **नारायणं** इति। उच्यत इति कर्मणि प्रयोगबलान्मयेति कर्ता लभ्यते। मया सूत्राणां अर्थः सूत्रार्थः उच्यत इत्यन्वयः। 'वच परिभाषणे' इत्यस्माद्धातोः कर्मणि लडात्मनेपदं प्रथमपुरुषैकवचनम् । किं कृत्वा इत्याकांक्षायां नारायणं नत्वा। नाराः मुक्ताः तेषामयनो नारायणः । कीदृशं नारायणं इत्युक्ते चतुःपदैः विशिनष्टि । **सर्वैः गुणैरुदीर्णं** समस्तज्ञानानंदादिगुणैरुदीर्णं परिपूर्णम् । पुनः कीदृशम् ? **दोषवर्जितं** दोषैः वर्जितो दोषवर्जितः तं चिंतासन्तापादिदोषरहितमपीत्यर्थः। पुनः कीदृशम्? **ज्ञेयं** वैराग्यभक्त्युपेतश्रवण-मनननिदिध्यासनजन्यज्ञानविषयम् । पुनः कीदृशम्? **गम्यं** गन्तुं योग्यः गम्यः तं ज्ञानिप्राप्यमित्यर्थः। अनेन विशेषणचतुष्टयेन नारायणशब्दार्थ उक्तो भवति । पुनः किं कृत्वा **गुरूंश्च नत्वा** परमोपदेष्टृत्वाद्वेदव्यासान्नत्वा। गुरूनिति बहुवचनप्रयोगस्तु ''गुरावात्मनि बहुवचनं'' इत्युक्तेः ।।१।।

## श्रीनारायणपण्डिताचार्यविरचचितः अणुभाष्यार्थसंग्रहः

**इन्दिरापतिमानम्य पूर्णबोधादिकान्गुरून् ।**
**ब्रह्मसूत्राऽणुभाष्यस्य करिष्ये चाऽर्थसंग्रहम् ।**

अथाधिकारिणः ब्रह्मज्ञानसिद्ध्यर्थं वेदाः प्रवृत्ताः। तन्निर्णयाय व्यासो ब्रह्मसूत्राणि चक्रे । पूर्णप्रमतिस्तद्ब्रह्मसूत्राणामणुभाष्यं कर्तुं तद्गुणविशिष्टं विष्णुं नमति **नारायणं** इति। यो हि बहुगुणो विदोषः शास्त्रज्ञेयोऽधीतशास्त्रगम्यः स वन्द्यो भवति। अतः सर्वैर्गुणैरुदीर्णमित्याद्याध्यायवेद्यम् । दोषवर्जितमिति द्वितीयाध्यायप्रतिपाद्यम् । ज्ञेयमिति तृतीयाध्यायवेद्यम् । गम्यमिति चतुर्थाध्याय प्राप्यम् । दोषविरुद्धगुणाश्रयं नारायणं नत्वा देवतावन्दनवत् गुरुवन्दनमप्यावश्यकमिति गुरूंश्च नत्वा ब्रह्मसूत्राणामर्थ उच्यते वर्ण्यते इति श्लोकार्थः।

अधिकारिविषयप्रयोजनसम्बन्धवत्शास्त्रं व्याख्येयमिति अनेनैव शास्त्राधिकारिविषय-प्रयोजनसम्बन्धाः च श्रोतृप्रवृत्त्यंगभूताश्च प्रदर्शिताः। ज्ञेयत्वगम्यत्वयोः ज्ञातृगन्तृसापेक्षत्वाद्योग्यस्त-दिच्छुरेव अधिकारी। हरिरेव विषयः। तद्ज्ञानगमने प्रयोजने। यथायोग्यं सम्बन्ध इति ज्ञातव्यमित्याशयः।। १ ।।

### विष्णुरेव विजिज्ञास्यस्सर्वकर्ताऽऽगमोदितः।
### समन्वयादीक्षतेश्च पूर्णानन्दोऽन्तरः खवत् ।।२।।

**सत्यनाथीया–** **विष्णुरेव विजिज्ञास्य** इत्यनेन अथातो ब्रह्मजिज्ञासा इत्याद्यनयार्थो दर्शितः। **सर्वकर्ता** इत्यनेन जन्माद्यस्य यत इत्यधिकरणार्थ उक्तः । **आगमोदित** इत्यनेन शास्त्रयोनित्वादित्यस्यार्थः। **समन्वयात्** इत्यनेन तत्तु समन्वयादित्यस्य **ईक्षतेः** इत्यनेनेक्षतेर्नाशब्द-मित्यस्य चार्थ उक्तो भवति। **पूर्णानन्द** इत्यनेनानन्दमयोऽभ्यासादिति नयार्थो निरूपितः। **अन्तरः** अन्तो रमतीति वा अस्तीति वाऽन्तरोऽन्तस्थः। अन्तर इत्यनेन अन्तराधिकरणं अन्तस्थ इत्यनेन अन्तस्तद्धर्मोदेशादित्यधिकरणार्थ उक्तो भवति । **खवत्** यथा खं अवकाशदातृत्वरूप-प्रवृत्तिनिमित्तात्खशब्दवाच्यं तथा हरिरपि तत्प्रवृत्तिरूपनिमित्तत्वादाकाशशब्दवाच्यः । **खवत्** ज्ञानरूपदीप्तिमान् आकाशशब्दवाच्यं इति वा। **खवत्** इत्यनेन आकाशस्तल्लिंगात् इति नयार्थो दर्शितः।

**तत्वमञ्जरी –** ननु जीवचैतन्यादन्यस्य ब्रह्मणो मानाभावेनाभावात्तस्य चाहंधीसिद्धत्वेना-विषयत्वात्, सत्यपि तज्ज्ञाने मुक्त्यदृष्ट्या फलाभावात्तत एवाधिकार्याद्यभावाच्च तद्विजिज्ञासस्वेत्युक्तिरयुक्तेत्याशङ्कायां प्राप्तायाम् – **ओं अथातो ब्रह्मजिज्ञासा ओं** इति । तद्व्याचष्टे **विष्णुरेव विजिज्ञास्य** इति। विष्णुरेव देशकालगुणापरिच्छेदरूपव्याप्तिमान्विष्णवाख्यो

**भगवानेव विजिज्ञास्यः। अथातः पदोक्ताभ्यां अधिकारिफलाभ्यां विशिष्टया श्रवणमननध्यानरूप-जिज्ञासया विषयीकर्तव्यः। तद्विषया सा कार्येति यावत् । न जीवः । येन तद्विजिज्ञास-स्वेत्युक्तिरयुक्ता स्यात् ।**

**विष्लृ व्याप्तौ बृहवृद्धौ इत्यवयवशक्त्या विष्णुब्रह्मशब्दयोरेकार्थत्वेन श्रौतब्रह्मपदेन तादृशार्थस्य प्रतीतेः। "स विष्णुराह हि" "तं ब्रह्मेत्याचक्षत" इत्युक्तेश्च । तस्य चानेवंरूपजीवात् भिन्नस्य अहंबुद्ध्या असिद्धत्वेनागुणसगुणत्वादिना विमतस्य विषयत्वसम्भवेन तज्ज्ञानान्मुक्तिरूपफलस्य तत्कामिनोऽधिकारिणश्च सम्भवात्तद्विजिज्ञासस्वेत्युक्तिर्युक्तेति भावः।**

यथासूत्रं विष्णोर्जिज्ञासा कर्तव्येति वाच्येऽप्येवमुक्तिरग्रेऽनुषङ्गार्थं विष्णुरित्यवश्यं वाच्ये सति तदनुरोधेन वा "तद्विजिज्ञासस्व"(तै.उ.३-१) "आत्मानं पश्येत्" "तमेवैकं जानथ" (मुं.उ.२-२-५)इत्येवमादितिङन्तमेवात्र नोदाहरणीयम् किन्तु "स विजिज्ञासितव्यः" "नारायणोऽसौ परमो विचिन्त्यः" "नारायणं महाज्ञेयं"(म.ना.उ.१४-४) "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" (बृ.उ.६-५-६) इत्याद्यपीति वा, विधेयजिज्ञासाविषयत्वेन ब्रह्मणोऽप्राधान्य-प्राप्तावुद्देश्यज्ञानविशेषणत्वेन प्राधान्यमस्तीति वा, ब्रह्मजिज्ञासेत्यत्र कर्मणि षष्ठ्या समासो न शेषे षष्ठ्यादिनेति वा सूचयितुम् ।

सूत्रे जिज्ञासेत्युक्तावपि वीत्युक्तिः श्रुत्यनुगमाय वा, अध्ययनशमदमादिसम्पत्तिरूपाधिकार-जिज्ञासोत्थज्ञानजन्यमुक्तिरूपफलाभ्यां अथातः शब्दोक्ताभ्यां जिज्ञासाया वैशिष्ट्यमस्तीति सूचनाय वेति ज्ञातव्यम् । विष्णुरिति ब्रह्मपदव्याख्यानेन जीवान्यविषयसिद्ध्यैव तज्ज्ञानस्य मुक्त्याख्यफलस्य च तद्योग्यस्याधिकारिणः सिद्धावपि फलस्य कर्मजत्वादिना जिज्ञासाफलत्वाप्राप्त्या शूद्रादिव्यावृत्ताधिकारस्याप्राप्त्या च तदुभयप्रापकाथातःशब्दार्थयोरप्यवश्यं वाच्यत्वाद्वीत्यनेन तदुक्तिः। तेन सूत्रस्य श्रुतिविसंवादः प्रत्युक्तः।

विजिज्ञास्यो विष्णुरित्यनुक्त्वा एवमुक्तिः 'अदेङ्गुण' (पा.सू.१-१-२)इत्यादाविव सति धर्मिणि धर्माश्चिन्त्या इति वा 'वृद्धिरादैच्' (पा.सू.१-१-१)इत्यत्रेव मङ्गलार्थं वा । आद्याध्यायद्वये विष्ण्वाख्यविषयस्य उत्तरद्वये विजिज्ञासायाः तत्रापि तृतीयाद्यद्विपाद्यां विशब्दोक्ताधिकारस्य चिन्तेति वक्ष्यमाणचिन्ताक्रमसूचनाय वेति ध्येयम् । सूत्रे तु स्मार्तेन शब्दतोऽर्थतश्चाधिक्येन प्राधान्यद्योतनायाथातःशब्दयोरेव पूर्वं निर्देश इति भावः। अत्र प्राधान्येन विष्णुरेव जिज्ञासितव्य इत्यर्थस्याभिमतत्वात् न "अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्" इत्यनेन विरोधः शङ्क्यः। "परिवारतया ग्राह्या अपि हेयाः प्रधानतः" (१-१-३६)इत्यनुभाष्योक्तेः "सर्ववर्णाश्रमैर्विष्णुरेक एवेज्यते सदा । रमाब्रह्मादयस्तस्य परिवारतयैव तु ।" इत्यन्यत्रोक्तेश्च ।।१।।

ननु "तद् ब्रह्म"(तै.उ.३-२) इति श्रौतब्रह्मशब्दस्य 'बृहजातिजीव' इति "ब्रह्माणि जीवाः सर्वेऽपि" इत्यादेर्जीवे रूढत्वाद्रूढित्यागेन यौगिकार्थविष्णुग्रहणे हेत्वभावात् । "यतो वा"(तै.उ.३-१) इति वाक्योक्तविश्वकर्तृत्वस्यादृष्टद्वारा जीवेऽपि सम्भवादुक्तं न युक्तमित्यत उक्तम् - **ओं जन्माद्यस्य यत** इति। तदर्थमाह **सर्वकर्ता** इति । विष्णुरेवेति वर्तते। सर्वेति तन्त्रमावृत्तिर्वा । सर्वस्य चिदचिदाख्यविश्वस्य । सर्वस्य जन्माद्यष्टकस्य । यथायोगं कर्ता विष्णुरेव न रूढो जीव इत्यर्थः। "यतो वा इमानि" (तै.उ.३-१) इति पूर्ववाक्योक्तासङ्कुचितसर्वसम्बन्धिजन्म-स्थित्यादिमुख्यकर्तृत्वरूपाद्बाधकात् । "तद् ब्रह्म" (तै.उ.३-२)इति श्रुतौ ब्रह्मशब्देन रूढित्यागेन यौगिकार्थविष्णुग्रहणोपपत्तेरुक्तं युक्तमिति भावः।

कर्तृत्वशब्दस्य तृजन्तत्वे याजकादित्वेन षष्ठीसमासः। ताच्छीलिकतृन्नन्तत्वे तु गम्यादित्वेन द्वितीया तत्पुरुष इति सर्वकर्तेति साधु ।।२।।

नन्विदमयुक्तं रुद्रादिः सर्वकर्ता सर्वज्ञत्वाद्व्यतिरेकेण चैत्रवत् । न चासिद्धिः। पाशुपतादिना तत्सिद्धेरित्याद्यनुमानेन वा पाशुपतादिनैव वा रुद्रादेः सर्वकर्तृत्वसिद्धेरित्यत उक्तम् - **ओं शास्त्रयोनित्वात्** इति । अत्र तदर्थः **आगमोदित** इति। विष्णुरेव सर्वकर्तेत्यस्ति । आ सम्यग् गम्यन्ते अर्था एभिरित्यागमा वेदवेदानुसारिग्रंथाः।

ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् ।
मूलरामायणं चैव पुराणं चैतदात्मकम् ।
ये चानुयायिनस्तेषां सर्वे ते च सदागमाः। इति तत्वनिर्णये ।

आसमन्ताद्गमयति धर्माधर्मौ परं पदम् ।
यच्चाप्यतीन्द्रियं त्वन्यत्तेनासावागमः स्मृतः।

(३-३-१४०)इत्युपासनापादीयानुभाष्ये चोक्तेः करणे कर्तृत्वोपचारः। 'ग्रहवृद्धनिश्चिगमश्च' (पा.सू.३-३-५८) इत्यकर्तर्यप्प्रत्ययस्मरणादिति सुधोक्तेः। आगमोदितो विष्णुरेव सर्वकर्ता नत्वानुमानिकः पाशुपताद्युक्तो वा रुद्रादिः सर्वकर्ता। तस्यागमोदितत्वाभावात् अनुमानादेः अदृष्टेऽशक्तत्वेनाऽमानत्वादिति भावः ।।३।।

नन्विदमसत् । रुद्रादेरप्यागमोदितत्वेन पाशुपतादिना व्याख्यानात् । आगमेऽपि "एक एव रुद्र" इत्यादिना प्रतीतेश्च रुद्रादिरप्यागमोदितोऽस्तु । पाञ्चरात्रादिना आगमोदितत्वेन व्याख्या-नादागमेऽपि "नारायण एवेदमग्र आसीत्" इत्यादिना प्रतीतेश्च। यथा विष्णुरागमोदितस्तद्वत् । एवं च द्वयोरपि कालभेदेनास्तु सर्वकर्तृत्वं द्वयोरप्येकैकदेशेनागमोदितत्वं चास्त्वित्यत उक्तम्-

**ओं तत्तु समन्वयात्** इति । तदर्थः **समन्वयात्** इति। आगमोदित इति, विष्णुरेवेति चास्ति। सम्यगन्वीयन्ते शक्तितात्पर्यविषयेण सम्बध्यन्ते । तथा ज्ञायन्त इति यावत् । वाक्यान्येतेनेत्यन्वय उपक्रमादिलिङ्गसमुदायो वा उपक्रमादिनिर्णीतो वाक्यानां तत्परत्वरूपसम्बन्धो वा। संश्चासावन्वयश्च तस्मात् समित्येतदागमेनाप्यन्वेति। तत्र कात्स्न्यं मुख्यत्वं चार्थः। समन्वयात्सम्यक् बलाबलत्वादिना परीक्षितादुपक्रमादिलिङ्गसमुदायात् तन्निर्णीततत्परत्वरूपसम्बन्धाद्वा विष्णुरेव सम्यङ् मुख्यया वृत्त्या कात्स्न्येनागमोदितस्तत्तात्पर्यविषयो वा । न तु पाशुपतादिरूपव्याख्यानेन वा, आपातप्रतीत्या वा रुद्रादिरित्यर्थः।

अयं भावः। उपक्रमादीनामेव प्रबन्धतात्पर्यविषयार्थप्रमापकत्वात् व्याख्येयस्य उपक्रमाद्य-ननुसारिव्याख्यानापातप्रतीत्योश्च अनेवंरूपत्वात् पाशुपतादेश्च वेदस्थोपक्रमाद्यननुसारेण तद्व्याख्यानाय प्रवृत्तत्वात् तदुक्तप्रकारेण वा आपातप्रतीत्या वा न रुद्रादिरागमार्थो ग्राह्य इत्यबाधेन प्राप्तमुख्यवृत्त्या कात्स्न्येनोपक्रमादिभिरागमोदितो विष्णुरेवेति। उपक्रमादयस्तु विष्णुमेवागमतात्पर्यार्थं प्रमापयन्तीत्येतदग्रे व्यक्तम् । पञ्चरात्रादिस्मृतयो वेदस्योपक्रमाद्यनुसारिण्य एवेति।

उपक्रमादीनामेव तत्परत्वरूपान्वयप्रमापकत्वसूचनाय उपक्रमादेरित्यनुक्त्वा समन्वयादिति यौगिकसौत्रपदमेवान्वकारि। उपक्रमादेर्बहुत्वेऽपि विष्णुपरत्वे ऐकमत्यद्योतनायैकवचनम् । "प्राणो ब्रह्म कं ब्रह्म" "ह्वयाम्यग्निं प्रथमं स्वस्तय" इति ब्रह्मविद्यासावित्रसूक्तयोः प्राणाद्युपक्रमस्य उपक्रान्त प्राणादिपरत्वप्रमापकत्वेन तात्पर्यव्यभिचारेऽपि प्रबललिङ्गादिना अबाधितत्वरूपपरीक्षितत्वविशिष्टस्य न व्यभिचार इति वक्तुं समित्यन्वयविशेषणम् ।।४।।

ननु समन्वयान्मुख्यतः कात्स्न्येनागमोदितो विष्णुरित्ययुक्तम् । तस्य "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तै.उ.२-४)इत्यवाच्यत्वाज्ञेयत्वयोरुक्तेः । न हि तादृशस्य मुख्यवृत्त्याऽऽगमोदितत्वं हरेः कात्स्न्येनेत्यतः प्राप्तम् -

**ओं ईक्षतेर्नाशब्दं** इत्यादिसूत्रसप्तकम् । तदर्थः **ईक्षतेश्च** इति । समिति, आगमोदितो विष्णुरेवेति च वर्तते। एवेति भिन्नक्रमः सम्पदेनान्वेति। ईक्षतेः ईक्षणात् । तस्य असम्बद्धस्य अहेतुत्वाद्योग्यतया ईक्षणीयत्वादिति लभ्यते। तथा चेक्षणीयत्वाज्ज्ञानविषयत्वात्सम्यगेव मुख्यवृत्त्यैवागमोदितो विष्णुः, न तु लक्षणादिनाऽनवस्थानादित्यर्थः। आगमैकजन्यज्ञानविषयत्वस्य मुख्यवृत्त्या तदुदितत्वं विनाऽयोगादिति भावः।

चशब्दस्तु वाच्यत्वहेत्वीक्षणीयत्वसहितस्यैव पूर्वहेतोर्मुख्यतो विष्णोरागमोदितत्वसाधकत्वात् उक्तसमुच्चये "तदभावे कुतोऽन्वय" इत्युक्तेः।

अथवा न केवलमीक्षणीयत्वात् किन्तु ईक्षणीयत्वयुक्त्यनुगृहीतात् ''आमनन्ति आविशन्ति'' ''अथ कस्मादुच्यत'' इति ''वचसां वाच्यमुत्तमम्'' (म.भा) इति ''अहमेव वेद्य'' (भ.गी.१५-१५)इत्यादिश्रुतिस्मृतिबलादिति वा, ''गतिसामान्याच्च'' इति वाऽनुक्तसमुच्चये। श्रुतिप्राप्तस्या-वाच्यत्वादेः केवलेक्षणीयत्वयुक्त्या निरासायोगात् । सर्वशास्त्रोत्पाद्यज्ञानस्यैकरूप्यरूपहेत्वसहकृतस्य समन्वयादित्युक्तोपक्रमादिहेतोः कात्स्र्न्येनागमोदितत्वसाधकत्वायोगात् ।

''सर्वे वेदा यत्पदमामनन्ति'' (क.उ.१-२-१५) ''सर्वे वेदा यत्रैकं भवन्ति'' ''सर्वे वेदा एकैव व्याहृतिः'' ''ब्राह्मं ज्ञानं परमं त्वेकमेव'' ''वेदैश्च सर्वैरहमेव वेद्यः''(भ.गी.१५-१५) ''वेदे रामायणे चैव'' इत्यादिश्रुतिस्मृतिशतैरनन्तागमानां विष्णुरूपैकार्थनिष्ठत्वोक्त्या गतिसामान्या-दीक्षणीयत्वाच्च मुख्यवृत्त्यैव कात्स्र्न्येनागमोदितः सर्वकर्ताऽनन्तगुणो विष्णुरेव जिज्ञास्य इति भावः ।।५।।

अथैतदध्यायाद्यर्थस्य भाष्ये स्फुटत्वादत्रापि तत्तत्पादान्ते कथनादादावनुक्तिः। यद्वा एतदध्यायाद्यर्थोक्तिपरतया ''प्रसिद्धैरन्यवस्तुषु । उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वत'' इत्येतत्पादान्तिमत्रिपादीमादावप्याकृष्य योज्यम् । तथा हि, वैदिकाः शब्दास्तावद् द्विविधाः। विष्णौ तदन्यत्र प्रसिद्धभेदात् । अन्यत्रप्रसिद्धा अपि अन्यत्र, अन्यत्रापि, अन्यत्रैव प्रसिद्धभेधेन त्रिविधाः। ते त्रिविधा अपि अन्यवस्तुषु प्रसिद्धैरिति सामान्योक्त्या गृह्यन्ते। तथा चान्यवस्तुषु प्रसिद्धैः सर्वैस्त्रिविधैर्नामलिङ्गात्मकैः शब्दैरिति शेषः। एको विष्णुरेवोच्यते। प्राक्समन्वयादित्युक्तमेवात्राध्याये प्रपञ्चयतीत्यर्थः। विष्णौ प्रसिद्धा इत्यत्रापि तत्र तत्रापि तत्रैव इति त्रैविध्यसम्भवेऽपि तत्रापीत्युक्तानां अन्यत्रापीत्यनेन संग्रहीतत्वात् । तत्र तत्रैवेत्यवान्तरभेदस्य तेषां अव्युत्पाद्य समन्वयत्वेना-विवक्षितत्वादैकविध्यमिति ध्येयम् ।

ननूक्तसर्वकर्तृत्वरूपब्रह्मलक्षणस्यातिव्याप्तिवारणाय कारणवाक्यानामेव प्रतिज्ञातः समन्वयः। स एवोत्तरत्र प्रपञ्चनीयः। नत्वशेषवैदिकशब्दसमन्वय इत्यत उक्तम् - **सर्वगुणत्वत** इति। सर्वे गुणा यस्य तस्य भावस्तस्मै। ''आद्यादिभ्यः उपसङ्ख्यानम्'' इति तसिः। ब्रह्मशब्दोक्तगुणपूर्णत्वार्थ-मित्यर्थः। तथा च वक्ष्यति ।अतोऽनन्तगुणो यच्छब्दा योगवृत्तय इति। उक्तं चानुभाष्ये (१-१-२३७) ''जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये। ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः। अन्वयः सर्वशब्दानां गुणसर्वस्ववेदक इति।''

एतत्पादार्थमाह - **प्रसिद्धैः** इति। नामात्मकैः शब्दैरिति शेषः ।।

ननु विष्णुरेव विजिज्ञास्य इत्युक्तम् । ''तद् ब्रह्म'' इत्युक्तजिज्ञास्यब्रह्मणः ''ब्रह्म पुच्छं प्रतिष्ठा'' (तैत.२-५) इत्यानन्दमयस्य पादाख्यावयत्वोक्तेरानन्दमयस्य च विकारार्थमयडन्त-शब्दोक्तत्वेनाब्रह्मत्वादब्रह्मावयवस्याजिज्ञास्यत्वात् अवयविनाऽवयवजिज्ञासायोगाच्च इत्यत उक्तम् ।

**ओं आनन्दमयोऽभ्यासात्** इत्यादिसूत्राष्टकम् ।। तदर्थः - **पूर्णानन्द** इति। **प्रसिद्धैरन्यवस्तुषु। उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः।** इति अत्रोत्तरत्र च प्रतिपदमन्वेति।

विष्णुरेवेति वर्तमानेऽपि तत्रैवकारस्य पूर्वं मुख्यवृत्त्यैव न लक्षणयेत्यर्थलाभाय सम् पदेनान्वित-तया विष्णुपदेनान्वयविच्छेदात्। तत्तु समन्वयादित्यतः तत्वित्यस्याध्यायपरिसमाप्ति प्रतिनयं प्रायेणानुवृत्तिरितिसूचनार्थत्वात् । पञ्चाधिकरण्या अध्यायपादबहिर्भावद्योतनार्थत्वाच्च विष्णुरेवेति पुनरुक्तिः।

आनन्दमयशब्दार्थभूतः पूर्णानन्दः एकः। स्वावयवादिनाभिन्नो विष्णुरेव। तथाचान्यवस्तुषु प्रसिद्धैरानन्दमयप्रकरणस्थैरानन्दमयतद्विशेषणैः सर्वैः शब्दैरेको विष्णुरेवोच्यते। न तु विकारी कश्चित्प्रकृत्यादिः। येन तस्य जिज्ञास्यताऽयुक्ता स्यादित्यर्थः। आनन्दमयशब्दार्थस्य पूर्णानन्दस्य विष्णुत्वे तत्पदवाच्यत्वस्यावश्यकत्वादिति भावः।

एक इत्युक्त्या "नेह नानास्ति किञ्चन" इत्यादिश्रुतेः अचिन्त्यशक्त्या अवयवावयविनोरैक्यान्ना-वयवत्वविरोध इति सूचितम् । एवेति "नेतर" इत्यादेरर्थः।

अत्र पूर्णानन्द इत्युक्त्या प्राचुर्यादितिसूत्रोक्तो मयटः प्राचुर्यार्थो दर्शितः। तत्र व्याख्येयपदानुरोधेनानन्दपूर्ण इति वाच्येऽप्येवमुक्तिः प्राचुर्यस्य विशेष्यत्वे विरोधिलेशधीसत्त्वेऽपि न विशेषणत्व इति परैरभ्युपेतत्वात् विष्णोरानन्दप्राचुर्ये ब्राह्मणप्रचुरो ग्राम इत्यत्राल्पशूद्रसत्त्वप्रतीतिरिव विष्णावनानन्दलेशधीरपि स्यादिति शङ्कानिरासाय। तन्निरासप्रकारश्च यथा विशेषणत्वे विरोधिप्रसक्तिर्नास्ति तथा विशेष्यत्वेऽपि नक्षत्रादिस्थतेजोल्पत्वापेक्षया प्रकाशप्रचुरो रविरितिवत् जीवगतसुखाल्पत्वापेक्षयानन्दप्रचुर इत्युक्तेऽपि दोषाभावादिति।

ननु सप्तभिर्नयैः सप्तनामसमन्वयसिद्धावपि समन्वयसूत्राभिमतसर्ववेदगताशेषनामसमन्वयासिद्ध्या ब्रह्मपदेन अभिमतानन्दगुणवत्त्वं प्रधानलक्षणं न सिध्येदित्यतो वा ।

ननु मयटः प्राचुर्यार्थत्वमभ्युपेत्य पूर्णानन्दस्यानन्दमयशब्दार्थत्वोक्तिरयुक्ता । विकारार्थान्न-मयादिप्रायपाठविरोधादित्यतो वाप्युक्तम् **अन्यवस्तुषु** इत्यादि। शब्दैरिति शेषः। अन्यवस्तुषु कोशादिषु प्रसिद्धैः सर्वैर्गुणिसामान्यवाचकैरन्नमयादिभिः शब्दैरुच्यते **विष्णुरेवैक** इति। किं विकारेण नेत्याह **सर्वगुणत्वतः**। पूर्णत्वादिरूपगुणत्वतः। "सर्वं पूर्णमिहोच्यत" इत्युक्तेः। अन्नमय-प्राणमयमनोमयविज्ञानमयेष्वपि प्राचुर्याङ्गीकारात्, "अद्यतेत्ति च" इत्यादिवाक्यशेषोक्तयोगेन "महाभोक्ता महाभोग्य इत्यर्थोन्नमये भवेत् । महाप्राणो महाबोधो महाविज्ञानवानपि ।" (१-१-१८०) इत्याद्यनुभाष्योक्तप्रवृत्तिनिमित्तवत्त्वेन तैः शब्दैरुच्यत इति। तर्हि तेषामप्यनेकत्वादयमप्यनेकः किं नेत्याह **एक** इति।। "न स्थानतोऽपि" इति न्यायादिति भावः।

कथमेकोऽनेकैरुच्यते । उच्यत एव। **सर्वगुणत्वतः**। सर्वं गुणभूतं अप्रधानं नियम्यं यस्य तस्य भावः तस्मात् । सर्वस्य तत्तन्त्रत्वात् । "शरीररूपकविन्यस्तगृहीतेः" इति न्यायेन अन्नमयादि-तत्तत्कोशगततत्तन्नियन्तृरूपाणां एव तैस्तैःशब्दैरुच्यमानत्वेन तेषामनेकत्वेन तत्तद्गतस्याप्यनेकैरुक्ति-सम्भवात् । हृदयाकाशस्याङ्गुष्ठमात्रत्वेन तद्गतरूपस्याङ्गुष्ठमात्रपदेनोक्तिवत् । व्यक्तमेतदग्रे ह्यपेक्षयेत्यत्र । एतेनान्यत्वान्तरत्वशरीरत्वाद्युक्तिरपि समाहिता । यथोक्तम् "न स्थानतोऽपि परस्य" (ब्र.सू.३-२-११)इत्येतन्नयभाष्ये अभेदेऽपि भेदव्यपदेशः स्थानभेदादिति। तर्ह्युपचार एव नेत्याह **सर्वगुणत्वतः**। सर्वसङ्ख्यारूपगुणवत्वात् । गुहानयानुव्याख्याने(ब्र.सू.१-२-११) "द्वित्वञ्चैकस्य युज्यत" इत्युक्तेर्भेदाभावेऽपि तत्प्रतिनिधिना विशेषेण तद्रूपेष्वेकत्वसङ्ख्योपपत्तिरिति।

ननु भवेदेतत्सर्वं विष्णोरन्नमयादिशब्दवाच्यत्वे। तदेव निर्बीजमिति चेन्न निर्बीजं **सर्वगुणत्वतः**। मुक्तिहेतुवेदनत्व-मुक्तप्राप्यत्व-ज्येष्ठत्व-देवोपास्यत्व-जगच्चेष्टकत्वादितत्तत्प्रकरण-स्थसर्वगुणत्वात् **सर्वैरुच्यत** इति। उपलक्षणं चैतत्। ब्रह्मात्मशब्दाभ्यां चेत्यपि ध्येयम् । मयटस्तादात्म्यार्थत्वेप्युप-पत्तेर्न पूर्णत्वरूपप्राचुर्यार्थत्वं बीजवदित्यपि प्रयुक्तम् । "आकाश आनन्दो न स्यात्" "को ह्येवान्यात्कः प्राण्यात्" (तै.उ.२-७) इत्युक्तपूर्णानन्दत्वसाधकसर्वचेष्टकत्व- गुणवत्त्वादिति। एतेन "तद्धेतु" "मान्त्रवर्णिक" "अस्मिन्नस्य" च इति सूत्रत्रयार्थो दर्शितः। तर्ह्यन्नमयादयः सर्वेऽपि कुतो नोच्यन्ते सूत्र इति चेन्न । **सर्वगुणत्वतः** । अल्पाक्षरमसन्दिग्धमिति सूत्रलक्षणत्वेनोक्ता-ल्पाक्षरत्वादिसर्वगुणत्वाद्बादरायणीयसूत्रजातस्येत्यर्थः। कथं तर्हि सर्वैरुच्यत इति चेन्न । **सर्वगुणत्वतः**। सर्वेषामन्नमयादीनां गुणत्वात् उपसर्जनत्वादुपलक्ष्यत्वादिति यावत् । "तदशिष्यं संज्ञा प्रमाणत्वात्" (पा.सू.१-२-५३) इतिवदयं निर्देशः। एतच्चाग्रेऽपि ध्येयम् ।

तर्हि प्राथमिकान्नमय एवेतरोपलक्षणत्वेनोच्यतामित्यतोऽपि **सर्वगुणत्वतः**। सर्वं गुणभूतं अप्रधानं यस्य तस्य भावस्तस्मात् । सर्वापेक्षयास्यानन्दमयशब्दस्य तत्रानन्दादयो गुणाः ईशस्यैवेति निर्णीता इत्युपासनापादीयानुभाष्यसुधयोरुक्तदिशा माङ्गलिकत्वेन प्राधान्यात्पूर्णानन्दवाचिन एवोक्तिरित्यर्थः।

कुतोऽस्य माङ्गलिकत्वम् । **सर्वगुणत्वतः** । सुखमेव मे स्यादिति निखिलापेक्षितत्वेन सर्वान्प्रति गुणत्वात् अनुगुणत्वान्निरुपाधिकेष्टत्वात्तद्वाच्यसुखस्येत्यर्थः। ब्रह्मानन्दस्यापि तादृशानन्दप्रदोषा-सनाविषयत्वेन सर्वान्प्रतीष्टत्वात् । यद्वा **सर्वगुणत्वात्** । गुणानाञ्च परार्थत्वादसम्बन्धः। समत्वात्स्यादित्यादौ जैमिनीये उपकारके गुणपदयोगात्पूर्वोत्तरसर्वनयोपकारकत्वादित्यर्थः। तथा हि पूर्वोक्तजिज्ञासाक्षेपसमाधिहेतुत्वात्, तथा " नाल्पे सुखमिति प्रोक्त्यैवानन्दमयतोक्तितः। अनन्तत्वं सुनिर्णीतं पूर्णानन्दो हि नाल्पके।" (१-१-१९७)इत्यनुव्याख्यानोक्तेः "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" इति श्रुत्युक्तदिशा पूर्णगुणस्यैव पूर्णानन्दत्वेन विष्णोरेव पूर्णानन्दत्वोक्तौ तस्यैव "अथ कस्मादुच्यत" इत्यादिना ब्रह्मशब्दाद्युक्तानन्तगुणवत्त्वसिद्ध्या विष्णोरेव जिज्ञास्यत्वोप-पादकत्वात् । तथा पूर्वनये शङ्काप्रापिकाया "यतो वाचो निवर्तन्त" (तै.उ.२-४)इत्यादिश्रुतेः

"आनन्दं ब्रह्मणो विद्वान्" (तै.उ.२-४) इत्युक्तानन्दस्यापरिच्छिन्नत्वेन कात्स्न्र्येन वागाद्यविषयत्व-मेव न तु सर्वथेत्यर्थलाभाच्च पूर्वोपकारकत्वं "अदृश्येनात्म्य" (तै.उ.२-७)इत्यादिना भाष्योक्तदिशोत्तर-नयारम्भार्थत्वात् उत्तरोपकारकत्वमित्याद्यूह्यम्। अत्रानन्दमय इत्येव वाच्ये पूर्णज्ञानादेरुपलक्षणत्वेन पूर्णानन्दस्योक्तिसमन्वीयमानशब्दानां यौगिकत्वसूचनाय। एवमग्रेऽपि ॥६॥

नन्विदमयुक्तम् । "अदृश्येनात्म्ये" इत्युक्तानन्दमयधर्मस्यादृश्यत्वस्य "अन्तश्चन्द्रमसि मनसा चरन्तं सहैव सन्तं न विजानन्ति देवा" (तै.आ.३-११-२)इत्यन्तस्थस्योक्तेः। "देवा अपि न जानन्ति किम्वन्ये" इत्यदृश्यत्वस्य कैमुत्येन प्रतीतेरन्तस्थस्य च "इन्द्रो राजा" (तै.आ.३-११-६) इत्यादिनिरवकाशेन्द्रश्रुत्यादिबलेन इन्द्रादित्वात् तस्यैवादृश्यत्वात् पूर्णानन्दत्वाच्चेत्यतः प्राप्तम्। **अन्तस्तद्धर्मोपदेशात्** इत्यादियोगद्वयम् । तदर्थ **अन्तर** इति। प्रसिद्धैरिति त्रिपाद्यन्वेति। अन्तरुपपदादत सातत्यगमन इति धातोर्डप्रत्ययेऽन्तरः, अन्तस्थ इति यावत् । यद्वा "अन्योऽन्तर आत्मा" (तै.उ.)इत्यादाविवान्तरशब्दोऽन्तस्थवाची। "अन्तः प्रविष्टं कर्तारमीशमन्तश्चन्द्रमसि मनसा चरन्तम्" (तै.आ.३-११) "अन्तः प्रविष्ठः शास्ता" इत्यादिना श्रुतोऽन्तरोऽन्तस्थः एको विष्णुरेव नत्वनेकः। तथा चान्यवस्तुषु इन्द्रादिषु प्रसिद्धैर्लोकतो निरूढैः इन्द्राद्यशेषाधि-दैवगतैः नामभिर्विष्णुरेवोच्यते। अन्तस्थस्य विष्णुत्वे तन्निष्ठत्वेन श्रुतेन्द्रादिनाम्ना-मपि तद्वाचित्वानियमादिति भावः।

तदेव कुतः ? **सर्वगुणत्वतः**। "समुद्रेऽन्तः" "यस्याण्डकोशं शुष्ममाहुः" इत्याद्येतत्प्रकरण-श्रुतसमुद्रान्तस्थत्व ब्रह्माण्डवीर्यत्वादिसर्वगुणवत्त्वात्तस्येत्यर्थः। लिंगानामिन्द्रादौ निरव-काशत्वादिति भावः।

न च श्रुतीनामपि विष्णौ निरवकाशत्वादुभयाबाधाय तादात्म्यमेवेन्द्रादिभिर्विष्णोरस्त्विति शङ्क्यम् । **सर्वगुणत्वतः**। सर्वे इन्द्रादयो गुणाः अप्रधानाः यस्य तस्य भावस्तस्मात् । सर्वस्वामित्वेन तेभ्योऽन्तरो विविक्तः एव सन् न तैरभिन्नः सन्नन्तरोऽन्तस्थो विष्णुः "इन्द्रस्यात्मा निहितः" "वायोरात्मानं" इत्यादावुच्यत इत्यर्थः। अस्मिन्पक्षे एवकारोऽन्तर एवेत्यन्वेति। "अन्तरमवकाशावधिपरिधानान्तर्धिभेदसादृश्ये(तादर्थ्ये)" इत्यमरोक्त्या(३-३४२) भेदवाचिनः क्लीबत्वेऽप्यर्श आद्यच्प्रत्ययान्तत्वेन "य आत्मनोऽन्तरो" "यो विज्ञानादन्तर" इत्यदाविवात्र पुल्लिंगान्तरशब्दो विविक्तवाच्यपि ध्येयः। अन्यथाऽन्तस्थ इत्येवावक्ष्यत् । तेन भेदसूत्रार्थोऽपि दर्शितः। श्रुतयस्तु विष्णुपरा इति भावः।

न चेन्द्रादिषु योगरूढिभ्यां प्रवृत्तानां तासां हरावमुख्यतेति वाच्यम् । परमैश्वर्यादेर्विष्णौ निरवधिकत्वेनान्यगतप्रवृत्तिनिमित्तस्यापि विष्णवधीनत्वाच्चेत्याह **सर्वगुणत्वत** इति। सर्वे गुणा यस्मिन्निति व्युत्पत्त्या इन्द्रादितत्तच्छब्दप्रवृत्तिनिमित्तसर्वगुणत्वात्सर्वं गुणभूतं यस्येति व्युत्पत्त्या

सर्वस्वातन्त्र्याच्च विष्णोरित्यर्थः। महायोगोक्त्या विद्वद्रूढिरपि दर्शिता। विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यते (अ.व्या.१-१-२४१)इत्युक्तेः। "इन्द्रं मित्रं यमिन्द्रं स प्रथमः संकृतिस्तथा। नामधाः सर्वदेवानामेक" इत्यादिका श्रुतिरित्यनुभाष्योक्त्यादिना "इन्द्रं मित्रं वरुणमग्निमाहुः" इति प्रयोगबाहुल्यरूपरूढेः श्रौतत्वाच्चेति।

ननु कथं सर्वगतस्यापि विष्णोरल्पदेशे चन्द्राद्यन्तरवस्थानम् । न हि सर्षपान्तर्ब्रह्माण्डस्यावस्थानं सम्भवद्युक्तिकमित्यतोऽपि **अन्तर** इति। खवदितीहाप्यन्वेति। खवत् आकाशवत् । अन्तरोऽन्तस्थः। यथा व्याप्तोप्याकाश एकदेशे वर्तते तथा विष्णुरपीत्यर्थः। तदुक्तं सप्तमस्कन्धे "कोऽतिप्रयोसोऽसुरबालका हरेरुपासने स्वे हृदिछिद्रवत्सत" (भाग.७-७-३९)इति। एतच्च लिङ्गपादीयाद्यनये "निचाय्यत्वादेवं व्योमवच्च" (ब्र.सू.१-२-७)इति सूत्रे व्युत्पाद्यमपीह शिष्यहिताय प्रसङ्गादुक्तम् । विवृतं चैतद्वैशेषिकनयानुभाष्ये(२-२-७९,८०)

> महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदवित् ।
> यद्यल्पदेशसंस्थानं न सर्वत्रापि नो भवेत् ।
> स्थितस्य ह्यल्पदेशेषु सर्वगत्वं भवेद् ध्रुवम् । इत्यादिनेति।

एतेन व्योमवदित्युक्तमन्यत्राप्यनुसन्धेयमित्युक्तं भवति ।।७ ।।

नन्वथापि न पूर्णानन्दो विष्णुरिति युक्तम् । तत्प्रकरणे "यदेष आकाश आनन्दो न स्यात्" (तै.उ.२-७) इत्याकाशस्य निरुपपदानन्दपदेन पूर्णानन्दोक्तेस्तस्यैवाकाशस्य छान्दोग्ये प्रथमेऽध्याये(१-९) "अस्य लोकस्य का गतिरिति। आकाश इति होवाच। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिवाक्ये पृथिवीगतिप्रश्नविषयत्वेन वाय्वादिभूतकारणत्वेन च श्रुततया लोकप्रसिद्ध्या च भूताकाशत्वादित्यत **ओं आकाशस्तल्लिङ्गात्** इति।

तदर्थः **खवत्** इति। अन्तर इत्यस्ति । स चावकाशवाची सन् पूर्ववदर्शआद्यच्प्रत्ययान्तः। विष्णुः खवदाकाशवदन्तरोऽवकाशवान् । यथाऽऽकाशः प्राणिसञ्चाराद्यनुकूलविवरत्वशब्दिताव-काशवांस्तथा विष्ण्वाख्याकाशः आकाशनमवकाश इति सुधोक्तदिशा अकाशपदप्रवृत्तिनिमित्तभूत-विवरत्वशब्दितप्राणिसंञ्चारानुकूलावकाशवान्। सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसि इति नवमगीताभाष्योक्तेः निरवधिकाकाशशब्दप्रवृत्तिनिमित्तवानित्यर्थः। यद्वा खवत् अन्तरो विवरः प्राणिसञ्चारानुकूल इत्यर्थः। उक्तमेव तात्पर्यम् ।

शब्दान्तरनिमित्तस्याप्युपलक्षकमिदम् । तथाऽन्यवस्तुषु प्रसिद्धैः आकाशाद्यधिभूतगतैः सर्वैः शब्दैरेको विष्णुरेवोच्यते। न तु भूताकाशादिस्तदर्थः। अवकाशदातृत्वादेर्वैष्णवत्वे तच्छब्दानां वैष्णवत्वावश्यं भावादिति भावः। कुतः **सर्वगुणत्वतः**। तस्य "स एष परोवरीयानु-द्गीथः"(छा.उ.१-९) "स एषोऽनन्तः" "को ह्येवान्यात्कः प्राण्यात्" (तै.उ.२-७)इत्यादि-सर्वगुणत्वात् । भूते तदयोगादित्यर्थः।

**उच्यत इति मुख्यवृत्तिरुक्ता । स केन निमित्तेनेत्यतोऽपि प्रागुक्तं आकाशपदप्रवृत्ति-निमित्तवत्वमुपलक्षणमिति भावेनाह - सर्वगुणत्वत इति । तच्छब्दप्रवृत्तिनिमित्तावकाश-दातृत्वादिसर्वगुणवत्त्वादन्यगतप्रवृत्तिनिमित्तं प्रति स्वातन्त्र्याच्चेत्यर्थः।**

आकाशादिशब्दानां विष्णौ यौगिकत्वद्योतनायान्तर इत्युक्तिः। खेऽपि तच्छब्दप्रवत्तिहेतुरयमेवेति द्योतनाय खवदित्युक्तिः ॥८॥

## श्रीत्रैविक्रमार्यदासविरचिता आनन्दमाला

**स्वानन्दसंविन्मयमंगलाङ्गं निर्दोषमात्मानमनन्तरूपम् ।**
**ब्रह्मैकवेद्यं सकलोरुशक्तिं विष्णुं स्मरामः सततं रमेशम् ॥१॥**

**स्वानन्दतीर्थार्यसदागमान्तविद्यामहाचार्यतमान् मुनीन्द्रान् ।**
**निरस्तदुस्तर्कदुरागमौघान् वन्दे मुहुर्व्यासपदाश्रयांश्च ॥२॥**

**अशेषवेदान्तकृतान्तसारव्याख्याविहारान् हरिभक्तिसिन्धून् ।**
**त्रिविक्रमार्यान् परमान्गुरून् मे नारायणार्यांश्च गुरून् नमामि ॥३॥**

**स्वानन्दतीर्थः परतत्त्वसूत्रभाष्यानुभाष्ये बहुविस्तृतार्थे।**
**कुर्वंश्च तत्संग्रहमाबभाषे स्वल्पाक्षरैः स्वल्पमतेर्ग्रहार्थम् ॥४॥**

**अनन्तमुख्यार्थमनन्तमध्वगुरूत्तमाचार्यवरप्रसादात् ।**
**अत्यल्पधीस्तं विवृणोमि शक्त्या तत्पादसंसेवननित्यसिद्ध्यै ॥५॥**

**ओं अथातो ब्रह्मजिज्ञसा** (१.१.१) इति सूत्रार्थमाह - **विष्णुरेव विजिज्ञास्य** इति। तदर्थं ब्रुवाणो मध्वदेवो अनेनैव भाष्यवाक्येन स्वात्मनो अभीष्टदेवतां प्रणम्य प्रसादयन्नभिष्टुवन् ध्यायति। तद्वाक्यस्य तदुपलक्षणार्थत्वात् । जिज्ञासा प्रतिज्ञावाक्येनैव तत्पूर्वभाविनः प्रणामाद्यर्था उपलक्ष्यन्ते। संग्रहाधिकारत्वादित्यर्थः। मंगलाचरणाय च प्रणामाद्यर्था इष्यन्ते । स हि परममंगलचिदानन्दरूपो विष्णुः सर्वेषामपीष्टदेवता भवति। प्रणाममन्ते नमो नमः इति करिष्यमाणो भगवानाचार्य इति सिद्धम्। प्रयोजनान्तरादृष्टेः। अस्य हि वाक्यस्य विष्णोरेव जिज्ञास्यत्वसाधकत्वेन तत्परत्वात् स्तुतिरूपत्वमपि सम्भवति। एतदपि विस्पष्टं वन्द्याय इति वक्ष्यति। जिज्ञासाया वस्तुनिर्णयद्वारेण ध्यानार्थत्वात् । ध्येयस्यैव जिज्ञास्यत्वाच्च ध्येयो विष्णुरिति च तत्रैवावेदितम्। विष्णोरेव व्यासत्वेन सूत्रकर्तुः स्वगुरुत्वादयमेव तत्प्रस्तावश्च भवति। विष्णुरेव सूत्रार्थत्वेन जिज्ञास्यः सर्ववेदार्थत्वादिति वस्त्वपि निर्दिष्टमेव स्यात्।

अनेनैवाधिकारिविषयादयश्च सूचिता भवन्ति । जिज्ञासुर्विष्णुभक्तो अधिकारी। जिज्ञास्यो विष्णुर्विषयः। तस्य तदज्ञानादिदोषापगमस्तज्ज्ञानादिगुणसंगमश्च फलम् । सम्बन्धो जिज्ञास्य-जिज्ञासकलक्षण इति ।

सूत्राणां त्रिविधमपि प्रामाण्यमेवशब्देनावधारणात् साधितं भवति। अन्यथा तदयोगात् ।। तत्र प्रथमतः प्रणवार्थमुक्त्वा सूत्रार्थं व्याख्याति। तन्मूलत्वात् तेषाम् । बलप्राणनादिगुणैर्व्याप्तत्वं स्वविषयस्य वदन् विष्णुशब्द ओत इति तद्गुणव्याप्तिं सूचयत ओङ्कारस्याभिसन्धिं वक्ति। एवं विजिज्ञास्यपदमपि विष्णोः सकलवेदपदैकगम्यत्वं प्रतिज्ञाय तद्गुणपूर्तिं व्यंजयत् त्रिवेदसाराक्षरैकरूपत्वेन तद्गुणाधिक्यविधिपरस्य तारस्याभिसन्धिमभिधत्ते। "सषकारणकारमेव ब्रूयात्" इति श्रुतावपि सविष्णुज्ञानमेव संहिताध्ययनविधेस्तत्सारस्य च तारस्यार्थं विष्णुशब्दो वक्ति। षणकारयोर्विष्णुनामत्वं तु भगवतैवानुभाषितम् – "उपसर्गत्वतो वेऽस्तु" (अनुव्या १.४.४१ इत्यादौ)। "सर्वैश्च वेदैः परमो हि देवो जिज्ञास्य" (चतुर्वेदशिखा) इति च श्रुतौ जिज्ञासाविषयस्यैव सर्ववेदार्थत्वाभ्युपगमाज्जिज्ञास्यपदमपि वेदार्थसारमोङ्कारार्थं वक्तीति च गम्यते। अतः २६प्रणवार्थत्वेनापि विष्णुरेव विशिष्टो जिज्ञास्यः। एवशब्दस्तत्र प्रमाणान्तरबाधं बाधित्वा तमेवार्थमवधारयति।

एवं प्रणवार्थभूतो विष्णुरेवाथातःशब्दाभ्यां अपि यथोक्तगुणविस्तरो ब्रह्मशब्देन विषयीक्रियमाणो मनुष्येषु तेभ्यो वा विशिष्टैर्मोक्षाधिकारिभिर्विशेषेण वा जिज्ञास्यो विधीयते भगवत्तमेन नत्वन्य इति तद्भाष्यभावः। कुत एतदिति चेत् "तं ब्रह्मेत्याचक्षते" (देवमी) "एतमेव ब्रह्मेत्याचक्षते" (ऐतरेय ३.२.३) इति सूत्रे वेदे चासकृत् तस्यैव मुख्यब्रह्मत्वविधेः सिद्धत्वात् । विष्णुर्ब्रह्म इतीहापि वक्ष्यमाणत्वाच्च। तथा च श्रुतिः – "पठेत् वेदानथार्थानधीयीताथ विचार्य ब्रह्म विन्देत्" (कौषारव) इत्यादिका अधिकारापादनपूर्वकमेव ब्रह्मैकविषयां जिज्ञासां तत्फलं च विधत्ते ।

अत्राहुः – प्राकृतस्यास्य बन्धस्य निवृत्तिं (प्रति प्रकृतिरेव प्रधानपदोदिता प्रभवेदिति सुवचम् ।) तस्मात् प्रधानमेव जिज्ञास्यं प्रतिज्ञातव्यमिति। एतत्परिहारश्चात्र प्रकटितः। विष्णुरेव विजिज्ञास्यः, न तु प्रधानमिति प्रतिज्ञाकरणात् । उपपन्नश्चैवम्भावः। यथा राज्ञो दर्शनसंजातं प्रसादमन्तरेण बन्धकस्य निगडस्य ज्ञानमात्रान्न तद्विमुक्तिर्दृष्टा, एवमेव ब्रह्मणो दर्शनसंजातं प्रसादमन्तरेण बन्धकस्य प्रधानस्य ज्ञानमात्रान्न तद्विमुक्तिर्युक्ता। तस्मात् पूर्णपुरुष एव जिज्ञास्यः सुष्ठु प्रतिज्ञेयः। तथा च श्रुतिः "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"(बृहदा ४.४.५)इत्यादिका ।

नन्वेवमपि जीवात्मैव जिज्ञास्यः, न परः, तस्याविषयत्वादित्यत्रापि विष्णुरेव विजिज्ञास्यो न जीव इत्युत्तरम्। न हि जीवस्य जिज्ञास्यत्वं ब्रह्मत्वं च प्रमाणसिद्धम् । विपर्ययेणानुभवात् । सिद्धं च परमात्मनः। श्रुतिदृष्टेः। तदविषयत्वं च नास्माकं सिद्धम् । तद्वादिनोऽपि हि तदङ्गीकारे सविशेषत्वप्रसंगः। विषयत्वनिषेधमात्राभ्युपगमे च तद्विषयत्वं दुर्वारम् । तस्मादविषयत्वं नाम वाङ्मात्रम् । वन्ध्या सुतवतीतिवत्।

उच्यत इति मुख्यवृत्तिरुक्ता । स केन निमित्तेनेत्यतोऽपि प्रागुक्तं आकाशपदप्रवृत्ति-निमित्तवत्वमुपलक्षणमिति भावेनाह- **सर्वगुणत्वत** इति । तच्छब्दप्रवृत्तिनिमित्तावकाश-दातृत्वादिसर्वगुणवत्त्वादन्यगतप्रवृत्तिनिमित्तं प्रति स्वातन्त्र्याच्चेत्यर्थः।

आकाशादिशब्दानां विष्णौ यौगिकत्वद्योतनायान्तर इत्युक्तिः। खेऽपि तच्छब्दप्रवत्तिहेतुरयमेवेति द्योतनाय खवदित्युक्तिः ॥८॥

## श्रीत्रैविक्रमार्यदासविरचिता आनन्दमाला

**स्वानन्दसंविन्मयमंगलाङ्गं निर्दोषमात्मानमनन्तरूपम् ।**
**ब्रह्मैकवेद्यं सकलोरुशक्तिं विष्णुं स्मरामः सततं रमेशम् ॥१॥**

**स्वानन्दतीर्थार्यसदागमान्तविद्यामहाचार्यतमान् मुनीन्द्रान् ।**
**निरस्तदुस्तर्कदुरागमौघान् वन्दे मुहुर्व्यासपदाश्रयांश्च ॥२॥**

**अशेषवेदान्तकृतान्तसारव्याख्याविहारान् हरिभक्तिसिन्धून् ।**
**त्रिविक्रमार्यान् परमान्गुरून् मे नारायणार्यांश्च गुरून् नमामि ॥३॥**

**स्वानन्दतीर्थः परतत्त्वसूत्रभाष्यानुभाष्ये बहुविस्तृतार्थे।**
**कुर्वंश्च तत्संग्रहमाबभाषे स्वल्पाक्षरैः स्वल्पमतेर्ग्रहार्थम् ॥४॥**

**अनन्तमुख्यार्थमनन्तमध्वगुरूत्तमाचार्यवरप्रसादात् ।**
**अत्यल्पधीस्तं विवृणोमि शक्त्या तत्पादसंसेवननित्यसिद्ध्यै ॥५॥**

**ओं अथातो ब्रह्मजिज्ञसा** (१.१.१) इति सूत्रार्थमाह - **विष्णुरेव विजिज्ञास्य** इति। तदर्थं ब्रुवाणो मध्वदेवो अनेनैव भाष्यवाक्येन स्वात्मनो अभीष्टदेवतां प्रणम्य प्रसादयन्नभिष्टुवन् ध्यायति। तद्वाक्यस्य तदुपलक्षणार्थत्वात् । जिज्ञासा प्रतिज्ञावाक्येनैव तत्पूर्वभाविनः प्रणामाद्यर्था उपलक्ष्यन्ते। संग्रहाधिकारत्वादित्यर्थः। मंगलाचरणाय च प्रणामाद्यर्था इष्यन्ते । स हि परममंगलचिदानन्दरूपो विष्णुः सर्वेषामपीष्टदेवता भवति। प्रणाममन्ते नमो नमः इति करिष्यमाणो भगवानाचार्य इति सिद्धम्। प्रयोजनान्तरादृष्टेः। अस्य हि वाक्यस्य विष्णोरेव जिज्ञास्यत्वसाधकत्वेन तत्परत्वात् स्तुतिरूपत्वमपि सम्भवति। एतदपि विस्पष्टं वन्द्याय इति वक्ष्यति। जिज्ञासाया वस्तुनिर्णयद्वारेण ध्यानार्थत्वात् । ध्येयस्यैव जिज्ञास्यत्वाच्च ध्येयो विष्णुरिति च तत्रैवावेदितम्। विष्णोरेव व्यासत्वेन सूत्रकर्तुः स्वगुरुत्वादयमेव तत्प्रस्तावश्च भवति। विष्णुरेव सूत्रार्थत्वेन जिज्ञास्यः सर्ववेदार्थत्वादिति वस्त्वपि निर्दिष्टमेव स्यात्।

अनेनैवाधिकारिविषयादयश्च सूचिता भवन्ति । जिज्ञासुर्विष्णुभक्तो अधिकारी। जिज्ञास्यो विष्णुर्विषयः। तस्य तदज्ञानादिदोषापगमस्तज्ज्ञानादिगुणसंगमश्च फलम् । सम्बन्धो जिज्ञास्य-जिज्ञासकलक्षण इति ।

सूत्राणां त्रिविधमपि प्रामाण्यमेवशब्देनावधारणात् साधितं भवति। अन्यथा तदयोगात् ।। तत्र प्रथमतः प्रणवार्थमुक्त्वा सूत्रार्थं व्याख्याति। तन्मूलत्वात् तेषाम् । बलप्राणनादिगुणैर्व्याप्तत्वं स्वविषयस्य वदन् विष्णुशब्द ओत इति तद्गुणव्याप्तिं सूचयत ओङ्कारस्याभिसन्धिं वक्ति। एवं विजिज्ञास्यपदमपि विष्णोः सकलवेदपदैकगम्यत्वं प्रतिज्ञाय तद्गुणपूर्तिं व्यंजयत् त्रिवेदसाराक्षरैकरूपत्वेन तद्गुणाधिक्यविधिपरस्य तारस्याभिसन्धिमभिधत्ते। ''सषकारणकारमेव ब्रूयात्'' इति श्रुतावपि सविष्णुज्ञानमेव संहिताध्ययनविधेस्तत्सारस्य च तारस्यार्थं विष्णुशब्दो वक्ति। षणकारयोर्विष्णुनामत्वं तु भगवतैवानुभाषितम् - ''उपसर्गत्वतो वेऽस्तु'' (अनुव्या १.४.४१ इत्यादौ)। ''सर्वैश्च वेदैः परमो हि देवो जिज्ञास्य'' (चतुर्वेदशिखा) इति च श्रुतौ जिज्ञासाविषयस्यैव सर्ववेदार्थत्वाभ्युपगमाज्जिज्ञास्यपदमपि वेदार्थसारमोङ्कारार्थं वक्तीति च गम्यते। अतः २६प्रणवार्थत्वेनापि विष्णुरेव विशिष्टो जिज्ञास्यः। एवशब्दस्तत्र प्रमाणान्तरबाधं बाधित्वा तमेवार्थमवधारयति।

एवं प्रणवार्थभूतो विष्णुरेवाथातःशब्दाभ्यां अपि यथोक्तगुणविस्तरो ब्रह्मशब्देन विषयीक्रियमाणो मनुष्येषु तेभ्यो वा विशिष्टैर्मोक्षाधिकारिभिर्विशेषेण वा जिज्ञास्यो विधीयते भगवत्तमेन नत्वन्य इति तद्भाष्यभावः। कुत एतदिति चेत् ''तं ब्रह्मेत्याचक्षते'' (देवमी) ''एतमेव ब्रह्मेत्याचक्षते'' (ऐतरेय ३.२.३) इति सूत्रे वेदे चासकृत् तस्यैव मुख्यब्रह्मत्वविधेः सिद्धत्वात् । विष्णुर्ब्रह्म इतीहापि वक्ष्यमाणत्वाच्च। तथा च श्रुतिः - ''पठेत् वेदानथार्थानधीयीताथ विचार्य ब्रह्म विन्देत्'' (कौषारव) इत्यादिका अधिकारापादनपूर्वकमेव ब्रह्मैकविषयां जिज्ञासां तत्फलं च विधत्ते ।

अत्राहुः - प्राकृतस्यास्य बन्धस्य निवृत्तिं (प्रति प्रकृतिरेव प्रधानपदोदिता प्रभवेदिति सुवचम् ।) तस्मात् प्रधानमेव जिज्ञास्यं प्रतिज्ञातव्यमिति। एतत्परिहारश्चात्र प्रकटितः। विष्णुरेव विजिज्ञास्यः, न तु प्रधानमिति प्रतिज्ञाकरणात् । उपपन्नश्चैवम्भावः। यथा राज्ञो दर्शनसंजातं प्रसादमन्तरेण बन्धकस्य निगडस्य ज्ञानमात्रान्न तद्विमुक्तिर्दृष्टा, एवमेव ब्रह्मणो दर्शनसंजातं प्रसादमन्तरेण बन्धकस्य प्रधानस्य ज्ञानमात्रान्न तद्विमुक्तिर्युक्ता। तस्मात् पूर्णपुरुष एव जिज्ञास्यः सुष्टु प्रतिज्ञेयः। तथा च श्रुतिः ''आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः''(बृहदा ४.४.५)इत्यादिका ।

नन्वेवमपि जीवात्मैव जिज्ञास्यः, न परः, तस्याविषयत्वादित्यत्रापि विष्णुरेव विजिज्ञास्यो न जीव इत्युत्तरम्। न हि जीवस्य जिज्ञास्यत्वं ब्रह्मत्वं च प्रमाणसिद्धम् । विपर्ययेणानुभवात् । सिद्धं च परमात्मनः। श्रुतिदृष्टेः। तदविषयत्वं च नास्माकं सिद्धम् । तद्वादिनोऽपि हि तदङ्गीकारे सविशेषत्वप्रसंगः। विषयत्वनिषेधमात्राभ्युपगमे च तद्विषयत्वं दुर्वारम् । तस्मादविषयत्वं नाम वाङ्मात्रम् । वन्ध्या सुतवतीतिवत्।

किञ्च, किमयं जीवो ब्रह्मव्यतिरिक्तः उत नेति पृच्छामः। आद्ये अपसिद्धान्तः। अन्त्ये स्वोक्तदोषः स्वपक्ष एवापतति । न च तद्व्यतिरक्त एव जीवो जिज्ञास्य इत्यन्यो मन्यते । तस्य प्रमाणान्तरसिद्धत्वात् । अमोचकशक्तित्वाच्च । अहो तर्हि भेदवादे जीवस्य मोक्षदानादि-कर्मण्यशक्तिः। ईश्वरस्य त्वविकारस्याक्रियस्य न किञ्चिदपि कर्माभ्युपगन्तुं शक्यम् । अभेदवादे जीवस्य ब्रह्मभावः स्वयमेव फलम् । न च तद् दातव्यम्। दातृदेयाद्यभावात् । तस्माच्चेतनैक्यमेव जिज्ञास्यमिति वयं ब्रूम इति चेत् , मैवम् । तत् किं तद्वतो भिन्नमभिन्नं वेत्यादिविकल्पासहत्वात् । स च विकल्पस्तत्त्वदीपिकाचार्यैर्विस्पष्टं व्याख्यातः - तत् किं तद्वतो भिन्नम् ? उताभिन्नम् ? भिन्न चेत् सत्यं मिथ्या वा ? सत्यत्वे अद्वैतहानिः। मिथ्यात्वे भेदसत्यता स्यात् । अभिन्नं चेत् जीवत्वे ब्रह्मत्वेऽपि स्वयम्प्रकाशत्वेन नित्यसिद्धमिति नोपदेष्टव्यमिति ।

अपि च, दातृदेयाद्यनङ्गीकारे सम्बन्धो अपि न सम्भवति प्रतिपाद्यप्रतिपादकलक्षणः सम्बन्ध इति चेत् तर्हि तद्भेदो अङ्गीकर्तव्यः। कुतः पुनर्भेदान्तरनिवारणम् ?

न चायं भेदस्तदैक्यवद् विकल्पासहः। विशेषेण गतिसिद्धेः। न चेश्वरस्याक्रियात्वं कर्तृत्वनिवारकम् । किन्तु कार्यत्वनिवारकमेव। श्रुत्यादिभिस्तथा दर्शनात् । अविकारत्वं च प्रकृत्यादिवत् परिणामादिराहित्यमेव। तस्माद् भेदवादिनामेव दातृदेयादिसम्भवात् मोक्षसिद्धिरित्यभिप्रायेण विष्णुरेव इति भिन्नार्थावधारणम् । स्वयमेव भगवान् भेदं विस्पष्टं वक्ष्यति - "अन्यश्च जीवतः" इति । "पृथगुपदेशात्" (२-३-२८) इत्यादिना भगवत्तमश्च। "तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ" इति च श्रुतिः। अतः परममङ्गलो मुख्येष्टदेवो भगवान् विष्णुरेवेष्टफलदातृत्वाज्जिज्ञास्य इत्यधिकरणस्यार्थः।

जिज्ञास्यस्य ब्रह्मणः स्वरूपलक्षणविवक्षया जन्माद्यस्य यतः (१-१-२) इति सूत्रार्थः वक्ति - **सर्वकर्ता** इति। "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति । तद् विजिज्ञासस्व। तद् ब्रह्म" (तै.उ.३-१) इत्यादिश्रुतेर्विष्णुरेव सर्वस्यास्य जगतो जन्ममोक्षादेः सर्वस्य च कर्ता। अत एवासौ वेदैर्विचारणीयः।।२।।

अथ प्रत्यक्षादिग्राह्यत्वे तावतैव परिपूर्तेर्न जिज्ञास्यत्वनियम इति शंकानिवृत्तये शास्त्रयोनित्वात् (१-१-३)इति सूत्रं व्याख्याति। **आगमोदित** इति। मोक्षादिकर्तुरीश्वरस्य प्रत्यक्षायोग्यत्वात्। अनुमानेन च सप्रतिसाधनेन दुस्साधनत्वात्, निर्दोषवाक्यात्मकैरागमैरेव ग्राह्यत्वमेष्टव्यम् । "नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति" (भाल्लव) इत्यादिश्रुतेश्च। न चागमस्य प्रामाण्यं नास्तीति वक्तुं युक्तम् । तन्निषेधकवाक्यस्यापि तदभावप्रसक्तेः। तस्मात् सर्वथापि नागमप्रामाण्यनिषेधः शक्यः। युज्यते च तस्य प्रामाण्यं निर्दोषत्वात् । तच्च भगवान् वक्ष्यति - "वेदा नित्यत्वान्मानमुत्तमम्" इति। अतः केवलागमगम्यत्वादीश्वरोऽवश्यं जिज्ञास्य प्रत्यज्ञायि।।३।।

यदि तद्वच्छास्त्रैकगम्यस्तदन्योऽपि स्यात् तर्हि स वाऽयं वा जिज्ञास्य इति विकल्पः स्यादित्याशङ्कां परिहरन् तत्तु समन्वयात् (१-१-४) इति सूत्रं व्याख्याति - **समन्वयात्** इति । विष्णुरेव समन्वयादागमोदितः, नान्य इत्यन्वयः । अयं भावः। सोऽयं भगवानेक एव तत्तद्वाक्यपदादीनां सुमुख्यान्वयात् सर्वकर्तृत्वेन वेदेषूदितः, तथैवेतिहासपुराणादिष्वपि स एवोदितः। कुतः ? तत्तच्छब्दप्रवृत्तिहेतूनां गुणानां तस्मिन्नेव सम्यक् सम्बन्धात्। तदिदं विचार्यमाणे सत्युपक्रमादितात्पर्यलिंगादवगम्यते। निर्णीतश्रुत्यन्तरसाहाय्याच्च। अतो न विष्णोरन्यो मोक्षदत्वेन शास्त्रगम्योऽस्ति। येनोक्तविकल्पाशंकावकाशः। "नान्यः" (पुरुष.१७) इति श्रुतिप्रतिषेधबलाच्च तदभावो अवसीयते।।४।।

ननु नायं सर्वशब्दसमन्वयः परमात्मनि समस्ति। अशब्दत्वश्रुतिभिस्तथात्वावधारणात् । लक्षणयैव हि तद्व्यवहारो निर्वोढव्यो विद्वद्भिरिति पूर्वपक्षं प्रतिक्षिपन् ईक्षतेर्नाशब्दम्(१-१-५) इत्येतदधिकरणं विवृणोति - **ईक्षतेश्च** इति। अत्र चशब्दः नाशब्दमिति सूत्रावयवार्थग्राहकः। ईक्षतेश्च आगमोदित एव विष्णुर्भगवान्। तथा हि, यत्तत् समन्वयगम्यत्वेन प्रतिज्ञातं सर्वोत्कृष्टं विष्णवाख्यं ब्रह्म तत् तावन्नाशब्दम् । कुतः? "पुरुषमीक्षते"(षट्प्रश्न.५-५) इत्यादा-वीक्षणीयत्वप्रतीतेः। न च वचनं विनाऽऽगमगम्यस्य प्रत्यक्षगम्यस्येवेक्षणीयत्वं सम्भवति। यथा धर्मादेः। तस्मादीक्षणीयत्वान्यथानुपपत्त्या किं तदिति प्रश्नपरिहारान्यथानुपपत्त्या च शब्दोदितमेव तदेष्टव्यमित्यर्थः।

युक्त्यादिभिर्वाच्यत्वदर्शनादिति वा ईक्षतिशब्दार्थः। अविषयस्य कथं वाच्यत्वं युक्तितो दृश्यमिति चेत् अविषयत्वमेव कथं दृष्टम् ? व्याहतिदर्शनात् । "श्रोतव्यो मन्तव्य" (बृ. ४-४-५) इत्यादौ च वागादिविषयत्वदर्शनात् । अशब्दत्वश्रुतयस्तु "अप्रसिद्धत्वादेवावाच्यत्वं वदन्ति अशब्दं इति" (कठ.३-१५) इति सुवचत्वात्। न चावाच्यस्य लक्षणा युज्यते। अदृष्टत्वात्। न च निर्विशेषत्वान्नायं दोष इति वाच्यम् । निर्विशेषत्वविशेषस्यानपायात् । न च निर्विशेषं नाम शून्यादन्यद् भवितुमर्हति। अन्योन्यलक्षणसाम्यात् । अस्माकं सविशेषानन्तगुणत्वाद् ब्रह्मणः सर्वशब्दवाच्यत्वं सुग्रहमित्यनवद्यम् ।।

गौणश्चेन्नात्मशब्दात् (१-१-६) इत्यादीनि च सूत्राण्यनेनैव वाक्येन व्याख्यातानि भवन्ति। तत् कथम् ? अशब्दत्वं निराकुर्वंश्चशब्दो गौणत्वमपि निराकर्तुमलम् । समुच्चयवाचकत्वात् । ईक्षतिशब्दस्तु आत्मशब्दार्थमुपलक्षयतीत्युपपत्तेः। तद्वत् तन्निष्ठमोक्षोपदेशादींश्च ।

अथ वा अस्मिन्नधिकरणे ईक्षतेः इति प्रथमं हेतुमुक्त्वा चशब्देन आत्मशब्दादीनि हेत्वन्तराणि समुच्चिनोति। हेतुमतस्तु प्रागेव आगमोदितः इति वचनात् सिद्धेः।

न चैतावता येन केनचित् पदेन यत्किञ्चित् संग्राह्यमित्यतिप्रसङ्गः। ईदृशमेवानेन संग्राह्यं नान्यादृशमिति विशेषक्लृप्तेः। न हि वयमिह यत्किञ्चिदसूत्रितमभाषितमवेदवेदितमयुक्तियुक्तं चाभिप्रेतं ब्रूमः । नापि सर्वथाप्यशक्यम् । किन्तु लोकतो वेदतो वा रूढमेव हि वक्तुं शक्यं नाम । तदेवेष्टमप्युक्तं ब्रूमः। तत्सम्बद्धमेव चोपलक्षितं समुच्चितं च सदृशमेव । अनयोरप्येतादृशशक्तिविषयत्वात् । परिगृहीतश्चायं न्यायः सर्वत्रापि शाब्दिकैः। सल्लक्षणेषु शास्त्रेषु सुलक्ष्यत्वात्। लोकेऽप्येवं गृष्टिमदादित्यादौ वत्सं चेत्यपि ग्राह्यम् । न तावता वत्सान्तरमपीत्यादि। अतोऽत्र नातिप्रसंगः।

अत्रायमाशयः। ईक्षतेः, आत्मशब्दात् , तन्निष्ठमोक्षोपदेशात्, हेयत्वावचनात्, स्वाप्ययात्, गतिसामान्यात्, श्रुतत्वाच्च, न गौणो नाशब्दश्चायम् , तस्मात् परमात्मन्येव सर्वशब्दसमन्वयप्रतिज्ञाया नाणुरपि विरोधोऽस्तीति ।।५।।

अथास्मिन्नध्याये तमेव समन्वयं साधयति। तत्र प्रथमपादे अन्यत्र प्रसिद्धानां नामशब्दानां साधयति।

"ब्रह्म पुच्छम्" (तै.उ.२-५) इति श्रुतेर्यस्य कस्यचिदवयवमात्रत्वेन प्रतीते ब्रह्मणि कथमानन्दमयादिशब्दानामवयविनि प्रसिद्धानां समन्वयः सिद्ध्यति? कुतश्चैतावन्मात्रमसमग्रं मीमांस्यमिति मन्दाशंका परिहारायावयवमात्रातिरिक्तं ब्रह्मेति वक्तुम् - आनन्दमयोऽभ्यासात् इत्यधिकरणं व्याख्याति **पूर्णानन्दः** इति। अनेन च भाष्यपदेनास्मिन्नधिकरणे आनन्दमयो विषय इत्युक्तं भवति। तत्रायं संशयः - किमयमानन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा इति । किं तावत्प्राप्तमिति विचार्यते। ब्रह्मशब्दादेव ब्रह्मादिः प्रकृतिर्वाऽऽनन्दमय इति पूर्वपक्षः। ब्रह्मशब्दस्य सोऽपचारत्वात्, अत्र परममुख्यार्थत्वाच्च विष्णुरेवानन्दमय इति सिद्धान्त इत्याद्यधिकरणभंगीसंगीतान्यत्रापि संगृह्यते। विषयोक्त्यैव संशयादेः सूपलक्ष्यत्वात् । एवमेवाधिकरणान्तरेष्वपि साष्टाङ्ग एष नयः पृथक् सर्वोऽपि सूच्यते, यत्र अधिकरणार्थः पृथक् गृह्यते। सह गृह्यते चेन्नयोऽपि सहैव। अपि चास्मिंस्तत्त्ववादप्रमेये विष्णुरिति विशेष्यपदेन धर्मिणं गृहीत्वा, विशेषणपदान्तरैः सिषाधयिषितानि धर्मान्तराणि तस्य प्रतिश्रुत्य, समन्वयादिति हेतुं प्रयुज्य, ईक्षतेरन्वयव्याप्त्या चकारादनीक्षतेर्व्यतिरेकव्याप्त्या च (साध्यं प्रसाध्य) खवदित्युदाहरणं उदाजहार। सिषाधयिषितानां धर्मान्तराणामतिबहुत्वात् पर्यायेण तत्तत्प्रतिज्ञानम्। नामहेत्वादेस्तु प्रायेण निर्विशेषत्वादपृथक्प्रयोगः। एवं तत्साधनधर्माणां साध्यधर्मिणि सम्यक् संयोगात् स्वपक्षसाधने कृते परपक्षदूषणं द्वितीयेऽध्याये करिष्यते। स्वपक्षदोषपरिहारश्च सूक्तिभिः। अनेनैव वादेन साक्षात् तत्त्वे निर्णीते सत्यन्त्याध्यायाभ्यां साधनं फलं च प्रपञ्च्येते इति भवति रमणीयम्। तस्मात् सोऽयं समन्वयशब्दस्तास्ताः सिद्धान्तयुक्तीर्वक्ति। तथा चावोचद् भगवानेव भाष्ये -"अन्वय उपपत्त्यादिलिंगम्" (१-१-४)

इति। तैरेव च तत्त्वं निर्णीयते। तैः सम्यक् प्रविचारिते। " मुख्यार्थो भगवान् विष्णुः" (१-१-१२०) इति ह्यनुव्याख्यानम् । एवञ्चास्मिन्नधिकरणे ब्रह्मशब्दाभ्यासः समन्वयशब्दोक्तः। उत्तरे तद्धर्मोपदेश इत्यादि वेदितव्यम् ।

**अयमधिकरणार्थः।** आनन्दमयादिप्रकरणेषु ब्रह्मशब्दस्याभ्यासाद् विष्णुरेव पूर्णानन्द पूर्णान्नादिश्च। न चान्नादीनां विकारो मयडर्थो मन्तव्यः। क्वचित् तदर्थस्यापि मयटो विष्णावर्थान्तरमेव सुघटमिष्टम् । निर्दिष्टं चैतद् विस्पष्टं प्राचुर्यापरपर्यायं पूर्णत्वं नाम। यस्य खल्वानन्दः "को ह्येव" (तै.उ.२-७) इति सहेतुव्यपदेशं विधीयते प्रतिज्ञामात्रेणार्थसाधनपटुनापि वेदेन । न हि निर्हेतुकमेव केवलं केनचित् कल्प्यते। स तावत् प्रमाणतः पूर्णानन्दः। मन्त्रवर्णवाक्यस्य सत्यादेः आनन्दादिप्रकरणानां च सामान्यविशेषोक्तित्वात् । तद्गीयमानस्य च तदानन्दादेः पूर्णत्वं भवति पूर्वापरानुसन्धानेन । महावाक्यार्थत्वात् । न हि केवलाल्पवाक्यार्थः पूर्णतामर्हति। न च तदितरः प्रकृतिविरिञ्चादिः पूर्णानन्दः इति वक्तुं पार्यते। परतन्त्रत्वात्, परिच्छिन्नत्वाच्च। विष्णोः स्वातन्त्र्यादिसद्भावात्, स्वकीयेषु ब्रह्मादिषु यथायोग्यानन्दपरिपूरणाच्च पूर्णानन्दत्वं सुयुक्तम् ।

शतशतांशादिभावेन सङ्ख्यया परिमाणेन च परिमिता नन्देभ्यश्चतुर्मुखमुखेभ्यः चित्प्रकृतेश्च परिच्छिन्नानन्दाया वाङ्मनसागोचरत्वेनामितानन्दस्य विष्णोर्भेदव्यपदेशोऽपि पूर्णानन्दपदवेदितः। अमितस्यैव मुख्यतः पूर्णत्वसम्भवात् ।

न च तत्तदनुमानैरानन्दस्य विष्णोरूनत्वं केनापि स्वापादम् । यथा कामतया तेषामाभासत्वात्। किन्तु यथाश्रुतिसिद्धानेकविशेषाणामनपायात् पूर्णत्वमेव निर्णीतं सुज्ञेयम् ।

स्वयोग्यतानुसारेण भक्तिज्ञानादिसाधनैः पूर्णं जीवं स्वसमीप आदाय आसमन्तात् नन्दयति भगवानिति च पूर्णानन्दो भाष्यते। स हि सहभोगं मुक्ताय करोति। सोऽयमवयविनि स्वस्मिन्नवयवेषु च स्वकीयेषु प्रत्येकं ज्ञानादिगुणैः पूर्ण एवानन्दनामको विष्णुः। स्वगतभेदराहित्यात् । एवञ्च एकस्यैवेश्वरस्यावयवावयविभावः सम्भवति, श्रुत्युपदिष्टत्वादित्यर्थः।

एवं तावत् सकलकविकुलतिलको भगवानानन्दतीर्थार्याचार्यवर्यः पूर्णानन्दपदेनैवानन्दमयाधि-करणपठितसूत्रार्थमखिलमपि संग्रहेण व्याचख्यौ। एवमेवोत्तरत्रापीति ज्ञातव्यम्। तत्तदधिकरणार्थानां संग्रहस्यैवेह चिकीर्षितत्वात्। कुतः ? स्वयमेवामुना सात्यर्थविस्तरं भाष्यस्य कृतत्वात्। करिष्यमाणत्वाच्च सबह्वर्थमनुभाष्यस्यापि । न हि बहुविशेषज्ञचूडामणिं सर्वज्ञ-भास्करमन्तरेणैतादृशभाष्यानुभाष्यविरचने चतुरतरचेताश्चतुर्दशभुवनेषु अस्ति। किम्पुनरेकेनैव वाक्येन पदेनाक्षरेण वा तत्तदधिकरणार्थसंग्रहभाषणकुशलमतिर्नास्तीति? यदभिप्रेतामितार्थस्यांशांशमपि

लेशत एव वयं वक्तुं सम्प्रति यथामति यतामहे। न चास्माकं तत्प्रतिपादनपाटवमपटुधियाम्। यद्यपि अस्मदाचार्यादयो मध्वसूक्तिसन्दर्शितार्थान् तत्प्रसादैकबलं अवलम्ब्य कथञ्चित् प्रायशः प्रकाशयितुं शक्नुवन्ति। तथाऽपि न खलु वयं खद्योतसमद्योतत्वात् एतद्द्योतितानपि तानंशांशेन च प्रकाशयितुं शक्नुमः। किं तर्हि मनोवाग्भिस्तद्धाष्ट्यभावावर्तनलौल्यादेवायमस्मत्सन्नाहविजृम्भः। तस्मात् इहास्मांस्तन्मन्तॄन् प्रणन्तॄन् महान्तः क्षन्तुमर्हन्ति।।

अदृश्येनात्म्ये – तैत्तिरीय(२.७) इत्यानन्दमयस्योक्तमदृश्यत्वं तु "अन्तः प्रविष्टं कर्तारम् – न विजानन्ति" (तै.आ ३-११-२) इत्यन्तस्थस्य कस्यचिदुच्यते। सोऽन्तस्थ इह विचार्यते। " इन्द्रो राजा" (तै.आ ३-११-६) इत्यादिवचनान्न विष्णुरिति पूर्वः पक्षः। अत्र स्वपक्षं द्योतयति – अन्तस्तद्धर्मोपदेशात् (१-१-२०-)इत्यधिकरणम् **अन्तर** इति।

अस्मिन् ग्रंथे "इत्यधिकरणम्" इति सूत्रं इति वास्मद्वाक्यस्य व्याख्याति भगवानिति क्रियाभिसम्बन्धो बोद्धव्यः। व्याख्यायते च भगवतेति वा ।

अन्तः स्थित्वा रमत इत्यन्तरः। तथानुव्याख्याततत्वात् । चन्द्रेन्द्रादिषु स्वेच्छया वर्तमानः सर्वकर्ता विष्णुरेव। समुद्रान्तरत्वादितद्धर्मव्यपदेशात् । इन्द्रादेर्व्यधिकरणत्वेन भेदव्यपदेशोऽप्यर्थतः सुगृहीतः। व्यधिकरणत्वं हि भिन्नत्वे प्रमाणम् । अन्यशब्दपर्यायश्चायमन्तरशब्दः प्रसिद्धः।

यद्यप्येवं विषयश्रुतावुपक्रमादिभिः सिद्धान्तः साधितो भवत्यधिकरणेषु। तत्र पुनर्वितर्कपाटनाय तत्तल्लिंगवैलोम्यप्रकटनेन प्रतिपक्षोऽपि प्रतिक्षिप्य एव स्यात्। तथापि पुनर्मन्दातिशंकाशङ्को शकलशः शातनेन स्वमतात्यन्तदाढर्यार्थं यथासाधितसिद्धान्तसारानुसाराणि शतशः श्रुत्यन्तराण्युपन्यसनीयानीति युक्ततमम्। तस्मात् तत्संग्रहोऽपि आगमोदित इत्युक्त्यैव सुकृतो लक्ष्यते। सूपपत्तिसाधितः स्वसिद्धान्तः सर्वोऽपि तैस्तैर्निर्णीतश्रुतिस्मृतिरूपैरप्यागमैरुदित इति चार्थसम्भवात् । न चैतेऽस्माभिः सनियममुपन्यस्यन्ते। मन्दधीत्वात्, ग्रन्थबाहुल्यभयाच्च। एवञ्च "अहं तत् तेजः" (चतुर्वेदशिखा) "सोऽभिध्याय" (व्यासस्मृ) इत्यादिभिर्विवक्षितधर्मद्वारेणान्तस्थो विष्णुरिति निर्णीयते।।७।।

अथ "आकाश इति होवाच" (छान्दोग्य १-६) इति श्रूयमाण आकाशः किं भूताख्य उत विष्ण्वाख्य इति विचार्यते। लौकिकप्रसिद्धेर्भूताख्य इति प्राप्तम् । अत आह – "आकाशस्तल्लिंगात्" (१-१-२२) इति सूत्रम् – **खवत्** इति ।

इह तावदत आहेतिवाक्यस्य तदुपरि परिगृहीतं सूत्रमाहेति सम्बन्धो न ग्राह्यः। तद्व्याख्यानस्य तु मनसापि कर्तुमसामर्थ्यात् । अनारब्धत्वाच्च । ब्रह्मसूत्रार्थसारान्वेषणेन तद्व्याख्यानमुख्याधि-कारस्तु मुख्यप्राणस्यैवेति हि किञ्चिदवोचाम । कथं तर्हि तत्सम्बन्ध इति चेत्

सूत्रादप्युपरिष्टादनूद्यमानं तद्भाष्यं यत् तदाहेत्येवास्माभिः सोऽभिप्रेयते। एतद् व्याख्यानस्यैव शक्त्यभावेऽपि कारणान्तरेण प्रारब्धत्वात् । इहापि हि मुख्याधिकारिणो देवादय एव भगवता श्रूयन्ते। अस्माकं तु तदनुगृहीत एव कश्चिदधिकारलेश आशास्यते। न तु स्वयमेवाधिकारः। सूत्रग्रहणं तु व्याचिख्यासयानूद्यमानभाष्यस्य तदीयत्वज्ञापनायैव क्रियते। अतः पूर्वपक्षपरिहारार्थमिदं सूत्रं व्याख्यानिदं भाष्यमाहेति गृह्यते। अनेकसूत्रग्रहणापेक्षया अधिकरणमाहेत्युक्तेऽप्ययमेव न्यायः। अत्रानूदितभाष्यस्यायं भावः। "यदेष आकाशः" (तैत्तिरीय२-७) इति प्रागुक्ताकाशो यथा विष्ण्वाख्यः प्रकरणबलात् सिद्धः तद्द्वयमपि विष्ण्वाख्य एव बोद्धव्यः। परोवरीयस्त्वादिति तल्लिंगात् । न तु भूताख्यः। आसमन्तात् कं कामान् वा अश्नाति काशते वेत्याकाशो विष्णुरिति यौगिकरूढे रूढ्यन्तराद् बलिष्ठत्वात् । श्रुत्यन्तरानुकूलत्वाच्च नितराम् ।

अत्रायमपि न्यायः सुग्रहः। अनुमानस्यावयवा अपि प्रतिज्ञादयः पृथक् च प्रमाणत्वमर्हन्ति। प्रयोगप्रकारविशेषेण साधकत्वसम्भवात्। ततः किं स्यादिति चेत् अनुमानस्यावयवेयत्ता कल्पनमितरवादिकृतं व्यर्थं स्यात् । व्याप्तिसद्भावनियमस्यैव प्रयोजकत्वादिति ।।८।।

**नृसिंहतीर्थ** – तथाहि तद्विजिज्ञासस्वेत्यादिश्रुत्युक्तजिज्ञासायाः कर्तव्यत्वसमर्थनार्थं अथात इति प्रथमाधिकरणम् । तस्य तात्पर्यमाह **विष्णुरेव** इति। सूत्रे श्रुत्यनुसारेण ब्रह्मजिज्ञासा कर्तव्येत्युक्तम्। ब्रह्मशब्दस्य जीवादिसाधारणत्वेऽपि "स विष्णुराह हि" "तं ब्रह्मेत्याचक्षते"(दै.मी) इति निरन्तरसूत्रद्वये विष्णौ ब्रह्मशब्दस्य सूत्रकारेणैव प्रयुक्तत्वात्। प्रकृतपरित्यागे कारणाभावादिति भावेन ब्रह्मशब्दव्याख्यानाय विष्णुरित्युक्तम् । तदुक्तमनुव्याख्याने(१-१-८०) " स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् " इत्यादिना। जीवादेर्जिज्ञासत्वनिरासाय एवकारः। विष्णुर्जिज्ञास्य एवेत्ययोगव्यवच्छेदको वा। तेन जीवस्य च अहमिति स्वप्रकाशत्वेन तदभिन्नब्रह्मणोऽपि स्वप्रकाशत्वेन असन्दिग्धत्वात् न जिज्ञास्येति चोद्यं निरस्तम्। जीवब्रह्मैक्यस्याप्रामाणिकत्वात्। ब्रह्मशब्दस्य विष्णुपरत्वेन व्याख्यानात् अनन्तगुणपूर्णेन अनुभवसिद्धाल्पगुणजीवस्य ऐक्यानुपपत्तेश्चेति। जिज्ञासा कर्त्तव्येत्यस्य तात्पर्यं **विजिज्ञास्य** इति। श्रुत्यनुसारेण विशेषार्थकविशब्दप्रयोगः। प्रथमसूत्रे जिज्ञासा कर्त्तव्यतायां हेतुत्वेनोपात्तस्य "तद् ब्रह्म" (तै.उ.३-१) इति श्रौतब्रह्मशब्दस्य विष्णुपरत्वसाधनाय जन्माद्यस्य यत इति द्वितीयमधिकरणम् । तस्य तात्पर्यं **सर्वकर्ता** इति। विष्णुरेवेत्यनुवर्तते। सर्वशब्दस्यावृत्तिः। सर्वस्य जगतः सर्वस्य सृष्ट्याद्यष्टकस्य विष्णुरेव कर्तेति। सर्वकारणमित्यनुक्त्वा कर्तेति वदता जगज्जन्मादिकर्तृत्वमेव ब्रह्मलक्षणत्वेन श्रुतिसूत्राभिप्रेतं नोपादानकारणत्वमिति सूचितम्। तेनोपादानत्वं वदन्तोऽपि निरस्ता भवन्ति। ब्रह्मशब्दस्य विष्णुपरत्वसाधनाय श्रौतमेव जगज्जन्मादिकर्तृत्वं हेतुत्वेनोपात्तम् । सूत्रकृता द्वितीयाधिकरणोक्तस्य पाशुपताद्युक्तिबलेन रूद्रादावतिव्याप्तिमाशंक्य तत्परिहाराय शास्त्रयोनित्वादिति

तृतीयाधिकरणं उपात्तम् । तस्य तात्पर्यम् **आगमोदित** इति। विष्णुरेवेत्यनुवर्तते। आगमशब्देन ऋगादिसदागमा एवोच्यन्ते। तैरुदित उक्तः प्रतिपादित इति यावत्। जगत्कारणस्य सदागमैकवेद्यत्वात् । न पाशुपताद्युक्तिबलेनातिव्याप्तिः शंकनीयेति भावः।

ननु सदागमैरेव रुद्रादीनां जगत्कारणत्वप्रतीतेरतिव्याप्तिस्तादवस्थेति शंकापरिहाराय तत्तु समन्वयादिति चतुर्थमधिकरणम् । तस्य तात्पर्यं **समन्वयात्** इति। समित्यस्य द्विरावृत्तिः। एकः सम्यगित्यर्थकः । द्वितीयो मुख्यार्थकः। तृतीयः सर्वार्थकः। अन्वयादित्येकवचनं समुदायाभिप्रायम्। अन्वीयते शक्तितात्पर्यगोचरत्वेन ज्ञायते अर्थो अनेनेत्यन्वयः। उपक्रमादिलिंगसमुदायः। तस्मात्सम्यग्विचार्यमाणे मुख्यया वृत्त्या सर्वागमोदितो विष्णुरेवेति पूर्वेण सम्बन्धः।

ननु जलाभ्यवहारासमर्थस्य मुमुर्षो शष्कुलीभक्षणमिव विष्णोः सर्वागममुख्यार्थत्वमसंभावितम्। "यतो वाच" (तै.उ.२-४) इत्यादिश्रुत्या ब्रह्मणो वाच्यत्वस्यैवाभावादित्याशंकां परिहरतः ईक्षतेर्नाशब्दमिति पंचमाधिकरणस्य तात्पर्यम् **ईक्षतेश्च** इति। चशब्दः पूर्वहेतुसमुच्चये। सूत्रानुसारेणेक्षतेति धातुनिर्देशः । तेन च तदर्थः ईक्षणं लक्ष्यते। तेन च तद्विषयत्वं लक्ष्यते। तथा च लक्षितलक्षणाया ईक्षणीयत्वादित्यर्थः। अस्यापि हेतोः विष्णुरागमोदित एव शब्दवाच्य एवेति तेनैव सम्बन्धः। तदुक्तमनुव्याख्याने (१-१-१२१) "ईक्षणीयत्वतो विष्णुर्वाच्य एव" इति ईक्षणीयत्वेन वाच्यत्वसिद्धिश्च परिशेषात् । तत्प्रकारश्च सुधादौ स्पष्टः।

एवं सामान्यतः सर्वशात्रस्येश्वरपरत्वे सिद्धे तत्तु समन्वयादित्युक्त समन्वय एव प्रतिवाक्यग्रहणेन प्रपंचयितुं आनन्दमयोऽभ्यासादित्यध्यायशेषः प्रवृत्तः। तत्रानन्दमयशब्दसमन्वयार्थस्य आनन्दमयोऽभ्यासादिति षष्टाधिकरणस्य तात्पर्यम् **पूर्णानन्द** इति। आनन्दमय इत्यत्र मयटः प्राचुर्यार्थत्वमंगीकृत्य पूर्णेत्युक्तम् । आनन्दमय इत्यत्र आनन्दप्रचुर इत्येव व्याख्याने ब्राह्मणप्रचुरो ग्राम इत्यत्राल्पशूद्रप्रसक्तिवत् अल्पदुःखप्रसक्तिः स्यादतः प्रचुरानन्द इति विपरीतसमासमभिप्रेत्य प्राचुर्यं पूर्णत्वमिति भावेन पूर्णानन्द इत्युक्तम्। नामात्मकपादोऽपि इन्द्राद्यनेकनामसमुच्चयसिद्ध्यर्थं एकस्यान्तस्थत्वलिंगं समन्वयं साधयतः सप्तमाधिकरणस्य तात्पर्यम् **अन्तर** इति। अन्तःपर्यायो अन्तरशब्दः सूत्रे यथा अन्तरित्यस्य अन्तस्थ इत्यर्थः तथा अन्तर इत्यस्य अन्तस्थ इत्यर्थः। यद्वा अन्तःशब्दोपपदादृगतावित्यस्माद्धातोः डप्रत्यये टिलोपे उपपदान्त्यलोपे अन्तर इति सिद्धेः । एवं प्राधान्येनाधिदैवसमन्वयानन्तरं अधिभूतसमन्वयार्थं प्रवृत्तस्याकाशस्तल्लिंगादित्यष्टमाधिकरणस्य तात्पर्यम् **खवत्** इति। खेन आकाशेन तुल्यं वर्तत इति यावत् । तेन तुल्यं क्रिया चेद्वतिः(पा.सू.५-१-११५) इति वचनात् । आकाशशब्दवाच्यत्वमेव आकाशेन तुल्यत्वम्। यद्वा खं आकाशं वर्त्तयति प्रवर्त्तयति प्रेरयतीति यावत् । खवत् खशब्दे कर्मवाचके उपपदे वृतु वर्त्तन इत्यस्माद्धातोरन्तर्णीतण्यर्थात् कर्तरि डप्रत्यये । "नभो ददाति श्वसतां मार्गं यन्नियमादतः" (अ.व्या.१-१-२४६)इत्युक्तेः।

**श्रीनिवासतीर्थीया-** अथातो ब्रह्मजिज्ञासेत्यत्र अथातः शब्दयोः व्याख्याातत्वात् ब्रह्मजिज्ञासेत्यंशं व्याचष्टे **विष्णुरेव विजिज्ञास्य** इति । विष्णुरेव विशेषतः जिज्ञास्यः स्वगुणादिना विचार्य इत्यर्थः। विष्णुरेवेत्युक्त्या ब्रह्मशब्दो व्याख्यातः । एवशब्देन ब्रह्मशब्दार्थानां जातिजीवकमलासनानां व्यवच्छेदः। ''स विष्णुराह हि'' ''तं ब्रह्मेत्याचक्षते'' (दै.मी)इति निरन्तरसूत्रद्वये ब्रह्मत्वेन नारायणस्यैव प्रस्तुतिं सूचयति । विष्णग्रहणेन ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति षष्ठीसमासः न पुनः धर्माय जिज्ञासेतिवत् चतुर्थीसमासः। षष्ठी समासे केचित् शेषे षष्ठीति प्रतिपन्नाः केचित्कर्मणीति। तत्र कर्मणि षष्ठीपरिग्रहाय विजिज्ञास्य इत्युक्तम् । कृत्यानां कर्मणि श्रवणात् । अन्यथा विष्णोरेव विजिज्ञासेत्यवक्षत् । यद्वा ब्रह्मणः कर्मत्वेनाप्राधान्यशंकां निवर्तयितुं विजिज्ञास्य इति कर्मप्राधान्यं सूचितं इत्यादि बहु वाच्यमस्ति । तथापि गौरवभीतितः पदानां सूत्रसम्बन्धमात्रमेव प्रदृश्यते। जन्माद्यस्य यत इत्येतद्व्याचष्टे **सर्वकर्ता** इति। सर्वस्य रमाब्रह्मादेः सर्वस्य उत्पत्तिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षादि अस्य यथायोग्यं कर्तेत्यर्थः ।।२ ।।

शास्त्रयोनित्वादित्यस्य व्याख्यानं **आगमोदित** इति । सर्वसदागमोक्त इत्यर्थः ।।३ ।।

तत्तु समन्वयादित्येतस्य विष्णुरेवेत्येतद्व्याख्याातत्वात्समन्वयादिति हेतुभागस्य व्याख्यानं **समन्वयात्** इति । उपक्रमादिलिंगाद्विष्णुरेवागमोदित इति सम्बन्धः ।।४।।

ईक्षतेर्नाशब्दमित्यस्य व्याख्यानम् **ईक्षतेश्च** इति। सौत्रप्रतिज्ञासमुच्चयार्थश्चशब्दः। स्वाप्ययात् श्रुतत्वाच्चेत्युक्तहेतुसमुच्चयार्थो वा। ईक्षणीयत्वादित्यर्थः । आनन्दमयोऽभ्यासात् इत्यत्र आनन्द-मयशब्दार्थं आह **पूर्णानन्द** इति । प्रचुरसुख इत्यर्थः ।।५।।

अन्तस्तद्धर्मोपदेशात् इत्यंतरिस्यार्थः **अन्तर** इति । अन्तः रमयतीति वा अन्तरस्तीति वान्तरः अन्तस्थ इत्यर्थः ।।६।।

**छलारी** –ननु सूत्रार्थ उच्यते इति प्रतिज्ञा अनुपपन्ना। उत्तरत्र सर्वसूत्राणां व्याख्यानादर्शनादिति चेत्, सत्यम्, भाष्यादेव सर्वसूत्राणां व्याख्यातत्वेन अत्र प्रत्यधिकरणं तात्पर्यमात्रस्यैवोच्यमानत्वात् । अस्य च ग्रन्थस्याणुत्वात् । तात्पर्यकथनस्यापि व्याख्यानत्वस्य सुप्रसिद्धत्वात् । अतः युक्तेयं प्रतिज्ञेति।

### ओं अथातो ब्रह्मजिज्ञासा ओं

अथ वेदाध्ययनशमदमादिरूपाधिकारसम्पत्त्यनन्तरं, अतः मोक्षाख्यप्रयोजनस्य सत्त्वात्, ब्रह्मणः जिज्ञासा श्रवणादिरूपो विचारः कर्तव्यः इति सूत्रार्थः।

''तद्विजिज्ञासस्व तद्ब्रह्म'' (तै.उ.३-१)इत्यादिश्रुत्युक्तजिज्ञासाकर्तव्यत्वसमर्थनार्थमिदं अधिकरणम्। अस्मिन्नधिकरणे जीवव्यतिरिक्तब्रह्मणोऽभावात् जीवस्य च अहमिति स्वप्रकाशत्वेन

नित्यसिद्धत्वात् न जिज्ञास्यतेति पूर्वपक्षे प्राप्ते - जिज्ञास्ये "तद्विजिज्ञासस्व तद्ब्रह्म" इति ब्रह्मशब्दश्रवणात्। तेन च तस्य गुणपूर्णत्वोक्तेः । नानुभवसिद्धाल्पगुणजीवाभेदः। "अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन्गुणाः" इति श्रुतेः। अतः जीवस्य स्वप्रकाशत्वेऽपि तद्भिन्नब्रह्मणः सन्दिग्धत्वात् जिज्ञास्यता युक्ता इति सिद्धान्तः कृतः। तस्य तात्पर्यमाह - **विष्णुरेव विजिज्ञास्य** इति।

यद्यपि सूत्रे श्रुत्यनुसारेण ब्रह्मजिज्ञासा कर्तव्येत्युक्तं तथापि ब्रह्मशब्दस्य अनेकार्थत्वात् । सौत्रब्रह्मशब्देन किं ग्राह्यमित्यतः भगवत्प्रणीतदैवीमीमांसागत "स विष्णुराह हि" "तं ब्रह्मेत्याचक्षते" (दै.मी)इति निरन्तरसूत्रद्वये ब्रह्मत्वेन विष्णोरेव प्रकृतत्वात् । प्रकृतपरित्यागे कारणाभावात् सौत्रब्रह्मशब्देन विष्णुरेव ग्राह्य इति भावेन विष्णुरेव विजिज्ञास्यः इत्युक्तम् । ननु दैवीमीमांसायाः शेषपैलाभ्यां कृतत्वस्य पुराणादौ प्रसिद्धे कथं भगवत्कृतत्वम्? इति चेत् , न । "अथातो दैवीमीमांसा" इत्यादिभागस्य तथा "स विष्णुराह हि" "तं ब्रह्मेत्याचक्षते" इति अन्तभागस्य च भगवत्कृतत्वात् मध्यभागस्य च शेषपैलाभ्यां कृतत्वात् । तदुक्तमनुव्याख्याने (१-१-८२) " आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् । मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा।"इति। रमादेः जिज्ञास्यतानिरासार्थं एवकारः। न च " उपास्य तां श्रियमव्यक्तरूपां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः" (अग्निवेश्यशाखा) इति तज्जिज्ञास्यताप्रतिपादकवाक्यविरोधः। प्राधान्येन विष्णुरेव विजिज्ञास्य न रमादिः इत्यस्यार्थस्यात्राभिमतत्वात् । तदुक्तम् - सर्ववर्णाश्रमैर्विष्णुः एक एवेज्यते सदा। रमाब्रह्मादयस्तस्य परिवारतयैव तु। (स.स्मृ ३२) इति। "अन्यत्रापि परिवारतया ग्राह्याः अपि हेयाः प्रधानतः।" (अ.व्या.१-१-१३६)इति। जिज्ञासा कर्तव्येत्यस्य तात्पर्यं **विजिज्ञास्यः** इति। सूत्रे जिज्ञासेत्युक्तावपि वीत्युपसर्गः श्रुत्यनुगमायेति बोध्यम् ।।१।।

### ओं जन्माद्यस्य यतः ओं

अस्य प्रपञ्चस्य जन्मादि यथायोगं यतः भवति तद् ब्रह्मेति सूत्रार्थः।

अत्र "तद्विजिज्ञासस्व तद्ब्रह्म" (तै.उ.३-१)इति श्रुत्युक्तं ब्रह्म न विष्णुः किन्नाम जीव एव। "बृहजातिजीव" इति जीवप्रापकरूढिसद्भावात् । न च विष्णुप्रापकयोगसद्भावात् विष्णुरेवात्रोक्तं ब्रह्म किं न स्यादिति वाच्यं, योगाद्रूढेः मुख्यत्वात् । बाधकं विना मुख्यार्थत्यागायोगात् इति प्राप्ते-

तत्रैव जिज्ञास्यब्रह्मणः "यतो वा इमानि भूतानि जायन्ते" (तै.उ.३-१) इत्यादिना जन्मादिकारणत्वोक्तेः तल्लक्षणस्य च विष्णावेव सम्भवात् , जीवे असम्भवात् जिज्ञास्यं ब्रह्म

विष्णुरेवेति सिद्धान्तः कृतः। तस्य तात्पर्यमाह - **सर्वकर्ता** इति। विष्णुरेवेत्यनुवर्तते। सर्वेति तन्त्रं, आवृत्तिर्वा । विष्णुरेव सर्वस्य जगतः सर्वस्य जन्माद्यष्टकस्य कर्तेत्यर्थः। सर्वकारणं इत्यनुक्त्वा सर्वकर्तेति वदता जन्मादिकर्तृत्वमेव ब्रह्मलक्षणत्वेन श्रुतिसूत्राभिप्रेतं न परोक्तोपादानकारणत्वं इति सूचितम् ।।२।।

## ओं शास्त्रयोनित्वात् ओं

अनुमानेन जन्मादिकारणमन्यदिति न शङ्क्यम् , कुतः? शास्त्रयोनित्वात् । शास्त्रं योनिः ज्ञप्तिकारणं प्रमाणं इति यावत् । तस्य भावः तत्त्वम् । तस्माज्जगत्कारणत्वस्य वेदादिशास्त्रैक-समधिगम्यत्वात् इति सूत्रार्थः।

अत्र वेदोक्तं जगत्कारणत्वं हरेर्यथा अङ्गीकार्यं एवं अन्येषामपि तदङ्गीकार्यम् । क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत् इत्याद्यनुमानेन रुद्रादीनामपि जगज्जन्मादिकारणत्वस्य शक्यसाधनत्वात् । तथा च लक्षणस्य रुद्रादावतिव्याप्तिरिति प्राप्ते -

भवेदन्येषां जगत्कारणत्वकल्पना यदि जगत्कारणत्वं च आनुमानिकं स्यात् । न चैतदस्ति । शास्त्रैकसमधिगम्यत्वात् जगत्कारणत्वस्य । अनुमानस्य प्रतिपक्षादिग्रस्तत्वेन असाधकत्वात् । तथा च लक्षणस्य न रुद्रादावतिव्याप्तिरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **आगमोदित** इति। अत्र आगमशब्देन ऋगादिशास्त्रमेव ग्राह्यम् ।

> ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
> मूलरामायणं चैव शास्त्रमित्यभिधीयते।।
>
> यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
> अतोऽन्यो ग्रन्थविस्तारः नैव शास्त्रं कुवर्त्म तत्।।

इति स्कन्दपुराणात् । तेन उदितः प्रतिपादितः, जन्मादिकारणत्वेन शास्त्रैकसमधिगम्य इत्यर्थः ।।३।।

## ओं तत्तु समन्वयात् ओं

तत्तु तदेव ब्रह्मैव शास्त्रप्रतिपाद्यं कुतः? समन्वयात् । उपक्रमादिलिङ्गसमुदायादिति सूत्रार्थः।

अत्र विष्णोरिव रुद्रादीनामपि जगत्कारणत्वेन शास्त्रैकसमधिगम्यत्वम्। पाशुपताद्यागमेषु तथोक्तत्वात्। तस्मादतिव्याप्तं जगत्कारणत्वमिति प्राप्ते -

नित्यसिद्धत्वात् न जिज्ञास्यतेति पूर्वपक्षे प्राप्ते – जिज्ञास्ये ''तद्विजिज्ञासस्व तद्ब्रह्म'' इति ब्रह्मशब्दश्रवणात्। तेन च तस्य गुणपूर्णत्वोक्तेः । नानुभवसिद्धाल्पगुणजीवाभेदः। ''अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन्गुणाः'' इति श्रुतेः। अतः जीवस्य स्वप्रकाशत्वेऽपि तद्भिन्नब्रह्मणः सन्दिग्धत्वात् जिज्ञास्यता युक्ता इति सिद्धान्तः कृतः। तस्य तात्पर्यमाह – **विष्णुरेव विजिज्ञास्य** इति।

यद्यपि सूत्रे श्रुत्यनुसारेण ब्रह्मजिज्ञासा कर्तव्येत्युक्तं तथापि ब्रह्मशब्दस्य अनेकार्थत्वात् । सौत्रब्रह्मशब्देन किं ग्राह्यमित्यतः भगवत्प्रणीतदैवीमीमांसागत ''स विष्णुराह हि'' ''तं ब्रह्मेत्याचक्षते'' (दै.मी)इति निरन्तरसूत्रद्वये ब्रह्मत्वेन विष्णोरेव प्रकृतत्वात् । प्रकृतपरित्यागे कारणाभावात् सौत्रब्रह्मशब्देन विष्णुरेव ग्राह्य इति भावेन विष्णुरेव विजिज्ञास्यः इत्युक्तम् । ननु दैवीमीमांसायाः शेषपैलाभ्यां कृतत्वस्य पुराणादौ प्रसिद्धे कथं भगवत्कृतत्वम्? इति चेत् , न । ''अथातो दैवीमीमांसा'' इत्यादिभागस्य तथा ''स विष्णुराह हि'' ''तं ब्रह्मेत्याचक्षते'' इति अन्तभागस्य च भगवत्कृतत्वात् मध्यभागस्य च शेषपैलाभ्यां कृतत्वात् । तदुक्तमनुव्याख्याने (१-१-८२) '' आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् । मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा।''इति। रमादेः जिज्ञास्यतानिरासार्थं एवकारः। न च '' उपास्य तां श्रियमव्यक्तरूपां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः'' (अग्निवेश्यशाखा) इति तज्जिज्ञास्यताप्रतिपादकवाक्यविरोधः। प्राधान्येन विष्णुरेव विजिज्ञास्य न रमादिः इत्यस्यार्थस्यात्राभिमतत्वात् । तदुक्तम् – सर्ववर्णाश्रमैर्विष्णुः एक एवेज्यते सदा। रमाब्रह्मादयस्तस्य परिवारतयैव तु। (स.स्मृ ३२) इति। ''अन्यत्रापि परिवारतया ग्राह्याः अपि हेयाः प्रधानतः।'' (अ.व्या.१-१-१३६)इति। जिज्ञासा कर्तव्येत्यस्य तात्पर्यं **विजिज्ञास्यः** इति। सूत्रे जिज्ञासेत्युक्तावपि वीत्युपसर्गः श्रुत्यनुगमायेति बोध्यम् ।।१।।

## ओं जन्माद्यस्य यतः ओं

अस्य प्रपञ्चस्य जन्मादि यथायोगं यतः भवति तद् ब्रह्मेति सूत्रार्थः।

अत्र ''तद्विजिज्ञासस्व तद्ब्रह्म'' (तै.उ.३-१)इति श्रुत्युक्तं ब्रह्म न विष्णुः किन्नाम जीव एव। ''बृहजातिजीव'' इति जीवप्रापकरूढिसद्भावात् । न च विष्णुप्रापकयोगसद्भावात् विष्णुरेवात्रोक्तं ब्रह्म किं न स्यादिति वाच्यं, योगाद्रूढेः मुख्यत्वात् । बाधकं विना मुख्यार्थत्यागायोगात् इति प्राप्ते–

तत्रैव जिज्ञास्यब्रह्मणः ''यतो वा इमानि भूतानि जायन्ते'' (तै.उ.३-१) इत्यादिना जन्मादिकारणत्वोक्तेः तल्लक्षणस्य च विष्णावेव सम्भवात् , जीवे असम्भवात् जिज्ञास्यं ब्रह्म

विष्णुरेवेति सिद्धान्तः कृतः। तस्य तात्पर्यमाह - **सर्वकर्ता** इति। विष्णुरेवेत्यनुवर्तते। सर्वेति तन्त्रं, आवृत्तिर्वा । विष्णुरेव सर्वस्य जगतः सर्वस्य जन्माद्यष्टकस्य कर्तेत्यर्थः। सर्वकारणं इत्यनुक्त्वा सर्वकर्तेति वदता जन्मादिकर्तृत्वमेव ब्रह्मलक्षणत्वेन श्रुतिसूत्राभिप्रेतं न परोक्तोपादानकारणत्वं इति सूचितम् ।।२।।

## ओं शास्त्रयोनित्वात् ओं

अनुमानेन जन्मादिकारणमन्यदिति न शङ्क्यम् , कुतः? शास्त्रयोनित्वात् । शास्त्रं योनिः ज्ञप्तिकारणं प्रमाणं इति यावत् । तस्य भावः तत्त्वम् । तस्माज्जगत्कारणत्वस्य वेदादिशास्त्रैक-समधिगम्यत्वात् इति सूत्रार्थः।

अत्र वेदोक्तं जगत्कारणत्वं हरेर्यथा अङ्गीकार्यं एवं अन्येषामपि तदङ्गीकार्यम् । क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत् इत्याद्यनुमानेन रुद्रादीनामपि जगज्जन्मादिकारणत्वस्य शक्यसाधनत्वात्। तथा च लक्षणस्य रुद्रादावतिव्याप्तिरिति प्राप्ते -

भवेदन्येषां जगत्कारणत्वकल्पना यदि जगत्कारणत्वं च आनुमानिकं स्यात् । न चैतदस्ति । शास्त्रैकसमधिगम्यत्वात् जगत्कारणत्वस्य । अनुमानस्य प्रतिपक्षादिग्रस्तत्वेन असाधकत्वात् । तथा च लक्षणस्य न रुद्रादावतिव्याप्तिरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **आगमोदित** इति। अत्र आगमशब्देन ऋगादिशास्त्रमेव ग्राह्यम् ।

> ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
> मूलरामायणं चैव शास्त्रमित्यभिधीयते।।
>
> यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
> अतोऽन्यो ग्रन्थविस्तारः नैव शास्त्रं कुवर्त्म तत्।।

इति स्कन्दपुराणात् । तेन उदितः प्रतिपादितः, जन्मादिकारणत्वेन शास्त्रैकसमधिगम्य इत्यर्थः ।।३।।

## ओं तत्तु समन्वयात् ओं

तत्तु तदेव ब्रह्मैव शास्त्रप्रतिपाद्यं कुतः? समन्वयात् । उपक्रमादिलिङ्गसमुदायादिति सूत्रार्थः।

अत्र विष्णोरिव रुद्रादीनामपि जगत्कारणत्वेन शास्त्रैकसमधिगम्यत्वम्। पाशुपताद्यागमेषु तथोक्तत्वात्। तस्मादतिव्याप्तं जगत्कारणत्वमिति प्राप्ते -

नित्यसिद्धत्वात् न जिज्ञास्यतेति पूर्वपक्षे प्राप्ते - जिज्ञास्ये "तद्विजिज्ञासस्व तद्ब्रह्म" इति ब्रह्मशब्दश्रवणात्। तेन च तस्य गुणपूर्णत्वोक्तेः । नानुभवसिद्धाल्पगुणजीवाभेदः। "अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन्गुणाः" इति श्रुतेः। अतः जीवस्य स्वप्रकाशत्वेऽपि तद्भिन्नब्रह्मणः सन्दिग्धत्वात् जिज्ञास्यता युक्ता इति सिद्धान्तः कृतः। तस्य तात्पर्यमाह - **विष्णुरेव विजिज्ञास्य** इति।

यद्यपि सूत्रे श्रुत्यनुसारेण ब्रह्मजिज्ञासा कर्तव्येत्युक्तं तथापि ब्रह्मशब्दस्य अनेकार्थत्वात् । सौत्रब्रह्मशब्देन किं ग्राह्यमित्यतः भगवत्प्रणीतदैवीमीमांसागत "स विष्णुराह हि" "तं ब्रह्मेत्याचक्षते" (दै.मी)इति निरन्तरसूत्रद्वये ब्रह्मत्वेन विष्णोरेव प्रकृतत्वात् । प्रकृतपरित्यागे कारणाभावात् सौत्रब्रह्मशब्देन विष्णुरेव ग्राह्य इति भावेन विष्णुरेव विजिज्ञास्यः इत्युक्तम् । ननु दैवीमीमांसायाः शेषपैलाभ्यां कृतत्वस्य पुराणादौ प्रसिद्धे कथं भगवत्कृतत्वम्? इति चेत् , न । "अथातो दैवीमीमांसा" इत्यादिभागस्य तथा "स विष्णुराह हि" "तं ब्रह्मेत्याचक्षते" इति अन्तभागस्य च भगवत्कृतत्वात् मध्यभागस्य च शेषपैलाभ्यां कृतत्वात् । तदुक्तमनुव्याख्याने (१-१-८२) " आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् । मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा।"इति। रमादेः जिज्ञास्यतानिरासार्थं एवकारः। न च " उपास्य तां श्रियमव्यक्तरूपां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः" (अग्निवेश्यशाखा) इति तज्जिज्ञास्यताप्रतिपादकवाक्यविरोधः। प्राधान्येन विष्णुरेव विजिज्ञास्य न रमादिः इत्यस्यार्थस्यात्राभिमतत्वात् । तदुक्तम् - सर्ववर्णाश्रमैर्विष्णुः एक एवेज्यते सदा। रमाब्रह्मादयस्तस्य परिवारतयैव तु। (स.स्मृ ३२) इति। "अन्यत्रापि परिवारतया ग्राह्याः अपि हेयाः प्रधानतः।" (अ.व्या.१-१-१३६)इति। जिज्ञासा कर्तव्येत्यस्य तात्पर्यं **विजिज्ञास्यः** इति। सूत्रे जिज्ञासेत्युक्तावपि वीत्युपसर्गः श्रुत्यनुगमायेति बोध्यम् ।।१।।

**ओं जन्माद्यस्य यतः ओं**

अस्य प्रपञ्चस्य जन्मादि यथायोगं यतः भवति तद् ब्रह्मेति सूत्रार्थः।

अत्र "तद्विजिज्ञासस्व तद्ब्रह्म" (तै.उ.३-१)इति श्रुत्युक्तं ब्रह्म न विष्णुः किन्नाम जीव एव। "बृहजातिजीव" इति जीवप्रापकरूढिसद्भावात् । न च विष्णुप्रापकयोगसद्भावात् विष्णुरेवात्रोक्तं ब्रह्म किं न स्यादिति वाच्यं, योगाद्रूढेः मुख्यत्वात् । बाधकं विना मुख्यार्थत्यागायोगात् इति प्राप्ते-

तत्रैव जिज्ञास्यब्रह्मणः "यतो वा इमानि भूतानि जायन्ते" (तै.उ.३-१) इत्यादिना जन्मादिकारणत्वोक्तेः तल्लक्षणस्य च विष्णावेव सम्भवात् , जीवे असम्भवात् जिज्ञास्यं ब्रह्म

विष्णुरेवेति सिद्धान्तः कृतः। तस्य तात्पर्यमाह - **सर्वकर्ता** इति। विष्णुरेवेत्यनुवर्तते। सर्वेति तन्त्रं, आवृत्तिर्वा । विष्णुरेव सर्वस्य जगतः सर्वस्य जन्माद्यष्टकस्य कर्तेत्यर्थः। सर्वकारणं इत्यनुक्त्वा सर्वकर्तेति वदता जन्मादिकर्तृत्वमेव ब्रह्मलक्षणत्वेन श्रुतिसूत्राभिप्रेतं न परोक्तोपादानकारणत्वं इति सूचितम् ।।२।।

## ओं शास्त्रयोनित्वात् ओं

अनुमानेन जन्मादिकारणमन्यदिति न शङ्क्यम् , कुतः? शास्त्रयोनित्वात् । शास्त्रं योनिः ज्ञप्तिकारणं प्रमाणं इति यावत् । तस्य भावः तत्त्वम् । तस्माज्जगत्कारणत्वस्य वेदादिशास्त्रैक-समधिगम्यत्वात् इति सूत्रार्थः।

अत्र वेदोक्तं जगत्कारणत्वं हरेर्यथा अङ्गीकार्यं एवं अन्येषामपि तदङ्गीकार्यम् । क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत् इत्याद्यनुमानेन रुद्रादीनामपि जगज्जन्मादिकारणत्वस्य शक्यसाधनत्वात् । तथा च लक्षणस्य रुद्रादावतिव्याप्तिरिति प्राप्ते -

भवेदन्येषां जगत्कारणत्वकल्पना यदि जगत्कारणत्वं च आनुमानिकं स्यात् । न चैतदस्ति । शास्त्रैकसमधिगम्यत्वात् जगत्कारणत्वस्य । अनुमानस्य प्रतिपक्षादिग्रस्तत्वेन असाधकत्वात् । तथा च लक्षणस्य न रुद्रादावतिव्याप्तिरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **आगमोदित** इति। अत्र आगमशब्देन ऋगादिशास्त्रमेव ग्राह्यम् ।

ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते।।

यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारः नैव शास्त्रं कुवर्त्म तत्।।

इति स्कन्दपुराणात् । तेन उदितः प्रतिपादितः, जन्मादिकारणत्वेन शास्त्रैकसमधिगम्य इत्यर्थः ।।३।।

## ओं तत्तु समन्वयात् ओं

तत्तु तदेव ब्रह्मैव शास्त्रप्रतिपाद्यं कुतः? समन्वयात् । उपक्रमादिलिङ्गसमुदायादिति सूत्रार्थः।

अत्र विष्णोरिव रुद्रादीनामपि जगत्कारणत्वेन शास्त्रैकसमधिगम्यत्वम्। पाशुपताद्यागमेषु तथोक्तत्वात्। तस्मादतिव्याप्तं जगत्कारणत्वमिति प्राप्ते -

पाशुपताद्युक्तमपि तन्न ग्राह्यम् । वेदगतोपक्रमादितात्पर्यलिङ्गादीनामेव शास्त्रनिर्णायकत्वेन तद्विरुद्धस्य पाशुपताद्यागमस्य अनिर्णायकत्वात् । न चात्र प्रमाणाभावः। "उपक्रमोपसंहाराव-भ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।" इति स्मृतेः। एवं च उपक्रमादिभिः सम्यक् शास्त्रे विचार्यमाणे ब्रह्मैव जगत्कारणत्वेन मुख्यतः शास्त्रगम्यं प्रतीयते। न रुद्रादि। तस्मादनतिव्याप्तं जगत्कारणत्वं तस्यैव लक्षणमिति सिद्धन्तः कृतः।

तस्य तात्पर्यमाह - **समन्वयात्** इति। समित्यस्यावृत्तिः। एकः सम्यगित्यर्थकः। अपरः मुख्यार्थकः। (अन्यः कृत्स्नार्थकः) अन्वयादित्येकवचनं समुदायाभिप्रायम् । अन्वीयते शक्तितात्पर्यगोचरतया ज्ञायते अर्थः अनेनेत्यन्वयः उपक्रमादिलिङ्गसमुदायः। तस्मात् सम्यक् विचार्यमाणे मुख्यतः जगत्कारणत्वेन सर्वागमोदितो विष्णुरेव इति पूर्वेणान्वयः॥४॥

## ओं ईक्षतेर्नाशब्दम् ओं

तदित्यनुवर्तते। तत् ब्रह्म अशब्दं न, अवाच्यं न, किन्तु वाच्यमेव। कुतः ? ईक्षतेः। अत्र ईक्षते इति धातुनिर्देशः। तेन तदर्थः ईक्षणं लक्ष्यते। तेन च तद्विषयत्वं लक्ष्यते। तथा च लक्षितलक्षणया ईक्षणविषयत्वात् इति सूत्रार्थः।

अत्र न ब्रह्मणः शास्त्रमुख्यार्थत्वं, अवाच्यत्वात् । न च असिद्धो हेतुः। "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः। न ह्यवाच्यस्य शास्त्रमुख्यार्थता सम्भवति। अतो न शास्त्रोक्तं जगत्कारणत्वं तस्येति प्राप्ते -

अवाच्यत्वात् ब्रह्मणः न शास्त्रमुख्यार्थत्वमिति न युक्तम् । ईक्षणीयत्वेन वाच्यत्वस्य सिद्धत्वात् । न च ईक्षणीयत्वमसिद्धमिति वाच्यम् । "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत"(प्र.उ.५-५) "आत्मन्येवात्मानं पश्येत्" इत्यादिश्रुतिसिद्धत्वात् । ईक्षणीयत्वेन वाच्यत्वसिद्धिः कथमिति चेत् परिशेषप्रमाणादिति गृहाण। तथा हि । श्रुतिषु तावत् ईक्षणीयत्वं ब्रह्मणः श्रूयते। ईक्षणं च प्रमाणेन भवेत् । प्रसक्तप्रमाणेषु च ब्रह्मणो न वचनेतरप्रमाणेनेक्षणम् । तस्यौपनिषदत्वात् । वचनेनेक्षणं च अवाच्ये वृत्यन्तरायोगेन परिशेषाद्वाच्यत्वमेव साधयति। न च तस्य वाच्यत्वे "यतो वाचो निवर्तन्ते" इत्यादिश्रुतिविरोधः। तस्याः अप्रसिद्धत्वाभिधायकत्वेन अवाच्यत्वानभिधायकत्वात् । तदुक्तम् - "अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः" । इति । तस्मात् शास्त्रोक्तजगत्कारणत्वं तस्यैव युक्तमिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **ईक्षतेश्च** इति। चशब्दः आगमोदितः इत्यस्यानुकर्षणार्थः। सूत्रानुसारेण धातुनिर्देशः। तेन च तदर्थः ईक्षणं लक्ष्यते। तथा च लक्षितलक्षणया ईक्षणीयत्वादित्यर्थः। अस्यापि हेतोः विष्णुरागमोदित एवेत्यनुषङ्गः। शब्दवाच्य एवेत्यर्थः। तदुक्तमनुव्याख्याने(१-१-१२१)

ईक्षणीयत्वतो विष्णुः वाच्य एव न चान्यथा। इति। तस्मात् शास्त्रयोनित्वं जगत्कारणत्वं च तस्यैव युक्तमिति भावः ।।५ ।।

एवं सामान्यतः भगवति तत्तु समन्वयादिति सर्वशब्दसमन्वये सिद्धे, तमेव समन्वयं प्रतिवाक्यग्रहणेन प्रपञ्चयितुं अध्यायशेषः प्रवृत्तः।

शब्दास्तावच्चतुर्विधाः। तत्र प्रसिद्धाः। लोकतो अन्यत्र प्रसिद्धाः। यथाकथञ्चित् उभयत्र प्रसिद्धाः। श्रुतिलिङ्गादिभिः अन्यत्रैव प्रसिद्धाः इति। सर्वेऽपि प्रत्येकं द्विविधाः। नामात्मकाः लिङ्गात्मकाश्चेति। तेषु तत्र प्रसिद्धानां समन्वयो न वाच्यः विप्रतिपत्त्यभावात्। तत्रादौ तावत् लोकतोऽन्यत्र प्रसिद्धानां नामात्मकानां शब्दानां विष्णौ समन्वयं प्रदर्शयत्यस्मिन्पादे सूत्रकारः।।

**ओं आनन्दमयोऽभ्यासात् ओं**

आनन्दमयशब्दवाच्यो विष्णुरेव, कुतः? अभ्यासात् , ब्रह्मशब्दाभ्यासादिति सूत्रार्थः।

पूर्वं ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । तच्च ब्रह्म "ब्रह्म पुच्छं प्रतिष्ठा" (तै.उ.२-५)इति आनन्दमयावयवरूपं प्रतीयते। न ह्यवयविनं विना अवयवमात्रस्य जिज्ञास्यतेत्याशङ्कायामिदं अधिकरणं प्राप्तम् ।

अत्र "तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्मपुच्छं प्रतिष्ठा" इति तैत्तिरीयश्रुत्युक्त(२-५) आनन्दमयो न विष्णुः । किन्नाम हिरण्यगर्भादय एव। कुतः ? आनन्दमयमधिकृत्य "अस्ति ब्रह्मेति चेद्वेद" (तै.उ.२-६)इति हिरण्यगर्भनिष्ठब्रह्मशब्दश्रवणात् । आनन्दमयसमानार्थकशतानन्दनाम्नः तस्मिन्प्रसिद्धेश्च । यद्यपि हिरण्यगर्भस्येव ब्रह्मशब्देन विष्णोरप्यस्ति प्राप्तिः। तथापि नासावानन्दमयः। "ब्रह्म पुच्छं प्रतिष्ठा" (तै.उ.२-५)इति विष्णोः आनन्दमयावयवत्वोक्तेः। तस्य च आनन्दमयत्वे तदवयवत्वविरोधात् । तथा च आनन्दमयस्याब्रह्मत्वेन न तदवयवब्रह्मजिज्ञासा सम्भवतीति प्राप्ते -

अयं आनन्दमयो विष्णुरेव। "असन्नेव स भवति। असद् ब्रह्मेति वेद् चेत् । अस्ति ब्रह्मेति चेद्वेद" इति आनन्दमये ब्रह्मशब्दाभ्यासात्। "तदेव ब्रह्म परमं कवीनां एतमेव ब्रह्मेत्याचक्षते" (म.ना.उ.१-६)

ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते।
असम्पूर्णाः परे यस्मात् उपचारेण वा भवेत् ।

इत्यादिश्रुतिस्मृतिषु पूर्णत्वेन विष्णावेव ब्रह्मशब्दस्य परममुख्यत्वस्यान्येषां अपूर्णत्वेन ब्रह्मशब्द-मुख्यार्थताभावस्य च उक्तत्वात्। मुख्यार्थत्यागेन अमुख्यार्थग्रहणायोगात् । न चानन्दमयस्य विष्णुत्वे तस्य तत्पुच्छत्वोक्तिविरोधः "स शिरः। स दक्षिणः पक्षः। स उत्तरः पक्षः। स आत्मा। स पुच्छम्" इति श्रुतौ अवयविन एव अवयवत्वोक्तेः। अतः ब्रह्मजिज्ञासा युक्तेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **पूर्णानन्द** इति। आनन्दमय इत्यत्र मयटः प्राचुर्यार्थत्वं अङ्गीकृत्य पूर्णेत्युक्तम्। आनन्दमय इत्यत्र आनन्दप्रचुर इत्येव व्याख्याने ब्राह्मणप्रचुरो ग्रामः इत्यत्र अल्पशूद्रप्राप्तिवत् अनानन्दस्यापि प्राप्तिस्स्यात्। अतः प्रचुरानन्द इति विपरीतसमासमभिप्रेत्य प्राचुर्यं पूर्णत्वं इति भावेन पूर्णानन्द इत्युक्तम् ।।६।।

### ओं अन्तस्तद्धर्मोपदेशात् ओं

अन्तः श्रूयमाणो विष्णुरेव। कुतः? समुद्रान्तस्थत्वादि तद्धर्मव्यपदेशादिति सूत्रार्थः।

अत्र "अन्तः प्रविष्टं कर्तारमेतम्। अन्तश्चन्द्रमसि मनसा चरन्तम्। सहैव सन्तं न विजानन्ति देवाः" (तै.आ.३-११-२) इति श्रुतौ प्रतीयमानः अन्तस्थो न विष्णुः, इन्द्रादिरेव स्यात्। "इन्द्रो राजा जगतो य ईशे" (तै.आ.३-११-६) इति इन्द्रश्रुत्यादेः। न चेन्द्रादयः शब्दाः अन्यत्र नेतुं शक्यन्ते। तेषां देवेष्वेव रूढत्वात्। न चादृश्यत्वलिङ्गादन्तस्थो विष्णुरेवेति वाच्यम्। श्रुत्यादिभ्यो लिङ्गमात्रस्य दुर्बलत्वादिति प्राप्ते -

अयमन्तस्थो विष्णुरेव। "समुद्रे अन्तः कवयो विचक्षथे...।... यस्याण्डकोशं शुष्ममाहुः" (तै.आ.३-११) इत्यादिना प्रलयसमुद्रशायित्व, क्षीरसमुद्रशायित्व, ब्रह्माण्डवीर्यत्वादिविष्णुलिङ्गानां अन्तःप्रविष्टनिष्ठतयोपदेशात्। न चान्यप्रापकश्रुत्यादेः प्राबल्यात् लिङ्गबाधकत्वमिति वाच्यम्। लिङ्गानां निरवकाशत्वात्। इन्द्रादिश्रुत्यादेः भगवति सावकाशत्वात्। दुर्बलेनापि निरवकाशेन प्रबलस्यापि सावकाशस्य बाधोपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह **अन्तर** इति। अन्तस्थः इत्यर्थः। अन्तरशब्दोपपदात् अस्तेः क्विपि निर्वचनत्वात् धातुसकारलोपे उपपदान्त्यस्य रुत्वे अन्तर इति रूपम्। नामात्मकेऽपि पादे इन्द्राद्यनेकनामसमन्वयसिद्ध्यर्थं एकस्यान्तस्थत्वलिङ्गस्य समन्वयः कृतः इत्यदोषः ।।७।।

### ओं आकाशस्तल्लिङ्गात् ओं

आकाशशब्दवाच्यो विष्णुरेव। कुतः? सर्वोत्तमत्वादितल्लिङ्गश्रवणादिति सूत्रार्थः।

अत्र "अस्य लोकस्य का गतिरित्याकाश इति होवाच। सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यान्ति। आकाशो ह्येवैभ्यो ज्यायान्। आकाशः

परायणम् । स एषः परोवरीयानुद्गीथः स एषोऽनन्तः'' इति छन्दोग(१-९)श्रुत्युक्ताकाशो भूताकाश एव। आकाशशब्दस्य तत्र रूढत्वादिति प्राप्ते -

अयमाकाशो विष्णुरेव। ''स एषः परोवरीयान् उद्गीथः स एषोऽनन्तः''(छा.१-९) इति निरवकाशसर्वोत्तमत्वादिविष्णुलिङ्गस्य आकाशनिष्ठतया श्रवणात् । आकाशश्रुतेश्च विष्णौ सावकाशत्वात् । लिङ्गस्याकाशे अनवकाशात् दुर्बलेनापि निरवकाशेन प्रबलस्यापि सावकाशस्य बाधोपपत्तेरिति सिद्धन्तः कृतः।

तस्य तात्पर्यमाह - **खवत्** इति। स्वयमाकाशं वर्तयति प्रवर्तयति प्रेरयतीति यावत् । ''नभो ददाति श्वसतां मार्गं सन्नियमाददः'' इत्युक्तेः। खशब्दे कर्मवाचके उपपदे वृतु वर्तने इत्यस्माद्धातोः अन्तर्णीतण्यर्थात् कर्तरि ड प्रत्यये धातुटिलोपे खवदिति रूपनिष्पत्तिः। तस्मात् तच्छब्दमुख्यवाच्यः इत्यर्थः ।।८।।

**नारायणाचार्य-** अथ वा चतुर्लक्षणीप्रमेयं विशेषणचतुष्टयेनोक्तमिति ध्येयम् । तत्र तावच्छ्रुत्यर्थनिर्णायकन्यायग्रथनात्मकब्रह्ममीमांसाशास्त्रं प्रति जडस्य घटादेर्यथायथं प्रत्यक्षादिसिद्धत्वेन प्रयोजनज्ञानत्वेन च, धर्मादेश्च पूर्वमीमांसयैव निर्णीतत्वेन, चेतनस्य जीवस्याहमिति प्रत्यक्षादि-सिद्धत्वेन निष्प्रयोजनज्ञानत्वेन च, प्रत्यक्षाद्यवेद्यस्येश्वरस्य तु धर्मप्रतिपादककर्मकाण्डरूपवेदभागा-प्रतिपाद्यत्वात्, वेदो स्वरत्वेन निरर्थकैः वेदान्तैरप्यबोध्यत्वात्, तत्सार्थकत्वे वा तत्रत्यात्म-ब्रह्मादिशब्दानां जीवादिपरत्वेन तद्बोधकत्वाभावात् अप्रामाणिकतया विषयत्वायोगात्। पुरुषार्थ-त्वाभिमतधर्मादिचतुष्टये त्वाद्यत्रिकस्य अन्यलभ्यतया मोक्षस्य चाप्रामाणिकतया सप्रमाणकत्वे वा तस्य ''अपामसोमममृता अभूम'' (तै.आ.३-१२)इत्यादिश्रुतेः सोमयागादिसाध्यतया प्रयोजनत्वा-योगात्तत एव विषयजिज्ञासोः प्रयोजनेच्छोरधिकारिणोऽप्यसंभवात् सम्बन्धस्याप्यत एवानिरूप्यत्वा-दनुबन्धचतुष्टयहीनस्यास्य शास्त्रस्यानारम्भणीयत्वमिति प्राप्ते विषयप्रयोजनादिमत्वात् आरम्भणीय-मेव ब्रह्ममीमांसाशास्त्रमित्यभिप्रेत्य सूत्रितं भगवता बादरायणेन **ओं अथातो ब्रह्मजिज्ञासा** इति। तस्याथशब्देनाधिकारमत इत्यमुना फलं ब्रह्मशब्देन विषयं सूचयामास। सूत्रकृत् इत्युक्तप्रकारेण विस्तरं भाष्ये एव व्याख्यातत्वात् । संक्षेपेण तदर्थमाह **विष्णुरेव विजिज्ञास्य** इति । एतेन ''तद्विजिज्ञासस्व तद्ब्रह्म'' (तै.उ.३-१)इति श्रौतब्रह्मशब्दस्य ''अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा'' इति श्रौतनिर्वचनेन जीवादिष्वसम्भवतो विष्णुपरत्वात्तस्य च संदिग्धत्वेन विषयत्वोपपत्तेर्युक्तं जिज्ञास्यत्वम्। अतः शास्त्रमारम्भणीयमित्युक्तं भवति।

उपलक्षणं चैतत् । प्रयोजनाधिकार्यादेरपि स्वशब्देन विषयस्योपादानं तु विषयसिध्यधीनत्वात् प्रयोजनादिसिद्धेः। अपूर्वविषयलाभे हि अनन्यथासिद्धतज्ज्ञानादेः प्रयोजनता तत्कामस्याधिकारिता च लभ्यत एव । यदुक्तं प्रयोजनत्वाभिमतमोक्षस्य अन्यलभ्यत्वं तन्निरासाय विष्णुरेवेत्येवशब्दः।

इत्यादिश्रुतिस्मृतिषु पूर्णत्वेन विष्णावेव ब्रह्मशब्दस्य परममुख्यत्वस्यान्येषां अपूर्णत्वेन ब्रह्मशब्द-मुख्यार्थताभावस्य च उक्तत्वात्। मुख्यार्थत्यागेन अमुख्यार्थग्रहणायोगात् । न चानन्दमयस्य विष्णुत्वे तस्य तत्पुच्छत्वोक्तिविरोधः "स शिरः। स दक्षिणः पक्षः। स उत्तरः पक्षः। स आत्मा । स पुच्छम्" इति श्रुतौ अवयविन एव अवयवत्वोक्तेः। अतः ब्रह्मजिज्ञासा युक्तेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **पूर्णानन्द** इति। आनन्दमय इत्यत्र मयटः प्राचुर्यार्थत्वं अङ्गीकृत्य पूर्णेत्युक्तम् । आनन्दमय इत्यत्र आनन्दप्रचुर इत्येव व्याख्याने ब्राह्मणप्रचुरो ग्रामः इत्यत्र अल्पशूद्रप्राप्तिवत् अनानन्दस्यापि प्राप्तिस्स्यात् । अतः प्रचुरानन्द इति विपरीतसमासमभिप्रेत्य प्राचुर्यं पूर्णत्वं इति भावेन पूर्णानन्द इत्युक्तम् ।।६।।

### ओं अन्तस्तद्धर्मोपदेशात् ओं

अन्तः श्रूयमाणो विष्णुरेव। कुतः? समुद्रान्तस्थत्वादि तद्धर्मव्यपदेशादिति सूत्रार्थः।

अत्र "अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः" (तै.आ.३-११-२) इति श्रुतौ प्रतीयमानः अन्तस्थो न विष्णुः, इन्द्रादिरेव स्यात् । "इन्द्रो राजा जगतो य ईशे" (तै.आ.३-११-६) इति इन्द्रश्रुत्यादेः। न चेन्द्रादयः शब्दाः अन्यत्र नेतुं शक्यन्ते। तेषां देवेष्वेव रूढत्वात् । न चादृश्यत्वलिङ्गादन्तस्थो विष्णुरेवेति वाच्यम् । श्रुत्यादिभ्यो लिङ्गमात्रस्य दुर्बलत्वादिति प्राप्ते -

अयमन्तस्थो विष्णुरेव। "समुद्रे अन्तः कवयो विचक्षथे...।... यस्याण्डकोशं शुष्ममाहुः" (तै.आ.३-११) इत्यादिना प्रलयसमुद्रशायित्व, क्षीरसमुद्रशायित्व, ब्रह्माण्डवीर्यत्वादिविष्णुलिङ्गानां अन्तःप्रविष्टनिष्ठतयोपदेशात् । न चान्यप्रापकश्रुत्यादेः प्राबल्यात् लिङ्गबाधकत्वमिति वाच्यम् । लिङ्गानां निरवकाशत्वात् । इन्द्रादिश्रुत्यादेः भगवति सावकाशत्वात् । दुर्बलेनापि निरवकाशेन प्रबलस्यापि सावकाशस्य बाधोपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह **अन्तर** इति। अन्तस्थः इत्यर्थः। अन्तरशब्दोपपदात् अस्तेः क्विपि निर्वचनत्वात् धातुसकारलोपे उपपदान्त्यस्य रुत्वे अन्तर इति रूपम् । नामात्मकेऽपि पादे इन्द्राद्यनेकनामसमन्वयसिद्ध्यर्थं एकस्यान्तस्थत्वलिङ्गस्य समन्वयः कृतः इत्यदोषः ।।७।।

### ओं आकाशस्तल्लिङ्गात् ओं

आकाशशब्दवाच्यो विष्णुरेव । कुतः? सर्वोत्तमत्वादितल्लिङ्गश्रवणादिति सूत्रार्थः।

अत्र "अस्य लोकस्य का गतिरित्याकाश इति होवाच । सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यान्ति। आकाशो ह्येवैभ्यो ज्यायान् । आकाशः

परायणम् । स एषः परोवरीयानुद्गीथः स एषोऽनन्तः'' इति छन्दोग(१-९)श्रुत्युक्ताकाशो भूताकाश एव। आकाशशब्दस्य तत्र रूढत्वादिति प्राप्ते -

अयमाकाशो विष्णुरेव। ''स एषः परोवरीयान् उद्गीथः स एषोऽनन्तः''(छा.१-९) इति निरवकाशसर्वोत्तमत्वादिविष्णुलिङ्गस्य आकाशनिष्ठतया श्रवणात् । आकाशश्रुतेश्च विष्णौ सावकाशत्वात् । लिङ्गस्याकाशे अनवकाशात् दुर्बलेनापि निरवकाशेन प्रबलस्यापि सावकाशस्य बाधोपपत्तेरिति सिद्धन्तः कृतः।

तस्य तात्पर्यमाह - **खवत्** इति। स्वयमाकाशं वर्तयति प्रवर्तयति प्रेरयतीति यावत् । ''नभो ददाति श्वसतां मार्गं सन्नियमाददः'' इत्युक्तेः। खशब्दे कर्मवाचके उपपदे वृतु वर्तने इत्यस्माद्धातोः अन्तर्णीतण्यर्थात् कर्तरि ड प्रत्यये धातुटिलोपे खवदिति रूपनिष्पत्तिः। तस्मात् तच्छब्दमुख्यवाच्यः इत्यर्थः ॥८॥

**नारायणाचार्य–** अथ वा चतुर्लक्षणीप्रमेयं विशेषणचतुष्टयेनोक्तमिति ध्येयम् । तत्र तावच्छ्रुत्यर्थनिर्णायिकन्यायग्रथनात्मकब्रह्ममीमांसाशास्त्रं प्रति जडस्य घटादेर्यथायथं प्रत्यक्षादिसिद्धत्वेन प्रयोजनज्ञानत्वेन च, धर्मादेश्च पूर्वमीमांसयैव निर्णीतत्वेन, चेतनस्य जीवस्याहमिति प्रत्यक्षादि-सिद्धत्वेन निष्प्रयोजनज्ञानत्वेन च, प्रत्यक्षाद्यवेद्यस्येश्वरस्य तु धर्मप्रतिपादककर्मकाण्डरूपवेदभागा-प्रतिपाद्यत्वात्, वेदो स्वरत्वेन निरर्थकैः वेदान्तैरप्यबोध्यत्वात्, तत्सार्थकत्वे वा तत्रत्यात्म-ब्रह्मादिशब्दानां जीवादिपरत्वेन तद्बोधकत्वाभावात् अप्रामाणिकतया विषयत्वायोगात्। पुरुषार्थ-त्वाभिमतधर्मादिचतुष्टये त्वाद्यत्रिकस्य अन्यलभ्यतया मोक्षस्य चाप्रामाणिकतया सप्रमाणकत्वे वा तस्य ''अपामसोमममृता अभूम'' (तै.आ.३-१२)इत्यादिश्रुतेः सोमयागादिसाध्यतया प्रयोजनत्वा-योगात्तत एव विषयज्ञिज्ञासोः प्रयोजनेच्छोरधिकारिणोऽप्यसंभवात् सम्बन्धस्याप्यत एवानिरूप्यत्वा-दनुबन्धचतुष्टयहीनस्यास्य शास्त्रस्यानारम्भणीयत्वमिति प्राप्ते विषयप्रयोजनादिमत्वात् आरम्भणीय-मेव ब्रह्ममीमांसाशास्त्रमित्यभिप्रेत्य सूत्रितं भगवता बादरायणेन **ओं अथातो ब्रह्मजिज्ञासा** इति। तस्याथशब्देनाधिकारमत इत्यमुना फलं ब्रह्मशब्देन विषयं सूचयामास। सूत्रकृत् इत्युक्तप्रकारेण विस्तरं भाष्ये एव व्याख्याततत्वात् । संक्षेपेण तदर्थमाह **विष्णुरेव विजिज्ञास्य** इति । एतेन ''तद्विजिज्ञासस्व तद्ब्रह्म'' (तै.उ.३-१)इति श्रौतब्रह्मशब्दस्य ''अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा'' इति श्रौतनिर्वचनेन जीवादिष्वसम्भवतो विष्णुपरत्वात्तस्य च संदिग्धत्वेन विषयत्वोपपत्तेर्युक्तं जिज्ञास्यत्वम्। अतः शास्त्रमारम्भणीयमित्युक्तं भवति।

उपलक्षणं चैतत् । प्रयोजनाधिकार्यादेरपि स्वशब्देन विषयस्योपादानं तु विषयसिध्यधीनत्वात् प्रयोजनादिसिद्धेः। अपूर्वविषयलाभे हि अनन्यथासिद्धतज्ज्ञानादेः प्रयोजनता तत्कामस्याधिकारिता च लभ्यत एव । यदुक्तं प्रयोजनत्वाभिमतमोक्षस्य अन्यलभ्यत्वं तन्निरासाय विष्णुरेवेत्येवशब्दः।

तेन प्रयोजनकामैः विष्णुरेव विजिज्ञास्यो न तु धर्मादिः। तस्य विवक्षितफलाजनकत्वात् । "तमैवेकं जानथ आत्मानमन्या वाचो विमुंचथामृतस्यैष सेतुः" इत्युक्तं भवति। "अपाम" इत्यादिश्रुतेस्तु(तै.आ.३-१२) "नान्यःपन्था अयनाय विद्यते"(तै.आ.३-१२) "कर्मणा ज्ञानमातनोति" "ज्ञानेनामृतीभवति" इत्यादिश्रुत्यनुरोधेन परम्परया कर्मादीनां मोक्षहेतुत्वपरत्वम् "कर्मणैव हि संसिद्धिमास्थिता"(भ.गी.३-२०)इत्यादौ संसिद्धिशब्दस्योक्तश्रुत्यनुरोधेन ज्ञानपरत्वम् । अवधारणस्य अयोगव्यवच्छेदार्थत्वम् । अपरोक्षज्ञानोत्तरकर्मणः सम्यक् सिद्धिरूपपूर्णज्ञाना-नन्दाद्यभिव्यक्तिरूपातिशयपरत्वं च इति भावः ।।१।।

ननु इदं अनुपपन्नम् । ब्रह्मशब्दस्य जीवे रूढत्वात् ईश्वरे तूक्तरीत्या यौगिकत्वात् "तद्ब्रह्म" इत्यादौ ब्रह्मशब्देन जीवस्यैव ग्रहणं युक्तम्। ततश्च पुनर्विषयाद्यभावेन शास्त्रानारम्भणीयता तादवस्थ्यमित्याशंकायां, सत्यं योगाद्रूढिर्बलीयसीति। किन्तु "यतो वा इमानि भूतानि जायन्त" (तै.उ.३-२)इति वाक्यशेषेण प्रतिपादितस्य जगज्जन्मादिकारणत्वस्य जीवेष्वसम्भवात् बलवद्बाधकानुरोधेन यौगिकार्थस्यैव ग्रहणं न्यायमित्याशयेन प्रवृत्तं लक्षणसूत्रं **ओं जन्माद्यस्य यत** इति । तदर्थमाह **सर्वकर्ता** इति । विष्णुरेवेति वर्तते। एवकारो विशेष्येण विशेषणेन च सम्बध्यते । तेनातिव्याप्त्यसम्भवौ परिहृतौ । एकमात्रव्यक्तेर्लक्ष्यत्वादव्याप्तिरसम्भवच्छंकैव सर्वशब्दद्वयं च तन्त्रेणोपात्तम् । तथा च सर्वस्य रमाब्रह्मादेः प्रपंचस्य सर्वस्य जन्माद्यष्टकस्य यथासम्भवं कर्तैव न तु अकर्ता। विष्णुरेव नत्वन्यो जीवादित्यर्थोऽतो युक्तमुक्तमिति। अत्र ब्रह्मशब्दार्थो विष्णुरेवेत्याशयेन विष्णुरेव विजिज्ञास्य इति वदता स एवार्थः सूत्रकृतोऽभिप्रेतः । तेन नीलकंठीयदुर्भाष्ये ब्रह्मशब्देन शिव एवेत्यंगीकृत्य यच्चतुलर्क्षणीशास्त्रं शिवपरतया व्याख्यातं तत्सर्वमपव्याख्यानमिति सूचितम्। सूत्रकृतैव एतत्सूत्रार्थस्य विष्णुपरत्वेन महाभारते प्रदर्शितत्वात् । भीष्मयुधिष्ठिरसंवादे "किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात्" इति मोक्षसाधनज्ञानविषयः क इति युधिष्ठिरेण पृष्टे "अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत्।।" इति विष्णुसर्वोत्तमत्वज्ञानान्मोक्ष इत्युक्तम्। कथं तर्हि "ब्रह्मविदाप्नोति परं" (तै.उ.२-१) इति श्रुतौ "अथातो ब्रह्मजिज्ञासा" इति सूत्रे च ब्रह्मज्ञानान्मोक्षः । क इत्याशंकायां स विष्णुरेव ब्रह्मशब्देनोच्यत इत्युक्तम्।

परमं यो महत्तेजः परमं यो महत्तपः।
परमं यो महद्ब्रह्म परमं यः परायणः।।

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ।।(म.भा) इति।

तेन महेश्वरात् शिवादयमुत्तमः सर्वलोकमहेश्वरत्वात् देवतानां ब्रह्मरुद्रादीनामपि दैवतत्वात्। सर्वजीवानां ब्रह्मशब्दवाच्यत्वेऽप्ययमेव मुख्य इत्युक्तं ''परमं यो महद्ब्रह्म'' इति। अत एवोक्तं ''ब्रह्माणि जीवाः सर्वेऽपि परब्रह्मणि मुक्तिगाः। प्रकृतिः परमब्रह्म परमं महदच्युतः।।'' इति। अतोऽत्र श्रुतिसूत्रयोः निरुपपदब्रह्मशब्दो मुख्यब्रह्मणो विष्णोरेव वाचकः। तथा ''यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म'' (तै.उ.३-२) इति श्रुतौ तदर्थनिर्णायके ''जन्माद्यस्य यत'' इति लक्षणसूत्रे च विष्णुरेव ब्रह्मशब्देन उच्यत इत्याशयेनोक्तं

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये।।

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते।
विष्णोर्नामसहस्रं मे श्रुणु पापभयापहम्।। (म.भा)

इति स्पष्टमेव लक्षणश्रुतिसूत्रार्थस्तत्र दर्शितः। एतेनैव शैवपाशुपतादिपाषण्डागमेषु श्रद्धाजाड्यवता दुरात्मना अपेयदीक्षितेन यन्नीलकंठीयदुर्भाष्यपोषणाय सर्वश्रुतिस्मृतिभंगेन शिवपरतया योजनं हटकष्टकृतम्। तस्यापि मुखभंगः सुधीभिः सुकर इति ध्वनितं भवति। मूलाशुध्या सर्वाशुद्धिरतः तदीयः सर्वोऽपि ग्रंथो निर्भित्तिचित्रायित इति ज्ञातव्यम्। तदिदमाह विष्णुरेव विजिज्ञास्यः सर्वकर्ता अतः स एव सकलागमोदित इति।।२।।

ननु जगज्जन्मादिकारणत्वं न विष्ण्वेकनिष्ठम्। पाशुपताद्यागमानुगृहीतानुमानाच्छिवादीनामपि तत्कर्तृतावगमादतिव्याप्तं लक्षणमित्यतो जगत्कारणस्य धर्मादिवत् शास्त्रैकसमधिगम्यत्वात् अनुमानस्याप्रयोजकत्वात् श्रुतिबाधितत्वाच्चायुक्तं लक्षणमित्याशयेन प्रवृत्तं सूत्रं **ओं शास्त्रयोनित्वात्** इति। तद्व्याचष्टे **आगमोदित** इति। विष्णुरेवेति वर्तते। तेन बौद्धविवेकेन विष्णुरागमेनैवोदितो न त्वानुमानिक इति योजनीयम्। अत्र निरूपपदागमशब्दस्य ऋगादिसदागमपरत्वान्न पाशुपतादिदुरागमानुगृहीतमनुमानं युक्तमिति भावः।।३।।

नन्वस्तु शास्त्रयोनित्वं जगत्कारणस्य। तथापि अतिव्याप्तिरेव। शास्त्रे एव ''रुद्रो वाव लोकाधारः, एको रुद्रो न द्वितीयोऽवतस्थे, ''ज्ञात्वा शिवं शान्तिमत्यन्तमेति'' इत्यादिना शिवादेरपि जगत्कारणतादिप्रतीतेरित्याशंक्योपक्रमादितात्पर्यसिद्धं पर्यालोचनया ''यो देवानां नामधा एक एव'' ''नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'' ''वेदैश्च सर्वैरहमेव वेद्य'' (भ.गी.१५-१५)इत्यादिना च रुद्रादिशब्दानां विष्णुपरत्वान्नोक्तविरोध इत्याशयेन प्रवृत्तं सूत्रं **ओं तत्तु समन्वयात्** इति। तस्यान्वय उपपत्यादिलिंगमित्यादिना भाष्ये सम्यग्व्याख्यातत्वान्निगदेन व्याख्याति **ओं समन्वयात्** इति विष्णुरेवेत्यनुवृत्तेन तत्विति सूत्रशेषोऽपि विपरिणामेन व्याख्यातो बोध्यः।

**अथ वा विष्णुरेव सर्वकर्ताऽऽगमोदित इति पदचतुष्टयमनुवर्तते । आगमेषु शिवादिशब्दैरुदितो यः सर्वकर्ता स विष्णुरेव। न शिवादिः । कुतः? शिवादिशब्दानामुपपत्यादिलिंगैस्तत्रैव सम्यगन्वितत्वादिति।**

ननु "यतो वाचो निवर्तन्ते" (तै.उ.२-४)इत्यादिश्रुत्यैकस्यापि पदस्य ब्रह्म वाच्यं न भवति। तत्कथं सर्वशब्दवाच्यता स्यात् । तदभावे च कथं जगज्जन्मादिकारणतया शास्त्रैकसमधिगम्यतापीत्यलक्षणमेतत् इत्याशंकापरिहारार्थं सूत्रं **ओं ईक्षतेर्नाशब्दं** इति । तद्व्याचष्टे **ईक्षतेश्च** इति। विष्णुरेवेति वर्तते । आगमोदित इति च। ततश्च "परात्परं पुरिशयं पुरुषमीक्षत" (प्र.उ.५-५)इति श्रुत्या अधिकारिणो ईक्षणीयत्वरूपज्ञेयताया उक्तत्वात्। विष्णुरेव आगमैरुदितो वेति योज्यम् । उदित इति वदतेर्निष्ठायां रूपम् । स च व्यक्तवाची वर्तते। न व्यक्तवाचा प्रतिपाद्यत्वं लभ्यते। न हि लक्षणाद्यङ्गीकारे व्यक्तवाग्विषयता युज्यते । एव इत्यनेन नाशब्दमित्यत्र द्वौ नञौ सातिशयप्रकृतार्थप्रतिपादकौ व्याख्यातौ । उदित एव नत्वनुदित इति तदर्थात् । चशब्दः समुच्चयार्थः। एतदाशंकानिराससमुचितस्यैव पूर्वसूत्रस्य विवक्षितार्थसाधकत्वादिति । इदमुक्तं भवति। प्रत्यक्षानुमानावेद्यस्य ज्ञेयता शब्दवाच्यत्वं विना नोपपद्यते । सर्वथाऽवाच्ये लक्षणादेरप्यसम्भवात्। तथा ज्ञेयत्वान्यथानुपपत्यैव वाच्यता सिद्ध्यतीति। "यतो वाच" (तै.उ.२-४-१)इत्यादिश्रुतिस्तु साकल्येन वेदप्रतिपाद्यो नेत्येवंपरा । अन्यथा "यत" इत्यनेन ब्रह्मपरामर्शासम्भवात्। ब्रह्मणो वाच्यत्वाभावस्त्वदभिप्रेतो न सिद्ध्येत् । चशब्देनात्राक्षेपसमाधानाद्यर्थानि सूत्राण्यपि व्याख्येयत्वेन संग्रहीतानि। तथा हि उक्तमाक्षिप्य समादधत्सूत्रं **ओं गौणश्चेन्नात्मशब्दात्** इति। तदर्थः। नन्वीक्षणीयत्वेन गुणबद्धत्वात् गौणो जीव एवोच्यते न विष्णुरिति चेन्न। "आत्मन्येवात्मानं पश्येत्" (बृ.उ.६-४-२३)इतीक्षणीये आत्मशब्दश्रवणात् । तत्र "यः स आत्मा स नित्यः केवलः शुद्धो निर्गुणोऽथ योऽनीदृशः सोऽनात्मा" इति श्रुतेः। "अनात्मन्यात्मशब्दस्तु सोपचारः प्रवर्तते" इति वामनोक्तेश्च। मुख्यामुख्ययोर्मुख्यस्यैव ग्राह्यत्वात् विष्णुरेव वाच्यो ज्ञेयत्वादिति।

ननूक्तश्रुतिस्मृत्योश्चेतनाचेतनविषयत्वसम्भवेनात्रोक्त आत्मा जीवः किं न स्यादित्यतः सूत्रं **तन्निष्ठस्य मोक्षोपदेशात्** इति । "यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन् सन्दोहे गहने प्रविष्टः। स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ।" (बृ.उ.६-४-१३)इत्यात्मनिष्टस्य मोक्ष उच्यते। न हि जीवनिष्ठस्यैतत्सम्भवतीति भावः। हेत्वन्तरेण तमर्थं समर्थयत्सूत्रं **ओं हेयत्वावचनाच्च** । "तमैवेकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" (मु.उ.२-२-५)इति जीवादीनां मुमुक्षुहेयत्ववचनादस्यैवाहेयत्ववचनाच्चान्यनिष्ठस्य मोक्षासम्भवादस्यैव मुमुक्षुज्ञेयत्वं वाच्यत्वमुपपन्नमितिभावः। युक्त्यन्तरेणोक्तार्थसमर्थनार्थं सूत्रं **ओं स्वाप्ययात्** इति। तस्य "स आत्मना आत्मानमुद्धृत्यात्मन्येव विलापयत्यथात्मैव भवति" (बृ.उ.५-१-१)इति

स्वस्य स्वस्मिन्नप्ययवचनात् परमात्मैवायं न जीवः। तत्रोक्तार्थासम्भवादिति भावः। नन्वेवं निर्गुणस्यात्मनो वाच्यत्वं जगत्कारणत्वादि तस्य प्रसिद्धशाखास्वस्तु अप्रसिद्धशाखास्वन्यथैव किं न स्यादित्यत सूत्रं **ओं गतिसामान्यात्** इति। ''सर्वे वेदा युक्तयः सप्रमाणा ब्रह्मं ज्ञानं परमं त्वेकमेव। प्रकाशयंते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे'' इति पैंगिश्रुतौ गतेर्ज्ञानस्य साम्योक्तेर्नोक्तार्थे कश्चिद्विरोध इति भावः। युक्त्यंतरेणावाच्यत्वमाह **ओं श्रुतत्वाच्च** । ''साक्षी चेता केवलो निर्गुणश्च'' (श्वे.उ.६-११)इति श्रुतौ निर्गुणस्यैव निर्गुणशब्देन श्रुतत्वात् श्रुत्युक्तत्वात्। न हि निर्गुणशब्दो निर्गुणे लाक्षणिकोऽन्यत्र मुख्य इति युक्तमिति भावः।।

एवमध्यायपादपीठरूपपंचाधिकरण्या ब्रह्मजिज्ञासायाः कर्तव्यतोपपादनाद्विषयादिमत्वेन शास्त्रमारम्भणीयमिति प्रतिपादितम् । अध्यायशेषस्तु हेतूकृतस्य समन्वयस्योपपदानार्थः। एवं च वैदिकानां सर्वशब्दानां भगवति विष्णौ यः समन्वयः सिद्धवत्कारेण हेतुतयोक्तः स यावद्विशिष्य तत्तद्वाक्यगतांस्तत्तच्छब्दविशेषानुपादाय न व्युत्पद्यते तावद् विस्रम्भणीय भवतीति तत्प्रतिपादनार्थमुत्तरो ग्रंथः। अन्यथाऽन्योप्यन्यदेवसमन्वयादित्यपि ब्रूयात् ।

तत्र शब्दास्तावच्चतुर्विधाः । केचित्तत्र प्रसिद्धाः। यथा केशवनारायणादयः । केचिदुभयत्र प्रसिद्धाः। विष्णवान्यत्र च। यथा अक्षरादिशब्दाः। केचिदन्यत्रप्रसिद्धा विष्णावप्रसिद्धाश्च। यथान्नमयादयः शब्दाः कोशादिष्वेव प्रसिद्धाः न विष्णौ । केचिदन्यत्रैव प्रसिद्धाः बलवद्युक्ति-लिंगाद्यैः। अन्यत्र प्रसिद्धत्वेन विष्णुपरत्वप्रतिपादनं तेषां दुर्घटम् । यथा दुःखिबद्धावरादिशब्दाः। तत्राद्येषु सन्देहाभावान्न तेषां समन्वयो व्युत्पादनीयः। शास्त्रेषु त्रिविधेषु चतुर्थानां व्युत्पादनस्य प्रथमं शिष्याणां दुर्बोधत्वाच्च चतुर्थे पादे तत्करिष्यते। अवशिष्टद्वितीयमध्ये महामल्लभंगन्यायेनान्यत्र-प्रसिद्धानां प्रथमं समन्वयः सम्पाद्यते। उभयत्र प्रसिद्धानां हि अन्यत्र प्रसिद्धिविघटनमात्रं कर्तव्यम्। न तु ब्रह्मपरत्वमपि प्रतिपादनीयम् । प्रसिद्धत्वात् । अन्यत्र प्रसिद्धानां तु द्वयमपि कर्तव्यम् । अन्यत्र प्रसिद्धिविघटनं ब्रह्मण्यप्रसिद्धिविघटनं चेति । तदुक्तं -

> एषां प्रसिद्धिरन्यत्रकेवलैव विरोधिनी ।
> समन्वयस्योभयत्रप्रसिद्धास्तत्प्रकीर्तिताः ।।
>
> एषां ब्रह्मण्यप्रसिद्धिः प्रसिद्धिश्चान्यवस्तुषु।
> विरोधिन्यौ हि तेऽन्यत्र प्रसिद्धा कीर्तिता इह ।।
>
> एषामुक्तद्वयं ब्रह्मपरत्वस्यात्यशक्यता ।
> इति तिस्रो विरोधिन्यस्तेऽन्यत्रैव प्रसिद्धकाः ।।

इति नान्यत्रप्रसिद्धे तत्र प्रसिद्धेषु चैवकाराभावादुभयत्रप्रसिद्धसांकर्यमित्यादिनिरस्तम् । तत्रान्यत्रप्रसिद्धानां नामलिंगात्मकत्वभेदेनाद्यपादे नामात्मकानां शब्दानां समन्वयः प्रतिपाद्यते ।

तत्र यदुक्तं ब्रह्मजिज्ञास्यमिति तदयुक्तम् । तस्य ''तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः। तेनैष पूर्णः। स वा एव पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा'' इति तैत्तिरीयश्रुतौ (२-५) आनन्दमयस्य पुच्छावयवत्वोक्तेः। न चावयविनं विहायावयवजिज्ञासा युक्ता। न तस्यापि ब्रह्मत्वम् । प्रमाणाभावात् । अवयवावयवित्व-विरोधाच्चेत्याशंकापनोदाय तदीयश्लोके ''असन्नेव स भवति। असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति''(तै.उ.२-६) विष्ण्वेकप्रतिपादकब्रह्मशब्दाभ्यासात् । ''स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्'' अंगागित्वेन भगवान्क्रीडते पुरुषोत्तमः। ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन्परात्मनि ।। (बृहत्संहिता) इत्यादिभाष्योदा-हृतप्रमाणात् तदवयवावयविभावस्यापि ऐश्वर्यबलेन अविरोधादानन्दमयशब्दोपलक्षितान्नमयादि-सर्वशब्दैः विष्णुरेव वाच्यः इत्याशयेन प्रवृत्तं सूत्रं ओं **ओं आनन्दमयोऽभ्यासात्** इति । तद्व्याचष्टे **पूर्णानन्द** इति। अत्र ''इत्याद्यैः प्रसिद्धैरन्यवस्तुषु । उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वत'' इति वक्ष्यमाणं सिंहावलोकन्यायेन सम्बध्यते। ततश्चैवं योजना। पूर्णानन्द इत्याद्यैरन्यवस्तुषु कोशेषु शरीरावयवेषु प्रसिद्धैरन्नमयाद्यैः सर्वैः शब्दैरेको विष्णुरेवोच्यते। कुतः? तत्तद्वाक्यप्रकरणगतसर्वगुणवत्वात्। तत्रत्य तत्तच्छब्दप्रवृत्तिनिमित्तगुणवत्वाच्चेति। इदं वाक्यमुत्तराधिकरणव्याख्यानेष्वापादसमाप्तिसम्बन्धनीयम् । योजनाप्रकारस्त्वेवमेव द्रष्टव्यः।

अत्रानन्दमय इत्यनुक्त्वा पूर्णानन्द इत्यर्थानुवादेन मयडर्थं प्राचुर्यमेव । न तु विकारः । तदपि प्राचुर्यं ब्राह्मणप्रचुरो ग्राम इत्यादाविव समानाधिकारणविजातीयाल्पत्वप्रयुक्तं न भवति । येन स्तोकस्यानानन्दमयादेरपि प्रसक्तिः स्यात् । किन्तु प्रचुरप्रकाशः सवितेत्यादाविव व्यधिकरणसजातीयाल्पत्वप्रयुक्तम् । तेनात्र कथमप्यनानन्दशंकैव नास्ति। तादृशप्राचुर्येण पूर्णानन्दस्यैव लाभात् इति सूचितत्वात् **ओं विकारशब्दान्नेति चेन्न प्राचुर्यात्** इति द्वितीयसूत्रमपि व्याख्यातं भवति। एवं ''सर्वगुणत्वत'' इत्यनेनैव ''को ह्येवान्यात्क प्राण्यात् । यदेष आकाश आनन्दो न स्यात्'' (तै.उ.२-७)इति श्रुत्युक्तजगच्चेष्टकत्वं प्रति हेतुत्वरूपगुणव्यपदेशात्प्राचुर्यमेव मयडर्थ इत्यर्थप्रतिपादकं **ओं तद्धेतुव्यपदेशाच्च** इति सूत्रं व्याख्यातं भवति । एवं ''सत्यं ज्ञानमनन्तं ब्रह्म'' (तै.उ.)इति मन्त्रवर्णोक्तस्यैव अन्यत्रासम्भवत्सत्यज्ञानानन्तत्वादिगुणविशिष्टस्य अग्रिमप्रकरणे उच्यमानत्वाद्विष्णुरेव आनन्दमयादिः इत्यर्थप्रतिपादकं ''मान्त्रवर्णिकमेव च गीयते'' इति सूत्रमपि व्याख्यातम् । एवं विष्णुरेव इत्यन्यव्यवच्छेदकेनैवशब्देन **ओं नेतरोऽनुपपत्तेः** इत्यादिपरपक्षप्रक्षेपार्था चतुःसूत्री च व्याख्याता। इतरो विष्णोरन्योऽत्र उच्यत इति न मन्तव्यम्। ''ब्रह्मविदाप्नोति परं'' (तै.उ.२-१)इति मोक्षोक्तेरनुपपत्तेः। किंच भेदव्यपदेशाच्च ''स यश्चायं पुरुषे। यश्चासावादित्ये'' (तै.उ.२-८)इति जीवेश्वरयोराधाराधेयत्वेन भेदोक्तेः।

नन्वीश्वरो जीवाभिन्नः चेतनत्वात् जीववदित्याद्यनुमानेनाभेदः साध्यत इत्यत आह **ओं कामाच्चानानुमानापेक्षा** इति। यथा काममनुमातुं शक्यत्वात्केवलानुमानमुपेक्षणीयमिति भावः। संसारे भेदेऽपि मुक्तौ अभेदः किं न स्यादित्येतत्सूत्रं **ओं अस्मिन्नस्य च तद्योगं शास्ति** इति। ''एतमानन्दमयमात्मानमुपसंक्रामति'' (तै.उ.२-८)इत्यादिनाऽस्मिन्प्रकरणे अस्य जीवस्य मुक्तौ अपि परमात्मना सम्बन्धमेव वदति श्रुतिर्न त्वैक्यमिति जीवादीनां नानन्दमयत्वं किन्तु विष्णोरेवेति सिद्धम्।

ननु ''अदृश्येनात्मेऽनिरुक्तेऽनिलयनेऽभयं प्रतिषां विन्दते'' (तै.उ.२-७)इत्यानन्दमये अदृश्यत्वं श्रूयते। ''तदन्तःप्रविष्टं कर्तारमेनम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तमविजानन्ति देवा'' (तै.आ.३-११-२) इति कस्यचिदन्तस्थस्य श्रूयते। सोऽन्तस्थस्तु न विष्णुः। तत्प्रकरणे ''इन्द्रो राजा जगतो य ईशे। सप्त युंजन्ति रथमेकचक्रम् । त्वष्टारं रूपाणि विकुर्वन्ति विपश्चिम्'' (तै.आ.३-११-६) इत्यादीन्द्रादिश्रुतेरादित्यादिलिंगाच्च तस्मादानन्दमयोऽप्यन्य एवेत्याशंकापरिहारार्थं अधिकरणं **ओं अन्तस्तद्धर्मोपदेशात्** इति। तद्व्याचष्टे **अन्तर** इति । अन्तर इति शब्दो एषान्तैरन्यत्रेन्द्रादिषु प्रसिद्धैरधिदैवकैः सर्वैः शब्दैरेको विष्णुरेवोच्यते। कुतः? **सर्वगुणत्वतः**। एतत्प्रकरणोपदिष्टगुणवत्वात्। अस्मिन्प्रकरणे(तै.आ.३-११-१) ''अन्तःसमुद्रे मनसा चरन्तम्''। ''यस्याण्डकोशं शुष्ममाहुः'' (तै.आ.३-११-४)इत्यादिना समुद्रशायित्वब्रह्माण्डवीर्यत्वादीनां विष्णुधर्माणामेवोपदेशादित्यर्थः। एवेत्यवधारणेन न प्रसिद्धेन्द्रादिरत्रोच्यते ''इन्द्रस्यात्मा निहितः पंचहोता'', इति तस्येन्द्रादिभ्यो भेदेनैव निर्दिष्टत्वादिति सूचनाय **ओं भेदव्यपदेशाच्चान्य** इति द्वितीयसूत्रमपि व्याख्यातं भवति।

ननु तथापि विष्णोर्जगत्कारणत्वं न युक्तम् । छान्दोग्ये(१-९) ''अस्य लोकस्य का गतिरित्याकाश इति होवाच। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं'' इति भूताकाशस्यैव तदुक्तेरित्यतः सूत्रं **ओं आकाशस्तल्लिंगात् ओं** इति । तद्व्याचष्टे **खवत्** इति। खं विवरं तदस्यास्तीति खवत् आकाशम्। आकाशस्य विवरात्मकत्वेऽपि विशेषधर्मधर्मिभावोऽप्यस्त्येव। तेन तद्वाचकः शब्दो लक्ष्यते इत्याद्यैरन्यत्रप्रसिद्धैरादिभौतिकै आकाश इत्याद्यैः सर्वशब्दैरेको विष्णुरेवोच्यते। कुतः? ''स एष परोवरीयानुद्गीथः स एषोऽनन्त'' (छा.उ.१-९) इत्यादिनोच्यमानानां परोवरीयस्त्वादिसर्वगुणानां अन्यत्रासम्भवेन तल्लिंगत्वेन तदसाधारणधर्मत्वेन भूताकाशप्रापकाभावात् । न चाकाशश्रुतरेव तत्प्रापिका । तस्या आ समन्तात्काशते इति व्युत्पत्या विष्णौ सावकाशत्वात् । आकाशशब्दप्रवृत्तिनिमित्तस्य विवररूपावकाशदातृत्वस्यापि विष्णवधीनतया मुख्यवृत्तेरपि तत्रैव सम्भवात् । उक्तं च भागवते ''नभो ददाति श्वसतां मार्गो यन्नियमाददे'' इति हृदि निधाय

प्रसिद्धाकाशपदं परित्यज्य खवदिति तच्छब्दप्रवृत्तिनिमित्तविवरणमुखेन निर्देशः कृतः। अथवा खवदित्ययं न मतुप् किन्तु वतिः। तच्च प्रणेतेत्याद्युत्तरवाक्येन सम्बध्यते।

ततश्चैवं योजना। खशब्देनात्रकाशशब्दो लक्ष्यते । तेन शब्देन तुल्यं यथा स्यात्तथा प्रणेता प्राणशब्दवाच्योऽपीति। यथा तल्लिंगात्परोवरीयस्त्वादेराकाशो विष्णुस्तथाश्रीलक्ष्मीपतित्वलिंगेन प्राणेता प्राणशब्दवाच्योऽपि स एवेत्यर्थः। तेनात एवेत्यादिनिर्देशः सूत्रस्थो व्याख्याततत्वात्। सिद्धस्यैव दृष्टान्तस्यौचित्यात् । आकाशस्तल्लिंगादित्यप्यर्थाद्व्याख्यातं वेदितव्यम् । अथवा सूत्रेषु शब्दविशेषोपपादनं न तन्मात्रग्रहणार्थं किंतु सहस्रशाखे छन्दोगे वेदे क्वचित्स्वशब्दोपेत-सृष्टिवाक्यमप्यस्त्यत्यत उदाहरणमात्रमेतदिति ज्ञापयितुं सर्वज्ञाचार्यैः खशब्दः प्रयुक्तः। सोऽपि सजातीयानां भूतवाचकानामुपलक्षक इति ज्ञापनार्थं वतिप्रत्ययोऽपि सादृश्यार्थक उपात्त इति दिक् ।

**मळगि** – विष्ण्वन्यदेवानां न जिज्ञास्यतेत्याह। **विष्णुरेव** इति। विष्णुरेव श्रीनारायण एव विजिज्ञास्यः श्रवणादिविचारविषयः। अन्ययोगं व्यवच्छिनत्त्येवकारः। अलौकिकस्य विष्णोर्लक्षण-कथनमन्तरेण वेत्तुमसुकरता स्यात्तस्येत्यतस्तल्लक्षणमाह। **सर्वकर्ता** इति। सर्वस्य श्रीब्रह्मादिप्रपंचस्य "उत्पत्तिस्थितिसंहारनियतिर्ज्ञानमावृतिः। बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट्" इति स्कान्दोक्तेः यथायोग्यसमस्तसृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षाणां कर्ता । कुतः? **समन्वयात्** । "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति"(तै.उ.३-१) "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" (भ.गी.१०-८) "स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु" इत्यादिश्रुतिस्मृतीनां उपक्रमादितात्पर्यलिंगात्। **ईक्षतेश्च** ईक्षतिर्ज्ञानं तद्विषयत्वं च। **आगमोदितः** आगमैः ऋगादिसदागमैः उदितः। परममुख्यवृत्या प्रतिपादितः। **पूर्णानन्दः** परिपूर्णानन्दत्वेन आनन्दमयशब्दवाच्यः। अन्तरः अन्तर्यामी । किमिव **खवत्** गगनवत् ।।२।।

**लिंघेरी** – विष्ण्वन्यदेवतानां जिज्ञास्यत्वं नास्तीत्याह **विष्णुरेव** इति। विष्णुरेव जिज्ञासयितुं योग्यः विचार्य इत्यन्वयः। एवकारः अन्ययोगव्यवच्छेदार्थकः। कीदृशः ? **सर्वकर्ता** जगदुत्पादक इत्यर्थः। पुनः कीदृशः? **आगमोदितः** अनन्तवेदेषूदितः प्रतिपाद्य इत्यर्थः। कुतः ? **समन्वयात्** उपपत्त्यादिलिंगात्। पुनः कस्मात् ? **ईक्षतेश्च** ज्ञानविषयत्वाच्च । पुनः कीदृशः ? **पूर्णानन्दः** पूर्णः आनन्दो यस्य सः । पुनः कीदृशः? **अन्तरः** अन्तर्यामी । किमिव ? खवत् सर्वगतः आकाशवत्सर्वगत इत्यर्थः ।। २ ।।

**नारायणपण्डित–** ईक्षतेरीक्षणीयत्वात् समन्वयात् उपक्रमादितात्पर्यलिंगात् सम्यग्विचार्यमाणे सर्वागमोक्ते विश्वस्य जन्मादिकर्ता विष्णुरेव विशेषतो जिज्ञास्यः। श्रवणादिना विचार्यः। न रुद्रादीत्यन्वयार्थः। विष्णोरेव जिज्ञास्य इत्यनेन ओं अथातो ब्रह्मजिज्ञासा इत्याद्याधिकरणार्थो वर्णितः ।।१।। सर्वकर्ता इत्यनेन जन्माद्यस्य यत इत्यधिकरणार्थः ।।२।। आगमोदित इत्यनेन

शास्त्रयोनित्वाधिकरणार्थः ।।३।। समन्वयादित्यनेन तत्तु समन्वयादित्यस्यार्थः ।।४।। ईक्षतेश्चेत्यनेन ईक्षतेर्नाशब्दमित्यधिकरणार्थः ।।५।। पूर्णानन्द इति आनन्दमयोऽभ्यासादि-त्यधिकरणार्थः ।।६।। अन्तरः अततीति वा अस्तीति वा अन्तरः अन्तस्थः। अनेनान्तस्थत्वाधि-करणार्थः ।।७।। खवत् यथा खं अवकाशदातृत्वरूपप्रवृत्तिनिमित्तात् खशब्दवाच्यं तथा हरिरपि तत्प्रवृत्तिनिमित्तादाकाशशब्दवाच्यः। खवत् ज्ञानरूपदीप्तिमत् अत एवाकाशशब्दवाच्य इति वा। खवदित्यनेनाकाशस्तल्लिंगात् इत्यधिकरणार्थः ।।८।।

## गूढकर्तृक अणुभाष्यटिप्पणी

श्रीमध्वेशाय नमः । नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम् । ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते। तदेतत्पंचाधिकरणोक्तार्थं पाठक्रमात् पञ्चवाक् संक्षेपेणाणुभाष्ये प्रवक्त्याचार्यो भगवान् ।। **विष्णुरेव विजिज्ञास्यः सर्वकर्ताऽऽगमोदितः। समन्वयादीक्षितेश्चेति**। ईक्षतेरीक्षणीयत्वात् समन्वयादुपक्रमादिलिंगात् सम्यग्विचार्यमाणे सर्वागमोक्तो विश्वस्य जन्मादिकर्ता विष्णुरेव विशेषतो जिज्ञास्यः । श्रवणादिना विचार्यः। न रुद्रादीन् इत्यन्वयार्थः। आनन्दमयाद्यधिकरणार्थं क्रमेण संगृह्णात्युणुभाष्यकारः। **पूर्णानन्दोऽन्तरः खवत् । प्रणेता ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु। उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः** इति। पूर्णानन्दो आनन्दमयः। अतति इति वा अस्तीति वा अन्तरः अन्तस्थः। खवत् यथा खं अवकाशदातृत्वरूपप्रवृत्तिनिमित्तात् खशब्दवाच्यं तथा आकाशशब्दवाच्य इति वा। खवदन्तर इति वा।

**प्रणेता ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु ।**
**उच्यते विष्णरेवैकः सर्वैस्सर्वगुणत्वतः ।।३।।**

**सत्यनाथीया– प्रणेता** इन्द्रियादिप्रेरकः जीवनहेतुः प्राणः। प्रणेतेत्यनेन अत एव प्राण इत्यस्यार्थ उक्तः । **ज्योतिः** प्रकाशरूपः। ज्योतिरित्यनेन ज्योतिश्चरणाभिधानात् इत्यस्यार्थः प्रकाशितः। "गायत्री वा" इत्यादिश्रुत्या अन्यवस्तुषु इतरेषु वाचकत्वेन प्रसिद्धैस्तत्प्राण-गतैस्तज्जातीयैश्च सर्वैश्च शब्दैर्विष्णुरेक एवोच्यते। न तु तदन्यः। कुतः ? **सर्वगुणत्वतः**। तत्प्रकरणगतश्रुतिलिंगरूपधर्मवत्वात् तत्तत्प्रवृत्तिगुणवत्वात् स्वातन्त्र्यादिगुणवत्वादित्यर्थः ।

।। अणुभाष्ये प्रथमाध्यायस्य प्रथमः पादः ।।

**तत्वमञ्जरी–** नन्वथापि न पूर्णानन्दो विष्णुरिति युक्तम् । "तद्वै त्वं प्राणोऽभवः महान् भोगः प्रजापतेः" (तै.आ.३–१४) इति श्रुतौ प्राणस्यैव महाभोगशब्दितपूर्णानन्दत्वोक्तेः प्राणपदस्य च प्रसिद्ध्या मुख्यप्राणपरत्वात् । न हि द्वयोः पूर्णानन्दत्वं युक्तं विरोधादित्यतः प्राप्तम् । **ओं**

**अत एव प्राण** इति। तदर्थः। **प्रणेता** इति। प्रणेता जीवनहेतुः। उपलक्षणमेतत् । प्रणेत्रादिरेको मुख्यो विष्णुरेव। तथा च प्राण इत्याद्यैरध्यात्मगैरन्यवस्तुषु प्रसिद्धैः सर्वैः शब्दैर्विष्णुरेवोच्यते। न तु मुख्यप्राणादिः। कुतः। **सर्वगुणत्वतः**। "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" (तै.आ.३-१३) इति "भर्ता सन् भ्रियमाण" इति ह्रीशब्दितश्रीपतित्वविश्वभर्तृत्वाद्येतत्प्रकरणस्थ सर्वगुणवत्त्वादित्यर्थः। केन निमित्तेनोच्यते। आह । **सर्वगुणत्वत** इति। "यद्देवान्प्राणयो नव" (तै.आ.३-१४)इति वाक्यशेषोक्तनवदेवोपलक्षितसर्वप्राणिजीवनहेतुत्वादिरूपगुणत्वादन्यगतं प्रति स्वातन्त्र्याच्चेत्यर्थः। अत्र प्राण इति वाच्ये प्रणेतेति तदर्थोक्तिः। प्राणपदस्य हरौ यौगिकत्वस्य एक इत्युक्तिः प्रवृत्तिहेतोर्मुख्यत्वस्य सूचनाय ।।९।।

नन्वथापि पूर्णानन्दो विष्णुरिति न युक्तम् । "यो वेद निहितं गुहायां" (तै.उ.२-१)इत्यानन्दमयधर्मस्य गुहानिहितत्वस्य "ज्योतिर्हृदय आहितं यत्" (ऋ.सं.६-९-६)इति श्रुतौ ज्योतिष्युक्तेः। ज्योतिःशब्दस्य " त्वामग्न" इत्यग्निसाहचर्येणाग्निसूक्तस्थत्वे चाग्निपरत्वात् । न हि द्वयोः स्वातन्त्र्येण सर्वप्रेरकत्वादिना हृदयगुहास्थत्वं युक्तमित्यत आह **ओं ज्योतिश्चरणाभिधानात्** इति। तदर्थो **ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु । उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः।** ज्योतिरित्याद्यैः सर्वसूक्तगतैरन्यवस्तुषु प्रसिद्धैः सर्वशब्दैरेको विष्णुरेवोच्यते। नत्वग्न्यादिः। कुतः? **सर्वगुणत्वतः**। कर्णचक्षुर्मनोविदुरत्वोक्त्यभिप्रेतापरिच्छिन्नवैभवरूपसर्वगुणवत्त्वादित्यर्थः। केन निमित्तेनेत्यतोऽपि **सर्वगुणत्वतः**। "स्वज्योतिष्ट्वान्महाविष्णोरन्तर्ज्योतिस्तु तत्स्थितः" इति पञ्चमगीताभाष्योक्तदिशा प्रकाशरूपत्वादिरूपज्योतिरादितच्छब्दप्रवृत्तिनिमित्त सर्वगुणत्वात् अन्यगतं प्रति स्वातन्त्र्याच्चेत्यर्थः।

नन्वग्निसूक्तस्थं ज्योतिर्विष्णुरित्ययुक्तम् । अस्यैव ज्योतिषः "अथ यदतः परो दिवो ज्योतिर्दीप्यते" (३-१३-७)इति छान्दोग्ये तृतीयेऽध्याये श्रवणात्तस्य च " गायत्री वा इदं सर्वम्" (छा.उ.३-१२-१) इत्युपक्रमेण गायत्रीत्वात् । न हि तस्यापि विष्णुत्वे गायत्रीवागाद्यन्यत्रप्रसिद्धशब्दोक्तौ प्रयोजनमस्ति। ज्योतिःशब्दप्रस्तुते "तेजो वै ब्रह्मवर्चसं गायत्री" इति तत्पर्यायस्य तेजःशब्दस्योक्तेः। अत उक्तमयुक्तमित्यत प्राप्तम् **छन्दोभिधानात्** इत्यादिसूत्रत्रयम् । तस्याप्यर्थो **ज्योतिरित्याद्यैः** इति। अग्न्यादिसूक्तोपनिषद्गतज्योतिः तत्सहश्रुतगायत्रीप्रभृतिभिः च अधिवेदगतैरन्यवस्तुषु प्रसिद्धैः सर्वैः शब्दैरेको विष्णुरेवोच्यते। न तु छन्दोविशेषादिः। कुतः? **सर्वगुणत्वतः**। "गायति च त्रायति च" इति "एतामेव नातिशीयन्ते" "पादोऽस्य सर्वा भूतानि त्रिपादस्यामतं दिवि" (तै.आ.३-११) इत्यादिना उक्तैतत्प्रकरणस्थसर्ववेदोच्चारणाखिलपालनरूपगानत्राणकर्तृत्वसर्वोत्तमत्वभूतादिपादत्वादि सर्वगुणत्वादित्यर्थः। केन निमित्तेन ? **सर्वगुणत्वतः**। गायत्री वागाद्यधिदैवगततत्तच्छब्दप्रवृत्तिनिमित्तवत्त्वादन्यगतं प्रवृत्तिहेतुं प्रति स्वातन्त्र्याच्चेत्यर्थः।

तेनैवात्र सर्वनयेष्वपीन्द्राकाशप्राणज्योतिगायत्रीवागित्यादिशब्दानां विष्ण्वर्थत्वे विष्णौ लोकतोप्रसिद्धानां अन्यत्ररूढानां श्रुतिषु प्रयोगे प्रयोजनं नास्तीत्यपि निरस्तम् । यतस्तत्तच्छब्दप्रवृत्तिनिमित्तगुणवत्त्वात् । निमित्ततादृशसर्वगुणलाभार्थमिति यावत् । सर्वैः गुणिसामान्याधिदैवाधिभूताध्यात्मगतसूक्तस्थाधिवेदगतैः शब्दैः विष्णुरेवोच्यते ।

न च गुणलाभो व्यर्थ इत्यपि शङ्क्यम् । **सर्वगुणत्वतः**। आद्यसूत्राभिमतब्रह्मशब्दोक्त-प्रधानलक्षणभूतसमस्तगुणवत्वसिद्ध्यर्थत्वात् । अधिकारिणां स्वयोग्यगुणपूर्तये उपासनार्थत्वाच्च ।

ननु चोपक्रमस्थगायत्रीशब्देन तदुपरिश्रुतज्योतिःपदेन च विष्णुरेक एवोच्यत इत्ययुक्तम् । "त्रिपादस्यामृतं दिवि" (तै.आ.३-११)इति "दिवः परो ज्योतिः" (छां.उ.३-१३-७)इति द्युस्थत्वदिवःपरत्वयोरुक्त्या तयोर्भिन्नत्वादिति न शङ्क्यम् । **सर्वगुणत्वतः**। विष्णोरेकस्यैव द्युस्थत्वदिवःपरत्वगुणवत्त्वादित्यर्थः। त्रिलोकविवक्षायां लक्षयोजनोन्नतांतरिक्षादुपरिस्थितानां अनन्तासनश्वेतद्वीपवैकुण्ठानां द्युत्वेन तत्र स्थितवासुदेवनारायणवैकुण्ठाख्यविष्णुरूपाणां द्युस्थत्वस्य "पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् । दिवीन्द्रसदनं चैव तत्परे तु दिवः परे।" इति स्मृत्या क्रमान्मेर्वादिभ्य उन्नतेष्वनन्तासनादिषु स्थितानां दिवः परत्वस्य च सम्भवात् । नन्वेवमपि "द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ।।" इत्युक्तस्वर्गादिसर्वद्युपरत्वं वैकुण्ठस्य नोक्तं स्यादिति चेत्तर्हि सप्तलोकविवक्षया द्युपरत्वमस्तु। एवं च सर्वद्युपरत्वसिद्धिः। तथाग्निसूक्तस्थं छान्दोग्यस्थं च ज्योतिर्विष्णुरेक एवेत्यपि समाहितं बोध्यम् । **सर्वगुणत्वतः**। कर्णादिविदूरत्वद्रष्टृत्वश्रोत्रत्वादिसर्वगुणत्वात् इत्यर्थः। सूत्रे श्रुतकर्णादिविदूरत्वगुणेऽपि हरौ छान्दोग्ये "तदेतद्दृष्टं च श्रुतं च" इत्युक्तदृष्टत्वादेः सुधोक्तदिशा अधिष्ठानद्वारोपपत्तेरिति। प्राणपद-प्रवृत्तिनिमित्तगुणलाभस्य प्रणेत्येत्यनेनैव उक्तत्वात् प्राणस्तथेत्येतत्संग्रहो न कृतः।

यद्वा नन्वथापि प्रणेता विष्णुरित्ययुक्तम् । "चक्षुः श्रोत्रं मनो वाक् प्राण" (२-१-४)इत्यैतरेये श्रुतस्य प्राणशब्दितस्य प्रणेतुः चक्षुरादीन्द्रियसहपाठेन्द्रियसंवादादिना मुख्यप्राणस्य "प्राणो वा अहमस्मि" इतीन्द्रेण आत्मनः प्राणतादात्म्योक्तेः इन्द्रस्य "यच्छतं वर्षाणि पुरुषायुषो भवन्ति" इति जीवलिङ्गेन जीवत्वस्य च अवगमात्। वाक्यभेदेन त्रितयपरत्वोपपत्तेश्चेत्यत उक्तम् - **प्राणस्तथानुगमात्** इति सूत्रचतुष्टयम् । तदर्थः - **इत्याद्यैः प्रसिद्धैरन्यवस्तुषु। उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः** इति। मुख्यप्राणादिरूपान्यप्रापकप्रबललिंगोपेतप्राणाद्यैः सर्वैरन्यवस्तुषु प्रसिद्धैः शब्दैरेको विष्णुरेवोच्यते। न तु मुख्यप्राणादिरनेकः। येन वाक्यभेद आश्रीयेत। कुतः? **सर्वगुणत्वतः**। "तं देवाः प्राणयन्त"(ऐ.आ.२-१-५) "तं देवा भूतिरित्युपासांचक्रिरे" "तदयं प्राणोऽधितिष्ठति" (ऐ.आ.२-३-८) इत्यादिनोक्तैतत्प्रकरण-स्थदेवोपास्यत्वदेहाख्यरथाधिष्ठातृत्वादिसर्वगुणत्वात् विष्णोरित्यर्थः। केन निमित्तेनोच्यते।

**सर्वगुणत्वतः**। प्रागुक्तदिशा सर्वजीवनहेतुत्वादिरूपप्राणादितत्तच्छब्दप्रवृत्तिनिमित्तगुणवत्त्वात् अन्यगतं प्रति स्वातन्त्र्याच्च । न च अन्यलिङ्गविरोधः। **सर्वगुणत्वतः**। प्राणसंवादाद्यन्यलिङ्गरूपसर्वगुण-वत्त्वादित्यर्थः। प्राणसंवादादिशतायुष्ट्वरूपस्य इन्द्रोक्तप्राणतादात्म्यस्य च तत्स्थितान्तर्यामिण्युपपत्तेः। न च "उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः।" इति स्मृतिविरोधः। **सर्वगुणत्वतः**। अन्तर्यामिणः तदीयप्राणसंवादादिसर्वगुणत्वात् । स्मृतेस्तु ततो बाह्यरूपविषयत्वेनोपपत्तेरिति। न चान्तर्याम्युक्तिः नाभिमता। **सर्वगुणत्वतः**। "स इदं ब्रह्म ततमम्" इति, "एतया द्वारा प्रापद्यत" इति, "इत्याह महिदास" इति व्याप्त्वान्तस्थत्वबहिष्ठत्वगुणवत्त्वोक्तेरित्यर्थः। न च त्रितयोक्तिः व्यर्था । **सर्वगुणत्वतः**। उपासनार्थं सर्वान् त्रिविधाधिकारिणः प्रति गुणत्वादनुरूपत्वादिति। पादार्थमुपसंहरति। **इत्याद्यैः** इति। समन्वितपूर्णानन्दादिशब्दानां इत्याद्यैरिति परामर्शः।

**।। इति श्रीब्रह्मसूत्राणुभाष्यविवृतौ तत्त्वमञ्जर्यां राघवेन्द्रयतिकृतायां प्रथमाध्यायस्य प्रथमःपादः ।।**

**आनन्दमाला** – "यद् देवान् प्राणयः" "तद्वै त्वं प्राणो अभवः" (तै.आ ३-१४) इति प्राणो नाम वायुर्हीत्यत आह - "अत एव प्राण" (१-१-२३) इति सूत्रम् । **प्रणेता** इति। देवप्रणेता प्राणश्च विष्णुरेव। श्रीलक्ष्मीपतित्वादितल्लिंगादेव ।।९ ।।

"ज्योतिर्हृदय आहितम्" (ऋ ६-९-६) इति श्रूयमाणं ज्योतिस्त्वग्निरेवेत्यत आह - "ज्योतिश्चरणाभिधानात्" (१-१-२४) "छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम्" (१-१-२५) इत्यन्तर्भेदाधिकरणम् - **ज्योतिः** इति। विष्णुरेव ज्योतिः । कर्णादीनां विचरणाभिधानात् । "ज्योतिर्दीप्यते" (छन्दोग.३-१३-७) इत्यत्र ज्योतिषो गायत्र्युपक्रमान्नेदं विष्णुश्छन्द एवेति चेत् न। तच्च ज्योतिः विष्णुरेव अग्निगायत्र्यादितत्तच्छब्दैः उपक्रम्योच्यते नान्यथा। युक्त्यादिभिस्तथा दर्शनात् । एवं त्वभ्युपगम एव च भूतादिचतुष्पादत्वव्यपदेश उपपद्यते। उपदेशभेदस्त्वपेक्षाभेदादुपपद्यते वस्त्वेकत्वेऽपि ।।१०।।

अतीतप्राणाधिकरणे प्रणेतृपदेन प्राणो विष्णुरित्युक्तम् । अत्रापि स एव स इति तेनैव सुवचम् । शब्दादिसाम्यात्। तस्मादत्र न पृथग् व्याचख्यौ। अयमिह योजनाविशेषः - "प्राणस्तथानुगमात्" (१-१-२८) इत्यधिकरणम् । चक्षुरादिप्रणेता च प्राणो विष्णुरेव। तच्छब्दादेः तथाऽनुगमात् । अपि च "प्राणस्य प्राणः" (तलवकार १-२)इति वचनान्मुख्यप्राणप्रणेता च स एव। न च तस्यापि प्राणो अनुक्तो अप्यत्याशंङ्क्येत् । "अप्राणो हि" (आथर्वण २-१-२) इति प्रतिषिद्धत्वात् । यद्यपि देवाः शिष्यादिष्वेनं प्रणयन्तीति तदुक्तिः। तथापि प्रथमतः स्वयमेवायं स्वात्मानं वायावुपदेशेन प्रणयति वायुर्देवेष्विति तेषामस्वातन्त्र्यादविरोधः। न च तेषां तत्प्रणयनं नाम नियमनम् । उपदेशमात्रत्वात् । तस्मात् "प्राणो वा अहम्" (ऐतरेय.२-१-२) इत्यादाविन्द्राद्यन्तर्यामी विष्णुरेव साक्षात् प्रणयनस्वातन्त्र्यात् प्राण इत्युपदिश्यते। न तु मुख्यप्राणो नेन्द्रादिश्चेति सिद्धम् ।।११ ।।

पादोक्तमर्थं निगमयति - **इत्यादैः प्रसिद्धैरन्यवस्तुषु । उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः** इति। इत्युक्ताः ज्योतिरन्ताः आद्या येषामनुक्तशब्दानां त इत्याद्याः तैः। स्वात्मनोऽन्यवस्तुषु प्रकृत्यादिजडाजडेषु वाचकत्वेन लोकतः प्रसिद्धैरपि एको विष्णुरेव मुख्यत उच्यते। वैदिकप्रसिद्धेः। तथापि "देवानां नामधा" (ऋ सं १०-८२-०३) इत्येव श्रवणाद् देवादिषु प्रसिद्धैः सूर्यसोमवरुणादिशब्दैरेवोच्यते न हि घटपटादिशब्दैरिति न मन्तव्यम् । "नामानि सर्वाणि यमाविशन्ति" (भाल्लवेय) इत्यादेरविशेषेण सर्ववस्तुषु प्रसिद्धैः सर्वैरपि शब्दैरुच्यत इति वक्तुं सर्वैः इति विशेषणम् । न चैतदौपचारिकम् । तत्तच्चब्दप्रवृत्तिनिमित्तानां गुणानां सर्वेषामपि विष्णौ विद्यमानत्वात् । तदाह - **सर्वगुणत्वतः** इति। अतो युज्यते एव सर्वशब्दमुख्यार्थत्वं विष्णोरित्यर्थः ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां प्रथमाध्यायस्य प्रथमः पादः ।।**

**नृसिंहतीर्थ** - प्राणस्तथानुगमादिति नवमाधिकरणस्य तात्पर्यम् **प्रणेता** इति। प्रकृष्टनियामक इत्यर्थः। आकाश प्राण इत्यनुक्त्वा खवत्प्रणेतेत्युक्तया आकाशप्राणप्रेरकत्वेन तच्छब्दमुख्यार्थः स एवेति सूचयति। शब्दप्रवृत्तिनिमित्ताधिकरणापेक्षया तत्स्वामिना तच्छब्दमुख्यार्थत्वस्य जयीत्यादौ दर्शनात् । तदुक्तमनुव्याख्याने(१-४-३) "स्वातन्त्र्यं तद्गतत्वं च" इति। ज्योतिः शब्दसमन्वयार्थस्य दशमाधिकरणस्य तात्पर्यम् **ज्योतिः** इति। ननु एकादशाधिकरणतात्पर्यं कुतो नोक्तम् ।' न च न तत्पृथगधिकरणमिति वाच्यम्। पृथगधिकरणतया तत्वप्रकाशिकायां व्याख्याततत्वात् इति चेत् । अत्र ब्रूमः । अत्र त्रीणि दर्शनानि । ज्योतिरित्यादि चतुःसूत्री एकमेवाधिकरणम् । विषयवाक्यं तु अग्निसूक्तस्थम् । "ज्योतिर्हृदय आहितं यत्" (ऋ.सं.६-९-६)इति वाक्यमेवेत्येकं दर्शनम् । इदं च तत्वप्रदीपकृतोऽभिप्रेतम् । द्वितीयदर्शनं तु चतुःसूत्र्या एकाधिकरणत्वेऽपि विषयवाक्यं "अथ यदतः परो दिवो ज्योतिः" (३-१३-७)इति छान्दोग्यवाक्यमेवेति। इदं च सन्यायरत्नावलिकाराभिप्रेतम् । तृतीयदर्शनं तु ज्योतिश्चरणाभिधानादित्येकमधिकरणम् । छन्द इत्यादि त्रिसूत्रीत्वाधिकरणान्तरमिति । इदं च टीकाकाराभिप्रेतम् । नयत्रयमपि भाष्यकाराभिप्रेतमेव। अन्यथा त्रयाणां मध्ये एकस्य भाष्यकाराभिप्रायानभिज्ञातप्रसंगात् । तत्राद्ये दर्शनद्वये चतुःसूत्र्या एकाधिकरणत्वेन पृथक्तात्पर्यानुक्तिर्न दोषः। तृतीयदर्शने तु छन्दोधिकरणस्य पृथक्तात्पर्यं वक्तव्यमिति प्राप्तम् । तत्राप्यस्त्यभिप्रायविशेषः। अस्य संकोचग्रन्थत्वेन स्वातन्त्रेण शब्दसमन्वयार्थं प्रवृत्तस्यैवाधिकरणस्य तात्पर्यमुच्यते । नत्वेकस्मिन्नधिकरणे समन्वितस्य शब्दस्य स्थलांतरगतस्य अभ्यधिकाशंकया पुनः समन्वयार्थं प्रवृत्तस्याधिकरणान्तरस्य तात्पर्यमुच्यते। एतच्च तत्र तत्र दर्शयिष्यामः।

छन्दोऽभिधानादित्यधिकरणे मतद्वयमस्ति । "अथ यदत" (३-१३-७)इति छन्दोगस्थ-विषयवाक्यमित्येकं मतम् । "गायत्री वा इदं सर्वं" (३-१२-१)इति छन्दोगस्थं गायत्री विषयवाक्यमिति अपरं मतम् । आद्यं सुधोक्तम्। द्वितीयं तत्वप्रकाशिकायां सुधायां चोक्तम्। तत्राद्ये मते ज्योतिरधिकरणे अग्निसूक्तस्थज्योतिषो अग्नित्वनिरासेन विष्णुत्वसमर्थनात् । छन्दोऽभिधानाधिकरणे तु छान्दोगस्थ ज्योतिषः छन्दस्त्वनिरासेन विष्णुत्वसमर्थनम्। द्वितीयमते तु ज्योतिरधिकरणे पूर्ववदेव। छन्दोऽधिकरणे तु छन्दोगस्थगायत्र्याः छन्दस्त्वनिरासेन विष्णुत्वसमर्थनं इति मतभेदः। इदं मतद्वयं भाष्यकाराभिप्रेतमेव। अन्यथा सुधायाः तत्वप्रकाशिकासुधयोः उन्मूलितत्वप्रसंगः। आद्यमते छन्दोभिधानादित्यस्य पृथक्तात्पर्यानुक्तिः पूर्वोक्तरीत्या न दोषः। द्वितीयमते तु पृथक्तात्पर्यमुक्तम् । तच्चाद्यशब्देनोक्तमिति ज्ञातव्यम् । स्ववचेनानुक्त्वा आद्यशब्देनोक्तौ एवं मतभेदसूचनमेव प्रयोजनमिति । ज्योतिरधिकरणे दर्शनत्रयसद्भावात् । तदविरोधप्रकारश्च छन्दोभिधानादित्यधिकरणेऽपि मतद्वयसद्भावः तदविरोधप्रकारश्च चंद्रिकायां व्यक्तः। अत एव प्राणस्तथानुगमात् इति द्वादशाधिकरणस्यापि पृथक्तात्पर्यं नोक्तम् । तस्याप्यत एव प्राण इत्यत्र समन्वितस्यैव प्राणशब्दस्य स्थलान्तरगतस्याभ्यधिकाशंकया समन्वयार्थं प्रवृत्तत्वेन स्वतन्त्रसमन्वयार्थत्वाभावादिति।

ननु शब्दसमन्वयो न व्यसनितया क्रियते। किन्तु जगज्जन्मादिकारणत्वोपलक्षितानन्तगुणपूर्णत्व-सिद्ध्यर्थम्। न चैतावता तत्सिद्धिः। अन्त्यस्याधिकरणद्वयस्य समन्वितशब्दसमन्वयार्थत्वेन गुणान्तरासिद्धेः मध्ये आनन्दमयाद्यधिकरणपंचकेन शब्दपंचकस्य समन्वयसिद्ध्या गुणपंचकस्यैव सिद्धेरिति चेन्न। सूत्रोपात्तानां आनन्दमयादिशब्दानां स्वसमानन्यायोपेतानेकशब्दोपलक्षकत्वेन एकैकस्मिन्नधिकरणे अनेकशब्दसमन्वयसिद्धिरित्याशयवानाह इत्याद्यैशब्दैःविष्णुरेवोच्यत इति। उक्तं चानुव्याख्याने (१-१-१६०)'उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम् ।। इति। इतिशब्दः पूर्वप्रकृतपरामर्शकः इति पूर्वोक्ताः आनन्दमयादिशब्दाः आद्या एषां ते तथा तैरित्यर्थः। ननु सर्वशब्दानामत्र समन्वये द्वितीयादिपादवैय्यर्थ्यमित्यत उक्तम् **अन्यवस्तुषु प्रसिद्धैः** इति। लोकत इति शेषः। नामात्मकैरिति च शेषः।

अयं भावः। भगवत्येव प्रसिद्धाः अन्यत्रैव प्रसिद्धाः अन्यत्र प्रसिद्धाः उभयत्र प्रसिद्धाश्चेति शब्दाः चतुर्विधाः। अन्यत्रैव प्रसिद्धा अपि द्विविधाः। लोकतऽन्यत्रैव प्रसिद्धाः श्रुतिलिंगादिभिरन्यत्रैव प्रसिद्धाश्चेति। सर्वेऽपि पुनर्द्विविधाः। नामात्मकलिंगात्मकाश्चेति। तत्र भगवत्येव प्रसिद्धानां नामलिंगात्मकानां शब्दानां समन्वयो न वाच्यः विप्रतिपत्यभावात् । लिंगादिभिः अन्यत्रैव प्रसिद्धानां नामलिंगात्मकानां शब्दानां समन्वयश्चतुर्थे कथ्यते। यथा कथंचिदुभयत्र प्रसिद्धानां नामलिंगात्मकानां शब्दानां समन्वयस्तृतीयपादे कथ्यते। लोकतो अन्यत्र

प्रसिद्धानां लिंगात्मकानां शब्दानां समन्वयो द्वितीये पादे कथ्यते । अतो लोकतोऽन्यवस्तुषु प्रसिद्धैर्नामात्मकैः सर्वैशब्दैः विष्णुरेवोच्यते इत्यत्र पादे सिद्धमिति ।

ननु यद्येतैर्शब्दैर्विष्णुरेवोच्येत तर्हि इन्द्राद्यसिद्धिप्रसंगः । लोकप्रसिद्धिविरोधश्चेत्यत उक्तम् **एक** इति । "एके मुख्याऽन्यकेवला" इति वचनात् परममुख्य इति यावत् । तथा च लोकप्रसिद्धि-बलादिंद्रादिशब्दानां इन्द्रादौ मुख्यवृत्तिमविहायैव विष्णोः परममुख्यया वृत्त्या तच्छब्दवाच्यत्वाङ्गीकारान्नोक्तविरोध इति ।

ननु लोकतोऽन्यत्र प्रसिद्धसर्वशब्दानां भगवद्वाचकत्वे को हेतुः । न हि घटशब्दः पटवाचक इत्यत उक्तम् **सर्वगुणत्वत** इति । सर्वपदस्यावृत्तिः सर्वेषां आनन्दमयादिशब्दानां प्रवृत्तिनिमित्तभूताः । प्रचुरानन्दत्वादयः सर्वे गुणाः यस्य स सर्वगुणस्तस्य भावः सर्वगुणत्वं तस्मात्सर्वगुणत्वतः । तत्तच्छब्दप्रवृत्तिनिमित्तगुणस्येश्वरे सत्वात्तत्तच्छब्दवाच्यत्वं युक्तमिति भावः ।

**।। इत्यणुभाष्यटीकायां प्रथमाध्यायस्य प्रथमपादः समाप्तः ।।**

**श्रीनिवासतीर्थीया–** आकाशस्तल्लिंगात्, अत एव प्राण इत्यधिकरणद्वयार्थः **खवत्प्रणेता** इति । आकाशशब्दवाच्यत्वे तल्लिंगादित्युक्तः परोवरीयस्त्वाख्यमहालक्ष्म्युत्तमत्वं हेतुः । तदेव प्राणपदवाच्यत्वं अत एवेत्यनेनोक्तम् । श्रीलक्ष्मीपतित्वमित्यभिप्रेत्य खवत् आकाशपदवाच्यवत् प्रणेता प्राणवाच्य इत्युक्तम् । इन्द्रियादिप्रेरक इत्यर्थः । अन्ये तु खवत् । यथा खमवकाशदातृत्वरूपप्रवृत्तिनिमित्तखशब्दवाच्यं तथा विष्णुरपि तत्प्रवृत्तिनिमत्तादाकाशशब्दवाच्य इत्यर्थः इत्याहुः ।।९।। ज्योतिश्चणाभिधानात् इत्यत्र हेत्वर्थो भाष्यादौ द्रष्टव्य इत्यभिप्रेत्य **ज्योतिः** इति । प्रतिज्ञांशव्याख्यानं ज्योतिरिति । जेर्जातस्योतिराश्रय इत्यर्थः । प्रकाशरूप इति वा ।।१०।। छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनमिति गायत्र्यधिकरणार्थसंग्रहाय गायत्री चेति ग्राह्यम् । वेदोच्चारणाख्यगानकर्तृत्वपापाद्रक्षणाख्यत्राणकर्तृत्वाद्गायत्रीत्यर्थः ।।११।। प्राणस्तथाऽनुगमादित्यधिकरणार्थस्तन्त्रेण **प्रणेता** इति । प्रागेव संगृहीतः जीवनहेतुरित्यर्थः ।।१२।।

पादार्थमुपसंहरति **इत्याद्यैः** इत्यादि । इत्याद्यैरन्यवस्तुषु वाचकत्वेन श्रुत्यादिप्रसिद्धैस्तत्प्रकण-गतैस्तज्जातीयैश्च सर्वैः शब्दैर्विष्णुरेक एवोच्यते । न तु तदन्यः । कुतः ? सर्वगुणत्वतः । तत्प्रकरणगतश्रुतिलिंगरूपधर्मवत्वात् तत्प्रवृत्तिनिमित्तरूपधर्मवत्वात् स्वातन्त्र्यादिगुणवत्वाच्चेत्यर्थः ।

**छलारी –**

**ओं अत एव प्राणः ओं**

तैत्तिरीयश्रुत्युक्तप्राणशब्दवाच्यो विष्णुरेव । कुतः? अत एव । श्रीलक्ष्मीपतित्वादिलिङ्गश्रवणादेवेति सूत्रार्थः । अत्र "तद्वै त्वं प्राणोऽभवः महान् भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान् प्राणयो

नव'' (तै.आ.३-१४) इति तैत्तिरीयश्रुत्युक्तप्राणो मुख्यवायुः एव भवेत्। प्राणशब्दस्य तस्मिन् एव प्रसिद्धेः इति प्राप्ते-

अयं प्राणो विष्णुरेव। ''श्रीश्च ते लक्ष्मीश्च पत्न्यौ'' (तै.आ.३-१४) इति निरवकाश-श्रीलक्ष्मीपतित्वादिलिङ्गश्रवणात् । न च प्रसिद्धिविरोधः। भगवति प्राणशब्दस्य महायोगविद्वद्रूढिभ्यां अत्यन्तप्रसिद्धत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **प्रणेता** इति। प्रकृष्टनियामक इत्यर्थः। आकाशः प्राणः इत्यनुक्त्वा खवत्प्रणेतेत्युक्त्या आकाशप्राणप्रेरकत्वेन तच्छब्दमुख्यार्थः स एवेति सूचयति। शब्दप्रवृत्तिनिमित्ताधिकरणापेक्षया तत्स्वामिनि तच्छब्दमुख्यार्थत्वस्य राजा जयीत्यादौ दर्शनात् । तदुक्तमनुव्याख्याने(१-४-३) स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् । स्वातन्त्र्यं तत्र मुख्यं स्यात् कुतो राज्ञि जयोऽन्यथा।। इति। यद्वा आकाशप्राणाधिकरणयोः सहैव तात्पर्यमाह - **खवत्प्रणेता** इति। अत्र प्रणेतेत्यनेन प्राणशब्दो ग्राह्यः। येन न्यायेन आकाशो विष्णुः, तेनैव न्यायेन प्राणो विष्णुः इत्यर्थः। अयं भावः। ''अस्य लोकस्य का गतिरित्याकाश इति होवाच'' (छा.उ.१-९)इति श्रुत्युक्ताकाशः, ''स एष परोवरीयानुद्गीथ स एषोऽनन्त'' (छा.उ.१-९) इत्यादिनिरवकाशपरोवरीयस्त्वादिविष्णुलिङ्गात् यथा विष्णुस्तथा ''तद्वै त्वं प्राण'' (तै.आ.३-१४) इत्युक्तप्राणो विष्णुरेव। ''श्रीश्च ते लक्ष्मीश्च पत्न्यौ''(तै.आ.३-१४) इति निरवकाश-श्रीलक्ष्मीपतित्वादिविष्णुलिङ्गादिति। अस्मिन् व्याख्याने ''अत एव प्राण'' इति सौत्रातिदेशो ज्ञापकः। खवदित्याकाशदृष्टान्तीकरणेन अर्थादाकाशाधिकरणस्यापि तात्पर्यं सूचितमिति बोध्यम् ।।९।।

### ओं ज्योतिश्चरणाभिधानात् ओं

ज्योतिश्शब्दवाच्यो विष्णुरेव। कुतः? चरणाभिधानात् । कर्णादीनां विचरणाभिधानात् । साकल्येन कर्णाद्यज्ञेयत्वाख्यलिङ्गाभिधानादिति सूत्रार्थः।।

अत्र ''विमे कर्णा पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यत्'' (ऋ.सं.६-९-६)इति बह्वृचश्रुत्युक्तं ज्योतिरग्निरेव भवेत्। एतत्सूक्तस्य अग्निसूक्तत्वादिति प्राप्ते -

विष्णुरेव इदं ज्योतिः कर्णादिविदूरत्वाख्यविष्णुलिङ्गात् । न च प्रकरणविरोधः। लिङ्गेन प्रकरणबाधोपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **ज्योतिः** इति। ज्यायसी ऊतिः व्याप्तिः ऐश्वर्यं वा अस्येति ज्योतिश्शब्दवाच्यः इत्यर्थः ।।१०।।

**ओं छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम् ओं**

"गायत्री वा इदं सर्वं" (छा.३-१२-१) इत्युक्तगायत्रीशब्देन छन्दोविशेषाभिधानात् स एव गायत्री न विष्णुरिति चेन्न । किन्तु विष्णुरेव, कुतः? "तथा हि दर्शनं" दर्शनश्रुतिः। गायति त्रायति चेति गानत्राणकर्तृत्वलिङ्गबोधकश्रुतिः। हि यतः अत इत्यर्थः।

अन्यत्र प्रसिद्धगायत्रीपदेन ब्रह्मणो निर्देशे किं प्रयोजनं इत्यत उक्तं तथा चेतोऽर्पणनिगदादिति। तथा गायत्रीशब्दार्थगानादिकर्तृत्वगुणविशिष्टतया चेतस्यर्पणाय ध्यानार्थं निगदात् । "गायत्री वा इदं सर्वं" (छा.उ.३-१२-१)इति कथनादिति सूत्रार्थः।

अत्र "गायत्री वा इदं सर्वं" इति श्रुत्युक्ता गायत्री छन्दोविशेष एव। गायत्रीशब्दस्य तत्रैव रूढत्वादिति प्राप्ते -

विष्णुरेव गायत्रीशब्दवाच्यः। गायति च त्रायति चेति श्रुतौ गानत्राणकर्तृत्वलिङ्गश्रवणात् । तस्य च लिङ्गस्य निरवकाशत्वात् । गायत्रीश्रुतेश्च - सर्वछन्दोऽभिधो ह्येषः सर्वदेवाभिधो ह्यसौ। इति पौराणिकरूढ्या श्रुत्युक्तयोगेन च विष्णावेव मुख्यत्वेन सावकाशत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **इत्याद्यैः** इति। आद्यपदेन । इति शब्दः पूर्वप्रकृतपरामर्शकः। इति पूर्वोक्ताः आनन्दमयादिशब्दाः आद्याः येषां गायत्र्यादिशब्दानां ते तथोक्ताः। तैः सर्वैः शब्दैः विष्णुरेव उच्यते इत्यर्थः।

नन्वस्याधिकरणस्य स्वशब्देन तात्पर्यमनभिधाय आद्यशब्देनोक्तौ किं प्रयोजनमिति चेत् । अत्र ब्रूमः अत्र त्रीणि दर्शनानि । ज्योतिरित्यादिचतुस्सूत्री एकमेवाधिकरणम् । विषयवाक्यन्तु अग्निसूक्तस्थं "ज्योतिहृदय आहितं यत्" (ऋ.सं.६-९-६)इति वाक्यमेवेत्येकं दर्शनम् । इदं च तत्त्वप्रदीपकृतोऽभिप्रेतम्।

द्वितीयदर्शनन्तु चतुस्सूत्र्याः एकाधिकरणत्वेपि विषयवाक्यं "अथ यदतः परो दिवो ज्योतिः" इति छन्दोगवाक्यमेवेति। इदं सन्न्यायरत्नावलीकाराभिप्रेतम्।

तृतीयदर्शनन्तु ज्योतिश्चरणाभिधानादित्येकमधिकरणम् । छन्द इत्यादित्रीसूत्री तु अधिकरणान्तरमिति। इदं च टीकाकाराभिप्रेतम्।

मतत्रयस्यापि विवक्षाभेदेन भाष्यकाराभिप्रेतमेव। तथा च स्वशब्देन विना शब्दान्तरेणाभिधाने एवं मतभेदसूचनमेव प्रयोजनमित्यवधेयम् ॥

ज्योतिरधिकरणे मतत्रयसद्भावः विवक्षाभेदश्च तात्पर्यचन्द्रिकाभिनवचन्द्रिकयोः व्यक्त इति ताभ्यामेवावसेयम्। अस्माभिस्तु विस्तरभयात् ग्रन्थस्याणुत्वाच्च नोच्यत इत्यवगन्तव्यम् ।

नन्वत्र पादे सर्वैः शब्दैः विष्णुरेवोच्यते इत्यनुपपन्नम् । आनन्दमयाद्यधिकरणैः कतिपयशब्दसमन्वयस्यैव सिद्धेः इति चेन्न ।

आनन्दमयोऽभ्यासादित्यादिसूत्रोपात्तानां आनन्दमयादिशब्दानां स्वसमानन्यायाक्रान्तानेकशब्दोपलक्षकत्वेन एकैकस्मिन्नधिकरणे अनेकशब्दराशिमन्वयसिद्धेः। उक्तं चानुव्याख्याने (१-१-१६०)- उपलक्षणत्वं शब्दानां आनन्दमयपूर्विणाम्। इति। ननु सर्वेषामेव शब्दानामत्र समन्वये द्वितीयादिपादवैय्यर्थ्यमित्यत उक्तं - **अन्यवस्तुषु प्रसिद्धैः** इति। लोकतः इति शेषः। नामात्मकैरिति च । लोकतोऽन्यत्र प्रसिद्धैः नामात्मकैः शब्दैरित्यर्थः।

ननु यद्येतैः शब्दैः विष्णुरेवोच्येत तर्हि इन्द्राद्यसिद्धिप्रसङ्गः। लोकप्रसिद्धिविरोधश्चेत्यत उक्तं - **एक** इति। "एके मुख्यान्यकेवलाः" इति वचनात् परममुख्य इति यावत् । तथा च लोकप्रसिद्धिबलात् इन्द्रादिशब्दानां इन्द्रादौ मुख्यवृत्तिमविहायैव विष्णोः परममुख्यया वृत्त्या तच्छब्दवाच्यत्वाङ्गीकारात् नोक्तविरोध इति।

ननु सर्वशब्दानां भगवद्वाचकत्वे को हेतुः इत्यत उक्तं - **सर्वगुणत्वत** इति। सर्वे गुणाः यस्य स तथा, तस्य भावस्तत्वम् । तस्मादित्यर्थः। तत्तच्छब्दप्रवृत्तिनिमित्तभूतगुणानां ईश्वरे सत्त्वात् तत्तच्छब्दवाच्यत्वं युक्तमिति भावः।।११।।

## ओं प्राणस्तथानुगमात् ओं

तथा तैत्तिरीयश्रुताविव ऐतरेयश्रुत्युक्तोऽपि प्राणो विष्णुरेव। देवतोपदेश्यत्वादिलिङ्गानां ब्रह्मशब्दस्य च अस्मिन् प्राणे अनुगमादिति सूत्रार्थः।

अत्र "चक्षुः श्रोत्रं मनो वाक् प्राण" (तै.आ.२-१-४)इत्यैतरेयश्रुत्युक्तप्राणो न विष्णुः किन्तु वायुरेव। इन्द्रियगणे गणितत्वादिति प्राप्ते -

अयं प्राणो विष्णुरेव। "तं देवाः प्राणयन्त। तं भूतिरिति देवा उपासाञ्चक्रिरे। सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः" (ऐ.आ.२-१-५) इत्युक्तदेवतोपदेश्यत्वभूतित्वेन सर्वदेवोपास्यत्वसर्ववेदोक्तत्वादिविष्णुलिङ्गानां "ब्रह्मेमं पुरुषं उदरं ब्रह्म" इत्याद्युक्तब्रह्मशब्दस्य चास्मिन्प्राणे श्रवणादिति सिद्धान्तः कृतः।

एतदधिकरणतात्पर्यन्तु पृथङ्नोक्तम् । अस्याधिकरणस्य अत एव प्राण इत्यनेन समन्वितशब्दसमन्वयार्थत्वात् ।

ननु प्रत्यधिकरणं तात्पर्यकथनार्थं प्रवृत्तेन भगवता भाष्यकारेण अस्याधिकरणस्य पृथक् तात्पर्यं कुतो नोक्तं इति चेत् । सत्यम्। अस्त्यत्राभिप्रायविशेषः। अस्य ग्रन्थस्याणुत्वेन स्वातन्त्र्येण

शब्दसमन्वयार्थं प्रवृत्तस्यैवाधिकरणस्य तात्पर्यमुच्यते। न तु एकस्मिन्नधिकरणे समन्वितस्य शब्दस्य स्थलान्तरगतस्याप्यधिकशङ्कया पुनः समन्वयार्थं प्रवृत्तस्याधिकरणान्तरस्य तात्पर्यमुच्यत इति । एतच्चोत्तरत्रापि तत्र तत्र प्रदर्शयिष्यामः ।।१२।।

**मदाचार्यमनोधाममध्वमानसमञ्चके ।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां प्रथमाध्यायस्य प्रथमः पादः ।।**

**नारायणाचार्य–** अयं च न्यायोऽप्यन्यत्रानुसन्धेयः। ननु तथापि ''तद्वै त्वं प्राणो अभवः महान्भोगः प्रजापतेः। भुजः करिष्यमाणः यद्देवान्प्राणयो नवा'' (तै.आ.३-१४)इति श्रुतौ महाभोगत्वरूपपूर्णानन्दत्वं प्राणस्य वायोः श्रूयते। तत्कथमेतदित्यतः सूत्रं **ओं अत एव प्राण** इति। तद्व्याचष्टे । **प्रणेता** इति। प्रणेतेत्यादिभिराध्यात्मिकैः प्राणादिशब्दैरप्येको विष्णुरेवोच्यते। ''श्रीश्च ते लक्ष्मीश्च पत्न्यौ'' (तै.आ.३-१३)इत्यादिनोक्तानां श्रीपतित्वादिगुणरूपविष्णुलिंगानां प्राणे उक्तत्वात्प्राणशब्दस्य तु मुख्यवृत्या विष्णौ सावकाशत्वात्। ''यद्देवान्प्राणयो नव'' (तै.आ.३-१४) इत्यस्मिन्येव वाक्ये उच्यमानस्य पायूपस्थैक्यविवक्षया नवेन्द्रियदेवताप्रेरकत्वाख्यप्रणेतृत्वरूप-प्राणशब्दप्रवृत्तिनिमित्तस्य विष्णौ मुख्यत्वादित्याशयेन प्राण इति वक्तव्ये प्रणेतेत्याह चेति ।।९।।

न च तथापि ''वि मे कर्णा पतयतो विवक्षुर्वीदं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूर आधीः किंस्विद् वक्ष्यामि किमु नू मनिष्ये'' (ऋ.सं.६-९-६)इत्यग्निसूक्ते ज्योतिःशब्दवाच्यस्य अग्नेः हृदयगुहानिहितत्वं श्रूयते । अतः कथमुक्तं युक्तं इत्यतः सूत्रं **ओं ज्योतिश्चरणाभिधानात्** इति । तद्व्याचष्टे **ज्योतिः** इति। ज्योतिरित्याद्यैरधिसूक्तगतैरप्यन्यत्रप्रसिद्धैः शब्दैरेको विष्णुरेवोच्यते कर्णादिविदूरत्वादिसर्वगुणवत्वात् ।।१०।। **इत्याद्यैः** इत्यादिशब्देन गायत्रीशब्दस्य ऐतरेयोक्तप्राणशब्दस्य च ग्रहणम् । तत्र गायत्र्यधिकरणे छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनमिति प्रथमसूत्रस्यायमर्थः। ''अथ यदतः परो दिवो ज्योतिर्दीप्यते'' (छा.उ.३-१३-७)इति अत्रोक्तस्य ज्योतिषः गायत्र्या प्रारम्भः कृतः । ''गायत्री वा इदं सर्वं (छा.उ.३-१२-१)इति चेन्न चेतोऽर्पणार्थं गानत्राणकर्तृत्वादिधर्मविशिष्टध्यानार्थं हि निगद्यते। तथा च दर्शनं ''गायति च त्रायति च'' इति। युक्त्यन्तरेणाप्येतमर्थं समर्थयत् सूत्रं **ओं भूतादिपादव्यपदेशोपपत्तेश्चैवम्** । छान्दोग्य एव ''सैषा चतुष्पादा षड्विधा गायत्री'' ''तावानस्य महिमा ततो ज्यायांश्च पुरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि'' (तै.आ.३-११)इति गायत्र्याश्चतुष्पादत्वं प्रतिज्ञाय तत्र संमतित्वेन तच्छाखास्थपुरुषसूक्तस्थमन्त्र उदाहृतः। ततश्च ''पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि'' इति पुरुषसूक्तोदाहृतलक्षयोजनोच्चान्तरिक्षादुपरि वर्तमानस्यानन्तासनभूतादिपादोक्तेश्च विष्णुरेव गायत्री ।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्** । ''त्रिपादस्यामृतं दिवि'' (छा.उ.२-१२-६)इति दिविष्टत्वेन प्रथमोपदेशः। ''परो दिवा'' (छा.उ.३-१३-७)इति दिवःपरत्वेन पश्चिमः तस्मान्नैकं वस्तु अत्रोच्यते इति चेन्न त्रिसप्तलोकापेक्षया पक्षद्वयेऽपि विरोधाभावादनंतासनश्वेतद्वीपवैकुंठमूर्तित्रयस्य द्युलोकस्थत्वेन दिविष्टत्वस्य तेषां च मेरुसूर्यमण्डले इन्द्रभवनस्थद्युलोकेभ्य ऊर्ध्वत्वेन दिवः परत्वस्य च सम्भवात् । यद्यपि त्रिलोकविवक्षयापि मेरुसूर्यमण्डलरूपद्युलोकद्वयापेक्षयाऽनंतासनश्वेतद्वीपवैकुंठानां मूर्धत्वेन तत्रस्थमूर्तित्रयस्य दिवःपरत्वमप्यायाति। तथापि द्युशब्दवाच्येभ्यः सर्वेभ्यः परत्वमानेतुं सप्तलोकविवक्षा भौमान्तरिक्षदिव्यभेदेन त्रिविधः स्वर्गो द्युशब्दवाच्यः। तत्रानन्तासनस्य भौमद्युलोकादेकस्मात्परत्वं श्वेतद्वीपस्य मेरुसूर्यमण्डलरूपद्युलोकद्वयापेक्षयोच्चत्वेन द्वाभ्यां परत्वं वैकुंठस्य तत्तूक्तद्युलोकद्वयसहितेन्द्रभवनाख्यद्युलोकादपि परत्वेन त्रिभ्योऽपि परत्वम् । न चैतत् त्रिलोकविवक्षया लभ्यते। तत्पक्षे हि वैकुंठस्याप्यन्तरिक्षोर्ध्वत्वमात्रेण द्युत्वात्तत्रस्थस्य तत्परत्वायोगात् । सप्तलोकविवक्षया त्विन्द्रसदनस्यैव द्युत्वेन तत्परेषां महर्जनतपःसत्यलोकानां विशिष्य तत्तच्छब्दवाच्यत्वेन द्युत्वाभावाद्वैकुंठस्य युक्तं दिवः परत्वमिति दृष्टव्यम् । उक्तं च ''पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् । दिवींन्द्रसदनश्चेति तत्परे तु दिवः परः''।। इति। इतश्च भूर्भुवस्वरिति लोकत्रयाभिप्रायेण भुवः शब्दवाच्यांतरिक्षस्य लक्षयोजनोच्छ्रितत्त्वेन तदुपरितनश्वेतद्वीपानन्तासनवैकुण्ठानां द्युत्त्वेन तद्गतरूपत्रयं दिवीत्युच्यते। सप्तलोकापेक्षया इंद्रसदनस्य द्युत्वाद्वैकुंठस्य दिवःपरत्वं मेरोरपि द्युत्वात्तत्परानन्तासनस्य दिवःपरत्वं सूर्यमण्डलस्यापि द्युत्त्वेन तदुत्तरश्वेतद्वीपस्य दिवः परत्वमित्यविरोधः। सर्वतःपृष्ठत्वं चानन्तासनादीनां यथासम्भवं पृथिव्यादिलोकोच्चत्वं विश्वतः पृष्टत्वं चानन्तासनादीनां मेरुवैजयन्तसत्यलोकरूपचतुर्मुख-स्थानादुच्चत्वम्। ''पृथिव्यां ब्रह्मणो मेरुजयन्तस्त्वंतरिक्षगम् । तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् । तेभ्योऽनन्तासनाद्यावत् परतो विश्वतः परम् ।।'' इति छान्दोग्यभाष्योदाहृत-वचनानुसारादवगन्तव्यम् । ऐतरेयोपनिषदि ''ता वा एताः सर्वा ऋच'' (ऐ.आ.२-१-४) इत्याद्यारभ्य बहुषु स्थानेषु प्राण उच्यते । तस्य विष्णोरन्यत्वे प्रागुक्तोऽप्यन्य एव स्यादित्यत आह **ओं प्राणस्तथानुगमात्** । अत्रापि प्राणो विष्णुरेव । ''तं देवाः प्राणयन्त'' (ऐ.आ.२-१-५) इत्यादिदेवतोपदेश्यत्वादीनां विष्णुलिंगतां प्राणेऽनुगतिदर्शनात्। ''विष्णुमेवानयन्देवा विष्णुं भूतिमुपासते ।।''(स्कं.पु) इति स्मृतेस्तेषां विष्णुलिंगत्वम् । उक्तमाक्षिप्य समादधत्सूत्रं **ओं न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्** इति। ''तमिन्द्र उवाच प्राणो वा अहमस्मि'' (ऐ.आ.२-२-३)इति वक्तुर्बृहतीसहस्रशंसनकर्तृविश्वामित्रस्येंद्रेण प्राणतया आत्मोपदेशादिन्द्र एवासाविति चेन्न ''प्राणस्त्वं प्राणः सर्वाणि भूतानि'' (ऐ.आ.२-२-३) इत्यादिनाऽऽत्मन्यधिकृत्य वर्तमानस्य परमात्मनः सम्बन्धः भूमा बहुस्थलसम्बन्धः सर्वगतत्वमेवोच्यते।

अथ वा अस्मिन्निन्द्रे अधिकः परमात्मावेशाविर्भाव एव वर्तते । तमभिप्रेत्यैव इयमुक्तिः। अन्यथा विश्वामित्रस्य "त्वामेव जानीयां" इति बहुशः परिचितमिन्द्रं प्रति एवमुक्तिरयुक्ता स्यादिति भावः ।

नन्वन्तर्यामिणि विष्णावहमित्यस्योक्तिः कथं स्यादित्यत आह **ओं शास्त्रदृष्ट्या तूपदेशो वामदेववत्** इति। शासनाच्छास्त्रम् । अन्तर्यमित्वाभिप्रायेणाहमित्युक्तिश्च युज्यते। यथा "अहं मनुरभवं सूर्यश्च" (ऋ.सं४-२६-१)इति वामदेवेनोच्यते। उक्तमाक्षिप्य समादधत् सूत्रं **ओं जीवमुख्यप्राणलिंगान्नेति चेन्नोपासा त्रैविध्यादाश्रितत्वादिह तद्योग्यात्** इति। "तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति। तावन्ति शतसंवत्सरस्यान्हां सहस्राणि भवन्ति" (ऐ.आ.२-२-४)इति शतायुषरूपजीवलिंगात् "ता अहिंसन्ताहमुक्थमस्मि ..प्राण उदक्रामत्तत्प्राण उत्क्रान्तेऽपद्यत" तथा "प्राणः प्राविशत्तत्प्राणे प्रपन्ने उदतिष्ठत्" (ऐ.उ.१-४)इत्यादि प्राणलिंगाच्च न विष्णुरिति चेत् । न । अन्तर्बहिः सर्वगतत्वेनेत्युपासात्रैविध्यादिह प्रकरणे आश्रितत्वादुक्तत्वात् । पुरुषाणां तदुपासनायोग्यानां सत्वाच्च। "अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः। प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्" इत्युपासकत्रैविध्योक्तेः। तत्र "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" (ऐ.आ.२-४-३)इत्यन्तं उपासनार्थमुच्यते । महिदास ऐतरेय इति बहिरुपासनार्थमवताररूपमुच्यते। "स एतमेव पुरुषं ब्रह्म ततममपश्यत्" (ऐ.आ.२-४-३) इति सर्वगतोपासनार्थं भगवत एव तथात्वमुच्यते। लिंगानां तु जीवमुख्यप्राणांतर्गतभगवद्विषयतया उपपत्तिरिति भावः ।।१२।।

**।। इति नारायणाचार्यकृतावणुभाष्यप्रपंचे प्रथमः पादः समाप्तः प्रथमाध्यायः संगतः ।।**

**मळगि – प्रणेता** "सर्वस्य च प्रणेतृत्वात्प्राणो नारायणः पर" इत्युक्तेः। सर्वजीवनियामकत्वेन प्राणशब्दवाच्य एको विष्णुरेव। **अन्यवस्तुषु** भगवदन्यवस्तुषु प्रसिद्धैः। लोकप्रसिद्धैः। **सर्वैः** समस्तनामात्मकशब्दैः। **उच्यते** प्रतिपाद्यते। कुतः? **सर्वगुणत्वतः** सर्वगुणपरिपूर्णत्वात् । अनेन तत्तत्प्रवृत्तिनिमित्तानन्तगुणपरिपूर्णत्वं विष्णोरेवेत्युक्तं भवति ।।३ ।।

**।। इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां प्रथमाध्यायस्य प्रथमः पादः ।।**

**लिंघेरी –** पुनः कीदृशः ? **प्रणेता** सर्वजीवनियामकः । एकः विष्णुरेव अन्यवस्तुषु परमात्मान्यवस्तुषु प्रसिद्धैः ज्योतिरित्याद्यैः शब्दैरुच्यते। कुतः ? **सर्वगुणत्वतः** अनन्तगुणपरिपूर्णत्वात् । अनेन तत्प्रवृत्तिनिमित्तं अनन्तगुणपरिपूर्णत्वमित्युक्तं भवति ।।३।।

**नारायणपण्डित–** प्रणेता इन्द्रियादिप्रेरकः। जीवनहेतुः प्राणः । प्रणेता इत्यनेनात एव प्राण इत्यस्यार्थ उक्तः ।।९।। ज्योतिः प्रकाशरूपः। ज्योतिरित्यनेन ज्योतिश्चरणाभिधानादित्यस्यार्थो निगदितः ।।१०।। गायत्री चेत्याद्यैरन्यवस्तुषु विष्ण्वितरेषु वाचकत्वेन श्रुत्यादिप्रसिद्धैस्तत्तत्प्रकरण-गतैस्तत्तज्जातीयैः सर्वैः शब्दैः विष्णुरेक एवोच्यते। न तु तदन्यः। कुतः? सर्वगुणत्वतः।

तत्तत्प्रकरणगतश्रुतिलिङ्गरूपधर्मवत्वात्। तत्तत्प्रवृत्तिनिमित्तगुणवत्वात् स्वातन्त्र्यादिगुणवत्वाच्चेत्यर्थः। **अधिकरणानि १२। सूत्राणि ३१।**

**।। इति प्रथमाध्यायस्य प्रथमः पादः ।।**

**गूढकर्तृक – प्रणेता** इन्द्रियादिप्रेरकजीवनहेतुः प्राणः। **ज्योतिः** प्रकाशरूपः जेर्जातस्योतिराश्रयो वा । गायत्री चैत्याद्यैरन्यवस्तुषु विष्णिवतरेषु वाचकत्वेन श्रुत्यादिप्रसिद्धैः तत्तत्प्रकरणगतैः तत्तज्जातीयैश्च सर्वैर्शब्दैर्विष्णुरेकरेवोच्यते। न तु तदन्यः। कुतः ? **सर्वगुणत्वतः** तत्तत्प्रकारण-गतश्रुतिलिङ्गरूपधर्मवत्वात्। तत्तत्प्रवृत्तिनिमित्तरूपगुणत्वात् । स्वातन्त्र्यादिगुणवत्वाच्चेत्यर्थः। अत्र सर्वोऽपि उपपादनादिविशेषो भाष्यादौ द्रष्टव्या। अस्य संकोचत्वात् ।

**इति अन्यत्रप्रसिद्धनामात्मकशब्दानां विष्णौ समन्वयप्रतिपादनपरः प्रथमपादे दर्शितः**

**अणुभाष्यम्**

**सर्वगोऽत्ता नियन्ता च दृश्यत्वादुझ्झितः सदा।**
**विश्वजीवान्तरत्वाद्यैर्लिंगैस्सर्वैर्युतस्स हि ।।४।।**

**सत्यनाथीया– सदा सर्वगः** सर्वत्रस्थः । सर्वग इत्यनेन सर्वत्रप्रसिद्धोपदेशादिति नयार्थ उक्तः । **अत्ता** चराचरसंहर्ता सदा शुभकर्मफलभोक्ता च । अत्ता इत्यनेनात्ता चराचरग्रहणात्, गुहां प्रविष्टावात्मानौ हि तद्दर्शनादित्यनयोरर्थो उक्तः। **नियन्ता** ज्ञानादियन्ता च । नियन्ता इत्यनेनान्तरोपपत्तेरन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादित्यनयोरर्थोऽभिहितः। **दृश्यत्वाद्युझ्झितः सदा** दृश्यत्वादिहीनः अदृश्यत्वादिगुणक इत्यर्थः । **सदा** इति सर्वत्रान्वेति । साकल्येन चक्षुर्मनआद्यगोचत्वमपरिच्छेदवैभवत्वं न कदाचिद्धीयते इति भावेन सदा अदृश्यात्वादिगुणको धर्मोक्तेरित्यर्थ उक्तो भवति। **आदिपदेन** गोत्राद्यभाव उच्यते । विश्वजीवान्तरत्वाद्यैस्सर्वजीव-नियमनादियोग्यता वैश्वानरशब्देन । **आद्यैः** तत्प्रकरणगतैस्सर्वैर्लिंगैः नामभिश्च युतः स विष्णुरेवैकः। कुतः? सर्वैर्लिङ्गैस्सर्वैर्ज्ञापकप्रमाणैर्युतो हि यस्मात्तस्मात्सर्वलिङ्गात्मकशब्दवाच्यः स एवेत्यर्थः । **विश्वजीवान्तरत्वाद्यैः** इत्यनेन वैश्वानर इति सूत्रार्थो दर्शितः।

## अथ प्रथमाध्यायस्य द्वितीयः पादः

**तत्वमञ्जरी–** एवं सर्वशाखागतनानावाक्यस्थितैः अन्यवस्तुषु प्रसिद्धैः सर्वनामभिरेको विष्णुरेव तत्तत्प्रकरणस्थनामलिङ्गेभ्यो हेतुभ्य उच्यत इत्युक्तं पूर्वपादे। तदसाध्विव। हेतूकृतलिङ्गेषु केषाञ्चिदीश्वरनिष्ठता प्रसिद्धावपि सर्वेषां तदसिद्धेरित्यतः लिङ्गपादः प्रवृत्तः। तदर्थमाह – **प्रसिद्धैरन्यवस्तुषु। उच्यते विष्णुरेवैकः** इति। ''लिङ्गैः सर्वैर्युतः स हि'' इत्यग्रेतनमप्यत्रान्वेति।

यः पूर्वपादे अशेषनामभिरुक्तः स एको विष्णुरेव अन्यवस्तुषु प्रसिद्धैरत एव भगवत्यप्रसिद्धैः विप्रतिपन्नैरिति यावत् । **सर्वैर्लिङ्गैर्युतः** युक्त इत्युच्यते प्रतिपाद्यते। अस्मिन् पादे सूत्रकृतेत्यर्थः। विप्रतिपन्नाशेषलिङ्गसमन्वयं ब्रूतेऽस्मिन् पाद इति यावत् । किं नाम्ना लिङ्गेन । नाद्यः अन्योन्याश्रयात् । नान्त्यः। विप्रतिपत्तेः। इत्यतोऽप्युक्तम् – **लिङ्गैर्हि** इति। विष्णुधर्मत्वेन प्रमाणप्रसिद्धैः तत्तत्प्रकरणस्थनिरवकाशाविप्रतिपन्नलिङ्गैः इत्यर्थः। उपलक्षणमेतत् । निरवकाशश्रुत्यादिना चेत्यपि ध्येयम्। ननु प्राणशब्दितस्य विष्णोरुपासनार्थं "स इदं ब्रह्म ततमम्" (ऐ.आ.२-४-३) इत्यादिनोक्तततमत्वादिगुणवत्त्वमयुक्तम् । तत्रैवैतरेये उत्तरत्र "एतमस्यां एतं दिवि" इत्यादौ वाक्ये एतमित्येतच्छब्देन "आदित्यो रसः" (ऐ.आ.३-२-३)इति पूर्वप्रकृततया आदित्यं वा, " चक्षुर्मयः श्रोत्रमयः" इत्यादिना वक्ष्यमाणजीवं वा परामृश्य तस्य पृथिव्यादिकतिचिज्जीवदेहहृदयगुहास्थत्वमुक्त्वा अन्ते " सर्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षते" इत्यत्र "भूतेष्वेतमेवाचक्षते नान्यं" इति सर्वभूतहृदये जीवादित्ययोरेव सत्त्वोक्त्या प्राचीनततमत्वान्तस्थत्व-योरपि तयोरेवावश्यम्भावात्, एकप्रकरणस्थत्वात् । व्याप्तस्य हरेः अल्पदेशे अन्तरवस्थानायोगाच्च । देहान्तस्थत्वे जीवसमानभोगप्राप्तेश्चेत्यतः प्राप्तम् – **सर्वत्र प्रसिद्धोपदेशात्** इत्यादिसूत्राष्टकम् । तदर्थः – **सर्वग** इति। लिङ्गैः सर्वैर्युतः स हीत्यन्वेति । विष्णुरेवैक इति च ।

"एतमस्यां" इत्यादिनोक्तः सर्वगः सर्वभूतदेहहृदयगुहागतः सः प्राक् ततमत्वेनोक्तो विष्णुरेव। नत्वादित्यः सर्वे जीवा वा। कुतः? लिङ्गैः **सर्वैर्युतो हि** इति। हिर्हेतौ। "एतमेव ब्रह्म" इति, "अशरीरः प्रज्ञात्मा" इति, "स योऽतोश्रुतोऽगतोऽमत" (ऐ.आ.३-२-३)इति, "आत्मानं परस्मै शंसति" इत्यादिनोक्तसावधारणब्रह्मशब्दार्थत्वाशरीरत्वाश्रुतत्वादिजीवकर्तृकशंसनक्रियाकर्मत्वादि एतत्प्रकरणश्रुतिलिङ्गयुक्तत्वात् विष्णोरित्यर्थः। तच्च भाष्योक्तश्रुत्या सिद्धमिति भावः।

यद्वा एतैर्लिङ्गैर्युतः सर्वगो विष्णुरेव। तेषां लिङ्गानां भाष्योक्तवाक्यैर्वैष्णवत्वप्रसिद्धेरिति हेरर्थः। मुख्यब्रह्मण एव सावधारणब्रह्मशब्दार्थत्वात् । अन्यस्य मुख्यत्वे अस्यामुख्यत्वे वा "एतमेव ब्रह्म" इत्याचक्षते इत्यस्यायोगात् । अश्रुतत्वाद्यप्येवं ध्येयम् ।

ननु "तस्यैतस्यासावादित्यो रसः" "पुरुषं पुरुषं प्रत्यादित्य" इत्यादित्यशब्दस्य नामपादीयन्यायेन वैष्णवत्वेऽपि संवत्सरसारत्वसर्वपुरुषाभिमुख्यादित्यलिङ्गस्य "चक्षुर्मयः श्रोत्रमय" इति चक्षुर्मयत्वादेः हृदयगुहारूपाल्पस्थानत्वरूपाल्पौकस्त्वस्य जीवलिङ्गस्य भावात्तद्विरोध इत्यतोऽपि **लिङ्गै सर्वैर्युतः स हि** इति। स हि विष्णुरेव "संवत्सरो हि प्रजापतिः" "तत्र संवत्सरं नाम ब्रह्माणमसृजत्" "संवत्सराभिमानी तु ब्रह्म" इत्यादिश्रुतिस्मृतिभिः संवत्सरस्य विरिञ्चत्वेन तन्नियन्तृत्वरूपसारत्वस्य च "यो ब्रह्माणं विदधाति पूर्वं" इत्यादिश्रुतिस्मृतिभिः सर्वपुरुषाभिमुख्यस्य मण्डलद्वारा आदित्य इव "स एषोऽन्तरादित्ये हिरण्मयः पुरुषः"

"यश्चासावादित्ये" "ध्येयः सदा सवितृमण्डमध्यवर्ती नारायणः" "ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान् हरिः। स एवादित्यसंस्थश्च" इत्यादिश्रुतिस्मृतिभिः आदित्यस्थतया निर्णीते हरौ, चक्षुर्मयत्वादेश्च "सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु संस्थितः" इति स्मृत्या चक्षुरादिस्वामित्वेन च पूर्णानन्द इत्यत्रोक्तन्यायेन "पूर्णदर्शनशक्तित्वाच्चक्षुर्मय" इत्यादिस्मृत्या च, मयटः प्राचुर्यार्थत्वेन च उपपत्तेः।

अर्भकौकस्त्वस्यापि व्याप्ते हरौ "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (म.ना.उ) इति श्रुत्या "अहमात्मा गुडाकेश सर्वभूताशय स्थित" इत्यादिस्मृत्या "अन्तरः खवत्" इत्यत्र प्रसङ्गादुक्तयुक्त्या च समाहितत्वाद्वा। पूर्वस्मात् खवदितिपदस्यानुवृत्त्या खवत्सर्वगो विष्णुरित्यन्वयेन समाधानाद्वेति भावः।

एतेन सर्वगो विष्णुरिति वचनेनैव "तत्र तत्र स्थितो विष्णुः तत्तच्छक्तिप्रबोधकः" । इत्याद्यनुभाष्योक्त्या सर्वगतत्वस्य तत्तच्छक्तिप्रबोधनार्थत्वात् सामर्थ्यातिशयेन जीवसमानभोगप्राप्तिरपि समाहितेति ध्येयम् । अत्र स इत्युक्तिः पूर्वोक्तेन ऐक्योक्त्यर्था।

नन्वथापि यदुक्तं सर्वकर्ता विष्णुरेवेत्यत्र सर्वसम्बन्धिजन्मस्थितिलयकर्तृत्वं विष्णोः तदयुक्तम्। "सर्वं वा अत्तीति तददितेरदितित्वं" (बृ.उ.३-२-५) इति काण्वश्रुतौ अदितेरेव सर्वात्तृत्व-रूपसंहर्तृत्वोक्तेरित्यतः प्राप्तम् - **अत्ता** इत्यादिसूत्रद्वयम् । तदर्थः। **अत्ता** इति। "एको विष्णुरेव" इति, "लिङ्गैः सर्वैर्युतः स हि" इति च अन्वेति। सर्वमत्ति इत्यत्रोक्तः सः प्राक् सर्वकर्ता इत्यत्र संहर्तृत्वोनोक्तो विष्णुरेव न त्वदितिः। कुतः? **लिङ्गैः सर्वैर्युतो हि** इति। हिर्हेतौ। सर्वमत्तीत्युक्तासंकुचितसर्वात्तृत्वं "नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीत्" इत्यादिवाक्योक्तलयवर्तित्व-अप्संवत्सरस्रष्टृत्व-चतुर्मुखादनोद्यमादिरूपैः तत्प्रकरणस्थसर्वलिङ्गैः युतत्वादित्यर्थः। एतैर्लिङ्गैर्युतोऽत्ता विष्णुरेव। तेषां भाष्योक्तदिशा वैष्णवत्वप्रसिद्धेरिति वा । अत्र एक इत्युक्तिः किञ्चिदत्त्री अदितिः किञ्चिदत्ता हरिरिति न शङ्क्यं, सर्वस्यात्ता हरिरेक एवेति वक्तुम्।

अत्रापि विष्णुरिति वर्तमाने स इत्युक्तिः प्रागुक्तेनैक्यद्योतनाय वा, "स तया वाचा तेन आत्मना" इत्यादौ प्रथमान्ततच्छब्दोक्तः प्रकृतमृत्युरेवात्ता निर्णयश्रुतौ उच्यत इति द्योतनाय वेति।।२।।

नन्वथापि न तस्य सर्वादनं युक्तम् । "ऋतं पिबन्तौ सुकृतस्य लोके" (क.उ.१-३-१) इति ऋतशब्दितकर्मफलादनरूपऋतपातृत्वस्य देहहृदयगुहाप्रविष्टयोः जीवेश्वरयोः द्विवचनश्रुत्या प्रतीतावपि ईश्वरस्यानश्नन्नित्यादिना कर्मफलानत्तृत्वात् छत्रिन्यायेन जीवेश्वरौ ऋतं पिबन्तावित्युक्त्युपपत्तेरित्यतः प्राप्तम् - **गुहां प्रविष्ट** इत्यादिसूत्रद्वयम् । तस्याप्यर्थः - **अत्ता** इति। सर्वग इत्यस्ति।

लिङ्गैरित्याद्यन्वेति। सर्वगोऽत्ता ऋतं पिबन्तावित्याद्युक्तः सर्वप्राणिशरीरहृदयगुहास्थः सन् कर्मफलात्ता स सर्वात्तृत्वेनोक्तः स एको विष्णुरेव, न तु जीवेश्वरौ। कुतः ? **लिङ्गैः सर्वैर्युतो हि** । "गुहां प्रविष्टौ" (क.उ.१-३-१)इति, " यः सेतुरीजानानां" (क.उ.१-३-२)इति, "अक्षरं ब्रह्म तत्परं" इति गुहाप्रविष्टत्व-सेतुत्व-अक्षरत्व-एकवचनोक्तैकत्वादिलिङ्गैर्युतत्वादित्यर्थः।

एतैर्लिङ्गैर्युतोऽत्ता विष्णुरेव। तेषां भाष्यदिशा वैष्णवत्वप्रसिद्धेरिति वा ।

अत्रापि विष्णुरिति वर्तमाने स इत्युक्तिः सर्वत्रैक्यद्योतनाय वा । "क इत्था वेद यत्र सः" इति तच्छब्देन पूर्वप्रकृतो विष्णुरेव द्विरूपोऽत्रोच्यते नत्वप्रकृतो जीव इति सूचनाय वा।

न चानशनश्रुतिविरोध इत्यतोऽपि **स** इति। "तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोऽनशद्यः पितरं न वेद" इति अनशनवाक्यशेषे यो जीवानद्यात्तृत्वेनोक्तः स विष्णुरेवात्ता ऋतपानकर्तेत्यर्थः। " ऋतं सत्यं तथा धर्मः सुकृतं च " इत्यादेः। तथा च श्रुतिः जीवाद्यशुभादनपरा इति भावः। एक इति जीवेशरूपानेककोटिनिरासाय। सर्वग इति गुहास्थत्वयुक्तिसूचनाय । अत्ताराविति वाच्ये अत्तेत्युक्तिः रूपद्वयैक्योक्त्यर्था ।।३।।

नन्वथापि पूर्णानन्दो विष्णुरेवेत्येतदयुक्तम् । तस्य "यश्चासावादित्ये" इत्यादित्यस्थत्वोक्तेः। आदित्यस्थस्य च "य एष आदित्ये पुरुषः सोऽहमस्मि" (छा.उ.४-११)इत्यग्निना स्वात्मतादात्म्योक्तेः। आदित्यस्थस्यैव चाग्नेः "य एषोऽन्तरक्षणि पुरुषो दृश्यते एष आत्मा" (छा.उ.४-१५)इत्यक्षिस्थत्वमुच्यते। "आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्" इति श्रुत्या आदित्याक्ष्णोरेकदेवताधिष्ठानत्वात् । अतो ह्यादित्यस्थः पूर्णानन्दोऽप्यग्निरेवेत्यतः प्राप्तम् - **अन्तर उपपत्तेः** इति सूत्रपञ्चकम् ।

तदर्थः **नियन्ता** चेति पूर्ववदनुषङ्गः। सर्वगः सन् अन्तरक्षणीति श्रुतसर्वप्राणिचक्षुरन्तस्थः सन् एष वामनिः इत्यादिनोक्तो नियन्ता वामभामशब्दितसौन्दर्यतेजःप्रधानसर्वस्त्रीपुंसनियमकर्ता स सम्पूर्णानन्दत्वेनोक्तादित्यस्थ एकः स्वतन्त्रो विष्णुरेव । नत्वग्निः। कुतः। **लिङ्गैर्युतो हि**। "एतदमृतमभयमेतद् ब्रह्म" "तद्यथा पुष्कपलाश आपो न श्लिष्यन्ते" (छा.उ.४-१४-३) इति, "तद्यदस्मिन् सर्पिर्वोदकं वा" (छा.उ.४-१५)इति, "एतं संयद्वाम इत्याचक्षते एतं सर्वाणि वामानि संयन्ति एष उ एव वामनिः" "कं ब्रह्म खं ब्रह्म" (छा.उ.४-१०) "स एनान् ब्रह्म गमयति" इत्यादिना उक्तैः अमृतत्व-अभयत्व-पापाश्लेषहेतुवेदनत्व-स्वाश्रयचक्षुरसङ्गत्वा-पादकत्व-संयद्वामत्व-पूर्णानन्दत्व-पूर्णज्ञानत्वादिभिः एतत्प्रकरणस्थैः सर्वैलिङ्गैर्युतत्वादित्यर्थः। एतैर्लिङ्गैर्युतो नियन्ता विष्णुरेव । तेषां भाष्यदिशा वैष्णवत्वसिद्धेरिति वा । अत्रापि स इत्युक्तिः "योऽग्निनामा सोऽहमस्मि" इति तच्छब्देनादित्यस्थमुद्दिश्य पादान्त्यप्राणनयन्यायेनाहमस्मीति स्वान्तर्यामितादात्म्येनोक्तः स एव विष्णुः "य एषोऽन्तरक्षणि" इत्यक्षिस्थो नियन्तेति सूचयितुम्।

"यश्चासावादित्ये" "ध्येयः सदा सवितृमण्डमध्यवर्ती नारायणः" "ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान् हरिः। स एवादित्यसंस्थश्च" इत्यादिश्रुतिस्मृतिभिः आदित्यस्थतया निर्णीते हरौ, चक्षुर्मयत्वादेश्च "सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु संस्थितः" इति स्मृत्या चक्षुरादिस्वामित्वेन च पूर्णानन्द इत्यत्रोक्तन्यायेन "पूर्णदर्शनशक्तित्वाच्चक्षुर्मय" इत्यादिस्मृत्या च, मयटः प्राचुर्यार्थत्वेन च उपपत्तेः।

अर्भकौकस्त्वस्यापि व्याप्ते हरौ "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (म.ना.उ) इति श्रुत्या "अहमात्मा गुडाकेश सर्वभूताशय स्थित" इत्यादिस्मृत्या "अन्तरः खवत्" इत्यत्र प्रसङ्गादुक्तयुक्त्या च समाहितत्वाद्वा। पूर्वस्मात् खवदितिपदस्यानुवृत्त्या खवत्सर्वगो विष्णुरित्यन्वयेन समाधानाद्वेति भावः।

एतेन सर्वगो विष्णुरिति वचनेनैव "तत्र तत्र स्थितो विष्णुः तत्तच्छक्तिप्रबोधकः"। इत्याद्यनुभाष्योक्त्या सर्वगतत्वस्य तत्तच्छक्तिप्रबोधनार्थत्वात् सामर्थ्यातिशयेन जीवसमानभोगप्राप्तिरपि समाहितेति ध्येयम् । अत्र स इत्युक्तिः पूर्वोक्तेन ऐक्योक्त्यर्था।

नन्वथापि यदुक्तं सर्वकर्ता विष्णुरेवेत्यत्र सर्वसम्बन्धिजन्मस्थितिलयकर्तृत्वं विष्णोः तदयुक्तम्। "सर्वं वा अत्तीति तददितेरदितित्वं" (बृ.उ.३-२-५) इति काण्वश्रुतौ अदितेरेव सर्वात्तृत्व-रूपसंहर्तृत्वोक्तेरित्यतः प्राप्तम् - **अत्ता** इत्यादिसूत्रद्वयम् । तदर्थः। **अत्ता** इति। "एको विष्णुरेव" इति, "लिङ्गैः सर्वैर्युतः स हि" इति च अन्वेति। सर्वमत्ति इत्यत्रोक्तः सः प्राक् सर्वकर्ता इत्यत्र संहर्तृत्वोनोक्तो विष्णुरेव न त्वदितिः। कुतः? **लिङ्गैः सर्वैर्युतो हि** इति। हिर्हेतौ। सर्वमत्तीत्युक्तासंकुचितसर्वात्तृत्वं "नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीत्" इत्यादिवाक्योक्तलयवर्तित्व-अप्संवत्सरस्रष्टृत्व-चतुर्मुखादनोद्यमादिरूपैः तत्प्रकरणस्थसर्वलिङ्गैः युतत्वादित्यर्थः। एतैर्लिङ्गैर्युतोऽत्ता विष्णुरेव। तेषां भाष्योक्तदिशा वैष्णवत्वप्रसिद्धेरिति वा । अत्र एक इत्युक्तिः किञ्चिदत्त्री अदितिः किञ्चिदत्ता हरिरिति न शङ्क्यं, सर्वस्यात्ता हरिरेक एवेति वक्तुम्।

अत्रापि विष्णुरिति वर्तमाने **स** इत्युक्तिः प्रागुक्तेनैक्यद्योतनाय वा, "स तया वाचा तेन आत्मना" इत्यादौ प्रथमान्ततच्छब्दोक्तः प्रकृतमृत्युरेवात्ता निर्णयश्रुतौ उच्यत इति द्योतनाय वेति।।२।।

नन्वथापि न तस्य सर्वादनं युक्तम् । "ऋतं पिबन्तौ सुकृतस्य लोके" (क.उ.१-३-१) इति ऋतशब्दितकर्मफलादनरूपऋतपातृत्वस्य देहहृदयगुहाप्रविष्टयोः जीवेश्वरयोः द्विवचनश्रुत्या प्रतीतावपि ईश्वरस्यानश्नन्नित्यादिना कर्मफलानत्तृत्वात् छत्रिन्यायेन जीवेश्वरौ ऋतं पिबन्तावित्युक्त्युपपत्तेरित्यतः प्राप्तम् - **गुहां प्रविष्ट** इत्यादिसूत्रद्वयम् । तस्याप्यर्थः - **अत्ता** इति। सर्वग इत्यस्ति।

लिङ्गैरित्याद्यन्वेति। सर्वगोऽत्ता ऋतं पिबन्तावित्याद्युक्तः सर्वप्राणिशरीरहृदयगुहास्थः सन् कर्मफलात्ता स सर्वात्तृत्वेनोक्तः स एको विष्णुरेव, न तु जीवेश्वरौ। कुतः ? **लिङ्गैः सर्वैर्युतो हि** । "गुहां प्रविष्टौ" (क.उ.१-३-१)इति, " यः सेतुरीजानानां" (क.उ.१-३-२)इति, "अक्षरं ब्रह्म तत्परं" इति गुहाप्रविष्टत्व-सेतुत्व-अक्षरत्व-एकवचनोक्तैकत्वादिलिङ्गैर्युतत्वादित्यर्थः।

एतैर्लिङ्गैर्युतोऽत्ता विष्णुरेव। तेषां भाष्यदिशा वैष्णवत्वप्रसिद्धेरिति वा ।

अत्रापि विष्णुरिति वर्तमाने स इत्युक्तिः सर्वत्रैक्यद्योतनाय वा । "क इत्था वेद यत्र सः" इति तच्छब्देन पूर्वप्रकृतो विष्णुरेव द्विरूपोऽत्रोच्यते नत्वप्रकृतो जीव इति सूचनाय वा।

न चानशनश्रुतिविरोध इत्यतोऽपि **स** इति। "तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोऽनशद्यः पितरं न वेद" इति अनशनवाक्यशेषे यो जीवानद्यात्तृत्वेनोक्तः स विष्णुरेवात्ता ऋतपानकर्तेत्यर्थः। " ऋतं सत्यं तथा धर्मः सुकृतं च " इत्यादेः। तथा च श्रुतिः जीवाद्यशुभादनपरा इति भावः। एक इति जीवेशरूपानेककोटिनिरासाय। सर्वग इति गुहास्थत्वयुक्तिसूचनाय । अत्ताराविति वाच्ये अत्तेत्युक्तिः रूपद्वयैक्योक्त्यर्था ।।३।।

नन्वथापि पूर्णानन्दो विष्णुरेवेत्येतदयुक्तम् । तस्य "यश्चासावादित्ये" इत्यादित्यस्थत्वोक्तेः। आदित्यस्थस्य च "य एष आदित्ये पुरुषः सोऽहमस्मि" (छा.उ.४-११)इत्यग्निना स्वात्मतादात्म्योक्तेः। आदित्यस्थस्यैव चाग्नेः "य एषोऽन्तरक्षणि पुरुषो दृश्यते एष आत्मा" (छा.उ.४-१५)इत्यक्षिस्थत्वमुच्यते। "आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्" इति श्रुत्या आदित्याक्ष्णोरेकदेवताधिष्ठानत्वात् । अतो ह्यादित्यस्थः पूर्णानन्दोऽप्यग्निरेवेत्यतः प्राप्तम् - **अन्तर उपपत्तेः** इति सूत्रपञ्चकम् ।

तदर्थः **नियन्ता** चेति पूर्ववदनुषङ्गः। सर्वगः सन् अन्तरक्षणीति श्रुतसर्वप्राणिचक्षुरन्तस्थः सन् एष वामनिः इत्यादिनोक्तो नियन्ता वामभामशब्दितसौन्दर्यतेजःप्रधानसर्वस्त्रीपुंसनियमकर्ता स सम्पूर्णानन्दत्वेनोक्तादित्यस्थ एकः स्वतन्त्रो विष्णुरेव । नत्वग्निः। कुतः। **लिङ्गैर्युतो हि**। "एतदमृतमभयमेतद् ब्रह्म" "तद्यथा पुष्कपलाश आपो न श्लिष्यन्ते" (छा.उ.४-१४-३) इति, "तद्यदस्मिन् सर्पिर्वोदकं वा" (छा.उ.४-१५)इति, "एतं संयद्वाम इत्याचक्षते एतं सर्वाणि वामानि संयन्ति एष उ एव वामनिः" "कं ब्रह्म खं ब्रह्म" (छा.उ.४-१०) "स एनान् ब्रह्म गमयति" इत्यादिना उक्तैः अमृतत्व-अभयत्व-पापाश्लेषहेतुवेदनत्व-स्वाश्रयचक्षुरसङ्गत्वा-पादकत्व-संयद्वामत्व-पूर्णानन्दत्व-पूर्णज्ञानत्वादिभिः एतत्प्रकरणस्थैः सर्वैर्लिङ्गैर्युतत्वादित्यर्थः। एतैर्लिङ्गैर्युतो नियन्ता विष्णुरेव । तेषां भाष्यदिशा वैष्णवत्वसिद्धेरिति वा । अत्रापि स इत्युक्तिः "योऽग्निनामा सोऽहमस्मि" इति तच्छब्देनादित्यस्थमुद्दिश्य पादान्त्यप्राणनयन्यायेनाहमस्मीति स्वान्तर्यामितादात्म्येनोक्तः स एव विष्णुः "य एषोऽन्तरक्षणि" इत्यक्षिस्थो नियन्तेति सूचयितुम्।

**अत्रान्तर इति वाच्ये नियन्तेत्युक्तिः "एष उ एव वामनिः" इत्यादिनोक्तनियन्तृत्वरूपेणैव अक्ष्यन्तस्थत्वमिति द्योतयितुम् । तेनाग्नेरक्षिस्थतया नियन्तृत्वे जीवत्वसाम्येन नियामकान्तरापेक्ष-यायामनवस्थितिः। नियम्यजीवसाम्येन नियामकत्वासम्भवश्चेति सूचितम् । स्वतन्त्रेशोक्तौ न दोष इति सूचयितुं एक इति।**

यत्तु अनुभाष्ये - "एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततः परम् । अन्तर्याम्यन्तरश्चेति क्रिया भावाख्यमुच्यते।" इति क्रियारूपं भावरूपं लिङ्गमत्रोच्यत इत्युक्तम् । तत्र चक्षुरन्तःस्थिति-रूपभावस्य सर्वग इत्यनुवृत्त्या स्पष्टत्वान्नियमनरूपं क्रियाख्यं लिङ्गमेवोपात्तं नियन्तेति। तत्र क्रियापदेन "अन्तःस्थित्वा रमणकृत्" इत्यनुभाष्यदिशा न रमणरूपक्रियैव विवक्षिता, किन्तु नियमनरूपक्रियापि । अत एव क्रियेति सामान्योक्तिः ।।४।।

नन्वक्ष्यन्तस्थो नियन्ता विष्णुरित्ययुक्तम् । "एतदमृतम्" (छा.उ.४-१५-१)इति तत्र हेतूकृतस्यामृतत्वस्य वाजसनेये पञ्चमे "यः पृथिव्यां तिष्ठन्" (बृ.उ.४-७-३)इत्युपक्रम्य "एष त आत्मा अन्तर्याम्यमृतः" इत्यादिना पृथिव्याद्यन्तर्यामिणः श्रवणात्तस्य च "पृथिवी शरीरं" इति पृथिवी शरीरकत्वादिना पृथिव्याद्यभिमानिजीवत्वात् उपादानप्रकृतित्वाद्वेत्यतः प्राप्तम् - **अन्तर्यामी** इत्यादिसूत्रत्रयम् ।

तस्याप्यर्थो **नियन्ता च** इति। पूर्ववदनुषङ्गः। स चक्षुरादावमृतत्वेनोक्तः स एको विष्णुरेव सर्वगो नियन्ता अन्तर्यामिशब्दोक्तसर्वप्राण्यन्तस्थः सन्नियमनकर्ता । न तु तत्तदभिमानिजीवः तदुपादानप्रकृतिर्वेत्यर्थः। कुतः ? **सर्वैर्लिङ्गैर्युतो हि** । "यं पृथिवी न वेद" (बृ.उ.५-७-३) "पृथिवीमन्तर" इत्यादिनोक्त पृथिव्याद्यभिमानिदेवाविदितत्व-अनन्यापेक्षरमणवत्त्वरूपान्तरत्व - अमृतत्वाद्येतत्प्रकरणस्थलिङ्गैः युतत्वादित्यर्थः। पूर्ववद्वा योजना । प्रागुक्तसमुच्चये चशब्दः।

ननु च शरीरवत्त्वलिङ्गाज्जीव एव कुतो न इत्यतोऽपि **नियन्ता** इति। विश्वजीवान्तर-त्वाद्यैरित्यप्यन्वेति । हि यस्मात् नियन्ताऽन्तर्यामी "यो विज्ञानादन्तरः" "य आत्मनोऽन्तरः" इत्यादिनोक्तविज्ञानात्मशब्दितसर्वजीवविविक्तत्वरूपान्तरत्वाख्यविश्वजीवान्तरत्वाद्यैर्लिङ्गैः युतोऽतो न जीव इत्यर्थः। आद्यपदेन "य आत्मनि" इत्युक्ताधाराधेयत्वादिग्रहः। न हि जीवाद्भेदेनाधीतस्य जीवत्वं युक्तमिति भावः। कथं तर्हि पृथिव्याद्यभिमानिसर्वजीवशरीरकत्वं अशरीरस्य विष्णोरित्यतोऽपि **नियन्ता** इति। हि यतो विष्णुर्नियन्ता सर्वनियामकः अतः पृथिव्याद्यभिमानिसर्वजीवशरीरक इत्यर्थः। यथा लोके शरीरं जीवतन्त्रं तथा सर्वे जीवा विष्णुतन्त्रत्वात् गौण्या वृत्त्या तच्छरीराणीत्यर्थः। "पृथिव्याद्या देवतास्तु देहवद्यद्वशत्वतः। शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मनः।" इति बृहद्भाष्योक्तस्मृतेः। "शीर्यते नित्यमेवास्मात्" इति भाष्योक्तदिशा सर्वस्य विष्णुना देहादिद्वारा यथायोग्यं शीर्यमाणत्वाच्च योगवृत्त्या सर्वशरीरत्वं युक्तमिति चशब्दार्थः ।।५।।

नन्वथापि यदुक्तं "यं पृथिवी न वेद" (बृ.उ.५-७-३) "अदृश्येनात्म्ये" (तै.उ.२-७) इत्यादिना विष्णोरदृश्यत्वादिकं तदाथर्वणे "अथ परा यया तदक्षरमधिगम्यते" (मुं.उ.१-१-५) "यत्तदद्रेश्यमग्राह्यं" (मुं.उ.१-१-६)इत्यादिना अक्षरस्योच्यते। तच्चाक्षरं यथा "पृथिव्यामोषधयः सम्भवन्ति" इति दृष्टान्तपूर्वकं "अक्षरात्सम्भवतीह विश्वं" इति विश्वोपादानकारणत्वेनाक्षरात्परतः पर इत्युत्कर्षावधित्वेन च श्रुतमित्यनुपादाने सर्वोत्कृष्टे विष्णावनुपपन्नं सत्चिदचित्प्रकृतिविरिञ्चरुद्रा वा तदन्यतममेव वा ब्रह्म ईशश्रुत्यादिप्रापकवशादुपेयमित्यतः प्राप्ते - **अदृश्यत्वादिगुणक** इत्यादियोगत्रयम् । तदर्थः - **दृश्यत्वाद्युज्झितः सदा** इति। पूर्ववदनुषङ्गः। स प्राक् "अदृश्येनात्म्य" (तै.उ.२-७)इत्यादिनोक्तः एको विष्णुरेव दृश्यत्वाद्युज्झितः। न तु चित्प्रकृत्यादिरनेकः। कुतः? **लिङ्गैः सर्वैर्युतो हि**। "अथ परा यया तदक्षरमधिगम्यते" (मुं.उ.१-१-५)इति, " यः सर्वज्ञः" (मुं.उ.१-१-९)इति, "रुग्मवर्णं कर्तारमीशं" (मुं.उ.३-१-३)इति परविद्याविषयत्व-सार्वज्ञ- रूपान्तरामिश्ररुग्मवर्णाद्येतत्प्रकरणस्थसर्वलिङ्गयुतत्वादित्यर्थः। एतैर्लिङ्गैर्युतो दृश्यत्वाद्युज्झितो विष्णुरेव। तेषां लिङ्गानां भाष्योक्तश्रुत्यादिभिः विष्णौ प्रसिद्धेरिति वाऽर्थः।

अक्षरशब्दस्य नपुंसकलिङ्गत्वेन दृश्यत्वाद्युज्झितमिति वाच्ये पुल्लिङ्गोक्तिः विष्णुपदान्वयाय वा, "परतः परः" इत्युक्तपरतस्त्वपेक्षया वा। तेन "यत्तदद्रेश्यं" (तै.उ.२-७) इत्यादिना दृश्यत्वादिहीनं "अक्षरात्सम्भवति" इति कारणत्वेनोक्तं "अक्षरात्परतः परः" (मुं.उ.२-१-१) इति परत्वेनोक्तं च वस्त्वेकमिति दर्शितत्वात् परावध्यक्षरमन्यदिति सूचनान्न परावधित्वं दृश्यत्वाद्युज्झिताक्षरस्य विष्णुत्वे बाधकम् । अक्षरात्सम्भवति इति पञ्चम्यपि कारणत्वमात्रे न तूपादनत्व इति भावः। अत्र यद्यपि श्रुतौ दृश्यत्वाद्युज्झितत्ववत् "नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनि" (मुं.उ.१-१-६)इति भावरूपगुणान्तरमपि श्रुतम् । सूत्रे च अदृश्यत्वादिगुणकः इति भावाभावसाधारण्येन गुणपरम् । तथापि सर्वगतत्वसुसूक्ष्मत्वादेः सर्वत्रप्रसिद्धेत्यादौ हरौ सिद्धत्वात् इहादृश्यत्वादिसमन्वय एव तात्पर्यात् **दृश्यत्वाद्युज्झितः** इत्युक्तम्। अनुभाष्ये च अदृश्यत्वाद्यभावाख्यं इति। यद्वा भावधर्मणां बहुत्वादभावधर्मणां अल्पत्वात् भावोपलक्षकतया **दृश्यत्वाद्युज्झितः** इत्युक्तम् । यद्वा सर्वगः इति भावान्तरोपलक्षकतया इहानुवर्त्य सर्वज्ञः सर्वगतः सन् **दृश्यत्वाद्युज्झितः** इति व्याख्येयम् । अत्र दृश्यत्वाद्युज्झितत्वं नाम साकल्येन चक्षुर्मनः प्रभृत्यगोचरत्वमपरिच्छेद्यवैभवत्वं इति यावत् । तत् न कदाचित् हीयत इति भावेनोक्तं **सदा दृश्यत्वाद्युज्झितः** इति। तेन श्रुतौ नित्यपदं अदृश्यत्वादेरपि विशेषणमिति दर्शितम् । यद्वा सदेति अत्ता नियन्ता चेत्यत्राप्यन्वेति। तथा च ईश्वरक्रियापि नित्येत्युक्तं भवति। विवृतं चानुव्याख्याने क्रियानित्यत्वम्।।६।।

ननु दृश्यत्वाद्युज्झितः अक्षरात्परतः परो विष्णुरित्ययुक्तम् । तद्धर्मस्य सर्वगतत्वस्य छान्दोग्ये पञ्चमे ''यस्त्वेतं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते'' इति वैश्वानरस्य अभितो विगतं मानं मर्यादा यस्येत्यभिविमानपदेन प्रतीतेः वैश्वानरशब्दस्य चाग्नौ रूढत्वात्, ''वैश्वानरे तद्धुतं'' इति, ''हृदयं गार्हपत्ये'' इत्यादिनोक्तहोमाधारत्व-गार्हपत्याद्यङ्गत्व-पाचकत्वाद्यनेकलिङ्गानां भावेन चाग्न्यर्थत्वात् । विष्ण्वर्थत्वे च वैश्वानरादिशब्दानामग्न्यादौ प्रयोगस्य सूक्तविद्याव्यवस्था-याश्चायोगात् प्राचीनसर्वगतोऽप्यग्निदेवता भूतं वा । न च कालाकाशादेरिव अग्नाविष्णोरप्यस्तु सर्वगतत्वमिति शङ्क्यम्। बाधकाभावेन पूर्वत्र सर्वगतमित्यनेन अत्राभिविमानपदेन चानन्यायत्तनिरतिशयस्यैव सर्वगतत्वस्य प्रतीतेः। तस्य च द्वयोरयोगादित्यतः प्राप्तं - **वैश्वानरः साधारणशब्दविशेषात्** । इत्यादिसूत्रनवकम् । तदर्थः। **विश्वजीवान्तरत्वाद्यैर्लिङ्गैः सर्वैर्युतः स हि** इति। एको विष्णुरेवेत्यन्वेति। स प्राक् सर्वगतत्वादिनोक्तः एको विष्णुरेव । यौगिकवैश्वानरशब्दितविश्वजीवान्तरत्वाद्यैः होमाधारत्वगार्हपत्याद्यङ्गत्वाद्यैः लिङ्गैर्युतो वैश्वानराग्न्यादिशब्दैस्तत्सूक्तैः तद्विद्याभिश्च प्रतिपाद्य इति यावत् । नत्वग्न्यादिदेवता भूतं चेत्यर्थः।

कुतः ? **लिङ्गैः सर्वैर्युतो** स हि इत्यावृत्तिः । लिङ्गशब्दो अत्र प्रमापकमात्रपरः। आत्मश्रुतिप्रकरणश्रुतिस्मृतिसमाख्याभिः युतत्वादित्यर्थः। ''वैश्वानरमात्मानं'' इत्यात्मश्रुतेः। ''को न आत्मा किं ब्रह्म'' इत्याद्युपक्रमेण आस्य ब्रह्मप्रकरणत्वात्, ''शीर्ष्णो द्यौः समवर्तत'' इत्यादिना पुरुषसूक्तोक्तस्य ''मूर्धैव सुतेजाः'' इत्यादिना वैश्वानरविद्यायामाम्नानेनार्थतः पुरुष-सूक्तोक्तसमाख्यानात्, ''अहं वैश्वानरो भूत्वा'' (भ.गी.१५-१४) इति गीतासमाख्यानाच्चेति च।

अग्न्यादिलिङ्गानां विष्णावुपासनार्थत्वेन सावकाशत्वस्य विश्वजीवान्तरत्वोक्त्यैव सर्वशब्द-मुख्यार्थविष्णुसम्बन्धादन्यत्र हानाद्यर्थशब्दप्रयोगस्य तत्तत्सूक्तविद्याप्रतिपाद्यस्य विष्णोः उपासककर्तृकानुस्मृत्यभिव्यक्तिप्राप्त्यधिष्ठानानां अग्न्यादीनां व्यवस्थया ''पृथग्रूपाणि विष्णोस्तु'' इत्यादि ऋग्भाष्योक्तदिशा नामरूपभेदव्यवस्थया च सूक्तादिव्यवस्थायाश्चोपपत्तेरिति भावः।

स्थानैक्यैन तद्गतानां ऐक्योक्तिवत् वक्ष्यमाणदिशा हृदयाकाशस्याङ्गुष्ठमात्रोक्तिवच्च प्रादेशमात्र-त्वस्याप्युपपत्तेरिति भावः। हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः । इति षष्ठे बृहद्भाष्योक्तेः।

अत्र ''श्रुतिर्लिङ्गादिका परा'' इति अनुभाष्ये वैश्वानरशब्दस्य लोकतोऽग्नौ रूढिमाश्रित्य नामत्वोक्तावपि इह विष्णौ यौगिकत्वाल्लिङ्गतोक्तिरविरुद्धा।

पादार्थमुपसंहरति - **विश्वजीवे**ति। प्रसिद्धैरन्यवस्तुषु इत्यस्ति । ''सर्वेषु भूतेष्वेतमेव ब्रह्म'' इत्युक्तविश्वजीवान्तरस्थत्वाद्यैः अन्यवस्तुषु प्रसिद्धैः सर्वलिङ्गैर्युतः स एको विष्णुरेव हि । नान्यत्र प्रसिद्ध इत्यर्थः।। ७ ।।

**।। इति श्रीब्रह्मसूत्राणुभाष्यविवृतौ तत्त्वमञ्जर्यां राघवेन्द्रयतिकृतायां प्रथमाध्यायस्य द्वितीयः पादः।।**

**आनन्दमाला** – ओं लिङ्गात्मकानां शब्दानामन्यवस्तुषु प्रसिद्धानां विष्णौ प्रवृत्तिं वक्त्यस्मिन् पादे "ब्रह्म ततमम्" (ऐत.आ.२-४-३) इति विष्णुः सर्वगतः प्रागुक्तः। "आदित्यो रसः" (ऐत.आ.३-२-३) इत्यादावन्यः प्रतीयते। अत आह – "सर्वत्र प्रसिद्धोपदेशात्" (१-२-१) इत्यधिकरणम् । **सर्वग** इति। विष्णुरेवात्रापि सर्वग उच्यते । तत्प्रसिद्धशब्दोपदेशात् ।

"स योऽतः" (ऐत.आ.३-२-४) इत्यादिना विवक्षितगुणानपि स एव हि सर्वान् गतः। एवं चक्षुर्मयत्वादीनि लिङ्गान्यपि सर्वाणि प्राप्तः। न चायं जीव इति वाच्यम् । एक एव जीवः सर्वाणि शरीराणि गत इति वक्तुमयुक्तेः। नापि ब्रह्मैक्यात् स उच्यते। तथापि तदयुक्तेः। न च तदैक्यं वाक्यार्थ इति निरूपणीयम् । कर्मकर्त्रादिभिः सर्वकारकैः सहैवायमिह व्यपदेशं गत इति भेदस्यैव वाक्यार्थत्वसिद्धेः । न ह्येकस्यैव वस्तुनः कर्तृकर्मभाव औत्सर्गिकः प्रसिद्धः। तथैव सम्प्रदानत्वं च। अपि च कोऽयमभेदो नाम? किं जीवस्य ब्रह्मभावः, उत ब्रह्मणस्तद्भाव इति वक्तव्यम् । न तावदाद्य उपपद्यते। सर्वजीवाख्यभूतेषु गतः पर एव ब्रह्मेति वेदविद्वचनात्। नाप्यन्त्यः। न हि सर्वभूतहृदयगतस्य तत्तन्नियन्तुः स्मर्यमाणस्य तद्भावः सम्भवति। अनुभवविरोधात्। तस्मादज्ञानविजृम्भितमेव जीवब्रह्मैक्यमतम् ।

नन्वहो खलु युष्मदीश्वरो जीवशरीरेऽपि तिष्ठति, आहोस्विन्नेति वाच्यम् । आद्ये जीववदीश्वरस्यापि दुःखभोगप्राप्तिः। अन्त्ये सर्वगतत्वप्रतिज्ञाहानिरिति सम एव पर्यनुयोग इति। तच्चाज्ञानवासनाविजृम्भितम्। न हीश्वरस्य स्वातन्त्र्यात् पारतन्त्र्यकृतं दुःखित्वं क्वचित् प्राप्यते। नरकवासिनोऽपि हीश्वरस्य दुःखित्वं श्रुतिभिर्निवारितम् । यस्य प्रसादभाजनेषु भूतेषु परतन्त्रेष्वपि यदिदमवश्यं निवार्यते तस्मिन्नेव कथं तदिदमाशङ्क्येत? कैमुत्यन्यायनिवारितत्वात् । तदेतदाह – सर्वसामर्थ्यं गत इति योजनया तद्भाष्येणैव। तस्माद् विष्णुरेव सर्वदेशकालवस्तुषु स्थितत्वेन तत्तत्प्रतिपादकसर्ववाक्यगतः परमवाच्यार्थ इति निरवद्यम् ।।१।।

"अत्ता चराचरग्रहणात्" (१-२-६) इत्यधिकरणं **अत्ता** इति । "सर्वं वा अत्ति" (बृह.३-२-५)इति नादितिरत्त्री निगद्यते। किन्तु? चराचरादनवचनाद् विष्णुरेवात्ता युक्तः । न ह्यदितेः सर्वजगत्संहारः श्रुत्यन्तरसम्मतः। अपि च "विसर्गगत्यत्त्यभिजल्पशिल्पाः" (भाग.५-११-१०) इत्यादौ पुत्रोत्पादनरूपस्य वीर्यविसर्गस्यापि भोगमात्रत्वादत्तिशब्दवाच्यत्वं दृष्टम्। अतोऽत्तृशब्देनैव संवत्सराबादिस्रष्टा च सुवचः। एवं चास्य नारायणप्रकरणत्वं चावेदितं स्यात् ।।२।।

"गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" (१-२-११)इत्यधिकरणमप्यनेनैव व्याख्याति। "त्रेधा व विहितं वा इदमन्नम् । अशनं पानं खाद" इति श्रुतेरशनपानयोरुभयोरपि अन्नशब्दवाच्यत्वादशितृपात्रोश्चात्तृशब्दवाच्यत्वं सिद्ध्यति। एवञ्चास्मिन्नधिकरणे सोऽत्तृशब्दः पातारं

ब्रूते। हृदयगुहायां निहितावृतं पिबन्तावात्मान्तरात्मनामानौ विष्णोः स्वरूपांशावेव न तु जीवपरौ। तयोर्विष्णुत्वदर्शनात् । एवञ्चैको विष्णुरेव द्विरूपः पातेत्यर्थः। सोमस्य पाता पशोरत्तेति यज्ञभुक्त्वाभिप्रायेण यजमानसेतुत्वं चात्र विवक्षितमिति "यः सेतुरीजानानाम्" (कठ.१-३-२)इति विशेषणमपि भाषितमिति भावः ।।३।।

"अन्तर उपपत्तेः" (१-२-१३) इत्येतदधिकरणं चान्तस्थाधिकरणभाष्येणैव व्याख्यातं भवति **अन्तरः** इति । तथाहि यः सूर्यसोमविद्युत्सु अक्षिण च दृश्यमानः पुरुषः सोऽन्तरोऽपि विष्णुरेव। तल्लिंगशब्दोपपत्तेः। न च "सोऽहम्" (छन्दोग ४-११.१३-१) इत्यग्निवाक्यविरोधः। तदन्तरत्वात्। चक्षुराख्यनिजस्थानस्यासंगत्वं नाम विशेषमापादयतीत्यप्यन्तर उच्यते। वामभामनेतृत्वं च देवादिप्रणेतृत्वेऽन्तर्भूतम् । सुखविशिष्टत्वमत्रापि ह्यन्ता रमत इति रेफेणाभिप्रेयते। श्रुतोपनिषत्कगतिः जनार्दनं यान्ति इति प्रकटं वक्ष्यते। न च सूर्यादिनियमनायाग्निरलम् । स्वयमेव नियम्यत्वात् ।।४।।

नन्वीश्वरोऽपि सर्वान्तरो नेदं नियच्छति। रमणरहणप्रसङ्गादित्यत आह - "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" (१-२-१८) इत्यधिकरणम् **नियन्ता च** इति। न केवलमीश्वरः सर्वस्यान्तर इत्येव मन्तव्यः । किन्त्वस्य नियन्ता च भवति। अन्तर्यामीति यावत् । कुतः? अधिदैवादिषु प्रकरणेषु प्रतिपदार्थम् "अन्तरो यमयति" (बृह ५-७-३.२३) इति नियमनधर्मस्यापि व्यक्तं व्यपदेशात् । न च सोऽन्तर्यामी न विष्णुरिति निरूपणीयम् । अविदितत्वादितद्धर्मव्यपदेशात् । न च तावता रतिविहतिस्तस्यापद्येत। विचित्रसन्ततानन्तशक्तित्वात् । न च स्मार्तं प्रधानं शारीरो वान्तर्यामीति वक्तव्यम् । तदीयधर्मानुक्तेरन्यधर्मोक्तेश्च। तस्माद् विष्णुरेव सर्वस्य प्रकृत्यादेरन्तर्यामी श्रुत एष्टव्यः ।।५।।

एवं तावत् सर्वगतत्वाद्या भावधर्माः परस्य गुणाः साधिताः। अत एवास्य नाभाव धर्मा गुणा युज्येरन्नित्यत आह - "अदृश्यत्वादिगुणको धर्मोक्तेः" (१-२-२१) इत्यधिकरणम्। **दृश्यत्वाद्युज्झितः** इति। दृश्यत्वं नाम परिच्छिन्नत्वम् । आदिशब्दात् परतन्त्रत्वम् । ताभ्यामुज्झितः। प्राकृतेन्द्रियगोचरत्वं तद्वत्त्वं वा दृश्यत्वादि। अतस्तदुज्झित इति वाऽर्थः। एवञ्च तत्तद्दोषाणामभावाश्च। गुणा एवास्येत्यभिप्रायः।

न चात्र तादृग्गुणकः प्रकृतिर्विरिञ्चादिर्वा भवत्विति मन्तव्यम् । परविद्याविषयत्वादि-विष्णुधर्मोक्तेः। अत्र भगवतः प्राकृतेन्द्रियसम्बन्धस्य पारतन्त्र्यस्य च निषेधात् स्वत एव नित्यमुक्तत्वमवगम्यते। तच्चास्य तादृक्सर्वज्ञत्वानुमापकम् । व्याप्यत्वात्। एवञ्चास्य सर्वज्ञत्वादिना जडादजडाच्च प्रकृतेर्विशेषणम्, जन्मादिमतो विरिञ्चाद् रुद्राच्च भेदव्यपदेशश्चार्थतो व्याख्यातौ स्याताम् । अथ वा प्राकृतेन्द्रियसम्बन्धः परिच्छिन्नत्वं च दृश्यत्वम् । आदिशब्दादसर्वज्ञत्वाद्या

जन्माद्याश्च दोषा गृह्यन्ते । ताभ्यां तैश्चोज्झित इत्यदृश्यत्वादिगुणको विशेषेण भेदव्यपदेशौ च मुखत एव भाषिता भवेयुः। उभयथा च विष्णुरेवादृश्यत्वापाणिपादत्वादिगुणक इत्यर्थः।

नन्वत्तिनियत्यादिक्रियायाः कादाचित्कत्वादत्तृत्वादिकमपि तात्कालिकमेवेति नित्यं नास्ति। अदृश्यत्वं च केनचिद् दर्शनकाले विनश्यतीत्यत आह - **सदा** इति। क्रियादिधर्माणामपि शक्तिरूपेण नित्यत्वादत्तृत्वादिकमपि सदाकालं विद्यते। न केवलं तात्कालिकम् । अदृश्यत्वशक्तेरप्यनपायात् । ''ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः'' (पैङ्गिश्रुतिः) इत्यादिश्रुतेश्च ।।६।।

''वैश्वानरः साधारणशब्दविशेषात्'' (१-२-२४) इत्यधिकरणव्याख्यानमुखेन पादार्थं निगमयति - **विश्वजीवान्तरत्वाद्यैर्लिंगैः सर्वैर्युतः स हि** इति। ''अभिविमानमात्मानं वैश्वानरमुपास्ते''(छन्दो.५-१८-१) इत्यत्र वैश्वानराख्यः किं हुतवह उताहो हरिरिति सन्दिह्यते। ''अयमग्निर्वैश्वानरः'' (बृह.७-९-१) इत्यादिश्रुतेः। पाचकत्वादिलिङ्गाच्चाग्निरिति पूर्वपक्षः। नायं वह्निः, विष्णुरेवेति स्वपक्षः। अत्र युक्तीर्वक्ति विश्वजीवादिभाष्येण। विष्णुरेव हि विश्वजीवान्तरत्वाद्यैर्लिङ्गैर्युतः। विश्वजीवान्तरत्वं हि वैश्वानरशब्दप्रवृत्तिहेतुः। अभितो विगतमानत्वं आदानादिकर्तृत्वं, पाचकत्वं, हुतस्थानत्वं, पूर्णत्वं, पुरुषविधत्वं चेत्यादीनि तत्प्रकरणपठितान्याद्य-शब्दपरिगृहीतलिङ्गानि। तैरपि सर्वैर्युतः।

अथवा, विश्वजीवान्तरत्वयुतो वैश्वानरो विष्णुरेवेति विस्पष्टं प्रतिज्ञाय युक्त्यपेक्षायामाद्य-शब्देनादातृत्वादिसर्वलिङ्गैर्युत इति ता वक्ति। तस्मादुभयथाऽपि विष्णुरेव वैश्वानरः। निगमनावस्थायां सर्वगतत्वात्तृत्वाद्यानि तद्वाक्योक्तानि। तत्तदधिकरणेषु मुखतोऽनुक्तानामपि संग्रहार्थं सर्वैः इत्युक्तम् । उक्तं च महोपनिषदि ''सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूपः'' इति। तस्मादन्यत्र प्रसिद्धैर्नामात्मकैर्लिंगात्मकैश्च शब्दैर्विष्णुरेव मुख्यत उच्यत इति सिद्धम् ।।७।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां प्रथमाध्यायस्य द्वितीयः पादः ।।**

**नृसिंहतीर्थ** – एवं प्रथमपादीयाधिकरणानां पृथक् तात्पर्यमुक्त्वा लोकतो अन्यत्र प्रसिद्धलिंगात्मकशब्दसमन्वयार्थकद्वितीयपादांतर्गतस्य सर्वगतत्वलिंगसमन्वयार्थकस्य सर्वत्र प्रसिद्धोपदेशादित्याद्याधिकरणस्य तात्पर्यमाह **सर्वग** इति। सर्वगत इत्यर्थः। सर्वातृत्वलिंग-समन्वयार्थस्य अत्ता चराचरग्रहणादिति द्वितीयाधिकरणस्य तात्पर्यं **अत्ता** इति । भक्षक इत्यर्थः। सर्वस्येति शेषः। अनेनैव अत्तृत्वापरपर्यायिकर्मफलपातृत्वलिंगसमन्वयार्थस्य गुहां प्रविष्टावात्मानौ हि तद्दर्शनादिति तृतीयाधिकरणस्य तात्पर्यमुक्तं भवति।

**अन्तरत्वान्तर्यामित्वलिंगसमन्वयार्थयोः** अन्तर उपपत्तेः अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादिति चतुर्थपंचमाधिकरणयोः तात्पर्यम् **नियन्ता** इति। नियामक इत्यर्थः । चशब्दः पूर्वोत्तरसमुच्चयार्थः। अदृश्यत्वादिलिंगसमन्वयार्थस्य अदृश्यत्वादिगुणको धर्मोक्तेरिति षष्टाधिकरणस्य तात्पर्यम् **दृश्यत्वाद्युज्झितः सदा** इति। सदेति पूर्वत्रापि सम्बध्यते। अत्राधिकरणे दृश्यभिन्नत्वमेवा- दृश्यत्वमिति सुधाकाराणां पक्षः। दृश्यत्वाद्युज्झित इति दृश्यत्वाद्यत्यन्ताभाव एवात्र प्रतीयते। तथापि दृश्यान्योन्याभावे सिद्धे एव तयोः समनियतत्वात् । अत एव तात्पर्यपरतया इदं वाक्यं व्याख्येयम्। सदेत्यत्यन्ताभावस्य नित्यत्वं सूचयति।

लिंगात्मकपादेऽपि पाचकत्वाद्यनेकलिंगसमन्वयसिद्ध्यर्थं एकस्य वैश्वानरनाम्नः समन्वयार्थस्य वैश्वानरस्साधारणशब्दविशेषादिति सप्तमाधिकरणस्य तात्पर्यम् **विश्वजीव** इति। अत्र वैश्वानर इति वक्तव्ये विश्वजीवान्तरत्वेति लिंगस्योक्तिः तस्य यौगिकत्वाभिप्रायेण विश्वनरसम्बन्धित्वाद्वैश्वानरः। सम्बन्धित्वं च तदन्तरत्वमेवेति । आद्यशब्देन पाचकत्वाद्यनेकलिंगसंग्रहः। तत्तु सूत्रोपात्तलिंगस्य स्वसमानन्यायाक्रान्तलिंगान्तरोपलक्षकत्वाभिप्रायेण सर्वैरित्युक्तम् । स इत्यनेन विष्णुपरामर्शकेन विष्णुरेवेति। सर्वत्रानुवर्त्तत इति सूचयति।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने प्रथमाध्यायस्य द्वितीयः पादः।**

**श्रीनिवासतीर्थीया** – सर्वत्र प्रसिद्धोपदेशादित्यधिकरणार्थं संगृह्णाति **सर्वग** इति। सर्वत्रस्थ इत्यर्थः ।।१।। अत्ता चराचरग्रहणादित्यधिकरणार्थः **अत्ता** इति। चराचरसंहर्तेत्यर्थः। गुहां प्रविष्टावात्मानौ हि तद्दर्शनादित्यस्यार्थः **अत्ता** इति। शुभकर्मफलभोक्ता चेत्यर्थः ।।३।। अन्तर उपपत्तेरित्यधिकरणार्थं तात्पर्यतः संगृह्णाति **नियन्ता च** इति। पृथिव्यादिदेवतानियन्ता इत्यर्थः ।।४।। अन्तर्याम्यधिदैवादित्यधिकरणार्थं चानेन संगृह्णाति **नियन्ता च** इति। पृथिव्यादिदेवानां नियन्तेत्यर्थः।।५।। अदृश्यत्वादिगुणक इत्यधिकरणार्थः **दृश्यत्वाद्युज्झितः सदा** इति। दृश्यत्वादिहीनः। अदृश्यत्वादिगुणक इत्यर्थः। साकल्येन चक्षुर्मन आद्यगोचरत्वं अपरिच्छेद्यवैभवत्वं च न काचिद्धीयते इति भावेन सदा दृश्यत्वाद्युज्झित इत्युक्तम्। आदिपदेन यत्तदद्रेश्यमगोत्रमित्युक्तो गोत्राद्यभाव उच्यते।

वैश्वानरः साधारणशब्दविशेषात् इत्याधिकरणार्थं अनुवदन्पादार्थं उपसंहरति **विश्वजीवान्तर- त्वाद्यैः** इति। सर्वनरनियमनादियोगवता वैश्वानरशब्देनाद्यैस्तत्तत्प्रकरणगतैः सर्वैर्लिंगैर्नामभिर्युतः स विष्णुरेवेकः। कुतः ? सर्वैर्लिंगैः ज्ञापकप्रमाणैर्युतो हि यस्मात्सर्वलिंगात्मकशब्दवाच्यः स एवेत्यर्थः।

**इत्यणुभाष्यविवरणे प्रथमाध्यायस्य द्वितीयः पादः**

छलारी –

चतुर्भुजं शङ्खचक्रविद्यापुस्कधारिणम् ।
मुक्ताकल्पज्ञानदुहं हयग्रीवमहं भजे ।।

लोकतोऽन्यत्र प्रसिद्धानां लिङ्गात्मकानां शब्दानां विष्णौ समन्वयं प्रदर्शयत्यस्मिन् पादे भगवानाचार्यवर्यः ।

**ओं सर्वत्र प्रसिद्धोपदेशात् ओं**

सर्वत्र ''एतमस्यां एतं दिवि'' इत्यादिना पृथिव्यादिषु उच्यमानो विष्णुरेव। कुतः? प्रसिद्धस्य – विष्णावेव श्रुत्यादौ प्रसिद्धस्य ब्रह्मशब्दस्य, ''एतमेव ब्रह्मेत्याचक्षते'' इति सर्वगते उपदेशादिति सूत्रार्थः ।

अत्र ''एतं ह्येव बह्वृचाः महत्युक्थे मीमांसान्ते, एतमग्नावध्वर्यवः एतं महाव्रते छन्दोगाः एतमस्यां एतं दिवि एतं वायौ एतमाकाशे, एतमप्सु एतमोषधीषु, एतं वनस्पतिषु, एतं चन्द्रमसि, एतं नक्षत्रेषु, एतं सर्वेषु भूतेषु, एतमेव ब्रह्मेत्याचक्षते'' इत्यैतरेयश्रुत्युक्तं सर्वगतत्वमादित्यस्यैव भवेत् । ''तस्यैतस्यासावादित्यो रस एतमेव ब्रह्मेत्याचक्षत'' (ऐ.आ.३-२-३)इति, '' यश्चासावादित्यो रसस्तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति'' इत्यादि बह्वादित्यश्रुतेः। एतमस्यामिति क्षित्यादिषूक्त्वा आदित्ये अनुक्तिलिङ्गाच्चेति प्राप्ते –

विष्णुरेव सर्वगतः। ''एतमेव ब्रह्मेत्याचक्षत'' (ऐ.आ.३-२३)इति सर्वगते ब्रह्मशब्दश्रवणात् । ब्रह्मशब्दस्य मुख्यतः श्रुत्यादौ तस्मिन्नेव प्रसिद्धेः। न च बह्वादित्यश्रुतिविरोधः। ''सर्वनामाभिधेयश्च सर्ववेदोदितश्च सः'' इति स्मृत्या तस्यैव आदित्यनामवत्त्वोक्तेः। न च आदित्ये अनुक्तत्वलिङ्गविरोधः। ''यश्चासावादित्ये'' (तै.उ.२-८)इति पूर्ववाक्ये आदित्यस्थत्वस्योक्तत्वेन अनुक्तत्वस्यासिद्धत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **सर्वगः** इति। सर्वगत इत्यर्थः। विष्णुरेवेत्यनुवर्तते।।१।।

**ओं अत्ता चराचरग्रहणात् ओं**

अत्ता सर्वसंहर्ता विष्णुरेव। कुतः ? ''सर्वं वा अत्ति'' (बृ.उ.३-२-५) इति चराचरस्य सर्वस्याद्यतया ग्रहणादिति सूत्रार्थः।

अत्र ''सः यद्यदेवासृजत तत्तदत्तुमध्रियत। सर्वं वा अत्तीति तददितेरदितित्वम्'' (बृ.उ.३-२-५) इति श्रुत्युक्तात्तृत्वं देवमातुरेव भवेत् । ''तददितेः'' इति अदितिश्रुतेः। न च स इति पुल्लिङ्गानुपपत्तिः। पुंशक्तियुक्तत्वेन ''कूटस्थोऽक्षर उच्यते'' (भ.गी.१५-१६) इत्यादिवदुपपत्तेरिति प्राप्ते –

विष्णोरेव सर्वात्तृत्वम् । "सर्वं वा अत्ति" इति चराचरस्य अद्यतया ग्रहणात् । न च अदितिश्रुतिविरोधः। "यो देवानां नामधा" (ऋ.सं.७-९९-२)इति श्रुत्या अदितिश्रुतेः विष्णौ सावकाशत्वात् । न च विष्णोः सर्वात्तृत्वे प्रमाणाभावः। स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु। वासुदेवः परः पुंसां इतरेल्पस्य वा न वा। (स्कं.पु)इति वचनादिति सिद्धान्तः कृतः ।।२।।

**ओं गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ओं**

श्रुत्युक्तौ ऋतं पिबन्तौ आत्मानावेव - आत्मान्तरात्माख्यरूपविशेषावेव। कुतः? गुहां प्रविष्टौ। हेतुगर्भमिदम्। गुहाप्रविष्टत्वलिङ्गश्रवणात् । हि शब्देन तस्य लिङ्गस्य "यो वेद निहितं गुहायाम्" (तै.उ.२-१)इत्यादौ प्रसिद्धिमाह। रूपद्वयस्य गुहास्थत्वं कुतः इत्यत उक्तं तद्दर्शनादिति। तस्य गुहास्थत्वस्य "घर्मा समन्तात्त्रिवृतं व्यापतुः" (ऋ.सं.१०-११४-१)इत्यादिश्रुत्युक्तेरिति सूत्रार्थः।

अत्र "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे" (क.उ.१-३-१) इति वाक्योक्तकर्मफलभोक्तारौ जीवपरावेव । न त्वेकः परमेश्वरः। पिबन्ताविति द्विवचनश्रुतेः। एकस्मिन् द्विवचनायोगादिति प्राप्ते -

अस्मिन् वाक्ये कर्मफलभोक्तृत्वेन प्रतीयमानो विष्णुरेव। गुहाप्रविष्टत्वलिङ्गात् । "यो वेद निहितं गुहायाम्" (तै.उ.२-१)इति गुहानिहितत्वस्य तस्मिन्नेव प्रसिद्धेः। न च द्विवचनश्रुतिविरोधः। रूपद्वयाभिप्रायेण सावकाशत्वात् । न चात्र प्रमाणाभावः। आत्मान्तरात्मेति हरिः एक एव द्विधा स्थितः। निविष्टो हृदये नित्यं रसं पिबति कर्मजम्। (बृहत्संहिता)इति स्मृतेः इति सिद्धान्तः कृतः।।

तदेतदधिकरणद्वयतात्पर्यमाह - **अत्ता** इति। भक्षक इत्यर्थः। अद भक्षणे इति धातुव्याख्यानम्। सर्वस्येति शेषः। द्वितीयपक्षे अत्तेत्यस्य सः सर्वसुकर्मफलभोक्तेत्यर्थः ।।३ ।।

**ओं अन्तर उपपत्तेः ओं**

अन्तरः चक्षुरन्तस्थो विष्णुरेव। अमृतत्वादिलिङ्गानां ब्रह्मशब्दस्य च तस्मिन्नेव इति सूत्रार्थः।

अत्र "य एषोन्तरक्षिणि पुरुषो दृश्यते। एष आत्मेति होवाच । एतदमृतमभयमेतद् ब्रह्म" (छा.उ.४-१५-१)इति वाक्योक्तो अग्निरेवाक्षिस्थो भवेत् । "अथ हाग्नयस्समूदिरे गार्हपत्योऽनुशशास" (छा.उ.४-१०-४)इत्यादिबह्वग्निश्रुतिसद्भावादिति प्राप्ते -

विष्णुरेवाक्षिस्थः। एतदमृतमभयमिति अमृतत्वादिलिङ्गानां ब्रह्मशब्दस्य च तस्मिन्नेवोपपत्तेः। न च अग्निश्रुतिविरोधः। उपक्रमे "प्राणो ब्रह्म कं खं ब्रह्म" (छा.उ.४-१०-५) इत्युक्तेः। अस्य प्रकरणस्य वैष्णवत्वेन श्रुतेः तद्विषयत्वात् इति सिद्धान्तः कृतः ।।४।।

## ओं अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ओं

अधिदैवादिपदेन तत्तत्प्रकरणं लक्ष्यते। अन्तर्यामी विष्णुरेव। कुतः? अधिदैवाधिभूतादिप्रकरणेषु पृथिव्याद्यविदितत्वादितद्धर्मव्यपदेशादिति सूत्रार्थः।

अत्र "यः पृथिव्यां तिष्ठन् पृथिव्याः अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिव्या यमयति" (बृ.उ.४-७-३) इति श्रुत्युक्तान्तर्यामित्वं प्रकृतेरेव भवेत् । "यस्य पृथिवी शरीरम्" इत्यदिनान्तर्यामिणः पृथिव्यादिशरीरत्वश्रवणात् । तस्य च प्रकृतावुपपत्तेः। शरीरशब्दस्य स्वरूपे अपि प्रयोगदर्शनात् । प्रकृतेश्च पृथिव्यादितत्वात्मकत्वादिति प्राप्ते -

विष्णुरेवान्तर्यामी। "यं पृथिवी न वेद" इत्यादिना तस्य पृथिव्यादिदेवता अविदितत्वान्तरत्वाख्यतद्धर्मव्यपदेशात् । न च पृथिव्यादिशरीरत्वानुपपत्तिः।शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् । रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत् । इति वचनादिति सिद्धान्तः कृतः।

तदेतदधिकरणद्वयतात्पर्यमाह - **नियन्ता** इति। अक्षिस्थत्वेन नियामक इत्यर्थः। द्वितीयपक्षे सर्वान्तर्यामीत्यर्थः ।।५।।

## ओं अदृश्यत्वादिगुणको धर्मोक्तेः ओं

अदृश्यत्वादिगुणको विष्णुरेव। कुतः? परविद्याविषयत्वादितद्धर्मोक्तेः इति सूत्रार्थः।

अत्र "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः। यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। तथा सतः पुरुषात् केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्" इत्याथर्वण(१-१-६,७) श्रुत्युक्तादृश्यत्वादिगुणको न विष्णुः। किन्तु जडप्रकृतिः। "अक्षरात्सम्भवतीह विश्वम्" (आ.उ.१-१-७) इति अदृश्यत्वादिगुणके अक्षरशब्दस्य श्रवणात् । तस्य च विष्णाववकाशशून्यत्वात् । यतोऽस्मादप्यक्षरात् उत्तरवाक्ये "अक्षरात्परतः परः" (आ.उ.२-१-२)इति परः प्रतीयते। न हि विष्णोरपि परोऽस्ति। अतो न विष्णुरदृश्यत्वादिगुणकः इति प्राप्ते-

अदृश्यत्वादिगुणको विष्णुरेव। "अथ परा यया तदक्षरमधिगम्यते" (आ.उ.१-१-५) इत्यदृश्यत्वादिगुणकस्य परविद्याविषयत्वजगज्जन्मादिकर्तृत्वाद्यसाधारणधर्मोक्तेः। "न चाक्षरात्परतः परः" इत्युत्तरवाक्यविरोधः। अधमाक्षरादिभेदेन अक्षरशब्दवाच्यानां त्रित्वात् । एतदक्षरशब्दवाच्यस्यैव विष्णोः परतो मध्यमाक्षरात् परत्वसम्भवेनाविरोधात् । न चात्र प्रमाणाभावः।

अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका। श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया।।

तमक्षरं परं प्राहुः परः परमक्षरम् । हरिमेवाखिलगुणं अक्षरत्रयमीरितम् ।।

विष्णोरेव सर्वात्तृत्वम् । "सर्वं वा अत्ति" इति चराचरस्य अद्यतया ग्रहणात् । न च अदितिश्रुतिविरोधः। "यो देवानां नामधा" (ऋ.सं.७-९९-२)इति श्रुत्या अदितिश्रुतेः विष्णौ सावकाशत्वात् । न च विष्णोः सर्वात्तृत्वे प्रमाणाभावः। स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु। वासुदेवः परः पुंसां इतरेल्पस्य वा न वा। (स्कं.पु)इति वचनादिति सिद्धान्तः कृतः ।।२।।

**ओं गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ओं**

श्रुत्युक्तौ ऋतं पिबन्तौ आत्मानावेव - आत्मान्तरात्माख्यरूपविशेषावेव। कुतः? गुहां प्रविष्टौ। हेतुगर्भमिदम्। गुहाप्रविष्टत्वलिङ्गश्रवणात् । हि शब्देन तस्य लिङ्गस्य "यो वेद निहितं गुहायाम्" (तै.उ.२-१)इत्यादौ प्रसिद्धिमाह। रूपद्वयस्य गुहास्थत्वं कुतः इत्यत उक्तं तद्दर्शनादिति। तस्य गुहास्थत्वस्य "घर्मा समन्तात्त्रिवृतं व्यापतुः" (ऋ.सं.१०-११४-१)इत्यादिश्रुत्युक्तेरिति सूत्रार्थः।

अत्र "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे" (क.उ.१-३-१) इति वाक्योक्तकर्मफलभोक्तारौ जीवपरावेव । न त्वेकः परमेश्वरः। पिबन्ताविति द्विवचनश्रुतेः। एकस्मिन् द्विवचनायोगादिति प्राप्ते -

अस्मिन् वाक्ये कर्मफलभोक्तृत्वेन प्रतीयमानो विष्णुरेव। गुहाप्रविष्टत्वलिङ्गात् । "यो वेद निहितं गुहायाम्" (तै.उ.२-१)इति गुहानिहितत्वस्य तस्मिन्नेव प्रसिद्धेः। न च द्विवचनश्रुतिविरोधः। रूपद्वयाभिप्रायेण सावकाशत्वात् । न चात्र प्रमाणाभावः। आत्मान्तरात्मेति हरिः एक एव द्विधा स्थितः। निविष्टो हृदये नित्यं रसं पिबति कर्मजम्। (बृहत्संहिता)इति स्मृतेः इति सिद्धान्तः कृतः।।

तदेतदधिकरणद्वयतात्पर्यमाह - **अत्ता** इति। भक्षक इत्यर्थः। अद भक्षणे इति धातुव्याख्यानम् । सर्वस्येति शेषः। द्वितीयपक्षे अत्तेत्यस्य सः सर्वसुकर्मफलभोक्तेत्यर्थः ।।३ ।।

**ओं अन्तर उपपत्तेः ओं**

अन्तरः चक्षुरन्तस्थो विष्णुरेव। अमृतत्वादिलिङ्गानां ब्रह्मशब्दस्य च तस्मिन्नेव इति सूत्रार्थः।

अत्र "य एषोन्तरक्षिणि पुरुषो दृश्यते। एष आत्मेति होवाच । एतदमृतमभयमेतद् ब्रह्म" (छा.उ.४-१५-१)इति वाक्योक्तो अग्निरेवाक्षिस्थो भवेत् । "अथ हाग्नयस्समूदिरे गार्हपत्योऽनुशशास" (छा.उ.४-१०-४)इत्यादिबह्वग्निश्रुतिसद्भावादिति प्राप्ते -

विष्णुरेवाक्षिस्थः। एतदमृतमभयमिति अमृतत्वादिलिङ्गानां ब्रह्मशब्दस्य च तस्मिन्नेवोपपत्तेः। न च अग्निश्रुतिविरोधः। उपक्रमे "प्राणो ब्रह्म कं खं ब्रह्म" (छा.उ.४-१०-५) इत्युक्तेः। अस्य प्रकरणस्य वैष्णवत्वेन श्रुतेः तद्विषयत्वात् इति सिद्धान्तः कृतः ।।४।।

## ओं अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ओं

अधिदैवादिपदेन तत्तत्प्रकरणं लक्ष्यते। अन्तर्यामी विष्णुरेव। कुतः? अधिदैवाधिभूतादिप्रकरणेषु पृथिव्याद्यविदितत्वादितद्धर्मव्यपदेशादिति सूत्रार्थः।

अत्र ''यः पृथिव्यां तिष्ठन् पृथिव्याः अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिव्या यमयति'' (बृ.उ.४-७-३) इति श्रुत्युक्तान्तर्यामित्वं प्रकृतेरेव भवेत् । ''यस्य पृथिवी शरीरम्'' इत्यदिनान्तर्यामिणः पृथिव्यादिशरीरत्वश्रवणात् । तस्य च प्रकृतावुपपत्तेः। शरीरशब्दस्य स्वरूपे अपि प्रयोगदर्शनात् । प्रकृतेश्च पृथिव्यादितत्वात्मकत्वादिति प्राप्ते -

विष्णुरेवान्तर्यामी। ''यं पृथिवी न वेद'' इत्यादिना तस्य पृथिव्यादिदेवता अविदि-तत्वान्तरत्वाख्यतद्धर्मव्यपदेशात् । न च पृथिव्यादिशरीरत्वानुपपत्तिः।शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् । रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत् । इति वचनादिति सिद्धान्तः कृतः।

तदेतदधिकरणद्वयतात्पर्यमाह - **नियन्ता** इति। अक्षिस्थत्वेन नियामक इत्यर्थः। द्वितीयपक्षे सर्वान्तर्यामीत्यर्थः ।।५।।

## ओं अदृश्यत्वादिगुणको धर्मोक्तेः ओं

अदृश्यत्वादिगुणको विष्णुरेव। कुतः? परविद्याविषयत्वादितद्धर्मोक्तेः इति सूत्रार्थः।

अत्र ''यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः। यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। तथा सतः पुरुषात् केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्'' इत्याथर्वण(१-१-६,७) श्रुत्युक्तादृश्यत्वादिगुणको न विष्णुः। किन्तु जडप्रकृतिः। ''अक्षरात्सम्भवतीह विश्वम्'' (आ.उ.१-१-७) इति अदृश्यत्वादिगुणके अक्षरशब्दस्य श्रवणात् । तस्य च विष्णाव-वकाशशून्यत्वात् । यतोऽस्मादप्यक्षरात् उत्तरवाक्ये ''अक्षरात्परतः परः'' (आ.उ.२-१-२)इति परः प्रतीयते। न हि विष्णोरपि परोऽस्ति। अतो न विष्णुरदृश्यत्वादिगुणकः इति प्राप्ते-

अदृश्यत्वादिगुणको विष्णुरेव। ''अथ परा यया तदक्षरमधिगम्यते'' (आ.उ.१-१-५) इत्यदृश्यत्वादिगुणकस्य परविद्याविषयत्वजगज्जन्मादिकर्तृत्वाद्यसाधारणधर्मोक्तेः। ''न चाक्षरात्परतः परः'' इत्युत्तरवाक्यविरोधः। अधमाक्षरादिभेदेन अक्षरशब्दवाच्यानां त्रित्वात् । एतदक्षरशब्द-वाच्यस्यैव विष्णोः परतो मध्यमाक्षरात् परत्वसम्भवेनाविरोधात् । न चात्र प्रमाणाभावः।

अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका। श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया।।

तमक्षरं परं प्राहुः परः परमक्षरम् । हरिमेवाखिलगुणं अक्षरत्रयमीरितम् ।।

विष्णोरेव सर्वात्तृत्वम् । "सर्वं वा अत्ति" इति चराचरस्य अद्यतया ग्रहणात् । न च अदितिश्रुतिविरोधः। "यो देवानां नामधा" (ऋ.सं.७-९९-२)इति श्रुत्या अदितिश्रुतेः विष्णौ सावकाशत्वात् । न च विष्णोः सर्वात्तृत्वे प्रमाणाभावः। स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु। वासुदेवः परः पुंसां इतरेल्पस्य वा न वा। (स्कं.पु)इति वचनादिति सिद्धान्तः कृतः ।।२।।

## ओं गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ओं

श्रुत्युक्तौ ऋतं पिबन्तौ आत्मानावेव - आत्मान्तरात्माख्यरूपविशेषावेव। कुतः? गुहां प्रविष्टौ। हेतुगर्भमिदम्। गुहाप्रविष्टत्वलिङ्गश्रवणात् । हि शब्देन तस्य लिङ्गस्य "यो वेद निहितं गुहायाम्" (तै.उ.२-१)इत्यादौ प्रसिद्धिमाह। रूपद्वयस्य गुहास्थत्वं कुतः इत्यत उक्तं तद्दर्शनादिति। तस्य गुहास्थत्वस्य "घर्मा समन्तात्त्रिवृतं व्यापतुः" (ऋ.सं.१०-११४-१)इत्यादिश्रुत्युक्तेरिति सूत्रार्थः।

अत्र "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे" (क.उ.१-३-१) इति वाक्योक्तकर्मफलभोक्तारौ जीवपरावेव । न त्वेकः परमेश्वरः। पिबन्ताविति द्विवचनश्रुतेः। एकस्मिन् द्विवचनायोगादिति प्राप्ते -

अस्मिन् वाक्ये कर्मफलभोक्तृत्वेन प्रतीयमानो विष्णुरेव। गुहाप्रविष्टत्वलिङ्गात् । "यो वेद निहितं गुहायाम्" (तै.उ.२-१)इति गुहानिहितत्वस्य तस्मिन्नेव प्रसिद्धेः। न च द्विवचनश्रुतिविरोधः। रूपद्वयाभिप्रायेण सावकाशत्वात् । न चात्र प्रमाणाभावः। आत्मान्तरात्मेति हरिः एक एव द्विधा स्थितः। निविष्टो हृदये नित्यं रसं पिबति कर्मजम्। (बृहत्संहिता)इति स्मृतेः इति सिद्धान्तः कृतः।।

तदेतदधिकरणद्वयतात्पर्यमाह - **अत्ता** इति। भक्षक इत्यर्थः। अद भक्षणे इति धातुव्याख्यानम् । सर्वस्येति शेषः। द्वितीयपक्षे अत्तेत्यस्य सः सर्वसुकर्मफलभोक्तेत्यर्थः।।३।।

## ओं अन्तर उपपत्तेः ओं

अन्तरः चक्षुरन्तस्थो विष्णुरेव। अमृतत्वादिलिङ्गानां ब्रह्मशब्दस्य च तस्मिन्नेव इति सूत्रार्थः।

अत्र "य एषोन्तरक्षिणि पुरुषो दृश्यते। एष आत्मेति होवाच । एतदमृतमभयमेतद् ब्रह्म" (छा.उ.४-१५-१)इति वाक्योक्तो अग्निरेवाक्षिस्थो भवेत् । "अथ हाग्नयस्समूदिरे गार्हपत्योऽनुशशास" (छा.उ.४-१०-४)इत्यादिबह्वग्निश्रुतिसद्भावादिति प्राप्ते -

विष्णुरेवाक्षिस्थः। एतदमृतमभयमिति अमृतत्वादिलिङ्गानां ब्रह्मशब्दस्य च तस्मिन्नेवोपपत्तेः। न च अग्निश्रुतिविरोधः। उपक्रमे "प्राणो ब्रह्म कं खं ब्रह्म" (छा.उ.४-१०-५) इत्युक्तेः। अस्य प्रकरणस्य वैष्णवत्वेन श्रुतेः तद्विषयत्वात् इति सिद्धान्तः कृतः।।४।।

## ओं अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ओं

अधिदैवादिपदेन तत्तत्प्रकरणं लक्ष्यते। अन्तर्यामी विष्णुरेव। कुतः? अधिदैवाधिभूतादिप्रकरणेषु पृथिव्याद्यविदितत्वादितद्धर्मव्यपदेशादिति सूत्रार्थः।

अत्र ''यः पृथिव्यां तिष्ठन् पृथिव्याः अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिव्या यमयति'' (बृ.उ.४-७-३) इति श्रुत्युक्तान्तर्यामित्वं प्रकृतेरेव भवेत् । ''यस्य पृथिवी शरीरम्'' इत्यदिनान्तर्यामिणः पृथिव्यादिशरीरत्वश्रवणात् । तस्य च प्रकृतावुपपत्तेः। शरीरशब्दस्य स्वरूपे अपि प्रयोगदर्शनात् । प्रकृतेश्च पृथिव्यादितत्वात्मकत्वादिति प्राप्ते -

विष्णुरेवान्तर्यामी। ''यं पृथिवी न वेद'' इत्यादिना तस्य पृथिव्यादिदेवता अविदि-तत्वान्तरत्वाख्यतद्धर्मव्यपदेशात् । न च पृथिव्यादिशरीरत्वानुपपत्तिः।शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् । रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत् । इति वचनादिति सिद्धान्तः कृतः।

तदेतदधिकरणद्वयतात्पर्यमाह - **नियन्ता** इति। अक्षिस्थत्वेन नियामक इत्यर्थः। द्वितीयपक्षे सर्वान्तर्यामीत्यर्थः ।।५ ।।

## ओं अदृश्यत्वादिगुणको धर्मोक्तेः ओं

अदृश्यत्वादिगुणको विष्णुरेव। कुतः? परविद्याविषयत्वादितद्धर्मोक्तेः इति सूत्रार्थः।

अत्र ''यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः। यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। तथा सतः पुरुषात् केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्'' इत्याथर्वण(१-१-६,७) श्रुत्युक्तादृश्यत्वादिगुणको न विष्णुः। किन्तु जडप्रकृतिः। ''अक्षरात्सम्भवतीह विश्वम्'' (आ.उ.१-१-७) इति अदृश्यत्वादिगुणके अक्षरशब्दस्य श्रवणात् । तस्य च विष्णाव-वकाशशून्यत्वात् । यतोऽस्मादप्यक्षरात् उत्तरवाक्ये ''अक्षरात्परतः परः'' (आ.उ.२-१-२)इति परः प्रतीयते। न हि विष्णोरपि परोऽस्ति। अतो न विष्णुरदृश्यत्वादिगुणकः इति प्राप्ते-

अदृश्यत्वादिगुणको विष्णुरेव। ''अथ परा यया तदक्षरमधिगम्यते'' (आ.उ.१-१-५) इत्यदृश्यत्वादिगुणकस्य परविद्याविषयत्वजगज्जन्मादिकर्तृत्वाद्यसाधारणधर्मोक्तेः। ''न चाक्षरात्परतः परः'' इत्युत्तरवाक्यविरोधः। अधमाक्षरादिभेदेन अक्षरशब्दवाच्यानां त्रित्वात् । एतदक्षरशब्द-वाच्यस्यैव विष्णोः परतो मध्यमाक्षरात् परत्वसम्भवेनाविरोधात् । न चात्र प्रमाणाभावः।

अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका। श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया।।

तमक्षरं परं प्राहुः परः परमक्षरम् । हरिमेवाखिलगुणं अक्षरत्रयमीरितम् ।।

इति स्कान्दोक्तेः इति सिद्धान्तः कृतः। तस्य तात्पर्यमाह - **दृश्यत्वाद्युज्झितः सदा** इति। अत्र दृश्यत्वाद्युज्झितत्वं नाम साकल्येन चक्षुराद्यगोचरत्वम् । तन्न कदाचिद्धीयत इति भावेनोक्तं **दृश्यत्वाद्युज्झितः सदा** इति। **सदा** इति अत्ता नियन्ता चेत्यत्रापि अन्वेति। तथा च ईश्वरक्रियापि नित्येत्युक्तं भवति। विवृतं चैतदनुव्याख्याने क्रियानित्यत्वम् । अत्र दृश्यभिन्नत्वमेव अदृश्यमिति सुधाकाराणां पक्षः। अत्र दृश्यत्वाद्युज्झितः इति दृश्यत्वाद्यत्यन्ताभाव एव प्रतीयते। तथापि दृश्यान्योन्याभावे सिद्धे दृश्यत्वात्यन्ताभावः सिद्ध एव। तयोः समनियतत्वात् । अतः तात्पर्यपरतया इदं वाक्यं व्याख्येयम् ।। ६ ।।

## ओं वैश्वानरः साधारणशब्दविशेषात् ओं

वैश्वानरशब्दवाच्यो विष्णुरेव। कुतः ? साधारणशब्दस्य अग्नाविष्णोः साधारणस्यापि वैश्वानरशब्दस्य, विशेषात् - विष्ण्वेकनिष्ठात्मशब्देन विशेषितत्वादिति सूत्रार्थः।

अत्र "यस्त्वेतमेवं प्रादेशमात्रं अभिविमानमात्मानं वैश्वानरमुपास्ते" (छा.उ.५-१८-१)इति श्रुत्युक्तवैश्वानरो न विष्णुः। साधकशून्यत्वात् । किन्तु अग्निरेव। कुतः ? वैश्वानरश्रुतेः। न च वाच्यम्, अभिविमानपदोक्तसर्वगतत्वलिङ्गमेव साधकमिति। लिङ्गस्यान्यत्रप्रसिद्धवैश्वानरश्रुतेः दुर्बलत्वात् । न च लिङ्गस्य निरवकाशत्वेन प्राबल्याच्छ्रुतिबाधकत्वमिति वाच्यम् । श्रुतेरपि प्रसिद्धितः निरवकाशत्वात् । एवञ्चोभयोरपि निरवकाशत्वे वैश्वानरशब्दस्य अग्नाविष्णोस्साधारण्य-मेव स्यात् । न तु लिङ्गेन विष्णुपरतानिश्चयः इति प्राप्ते -

अयं वैश्वानरो विष्णुरिति निश्चयो युज्यते। "आत्मानं वैश्वानरम्" इत्यात्मशब्दात् । न चोक्तरीत्या साधारणवैश्वानरश्रुतिसद्भावात् अनिर्णय इति वाच्यं साधारणस्यापि वैश्वानरशब्दस्य - "जीवाः ब्रह्मादयः प्रोक्ताः आत्मैकस्तु जनार्दनः। इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते।।" इत्यादौ विष्णावेव प्रसिद्धान्यत्रानवकाशात्मशब्दसामानाधिकरण्येन विष्णुपरत्वसम्भवात् । "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। (भ.गी.१५-१४) इति स्मृतिसमाख्यानाच्चेति सिद्धान्तः कृतः।"

तस्य तात्पर्यमाह - **विश्वजीव** इति। अत्र वैश्वानर इति वक्तव्ये विश्वजीवान्तरत्वेति लिङ्गोक्तिः तस्य यौगिकत्वाभिप्राया। विश्वनरसम्बन्धित्वात् वैश्वानरः। विश्वनरसम्बन्धित्वं च तत्तदन्तस्थत्वमेवेति । आद्यशब्देन "अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते। यदिदमद्यते" (बृ.उ.७-९-१) इत्यादिनोक्तपाचकत्वाद्यनेकलिङ्गसंग्रहः। तत्तत्सूत्रोपात्तलिङ्गस्य स्वसमानन्यायाक्रान्तलिङ्गान्तरोपलक्षकत्वाभिप्रायेण सर्वैरित्युक्तम् ।

स इत्यनेन विष्णुपरामर्शकेन विष्णुरेवेत्यस्य सर्वत्रानुवृत्तिं सूचयति। हिशब्देनोक्तार्थे प्रमाणप्रसिद्धिमाह। लिङ्गात्मकेऽपि पादे वाचकत्वाद्यनेकलिङ्गसमन्वयसिद्ध्यर्थं एकस्य वैश्वानरनाम्नः समन्वयः कृतः इति नानुपपत्तिरित्यवधेयम् । ननु विश्वजीवान्तरत्वाद्यैः लिङ्गैरित्युक्तम् । तदयुक्तम् । वैश्वानरशब्दस्य नामात्मकत्वेन लिङ्गात्कत्वाभावादिति चेन्न । वैश्वानरशब्दस्य यौगिकत्वप्रदर्शनार्थं अवयवार्थकथने तात्पर्यात्। अन्यथा वैश्वानरत्वाद्यैरित्यवक्ष्यत् । न च लिङ्गैरित्यस्यानुपपत्तिः। वैश्वानरशब्दसमन्वयेन अन्तः प्रतिष्ठानादिति सूत्रोक्तानां पाचकत्वेन अन्तःप्रतिष्ठानादिरूपलिङ्गानां यः समन्वयः सिद्धः तत्प्रदर्शनपरत्वात् । एवमेवोक्तं भावबोधेऽपीति द्रष्टव्यम् ।। ७ ।।

**मदाचार्यमनोधाममध्वमानसमश्चके।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां प्रथमाध्यायस्य**
द्वितीयः पादः ।।

**नारायणाचार्य** – अथान्यत्रप्रसिद्धलिंगसमन्वयप्रतिपादकस्य द्वितीयपादस्य संक्षेपभाष्यमारभते **सर्वग** इत्यादिना **लिंगैः सर्वैर्युतः स हि** इत्यन्तेन ग्रंथेन। तत्र ऐतरेये "एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतम्" इत्यादिना सर्वगतत्वं "तस्यैतस्यसावादित्यो रस" (ऐ.आ.३-२-३) इत्यादित्यश्रुत्या आदित्यस्यैव चक्षुर्मयः श्रोत्रमयः इत्यादिनोक्तचक्षुर्मयत्वादिलिंगात् सर्वानां वा प्रतीयते। तथा च पूर्वपादान्ते "स एतमेव पुरुषं ब्रह्मततममपश्यत्" (ऐ.आ.२-४-३) इति विष्णोः सर्वगतत्वं प्रागुक्तमयुक्तं स्यात् इत्यतः प्रवृत्तं सूत्रं **ओं सर्वत्र प्रसिद्धोपदेशात्** इति। तद्व्याचष्टे **सर्वग** इति। अत्र चेत्याद्यैः "लिंगैः सर्वैर्युतः स ही"ति वक्ष्यमाणं सिंहावलोकन्यायेन सम्बध्यते। **प्रसिद्धैरन्यवस्तुषु** इति पूर्वोक्तं चानुवर्तते । ततश्चैवं योजना । विष्णुरेव सर्वग इत्यादिशब्दार्थभूतैरन्यत्रप्रसिद्धैः सर्वगतत्वादिभिर्लिंगैर्युक्तः। कुतः? विष्णुवाचकत्वेन प्रसिद्धस्य ब्रह्मशब्दस्य सर्वेषु भूतेषु "एतमेव ब्रह्मेत्याचक्षते" इति वाक्यशेषे उपदेशादिति हिशब्दार्थः।

युक्त्यन्तरेणाप्युक्तमर्थं समर्थयत्सूत्रं **ओं विवक्षितगुणोपपत्तेश्च**। "स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्ट (ऐ.आ.३-२-४)इत्यादिगुणानां तत्रैवोपपन्नत्वाच्च। पूर्वपक्ष्युक्तं जीवस्य सर्वगतत्वं प्रतिक्षिपत्सूत्रं **ओं अनुपपत्तेस्तु न शारीरः**। सर्वेषु भूतेष्वेतमेव ब्रह्मेत्यादिना सर्वेषां भूतानां "अन्तर पुरुष" इत्यादिना चोक्तस्यैकस्य सर्वशारीरस्थत्वस्य जीवेऽनुपपत्तिर्न सः। युक्त्यन्तरेण जीवस्य सर्वगतत्वं प्रतिक्षिपत्सूत्रं **ओं कर्मकर्तृव्यपदेशाच्च**। "आत्मानं परस्मै शंसति" इति। एकस्यां क्रियायां कर्मकर्तृभावो भेदे सत्येवेत्युत्सर्गः। कर्तृभिन्नत्वेन सति क्रियाफलशालित्वस्य कर्मत्वात्। अन्यथा चैत्रो ग्रामं गच्छतीत्यादौ ग्रामसंयोगरूपक्रियाफलाश्रयत्वेन कर्तुः कर्मत्वापत्त्या तत्रापि

**द्वितीयापत्तेरिति कश्चित्** । तत्र तथात्वेऽपि पाटलिपुत्रान्मधुरां गच्छन्तीत्यादावपि अपादानस्य क्रियाफलरूपविभागशालित्वात्कर्मत्वापत्या तत्रापि द्वितीयापत्तेः। कर्मकर्तरि अव्याप्तेश्च। तस्मात् क्रियास्वातन्त्र्यं कर्तृत्वं तद्विषयत्वं च कर्मत्वम् । तच्च प्रायेण भेदव्याप्तमेव । दृश्यत्वेन क्वचिद्बलवद्बाधकात् । मामहं जानामीत्यादौ भेदस्थानसिषिक्तविशेष...न कर्तृकर्मभावस्तदभेदेऽपि भवति। न च तथा प्रकृते किमपि साधकं भेदेनोपपत्तेरिति भावः।

नन्वत्रापि चक्षुर्मयत्त्वादिबाधकेनैकस्यैव कर्मकर्तृभावोऽभ्युपेयतामित्यतः सूत्रं **ओं शब्दविशेषात्**। "एतमेव ब्रह्मेत्याचक्षते" (ऐ.आ.३-२-३)इति असाधारणविष्णुवाचकशब्दश्रवणात्तस्य च अवधारणरूपविशेषयुक्तत्वात् परममुख्यवृत्या प्रतिपादकत्वलाभात् । स्मृतिसमाख्ययापि विष्णोरेव सर्वगतत्वसाधयत्सूत्रं **ओं स्मृतेश्च**। अहमात्मा गुडाकेश सर्वभूताशयस्थितः । (भ.गी.१०-२०)इत्यादेस्तस्यैव सर्वगतत्वं युक्तम्। उक्तमाक्षिप्य समादधत्सूत्रं **ओं अर्भकौकस्त्वात्तद्व्यदेशाच्च इति चेन्न निचाय्यत्वादेवं व्योमवच्च**। सर्वेषु भूतेषु इत्यल्पौकस्त्वोक्तेः चक्षुर्मयत्वाजीव-धर्मव्यपदेशाच्च नेति चेन्न निचाय्यात्वान्नितरां चाय्यत्वात् । चाय् पूजानिशामनयोरेतस्मात्कर्मणि ऋहलोर्ण्यत् (पा.सू.३-१-१२४)इति ण्यत् । तेन रूपेण तस्यैव विष्णोः उपासनार्थं तथोच्यते युज्यते च सर्वगतस्याप्यल्पौकस्त्वं व्योमवत् । चक्षुर्मयत्वादिव्यपदेशस्य तु विश्वतश्चक्षुषि भगवति विकारशब्दादित्याद्युक्तन्यायेन चक्षुः प्राचुर्यादिनाप्युपपत्तेरिति भावः।

पुनरप्युक्तमाक्षिप्य समादधत्सूत्रं - **ओं सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्** । जीवपरयोरे-कशरीरस्थत्वेन समानभोगप्राप्तिरिति चेन्न । सामर्थ्यविशेषात्। "यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर" (भ.गी.१५-१७)इत्यैश्वर्यस्य भोगाभावसिध्यर्थमेव उक्तत्वात् ।।१।। ननु तथापि "स यद्येवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्व"(बृ.उ.३-२-५)इत्यस्यां श्रुतौ संहर्तुत्वरूपमत्तृत्वमदितेः श्रूयते इत्यतः सूत्रं - **ओं अत्ता चराचरग्रहणात्** इति। तद्व्याचष्टे । **अत्ता** इति । अत्तेत्यादिभिरत्तृत्वादिलिंगैः स विष्णुरेव युतः। चराचरात्तृत्वस्य विष्णावेव प्रसिद्धत्वान्न हि देवमातुः सर्वात्तृत्वं सम्भवतीति हेरर्थः। किंच "नैवेह किंचनाग्र आसीन्मृत्युनैवेद-मावृतमासीदशनाया हि मृत्युः" इत्यादिना विष्णुप्रकरणावगमादिति **ओं प्रकरणाच्च** इति द्वितीयसूत्रार्थः ।।२।। एतेन "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति" (क.उ.१-३-१)इत्यादावुक्तः कर्मफलस्याप्यत्ता स एव। "घर्मासमन्ता" (ऋ.सं.१०-११४-१)इति श्रुतेः। "आत्मान्तरात्मेति हरिरेक एव द्विधा स्थितः। प्रविष्टो हृदये नित्यं रसं पिबति कर्मजम् ।" (बृहत्संहिता)इति स्मृतेश्च। तस्यैव तदत्तृत्वप्रसिद्धेरित्यर्थप्रतिपादकं **ओं गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** इत्यपि सूत्रं व्याख्यातं बोध्यम् । अतः पिबन्तौ इति द्विवचनेन प्रक्रान्तयोः "यः सेतुरीजानानामक्षरं ब्रह्म तत्परं" (क.उ.१-३-२)इत्येकवचनेन विशेषितत्वादिति। **ओं विशेषणाच्च** इति द्वितीयसूत्रार्थोऽप्यत्तेत्येकवचनेन सूचितः ।।२।।

"य एषोऽन्तरक्षिणि पुरुषो दृश्यते" (छा.उ.४-१५) इत्यत्र अक्षिस्थत्वलिंगं "सोऽहमस्मि स एवाहमस्मि" (छां.उ.४-११) इत्यग्निवचनादग्नीनां प्रतीयते। अक्ष्यादित्ययोरैक्यात् आदित्यस्थत्वं आनन्दमयस्योक्तमपि तस्यैवापद्यते इत्यानन्दमयोऽप्यग्निरेव स्यादित्येतदप्यवृत्तया अधिकरणपंचसूत्र्या अयमर्थः। अन्तर उपपत्तेः। चक्षुरन्तस्थो विष्णुरेव। अत्रोक्तस्य "एतदमृतमभयमेतद् ब्रह्म" इत्यादेस्तत्रैवोपपत्तेः। अन्तःस्थित्वा रमयतीत्यन्तर इति विग्रहः। 'अन्तःस्थित्वा रमणकृत्' इत्यनुव्याख्यानात् । अन्तशब्दोपपदे ञमन्ताड्डुरति इतिरमेरौणादिको डः। यद्यपि तत्र डकारो नेत्संज्ञकः। रंडेति वृत्तिकृता उदाहृतत्वात् । तथापि चुटु (पा.सू१-३-७)इत्यनेन प्राप्ताया इत्संज्ञायास्तस्यानित्यया परिहारो वाच्यः। तदनित्यता च चुटुषः प्रत्ययस्येत्येकयोगे सम्भवे षःप्रत्ययस्य (पा.सू.१-३-६)इति पृथग्योगकरणात्ततश्च तेन वित्तश्चुञ्चुप्चणपौ(पा.सू.५-२-२४) इत्यत्र न चास्येत्संज्ञेति व्यवस्थापितत्वात् इत्संज्ञायाः पक्षप्राप्त्या अन्तर इति रूपमप्रत्यूहम्। नलुमताङ्गस्य(पा.सू.१-१-६३)इति निषिद्धस्यानित्यत्वात् पक्षे संबुद्धिनिमित्तगुणवदिति धेयम्। उणादयो बहुलमिति बाहुलकस्य सर्वविधिव्यभिचारार्थत्वाद्वेत्यप्याहुः।

युक्त्यन्तरेण विष्णोश्चक्षुरन्तस्थत्वं साधयत्सूत्रं **ओं स्थानादिव्यपदेशाच्च**। "सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छति" (छा.उ.४-१५)इति स्थानशक्तेः असंगस्य हरेरधिष्ठानाच्च-क्षषोऽप्यसंगत्वमुच्यते । तथा "एष उ एव वामनिरेषो हि सर्वाणि वामानि नयति" इत्यात्मशक्तिव्यपदेशाच्च। "यत्स्थानत्वादिदं चक्षुरसंगं सर्ववस्तुभिः। स वामनः परोऽस्माकं गतिरित्येव चिन्तयेत् ॥" इति वामने। प्रकरणबहुरूपहेत्वंतरेणाप्युक्तमर्थं समादधत्सूत्रं **ओं सुखविशिष्टाभिधानादेव च** । "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" (छा.उ.४-१०)इति। कशब्दः सुखवाची खशब्दो ज्ञानवाची । निरुपपदशब्दाभ्यां तयोः परमत्त्वं लभ्यते तच्च विष्णोरेव लक्षणम् । "विज्ञानमानन्दं ब्रह्म" (बृ.उ.५-९-२८)इति श्रुतेः। अत उपक्रमे तल्लक्षणोक्ते एतत्प्रकरणस्य वैष्णवत्वमवगम्यते। कं ब्रह्मेति सुखविशिष्टाभिधानमात्रेण विष्णुत्वं किं न वाच्यं खं ब्रह्मेतिज्ञानविशिष्टाभिधानादिति सौत्रस्थैवकारस्यार्थः। "लक्षणं परमानन्दो विष्णोरेव न संशयः। अव्यक्तादितृणान्तास्तु विप्लुडानन्दभागिनः ॥" नन्वग्निभिरुपकोसलं प्रति 'प्राणो ब्रह्म कं ब्रह्म' इति विद्या 'य एष आदित्ये पुरुष' इति विद्यां चोक्त्वा "उपकोसलैषा सोम्य तेऽस्मद्विद्या आत्मविद्या च" इत्युक्तत्वेनादिविद्याया विष्णुविषयत्वस्य द्वितीयविद्याया अग्निविषयस्यैव यथायथं तत्प्रापकलिङ्गैर्युक्तत्वाच्चक्षुरन्तस्थत्वं अग्नीनामेवेत्यतः सूत्रं **ओं श्रुतोपनिषत्कगत्यभिधानाच्च**। श्रुतोपनिषदमुपकोसलं प्रति कस्य ब्रह्मणो गतेः प्राप्तेरुक्तत्वात् । "स एनान्ब्रह्म गमयति" (छा.उ.४-१५)इति। न ह्यन्यज्ञानेनान्यगतिर्युज्यते। एवमुपपत्या विष्णोश्चक्षुरन्तस्थत्वं प्रसाध्य विपक्षे बाधकेनाप्येतत्समर्थयत्सूत्रं **ओं अनवस्थितेरसम्भवाच्च नेतरः**। जीवस्य जीवोऽन्तरनियामकत्वेनावस्थिते साम्येन नियामकत्वासम्भवाच्च न जीव इति। एतदधिकरण-तात्पर्यमाह **नियन्ता च** इति। अग्नीनां स एव नियन्तेत्यर्थः ॥४॥

"यः पृथिव्यान्तिष्ठन्पृथिवीमन्तरो यमयति" (बृ.उ.४-७-३)इत्यत्रोक्तमन्तर्यामित्वं यस्य पृथिवीशरीरमित्युक्त्या अन्यस्यैव प्रकृतेर्वा पृथिव्यादिजीवस्य वा प्रतीयते। 'व्याप्तं कार्येषु कारणं' इति वचनात् । पृथिवीस्थत्वस्य तत्रोपपत्तेः। पृथिवीमन्तरो यमयतीति एतदपि तत्स्थितत्वमात्रेणोपचारेण नेयम्। जीवपक्षे तु सर्वं सुघटम्। विष्णोस्तु भूतादिशरीरत्वं न कथंचिदुपपन्नमित्यशंकानिरासार्थमधिकरणं **ओं अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्** इति। तस्यायमर्थः - पृथिव्याद्यधिदैवतेषु अन्तर्यामी विष्णुरेव। "यं पृथिवी न वेद" इत्यादिना पृथिव्याद्यधिदैवतादिभिरवेद्यत्वस्योक्तेः। "स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः सर्वेषां भूतानामन्तरपुरुष" (ऐ.आ.३-२-४) इत्यादिना विष्णोरेव धर्मः। प्रकृतेरन्तर्यामित्वमपाकर्त्तुं सूत्रं **ओं न च स्मार्तमतद्धर्माभिलापात्** । त्रिगुणत्वादि तद्धर्मानुक्तेर्न कापिलस्मृत्युक्तं प्रधानमन्तर्यामी।

विशेषयुक्त्यापि जीवस्यान्तर्यामित्वं प्रतिपादयत्सूत्रं **ओं शारीरश्चोभयेऽपिहि भेदेनैनमधीयते**। जीवोऽपि नान्तर्यामी "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत" "यो विज्ञाने तिष्ठन् विज्ञानान्दतरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयति" (बृ.उ.५-७-७२)इति माध्यन्दिनयनाः काण्वाश्चोभयेऽपि शाखिन एतं जीवमात्माविज्ञानशब्दाभ्यां वाच्यं तन्नियम्यं भेदेनैव पठन्ति यतोऽतो विष्णुरेवान्तर्यामी। तस्य तात्पर्यमाह **नियन्ता** इति। पृथिवीनियन्ता च स एव। "यं पृथिवी न वेद" इत्यन्तर्यामिणि उक्तस्य पृथिव्याद्यवेद्यत्वस्यापि "स योऽतोऽश्रुत" (ऐ.आ.३-२-४)इत्यादौ तत्रैव प्रसिद्धत्वादिति। पृथिवीशरीरत्वादिकं तु "शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् । रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत् ।।" इतिस्मार्तयोगानुसारेण विष्णो सावकाशनिरवकाशा-वेद्यत्वादिलिंगबाधात् रूढिबाधस्य न्यायप्राप्तत्वात् इति भावः ।।५।।

ननु "यत्तद्रेश्यमग्राह्यं" इत्यादि (मु.उ.१-१-६)आथर्वणे अदृश्यत्वादिकं तथा "अक्षरात्सम्भवतीह विश्वं" (मु.उ.१-१-७)इति अक्षरशब्दोक्तस्य प्रकृत्यादेश्च श्रूयते। तच्च विष्णोरयुक्तम् । वाक्यशेषे "यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वं" (मुं.उ.१-१-७) इत्यूर्णनाभिदृष्टान्तेनोपादान-त्वस्यैव प्रतीतेः ब्रह्मशब्दात्परतः पराभिधानाच्च हिरण्यगर्भस्य च प्राप्तिरित्यतोऽधिकरणं त्रिसूत्रं **अदृश्यत्वादिगुणको धर्मोक्तेः** इति। तद्व्याचष्टे **दृश्यत्वादुज्झितः सदा** इति। स हि विष्णुरेव सदा दृश्यत्वाद्युज्झितः अदृश्यत्वादिगुणकः। तस्यैव "अथ परा यया तदक्षरमधिगम्यते" (आ.उ.१-५) इति परविद्याविषयत्वरूपधर्मोक्तेः। विष्णुरेवेत्यवधारणेन पूर्वपक्षप्रतिक्षेपकं **ओं विशेषणभेदव्यपदेशाभ्याञ्च नैतरौ** इति सूत्रं व्याख्यातम् । "यः सर्वज्ञः सर्ववित्"

इति विशेषेणान्न प्रकृतिः। "तस्मादेतद् ब्रह्म नामरूपं च जायते" (मुं.उ.१-१-९) इति भेदव्यपदेशान्न विरिंचः।

तथा युक्त्यन्तरेण विष्णोरदृश्यत्वादिकमुपपादयत्सूत्रं **ओं रूपोपन्यासाच्च**। "यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं" (मुं.उ.३-१-३)इति रूपोक्तेश्च नेतराविति सम्बन्धः। इति परपक्षप्रतिक्षेपार्थं सूत्रमप्युक्ततात्पर्यं भवति। ऊर्णनाभिभुक्तान्नस्यैव तन्तूपादनत्वेनोर्णनाभेस्तदभावेन विकारायोगात्, वाक्यशेषविरोधोऽपि नास्तीति प्रसिध्यर्थेन हिशब्देन सूचितमिति।।६।।

ननु छान्दोग्ये "यस्त्वेतमेवं प्रादेशामात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" (छां.उ.५-१८-१) इत्यग्निप्रसिद्धवैश्वानरश्रुतेरग्नेरेवान्तर्यामित्वमित्यतः सूत्रं **ओं वैश्वानरः साधारणशब्दविशेषात्** इति। तद्व्याचष्टे। **विश्वजीवान्तरत्वाद्यैर्लिंगैः सर्वैर्युतः स हि** इति। एतेन नायं वैश्वानरशब्दः सौत्रस्तत्समन्वयप्रतिपादनार्थं किन्तु यथा आद्ये नामपादे अन्तस्तद्धर्मोपदेशादिति सूत्रे अन्तस्थत्वलिङ्गनिर्देशस्तत्प्रकरणस्थेन्द्रादिबहुनामसंग्रहार्थं एवमयमपि विश्वजीवान्तरत्वाहार-पाचकत्वाद्यनेकप्रकरणगतलिंगसंग्रहार्थमिति सूचयति। ततश्चैवं योजना। वैश्वानरशब्दोपलक्षितैः विश्वजीवान्तरत्वाद्यैर्लिंगैः सः विष्णुरेव..यतोग्नाविष्णुरेव। साधारणस्य वैश्वानरशब्दस्य विशेषको व्यावर्त्तक आत्मानमित्यात्मशब्दः पूर्वोक्तरीत्या विष्णोरेवोपपन्न इति हि प्रसिद्धमित्यर्थः। आद्यशब्देन "तस्य ह वा एतस्य वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्मात्मा संदोहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय" इत्यादिलिंगाच्च। "चन्द्रमा मनसो जात" इत्यादौ पुरुषसूक्ते विष्णावेव प्रसिद्धिर्हि यतोऽतो विष्णुरेवात्र प्रतिपाद्यत इत्यपि सूचयति **ओं स्मर्यमाणानुमानं स्यात्** इति सूत्रम्। तथा **ओं शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते** इति सूत्रं व्याख्यातं भवति। तत्रायमाद्यसूत्रार्थः। "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्।।" (भ.गी.१५-१४) इति। स्मृत्युक्तमाहारपाचकत्वलिंगं गीतोक्तविष्णोर्वैश्वानरशब्दवाच्यताया अनुमापकं भवतीति। द्वितीयसूत्रार्थस्तु वैश्वानरशब्दात् सः यां प्रथमामाहुतिं जुहुयात् तां प्राणाय स्वाहा इत्युक्तहोमाधिकरणलिंगात् योऽयमन्नपुरुष इत्यत्र प्रवेशोक्त "मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्" (ऋ.सं.६-७-१) इति समाख्याश्रुतौ वैश्वानरशब्दस्य अग्निशब्दसामानाधिकरण्याच्चाग्निरिति चेत्। न। तथा दर्शनार्थमुपासनोपदेशात्प्रागुक्तानामात्मशब्दादीनां असम्भवात् । पुरुषसूक्तोक्तविधया चात्र प्रतिपादितत्वाच्च विष्णुरेव वैश्वारशब्दवाच्यः। पद्भ्यां भूमिः विष्णोश्चक्षो सूर्य इत्यादि पुरुषसूक्तोक्तं अत्र पृथिव्येव पादौ मूर्धे विसुतेजाः। द्यौश्चक्षुर्विरूपः सूर्य इत्याद्युक्तम्। समाख्याश्रुतावपि पुरुषसूत्रोक्तविधया एवोक्तत्वात्तत्राप्यग्निर्वैश्वानरशब्दार्थो विष्णुरेव। श्रुत्यर्थस्तु दिवः

**कारणभूतमूर्धानम्**। पृथिव्याः **कारणभूतपादम्** । जनानां सम्यग्ज्ञानाय अभिव्यक्तम्। "**सर्वज्ञमीशमखण्डेशं अत्यन्नं** जानानां पातारं **वैश्वानरमग्नि** देवा स्वास्यतया कुर्वन्" इति। **गतिसाधनत्वादरतिपाद इति टीका**। तत्र ऋगताविति धातोः। करणे औणादिके अति प्रत्यये गुणे चारतिः पाद **इत्यर्थस्य स्फुटत्वेन** शिष्यैरेवावगन्तुं शक्यत्वात् । चन्द्रिकायां प्रकारान्तरेण तात्पर्यं वर्णनं कृतम्। लोके गमनेनारतिदर्शनात् । रतिविरुद्धगतिसाधनत्वात्। पादो रतिशब्दार्थ इति। तथा स विष्णुरेवात्र प्रतिपाद्य इत्यवधारणेन **ओं अत एव न देवताभूतं च** इति सूत्रं व्याख्यातम्। अत एव निरवकाशविष्णुश्रुतिलिंगैरेव देवताग्निः भूताभिमानि भूतं चात्र प्रतिपाद्यं नेति सूत्रार्थः।

नन्वग्न्यादिशब्दानां विष्णुवाचित्वे अग्न्यादिषु प्रसिद्धिविरोध इत्यत आह **ओं साक्षादप्यविरोधं जैमिनिः**। **यद्यपि साक्षाद्ब्रह्मवाचकास्तथापि** ते व्यवहारार्थमग्न्यादौ प्रयुज्यन्ते यथा नारायणादिशब्दा लौकिकेषु प्रयुज्यते अतो न विरोध इति जैमिनिः आचार्यो मन्यते। ननु लौकिकप्रसिद्धेः अज्ञानादिमूलकत्वेऽपि अग्न्यादिसूक्तादिप्रसिद्ध्यन्यथानुपपत्या अग्न्यादेर्वाच्यत्वं स्यादित्यतः सूत्रं **ओं अभिव्यक्तेरित्याश्मरथ्यः**। अग्न्यादिसूक्तैः ब्रह्मोपास्तौ तत्रैव ब्रह्माभिव्यक्तेरग्न्यादिशब्दवाच्यत्वं अग्न्यादेरित्याश्मरथ्याचार्यः।

प्रकारान्तरेणापि व्यवस्थां प्रतिपादयत्सूत्रं **ओं अनुस्मृतेर्बादरिः**। अग्न्यादिब्रह्मोपासन-स्याग्न्यादावेव उपासकप्रतिपत्तव्यताभिप्रायेण तत्तत्सूक्तानां अग्न्यादिसूक्तत्वमिति बादरिराचार्यः।

रीत्यन्तरेण तन्नियमं प्रतिपादयत्सूत्रं **ओं सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति**। अग्न्यादिसूक्तादिषु ब्रह्मण एव प्रतिपाद्यत्वेऽपि तत्तद्विद्योपासकानामग्निद्वारैव भगवत्प्राप्तिरित्यग्न्यादि-सूक्तनियमं जैमिनिराचार्यो वक्ति। "तं यथा यथोपासते तथैव भवति" इति दर्शयति। प्रथमं लौकिकव्यवहारनियामकत्वेन जैमिनिमतमुक्तम् । अत्र तु तत्तत्सूक्तेष्वग्न्यादिसूक्तत्वव्यपदेशे नियामकं जैमिनिराहेत्युक्तं अतो न पौनरुक्त्यम् ।

व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् । अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादि-वत्।। इति स्कान्दोक्तेर्न मतानां परस्परविरोधः।

नन्वग्न्यादिषु भगवदुपास्तावग्न्यादिद्वारा तत्स्थभगवत्प्राप्तिः भवति इत्येतत् तदा स्याद्यद्यग्न्यादौ भगवदुपस्थानं स्यात् । तदेव कुतः इत्यतः सूत्रं **आमनन्ति चैनमस्मिन्** । एतं विष्णुमस्मिन्नग्न्यादावामनन्ति चेति। "योऽग्नौ तिष्ठन्नग्निमन्तरो यमयति" (बृ.उ.५-७-५)इत्यादेः। इदमप्याह **विश्वजीवान्तरत्वाद्यैः** इति। विश्वे सर्वे यो अग्न्यादिदेवताः जीवास्तदन्तर्गतत्वादि-भिस्तत्राभिव्यक्तत्वादिभिर्धर्मैर्हि यस्माद्युक्तो अग्न्यादिषु तत्तच्छब्दप्रसिद्धिश्च युक्तैवेति भावः।

**।। इति श्री नारायणाचार्यकृतावणुभाष्यप्रपंचे समाप्तोऽसौ द्वितीयोंऽघ्रिः प्रथमाध्यायसंगतिः ।।**

**मळगि –** क्षित्यादिभूतगतत्वं विष्णोरेवेत्याह **सर्वग** इति। **सर्वगः** क्षित्यादिभूतव्याप्तः। पुनः कीदृशः। **अत्ता** "स्थित्वा रुद्रे त्वभक्षयत्" इत्युक्तेः। रुद्रान्तस्थत्वेन जगद्भक्षकः इति यावत्। पुनः कीदृशः ? नियन्ता। सर्वान्तर्नियामाकश्च। **सदा** सर्वदा। **दृश्यत्वाद्युज्झितः** अदृश्यत्वादिगुणकः दृग्विषयत्वादिरहितः। पुनः कीदृशः। **विश्वजीवान्तरत्वाद्यैः** विश्वश्च जीवाश्च ते तथा। तेषामन्तरत्वाद्यैः। सर्वजीवान्तर्गतत्वादिभिः। **सर्वैः** समस्तैः। **लिंगैः** लोकतोऽन्यत्रप्रसिद्धलिंगात्मकशब्दैः। **सः** विष्णुरेव। **युतः** संयुतः ॥४॥

॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥

**लिंघेरी –** सर्वत्र पृथिव्यादिषु व्याप्तो विष्णुरेवेत्याह **सर्व** इति। सर्वत्रस्थितः। पुनः कीदृशः ? **अत्ता** रुद्रान्तर्यामित्वेन जगत्संहारकः। पुनः कीदृशः ? **नियन्ता** अन्तप्रेरकः। पुनः कीदृशः ? **सदा दृश्यत्वाद्युज्झितः** दृश्यत्वादिगुणैः उज्झितः दर्शनयोग्यगुणरहितः। पुनः कीदृशः ? **विश्वजीवान्तरत्वाद्यैः** विश्वं च जीवाश्च विश्वजीवाः तेषां अन्तः प्रेरकत्वाद्यैः **सर्वैः लिंगैः** चिह्नैः **युत** : संयुतः। हिशब्दः प्रसिद्धिद्योतकः।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ॥

**नारायणपण्डित –** सर्वदा सर्वगः सर्वत्रस्थः। सर्वग इत्यनेन सर्वत्र प्रसिद्धोपदेशादित्यधिकरणार्थः॥१॥ अत्ता चराचरस्य संहर्ता। सदा शुभकर्म फलभोक्ता च। अत्तेत्यनेनात्ता चराचरग्रहणात्॥२॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनादित्यधिकरणद्वयार्थ प्रोक्तः॥३॥ नियन्ता अक्ष्यादिनियन्ता पृथिव्यादिनियन्ता च। नियन्तेत्यनेन अन्तर उपपत्तेः॥४॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादित्यनयोरर्थ उक्तः॥५॥ दृश्यत्वाद्युज्झितः सदा दृश्यत्वादिहीनः। अदृश्यत्वादिगुणक इत्यर्थः। सदेति सर्वत्र चेति। साकल्येन चक्षुर्मन आद्यगोचरत्वमपरिच्छेद्यवैभवत्वं न कदाचिद्धीयते इति भावेन सदा दृश्यत्वाद्युज्झित इत्युक्तम्। दृश्यत्वाद्युज्झित इत्यनेन अदृश्यत्वादिगुणको धर्मोक्तेरित्यस्यार्थ उक्तः। आदिपदेन गोत्राद्यभाव उच्यते॥६॥ विश्वजीवान्तरत्वाद्यैः सर्वनरनियमनादियोगवता वैश्वानरशब्देनाद्यैः तत्तत्प्रकरणगतैः सर्वैर्लिंगैः नामभिश्च युतः स विष्णरेवैकः। कुतः ? सर्वैर्लिंगैः सर्वज्ञापकप्रमाणैर्युतो हि यस्मात्तस्मात्सर्वलिङ्गात्मकशब्दवाच्यः स एवेत्यर्थः। विश्वजीवान्तरत्वाद्यैरित्यनेन वैश्वानरः साधारणशब्दविशेषादित्यधिकरणार्थ :॥७॥ अधिकरणानि ७। सूत्राणि ३२

इति प्रथमाध्यायस्य द्वितीयः पादः समाप्तः

**गूढकर्तृक –** द्वितीयपादार्थं संगृह्णात्यणुभाष्यकर्ता। **सर्वगोऽत्ता नियन्ता च दृश्यत्वाद्युज्झितः सदा। विश्वजीवान्तरत्वात्वाद्यैः लिंगैस्सर्वैर्युत स हीति।** **सर्वगः** सर्वत्रस्थः। **अत्ता**

चराचरसंहर्ता शुभकर्मफलभोक्ता च । **नियन्ता** च अक्ष्यादिनियन्ता। पृथिव्यादिदेवतानियन्ता च। **दृश्यत्वाद्युज्झितः सदा** दृश्यत्वादिहीनः । अदृश्यादिगुणक इत्यर्थः। **सदा** इति सर्वत्रान्वेति। साकल्येन चक्षुर्मनआद्यगोचरत्वमपरिच्छेद्यवैभवत्वं न कदाचित् हीयत इति भावेन सदा दृश्यत्वाद्युज्झित इत्युक्तम् । आदिपदेन गोत्राद्यभाव उच्यते। **विश्वजीवान्तरत्वाद्यैः** सर्वनरनियमनादियोगवता वैश्वानरशब्देन आद्यैस्तत्प्रकरणगतैर्सर्वैर्लिंगैः नामभिश्च युतः विष्णुरेवैकः। कुतः ? **सर्वैर्लिंगैः** सर्वैर्ज्ञापकप्रमाणैः युतो हि यस्मात्तस्मात्सर्वलिंगात्मशब्दवाच्यः स एवेत्यर्थः। अत्रोपयोगिसर्वं भाष्यादौ द्रष्टव्यमिति।

**श्रुत्यादिभिरन्यत्रप्रसिद्धाशेषलिंगात्मकशब्दसमन्वयप्रतिपादकद्वितीयपादार्थो दर्शितः**

**अणुभाष्यम्**

**सर्वाश्रय पूर्णगुणः सोऽक्षरः सन् हृदब्जगः।**
**सूर्यादिभासकः प्राणप्रेरको दैवतैरपि ।।५।।**

**सत्यनाथीया – सर्वाश्रयः** द्युभ्वाद्यायतनः। सर्वाश्रय इत्यनेन दुभ्वाद्यातनमित्यस्यार्थो दर्शितः। **सन्** सृष्टिस्थानगतसच्छब्दार्थः। सनित्यनेन ईक्षतिकर्मसूत्रार्थः उक्तः। **सोऽक्षरः** स विष्णुरक्षरः। सोऽक्षर इत्यनेनाक्षरमम्बरान्तर्धृतेरिति नयार्थ उक्तः। **हृदब्जगः** दहरस्थः। हृदब्जग इत्यनेन दहर उत्तरेभ्य इत्यस्यार्थ उक्तः। **सूर्यादिभासकः** सूर्यादीनां प्रकाशकः। सूर्यादिभासक इत्यनेन अनुकृतेस्तस्य च इत्यस्यार्थ उक्तो भवति । **प्राणप्रेरक** इत्यनेन शब्दादेव प्रमित इति वामनाधिकरणार्थः। **दैवतैरपि** देवादिभिर्विष्णुरुपास्य इति तदुपर्यपि बादरायणस्सम्भवादिति देवताधिकरणतात्पर्यम् ।

**तत्वमञ्जरी –** नन्वेवमन्यत्र प्रसिद्धनामलिङ्गात्मकाशेषशब्दानां विष्णुनिष्ठतासिद्धावपि अन्यत्रापि वृत्तिरस्तु । तथा च एको विष्णुरेव इत्यवधारणायोग इत्यत प्राप्तस्तृतीयः पादः।

तदर्थमाह – **तदन्यत्र च वाचकैः**। मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः इत्यग्रेतनत्रिपादी आदावप्याकृष्यते। चोऽप्यर्थे । तदिति प्रस्तुतविष्णुपरमार्शः। तदन्यत्रापीत्युक्त्या विष्णावपीति समुच्चीयते। तदिति सप्तम्यन्ताव्ययं वा । तत्र विष्णौ अन्यत्र च वाचकैरुभयवाचकैः। पूर्वपादद्वयन्यायापादितोभयत्र प्रसिद्धिकैर्वा श्रुत्यन्तरसाधारण्यादिना स्वत एवोभयत्रप्रसिद्धिकैर्वा सर्वशब्दैर्नामलिङ्गोभयात्मकैः शब्दैर्मुख्यतो मुख्यवृत्त्या एको जनार्दनो न तु विष्णुरन्यश्चेत्यर्थः। हरौ तदन्यत्र प्रसिद्धनामलिङ्गसमन्वयमाह विष्णावेवात्र सूत्रकृदिति फलितार्थः। न केवलमन्यत्र प्रसिद्धानां किन्तु तदन्यत्रवाचकैः सर्वशब्दैश्चेति चार्थः।

ननु दृश्यत्वाद्युज्झितो विष्णुरित्ययुक्तम् । तद्धर्मस्य अमृतहेतुज्ञानरूपपरविद्याविषयत्वस्य ''तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ। अमृतस्यैष सेतुः'' इति (२-२-५) आथर्वण एवोत्तरत्र ''यस्मिन् द्यौः'' (आ.उ.२-२-६)इति पूर्ववाक्योक्तद्युभ्वाद्याधारे श्रवणात्तस्य च ''आकाश एव तदोतं च प्रोतं च'' इति, ''वायुना वै गौतम सूत्रेणाऽयं च लोकः परश्च लोकः'' इति, ''रुद्रो वा व लोकाधारः'' इति समाख्याभिः प्रकृतिवायुरुद्राणां ''बहुधा जायमानः'' इत्युत्तरवाक्ये श्रुतजायमानत्वलिङ्गेन जीवस्य च प्राप्तत्वात् । समाख्यादिस्थरुद्रादिशब्दानां रुद्रादावेव रूढत्वात् प्राचीनोऽपि तेषामन्यतमो न विष्णुरित्यतः प्राप्तं - **द्युभ्वाद्यायतनं स्वशब्दात्** - इत्यादिसूत्रसप्तकम् । तदर्थं भाषते। **सर्वाश्रय** इति ।

तदन्यत्र चेत्यादित्रिपादी इह प्रतिनियतमन्वेति। लिङ्गैरित्यादि च । अन्त्यश्चोऽवधारणे तत्तस्मादित्यप्यर्थः।

''यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः'' (आ.उ.२-२-६)इति वाक्योक्तो द्युभ्वादिस्सर्वाश्रयः स प्रागुक्तः। ''विष्णावेव ओतश्च'' इति श्रुतौ प्रसिद्धो वा एको जनार्दनः। तस्मात् यस्मिन् तमेवैकमित्यादिभिः तदन्यत्र च वाचकैः श्रुत्यादिना अन्यवाचकतयापि प्रतीतैः सर्वैरेको जनार्दन एव मुख्यतो वाच्यः। न प्रकृत्यादिरनेकः।

कुतः सर्वाश्रयो विष्णुः। **लिङ्गैः सर्वैः युतः स हि**। लिङ्गैरित्युपलक्षणम् । ''जानथ आत्मानं'' इत्यादिनोक्तैः आत्मश्रुति हेयत्वानुक्ति अहेयत्वोक्ति मुक्तोपसृप्यत्वाद्येतत्प्रकरणस्थलिङ्गैर्युतत्वादिति वा । एतैर्लिङ्गैर्युतः सर्वाश्रय एको जनार्दनः । तेषां च भाष्योक्तवचनैः विष्णौ प्रसिद्धत्वादिति वाऽर्थः। एवमग्रेऽपि योजनाद्वयं बोध्यम् ।

न च समाख्याश्रुत्यादिविरोध इत्यतोऽपि **तदन्यत्र च** इति। चोऽवधारणे। विष्ण्वन्यवाचकतयैव प्रतीतैः समाख्याश्रुत्यादिगतैः रुद्रपिनाक्यादिसर्वशब्दैः विषयवाक्यस्थजायमानादिशब्दैरेको जनार्दन एव मुख्यतो महायोगपौराणिकरूढिभ्यां वाच्यो हि यतोऽत इत्यर्थः।

स विष्णुरिति वर्तमानेऽपि जनार्दन इत्युक्तिः ''रुजं द्रावयते यस्माद्रुद्र तस्माज्जनार्दनः'' (ब्र.पु) इति स्मृतिसूचनेन महायोगपौराणिकरूढिभ्यां रुद्रादिशब्दानां हरौ मुख्यत्वसूचनाय। तथा ''न जायते अर्दयति च संसारमिति जनार्दन'' इत्यादिगीताभाष्योक्तदिशा जनपदेनाजत्वोक्त्या ''अजायमानो बहुधा विजायते'' (तै.आ.३-१३-१)इति श्रुतिसूचनेन प्रादुर्भावजनेः अमृतसेतुपदोक्त-मुक्तोपसृप्यत्वस्य च सूचनाय। तथा ''जुष्टं यदा पश्यत्यन्यमीशस्य महिमानमिति वीतशोक'' (आ.उ.३-२)इति, ''अन्यं ज्ञात्वा मुच्यते'' इति स्मृत्युक्तदिशा भेदज्ञानिनः संसारार्दकत्वोक्त्या भेदव्यपदेशसूचनेन नात्र जीवेशाभेदः शङ्क्यः। ईशशब्दश्च जनार्दनपरो मोचकत्वलिङ्गादि-त्यादिसूचनाय। एक इत्यनेककोटिकपूर्वपक्षनिरासाय ।।१।।

नन्वथापि पूर्णानन्दो विष्णुरित्ययुक्तम् । छान्दोग्ये सप्तमे "यो वै भूमा तत्सुखम्" (छां.उ.७-२३)इति भूमशब्दितस्य निरुपपदसुखपदेन पूर्णसुखत्वोक्तेः। भूम्नश्च "प्राणो वा आशाया भूयान्" (छां.उ.७-१५-१)इत्युपक्रमेण "उत्क्रान्तप्राणान्" इतीश्वरे व्याप्तेरनुपपन्नोत्क्रमणलिङ्गयुक्त-प्राणशब्दितमुख्यवायुत्वादित्यतः प्राप्तं **भूमासम्प्रसादात्** इत्यादिसूत्रद्वयम् । तदर्थः - **पूर्णगुण** इति। पूर्ववदनुषङ्गः। "यो वै भूमा" (छा.उ.७-२३) इति भूमशब्दोक्तः पूर्णगुणः स प्राक् पूर्णानन्दत्वेनोक्तः स एको जनार्दनः। तस्मात् प्राणोपक्रमणेन "विष्णुर्वा व देवेभ्यो भूयान्" इति समाख्यया च तत्रान्यत्र च वाचकत्वेन प्रतीतैः भूमसुखप्राणात्मादि सर्वशब्दैः मुख्यतो जनार्दन एव वाच्यो न तु मुख्यप्राणः। कुतः ? पूर्णगुणो विष्णुलिङ्गैः सर्वैर्युतो हि। "तत्सुखं" इत्युक्तपूर्णसुखत्व सर्वोत्तमत्व स एवाधस्तादित्यादिनोक्तसर्वगतत्वादिलिङ्गैर्युतत्वात् । तेषां भाष्योक्तवाक्यैर्हरौ प्रसिद्धत्वादित्यर्थः।

न च प्राणलिङ्गविरोध इत्यतोऽपि **लिङ्गैः सर्वैर्युतो हि** इति। "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यादौ उत्क्रमणलिङ्ग्युतो जनार्दन प्रसिद्ध इत्यर्थः। प्राणपदेन तदन्तर्यामिरूपस्यैव गृहीतेः। प्राणलिङ्गानां उत्क्रमणादीनां व्यक्त्यात्मना स्थिताणुरूपविशेषे युक्तत्वादिति भावः।

भू बहाविति धातोः बहुः पूर्णतायामिति चेति छान्दोग्यभाष्यदिशा भूमशब्दः पूर्णगुणवाची ध्येयः। अत्र जनार्दन इत्युक्तिः मोचकत्वेनोक्तभूम्न उपासकतयोक्तप्राणत्वं न शङ्क्यमिति सूचनाय। एक इत्युक्तिरपि भूमसुखसत्यविज्ञानाद्यनेकशब्दैरेको गुणभेदेनोच्यते नत्वनेक इति वक्तुम् । सैव हीत्यतोऽस्यागतार्थत्वं अन्यतो ध्येयम् ।।२।।

नन्वथापि दृश्यत्वाद्युज्झितो विष्णुरित्ययुक्तम् । वाजसनेये पञ्चमे "अदृष्टं द्रष्ट्रश्रुतं श्रोतृ" (बृ.उ.५-८-११)इत्यादिनाक्षरब्रह्मणोक्तस्याक्षरस्य अदृश्यत्वादिश्रवणात् । तस्य च "कूटस्थोऽक्षरः" (भ.गी.१५-१६) इत्यादौ श्रीतत्वे प्रसिद्धाक्षरश्रुत्या "अहं सोममाहनसं बिभर्मि" (ऋ.सं.१०-१२५-२)इति लक्ष्मीसूक्ते श्रीतत्वे प्रसिद्धचन्द्राधारत्वस्य "एतस्य वाऽक्षरस्य शासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" (बृ.उ.५-८-९)इति श्रवणेन सूर्याधारत्वलिङ्गेन च श्रीतत्त्वरूपत्वेन अविष्णुत्वात् प्राचीनोऽपि श्रीतत्त्वमेव। द्वयोः अपरिच्छेद्यवैभवायोगात् इत्यतः प्राप्तं **अक्षरमम्बरान्ते**त्यादिसूत्रत्रयम् । तदर्थः **सोऽक्षर** इति। अत्राक्षरशब्देन यौगिकः तदर्थोऽविनाशी ग्राह्यः तथा प्रस्तावात्। पूर्ववदनुषङ्गः। स इति सर्वाश्रयपरामर्शः।

"एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" (बृ.उ.५-८-११)इतीह श्रुतौ आकाशशब्दितप्रकृतिद्वारा श्रुतः सः पृथिव्यादिप्रकृत्यन्तसर्वाश्रयः अक्षरः अक्षरशब्दार्थोऽविनाशी स प्राक् दृश्यत्वाद्युज्झितत्वेनोक्तः स एको जनार्दनः।

तथा च अविनाशित्वरूपप्रवृत्तिनिमित्तसाम्येन तद्वदन्यत्र च वाचकैः ''एतस्मिन्नक्षरे'' इत्यक्षरतद्विशेषणसर्वशब्दैः मुख्यतः चतुर्विधनाशराहित्यरूपयोगरूढिभ्यां एको जनार्दन एव वाच्यो न श्रीतत्वम् ।

कुतः ? **अक्षरो विष्णुः सर्वैर्लिङ्गैर्युतो हि** । ''भूतं भवच्च भविष्यच्चेत्याचक्षते। आकाश एव तदोतं च प्रोतं च'' इति ''अक्षरे आकाश ओतश्च ।'' इत्यादिनोक्ताम्बरान्तशब्दित-प्रकृत्यन्तसर्वाधारत्व-प्रशासनशब्दितासङ्कुचितानन्यायत्ताज्ञामात्राधीनसर्वधारकत्वं अस्थूल-मनण्वित्यादिवाक्योक्त प्राकृतस्थौल्यादिराहित्यअप्राकृताणुत्वमहत्त्वादिरूपैतत्प्रकरणश्रुत-सर्वलिङ्गैर्युतत्वात् । तेषां भाष्योक्तवाक्यैः वैष्णवत्वस्य प्रसिद्धत्वादित्यर्थः ।

अत्रैक इति ''एकः शास्ता'' इति वाक्यसूचनाय । जनार्दन इत्यक्षरत्वरूपा-विनाशित्वसूचनाय। प्रागुक्तैव निरुक्तिः। स इति अम्बरान्तधृतिरूपहेतुसूचनाय चन्द्राधारत्वस्य सावकाशत्वसूचनाय च ।

नन्वथापि सर्वकर्ता विष्णुरित्ययुक्तम् । छान्दोग्ये षष्ठे(२१) ''सदेव सोम्येदमग्र आसीत्'' ''एकमेवाद्वितीयम्'' इत्यादिना बहुप्रकारेषु श्रुतसच्छब्दोक्तस्यावधारणेन एकपदादिना चानन्याधीन-कारणत्वस्य ''तत्तेजोऽसृजत'' इति, ''सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः'' इति, ''सता सोम्य तदा सम्पन्नो भवति'' इत्यादिना अत्र सृष्टिस्थितिमुक्तिसुप्तिप्रलयहेतुत्वादेश्चोक्तेः। सच्छब्दितस्य च ''तदैक्षत बहुस्यां प्रजायेय'' (छां.उ.६-२-३)इति बहुभवनरूपविकारश्रवणेन प्रधानत्वादीक्षणस्य च जडे अभिमानिद्वारा वा ''सत्वात्सञ्जायते ज्ञानं'' इति ज्ञानोपादानत्वाद्वा युक्तत्वान्निर्विकारे हरौ च विकारस्य सर्वथाप्ययोगादित्यत प्राप्तम् - **ईक्षतिकर्मव्यपदेशात्स** इति। तदर्थः - **सन्** इति । अत्रापि पूर्ववद्यौगिकः सच्छब्दार्थो निर्दोषत्वादिशिष्टो वा स्वातन्त्र्यादिविशिष्टो वा सन्निति निर्दिश्यते प्रकरणवशात् । ''यच्छब्दा योगवृत्तयः'' इति वक्ष्यमाणानुरोधाच्च । पूर्ववदनुषङ्गः। ''सदेव सोम्य'' इत्यादौ सृष्टिस्थाने सच्छब्दोक्तः सन्निर्दोषादिर्वा। स्वतन्त्रो वा सः प्राक् सर्वकर्तृत्वेनोक्तः एको जनार्दनः। तथा च कारणत्वमुखेन तदन्यत्र च वाचकत्वेन प्रतीतैः ''सदेव सोम्य'' ''सन्मूलाः सोम्य'' इत्यादिना अनेकप्रकरणेषु श्रुतैः सर्वैः सच्छब्दैः तद्विशेषणैरेक एवेत्यादिशब्दैः मुख्यतो जनार्दन एव वाच्यो न प्रकृतिः। कुतः ? **सन्विष्णुः लिङ्गैः सर्वैर्युतो हि** । ईक्षितृत्वस्रष्टृत्वाद्वितीयत्वाद्यैः लिङ्गैर्युतत्वादिति वा, तैर्युतः सन् जनार्दनः। तेषां भाष्योक्तवाक्यैः विष्णावेव मुख्यत्वप्रतीतेरिति वाऽर्थः।

न च बहुभवनविरोधः। सन्निति सच्छब्दार्थोक्त्या तेजः प्रभृत्यात्मना विकाररूपदोषाभावस्य जनार्दन इत्यत्राजत्ववाचिजनपदेन, ''अजायमानो बहुधा विजायते'' (तै.आ.३-१३-१)इति श्रुतिसिद्धस्वरूपबहुभावस्य च दर्शितत्वात्। अर्दन इत्यंशेन चात्र ''सत्प्रतिष्ठाः'' इत्यादिना

श्रुतमुक्तिहेतुत्वं च तस्यैवेति सूचितम् । एक इत्युक्तिर्न भिन्नजडरूपेण बहुभवनं किन्तु स्वाभिन्ननानानियामकरूपेणेति सूचयितुम् ।।४।।

नन्वथापि "सोऽक्षरः" इति सूर्यचन्द्रादिसर्वाधारोऽक्षरो हरिरित्ययुक्तम् । छान्दोग्येऽष्टमे "ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरेऽस्मिन्नन्तराकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यं" इत्यादिना हृत्पद्मस्थं किञ्चिदुक्त्वाऽस्य "उभे अस्मिन् द्यावापृथिवी सूर्याचन्द्रमसावुभौ" इत्यादिना सूर्यचन्द्रादिसर्वाधारत्वोक्तेः हृत्पद्मस्थस्य चाकाशश्रुत्याकाशत्वात् "हृदि ह्येष आत्मा" इत्यादेः जीवत्वाद्वेत्यतः प्राप्तं – **दहर उत्तरेभ्य** इत्यादिसूत्राष्टकम् । तदर्थो **हृदब्जग** इति। पूर्ववदनुषङ्गः। सर्वाश्रयः सन्निति वर्तते। "तस्मिन् यदन्तः" इत्यादौ हृत्स्थाकाशस्थतया परम्परया श्रुतो वा साक्षात्परम्परा साधारण्येन वा, अथवा पृथिव्यादिसर्वाश्रयः सन्सर्वाधारो भूत्वा हृदब्जगः हृत्पद्मस्थः। सः "सोऽक्षरः" इत्यत्र सर्वाधारत्वेनोक्तः एको जनार्दनः तस्मात् "यो वेद निहितं गुहायां" (तै.उ.२-१)इति श्रुतेः विष्णाविव "तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितं" "हृदि ह्येष आत्मा" इति श्रुत्यन्तरादन्यत्र वाचकतया प्रतीतैः "यदन्तस्तदन्वेषितव्यं तद्वाव विजिज्ञासितव्यं किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यं यावान्वा अयमाकाशः" इति श्रुतौ यदन्तराकाश इत्यादिसर्वशब्दैः हृत्पद्मस्थनिष्ठैर्मुख्यतोऽन्वयात् आकाशस्थ एको जनार्दन एव वाच्यो नत्वनेको जीवादिः। कुतः? उक्तरूपहृदब्जगो विष्णुः **लिङ्गैः सर्वैर्युतो हि** । उपलक्षणमेतत्। बाहुल्यात्स्वशब्देन लिङ्गोक्तिः आत्मब्रह्मश्रुति अपहतपाप्मत्वादिसत्यकामत्वादिसुप्तप्रजाप्राप्यत्व-अरण्याख्यसुधासमुद्राश्रयलोकवत्त्वसर्वलोकाधारत्वादिलिङ्गवाजसेनयतैत्तिरियसमाख्यानैर्युतत्वात् तेषां भाष्योक्तवाक्यैः विष्णौ प्रसिद्धेरिति। एतेषां जीवाकाशयोरसम्भवात्, मुक्तजीवस्यापहतपाप्मत्वादेः सम्भवेऽपि तस्य हृत्पद्मस्थत्वाभावात्, ईशायत्तत्वेन निरपेक्षस्य तस्यासम्भवाच्चेति भावः।

तथा हि वाक्यशेषाः । "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः" (बृ.उ.५-५)इत्यादौ आत्मश्रुत्यपहतपाप्मत्वादिलिङ्गानि । तथा "प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" (बृ.उ.५-८-११)इत्यत्र सुप्त-प्रजाप्राप्यत्वब्रह्मलिङ्गश्रुती। ब्रह्मणो लोको ब्रह्मलोक इति हृत्पद्मस्थस्य ब्रह्मलोकत्वोक्त्या तत्स्थस्य ब्रह्मशब्दवत्त्वस्य सुप्तप्राप्यत्वस्य च सिद्धेः। तथा "अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोक" (छा.उ.८-५-३)इत्युत्तरवाक्ये सुधासमुद्राश्रयविष्णुलोके प्रयुक्तब्रह्मलोकपदस्य हृत्पद्मे ब्रह्मलोकं न विन्दन्ति इति प्रयोगेण तत्स्थस्य तादृशसमुद्राश्रयलोकवत्त्वस्य च सिद्धेः।

तथा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय इति सर्वलोकधारणसमर्थः सेतुराश्रय इत्युक्तेः। "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी" ()इत्यादिवाजसनेयश्रुतौ, "यत्पुण्डरीकं पुरमध्यसंस्थम्। तत्रापि दहरं गगनं विशोकः। तस्मिन् यदन्तस्तदुपासितव्यम्" (म.ना.उ.१०-७) इति तैत्तिरीयश्रुतौ चैकार्थ्यप्रतीतेः।

नन्वेवं "किं तदत्र विद्यते" इति प्रश्नस्य ब्रह्म विद्यत इति परिहारं विना "यावान्वा" इत्यादेरनन्वय इत्यतोऽपि **हृदब्जग** इति। सर्वाश्रय इत्यादि सर्वमिहान्वेति । अयमर्थः। कीदृशं तदत्र विद्यत इति प्रश्ने यावान्परमात्माऽऽकाशाख्यः पूर्णगुणस्तिष्ठति तावान् पूर्णगुणो हृदब्जगः हृद्ययनात् हृदयनामके हृत्पद्मस्थाकाशे विद्यमानः सः द्यावापृथिव्यादिसर्वाश्रयः अक्षर सन्नविनाशी सन् "नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते" इत्याद्युक्त्या देहनाशेऽप्यनश्यन् सन्विद्यमानः अपहतपाप्मेत्याद्युक्तापहतपाप्मत्वादिलिङ्गैः सर्वैर्युत इति वाक्यान्वय इति।

सर्वाश्रयो हृदब्जगो हरिरित्युक्तौ च "तस्यान्त" इति वाक्ये सुषिरे सर्वाधारत्वोक्तिरपि मन्दिरे मणिमालेतिवत् सुषिरस्थहर्यपेक्षया समाहिता । अल्पस्थानत्वं च खवत् सर्वग इत्यत्र समाहितमिति भावः।

ननु व्योम्नोंऽशतोऽल्पस्थानमित्युपपत्तावपि विष्णोरंशतोऽपि व्याप्तत्वान्न खवदुपपत्ति-रित्यस्याप्युत्तरम् - **पूर्णगुणो हृदब्जग** इति। सर्वगतत्वादिगुणपूर्णत्वेनैव हृदब्जगतत्वस्य "एष म आत्माऽन्तर्हृदये ज्यायान्" (छा.उ.३-१४-३)इत्यादिश्रुतिप्रसिद्धेरिति हेरर्थः। अचिन्त्यशक्त्योपपत्तेरिति भावः।

जनार्दन इति संसारार्दको हृदब्जग इत्युक्त्या "परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मा" इत्येतच्छब्देन जीवं परामृश्य हृत्पद्मस्थतया प्रागुक्तात्मत्वविधानात् सर्वाश्रयो हृदब्जगो जीव इति निरस्तम्। ज्योतिःपदोक्तस्य मोचकस्यैव एष इति परामृश्यात्मत्वोक्तेः जीवपरामर्शा-भावादिति। अजत्ववाचिना जनेत्यंशेन देहनाशेऽप्यनश्यन्निति प्रागुक्तो वाक्यान्वय उपपादितः।

हृदब्जगो हरिः पूर्णगुण इत्युक्त्यैव "तदेतत्सत्यं ब्रह्मपुरं" इति देहवाचिपदप्रयोगादात्मा न विष्णुरिति प्रत्युक्तम् । ब्रह्मैव पूर्णत्वात्पुरमित्युपपत्तेः। एक इत्यनेककोटिकपूर्वपक्षनिरासायेति।।५।।

नन्वथापि दृश्यत्वाद्युज्झितो विष्णुरित्यसाधु । काठके (२-२-२)

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयं किमु भाति न भाति वा।

इति पूर्वोत्तराभ्यां अर्धाभ्यां तेषां सुखं शाश्वतं इति पूर्वप्रकृतज्ञानिसुखपरामर्शेन तस्यादृश्यत्वाज्ञेयत्वयोरुक्तेरित्यतः प्राप्तं - **अनुकृतेस्तस्य च** इति सूत्रद्वयम् । तदर्थः - **सूर्यादिभासक** इति।

उपलक्षणमेतत् । "न तत्र सूर्यो भाति" इति वाक्योक्तसूर्याद्यप्रकाश्यः "तस्य भासा" (का.उ.२-२-३)इति वाक्योक्तजगत्प्रकाशकश्चेत्यपि ग्राह्यम् । पूर्ववदनुषङ्गः । "तमेव भान्तमनुभाति सर्वं" (का.उ.२-२-३)इत्युत्तरवाक्ये यस्य परमात्मनो रूपमनिर्देश्यं परमं सुखं कथं नु तदित्यादिर्भावं प्रार्थयन्ते तं परमात्मानं भान्तमनुसृत्य सर्वं सूर्यचन्द्रतारकादितेजोजातं भाति

प्रकाशत इत्यादिना श्रुतः सूर्यादिभासकः सः प्राक् दृश्यत्वाद्युज्झितत्वेनोक्त एको जनार्दनः। न तु ज्ञानिसुखम् । तत्तस्मात्साधारण सुखश्रुत्या तदन्यवाचकतया प्रतीतैः तदेतच्छब्दै आनुकूल्येन गृह्यमाणनिष्ठैः सर्वैरेको जनार्दनो मुख्यतो व्यवहितपरामर्शनपुंसकक्लेशादिना विना वाच्यः। "यतो वाचो" इत्यादिश्रुतौ प्रसिद्धं यदनिर्देश्यं परमं सुखं कथं नु तद्विजीयामित्यानुकूल्येन गृह्णन्ति तदनिर्देश्यं सुखम् । एतत् "चेतनश्चेतनानां" इति सन्निहितपरमात्मनो रूपमिति मन्यन्त इति वाक्ययोजनोपपत्तेः। कुत एवं कल्पनेत्यतः प्रागुक्तमुपलक्षमं मत्वाऽऽह **लिङ्गैर्युतो हि** । सूर्यादितेजोराशिभासकत्वलदुपलक्षितसूर्याद्यप्रकाश्यत्वजगत्प्रकाशकत्वलिङ्गैर्युतत्वस्य भाष्योक्त-श्रुतिस्मृतिभिः वैष्णवत्वप्रसिद्धेरित्यर्थः।

अत्रैक इत्युक्तिः"तदेतत्" इति श्रुतौ "एकं रूपं" इति प्राक्प्रकृतरूपरामर्श इति वा, "एको बहूनां" इति सन्निहितत्वं वा सूचयितुम् । जनार्दन इत्यजत्वमोचकत्वयोरुक्त्या "नित्यो नित्यानां" इति "तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां शान्तिः" इति हरेः सान्निध्याद्यस्य रूपमेवं सुखरूपं तमेव भान्तं इति प्रागुक्तयोजनासूचनात्तदेतदित्यादिनपुंसकस्य तमित्यादिपुल्लिङ्गस्य चोपपत्तिरित सूचितम् । अत एवानुग्राह्यत्वस्य समन्वयलिङ्गस्य निर्देशे कार्ये सूर्यादिभासकत्वरूप-साधकहेतोरेवोक्तिः। उक्तयोजनोपपादनसूचनार्थत्वात् । सूत्रानुसाराच्चेति।

ननु कथं सूर्यादिभास इति। कर्तरि च (पा.सू.२-२-१६)इति सूत्रे तृजकाभ्यां योगे कर्तृकर्मणोः कृति (पा.सू.२-३-६५)इति या षष्ठी सा न समस्यत इति समासनिषेधात्। मैवम् । याजकादिभिश्च (पा.सू.२-२-९) इति प्रतिप्रसवात् । यद्वा (षष्ठी शेषे।पा.सू.२-३-५०) शेषषष्ठीत्वेन समासः । अथवा भासयतीति भासः। नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (पा.सू.३-१-१३४) इति सूत्रे पचादिराकृतिगण इति वृत्तावुक्तत्वात्, अज्विधिः सर्वधातुभ्यो वक्तव्य इति महाभाष्योक्तेर्वा, यङोचि च (२-४-७४)इति सूत्रे अजग्रहणेन सर्वधातुभ्योऽच्प्रत्ययविधेः मञ्जर्यां ज्ञापितत्वाद्वा, अच्प्रत्ययान्तण्यन्तभासशब्देन सूर्यादेर्भासः सूर्यादिभास इति समासः। अज्ञाते(पा.सू.५-३-७३) इति सूत्रेण कप्रत्यये सूर्यादिभासक इत्युपपत्तेः। यथोक्तं लिङ्गपादे सुधायां तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः । (१-२-२)इत्येतद्व्याख्यावसरे तत्तच्छक्तिप्रबोध इति कथं कर्तरि चेति समासनिषेधात् । न । याजकादिभिश्चेति प्रतिप्रसवात् । यद्वा प्रकृष्टो बोधो यस्मादिति वा, पचाद्यजन्तत्वेन वा प्रबोधः। शक्तीनां प्रबोधः शक्तिप्रबोधः। ततश्चाज्ञात इति कप्रत्यय इति।।६।।

नन्वथापि विष्णुरेव जिज्ञास्य इत्युक्तमयुक्तम् । काठके " अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानः" (२-१-१२) इत्युक्त्वा

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वेदेवा उपासते (२-२-३) इतीशानस्यैव जिज्ञास्यत्वोक्तेः।

"सोपासना च द्विविधा" इत्युक्तोपासनाजिज्ञासयोरैक्यात् । ईशानस्य "एवमेवैष प्राणः" (प्र.उ.३-४)इत्यादिश्रुत्यन्तरप्रसिद्धप्राणव्यवस्थापकत्वादिरूपमुख्यप्राणलिङ्गानां ईशाने "ऊर्ध्वं प्राणं" इति श्रवणेन मुख्यप्राणत्वेन तस्यापि जिज्ञास्यत्वप्राप्त्या मोचकत्वस्यापि स्वातन्त्र्येण प्राप्तेरित्यतः प्राप्तं शब्दादेव प्रमित इत्यादि सूत्रद्वयम्। तदर्थः **प्राणप्रेरक** इति। पूर्ववदनुषङ्गः । "ऊर्ध्वं प्राणं" ५१ (क.उ.२-२-३) इति वाक्ये श्रुतः प्राणप्रेरकः प्राणानां प्राणोपलक्षितप्राणादिवायूनां व्यवस्थापक सः प्राग् जिज्ञास्यत्वेनोक्तः एको जनार्दनः। न तु मुख्यप्राणः। तस्मात्प्रेरकत्वसाम्येन तदन्यत्रापि वाचकतया प्रतीतेशानशब्दतद्विशेषणाङ्गुष्ठमात्रादि सर्वशब्दैः मुख्यतः स्वारस्येन वाच्य एव। कुतः? प्राणप्रेरको विष्णुः लिङ्गैर्युतो हि। लिङ्गशब्दोऽत्र श्रुतेरप्युपलक्षकः। "मध्ये वामनं" (क.उ.२-२-३) इति विष्णौ प्रसिद्धवामनश्रुत्या ईशानो भूतभव्यस्य इत्युक्तासङ्कुचितभूत-भव्येशितृत्वविश्वदेवोपास्यत्व "विमुच्यत" इति श्रुतमोचकत्व "इतरेण तु जीवन्ति" इत्यादिनोक्तमुख्यप्राणादिसर्वजीवनदत्वादिलिङ्गैश्च युतत्वात्तेषां वैष्णवत्वप्रसिद्धेरित्यर्थः। सूत्रे "शब्दादेव" इत्युक्तावपि लिङ्गानामप्युक्तिः शब्दादेवेत्युपलक्षणमिति सूचनाय। व्यक्तमेतत् "कम्पनात्" (ब्र.सू.१-३-३९)इत्यत्र टीकायाम्। सुखविशिष्टाभिधानादेव इत्यत्रेव शब्दादेव किमु लिङ्गैरिति सूचनाय वा ।

अङ्गुष्ठमात्रत्वं तु शास्त्रस्य मनुष्याधिकारिकत्वेन तत्तदङ्गुष्ठमितहृदयस्थस्य उपचारेण युक्तमिति भावः। "एको जनार्दन" इत्येकस्यैव मोचकत्वसूचनात् विश्वदेवोपास्यत्वमन्यस्य न मुख्यमिति सूचितम्।

अत्रेशानपदस्य विष्णवर्थत्वे वक्तव्ये "ऊर्ध्वं प्राणं" (२-२-३)इति वाक्योक्तलिङ्गस्य वैष्णवत्वोक्तिः पूर्वपक्षमूलभञ्जनाय वा ईशानपदप्रवृत्तिनिमित्तं ईशान् मुख्यप्राणादीन् अनिति प्रेरयतीति ईशानपदस्य योगवृत्त्या वैष्णवत्वं सूचयितुं वेति। अत एव पूर्वपक्षलिङ्गस्य सावकाशत्वादेव आक्षिप्तमपि विश्वदेवोपास्यत्वादिलिङ्गं सिद्धान्तसाधकमेव। व्यक्तमेतदपि "कम्पनात्" इत्यत्र टीकायाम् । यद्वा ईशं प्राणमुन्नयतीति व्युत्पत्त्या यौगिकेशानपदार्थस्यैवायं निर्देशः। समासः प्राग्वत् ।।७।।

ननु विश्वे देवा उपासते इत्ययुक्तम् । देवानां तत्पदविशिष्टानां आद्यन्तवत्त्वे पूर्वं पश्चाच्च देवताऽभावेन तदुद्देशेन हविषः त्यागायोगेन कर्मविरोधापत्त्या "इन्द्रागच्छ" इत्याद्यनादिनित्यवेदस्य पूर्वोत्तरं वाच्यहीनत्वेन अप्रामाण्यापत्त्या चानादिनित्यत्वे वाच्ये तादृशानां मोक्षे अर्थित्वाभावेन तद्धेतुभगवदुपासनायां अनधिकारादित्यतः प्राप्तं - **तदुपर्यपि बादरायण** इत्यादिसूत्राष्टकम् । तदर्थः **देवतैरपि ज्ञेय** इति।

अस्य नयस्य साक्षाद्समन्वयपरत्वेन प्रासङ्गिकत्वादेको जनार्दन इत्येवान्वेति। एवमग्रेऽपि वेदैरितीहाप्याकृष्यते। बहुवचनमाद्यर्थे। षण्णां च सप्तानां चोद्गातृणां चमसभक्ष इत्यादाविव।

यद्वा ''वेदा इत्येव शब्दिताः'' इति न विलक्षणत्वनयभाष्योक्तस्मृत्या वेदशब्दस्यैव वेदादीत्यर्थः। एको जनार्दनो दैवतैरपि कर्तृभिः वेदैः वेदादिभिः करणैः ज्ञेयः। न केवलं मनुष्यैरित्यपेरर्थः।

तेन देवानां मनुष्यतादशायामिव देवतादशायामपीति सूचनात्, योग्यमनुष्याणां विद्याकर्मभ्यां देवत्वप्राप्त्या देवानामाद्यन्तवत्त्वेन अतिशयितफले मोक्षेऽर्थित्वसम्भवात्, सामर्थ्यविशिष्टबुद्ध्यादेः देवत्वादेव सिद्धेर्निषेधाभावाच्च अधिकारप्रयोजकस्य अनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वस्य सत्त्वेनाधिकारावश्यंभावादिति भावः। न चैवं देवतानामाद्यन्तवत्त्वे कर्मणि शब्दे च विरोधः। दैवतैरिति बहुवचनसूचनेन देवतानां बहुत्त्वसूचनात् । पूर्वोत्तरकालयोः इदानीन्तनेन्द्रादिदेवताऽभावेऽपि तदन्यदेवतासत्त्वेन तदुद्धेशेन कर्मानुष्ठानस्य तत्प्रतिपादकानादिनित्यशब्दप्रामाण्यस्य चोपपत्तेरिति भावः।

न च तेषां बहुत्वेऽपि नानानामरूपादिमत्त्वेन एकरूपवेदप्रामाण्यविरोध इत्यतोऽपि **दैवतैः** इति। देवतानां सम्बन्धिभिर्दैवतैरित्यर्थः। ''एकैव वा महानात्मा देवता'' इत्यनुक्रमणिकादौ प्रतिपाद्ये दैवतापदप्रयोगस्य प्रसिद्धेः। या देवता इदानीं ''इन्द्र आगच्छ'' इत्यादिभिः प्रतिपाद्यते तत्सम्बन्धिभिः तज्जातीयैः तत्समानरूपधर्मकर्मवद्भिरनेकैः पूर्वोत्तरकालीनैर्दैवतैः ज्ञेय इत्यर्थः।

न च प्रलये देवताऽभावादप्रामाण्यं वेदस्येत्यतोऽपि दैवतैरिति देवतानां इन्द्रादीनां सम्बन्धिभिः तत्प्रतिपादकैरपि वेदैरेको जनार्दनोऽनादिनित्यो ज्ञेयः । प्रतिपाद्य इत्यर्थः। ''सृजतो हि ते श्रुतयोऽनुवर्तन्ते नैवासृजतः कं विदधते कं वा निषेधन्ति स्तुतिमात्रा एव ते स्युः'' इति, लयस्य त्वष्टमो भागः सृष्टिकाल उदाहृतः । तत्रैव वेदसञ्चारो ह्यन्यदा स्तुतिमात्रकाः। इति श्रुतिगीतातात्पर्योक्तश्रुत्यादेः तदा भगवन्मात्रविषयत्वोपपत्तेरिति भावः।

ननु मोक्षेतरफलार्थब्रह्मकर्मविद्याफलानां वसुत्वादीनां तैराप्तत्वान्न तास्वधिकारः। नापि मोक्षार्थासु। तेषां सार्वज्ञेन मुक्तिहेतुविद्यासाध्यज्ञानस्य प्रागेव सिद्धत्वादत्यतोऽपि **दैवतैरपि** इति ।

प्राप्तवसुत्वादिफलैरपि दैवतैर्वस्वादिदेवैर्वेदैः। कार्त्स्न्यं बहुवचनार्थः। मोक्षार्थैः मोक्षेतरफलार्थैः कर्मब्रह्मविद्यारूपैरशेषैः वेदैर्ज्ञेय इत्यर्थः। मोक्षरूपफलसाधनज्ञानेतिशयसत्त्वात् । तथा दैवतैस्तन्त्रम् । साऽस्य देवतेत्यादौ सम्प्रदाने देवतापदप्रयोगाद्देवतासम्बन्धीनि देवतोद्देशेन क्रियमाणानि यज्ञादिकर्माणि तैर्दैवतैर्यज्ञादिकर्मभिः जनार्दनः संसारमोचको ज्ञेय आराध्य इत्यर्थः। तथा दैवतानां मुख्यसार्वज्ञाभावेन मुक्तिहेतुज्ञानेऽतिशयसत्त्वेन मोक्षार्थासु ज्ञानमात्रसाध्यमोक्षगतातिशयसत्त्वेन च मोक्षेतरासु कर्मविद्यास्वधिकारोऽस्त्विति भावः।

"अङ्गावबद्धास्तु" इति वक्ष्यमाणदिशा अन्येषां ज्ञेयत्वेऽपि एको जनार्दनो ज्ञेय इत्युक्तिः "तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" (आ.उ.२-६)इत्युक्तदिशा स्वस्वयोग्यविमुक्त्यै प्राधान्येन स एको भवबन्धमोचकत्वात् ज्ञेय इति सूचयितुम् ।।८।।

**आनन्दमाला** – अतीतपादयोर्नामलिङ्गशब्दवाच्यत्वं विष्णोरयोगव्यवच्छेदेन साधितम्। तदेवान्ययोगव्यवच्छेदेनापि साधयत्यस्मिन् पादे। उपपन्नश्चैवम्भावः। शास्त्रयोनिसमन्वयसूत्राभ्यां तद्वत् प्रतिज्ञाततत्वात् ।

"अथ परा" (आ.उ१-५) इत्यादौ परविद्याविषयत्वेनोक्तस्य विष्णोः "यस्मिन्द्यौः" (आ.उ२-६) इत्यादिके द्युभ्वाद्यायतनवाक्ये प्राणाधारत्वं श्रुतम् । "प्राणानां ग्रंथि" (म.ना.उ.३५) इत्यादौ रुद्रस्यापि तत्प्रतीतेः सोऽपि द्युभ्वाद्यायतनं स्यादित्याशङ्क्याह – "द्युभ्वाद्यायतनं स्वशब्दात्" (१-३-१)इत्यधिकरणम् **सर्वाश्रय** इति ।सर्वस्य द्युभ्वादेश्चराचरस्य जगत आयतनं स्थानमाश्रयस्त्वेको नारायण एव श्रुतिस्मृतिप्रसिद्धः। सर्वेषामात्मा स्वामी च मुख्याश्रय उक्तः। स एव हि मुक्तानामपि सर्वेषामुपसृप्य आश्रयः।

न चानुमितरुद्र सर्वाश्रयः उच्यते। तच्छब्दाभावात्, अन्यशब्दभावाच्च । अत एव न जीवो वायुश्च द्युभ्वाद्याश्रयः। अत्रेशजीवयोराश्रयाश्रयिभावलक्षणः केवलभेदश्च सूचितः। तस्माद् ब्रह्मरुद्रादिजगतो विष्णुरेवाश्रय इति भावः ।।१।।

"भूमा सम्प्रसादादध्युपदेशात्" (१-३-८) इत्यधिकरणम् । **पूर्णगुणः** इति। पूर्णाः सद्गुणा अस्येति पूर्णगुणो भूमा भूयानिति भावः। अथ वा पूर्णत्वं नाम गुणः पूर्णगुणः । भूमाख्यगुण इति यावत् । तच्च पूर्णत्वं ज्ञानानन्दादिगुणानां प्रत्येकमस्ति। गुणिनोऽपि हरेः पूर्णत्वं विशेषतो विद्यते। तदेतत् पूर्णत्वम् , स वै भूयान् , "यो वै भूमा" (छां.उ.७-२३-१)इति श्रूयते। सोऽयं भूमा वायुर्वा, आहोस्विद् विष्णुरिति संशयः। आशाया भूयस्त्वात् वायुरित्यन्यमतम् । पूर्णसुखत्वात् सर्वेभ्योऽपि भूयस्त्वात् सर्वगतत्वाद्युपपत्तेश्च विष्णुरेव भूमेति सिद्धान्तसारः।

ननु गुणानां गुणान्तरकल्पने तस्यापि तथेत्यनवस्था। तेषां द्रव्यैक्ये च पुनर्गुणत्वमद्रव्यत्वं वा स्यात् । अन्यतरमात्रत्वात् । अतोऽन्योन्यभिन्नत्वात् सम्बन्ध एव गुणगुणिनोर्वाच्य इति। मैवम्। सम्बन्धपक्षे एवानवस्थादिदोषदर्शनात् । तस्य स्वनिर्वाहकत्वे द्रव्यस्यैव तथात्वं सुकल्पम्। अतोऽस्मत्पक्षे नाऽनवस्था। वस्त्वन्तरत्वानभ्युपगमात्। न च तावता गुणमात्रत्वं गुणिमात्रत्वं वा कल्पनीयम् । एकस्यैव द्रव्यस्य स्वाभाविकविशेषमात्रेण बहुभावाद् गुणगुण्यादिव्यवहारस्य च सुकरत्वात् । अतो वैशेषिकदोषा नास्माकं शङ्क्या इत्यभिप्रायेण गुणगुणिनोरभेदं साधयामास। कुतस्तर्हि पूर्णत्वगुण इति त्वप्रत्ययं न चकारेति चेदुच्यते। त्वप्रत्यये कृते गुणस्य द्रव्यभाव एव

विहितः स्यात् । न पुनर्गुणस्य च गुणान्तरं तदभेदश्चास्तीति द्योतितं भवति। अतस्तदपि द्योतयंस्त्वप्रत्ययं विजहौ। विशेषतो गुणिग्रहणार्थत्वाच्च । सर्वे सर्वगुणात्मानः सर्वकर्तार एव च । (अनु.३-२-१९८) इति ह्यनुव्याख्यानम् । अतः पूर्णगुण इति सुष्टूक्तम् ।।२।।

"अक्षरं गार्ग्यदृष्टम्" (बृह.५-८-११)इत्यत्रादृश्यत्वादिगुणकं चित्प्रकृतिः सूर्यादिधारणादित्यत आह - "अक्षरमम्भरान्तधृतेः" (१-३-१०) इत्यधिकरणम् । **सोऽक्षरः** इति। यः "यत्तद्द्रेश्यम्" (आथ.१-१-६)इति पूर्वोक्तो विष्णुः स एवात्राप्यदृश्यत्वादिगुणकोऽक्षर उच्यते। सूर्याद्यतिरिक्तस्याम्बरान्तस्य धृतिवचनात् । दृश्यत्वादिनिवारणेन स्थूलाणुत्वाद्यपि विष्णोर्निवारितम् ।।३।।

"सदेव" (छान्दो.६-२-१) इत्युपक्रान्तं सर्वकारणं सत् प्रधानमित्यत आह - "ईक्षतिकर्मव्यपदेशात् सः" (१-३-१३) इति सूत्रम् । **सन्** इति। नात्रोपादानं सत् प्रधानमुच्यते। किन्तु निमित्तमेव सन् विष्णुरेव । ईक्षतिकर्मव्यपदेशात् ।।४।।

"ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" (छान्दो.८.१.१) इत्यादौ हृदये तावत् किञ्चिदब्जं श्रूयते। तस्मिंश्च स्वल्पो भूताकाशः। उत्तरत्र तु "उभे अस्मिन् द्यावापृथिवी समाहिते" (छान्दो ८-१-३) इत्युक्तत्वात् । सोऽल्पाकाशः सर्वाश्रय इत्यत आह - "दहर उत्तरेभ्यः" इत्यधिकरणम्। **हृदब्जग** इति। न तावद् भूताकाशः सर्वाश्रयो युज्यते। "तस्मिन् यदन्त स्तदन्वेष्टव्यम्" (छान्दो.८-१-१) इत्येव प्रतिज्ञानात् । एवं चेज्जीवस्यापि प्रस्तावात् स एवायमिति चेन्न । तस्य स्वतोपहतपाप्मत्वाद्यसम्भवात् । कस्तर्हि। जीवस्य हृदयाब्जे स्वल्पाकाशगतो महाकाश एव सर्वाश्रयः श्रूयते। कुतः ? "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्" (छान्दो.८-१-३) इत्याद्युक्तेः। स च महाकाशो न पुनर्भूताख्यः। तदसम्भाव्यश्रुतिलिङ्गविरोधात् । कः पुनरिति चेत् उत्तरवाक्यगतैरात्मत्वादिस्वगुणैर्विष्ण्वाख्य एव महाकाशः। सुप्तगम्योऽपि हृदब्जगः प्राज्ञनामको विष्णुरेव । धृत्यादिमहिमोपलब्धिश्चास्यैव साधनीया। सोऽयं हृदब्जग एव नारायणः श्रुतौ प्रसिद्धश्च ।।५ ।।

"अनुकृतेस्तस्य च" (१-३-२२) इत्यधिकरणम् **सूर्यादिभासक** इति। स एव भगवान् सूर्यसोमाग्न्यादीनां तद्भासां च स्वभासैव भासको भवति। अतः स एवानिर्देश्यसुखरूपः ।।६।।

प्राणोन्नयनादिकृत् सर्वदेवोपास्यः श्रूयमाणो न मुख्यप्राण इत्यत आह -"शब्दादेव प्रमितः" (१-३-२४) इत्यधिकरणम् **प्राणप्रेरकः** इति। प्राणापानयोर्मुख्यप्राणस्यापि प्रेरको विष्णुरेवेति वामनशब्दादेव प्रमितः। सोऽयं सर्वेशानः शरीरमध्ये हृदये प्राणोन्नयनादि कुर्वन्नंगुष्ठमात्रस्तिष्ठति। अनङ्गुष्ठवत्सु तिर्यक्षु कथमिति चेत् तद्वता मनुष्याणामेव वेदविद्यायामधिकार इत्यविरोधः ।।७।।

अहो तर्हि देवादिभिर्न वेदैर्ज्ञेयो भगवानिति सर्वदेवोपास्यत्वोक्तिविरोध इत्यत आह - "तदुपर्यपि बादरायणः सम्भवात्" (१-३-२६) इत्यधिकरणम् **दैवतैरपि ज्ञेय** इति। मनुष्यत्वादुपरि देवतापदप्राप्त्यनन्तरमपि तैर्दैवतैर्वेदैर्ज्ञेयो नारायणः। तेषामधिकारवैशेष्येण ज्ञानध्यानाद्युपासन-सम्भवात्। अपिशब्दाद् गन्धर्वादिभिरपि वेदैर्ज्ञेयः। विशिष्टाः स्त्रियस्तिर्यञ्चोऽपि केचिदपि-शब्दसंगृहीताः। न च देवानामनित्यत्वेऽग्निष्टोमादौ मन्त्रे वा कश्चिद् विरोधः। अनेकप्रति-पत्त्याद्यनेकयुक्तिश्रवणात्। न चात्र जैमिनिमतविरोधः। विषयविभागप्रकटनात् ॥८॥

**नृसिंहतीर्थ** - उभयत्र प्रसिद्धनामलिंगात्मकशब्दसमन्वयार्थस्य तृतीयपादस्थस्य आद्याधि-करणस्य द्युभ्वाद्यायतनं स्वशब्दादित्यस्य तात्पर्यम् **सर्वाश्रय** इति। सर्वस्य द्युभ्वादेराश्रय इत्यर्थः। उभयत्र प्रसिद्धभूमशब्दसमन्वयार्थस्य द्वितीयभूमाधिकरणस्य तात्पर्यं **पूर्णगूण** इति। तच्छब्दप्रवृत्तिनिमित्तत्वमेवोक्तम्। 'भू बहौ' बहुः पूर्णतायामिति धातोर्भूमशब्दस्य पूर्णत्वप्रवृत्ति-निमित्तकत्वमेव योग्यतया गुणानां सम्बन्धे गुणपूर्णत्वं भूमशब्दार्थः। गुणपूर्ण इत्यनुक्त्वा पूर्णगुण इत्युक्तौ पूर्णत्वमेव मुख्यतो धात्वर्थः। योग्यतया गुणानां सम्बन्ध इति सूचनं गुणानां प्रत्येकं पूर्णत्वसूचनं च प्रयोजनम्। पूर्णाः प्रत्येकं निरवधिकाः गुणाः यस्येति। उभयत्र प्रसिद्धाक्षर-शब्दसमन्वयार्थस्य अक्षरमम्बरान्तधृतेरिति तृतीयाधिकरणस्य तात्पर्यम् **सोऽक्षर** इति। पूर्वप्रकृतविष्णुपरामर्शकेन स इत्यनेन विष्णुरेवेत्येतत्सर्वत्रानुवर्तत इति सूचयति।

उभयत्र प्रसिद्धसच्छब्दसमन्वयार्थस्य ईक्षतिकर्मव्यपदेशात्स इति चतुर्थाधिकरणस्य तात्पर्यम् **सन्** इति। यद्यप्यस्मिन्नधिकरणे उभयत्र प्रसिद्धस्थानस्य समन्वय इति। अधिकरणोपाधिरनुव्याख्याने उक्तः। तथापि सच्छब्दस्य उभयत्र प्रसिद्धस्य समन्वये स्थानस्याप्युभयत्र प्रसिद्धस्य समन्वयसिद्धि इति परम्पराभिप्रायेण तदुक्तिः। अत एव टीकादौ सच्छब्दस्यैव उभयत्र प्रसिद्धत्वं विषयत्वादिकं च उक्तम्। उक्तं च न्यायविवरणटीकायां(१-३-४) "स्थानमिति स्थाने अनुवर्तमानस्य सन्नाम्नो विवक्षितत्वात्। सन्नामविचारे महान्प्रकरणसन्दर्भो विचारित" इति ज्ञापनाय स्थानमित्युक्तमित्यादि।

उभयत्रप्रसिद्ध हृत्पद्मस्थत्वलिंगसमन्वयार्थस्य दहर उत्तरेभ्य इति पंचमाधिकरणस्य तात्पर्यम् **सूर्यादिभासक** इति। आदिशब्देन चन्द्रादयो गृह्यन्ते। सूर्यादीनां भासकः प्रकाशकः। अत्र समन्वेतव्यलिंगमनुपादाय सैद्धान्तिकलिंगोपादानं तु प्रकारवैचित्र्यदर्शनार्थं क्वचित्समन्वेतव्योपादानं क्वचित्प्रवृत्तिनिमित्तप्रदर्शनं क्वचित्सैद्धान्तिकलिंगोपादानं इत्यादिप्रकारवैचित्र्यप्रदर्शने स्वतन्त्रस्य महर्षेरिच्छैव शरणम्। यथा कथंचिदधिकरणस्य तात्पर्यमिति ज्ञातव्यम्।

उभयत्र प्रसिद्धेशानपदसमन्वयार्थस्य शब्दादेव प्रमित इति सप्तमाधिकरणस्य तात्पर्यम् **प्राणप्रेरक** इति। मुख्यप्राणप्रेरक इत्यर्थः। अत्रापि नेयं समन्वेतव्यशब्दोक्तिः। नापि तत्प्रवृत्तिनिमित्तोक्तिः। नापि सिद्धान्तस्य साधकोक्तिः। किन्तु सिद्धान्तस्य साधकवामनशब्दवाच्यवामनसाधारणधर्मोक्तिः।

विहितः स्यात् । न पुनर्गुणस्य च गुणान्तरं तदभेदश्चास्तीति द्योतितं भवति। अतस्तदपि द्योतयंस्त्वप्रत्ययं विजहौ। विशेषतो गुणिग्रहणार्थत्वाच्च । सर्वे सर्वगुणात्मानः सर्वकर्तार एव च । (अनु.३-२-१९८) इति ह्यनुव्याख्यानम् । अतः पूर्णगुण इति सुष्ठूक्तम् ।।२।।

"अक्षरं गार्ग्यदृष्टम्" (बृह.५-८-११)इत्यत्रादृश्यत्वादिगुणकं चित्प्रकृतिः सूर्यादिधारणादित्यत आह - "अक्षरमम्भरान्तधृतेः" (१-३-१०) इत्यधिकरणम् । **सोऽक्षरः** इति। यः "यत्तद्द्रेश्यम्" (आथ.१-१-६)इति पूर्वोक्तो विष्णुः स एवात्राप्यदृश्यत्वादिगुणकोऽक्षर उच्यते। सूर्याद्यतिरिक्तस्याम्बरान्तस्य धृतिवचनात् । दृश्यत्वादिनिवारणेन स्थूलाणुत्वाद्यपि विष्णोर्निवारितम् ।।३।।

"सदेव" (छान्दो.६-२-१) इत्युपक्रान्तं सर्वकारणं सत् प्रधानमित्यत आह - "ईक्षतिकर्मव्यपदेशात् सः" (१-३-१३) इति सूत्रम् । **सन्** इति। नात्रोपादानं सत् प्रधानमुच्यते। किन्तु निमित्तमेव सन् विष्णुरेव । ईक्षतिकर्मव्यपदेशात् ।।४।।

"ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" (छान्दो.८.१.१) इत्यादौ हृदये तावत् किञ्चिदब्जं श्रूयते। तस्मिंश्च स्वल्पो भूताकाशः। उत्तरत्र तु "उभे अस्मिन् द्यावापृथिवी समाहिते" (छान्दो ८-१-३) इत्युक्तत्वात् । सोऽल्पाकाशः सर्वाश्रय इत्यत आह - "दहर उत्तरेभ्यः" इत्यधिकरणम्। **हृदब्जग** इति। न तावद् भूताकाशः सर्वाश्रयो युज्यते। "तस्मिन् यदन्त स्तदन्वेष्टव्यम्" (छान्दो.८-१-१) इत्येव प्रतिज्ञानात् । एवं चेज्जीवस्यापि प्रस्तावात् स एवायमिति चेन्न । तस्य स्वतोपहतपाप्मत्वाद्यसम्भवात् । कस्तर्हि। जीवस्य हृदयाब्जे स्वल्पाकाशगतो महाकाश एव सर्वाश्रयः श्रूयते। कुतः ? "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्" (छान्दो.८-१-३) इत्याद्युक्तेः। स च महाकाशो न पुनर्भूताख्यः। तदसम्भाव्यश्रुतिलिङ्गविरोधात् । कः पुनरिति चेत् उत्तरवाक्यगतैरात्मत्वादिस्वगुणैर्विष्ण्वाख्य एव महाकाशः। सुप्तगम्योऽपि हृदब्जगः प्राज्ञनामको विष्णुरेव । धृत्यादिमहिमोपलब्धिश्चास्यैव साधनीया। सोऽयं हृदब्जग एव नारायणः श्रुतौ प्रसिद्धश्च ।।५ ।।

"अनुकृतेस्तस्य च" (१-३-२२) इत्यधिकरणम् **सूर्यादिभासक** इति। स एव भगवान् सूर्यसोमाग्न्यादीनां तद्भासां च स्वभासैव भासको भवति। अतः स एवानिर्देश्यसुखरूपः ।।६।।

प्राणोन्नयनादिकृत् सर्वदेवोपास्यः श्रूयमाणो न मुख्यप्राण इत्यत आह -"शब्दादेव प्रमितः" (१-३-२४) इत्यधिकरणम् **प्राणप्रेरकः** इति। प्राणापानयोर्मुख्यप्राणस्यापि प्रेरको विष्णुरेवेति वामनशब्दादेव प्रमितः। सोऽयं सर्वेशानः शरीरमध्ये हृदये प्राणोन्नयनादि कुर्वन्नंगुष्ठमात्रस्तिष्ठति। अनङ्गुष्ठवत्सु तिर्यक्षु कथमिति चेत् तद्वता मनुष्याणामेव वेदविद्यायामधिकार इत्यविरोधः ।।७।।

अहो तर्हि देवादिभिर्न वेदैर्ज्ञेयो भगवानिति सर्वदेवोपास्यत्वोक्तिविरोध इत्यत आह – ''तदुपर्यपि बादरायणः सम्भवात्'' (१-३-२६) इत्यधिकरणम् **दैवतैरपि ज्ञेय** इति। मनुष्यत्वादुपरि देवतापदप्राप्त्यनन्तरमपि तैर्दैवतैर्वेदैर्ज्ञेयो नारायणः। तेषामधिकारवैशेष्येण ज्ञानध्यानाद्युपासन-सम्भवात्। अपिशब्दाद् गन्धर्वादिभिरपि वेदैर्ज्ञेयः। विशिष्टाः स्त्रियस्तिर्यञ्चोऽपि केचिदपि-शब्दसंगृहीताः। न च देवानामनित्यत्वेऽग्निष्टोमादौ मन्त्रे वा कश्चिद् विरोधः। अनेकप्रति-पत्त्याद्यनेकयुक्तिश्रवणात्। न चात्र जैमिनिमतविरोधः। विषयविभागप्रकटनात् ॥८॥

**नृसिंहतीर्थ** – उभयत्र प्रसिद्धनामलिंगात्मकशब्दसमन्वयार्थस्य तृतीयपादस्थस्य आद्याधि-करणस्य द्युभ्वाद्यायतनं स्वशब्दादित्यस्य तात्पर्यम् **सर्वाश्रय** इति। सर्वस्य द्युभ्वादेराश्रय इत्यर्थः। उभयत्र प्रसिद्धभूमशब्दसमन्वयार्थस्य द्वितीयभूमाधिकरणस्य तात्पर्यं **पूर्णगूण** इति। तच्छब्दप्रवृत्तिनिमित्तत्वमेवोक्तम्। 'भू बहौ' बहुः पूर्णतायामिति धातोर्भूमशब्दस्य पूर्णत्वप्रवृत्ति-निमित्तकत्वमेव योग्यतया गुणानां सम्बन्धे गुणपूर्णत्वं भूमशब्दार्थः। गुणपूर्ण इत्यनुक्त्वा पूर्णगुण इत्युक्तौ पूर्णत्वमेव मुख्यतो धात्वर्थः। योग्यतया गुणानां सम्बन्ध इति सूचनं गुणानां प्रत्येकं पूर्णत्वसूचनं च प्रयोजनम्। पूर्णाः प्रत्येकं निरवधिकाः गुणाः यस्येति। उभयत्र प्रसिद्धाक्षर-शब्दसमन्वयार्थस्य अक्षरमम्बरान्तधृतेरिति तृतीयाधिकरणस्य तात्पर्यम् **सोऽक्षर** इति। पूर्वप्रकृतविष्णुपरामर्शकेन स इत्यनेन विष्णुरेवेत्येतत्सर्वत्रानुवर्तत इति सूचयति।

उभयत्र प्रसिद्धसच्छब्दसमन्वयार्थस्य ईक्षतिकर्मव्यपदेशात्स इति चतुर्थाधिकरणस्य तात्पर्यम् **सन्** इति। यद्यप्यस्मिन्नधिकरणे उभयत्र प्रसिद्धस्थानस्य समन्वय इति। अधिकरणोपाधिरनुव्याख्याने उक्तः। तथापि सच्छब्दस्य उभयत्र प्रसिद्धस्य समन्वये स्थानस्याप्युभयत्र प्रसिद्धस्य समन्वयसिद्धि इति परम्पराभिप्रायेण तदुक्तिः। अत एव टीकादौ सच्छब्दस्यैव उभयत्र प्रसिद्धत्वं विषयत्वादिकं च उक्तम्। उक्तं च न्यायविवरणटीकायां(१-३-४) ''स्थानमिति स्थाने अनुवर्तमानस्य सन्नाम्नो विवक्षितत्वात्। सन्नामविचारे महान्प्रकरणसन्दर्भो विचारित'' इति ज्ञापनाय स्थानमित्युक्तमित्यादि।

उभयत्रप्रसिद्ध हृत्पद्मस्थत्वलिंगसमन्वयार्थस्य दहर उत्तरेभ्य इति पंचमाधिकरणस्य तात्पर्यम् **सूर्यादिभासक** इति। आदिशब्देन चन्द्रादयो गृह्यन्ते। सूर्यादीनां भासकः प्रकाशकः। अत्र समन्वेतव्यलिंगमनुपादाय सैद्धान्तिकलिंगोपादानं तु प्रकारवैचित्र्यदर्शनार्थं क्वचित्समन्वेतव्योपादानं क्वचित्प्रवृत्तिनिमित्तप्रदर्शनं क्वचित्सैद्धान्तिकलिंगोपादानं इत्यादिप्रकारवैचित्र्यप्रदर्शने स्वतन्त्रस्य महर्षेरिच्छैव शरणम्। यथा कथंचिदधिकरणस्य तात्पर्यमिति ज्ञातव्यम्।

उभयत्र प्रसिद्धेशानपदसमन्वयार्थस्य शब्दादेव प्रमित इति सप्तमाधिकरणस्य तात्पर्यम् **प्राणप्रेरक** इति। मुख्यप्राणप्रेरक इत्यर्थः। अत्रापि नेयं समन्वेतव्यशब्दोक्तिः। नापि तत्प्रवृत्तिनिमित्तोक्तिः। नापि सिद्धान्तस्य साधकोक्तिः। किन्तु सिद्धान्तस्य साधकवामनशब्दवाच्यवामनसाधारणधर्मोक्तिः।

तदुक्तं विषयवाक्यशेषे " ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं" (का.उ.२-२-३) इत्यादि।

**श्रीनिवासतीर्थीया-** उभयत्र प्रसिद्धपादीयचतुर्दशाधिकणार्थं संगृह्णाति **सर्वाश्रय** इति। द्युभ्वाध्यातनः पूर्णगुणः भूमा स विष्णुरक्षरः। सृष्टिस्थानगतसत् शब्दार्थः **सन्** इति। हृदब्जगः दहरस्थः अनुकृत्यधिकरणार्थः **सूर्यादिभासक** इति। **प्राणप्रेरक** इति शब्दादेव वामनाधिकरणार्थः।

**छलारी -**

**सत्याभिनवतीर्थेन्दुश्रीपादैः सुप्रतिष्ठितम् ।**
**प्रसन्नवदनं रामं भाग्यदेवीपतिं भजे।**

यथाकथञ्चित् उभयत्र प्रसिद्धानां नामलिङ्गात्मकानां शब्दानां विष्णौ समन्वयं प्रदर्शयत्यस्मिन्पादे।

**ओं द्युभ्वाद्यायतनं स्वशब्दात् ओं**

द्युभ्वाद्यायतनं विष्णुरेव। कुतः? स्वशब्दपर्यायात्मशब्दात् इति सूत्रार्थः।

अत्र "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ" (आथर्व.२-६)इत्याथर्वणश्रुत्युक्तं द्युभ्वाद्यायतनत्वं रुद्रस्यैव भवेत् । द्युभ्वाद्यायतनत्वस्य "रुद्रो वा लोकाधारः" इति तस्मिन्नुक्तत्वादिति प्राप्ते -

विष्णोरेव द्युभ्वाद्यायतनत्वम् । "तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ" (आथर्व.२-६)इति द्युभ्वाद्यातने आत्मशब्दश्रवणात् ।

आत्मब्रह्मादयः शब्दाः तमृते विष्णुमव्ययम् । न सम्भवन्ति यस्मात्तैः नैवाप्ता गुणपूर्णता।। (ब्र.वै.पु)इति स्मृतेः। न च रुद्रप्रापकश्रुतिविरोधः। रुजं द्रावयते यस्मात् रुद्रस्तस्माज्जनार्दनः। इत्यादिप्रमाणबलेन महायोगविद्वद्रूढिभ्यां रुद्रादिश्रुतेः सावकाशत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सर्वाश्रय** इति। सर्वस्य द्युभ्वादेः आश्रय इत्यर्थः **।।१ ।।**

**ओं भूमा सम्प्रसादादध्युपदेशात् ओं**

भूमा भूमशब्दवाच्यो विष्णुरेव। कुतः? सम्यक् प्रसीदत्यनेनेति सम्प्रसादः-पूर्णसुखं, तत्सुखं इति पूर्णसुखत्वाभिधानात् । अध्युपदेशात् - अधिकत्वेन नामादीनां सर्वेषामुपरि तदुत्तमत्वेन व्यपदेशादिति सूत्रार्थः।।

अत्र "यो वै भूमा तत्सुखम्" (छां.उ.७-२३-१) इति छन्दोगश्रुत्युक्तो भूमा मुख्यप्राणो भवेत् । "प्राणो वा आशाया भूयान्" (छां.उ.७-१५-१)इति उपक्रमे प्राणशब्द-श्रवणादिति प्राप्ते-

विष्णुरेवायं भूमा । "यो वै भूमा तत्सुखम्" (छां.उ.७-२३-१)इति भूम्नः पूर्णसुखरूप-त्वाभिधानात् । तस्य चान्यत्र निरवकाशत्वात् । "अव्यक्तादितृणान्तास्तु विप्लुडानन्दभागिनः।" इति वचनात् । सर्वेषामुपरि उपदेशाच्च । न चोपक्रमविरोधः। प्राणशब्देनापि विष्णोरेवोक्तत्वादिति सिद्धान्तः कृतः। तस्य तात्पर्यमाह - **पूर्णगुण** इति।

अत्र भूमेति वक्तव्ये पूर्णगुण इति वचनं तु गुणपूर्णत्वं तच्छब्दप्रवृत्तिनिमित्तमिति ज्ञापनार्थम् । भू च बहोः बहुः पूर्णतयां इति धातुव्याख्यानात् । पूर्णत्वस्यैव मुख्यतो धात्वर्थत्वेन योग्यतया गुणानां सम्बन्धे गुणपूर्णत्वं भूमशब्दार्थो भवति। गुणपूर्ण इत्यनुक्त्वा पूर्णगुण इत्युक्तौ प्रत्येकं गुणानां पूर्णत्वसूचनं प्रयोजनम् । पूर्णाः प्रत्येकं निरवधिकाः गुणाः यस्येति बहुव्रीहिः। तस्माद्विष्णुरेव भूमेत्यर्थः ।।२।।

## ओं अक्षरमम्बरान्तधृतेः ओं

अक्षरशब्दवाच्यो विष्णुरेव। कुतः ? अम्बरान्तधृतेः। अम्बरं - आकाशशब्दितं श्रीतत्वं, अन्ते - यस्य प्रपञ्चस्य स तथा तस्य धृतेः धारणात् । सर्वाधाराकाशाख्यप्रकृत्याधारत्वश्रवणादिति सूत्रार्थः।

अत्र "एतस्मिन् खल्वक्षरे गार्गि आकाशः ओतश्च प्रोतश्च" (बृ.उ.५-८-११) इति श्रुत्युक्ताक्षरं श्रीतत्त्वमेव। तत्र अक्षरशब्दस्य "कूटस्थोऽक्षर उच्यते" (भ.गी.१५-१६) इति प्रसिद्धेः इति प्राप्ते -

"ब्रह्मैवाक्षरं यदूर्ध्वं दिवो यदर्वाक् पृथिव्याः यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च" इत्याकाशाख्यप्रकृतेः सर्वाधारकत्वमुक्त्वा "एतस्मिन् खल्वक्षरे गार्गि आकाशः ओतश्च प्रोतश्च" (बृ.उ.५-८-११) इत्यक्षरस्य तदाधारत्वश्रवणादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सोऽक्षर** इति। स पूर्वोक्तो विष्णुरेव अक्षरः । चतुर्विध-नाशराहित्यरूपमहायोगविद्वद्रूढिभ्यां अक्षरशब्दवाच्यो न श्रीतत्वमित्यर्थः ।।३।।

## ओं ईक्षतिकर्मव्यपदेशात्सः ओं

सदेवेत्यादिश्रुतः सच्छब्दवाच्यः सः विष्णुरेव भवेत् । कुतः ? ईक्षतिकर्मव्यपदेशात् । "तदैक्षत" (छां.उ.६-२-३)इति ईक्षणव्यापारश्रवणात् । जडे तदयोगात् इति सूत्रार्थः।

अत्र "सदेव सोम्येदमग्र आसीत्" (छां.उ.६-२-१)इत्यादिसृष्टिस्थाने प्रतीयमानं सत् प्रधानमेव भवेत्। न विष्णुः. । "बहुस्यां प्रजायेय" (छां.उ.६-२-३)इति बहुभावाख्यविकारश्रवणात् इति प्राप्ते -

विष्णुरेव सत् । "तदैक्षत" (छा.उ.८-२-३)इति ईक्षत्याख्यव्यापारश्रवणात् जडप्रधानस्य ईक्षणासम्भवात् । न च बहुभावाख्यप्रधानलिङ्गश्रवणात् न सच्छब्दवाच्यो विष्णुरिति वाच्यम् । "अजायमानो बहुधा विजायते" (तै.आ.३-१३-१)इत्यविकारस्यापि बहुभावश्रवणेन तस्य रूपबहुत्वेन सावकाशत्वादिति सिद्धान्तः कृतः। तस्य तात्पर्यमाह - **सन्** इति। सच्छब्दवाच्य इत्यर्थः ।।४।।

## ओं दहर उत्तरेभ्यः ओं

दहरे सूक्ष्महृत्पद्मे विद्यमानो विष्णुरेव । कुतः ? उत्तरेभ्यः। "य आत्मा अपहतपाप्मा" (बृ.उ.५-५) इत्याद्युत्तरवाक्योक्तविष्ण्वसाधारणधर्मेभ्यः इति सूत्रार्थः।

अत्र "एतस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन् अन्तर आकाश" (छां.उ.८-१-२) इति छन्दोगश्रुत्युक्तदहरहृत्पद्मस्थत्वं आकाशस्यैव भवेत् । "दहरोऽस्मिन्नन्तर आकाश" इति हृत्पद्मे दहराकाशस्थितिश्रवणादिति प्राप्ते -

दहरहृत्पद्मस्थो विष्णुरेव भवेत् । "य आत्मापहतपाप्मा विजरो विमृत्युः विशोकोऽविजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोन्वेष्टव्यः स विजिज्ञासितव्यः" (बृ.उ.५-५)इत्यादिनोत्तरवाक्ये हृत्पद्मस्थस्यापहतपाप्मत्वादिगुणश्रवणात् इति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **हृदब्जग** इति। हृत्पद्मस्थ इत्यर्थः ।।५।।

## ओं अनुकृतेस्तस्य च ओं

आनुकूल्येन गृह्यमाणो विष्णुरेव। कुतः ? अनुकृतेः। सूर्यादेस्तमनुभानात् । "तमेव भान्तमनुभाति" (क.उ.५-१५)इति सूर्यादितेजसां तदधीनभानश्रवणादिति यावत्। "तस्य च" इति वाक्यप्रतीकम् । "तस्य भासा सर्वम्" इति साक्षाज्जगत्प्रकाशकत्वोक्तेश्चेति सूत्रार्थः।

अत्र तदेतदिति मन्यन्ते अनिर्देश्यं परमं सुखम् । कथं न तद्विजानीयां किमुभाति न भाति वा।। (२-३-२) इति काठकश्रुत्युक्तं आनुकूल्येन गृह्यमाणत्वं ज्ञानिसुखस्यैव भवेत् । "परमं सुखम्" इति सुखश्रुतेरिति आनुकूल्येन गृह्यमाणो विष्णुरेव । कुतः ? "तमेव भान्तं अनुभाति सर्वम्" (२-३-३)इति सूर्यादितेजसां तदधीनत्वश्रवणात् । "तस्य भासा सर्वमिदं विभाति" (२-३-३)इति साक्षात्सर्वजगत्प्रकाशकत्वोक्तेश्च। तस्य च लिङ्गद्वयस्य

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।

(भ.गी.१५-१२) इत्यादिप्रमाणेन विष्णुलिङ्गत्वावगतेः। न च सुखश्रुतिविरोधः। तस्य सुखरूपत्वेन परमं सुखमिति सुखश्रुतेरपि तत्परत्वात् । तस्मात् आनुकूल्येन गृह्यमाणो विष्णुरेव इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सूर्यादिभासक** इति।सूर्यादितेजसां भासकः प्रकाशक इत्यर्थः।।६।।

## ओं शब्दादेव प्रमितः ओं

श्रुत्युक्तेशानो विष्णुरेव प्रमितः। कुतः ? ''मध्ये वामनमासीनं विश्वेदेवा उपासते ।'' (का.उ.२-२-३)इति वामनश्रुतेः। एवेति प्राणादिव्यवस्थापकत्वरूपलिङ्गाच्छ्रुतेः प्राबल्यमुच्यत इति सूत्रार्थः।

अत्र ''अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य ।''(का.उ.२-१-१२)

''ऊर्ध्वं प्राणमुन्नमयति अपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वे देवा उपासते ।।'' (का.उ.२-२-३) इति काठकश्रुत्युक्तेशानो वायुरेव भवेत् । तस्य ''ऊर्ध्वं प्राणं उन्नमयति'' (का.उ.२-२-३) इति वाक्ये प्राणादिव्यवस्थापकत्वश्रवणात् । प्राणादिव्यवस्थापकत्वस्य वायुलिङ्गत्वप्रसिद्धेः इति प्राप्ते -

विष्णुरेवेशानो भवेत् । ''मध्ये वामनम्'' इति वामनश्रुतेः। ननु वायुलिङ्गश्रवणादीशानो वायुरेव किं न स्यादिति चेन्न । लिङ्गापेक्षया श्रुतेः प्राबल्यात् । तेषामपि लिङ्गानां ''तद् वै त्वं प्राणो भवः'' इत्यादिना वैष्णवत्वस्य सिद्धत्वादेवेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **प्राणप्रेरक** इति। मुख्यतः प्राणप्रेरक इत्यर्थः। अत्रापि नेयं समन्वेतव्यशब्दोक्तिः। नापि तावत्प्रवृत्तिनिमित्तोक्तिः। नापि सिद्धान्तसाधकोक्तिः। किन्तु सिद्धान्तसाधकवामनशब्दवाच्यविष्ण्वसाधारणधर्मोक्तिरित्यवधेयम् । तस्मात् ईशानो विष्णुरेवेत्यर्थः।।७।।

## ओं तदुपर्यपि बादरायणः सम्भवात् ओं

तदुपर्यपि योग्यमनुष्याणां विद्याकर्मभ्यां देवादित्वप्राप्त्यनन्तरमपि देवानां वेदादिविद्याधिकारः विद्यत एव। कुतः ? सम्भवात् - अधिकारोपयोगिनः विशिष्टबुद्ध्यादेः देवेषु सम्भवादिति बाद-रायणो मन्यते। अपीति न केवलं मनुष्यत्वदशायां इत्याहेति सूत्रार्थः।

अत्र न देवानां वेदविद्याधिकारः। तेषामर्थित्वाभावात् । अर्थी समर्थो विद्वानधिक्रियत इति न्यायात् । न ह्यनादितः प्राप्तपदानां मोक्षशून्यानां च तेषां वेदविद्यादिभिः प्रयोजनमस्ति येनार्थिता स्यादिति प्राप्ते -

देवानां वेदविद्याधिकारोऽस्त्येव। न चोक्तप्रकारेण देवानां अर्थित्वाभावात् नाधिकार इति वाच्यम्। विद्याकर्मभ्यां योग्यमनुष्याणां देवादित्वप्राप्त्या तत्पदानामप्याद्यन्तवत्त्वेन तेषामपि नित्यफले मोक्षे अर्थित्वं सम्भवादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **देवतैरपि** इति । दैवतैरपि देवैः ज्ञेय इति असम्भावनापरिहारार्थो अपिशब्दः। दैवतैरपि कर्तृभिः वेदैः करणैः विष्णुः ज्ञेयः इत्यर्थः।।८।।

**नारायणाचार्य-** श्रीनरसिंहायनमः। अथोभयत्रप्रसिद्धनामलिंगसमन्वयपादव्याख्यामारभते। तत्र "यस्मिन्द्यौः पृथिवीचान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः" (मुं.उ.२-२-५)इति सर्वाश्रयत्वं "रुद्रोऽस्य वाव लोकाधार" इत्यादिना रुद्रस्य प्रतीयते। तत्समादधत्सूत्रं **ओं द्युभ्वाद्यायतनं स्वशब्दात्** इति। तद्व्याचष्टे । **सर्वाश्रय** इति। "तदन्यत्र च वाचकैः। मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दन" इति वक्ष्यमाणमत्र सिंहावलोकनन्यायेन सम्बध्यते । अन्यत्र चेति चशब्देन तत्र चेति लभ्यते। तथा च तत्रान्यत्र च प्रसिद्धैर्वाचकैः शब्दैरेको जनार्दन उच्यते। तर्ह्यन्यत्रप्रसिद्धैः का गतिरित्यत उक्तं **मुख्यत** इति। अन्यत्रामुख्यवृत्या व्यवहार इति भावः। एवं द्युभ्वाद्यायतनत्वादिभिरुभयत्रप्रसिद्धैः शब्दैः स एव वाच्यः। हीति पूर्वोक्तोऽनुवर्तते । तेन तत्रप्रसिद्धस्वशब्दपर्यायात्मशब्दात्तस्य च विष्णावेव प्रसिद्धत्वादिति लभ्यते। अत्र विष्णुरेवेत्यस्यानुवृतावपि अत्र पुनर्जनार्दन इत्युक्त्या "रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः ।" इति रुद्रादिशब्दानां विष्णाववकाशप्रतिपादिकां स्मृतिं सूचयति।। ननु विष्णौ मुख्योऽप्यात्मशब्दो जीवलिंगबलादमुख्यार्थः किं न स्यादित्यतः सूत्रं **ओं मुक्तोपसृप्यव्यपदेशात्** । "अमृतस्यैष सेतुः" (मु.उ.२-२-५)इति तस्यैव मुक्तप्राप्यत्वव्यपदेशात् ।

उक्तयुक्त्या रुद्रस्य द्युभ्वाद्यायतनत्वं प्रतिक्षिपत्सूत्रं **ओं नानुमानमतच्छब्दात्** । अनुमान-प्रसिद्धप्रामाण्यं पाशुपताद्यागमकल्पितो रुद्रादिरपि न भस्मधरोग्रादि । तच्छब्दाभावात् । नन्वत्र "स एषोऽन्तरश्चरते बहुधा जायमान" (मुं.उ.२-२-६)इति जीवलिंगादत्रात्मशब्दस्यामुख्यार्थोऽपि जीव एवास्तु इत्यतः सूत्रं **ओं प्राणभृच्च** । जीवोऽप्यत एव न। "स एषोऽन्तश्चरते बहुधा जायमान" इत्यस्य विष्णावेवोपपत्तेः. "अजायमानो बहुधा विजायते" (तै.आ.३-१३-१) इति श्रुतेः।

ननूभयविधवाक्य(शाबल्यात्)बाहुल्यात् अभेदः किं न स्यादित्यत आह ओं **भेदव्यपदेशात्** इति। "जुष्टं यदा पश्यत्यन्यमीशमस्यमहिमानमिति वीतशोक" (मु.उ.३-१-२)इत्यादेः न जीवेशाभेदो युक्तः । हेत्वन्तरेणाप्येतमर्थं साधयत्सूत्रं **ओं प्रकरणाच्च**। द्वे विद्ये वेदितव्ये (मु.उ.१-१-४) इति तस्य ह्येतत्प्रकरणम् । न जीवेशाभेदोऽत्र प्रकरणे अभिप्रेतः इत्येतमर्थं हेत्वन्तरेण समर्थयत्सूत्रं **ओं स्थित्यदनाभ्यां च**। "तयोरन्यं पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति"

(मु.उ.३-१-१) इति ईशजीवयोरेकस्य कर्मफलानुपजीवनेनावस्थानस्य अपरस्य तु स्वस्थित्यर्थं कर्मफलभक्षणस्योक्तत्वान्नैतयोरैक्यमतो विष्णुरेव सर्वाश्रय इति सिद्धम् ।।१।।

ननु तथापि छान्दोग्ये "यो वै भूमा तत्सुखं नाल्पे सुखं भूमैव सुखं" (छा.उ.७-२३)इत्यादौ प्राणस्य पूर्णसुखत्वरूपानन्दमयत्वं प्रतीयते "प्राणो वा आशाया भूयान्" (छा.उ.७-२३-१) इत्युपक्रमात् । अथ यद्यपि "एनानुत्क्रान्तप्राणान्" इति लिंगात्प्राणशब्दस्य वायुवाचित्वादित्यतः सूत्रं **ओं भूमा सम्प्रसादादध्युपदेशात्** इति। तद्व्याचष्टे **पूर्णगुण** इति।। पूर्णगुणप्रतिपादकैः उभयत्र प्रसिद्धैः भूमादिशब्दैर्मुख्यतो जनार्दन एव वाच्यः यतः स एव पूर्णगुण इत्यावृत्या योज्यम्। तेन सम्यक् प्रसादः पूर्णसुखं तद्रूपत्वादित्यर्थको हेतुरपि व्याख्यातः। जनार्दन इत्यस्य जनैब्रह्मरुद्रादिभिरपि अर्द्यते गम्यते प्रार्थ्यते च स्वाभीष्टसिद्ध्यर्थमिति व्युत्पत्या ब्रह्मरुद्रादिभिः याच्यमानत्वार्थकत्वात् सर्वेषामुपर्युपदेशादित्यर्थप्रतिपादकोऽध्युपदेशादिति सूत्रशेषोऽपि व्याख्यातः। अर्द गतौ याचने च इत्यस्मात्कृत्यल्युटोर्बहुलं (पा.सू.३-१-११३)इति ल्युट् ।

युक्त्यन्तरेणाप्युक्तमर्थं समर्थयत्सूत्रं **ओं धर्मोपपत्तेश्च**। "स एवाधस्तात्स उपरिष्टात्" इत्यादिनोक्तानां सर्वगतत्वादिधर्माणां तस्मिन्नुपपत्तेश्च । "तमुत्क्रान्तं प्राणोऽनुत्क्रमति" इति श्रुतेः न लिंगविरोधोऽतः प्राणशब्दो विष्णावेवोपपन्न इति भावः।।२।।

ननु वाजसनेये "एतद्वा एतदक्षरं गार्गि" "अदृष्टं द्रष्टृश्रुतं श्रोतृ" (बृ.उ.५-८-११)इत्यादिना अदृश्यत्वादिगुणकं मध्यमाक्षरं श्रीतत्वं प्रतीयते। "तस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्दमसौ विधृते तिष्टतः" (बृ.उ.५-८-९)इति सूर्यचन्द्राधारत्वोक्तेः । तस्य च "अहं सोममाहनसं बिभर्मि" (ऋ.सं.१०-१२५-२)इत्यादिना श्रीसूक्ते श्रिया उक्तत्वादित्यतः सूत्रं **ओं अक्षरमम्बरान्तधृतेः** इति। तद्व्याचष्टे **सोऽक्षर** इति। स एवाक्षरो न तु श्रीरित्यर्थः। "यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावा पृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं प्रोतं च" इत्यादौ "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" (बृ.उ.५-८-११) इत्याद्यम्बरान्तधृतिप्रतिपादकैः शब्दैः स जनार्दन एवोच्यते। सूर्यचन्द्राधारकत्वमपि मुख्यतस्तस्यैवेत्याशयेन मुख्यत इत्युक्तम् ।

हेत्वन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत्सूत्रं **ओं सा च प्रशासनात्**। सा धृतिः, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" (बृ.उ.५-८-९)इति श्रुतेः। प्रशानसनादेव तच्च शासनं विष्णोरेव। "एकः शास्ता न द्वितीयोऽस्ति शास्ता" इति श्रुतेः। युक्त्यन्तरेणैतमर्थं समर्थयत्सूत्रं **ओं अन्यभावव्यावृतेश्च**। "अस्थूलमनणु" (बृ.उ.५-८-८)इत्यादिना स्थूलाण्वादीनां अन्यवस्तुस्वभावानां व्यावृत्तेश्च। इदमप्याह **मुख्यत** इति। एकः शास्ता अस्थूलोऽनणुरित्याद्यैः सर्वशब्दैरेको जनार्दनो वाच्य इत्यर्थः।।३।।

ननु ''सदेव सोम्येदमग्र आसीत्'' (छा.उ.६-२-१)इत्यादिना जगत्कारणत्वं प्रधानस्यैव प्रतीयते। ''**बहुस्यां प्रजायेयेति**'' (बृ.उ.६-२-२३) इति श्रुतस्य बहुभावस्य निर्विकारे विष्णावसम्भवात् इत्यतः सच्छब्दवाच्यत्वं विष्णोरेव प्रतिपादयितुं सूत्रम् **ओं ईक्षतिकर्मव्यपदेशात्सः**। तद्व्याचष्टे **सन्** इति। सच्छब्दवाच्योऽपि स एव यतः ''तदैक्षत'' इति ईक्षतिक्रियावाचकैः शब्दैः जडे प्रधाने सम्भाव्यमानैः स एव वाच्यः प्रतिपाद्यः। बहुभावश्च निर्विकारस्यापि तेजःप्रभृतिनियामकरूपबाहुल्यापेक्षयाप्युपपत्तेरिति भावः ।।४।।

ननु तथापि छान्दोग्ये ''अथ यदितस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं'' (छां.उ.८-१-२)इति श्रुतौ हृत्पद्मस्थत्वं आकाशस्य प्रतीयते। ''यावान्वा अयमाकाशस्तवानेषोऽन्तर्हृदय आकाश'' इति वाक्यशेषे आकाशशब्दादित्यत आह **ओं दहर उत्तरेभ्य** इति। तद्व्याचष्टे। **हृदब्जग** इति । हृदब्दग इत्यर्थकैरुभयत्रप्रसिद्धैः सर्वशब्दैरेको जनार्दन एव वाच्यो यतो ''य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प सोऽन्वेष्टव्यः स विजिज्ञा-सितव्यः''(बृ.उ.५-५)इत्युत्तरेभ्यो वाक्येभ्यो जनार्दन एवैको वाच्यः प्रतीयते। सत्यसंकल्पा-दीनामाकाशे असम्भवात् । आकाशश्रुतेस्तु विष्णौ सावकाशत्वादिति भावः ।

युक्त्यन्तरेण विष्णौ हृत्पद्मस्थत्वं प्रतिपादयत्सूत्रम् **ओं गतिशब्दाभ्यां तथाहि दृष्टं लिंग च**। ''अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति'' (छां.उ.८-३-२)इति सुप्तस्य गतिः ब्रह्मशब्दश्च प्रतीयते। ''सता सोम्य तदा सम्पन्नो भवति'' (छा.उ.६-८-१) इति श्रुतेस्तं सुप्तो गच्छति ''अरश्च ह वैण्यश्चार्णवै ब्रह्मलोके'' (छां.उ.८-५-३)इति लिंगं च तथा हि दृष्टम् ।

हेत्वन्तरेण विष्णोर्हृत्पद्मस्थत्वं प्रतिपादयत्सूत्रं **ओं धृतेश्च महिम्नोऽस्याऽस्मिन्नुपलब्धेः**। एष सेतुर्विधृतिः(छां.उ.८-४-१) इति धृतेः। एष भूताधिपतिरेषभूतपालः (बृ.उ.६-४-२१) इत्यादिमहिम्नोऽस्यास्मिन्नुपलब्धेः। युक्त्यन्तरेणैतमर्थं समर्थयत्सूत्रं **ओं प्रसिद्धेश्च**। ''तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तरस्तदुपासितव्यं (म.ना.उ.८-१२-३)इति प्रसिद्धेश्च। तदन्तस्थस्वापेक्षत्वान्न सुषिरश्रुतिविरोधः।। ''तस्यां ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितं'' इत्यस्य गेहान्तर्गतमञ्जूषास्थितमणिमालायां गेहे मणिमालेत्यादिवदुपपत्तेः।। उक्तमाक्षिप्य समादधत्सूत्रं **ओं इतरपरामर्शात्स इति चेन्नासम्भवात्** । ''परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि(उप)सम्पद्यते'' (छां.उ.८-१२-३) ''एष त आत्मेति होवाच'' (छां.उ.४-१५-१)इति जीवपरामर्शाज्जीव एव हृत्पद्मस्थ इति चेन्न तस्य स्वतो अपहतपाप्मत्वासम्भवात् । जीवस्यापहतपाप्मत्वासम्भवमाक्षिप्य समादधत्सूत्रं **ओं उत्तराचेदाविर्भूतस्वरूपस्तु** । ''स तत्र पर्येति जक्षन् क्रीडन् रममाणो स्त्रीभिर्वायानैर्वाज्ञातिभिर्वाऽज्ञातिभिर्वा'' (छा.उ.८-१२-३) इत्याद्युत्तरवचनाज्जीव इति चेन्न। तत्र

हि परमेश्वरप्रसादाविर्भूतस्वरूपो मुक्तावुच्यते यत्प्रसादान्मुक्तो भवति स भगवान्पूर्वोक्तः। नन्वमुख्यमपहतपाप्मत्वादिगुणोऽपि जीवः परामर्शबलेन हृत्पद्मस्थात्मा किं न स्यादित्यतः सूत्रं **ओं अन्यार्थश्च परामर्शः**। ''यं प्राप्य स्वेन रूपेण जीवो निष्पद्यते सः एष आत्मा'' इति परमात्मार्थश्च परामर्शः।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं अल्पश्रुतेरिति चेत्तदुक्तम्**। दहर इत्यल्पश्रुतेरिति चेन्निचाय्यत्वादेवं व्योमवच्चेत्युक्तत्वात् । ''एष त आत्मान्तर्हृदये ज्यायान्पृथिव्या ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्य'' (छा.उ.३-१४-३) इत्युक्तम् । महत्वाश्रयस्यापि हरेरेवं ''आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामकतंडुलाद्वा'' इत्यल्पत्वं चोक्तमिति वा ।

ननु तथापि कठवल्लीषु ''तदेतदिति मन्यन्ते अनिर्देश्यं परमं सुखम् । कथं तु तद्विजानीयां किमु भाति न भाति वा (क.उ.५-१४) इत्यत्र अनिर्देश्यत्वादिकं ज्ञानिसुखस्य प्रतीयते। ''तमात्मानं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषां'' इति वाक्यशेषादित्येत्सूत्रं **ओं अनुकृतेस्तस्य च**। ''तमेव भान्तमनुभाति सर्वं'' (क.उ.५-१५) इत्यनुकृतेः ''तस्य भासा सर्वमिदं विभाति'' (क.उ.५-१५) इति वचनाच्च परमात्मैवानिर्देश्यसुखरूपः। न हि ज्ञानिसुखमनुभाति सर्वम्। न च तद्भासा । ''अहं तत्तेजो रश्मीन्नारायणं पुरुषं जानमग्रत'' इति श्रुतेर्नारायणभासा हि सर्वं भाति। रश्मीन्जीवान्सूर्यचन्द्रादिकिरणान्वा येति प्रेरयतीति व्युत्पत्त्या अन्तर्णीताणिजर्थादेतेः क्विपि तु रश्मीदिति रूपम् । ततश्च रश्मिप्रेरकं नारायणाख्यमहमहेयं तेज इति श्रुत्यर्थः। किंच यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।। (भ.गी.१५-१२) इति स्मृत्या विष्णोरेव सूर्यादिभासकत्वमित्याशयेन प्रवृत्तं सूत्रं **ओं अपि स्मर्यते**। तद्व्याचष्टे **सूर्यादिभासक** इति। तमेवेत्यादिनोच्यमानः सूर्यादिभासक इत्यादिशब्दैरेको जनार्दन एव वाच्य इत्यर्थः।।६।।

ननु काठक एव ''अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्टति । ईशानो भूतभव्यस्य'' इत्युक्त्वा ''तं विश्वेदेवा उपसते'' इति जिज्ञास्य प्रतीयते। सेशानश्रुतेः रुद्र एव यद्यपि प्राप्तस्तथापि सर्वदेवोपास्यत्वप्राणादिप्रेरकत्वादिलिंगैर्वायुरेव तत्र रुद्रशब्दस्य योगेन वृत्तेः वायुरेव हृदयान्तस्थ इत्यतः सूत्रं **ओं शब्दादेव प्रमित** इति। तद्व्याचष्टे **प्राणप्रेरक** इति। ''ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वेदेवा उपासते'' (क.उ.५-३)इति प्राणप्रेरकत्व-लिंगैरुक्तवामनशब्दादत्र जनार्दन एव वाच्यः। ईशानश्रुतेः सर्वेश्वरे तत्रैव सावकाशत्वादिति भावः। कथं तर्हि तस्य व्याप्तस्यांगुष्टमात्रत्वमित्यतः सूत्रं **ओं हृद्यपेक्षया तु मनुष्याधिकारत्वात्**। सर्वगतस्यापि हरेरंगुष्ठमात्रत्वं हृदयाकाशापेक्षया युज्यते । इतरप्राणिनामंगुष्ठाभावेऽपि शास्त्रस्य मनुष्याधिकारत्वान्न विरोधः।।७।।

**नन्वंगुष्ठमात्रत्वं मनुष्यापेक्षया इत्युक्तम्** । तथा च ''विश्वेदेवा उपासत'' इति सर्वदेवोपास्यत्वं विष्णोरुक्तमयुक्तमित्यतः सूत्रं **ओं तदुपर्यपि बादरायणः सम्भवात्** इति। तद्व्याचष्टे **दैवतैरपि ज्ञेय** इति। विशिष्टबुध्यादिमत्वमेव ह्यधिकारप्रयोजकम् । तच्च मनुष्याणां देवादित्वप्राप्त्युपरि सम्भवति। प्रागुक्तं मनुष्यत्वविशेषणं विशिष्टबुध्यादिरहिततिर्यगादिव्यावृत्यर्थमेव। अत एव जरितर्यादीनां तिरश्चामपि ब्रह्मविद्याधिकार इति भावः।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्** । यदि मनुष्याणामेव देवत्वप्राप्तिस्तत्पूर्वं देवताभावात् । ''अग्नयेऽष्टाकपालं पुरोडाशं निर्वपेत्'' इत्यादितदुद्देश्यककर्मविधिविरोध इति चेन्न।'' तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्यास्सन्ति देवा'' (तै.आ.३-१२)इत्यनेकेषां देवतापदप्राप्तेर्दर्शनात्। पुनरुक्तमाक्षिप्य समादधत्सूत्रं **ओं शब्द इति चेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम्** । शब्द इति सप्तम्यन्तं पदम्। विरोध इति वर्तते। देहस्य नित्यत्वात्तद्वाच्यानामनित्यत्वे पुनस्तत्प्रमाणविरोध इति चेन्न । अत एव शब्दात्तेषां प्रभवनियमात् । ''सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्'' इत्यादिना प्रवाहनित्यत्वा-देरर्थस्योक्तत्वात् । महतां प्रत्यक्षात्। यथेदानीं तथान्यदापीत्यनुमानच्च।

हेत्वन्तरेणाप्येतमर्थं समर्थयत्सूत्रं **ओं अत एव च नित्यत्वम्** । शब्दनित्यत्वादेव अर्थनित्यत्वस्यापि प्रवाहादिना नित्यत्वं युक्तम् । ननु प्रतिकल्पदेवानां युक्तत्वात्कल्पभेदे देवतान्तरोत्पत्या अर्थस्य प्रवाहनित्यत्वेऽपि तदीय रूपनाम्नां सर्वकल्पे एकरूपत्वे नियामकाभावादिन्द्रादिनामरूपप्रतिपादकवेदस्य नित्यत्वेन सर्वकल्पेषु एकरूपत्वादर्थस्य अतथात्वात् अप्रामाण्यापत्तिरित्यतः सूत्रं **ओं समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च**। प्राप्तपदानां देवानामुक्तत्वेन स्वपदेष्वावृत्तावप्यतीतानामनागतानां च समाननामरूपत्वान्नेन्द्रादि-शब्दविरोधः। ''यथापूर्वं'' (म.ना.उ.५-७)इति दर्शनात्।

अनादि निधना नित्या वागुत्सृष्टा स्वयंभूवा।
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः।।

वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः।
यथर्तुषुर्तुलिंगानि नाना रूपाणि पर्यये ।।

दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ।

इति स्मृतेश्च। उक्तार्थमाक्षिपत्सूत्रं **ओं मध्वादिष्वसम्भवादनधिकारं जैमिनिः**। ''असौ वा आदित्यो देवमधु'' इत्यादिनोक्त मधुविद्यादिफलं ''वसूनामेवैको भूत्वा रुद्राणामेवैको भूत्वा आदित्यानामेवैको भूत्वा'' (छा.उ.३-६-२)इत्यादौ वस्वादिपदप्राप्तिरूपमुच्यते। अतः प्राप्तपदानां

देवादीनां तद्विद्यास्वनधिकारं जैमिनिराचार्यो मन्यते। ननु मोक्षेतरफलस्य देवैर्लब्धत्वेन तदर्थमधिकाराभावेऽपि मोक्षैकफलकज्ञानसाधनरूपासु "सत्यं ज्ञानमनन्त ब्रह्म" इत्यादि ब्रह्मविद्यास्वधिकारः किं न स्यादित्यतः सूत्रं **ओं ज्योतिषि भावाच्च**। तेषां सर्वज्ञत्वात्तज्ज्ञाने तस्याप्यर्थस्यान्तर्भावाज्ज्ञानार्थमपि नाधिकारः। एवं जैमिनिमतावलम्बिनां देवानामर्थित्वा-भावेनाधिकाराभावे पूर्वपक्षिणोपपादिते पुनस्तत्राधिकारं समर्थयत्सूत्रं ओं **भावं तु बादरायणोऽस्ति हि** । युक्त्या वा तदा अतिशयसद्भावादधिकारं बादरायणाचार्यो मन्यते। अस्ति च प्रकाशविशेषफलम्।

यावत्सेवा परे तत्वे तावत्सुखविशेषता।
सम्भवाच्च प्रकाशस्य परमेकमृते हरिम्।।

तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम् ।
सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च ।।

इति स्कान्दे। उक्तफलानधिकारमात्रपरं जैमिनिमतमतो न विरोध इति भावः।

सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम्।
स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यते ।।

इति ब्राह्म्योक्तेः। तदिदमुक्तं देवतैरपि प्राप्तपदैरपि वस्वादिभिर्मुक्तानन्दावाप्त्यर्थं विशेषज्ञानार्थं च ज्ञेय उपास्य इति।

**मळगि – सर्वाश्रयः** समस्त अन्तरिक्षमनादिप्राणाश्रयः । पुनः कीदृशः ? **पूर्णगुणः** पूर्णाः गुणाः यस्येति विग्रहे अनन्तगुणपूर्णत्वेन भूमशब्दवाच्यः।

सर्वनामाभिधेयश्च सर्ववेदोदितश्च सः। इति स्कान्दोक्तेः।

अक्षरः । **सन्** सच्छब्दवाच्यः। पुनः कीदृशः ? **हृदब्जगः** हृदेवाब्जं तस्मिंस्तिष्ठतीति **स** तथा। हृत्पुंडरीकमध्यवर्तीत्यर्थः। "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धिमामकम्" (भ.गी.१५-१२)इत्यादिवचनेषु सूर्यादितेजसां भगवदीयत्वकथनेन सूर्यादभासकः सूर्यादिप्रकाशकः । तदनुकूल्येन गृह्यमाण इत्यर्थः । **प्राणप्रेरकः** "नभस्वतोऽपि सर्वाः स्युश्चेष्टा भगवतो हरेः। किमुतान्यस्य जगतो यस्य चेष्टा नभस्वत" इति। "यदुदीरितोसुः संस्पंदते तमनु वाङ् मनइन्द्रियाणि" इति स्कान्दभागवतोक्तिभ्यां प्राणप्रेरकत्वेन ईशानशब्दवाच्यः। **दैवतैः** देवैरपि। **ज्ञेयः** उपास्यः ।।५।।

**लिंघेरी –** पुनः कीदृशः ? **सर्वाश्रयः** सर्वेषां आश्रयः। **पूर्णगुणः** पूर्णा गुणाः यस्येति विग्रहः। पुनः कीदृशः? **हृदब्जगः**। हृदेव अब्जं तस्मिन्तिष्ठतीति हृदब्जगः । कीदृशः सन् ? **अक्षरः सन्** । पुनः कीदृशः? **सूर्यादिभासकः** तेषां प्रकाशकः। **प्राणप्रेरकः** मुख्यप्राणस्यापि प्रेरकः। **दैवतैरपि ज्ञेयः** उत्तरश्लोकस्थपदेन अन्वयः ।।५।।

**नारायणपण्डित –** सर्वाश्रयः द्युभ्वाद्यायतनः। सर्वाश्रय इत्यनेन द्युभ्वाद्यायतनं स्वशब्दादित्यधिकरणार्थः ।।१।। पूर्णगुणः भूमा। पूर्णगुण इत्यनेन भूमासम्प्रसादादध्युपदेशादि-त्यधिकरणार्थो दर्शितः ।।२।। सोऽक्षरः स विष्णुरक्षरः। सोऽक्षर इत्यनेनाक्षरमम्बरान्तधृतेः इत्यधिकरणार्थः ।।३।। सन् सृष्टिस्थानगतसच्छब्दार्थः। सन्नित्यनेन ईक्षतिकर्मव्यपदेशात्स इत्यस्यार्थः ।।४।। हृदब्जगः दहरस्थः। हृदब्जग इत्यनेन दहर उत्तरेभ्य इत्यधिकरणार्थः ।।५।। सूर्यादिभासकः सूर्यादीनां प्रकाशकः। सूर्यादिभासक इत्यनेन अनुकृतेस्तस्य चेत्यधिकरणार्थः ।।६।। प्राणप्रेरक इति शब्दादेव प्रमित इति वामनाधिकरणार्थः ।।७।। दैवतैरपि वेदादिभिर्विष्णुरुपास्य इति तदुपर्यपि बादरायणः सम्भवादिति देवताधिकरणतात्पर्यार्थः ।।८।।

**गूढकर्तृक –** श्रुत्यादिभिरुभयत्रप्रसिद्धनामलिंगात्मकद्विविधशब्दसमन्वयप्रतिपादनपरतृतीयपादीय चतुर्दशाधिकरणार्थं संगृह्णात्यणुभाष्यकर्ता भगवानानन्दतीर्थः। **सर्वाश्रयः पूर्णगुणः सोऽक्षरः सन् हृदब्जगः। सूर्यादिभासकः प्राणप्रेरको दैवतैरपि। ज्ञेयो न वैदैः शूद्राद्यैः कम्पकोऽन्यश्च जीवतः। पतित्वादिगुणैः युक्तस्तदन्यत्र च वाचकैः। मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दन इति।** तस्यार्थः । **सर्वाश्रयः** द्युभ्वाद्यायतनः । **पूर्णगुणः** भूमा। **सः** विष्णुरक्षरः । **सन्** इति सृष्टिस्थानगतसच्छब्दार्थः। **हृदब्जगः** दहरस्थः। **सूर्यादिभासक** इत्यनुकृत्याधि-करणतात्पर्यार्थः। जगद्भासकः सूर्यादिभासक इत्यर्थः। तमेव भान्तमित्यादिश्रुतेः। प्राणःप्रकर्षेण अणति चेष्टयते सर्वमिति प्राणः। सर्वजगच्चेष्टक इति भावः। अण चेष्टायामिति धातोः । अथवा सर्वप्राणिचेष्टकमुख्यप्राणप्रेरक इत्यर्थः। प्राणप्रेरक इत्येकं पदम् । प्राणप्रेरक इति शब्दादेवेति वामनाधिकरणार्थः। दैवतैरिति वेदैर्ज्ञेय इति देवताधिकरणतात्पर्यार्थः।

**अणुभाष्यम्**

**ज्ञेयो न वेदैः शूद्राद्यैः कम्पकोऽन्यस्य जीवतः।**
**पतित्वादिगुणैर्युक्तः तदन्यत्र च वाचकैः ।।६।।**

**सत्यनाथीया – ज्ञेयो न वेदैः शूद्राद्यैः** वेदैर्हरिर्नोपास्य इति शुगस्य तदनादरेत्यपशूद्राधि-करणार्थः। **कम्पकः** वज्रं कम्पनादित्यर्थः। **जीवतः** जीवाद्भिन्नः सुषुप्त्युत्क्रान्त्योर्भेदेनेति सुषुप्त्यधिकरणार्थः । **पतित्वादिगुणैर्युक्तः** स्वामित्वादिगुणैर्युक्तः पत्यादिशब्देभ्य इत्यस्यार्थः ।

।। अणुभाष्ये प्रथमाध्यायस्य तृतीयः पादः ।।

**तत्वमञ्जरी–** ननु दैवतैरपीत्यपिशब्देन न केवलं मनुष्यैर्ज्ञेय इति समुच्चितम् । तदयुक्तम् । तथात्वे स्त्रीशूद्रब्रह्मबन्धुप्रभृतीनां द्विजातिवत् मनुष्यत्वाविशेषात् तैरपि वेदैर्ज्ञेयो जनार्दनः स्यात् । न चादर्शनविरोधः । ''अप्यह हारे त्वा शूद्र गोभिः सह तवैवास्तु'' (छा.उ.४-२-३) इति छान्दोग्ये चतुर्थे संवर्गविद्यायां शूद्रस्य ''एतद्वैतदक्षरं गार्गि'' ''एतस्य वा अक्षरस्य प्रशासने गार्गि'' इत्यादिवाजसनेये अक्षरविद्यायां स्त्रियश्च अधिकारदर्शनात्। न च तदिष्टम् ।

अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते। न च वर्णावरस्यापि इत्यादिविरोधादित्यतः प्राप्तम् – **शुगस्य तदनादरश्रवणात्** इत्यादिसूत्रपञ्चकम्। तदर्थो **ज्ञेयो न वेदैः शूद्राद्यैः** इति।

शूद्राद्यैः वर्णावरादिभिः कर्तृभिर्वेदैः करणैः जनार्दनो ज्ञेयो न भवतीत्यर्थः। तेषां वेदाभावादिति भावः। शूद्रेत्युक्त्या ''न संस्कारो न व्रतानि शूद्रस्य'' इति (पैङ्गी)श्रुतौ शूद्रस्य उपनयन-संस्काराभावोक्तेः, अध्ययनस्य ''अष्टवर्षं ब्राह्मणमुपनयीत्। तमध्यापयीत'' इत्युपनीतमात्र-कर्तृकत्वोपगमात् शूद्रस्याप्युपनयनमुपेत्य अध्ययनोक्तौ (गौ.ध.सू.१२-४-७) ''अध्ययने जिह्वाच्छेदः'' ''शूद्रस्य तथैवाध्ययनं कुतः'' इत्यादिश्रुतिस्मृतिनिषेधातिति सूचितम् ।

श्रुतौ ''अप्यह हारे त्वा शूद्र'' इति पौत्रायणं प्रति रैक्मुनिना सम्बोधनकारणं तु हंसकृतानादरश्रवणजातया शुचा मुनिं प्रति तत्त्वजिज्ञासया आद्रवणरूपयोगेन युक्तम् । शुग्द्रेति वाच्ये शोकाधिक्येन आद्रवणाद्धेतोः तद्धार्दं जानता सर्वज्ञेन मुनिना शूद्रेति क्षत्रियस्यैव पौत्रायणस्य सम्बोधनं कृतम्।

राजा पौत्रायणः शोकात् शूद्रेति मुनिनोदितः ।

इत्यादेरिति भावः। वेदैर्ज्ञेयो नेति शूद्रे वेदाभावोक्त्या ''यत्र वेदो रथस्तत्र'' इति स्मृत्या रथस्य वेदव्याप्तत्वात्, तथा शूद्रे वेदाभावेन रथाभावात्, ''अश्वतरीरथ'' इति वाक्यशेषोक्त-स्वाभाविकरथसम्बन्धित्वेन तस्य क्षत्रियत्वावगमादिति सूचितम् ।

गार्गिप्रभृत्युत्तमस्त्रीणां तु निषेधश्रुत्यादौ शूद्रपदस्येव स्त्रीपदाभावेन तासां निषेधाभावात् । उपनयनप्रतिनिधिप्रदानाख्यसंस्कारभावाच्च न निषेध इत्यपि शूद्रपदोक्त्यैव सूचितम् ।

तर्हि योग्यानां सच्छूद्रादीनां अनुत्तमस्त्रीणां च मुक्त्यभावः स्यात् । विष्णुज्ञानाभावात् । न चेष्टापत्तिः।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रस्तेऽपि यान्ति परां गतिम्।''

(भ.गी.९-३२) इत्यादिविरोधादित्यतोऽपि **ज्ञेयो न वेदैः** इत्यादि। नसमासोऽयम् । विभाषानुवृत्त्या नलोपस्य विकल्पितत्वात् नञ्समासो वा । न वेदैः अवेदैः वेदादन्यैरिति-हासपुराणादिभिः शूद्राद्यैः जनार्दनः संसारार्दनो भगवानेको ज्ञेय इत्यर्थः।

शूद्राद्यैरित्युक्त्या

स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा । इत्यारभ्य

इति भारतमाख्यानं कृपया मुनिना कृतम् । (भा.१-४-२४)

इत्यादिना भागवते, ''य इदं श्रुणुयान्नित्यं'' इत्यारभ्य ''शूद्रः सुखमवाप्नुयात्'' इत्यादिना सहस्रनामसु,

स्त्रीशूद्रब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता ।

इत्यादिना तेषामपि मुक्तिहेतुज्ञानजनके वेदादन्यत्र अधिकारसत्त्वं सूचयति।।९।।

ननु देवतैरपि मोक्षार्थं ज्ञेयो जनार्दन इत्ययुक्तम् ।

यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति।।

इति (२-३-३)काठके वज्रज्ञानादेव मोक्षोक्तेः। वज्रस्य चेन्द्रायुधे निरूढवज्रश्रुत्या ''तेनेन्द्रो वज्रमुदयच्छत्'' इत्यादौ आयुधे प्रसिद्धोद्यतत्वलिङ्गेन चेन्द्रायुधत्वादित्यतः प्राप्तम् - **कम्पनात्** इति । तदर्थः - **कम्पक** इति। उपलक्षणेतत्। पूर्ववदनुषङ्गः। यदिदं सर्वं प्राणे स्थितं प्राणादेजति च । एजृकम्पन इति धातोरेजतीत्याद्युक्तकम्पकादिः जगच्चेष्टकादिर्जनार्दनः। तस्माल्लोकप्रसिद्ध्या विष्णुलिङ्गेन च तदन्यत्र च वाचकैः वज्रोद्यतमहद्भयप्राणादिसर्वशब्दैः एको जनार्दन एव मुख्यतो वर्जनाद्वज्रमित्यादियोगरूढिभ्यां वाच्यः। न त्विन्द्रायुधम् । कुतः? कम्पको विष्णुः लिङ्गैः सर्वैर्युतो हि। कम्पकत्वतदुपलक्षितमुक्तिहेतुवेदनत्व ''तदेव शुक्रं तद् ब्रह्म तदेवामृतं'' (क.उ.२-२-८)इति पूर्ववाक्योक्तामृतत्व ब्रह्मश्रुत भयादस्याग्निस्तपति इत्याद्युत्तरवाक्योक्ताग्न्यादिभयङ्करत्वादिलिङ्गैः युतत्वस्य विष्णौ श्रुत्यादिसिद्धत्वादित्यर्थः।

अत्र जनार्दन इत्यत्र जनेत्यनादित्वोक्त्या पूर्वार्धोक्तसर्वजनकत्वादि अर्दनेत्यंशे च ''य एतद्विदुः'' इत्युक्तमुक्तिहेतुत्वं युक्तं तस्मान्निति सूचितम् ।

अत्र यौगिकसमन्वेयवज्रशब्दार्थे वर्जित इति निर्देष्टव्ये कम्पक इति तत्साधकलिङ्गोक्तिः सूत्रोपात्तत्वाद्वा, वज्रनाम्नो वैष्णवत्वाद्वा, कम्पकत्वस्य विष्ण्वायत्तत्वाद्वेति।

सूत्रे कम्पकत्वोक्तावपि लिङ्गैरित्यनेकलिङ्गोक्तिः तस्य उपलक्षणत्वसूचनाय। उक्तं च भाष्यटीकायां अत्रैव नये "तदविहायैव लिङ्गान्तरस्याप्युक्तत्वात्" इति "तदन्यत्राप्यनुसन्धेयं" इति च ।।१०।।

अत्र ज्योतिराकाशनयाभ्यां समन्वेययौगिकज्योतिराकाशपदोक्तयोः ज्ञानप्रकाशरूपत्वसर्व-भूतावकाशदातृत्वगुणयोः नामपादीयज्योतिराकाशनयार्थसंग्राहकज्योतिः खवदादिपदैः विष्णौ लब्धत्वान्नेह पुनस्तयोः संग्रहः कृतः।

यद्वा ज्योतिरित्याद्यैः इत्यत्र "ज्योतिर्हृदय आहितं यत्" इत्युक्तहृदयाहितं ज्योतिः विष्णुरित्युक्तमयुक्तम् । वाजसनेये षष्ठे "प्राणेषु हृद्यन्तर्ज्योतिः" इति श्रुतहृत्स्थज्योतिषः "स समानः सन्नुभौ लोकावनुसञ्चरति" इत्यादिनोक्तकर्माधीनोभयलोकसञ्चरणादिलिङ्गैः जीवत्वात् प्राक्तनमपि स एवेत्यतः प्राप्तम् – **ज्योतिर्दर्शनात्** इति। तस्याप्यर्थः – **कम्पक** इति। जीवतः इत्यग्रेतनं पदमिहाप्यन्वेति। ल्यब्लोपनिमित्ता पञ्चमी। एको जनार्दनो जन्ममोचकत्वाभ्यां स्वतन्त्रो विष्णुः । जीवतो जीवमादाय। कम्पकः चेष्टकः स समान इति वाक्योक्तोभयलोकसञ्चारकर्ता । न त्वस्वतन्त्रो जीवः। उक्तञ्च न्यायविवरणे (१-३-११) "लोकसञ्चरणं जीवमादाय, तस्यैवादुःखेन स्वातन्त्र्यात्" इति।

तत्तस्मात्। ज्ञानरूपवृत्तिहेतुसाम्येन तदन्यत्र च वाचकैः एतत्प्रकरणस्थज्योतिः शब्दस्वयमात्मादिशब्दैः मुख्यतो जनार्दन एव वाच्यः। तथा "जायमानः" "शरीरमभि-सम्पद्यमानः" इत्यादिनोक्तजायमानत्वम्रियमाणत्वादिलिङ्गैः सर्वैः अन्तर्णीतणिजर्थतया युतश्च। कुतः ? कंम्पको विष्णुः।

"विष्णुरेवेदं ज्योतिः" "तद्देवा ज्योतिषां ज्योतिः" इत्यादिश्रुतिषु ज्योतिःशब्दस्य विष्ण्वेक-वाचित्वसिद्धेरिति । तथा "आत्मैवास्य ज्योतिः" "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु" इति जीवस्य सुप्त्यादौ ज्ञानहेतुत्वरूपज्योतिष्ट्वेनोक्तात्मनो जीवस्वरूपत्वेन तस्य प्रसिद्धत्वेन "कतर आत्मा" इति प्रश्नायोगात् विष्णुत्वस्यैव वाच्यत्वाच्चेति हेरर्थः।

जनार्दनेत्यत्र जनेत्यजत्वोक्त्या आदित्यादिज्योतिर्मात्रस्यास्तमयेन जीवस्य सुप्त्यादौ ज्ञानाहेतुत्वेऽपि हरेरुदयास्तमयादिशून्यस्य तदा जीवज्ञानहेतुत्वरूपं ज्योतिष्ट्वं युक्तम् ।

अर्दनेति संसारार्दकत्वोक्त्या दुःखाभोगसूचकत्वेन स समानः सन् इत्युक्तसमान-त्वनैवोभयलोकसञ्चरणं हरेरेव युक्तम् । न तु संसारिणो स्वतन्त्रजीवस्येत्यपि सूचितम् ।।११।।

ननु सर्वाश्रयो जनार्दन इत्युक्तम् । छान्दोग्ये अष्टमान्ते "आकाशो वै नाम नामरूपयोर्निर्वहिता। ते यदन्तरा तद् ब्रह्म तदमृतम्" इति वाक्ये "वै नाम" इति निपातद्योतितप्रसिद्धाकाशस्यैव नामरूपनिर्वहितृपदेन सर्वाश्रयत्वोक्तेरित्यत प्राप्तम् – **आकाशोऽर्थान्तर व्यपदेशात्** इति । तदर्थः

**अन्यश्च** इति। अन्यशब्दोऽर्थान्तरशब्दितविलक्षणार्थवाची। पूर्ववदनुषङ्गः। "ते यदन्तरा" इति नामरूपे अन्तरा विना यद्वर्तत इति अनामरूपतयोक्तोऽन्यश्च विलक्षणश्च एको जनार्दन एव। न केवलं कम्पकादिरिति चार्थः। तत्तस्मात् अन्तरः खवदित्यत्र हरौ लोकतो गगने च प्रयोगात्प्रयोगसाधारण्येन तत्रान्यत्रापि वाचकतया प्रतीतैराकाशनिर्वहिता यदित्यादिसर्वशब्दैरेको जनार्दन एव वाच्यः। नत्ववकाशः। कुतः ? अन्यो विष्णुः लिङ्गैर्युतो हि। अनामत्वारूपत्वोपलक्षितब्रह्मत्वामृतत्वनामरूपनिर्वहतृत्वलिङ्गैः युतत्वस्य लोकतोऽप्रसिद्धत्वेऽपि श्रुतिषु विष्णौ प्रसिद्धेरित्यर्थः। निपातद्वयमपि वैदिकप्रसिद्धिमादाय विष्णौ सावकाशमिति भावः। जनार्दनेत्यजत्वमोचकत्वयोरुक्त्या अमृतत्वं ब्रह्मत्वं च तस्यैवेति सूचितम् । "यत्प्रयन्त्यभिसंविशन्तीति। तद्विजिज्ञासस्व। तद् ब्रह्म" इति इत्यादेः।

अत्र समन्वेययौगिकाकाशशब्दार्थे वाच्येऽप्यर्थान्तरत्वरूपलिङ्गविशेषोक्तिः प्रागुक्ताशया ।।१२।।

नन्वथापि सोऽक्षरो हरिरित्ययुक्तम् । तद्धर्मस्य "असङ्गमरसं" इत्युक्तासङ्गत्वस्य "द्रवति स्वप्नायैव स यत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवति" इति वाजसनेये षष्ठेऽध्याये स्वप्नादिद्रष्टुर्जीवस्योक्तेः। "स वा एष सम्प्रसादो रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च" इत्यादिजीवलिङ्गबाहुल्यात् । स्वप्नदृष्टृत्वस्य जीवे प्रसिद्धेश्च । असङ्गत्वादि ब्रह्मलिङ्गानां तदभिन्नजीवचैतन्ये सम्भवादित्यतः प्राप्तम्। **सुषुप्त्युत्क्रान्त्योर्भेदेन** इति । तदर्थः **अन्यश्च जीवत** इति। पूर्ववदनुषङ्गः । "प्राज्ञेनात्मना सम्परिष्वक्तः"(ब.उ.६-३-२१) "प्राज्ञेनात्मनान्वारूढः" (ब.उ.६-३-२५) इति सुषुप्त्युत्क्रान्तिप्रकरणयोः श्रुतो जीवादन्यश्चैको जनार्दनः। तत्तस्मादसङ्गत्वलोकप्रसिद्धिभ्यां तदन्यत्र च वाचकत्वेन प्रतीतैः द्रवति सम्पश्यति अनन्वागतो "असङ्गो ह्ययं पुरुष" इत्यादिसर्वशब्दैः मुख्यतः अनुपचारेण एको जनार्दन एव वाच्यः। न जीवः। कुतः? अन्यो विष्णुः लिङ्गैर्युतो हि। अनन्वागतस्तेन इत्युक्तस्वप्नदर्शनकृतविकारराहित्यरूपासङ्गत्व अनन्वागतं पुण्येन इत्याद्युक्तपुण्यपापालेपादिरूपलिङ्गैः एतत्प्रकरणस्थैर्युतत्वात्। तेषां वैष्णवत्वसिद्धेरित्यर्थः।

स्वाप्नपदार्थानां सत्यत्वेन सर्वज्ञत्वाच्चेशस्य पश्यतीत्यादि शब्दमुख्यार्थत्वं च बोध्यम् ।

"तत्र किञ्चित्पश्यति" इत्युक्तसमन्वेयस्वप्नद्रष्टृनिर्देशे कार्ये अन्यश्च इत्याद्युक्तिः सूत्रानुसारात् । तथा च अत्रैव प्रकरणे हरेर्जीवद्भेदोक्तेः नाभेदमाश्रित्य लिङ्गान्यमुख्यतो नेयानीति तद्बलात् द्रवतीत्यादिशब्दमुख्यार्थो हरिरेवेति भावः।

जनार्दन इति संसारार्दकत्वोक्त्या सम्परिष्वक्त इति सुप्तिप्रकरणस्य मुक्तपरत्वस्यापि स्वाप्ययसम्पत्त्योरिति सूत्रसिद्धत्वात् सम्परिष्वक्तः सुप्त इतिवन्मुक्तः इत्यपि लाभेन भेदस्यापि मुक्तावपि सत्त्वान्न व्यावहारिको भेदः । किन्तु सत्य एवेति सूचितम् ।।१३।।

नन्वथापि सर्वकर्ता पूर्णानन्द इत्यादावनन्यापेक्षसर्वकर्तृत्वादिगुणोक्त्या यन्नित्यमहिमत्वं विष्णोरभिमतं तदयुक्तम् । तस्य काण्वश्रुतौ षष्ठे "एष नित्यो महिमा ब्राह्मणस्य" (बृ.उ.६-४-२२) "स वा एष महानज आत्मा" (बृ.उ.६-४-२४) इत्यजशब्दात् हिरण्यगर्भे रूढब्राह्मणपदसहकृतात् चतुर्मुखस्य प्रतीतेः। नित्यमहिमत्वादिविष्णुलिङ्गस्य च तदभेदेन विरिञ्चेऽप्युपपत्तेरित्यतः प्राप्तं - **पत्यादिशब्देभ्य** इति। तदर्थः **पतित्वादिगुणैर्युक्त** इति।

पूर्ववदनुषङ्गः। "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरेष सर्वेश्वर" इत्यादिनोक्तसर्वाधिपतित्वादिगुणैः युक्त एको जनार्दनः। तत्तस्मात् प्रसिद्ध्या नित्यमहिमत्वविष्णुलिङ्गेन चोभयवाचकत्वेन प्रतीतैः ब्राह्मणाजमहदात्मादिसर्वशब्दैरेको जनार्दन एव मुख्यतो ब्रह्मणा वेदेनाण्यते ज्ञायत इत्यादि योगवृत्त्या वाच्यो न विरिञ्चः। कुतः ? पतित्वादिगुणयुक्तो विष्णुः सर्वैलिङ्गैर्युतो हि । सर्ववशित्वसर्वेशानत्वादिलिङ्गयुतत्वस्य " ईशान" इत्यादिभाष्योक्तश्रुतिभिःविष्णौ प्रसिद्धेरित्यर्थः।

अत्र जनेत्यजत्वोक्त्या अजशब्दस्य हरौ यौगिकत्वं, अर्दनेति संसारमोचकत्वोक्त्या ब्रह्मपदस्य वेदगम्यत्वरूपयौगिकत्वं च सूचितम् । मोचकस्यैव वेदगम्यत्वात् "तमेवं विद्वान्" इत्यादेः। ब्रह्माण इति दीर्घव्यत्ययस्याधिक्यार्थत्वात् ब्राह्मणाजश्रुत्योः सावकाशत्वात् निर्बीजोऽभेदो नाशङ्क्य इति भावः। वशित्वादिगुणैर्युक्त इति वाच्ये पतित्वादीत्युक्तिः सूत्रानुसारात् । सूत्रञ्च भाष्योक्तश्रुत्यनुसारि। पादार्थमुपसंहरति। **तदन्यत्र च वाचकैः मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दन** इति। तदिदं तन्त्रं आवृत्तिर्वा । पतित्वादिगुणैर्युक्त इत्यस्ति। अत्रादिपदेन प्रागुक्तसर्वाश्रयत्वपूर्णगुणत्वादयो जीवान्यत्वान्ताश्च गुणा गृह्यन्ते। यतः पतित्वादिगुणैर्युक्तः तत्ततस्मात् तत्र तदन्यत्र च वाचकैः। सर्वशब्दैश्च नामलिङ्गोभयात्मकैः केवलमन्यत्र प्रसिद्धैरिति चार्थः। मुख्यतो मुख्यया वृत्या एको जनार्दनो वाच्यो न तु विष्णुरन्यश्चेत्यनेके इत्यर्थः ।।**१४**।।

**इति श्रीब्रह्मसूत्राणुभाष्यविवृतौ तत्त्वमञ्जर्यां राघवेन्द्रयतिकृतायां प्रथमाध्यायस्य तृतीयःपादः।**

**आनन्दमाला** - एवं चेन्मनुष्यजातिभिः शूद्राद्यैरपि वेदैर्ज्ञेयः स इत्याशङ्क्याह - "शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि" (१-३-३४)इत्यधिकरणम् **न वेदैः शूद्राद्यैः** इति। शूद्रशकशबरपुरस्सरैः सर्वथापि न वेदैर्ज्ञेयः परमात्मा। न हि कुत्रचिच्छूद्रो वेदाधिकारी दृष्टः। पौत्रायणोऽपि कारणान्तरेण शूद्रशब्दोक्तत्वेऽप्यशूद्र एव हि वेदविद्यां अश्रौषीत्। लिंगविशेषेणोत्तरत्र क्षत्रियत्वावगमात्। अपि च शूद्रस्य संस्काराभावाभिलापात् शूद्रत्वाभावनिर्धारण एव सत्यकामस्योपनयनादिप्रवृत्तेश्च नैव शूद्रो वेदाधिकारी। तस्य वेदश्रवणाध्यनार्थावधारणानां प्रकटप्रतिषेधात् किमु वक्तव्यम् । सामान्यस्त्रीब्रह्मबन्धूनां संस्कारलेशदर्शनाद् यथोचितैवैष प्रतिषेधो बोद्धव्यः। एवञ्च तैर्गुणकर्मनाम्नां यथायोग्यश्रवणकीर्तनमात्रेणोपास्यो वेत्याकूतम् ।।१।।

**अन्यश्च** इति। अन्यशब्दोऽर्थान्तरशब्दितविलक्षणार्थवाची। पूर्ववदनुषङ्गः। "ते यदन्तरा" इति नामरूपे अन्तरा विना यद्वर्तत इति अनामरूपतयोक्तोऽन्यश्च विलक्षणश्च एको जनार्दन एव। न केवलं कम्पकादिरिति चार्थः। तत्तस्मात् अन्तरः खवदित्यत्र हरौ लोकतो गगने च प्रयोगात्प्रयोगसाधारण्येन तत्रान्यत्रापि वाचकतया प्रतीतैराकाशनिर्वहिता यदित्यादिसर्वशब्दैरेको जनार्दन एव वाच्यः। नत्ववकाशः। कुतः ? अन्यो विष्णुः लिङ्गैर्युतो हि। अनामत्वारूपत्वोपलक्षितब्रह्मत्वामृतत्वनामरूपनिर्वहतृत्वलिङ्गैः युतत्वस्य लोकतोऽप्रसिद्धत्वेऽपि श्रुतिषु विष्णौ प्रसिद्धेरित्यर्थः। निपातद्वयमपि वैदिकप्रसिद्धिमादाय विष्णौ सावकाशमिति भावः। जनार्दनेत्यजत्वमोचकत्वयोरुक्त्या अमृतत्वं ब्रह्मत्वं च तस्यैवेति सूचितम् । "यत्प्रयन्त्यभिसंविशन्तीति। तद्विजिज्ञासस्व। तद् ब्रह्म" इति इत्यादेः।

अत्र समन्वेययौगिकाकाशशब्दार्थे वाच्येऽप्यर्थान्तरत्वरूपलिङ्गविशेषोक्तिः प्रागुक्ताशया ।।१२।।

नन्वथापि सोऽक्षरो हरिरित्ययुक्तम् । तद्धर्मस्य "असङ्गमरसं" इत्युक्तासङ्गत्वस्य "द्रवति स्वप्नायैव स यत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवति" इति वाजसनेये षष्ठेऽध्याये स्वप्नादिद्रष्टुर्जीवस्योक्तेः। "स वा एष सम्प्रसादो रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च" इत्यादिजीवलिङ्गबाहुल्यात् । स्वप्नदृष्टृत्वस्य जीवे प्रसिद्धेश्च । असङ्गत्वादि ब्रह्मलिङ्गानां तदभिन्नजीवचैतन्ये सम्भवादित्यतः प्राप्तम्। **सुषुप्त्युत्क्रान्त्योर्भेदेन** इति । तदर्थः **अन्यश्च जीवत** इति। पूर्ववदनुषङ्गः । "प्राज्ञेनात्मना सम्परिष्वक्तः"(ब.उ.६-३-२१) "प्राज्ञेनात्मनान्वारूढः" (ब.उ.६-३-२५) इति सुषुप्त्युत्क्रान्तिप्रकरणयोः श्रुतो जीवादन्यश्चैको जनार्दनः। तत्तस्मादसङ्गत्वलोकप्रसिद्धिभ्यां तदन्यत्र च वाचकत्वेन प्रतीतैः द्रवति सम्पश्यति अनन्वागतो "असङ्गो ह्ययं पुरुष" इत्यादिसर्वशब्दैः मुख्यतः अनुपचारेण एको जनार्दन एव वाच्यः। न जीवः। कुतः? अन्यो विष्णुः लिङ्गैर्युतो हि। अनन्वागतस्तेन इत्युक्तस्वप्नदर्शनकृतविकारराहित्यरूपासङ्गत्व अनन्वागतं पुण्येन इत्याद्युक्तपुण्यपापालेपादिरूपलिङ्गैः एतत्प्रकरणस्थैर्युतत्वात्। तेषां वैष्णवत्वसिद्धेरित्यर्थः।

स्वाप्नपदार्थानां सत्यत्वेन सर्वज्ञत्वाच्चेशस्य पश्यतीत्यादि शब्दमुख्यार्थत्वं च बोध्यम् ।

"तत्र किञ्चित्पश्यति" इत्युक्तसमन्वेयस्वप्नद्रष्टृनिर्देशे कार्ये अन्यश्च इत्याद्युक्तिः सूत्रानुसारात् । तथा च अत्रैव प्रकरणे हरेर्जीवद्भेदोक्तेः नाभेदमाश्रित्य लिङ्गान्यमुख्यतो नेयानीति तद्बलात् द्रवतीत्यादिशब्दमुख्यार्थो हरिरेवेति भावः।

जनार्दन इति संसारार्दकत्वोक्त्या सम्परिष्वक्त इति सुप्तिप्रकरणस्य मुक्तपरत्वस्यापि स्वाप्ययसम्पत्त्योरिति सूत्रसिद्धत्वात् सम्परिष्वक्तः सुप्त इतिवन्मुक्तः इत्यपि लाभेन भेदस्यापि मुक्तावपि सत्त्वान्न व्यावहारिको भेदः । किन्तु सत्य एवेति सूचितम् ।।१३।।

नन्वथापि सर्वकर्ता पूर्णानन्द इत्यादावनन्यापेक्षसर्वकर्तृत्वादिगुणोक्त्या यन्नित्यमहिमत्वं विष्णोरभिमतं तदयुक्तम् । तस्य काण्वश्रुतौ षष्ठे "एष नित्यो महिमा ब्राह्मणस्य" (बृ.उ.६-४-२२) "स वा एष महानज आत्मा" (बृ.उ.६-४-२४) इत्यजशब्दात् हिरण्यगर्भे रूढब्राह्मणपदसहकृतात् चतुर्मुखस्य प्रतीतेः। नित्यमहिमत्वादिविष्णुलिङ्गस्य च तदभेदेन विरिञ्चेऽप्युपपत्तेरित्यतः प्राप्तं - **पत्यादिशब्देभ्य** इति। तदर्थः **पतित्वादिगुणैर्युक्त** इति।

पूर्ववदनुषङ्गः। "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरेष सर्वेश्वर" इत्यादिनोक्तसर्वाधिपतित्वादिगुणैः युक्त एको जनार्दनः। तत्तस्मात् प्रसिद्ध्या नित्यमहिमत्वविष्णुलिङ्गेन चोभयवाचकत्वेन प्रतीतैः ब्राह्मणाजमहदात्मादिसर्वशब्दैरेको जनार्दन एव मुख्यतो ब्रह्मणा वेदेनाण्यते ज्ञायत इत्यादि योगवृत्त्या वाच्यो न विरिञ्चः। कुतः ? पतित्वादिगुणयुक्तो विष्णुः सर्वैलिङ्गैर्युतो हि । सर्ववशित्वसर्वेशानत्वादिलिङ्गयुतत्वस्य " ईशान" इत्यादिभाष्योक्तश्रुतिभिःविष्णौ प्रसिद्धेरित्यर्थः।

अत्र जनेत्यजत्वोक्त्या अजशब्दस्य हरौ यौगिकत्वं, अर्दनेति संसारमोचकत्वोक्त्या ब्रह्मपदस्य वेदगम्यत्वरूपयौगिकत्वं च सूचितम् । मोचकस्यैव वेदगम्यत्वात् "तमेवं विद्वान्" इत्यादेः। ब्रह्माण इति दीर्घव्यत्ययस्याधिक्यार्थत्वात् ब्राह्मणाजश्रुत्योः सावकाशत्वात् निर्बीजोऽभेदो नाशङ्क्य इति भावः। वशित्वादिगुणैर्युक्त इति वाच्ये पतित्वादीत्युक्तिः सूत्रानुसारात् । सूत्रञ्च भाष्योक्तश्रुत्यनुसारि। पादार्थमुपसंहरति। **तदन्यत्र च वाचकैः मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दन** इति। तदिदं तन्त्रं आवृत्तिर्वा । पतित्वादिगुणैर्युक्त इत्यस्ति। अत्रादिपदेन प्रागुक्तसर्वाश्रयत्वपूर्णगुणत्वादयो जीवान्यत्वान्ताश्च गुणा गृह्यन्ते। यतः पतित्वादिगुणैर्युक्तः तत्ततस्मात् तत्र तदन्यत्र च वाचकैः। सर्वशब्दैश्च नामलिङ्गोभयात्मकैः केवलमन्यत्र प्रसिद्धैरिति चार्थः। मुख्यतो मुख्यया वृत्या एको जनार्दनो वाच्यो न तु विष्णुरन्यश्चेत्यनेके इत्यर्थः ।।१४।।

**इति श्रीब्रह्मसूत्राणुभाष्यविवृतौ तत्त्वमञ्जर्यां राघवेन्द्रयतिकृतायां प्रथमाध्यायस्य तृतीयःपादः।**

**आनन्दमाला** - एवं चेन्मनुष्यजातिभिः शूद्राद्यैरपि वेदैर्ज्ञेयः स इत्याशङ्क्याह - "शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि" (१-३-३४)इत्यधिकरणम् **न वेदैः शूद्राद्यैः** इति। शूद्रशकशबरपुरस्सरैः सर्वथापि न वेदैर्ज्ञेयः परमात्मा। न हि कुत्रचिच्छूद्रो वेदाधिकारी दृष्टः। पौत्रायणोऽपि कारणान्तरेण शूद्रशब्दोक्तत्वेऽप्यशूद्र एव हि वेदविद्यां अश्रौषीत्। लिंगविशेषेणोत्तरत्र क्षत्रियत्वावगमात्। अपि च शूद्रस्य संस्काराभावाभिलापात् शूद्रत्वाभावनिर्धारण एव सत्यकामस्योपनयनादिप्रवृत्तेश्च नैव शूद्रो वेदाधिकारी। तस्य वेदश्रवणाध्यनार्थावधारणानां प्रकटप्रतिषेधात् किमु वक्तव्यम् । सामान्यस्त्रीब्रह्मबन्धूनां संस्कारलेशदर्शनाद् यथोचितैवैष प्रतिषेधो बोद्धव्यः। एवञ्च तैर्गुणकर्मनाम्नां यथायोग्यश्रवणकीर्तनमात्रेणोपास्यो वेत्याकूतम् ।।१।।

"कम्पनात्" (१-३-३९) इति सूत्रम् **कम्पकः** इति। "एजति" (कठ.६-२) इति श्रूयमाणः **कम्पकश्चेष्टको हरिरेव। अतः स एवोद्यतवज्रादिहेतिनामा ।।१०।।**

"पौरस्त्य एव ज्योतिःशब्दो "ज्योतिर्दर्शनात्" (१-३-४०)इति सूत्रं व्याख्यातुमलम् । "हृद्यन्तर्ज्योतिः पुरुषः" (बृ.उ६-३-७)इत्यत्रापि ज्योतिर्विष्णुरेव। न तु जीवः। तथा दर्शनात् ।।११।।

"आकाशोऽर्थान्तरत्वादिव्यपदेशात्" (१-३-४१) इति सूत्रं च तत्रैव "**खवत्**" इति व्याख्यातम् । "आकाश इति होवाच" (छां.उ.१-९-१)इत्युक्ताकाशो यथा विष्णवाख्यस्तद्वत् "आकाशो वै नाम" (छां.उ.८-१४-१)इत्यत्रापि विष्णुरेवोच्यते। कुतः ? प्राकृतनामरूपवतः प्रसिद्धाकाशादर्थान्तरत्वादिव्यपदेशात् ।।१२।।

"सुषुप्त्युत्क्रान्त्योर्भेदेन" (१-३-४२) इति सूत्रम् **अन्यश्च जीवतः** इति। "असङ्गो ह्ययं पुरुषः" (बृहदा.६-३-१५)इति न जीव उच्यते। "प्राज्ञेनात्मना सम्परिष्वक्तो न ......किञ्चन वेद" (बृहदा.६-३-२१)इत्यसङ्गाज्जीवस्य भेदव्यपदेशात् । कस्तर्हि? अज्ञादुच्यमानाज्जीवादन्यः प्राज्ञो हरिरेवासङ्गः। च शब्दः केवलभेदमवधारयन् भेदाभेदमतं निवारयति ।।१३।।

"एष नित्यो महिमा ब्राह्मणस्य" (बृहदा.६-४-२३) इत्यत्र विरिञ्चोऽप्युच्यत इत्यत आह - "पत्यादिशब्देभ्यः" (१-३-४३)इति सूत्रम् **पतित्वादिगुणैर्युक्तः** इति। सर्वाधिपतित्वं सर्वेशानत्वमग्राह्यत्वमित्यादिगुणैर्युक्तत्वान्नित्यमहिमो ब्राह्मणोऽपि विष्णुरेव। "यो ब्रह्माणं विदधाति" (श्वेताश्व) इत्यादावनित्यमहिमात्वं विरिञ्चस्यापि श्रुतम्। जन्मराहित्यं च मन्वन्तरकल्पादिष्वेव। न तु परादौ। न च विष्णावप्येवं शङ्क्यम् । "विष्णोर्नु कम्" (ऋ.१-१५४-१) "परो मात्रया" (ऋ.७-९९-१) "न ते विष्णो" (ऋ.७-९९-२) इत्यादिश्रुतिभ्यः ।।१४।।

पादार्थं निगमयति- **तदन्यत्र च वाचकैः। मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः** इति। अयं भावः - उक्तप्रकारेण रुद्रवाय्वादिविरिञ्चपर्यन्तेषु प्रसिद्धैर्मुख्यवाच्यः स इति यत् तत् तस्मात् कारणादन्यत्र एतेभ्योऽन्येष्वजगजादिघटलोष्टान्तवस्तुषु च वाचकत्वेन लोकसिद्धैर्नामलिङ्गात्मकैः सर्वशब्दैश्च जनार्दन एक एव मुख्यतो वाच्यः। तदन्यत्र च वाचकैः इति विशेषणशब्दस्यान्योऽप्यर्थः तत् तस्मिन् विष्णौ अन्यत्र जगति चेत्युभयत्रापि वाचकत्वेन प्रतीयमानैरिति । अथवा तदन्यत्र तस्माद् विष्णोरन्यत्र जगति समाकर्षादमुख्यतो वाचकैश्चेति । एवञ्चैक एव नारायणः सर्वशब्दमुख्यार्थ इति वचनात् समाधिकराहित्यं तस्योक्तं स्यात् ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां प्रथमाध्यायस्य तृतीयः पादः ।।**

**नृसिंहतीर्थ** – प्रसंगसंगत्या देवादीनां शूद्रादीनां च वेदविद्याधिकारभावाभावयोसमर्थनार्थयोः अष्टमनवमाधिकरणयोस्तात्पर्यम् **दैवतैरपि ज्ञेयो न वेदैः शूद्राद्यैः** इति। अपिशब्दो विरोधस्फुरणाय स च तदधिकरणे स्पष्टः। मनुष्याधिकारत्वादिति प्रकृतमनुष्यसमुच्चये वा। विष्णुरित्यनुवर्त्तते। दैवतैरपि वेदैः विष्णुर्ज्ञेयेत्यष्टमाधिकरणस्य तात्पर्यम् । शूद्राद्यैर्विष्णुर्वेदैः न ज्ञेय इति नवमाधिकरणस्य तात्पर्यम् । आद्यशब्देन साधारणस्त्रीणां वर्णबाह्यानां च ग्रहणम् ।

उभयत्रप्रसिद्धवज्रशब्दसमन्वयार्थस्य दशमाधिकरणस्य तात्पर्यम् **कम्पक** इति। सकलजगच्चेष्टक इत्यर्थः। उभयत्र प्रसिद्धज्योतिराकाशशब्दसमन्वयार्थयोः एकादशद्वादशाधिकरणयोस्तात्पर्यं नोक्तम् । पूर्वसमन्वितशब्दसमन्वयार्थत्वादिति ज्ञातव्यम् ।

उभयत्र प्रसिद्धस्वप्नादिद्रष्टृत्वलिंगसमन्वयार्थस्य त्रयोदशाधिकरणस्य तात्पर्यं **अन्यश्च जीवत** इति। चशब्दः सैद्धान्तिक असङ्गत्वलिङ्गसमुच्चयार्थः। जीवतः अन्यः भिन्न इत्यर्थः। अत्र सैद्धान्तिकलिंगमात्रे वक्तव्ये तस्य जीवेशाभेदेन जीवनिष्ठत्वशंकापरिहाराय सूत्रोक्तभेदस्याप्युक्तिः। सूत्रे भेदस्यैव प्राधान्येनोक्तत्वादत्रापि तथैवोक्तिः।

उभयत्र सिद्धब्राह्मणशब्दसमन्वयार्थस्य चतुर्दशाधिकरणस्य तात्पर्यम् **पतित्वादिगुणैर्युक्तः** इति। आदिपदेन वशित्वादिगुणानां ग्रहणम् । अत्र सिद्धान्तसाधकत्वेन सूत्रे बहुशब्दानामुपात्तत्वात् तत्संग्रहायादिपदबहुवचनप्रयोगः।

तृतीयपादार्थं उपसंहरति **तत्** इति। इदं च तन्त्रेणोपात्तम् । तस्मादित्यर्थः। तस्य विष्णोरन्यत्र चशब्देन विंष्णुसमुच्चयः। विष्णौ च वाचकैः उभयत्र प्रसिद्धैरिति यावत् । सर्वशब्दैश्च जनार्दनः एक एव मुख्यतया वाच्य इत्यर्थः ।अत्रापि सूत्रोक्तानामुपलक्षणत्वाभिप्रायेण सर्वशब्दैरित्युक्तम्।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ।।**

**श्रीनिवासतीर्थीया–** दैवतैरपि वेदैर्ज्ञेय इति देवताधिकरणस्य तात्पर्यतोऽर्थकथनं शूद्राद्यैर्वेदैर्नज्ञेय इति अपशूद्राधिकरणतात्पर्यार्थम् । कम्पनात् ज्योतिर्दर्शनादित्यनयोरर्थः **कम्पक** इति। लोकसंचरणं जीवमादाय तस्यैवेति न्यायविवरणोक्त जीवित इत्येतदत्रापि सम्बन्ध्यते। तसेः सार्वविभक्तिकत्वाज्जीवस्येत्यर्थः। कम्पकश्चेष्टकः। आकाशोऽर्थान्तरत्वादिव्यपदेशादित्यर्थो **अन्य** इति। विलक्षणः। नामादिहीन इति यावत्। सुषुप्त्यधिकरणार्थः अन्यश्च जीवत इति। जीवाद्भिन्न इत्यर्थः। पत्यादिशब्देभ्य इत्यन्तिमाधिकरणार्थः **पतित्वादिगुणैर्युक्त** इति। पादार्थमुपसंहरति **तत्** इति। तत्र तदन्यत्र च उभयत्रेति यावत् । वाचकैः प्रसिद्धैः सर्वशब्दैर्लिंगनामात्मकैः मुख्यतो जनार्दन एक एवोच्यते नाऽन्य इत्यर्थः ।।२।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यविवरणे प्रथमाध्यायस्य तृतीयः पादः ।।**

**छलारी -**

## ओं शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ओं

शूद्राणां वेदविद्याधिकारो नास्ति। कथं तर्हि शूद्रेति सम्बोधितस्य पौत्रायणस्य वेदविद्याधिकारः इति। उच्यते तस्य पौत्रायणस्य तदा द्रवणात् शुचा द्रवणादेव शूद्रेति सम्बोधनम् । न वर्णावरत्वात् । शोको किन्निमित्त इत्यत उक्तं तदनादरश्रवणात् - हंसकृतानादरश्रवणात् , अस्य शोक इति। किमत्र ज्ञापकं इत्यत उक्तं सूच्यते हीति । ही यस्मात् क्षत्तारमुवाचेति व्यग्रतयोक्त्या शोको ज्ञाप्यत इति सूत्रार्थः।

अत्रास्ति शूद्राणां वेदविद्याधिकारः। मनुष्याधिकारत्वादिति मनुष्याणामधिकारस्योक्तत्वात् । न चादर्शनादनधिकारः। शूद्रस्यापि पौत्रायणस्य वैदिकसंवर्गविद्याध्ययनदर्शनात् । तस्य शूद्रत्वमेव कुतः इति चेन्न । रैक्वेण "अह हारे त्वा शूद्र" इति पौत्रायणं प्रति सम्बोधनादिति प्राप्ते -

न शूद्राणां वेदविद्याधिकारः। संस्कारविधुरत्वात् । अध्ययनादेश्च संस्कारसापेक्षत्वात् । न च शूद्रस्यापि पौत्रायणस्य कथं वेदविद्याधिकार इति वाच्यम् । तस्य शूद्रत्वे प्रमाणाभावात् । न च शूद्रेति सम्बोधनमेव तत्र प्रमाणमिति वाच्यम् । शुचा द्रवणयोगेन तत्र शूद्रशब्दस्य प्रवृत्तत्वेन तत्साधकत्वाभावात् । चैत्ररथलिङ्गेन क्षत्रियत्वावगतेश्चेति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **ज्ञेयो न वेदैः शूद्राद्यै** इति। आद्यशब्देन साधारणस्त्रीणां वर्णबाह्यानां च ग्रहणम् । अस्याधिकरणद्वयस्य साक्षादसमन्वयपरत्वेन प्रासङ्गिकत्वान्नासङ्गतिः ।।९।।

## ओं कम्पनात् ओं

अत्र वज्रशब्दवाच्यो भगवानेव। कुतः? कम्पनात् । एजति इति सर्वजगच्चेष्टकत्वश्रवणादिति सूत्रार्थः।

अत्र "यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमतास्ते भवन्ति" इति (२-३-२) काठकश्रुत्युक्तं वज्रं इन्द्रायुधमेव भवेत् वज्रश्रुतेः तत्र रूढत्वादिति प्राप्ते -

अयं वज्रो भगवानेव। "एजति" इति सर्वजगच्चेष्टकत्वरूपनिरवकाशलिङ्गश्रवणात् । "य एतद्विदुः अमृतास्ते भवन्ति" इति वज्रज्ञानान्मोक्षोक्तेश्च । न च तत्र वज्रश्रुतिविरोधः।

"चक्रं चंक्रमणादेषः वर्जनाद्वज्रमुच्यते। खण्डनात्खण्ड एवैष" (ब्र.वै.पु)इति स्मृत्या वज्रश्रुतेः सावकाशत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **कम्पक** इति। सकलजगच्चेष्टकः। तस्माद्विष्णुरेवात्रोक्तो वज्र इत्यर्थः ।।१०।।

**ओं ज्योतिर्दर्शनात् ओं**

ज्योतिश्शब्दवाच्यो विष्णुरेव। कुतः ? दर्शनात् । विष्णुरेव ज्योतिरिति श्रुतेरिति सूत्रार्थः।

अत्र "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः उभौ लोकावनुसञ्चरति" इति जीवलिङ्गादिति प्राप्ते -

विष्णुरेवेदं ज्योतिः। ज्योतिःश्रुतेः विष्ण्वैकवाचित्वात् । न चात्र प्रमाणाभावः। "विष्णुरेव ज्योतिः विष्णुरेवात्मा, विष्णुरेव ब्रह्म" इति (चतुर्वेदशिखा)श्रुतेः। न च विष्णुपक्षे उभयलोकसञ्चरणानुपपत्तिः। "प्राज्ञेनात्मनान्वारूढः उत्सर्जद्याति" इति जीवमादायेश्वरस्यैव उभयलोकसञ्चरणोक्तेः इति सिद्धान्तः कृतः ।।११।।

**ओं आकाशोऽर्थान्तरत्वादिव्यपदेशात् ओं**

आकाशशब्दवाच्यो विष्णुरेव । कुतः ? अर्थान्तरत्वादिव्यपदेशात् । अन्योऽर्थः अर्थान्तरं विलक्षणोऽर्थः। तस्य भावः तत्वं, नामरूपराहित्याख्यविलक्षणार्थत्वव्यपदेशात् । आदिपदेन ब्रह्मत्वादिव्यपदेशादिति सूत्रार्थः।

अत्र "आकाशो वै नाम नामरूपयोः निर्वहिता, ते यदन्तरा तद् ब्रह्म तदमृतम्" (छा.उ.८-१४-१) इत्यत्रोक्ताकाशः प्रसिद्धाकाश एव भवेत् । आकाशशब्दस्य तत्रैव रूढत्वादिति प्राप्ते -

अयमाकाशो विष्णुरेव। "ते यदन्तरा तद् ब्रह्म" इति नामरूपराहित्यव्यपदेशात् । "तद् ब्रह्म" इति ब्रह्मत्वव्यपदेशाच्चेति सिद्धान्तः कृतः।

तदेतदधिकरणयोस्तात्पर्यन्तु पृथङ्नोक्तम् । एतयोः प्रथमपादसमन्वितशब्दसमन्वयार्थत्वात् । प्रयोजनन्तु ग्रन्थान्तरात् अवगन्तव्यम् ।।१२।।

**ओं सुषुप्त्युत्क्रान्त्योर्भेदेन ओं**

स्वप्नादिद्रष्टा विष्णुरेव। असङ्गत्वलिङ्गात् । न चाभेदेन लिङ्गोपपत्तिः। सुषुप्त्युत्क्रान्तिप्रकरणयोः जीवेशयोः भेदेन व्यपदेशात् इति सूत्रार्थः।

अत्र "स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा द्रष्ट्वैव पुण्यं पापं च पुनः प्रतिन्यायं प्रतियोन्यां द्रवति स्वप्नायैव। स यत्तत्र किञ्चित्पश्यति अनन्वागतस्तेन भवति। असङ्गो ह्ययं पुरुषः" (बृ.उ.६-३-१५) इत्यत्रोक्तं स्वप्नादिद्रष्टृत्वं जीवस्यैव भवेत् । प्रसिद्धत्वात् । न चासङ्गत्वलिङ्गात् ईशस्यैवेति वाच्यम् । जीवेशयोरभेदेन जीवेपि चैतन्यविवक्षया असङ्गत्वसम्भवादिति प्राप्ते -

**छलारी –**

**ओं शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ओं**

शूद्राणां वेदविद्याधिकारो नास्ति। कथं तर्हि शूद्रेति सम्बोधितस्य पौत्रायणस्य वेदविद्याधिकारः इति। उच्यते तस्य पौत्रायणस्य तदा द्रवणात् शुचा द्रवणादेव शूद्रेति सम्बोधनम् । न वर्णावरत्वात् । शोको किन्निमित्त इत्यत उक्तं तदनादरश्रवणात् – हंसकृतानादरश्रवणात् , अस्य शोक इति। किमत्र ज्ञापकं इत्यत उक्तं सूच्यते हीति । ही यस्मात् क्षत्तारमुवाचेति व्यग्रतयोक्त्या शोको ज्ञाप्यत इति सूत्रार्थः।

अत्रास्ति शूद्राणां वेदविद्याधिकारः। मनुष्याधिकारत्वादिति मनुष्याणामधिकारस्योक्तत्वात् । न चादर्शनादनधिकारः। शूद्रस्यापि पौत्रायणस्य वैदिकसंवर्गविद्याध्ययनदर्शनात् । तस्य शूद्रत्वमेव कुतः इति चेन्न । रैक्केण "अह हारे त्वा शूद्र" इति पौत्रायणं प्रति सम्बोधनादिति प्राप्ते –

न शूद्राणां वेदविद्याधिकारः। संस्कारविधुरत्वात् । अध्ययनादेश्च संस्कारसापेक्षत्वात् । न च शूद्रस्यापि पौत्रायणस्य कथं वेदविद्याधिकार इति वाच्यम् । तस्य शूद्रत्वे प्रमाणाभावात् । न च शूद्रेति सम्बोधनमेव तत्र प्रमाणमिति वाच्यम् । शुचा द्रवणयोगेन तत्र शूद्रशब्दस्य प्रवृत्तत्वेन तत्साधकत्वाभावात् । चैत्ररथलिङ्गेन क्षत्रियत्वावगतेश्चेति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह – **ज्ञेयो न वेदैः शूद्राद्यै** इति। आद्यशब्देन साधारणस्त्रीणां वर्णबाह्यानां च ग्रहणम् । अस्याधिकरणद्वयस्य साक्षादसमन्वयपरत्वेन प्रासङ्गिकत्वान्नासङ्गतिः।।९।।

**ओं कम्पनात् ओं**

अत्र वज्रशब्दवाच्यो भगवानेव। कुतः? कम्पनात् । एजति इति सर्वजगच्चेष्टकत्वश्रवणादिति सूत्रार्थः।

अत्र "यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमतास्ते भवन्ति" इति (२-३-२) काठकश्रुत्युक्तं वज्रं इन्द्रायुधमेव भवेत् वज्रश्रुतेः तत्र रूढत्वादिति प्राप्ते –

अयं वज्रो भगवानेव। "एजति" इति सर्वजगच्चेष्टकत्वरूपनिरवकाशलिङ्गश्रवणात् । "य एतद्विदुः अमृतास्ते भवन्ति" इति वज्रज्ञानान्मोक्षोक्तेश्च । न च तत्र वज्रश्रुतिविरोधः।

"चक्रं चंक्रमणादेषः वर्जनाद्वज्रमुच्यते। खण्डनात्खण्ड एवैष" (ब्र.वै.पु)इति स्मृत्या वज्रश्रुतेः सावकाशत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **कम्पक** इति। सकलजगच्चेष्टकः। तस्माद्विष्णुरेवात्रोक्तो वज्र इत्यर्थः ।।१०।।

**ओं ज्योतिर्दर्शनात् ओं**

ज्योतिश्शब्दवाच्यो विष्णुरेव। कुतः ? दर्शनात् । विष्णुरेव ज्योतिरिति श्रुतेरिति सूत्रार्थः।

अत्र ''योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः उभौ लोकावनुसञ्चरति'' इति जीवलिङ्गादिति प्राप्ते -

विष्णुरेवेदं ज्योतिः। ज्योतिःश्रुतेः विष्ण्वैकवाचित्वात् । न चात्र प्रमाणाभावः। ''विष्णुरेव ज्योतिः विष्णुरेवात्मा, विष्णुरेव ब्रह्म'' इति (चतुर्वेदशिखा)श्रुतेः। न च विष्णुपक्षे उभयलोकसञ्चरणानुपपत्तिः। ''प्राज्ञेनात्मनान्वारूढः उत्सर्जद्याति'' इति जीवमादायेश्वरस्यैव उभयलोकसञ्चरणोक्तेः इति सिद्धान्तः कृतः।।११।।

**ओं आकाशोऽर्थान्तरत्वादिव्यपदेशात् ओं**

आकाशशब्दवाच्यो विष्णुरेव । कुतः ? अर्थान्तरत्वादिव्यपदेशात् । अन्योऽर्थः अर्थान्तरं विलक्षणोऽर्थः। तस्य भावः तत्वं, नामरूपराहित्याख्यविलक्षणार्थत्वव्यपदेशात् । आदिपदेन ब्रह्मत्वादिव्यपदेशादिति सूत्रार्थः।

अत्र ''आकाशो वै नाम नामरूपयोः निर्वहिता, ते यदन्तरा तद् ब्रह्म तदमृतम्'' (छा.उ.८-१४-१) इत्यत्रोक्ताकाशः प्रसिद्धाकाश एव भवेत् । आकाशशब्दस्य तत्रैव रूढत्वादिति प्राप्ते -

अयमाकाशो विष्णुरेव। ''ते यदन्तरा तद् ब्रह्म'' इति नामरूपराहित्यव्यपदेशात् । ''तद् ब्रह्म'' इति ब्रह्मत्वव्यपदेशाच्चेति सिद्धान्तः कृतः।

तदेतदधिकरणयोस्तात्पर्यन्तु पृथङ्नोक्तम् । एतयोः प्रथमपादसमन्वितशब्दसमन्वयार्थत्वात् । प्रयोजनन्तु ग्रन्थान्तरात् अवगन्तव्यम् ।।१२।।

**ओं सुषुप्त्युत्क्रान्त्योर्भेदेन ओं**

स्वप्नादिद्रष्टा विष्णुरेव। असङ्गत्वलिङ्गात् । न चाभेदेन लिङ्गोपपत्तिः। सुषुप्त्युत्क्रान्तिप्रकरणयोः जीवेशयोः भेदेन व्यपदेशात् इति सूत्रार्थः।

अत्र ''स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा द्रष्ट्वैव पुण्यं पापं च पुनः प्रतिन्यायं प्रतियोन्यां द्रवति स्वप्नायैव। स यत्तत्र किञ्चित्पश्यति अनन्वागतस्तेन भवति। असङ्गो ह्ययं पुरुषः'' (बृ.उ.६-३-१५) इत्यत्रोक्तं स्वप्नादिद्रष्टृत्वं जीवस्यैव भवेत् । प्रसिद्धत्वात् । न चासङ्गत्वलिङ्गात् ईशस्यैवेति वाच्यम् । जीवेशयोरभेदेन जीवेपि चैतन्यविवक्षया असङ्गत्वसम्भवादिति प्राप्ते -

स्वप्नादिद्रष्टा परमात्मैव । असङ्गत्वलिङ्गात् । न चाभेदाज्जीवस्यापि असङ्गत्वमिति वाच्यम् । "प्राज्ञेनात्मना सम्परिष्वक्तः न बाह्यं किञ्चन वेद नान्तरम्" (बृ.उ.६-३-२१) । "प्राज्ञेनात्मना अन्वारूढः उत्सर्जद्याति" (बृ.उ.६-३-२५)इति सुषुप्त्युत्क्रान्तिप्रकरणयोः भेदेनैव जीवेशयोः उक्तत्वेन तदभेदाभावादिति सिद्धान्तः कृतः ।।

तस्य तात्पर्यमाह - **अन्यश्च जीवत** इति। जीवतः -जीवात् , अन्यश्च - भिन्न एवेत्यर्थः। अत्र सैद्धान्तिकलिङ्गमात्रे वक्तव्ये तस्य जीवेश्वराभेदेन जीवनिष्ठत्वशङ्कापरिहाराय सूत्रोक्तभेदस्याप्युक्तिरिति बोध्यम् ।।१३।।

**ओं पत्यादिशब्देभ्यः ओं**

ब्राह्मणशब्दवाच्यो विष्णुरेव। कुतः? सर्वाधिपत्यादिशब्दसमुदायादिति सूत्रार्थः।

अत्र "एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नोकनीयान् । स ब्राह्मणः विरिञ्चो भवेत् । स वा एष महानज आत्मा" (बृ.उ.६-४-२२)इति तस्मिन्नजशब्दश्रवणादिति प्राप्ते -

अयं ब्राह्मणो विष्णुरेव। "सर्वस्य वशी, सर्वस्येशानः, सर्वस्याधिपतिः, एष सर्वेश्वरः, एष भूताधिपतिः, एष भूतपालः, एष सेतुः विधरण" इत्यादौ स्वाधिपत्यादिवाचिशब्दसद्भावात् । न चाजशब्दविरोधः, न जायत इति योगेनोपपत्तेः। न च ब्राह्मणशब्दविरोधः । ब्रह्मणा वेदेनाण्यते गम्यते इति योगेनोपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **पतित्वादिगुणैर्युक्त** इति। आदिपदेन वशित्वादिगुणग्रहणम् । तस्माद्विष्णुरेव ब्राह्मण इत्यर्थः। अत्र सिद्धान्तसाधकत्वेन सूत्रे बहुशब्दानामुपात्तत्वात्तत्सङ्ग्रहायादि-पदबहुवचनप्रयोगः। पादार्थमुपसंहरति - **तत्** इति। तदित्यव्ययं तन्त्रेणोपात्तम् । आद्यस्य तस्मादित्यर्थः। द्वितीयस्य तस्मिन् विष्णावित्यर्थः। वाचकैरित्यस्य उभयत्रानुषङ्गः। उभयत्र प्रसिद्धैरिति यावत् । अत्रापि सूत्रोक्तानां उपलक्षणत्वाभिप्रायेण सर्वशब्दैरित्युक्तम् । ततश्चोभयत्र प्रसिद्धैः नामलिङ्गात्मकैः सर्वशब्दैश्च जनार्दनः एक एव मुख्यतो वाच्य इत्यर्थः। चशब्दः पूर्वपादसमन्वितान्यत्रप्रसिद्धनामात्मकलिङ्गात्मकशब्दसमुच्चयार्थः ।।१४।।

**मदाचार्यमनोधाममध्वमानसमञ्चके।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां प्रथमाध्यायस्य**
तृतीयः पादः ।।

**नारायणाचार्य–** ननु विशिष्टबुध्यादिमान्मनुष्यः शूद्रोऽप्येवं अधिकारी स्यात् । जानुश्रुतेः पौत्रायणस्य "अह हारेत्वा शूद्र" (छां.उ.४-२-३) इत्यत्र शूद्रेति रैक्वेण सम्बोधितस्य संवर्गविद्याया अध्यापितत्वात् । अहेति सम्बोधनम् । हारः कंठाभरणं इत्वा रथश्च तवैवास्त्वित्यावृत्त्या योज्यम् । हार सु इत्वेति स्थिते ससजुषोरुः(पा.सू.८-२-६६) रुत्वकृत्वे कृते भोभगोअघोअपूर्वस्यायोशि(पा.सू.८-३-१७) इति यत्वे लोपः शाकल्यस्य (पा.सू.८-३-१९)इति यलोपे आद्गुण (पा.सू.६-१-८७) इति गुणं प्रति यलोपस्य सिद्धत्वं छन्दोविषयत्वेनाश्रित्य गुणे कृते हारेत्वा इति साधु । उक्तं च टीकाकारैः हारेत्वेति सेदुराजेतिवद्विसर्गलोपेन भवतीति । यद्यपि दार्ष्टान्तिके हारे त्वा इत्यत्र यलोपः सेदुराजेतिदृष्टान्ते सलोपः सोचि लोपे चेत्पादपूरणं (पा.सू.६-१-१३४) इति सूत्रेण न तु क्वापि विसर्गलोपस्तथापि पदकाले श्रुतस्य विसर्गस्य लोपोऽदर्शनं उभयत्र अस्तीति एतावत्यंशे दृष्टान्तो युक्तः। अत्र रुत्वयत्वे विधाय तल्लोपः तत्र सकारावस्थितायमित्यन्यदेतत् । अथ वा सेदुराजो यथा विसर्गलोपेन विशिष्टः स्वौजसमौट् (४-१-२)इति सूत्रोत्पन्नसुसम्बन्धी वाऽसौ सश्चेति विसः ऋगच्छतीति ऋगः विसश्चासावृगश्चेति विसर्गः। ऋग्गतसकारः तस्य लोपेन भवति। तथा अत्रापि हारेत्वा इत्यत्र सकारलोपमात्रे दृष्टान्तः। तत्र साक्षात्सस्यलोपो अत्र रुत्वयत्वानंतरमित्यन्यत्। यद्वा सेदुराजेतिवद्विसर्गलोपेनेत्यत्र विसर्गलोपेनेति पदच्छेदः। तथा च हारेत्वेतिवद्विसर्गलोपेन द्वौ च तौ सर्गौ च सस्यरुत्वविधानेनैकः सर्गः सृष्टिः। रोर्यत्वविधानेन द्वितीयः। तयोर्द्वयोः सर्गयोर्लोपेनादर्शनेन सिद्धं भवति। लोपानन्तरं सिद्धिस्तु सेदुराजेतिवदितितावन्मात्रेण दृष्टान्तः। छान्दसत्वेनासिद्धत्वानाश्रयणादिति भावः। ऐकपद्यमाश्रित्यापिव्याख्यातम् । हारेत्वानवितिवेति। सुपां सुलुगिति द्विवचनस्य डादेश इति भावः। हारसहित इत्वा हारेत्वेतिमध्यमपदलोपिसमासेनापि समाधेयम् । शूद्रेत्यत्र शुचा द्रवतीति व्युत्पत्त्या अनेन शुचशब्दे उपपदे द्रुगतावस्माद्रुप्रत्यये निर्वचनेन चकारलोपे आद्रवतीत्याकारेणशूद्रशब्दस्य पृष्टोदरादित्वात्साधुत्वम् । यत्तदुक्तं

> वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
> धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविध(विधं निरुक्तम्)स्तदुक्तम्

इति। अत एव आहुः

> योऽक्षरत्यागयोगाभ्यां क्षत्रं शूद्राभिधं व्यधात्।
> तस्य व्यासस्य वचसोवैदग्धं वेत्ति कः कविः ।।

इति। इत्याशंकायां नायं पौत्रायणः शूद्रः किन्तु क्षत्र एव। शुचा द्रवणात् परं शूद्रेति सम्बोधित इत्याशयेन प्रवृत्तं सूत्रं **शुगस्य तदनादरश्रवणात् तदाद्रवणात्सूच्यते हि** इति। अस्य पौत्रायणस्य "अथ ह हंसा निशायामतिपेतुस्तद्धैव हंसो हंसमभ्युवाद हो होयि भल्लाक्ष भल्लाक्ष

जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्वा मा प्रधाक्षीरिति। तमु ह परः प्रत्युवाच कम्बरं एनमेतत्सन्त सयुग्वानमिव रैक्व मात्थ'' इति हंसानादरश्रवणात् या जाता शुक् तया शुचा रैक्वं प्रत्याद्रवणदसौ पौत्रायणो जानश्रुतिः शूद्रेति रैक्वेण सम्बोधितः। न तु शूद्रत्वजात्याक्रान्तः। हि यतः ''स ह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्तेति'' वचनात् पौत्रायणस्य शुक् सूच्यते इति सूत्रार्थः । शोकेनाद्रवणज्ञानं तु मुनेः सर्वज्ञत्वादुपपन्नम् ।

ननु रूडिर्योगमपहरति। तस्य योगाद्बलवत्वात्। शूद्रजातिरेव रूढ्यर्थो ग्राह्य इत्यतः सूत्रं **क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिंगात्** । ''रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेन्वेव मा भगवः शाधीति'' (छा.४-२-४) इत्युत्तरवाक्ये चित्ररथसम्बन्धित्वलिंगेन क्षत्रियत्वावगमाच्च। यद्यपि

रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते । (ब्राह्म)<br>
यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः। (ब्रह्मवैवर्त)

इति वचनात् रथस्य त्रैवर्णिकसाधारणत्वं तथापि क्षत्रियस्य स्वाभाविकत्वात् । इतरस्य नैमित्तिकत्वादुभयोर्मध्ये बाधकाभावे सति मुख्यस्य स्वाभविकस्यैव ग्राह्यत्वात्तेन क्षत्रियत्वावगतिरिति भावः।

ननु तर्हि शूद्रस्याप्यश्वतरीरथोऽस्तु तदर्थं वेदाधिकारोऽप्यस्तु इत्यतः सूत्रं **संस्कारपरमर्शात्तदभावाभिलापाच्च**। ''अष्टवर्षं ब्राह्मणमुपनीयतैकादशे क्षत्रियं द्वादशे वैश्यं तमध्यापयीत'' इत्यध्यनार्थमुपनयनसंस्कारपरमार्शात् ''नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य'' इति पैंगिश्रुतौ शूद्रस्य संस्काराभावाभिलापाच्च। त्रैवर्णिकत्वाद्यन्यस्य संस्काराविधानान्न वेदाधिकार इति न तस्य रथित्वमिति भावः।

नन्वत्र शूद्रस्य संस्कारभावमात्रमुच्यते। न तु तन्निषेधः। निषेधाभावात्संस्कारस्यपि कर्तुं शक्यत्वात्सर्वमुपपत्स्यत इत्यतः सूत्रम् **तदभावनिर्धारणे च प्रवृत्तेः**। ''नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि'' (छा.उ.४-४)इति सत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्णये हारिद्रुमतस्य गौतमस्य नैतदब्राह्मणो विवक्तुमर्हति समिधं सौम्याहरोप त्वा नेष्ये न सत्यादगा (छा.उ.४-५)इति तत्संस्कारे प्रवृत्तेश्च । ब्राह्मणपदोपलक्षितत्रैवर्णिकत्वमेव संस्कारप्रयोजकमवगम्यत इति भावः।

ननु शूद्रो वेदे विद्याधिकारो विशिष्टबुध्यादिमत्वात् द्विजवत् । अन्यथा प्रागुक्तदेवताधिकारसिद्धिर्न स्यादित्यतः सूत्रं **श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च**। ''श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । अध्ययने जिह्वाच्छेदः। अर्थावधारणे हृदयविदारणं'' (धर्मसूत्रं.१२-४-७)इति प्रतिषेधत्वात् ।

नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः।
केवलैव तु शुश्रूषा त्रिवर्णानानां विधीयते ।। इति स्मृतेश्च।

तथा चानिषिद्धत्वे सति विशिष्टबुध्यादिमत्वं प्रयोजकमिति भावः। उत्तमस्त्रीणां तु वचनादेवाधिकारः।

आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके । इति।

विदुरादीनां तु उत्पत्तिविशिष्टज्ञानत्वान्नविरोधः। तथैव क्षत्रोप्तन्नकर्णस्य सूतसंस्कारेणैव संस्कृतत्वादक्षत्रसंस्कारयुतत्वेनाध्ययनाभावेऽपि न विरोधः। अत एवोक्तं

निखिलाः श्रुतीरधिजगौ शास्त्राणि सर्वाणि च।
बाल्यादेव...। (म.ता.नि.११-१६०) इति।

स्वयं प्रतिभाता तत्वधीता अध्यापिताश्चेत्यर्थः। अतोऽपवादाभावे सति विशिष्टबुध्यादिमत्वं वेदाधिकारे प्रयोजनमिति सिद्धम् । एतत्तात्पर्यमाह **ज्ञेयो न वेदैः शूद्राद्यैः** इति । शूद्राद्यैस्त्रिवर्णबाह्यैः कर्तृभिः वेदैः करणैर्न ज्ञेयः। कथं तर्हि तैर्भगवद्भजनादिकं कर्त्तव्यमिति चेत् न तेषां तन्त्रज्ञानाधिकारत्वाभावः।

ननु कठवल्लीषु ''महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति'' (क.उ.२-३-२)इति उद्यतत्वलिंगबलसहकृतवज्रशब्दवाच्यस्येन्द्रायुधस्य ज्ञानान्मोक्षः श्रूयत इत्यतः सूत्रं **ओं कम्पनात्** । तद्व्याचष्टे **कम्पक** इति। ''यच्च किञ्चिज्जगत्सर्वं प्राण एजति निःसृतम्'' (क.उ.२-३-२)इति महद्भयमित्युदाहृतवाक्यस्य पूर्वार्धोक्तस्य प्राणस्थितस्य प्राणनिःसृतस्य सर्वस्यापि जगतः कम्पकः एको जनार्दन एवेत्यर्थः। तथा च कम्पक इति निर्देशेन सौत्रः कम्पनशब्दो णिजन्ताल्ल्युटि व्युत्पादित इति सूचयति। तेन कम्पमानजगत्प्रेरकत्वं कम्पनं तदेव च कम्पकत्वं नामेति। उद्यतत्वलिंगस्योद्यमित्वात् हरौ सावकाशत्वात् । वज्रशब्दस्यापि

चक्रं चंक्रमणादेव वर्जनाद्वज्रमुच्यते।
खण्डनात्खड्ग एवैष हेतिनामा हरिः स्वयम् ।।

(ब्रह्मवैवर्त)इति स्मृत्या तत्रैवोपपन्नत्वाच्च। ''य एतद्विदुरमृतास्ते भवन्ति'' इति मोक्षजनकज्ञानविषयत्वस्य इन्द्रायुधे कथमपि नेतुमशक्यत्वाच्च विष्णुरेव वज्रशब्दवाच्य इति सिद्धम्।।१०।।

अथ ''यो यं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुष'' (बृ.उ.६-३-७)इति वाजसनेये ज्योतिःशब्दः श्रूयते। स च जीवपर एव । न च विष्णौ तत्समन्वय उक्त इति वाच्यम् ।

"प्राज्ञेनात्मनान्वारूढ उत्सर्जद्याति उभौ लोकावनुसंचरति (बृ.उ.६-३-७)इति जीवलिंगादत्र स ज्योतिःशब्दवाच्यो गत्या जीव एवेत्यतः सूत्रं **ज्योतिर्दर्शनात्** । ज्योतिःशब्देनात्र विष्णुरेवोच्यते। "विष्णुरेव ज्योतिर्विष्णुरेव आत्मा विष्णुरेव ब्रह्म विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवानन्द" इति चतुर्वेदशिखायां दर्शनात् । जीवमादयोभयलोकसंचरणं तस्याप्यस्त्येवेति लिंगस्य सावकाशत्वादिति भावः। एतत्तात्पर्यमाह **अन्यश्च जीवत** इति । अत्र ज्योतिःशब्दवाच्यो लिंगबलाज्जीवो न वाच्यः किन्तु जीवादन्यः परमात्मैव। सः ज्योतिःशब्दार्थ इत्यर्थः। लिंगस्यात्रैव सावकाशत्वादिति भावः ।।११।।

अथाकाशस्तल्लिंगादिति विष्णौ प्रतिपादितस्याकाशशब्दस्य "आकाशो वै नामरूपयोर्निर्वहिता" (छा.उ.८-१४-१)इति श्रुतौ वै नामेति प्रसिद्धद्योतकशब्दद्वयसमभिव्याहारात् प्रसिद्धाकाशविषयत्वं प्रतीयते इत्यतः सूत्रं **आकाशोऽर्थान्तरत्वादिव्यपदेशात्** । अत्राकाशो विष्णुरेव। "नामरूपयोर्निर्वहिता ते यदन्तराद् ब्रह्म" इति वाक्यशेषे ते नामरूपे अन्तरा विना नामरूपरहितं यद्यस्मात्तत्तस्मात्स आकाशो ब्रह्म इत्युक्तत्वात् । नामरूपात्मकप्रपंचरूपार्थापेक्षया अर्थान्तरत्वस्य वैलक्षण्यस्य ब्रह्मशब्दस्य च व्यपदेशादिति सूत्रावयवार्थः। नामरूपनिर्वहितत्वस्य विष्णोर्लोकतो प्रसिद्धत्वेऽपि "एको दाधार भुवनानि विश्वा" इति वेदप्रसिद्धत्वाद्वै नामेत्यपि युज्यत एवेति भावः। एतत्तात्पर्यमाह **अन्यः स जीवत** इति। अत्र श्रुतौ वै नामेतिशब्दद्वयसमभिव्याहारात् प्रसिद्धाकाशत्वेनाभिमतः जीवतोऽन्यः। नञिव युक्तन्यायेन चेतनो जीवभिन्नो विष्णुरेव न तु जड आकाश इत्यर्थः। नञिवयुक्तमन्यसदृशे तथाह्यर्थगतिरिति न्यायस्यायमर्थः। नञ् च इवश्च नञवौ ताभ्यां युक्तं पदं अन्यस्मिन्सदृशेऽर्थे प्रतीतिं जनयति। तथा हि लोके अर्थावगतिः। अब्राह्मण-मानयेत्याद्युक्ते हि ब्राह्मणादन्यं क्षत्रियादिकमानयति न तु लोष्टादिकमानीय कृतीभवतीति । कुतः? यतः सः अन्यः नामरूपात्मकप्रपंचविलक्षणः तेनार्थान्तरत्वव्यपदेशो व्याख्यातः। उपलक्षणमेतद् ब्रह्मशब्दादेरपीति ।।१२।।

अथ "स यत्र किंचित्पशत्यनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुष" इति श्रुतौ स्वप्नादिद्रष्टुरसंगत्वं प्रतीयते। तच्च विष्णोरेवासाधारणो धर्म उत जीवेश्वरयोरभेदाज्जीवस्यैव स्वप्नादिद्रष्टुत्वमित्यतः सूत्रं **सुषुप्त्युत्क्रांन्त्योर्भेदेन**। "प्राज्ञेनात्मना संपरिष्वक्तो न बाध्यं किंचन वेद नान्तरं" (बृ.उ.६-३-२१)इति सुषुप्तौ तथा "प्राज्ञेनात्मनान्वारूढ उत्सर्जद्याति" (बृ.उ.६-३२५)इत्युक्रान्तौ च भेदेन व्यपदेशात् । स्वप्नादिद्रष्टा असंगोऽपि सर्वज्ञो विष्णुरेवेत्यर्थः। एतत्तात्पर्यमाह। **अन्यः स जीवत इति**। यतः सुषुप्त्युत्क्रान्त्योर्भेदव्यपदेशात् जीवादन्योऽतोऽसंगत्वलिंगं स्वप्नादिद्रष्टृत्वं तस्यैव विष्णोरेवेत्यर्थः।

ननु वाजसनेये " एष नित्यो महिमा ब्राह्मणस्य" (बृ.उ.६-४-२२)इति वाक्ये "स वा एष महानज (बृ.उ.६-४-२४)इति वाक्यशेषो विरिंचस्यैव अजशब्दवाच्यस्य नित्यमहिमत्वं ब्राह्मणशब्दवाच्यस्यैव। न च देवताधिकरणे देवानां विद्याकर्मभ्यां पदप्राप्तेरुक्तत्वात्कथं तस्य नित्यमहिमत्वमिति वाच्यम्। तस्य विरिंचेतरविषयत्वेनाप्युपपत्तेरतः सर्वाधिकरणेषु प्रपंचितविष्णोरेव न महामहिमत्वमयुक्तमित्यतः सूत्रं **पत्यादिशब्देभ्यः**। "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः एषः सर्वेश्वर एष भूताधिपतिरेषभूतपाल एष सेतुर्विधारण एषां लोकानामसंभेदाय स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसंगो न हि सज्जतेऽसितो न व्यथते न रिष्यति स एष आत्माऽजरोऽमरोऽमृतोऽभय" (बृ.उ.६-४-२१)इति सर्वाधिपत्यादिवाचिशब्दसद्भावात् । तथा च तस्यैव विष्णोर्नित्यमहिमात्वमित्यर्थः। जननादिरहिते तस्मिन्नेव अजशब्दस्य ब्रह्मणा विरिंचेन देवेनाऽवगम्यत्वरूपाण्यत्वेन ब्राह्मणशब्दस्याप्युपपत्तेरिति भावः। वर्णव्यत्यासः छान्दसः। "सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि" (ऋ.सं.१-१६४-३६)इति श्रुतेः। एतत्तात्पर्यमाह **पतित्वादिगुणैर्युक्त** इति।

उदाहृतश्रुतौ उक्तपतित्वादिगुणैर्युक्तः अतस्तदन्यत्र च शब्दास्तस्मिंश्च उभयत्र प्रसिद्धैर्वाचकैर्नामात्मकैश्च शब्दैर्लिंगैश्चैको जनार्दन एव मुख्यतो वाच्यः। अन्यत्र चतुर्मुखादावपि ते कथंचित्सम्भवंतीत्यत उक्तं **मुख्यत** इति। अजशब्दो ब्राह्मणशब्दोऽप्यत्रैव सम्भवतीत्याशयेनोक्तं **जनार्दन** इति। न जायते इति जनः छान्दसो वर्णव्यत्यासोऽतिशयद्योतनार्थः। अज इत्यर्थः। तेनाजेन विरिंचेन विना वेदेन वा अर्धते गम्यते ज्ञायतेऽतो जनार्दनः ब्राह्मण इत्यर्थः। न जायत इत्यजः अर्दगतौ यांचृ चेति धातोः अर्द्यते गम्यते याच्यते प्रार्थ्यते वेति व्युत्पत्तेः सर्वगम्यत्वात्प्रार्थनीयत्वाच्च तस्यैव मुख्यत्वमिति भावः।।

।। इति नारायणकृताणुभाष्यप्रपंचने प्रथमाध्यायसम्बन्धस्तृतीयश्चरणोभ्यगात् ।।

**मळगी – शूद्राद्यैः** पादजादित्रिवर्णेतरैः। **वेदैः** त्रयीभिः। **ज्ञेयो न** उपास्यो नेत्यर्थः। **कम्पकः** यस्मात्सर्वं जगत्कम्पत इति वचनात्सर्वचेष्टकत्वेन वज्रशब्दवाच्यः। **जीवतोऽन्यश्च** "आत्मा हि परमः स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवर" इति भाल्लवेय श्रुतेः। तथा "अनश्नन्नन्यो अभिचाकशीति" इति श्रुतेः। जीवेश्वरौ विभिन्नौ विरुद्धधर्माक्रान्तत्वाद्दहनतुहिनवदित्याद्यनुमाः जीवान्यत्वेन ज्योतिरादिशब्दवाच्यः। चतुर्वेदशिखायां विष्णुरेव ज्योतिरित्युक्तत्वात् । **पतित्वादिगुणैर्युक्तः**। "एष नित्यो महिमा ब्राह्मणस्य" (बृ.उ.६-४-२२)इति वाजसनेयश्रुत्युक्त ब्राह्मणस्य "स वा एव महानज आत्माऽजरोऽमरोऽमृतोऽभय" (बृ.उ.६-४-२४)इति श्रुतौ ब्राह्मणशब्दोक्तविरिंचस्यापि "स्वधर्मनिष्टः शतजन्मभिः पुमान्विरिंचतामेति ततः परं हि माम्" इति कर्मफलभोक्तृत्वेन सर्वाधिपतित्वादिगुणयुक्तत्वासम्भवेन विष्णोः तत्सम्भवेन उक्तसर्वाधि-पतित्वादिगुणयुक्तो विष्णुरेव स एव ब्राह्मणशब्दवाच्यः। **तदन्यत्र च** तस्मान्नारायणादन्यत्र रुद्रादौ।

**वाचकैः** वाचकत्वेन प्रसिद्धसर्वशब्दैः समस्तनामात्मक लिंगात्मकशब्दैश्च। **एकः** "एकशब्दै-र्द्विशब्दैश्च बहुशब्दैश्च केशवः । उच्यते" इत्युक्तेस्तच्छब्दवाच्यः। **जनार्दनः** जनं जननं अर्दयतीति । तथोक्तो नारायण एव मुख्यतः परममुख्येन **वाच्यः** प्रतिपाद्यः।

**।।इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां प्रथमाध्यायस्य तृतीयः पादः ।।**

**लिंघेरी –** पुनः कीदृशः? **शूद्राद्यैः वेदैः न ज्ञेयः**। पुनः कीदृशः ? **कम्पकः** सर्वेषां कम्पनजनकः। **जीवतः अन्यश्च** जीवाद्विलक्षणः। पुनः कीदृशः? **पतित्वादिगुणैर्युक्तः** । कीदृशैः ? **तदन्यत्र च वाचकैः** तस्मांदन्यत्र च वाचकैः ।।६।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ।।**

**नारायणपण्डित–** ज्ञेयो न वेदैः शूद्राद्यैः शूद्राद्यैर्वेदैः हरिर्नोपास्य इति शुगस्य तदनादर-श्रवणात्तदाद्रवणात्सूच्यते हीति अपशूद्राधिकरणतात्पर्यार्थः ।।९।। कम्पकः चेष्टकः। वज्रः कम्पनादित्यधिकरणार्थः ।।१०।। जीवतः जीवस्य। कम्पकश्चेष्टकः। "लोकसंचरणं जीवमादाय तस्यैव दुःखं न स्वातन्त्र्यात्" इति न्यायविवरणोक्तेः इत्यनेन ज्योतिर्दर्शनादित्यधिकरणार्थः ।।११।। जीवतः अन्यो विलक्षणः नामादिहीनः। आकाश इति आकाशोऽर्थान्तरत्वादि-व्यपदेशादित्यधिकरणार्थः ।।१२।। अन्यश्च जीवतः जीवाद्भिन्नः। सुषुप्त्युत्क्रान्त्योर्भेदेनेति सुषुप्त्युधिकरणार्थः ।।१३।। पतित्वादिगुणैर्युक्तः स्वामित्वादिगुणैर्युक्त इति पत्यादिशब्देभ्य इति नयार्थः ।।१४।। एवं तदन्यत्र च वाचकैः प्रसिद्धैः शब्दैः सर्वैर्लिंगैर्नामात्मकैश्च मुख्यतो जनार्दनः मुक्तिप्रदो विष्णुरेक एव वाच्यः। नाऽन्यः। तत्तत्प्रकरणगतलिंगादिभिर्युक्तत्वादित्यर्थः । **अधिकरणानि १४ । सूत्राणि ४३।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ।।**

**गूढकर्तृक –** शूद्राद्यैर्वेदैः न ज्ञेय इत्यपशुद्राधिकरणतात्पार्यार्थः। कम्पनादित्यधिकरणार्थः कम्पक इति। ज्योतिर्दर्शनादित्यस्यार्थ कम्पक इति । जीवतः जीवस्थकम्पकश्चेष्टकः। लोकसंचरणं जीवमादाय "तस्यैवादुःखेन स्वातन्त्र्यात्" इति न्यायविवरणोक्तिः। अन्यः विलक्षणः। नामादिहीनः आकाशसुषुप्त्यधिकरणयोरर्थः अन्यश्च जीवत इति। जीवाद्भिन्न इत्यर्थः। पतित्वादिगुणैर्युक्त इति अन्तिमाधिकरणार्थः। एवं तत्तदन्यत्र च उभयत्रवाचकैः प्रसिद्धैः सर्वशब्दैः लिंगनामात्मकैश्च मुख्यतो जनार्दनः । जनान् दुर्योधनादीन् अर्दयतीति जनार्दनः जननमर्दयतीति वा जनार्दनः। मुख्यतः एक एव वाच्यो नाऽन्यः तत्प्रकारणगतलिंगादियुक्तत्वादिति।

**।।इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ।।**

**अणुभाष्यम्**

**मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः।**
**अव्यक्त कर्मवाक्यै(च्यै)श्च वाच्य एकोऽमितात्मकः।।७।।**

**सत्यनाथीया-** एवं तदन्यत्र वाचकैश्शब्दैः प्रसिद्धैः सर्वशब्दैः लिंगनामात्मकैः शब्दैः मुख्यतो जनार्दन एक एव वाच्यः। नाऽन्यः । तत्प्रकरणलिंगादिभिर्युक्तत्वादित्यर्थः । **अव्यक्तः** अव्यक्तनियामकः। अव्यक्त इत्यनेनानुमानिकनयार्थ उक्तो भवति । **कर्मवाक्यैः** कर्मप्रतिपादकवाक्यैर्ज्योतिरादिवाक्यैः । कर्मवाक्यैरित्यनेन ज्योतिरुपक्रमादिति नयार्थः। बहुरूपः एको भिन्नः इति न संख्योपसंग्रहादपि नाना भावातिरेकाच्च इति नयार्थः **अमितात्मक** इति।

**तत्वमञ्जरी-** नन्वेवं त्रिपाद्या जन्मादिसूत्रोक्तसर्वकर्तृत्वतत्सङ्गतपूर्णानन्दत्वादि प्रतिपादक-वाक्यस्थकतिपयशब्दवाच्यत्वोक्त्या विष्णौ कतिपयगुणसिद्धावपि आद्यसूत्रस्थब्रह्म-पदोक्तानन्तगुणत्वासिद्धावपि आद्यसूत्रस्थब्रह्मपदोक्तानन्तगुणत्वासिद्धिरेव। देवतातारतम्यकर्मक्रम-कालादिबोधकवाक्यस्थाशेषशब्दवाच्यत्वस्य अनुक्त्या समन्वयसूत्रप्रतिज्ञाताशेषशब्दसमन्वयस्य अप्रतिपादनादित्यतः प्रवृत्तः चतुर्थः पादः। तदर्थं भाषते - अव्यक्त इति। "इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः। शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः" इत्यन्तिमश्लोकोऽप्यत्राकृष्यते। एको जनार्दन इत्यनुषज्यते।

इत्यादीति भिन्नं पदम् । क्रियाविशेषणं वा । अविभक्तिकोऽयं निर्देशो वा। तृतीयार्थे प्रथमा वा। "इत्याद्यन्तर्याम्युच्यते" इत्यन्तर्यामिनयपूर्वपक्षभाष्यस्थेत्यादिशब्दवत् । यथोक्तं तत्वप्रदीपे इत्यादीति प्रथमा सप्तम्यर्थे। तृतीयार्थे वा । सप्तसु प्रथमेति सूत्रात् । क्रियाविशेषणं वा इति।

तथा चायमर्थः। अव्यक्त इत्यादिभिः अव्यक्तदुःखिबद्धावरवसन्तज्योतिराकाशादिभिः देवतातारतम्यकर्मक्रमादिबोधकवाक्यस्थैरित्यर्थः। अन्यत्र नियतैरपि नियमेनान्यत्र वर्तमानैरपि । अन्यत्रैव प्रसिद्धैरपीति यावत्। न केवलमन्यत्रोभयत्रप्रसिद्धैरित्यपेरर्थः। शब्दैर्मुख्यतया परममुख्यवृत्त्या एको जनार्दन उदितः। सूत्रकृता प्रतिपादितोऽस्मिन् पाद इत्यर्थः। अतोऽखिलशब्दवाच्यत्वात् अनन्तगुण इत्यर्थः। तावता कथमनन्तगुणतेत्यत उक्तम् - **यच्छब्दा योगवृत्तय** इति। यद्यस्मात् शब्दा हरौ यौगिका अत इत्यर्थः।

नन्वेवं देवतातारतम्यकर्मक्रमाद्यलौकिकसर्वपदार्थपरिलोपः तेषां शब्दैकवेद्यत्वादित्यतोऽपि **मुख्यतया अन्यत्र नियतैरपि** इति । निगमनिघण्ट्वादिलोकप्रसिद्धयोगरूढिरूपमुख्यवृत्त्या अन्यवाचकैरपि शब्दैस्तदबाधेन महायोगविद्वद्रूढिरूपपरममुख्यवृत्त्या उदित इति।

**वाचकैः** वाचकत्वेन प्रसिद्धसर्वशब्दैः समस्तनामात्मक लिंगात्मकशब्दैश्च। **एकः** "एकशब्दै-र्द्विशब्दैश्च बहुशब्दैश्च केशवः । उच्यते" इत्युक्तेस्तच्छब्दवाच्यः। **जनार्दनः** जनं जननं अर्दयतीति । तथोक्तो नारायण एव मुख्यतः परममुख्येन **वाच्यः** प्रतिपाद्यः।

**।।इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां प्रथमाध्यायस्य तृतीयः पादः ।।**

**लिंघेरी** – पुनः कीदृशः? **शूद्राद्यैः वेदैः न ज्ञेयः**। पुनः कीदृशः ? **कम्पकः** सर्वेषां कम्पनजनकः। **जीवतः अन्यश्च** जीवाद्विलक्षणः। पुनः कीदृशः? **पतित्वादिगुणैर्युक्तः** । कीदृशैः ? **तदन्यत्र च वाचकैः** तस्मादन्यत्र च वाचकैः ।।६।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ।।**

**नारायणपण्डित–** ज्ञेयो न वेदैः शूद्राद्यैः शूद्राद्यैर्वेदैः हरिर्नोपास्य इति शुगस्य तदनादर-श्रवणात्तदाद्रवणात्सूच्यते हीति अपशूद्राधिकरणतात्पर्यार्थः ।।९।। कम्पकः चेष्टकः। वज्रः कम्पनादित्यधिकरणार्थः ।।१०।। जीवतः जीवस्य। कम्पकश्चेष्टकः। "लोकसंचरणं जीवमादाय तस्यैव दुःखं न स्वातन्त्र्यात्" इति न्यायविवरणोक्तेः इत्यनेन ज्योतिर्दर्शनादित्यधिकरणार्थः ।।११।। जीवतः अन्यो विलक्षणः नामादिहीनः। आकाश इति आकाशोऽर्थान्तरत्वादि-व्यपदेशादित्यधिकरणार्थः ।।१२।। अन्यश्च जीवतः जीवाद्भिन्नः। सुषुप्त्युत्क्रान्त्योर्भेदेनेति सुषुप्त्युधिकरणार्थः ।।१३।। पतित्वादिगुणैर्युक्तः स्वामित्वादिगुणैर्युक्त इति पत्यादिशब्देभ्य इति नयार्थः ।।१४।। एवं तदन्यत्र च वाचकैः प्रसिद्धैः शब्दैः सर्वैर्लिंगैर्नामात्मकैश्च मुख्यतो जनार्दनः मुक्तिप्रदो विष्णुरेक एव वाच्यः। नाऽन्यः। तत्तत्प्रकरणगतलिंगादिभिर्युक्तत्वादित्यर्थः । **अधिकरणानि १४ । सूत्राणि ४३।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ।।**

**गूढकर्तृक** – शूद्राद्यैर्वेदैः न ज्ञेय इत्यपशुद्राधिकरणतात्पार्यार्थः। कम्पनादित्यधिकरणार्थः कम्पक इति। ज्योतिर्दर्शनादित्यस्यार्थ कम्पक इति । जीवतः जीवस्थकम्पकश्चेष्टकः। लोकसंचरणं जीवमादाय "तस्यैवादुःखेन स्वातन्त्र्यात्" इति न्यायविवरणोक्तिः। अन्यः विलक्षणः। नामादिहीनः आकाशसुषुप्त्यधिकरणयोरर्थः अन्यश्च जीवत इति। जीवाद्भिन्न इत्यर्थः। पतित्वादिगुणैर्युक्त इति अन्तिमाधिकरणार्थः। एवं तत्तदन्यत्र च उभयत्रवाचकैः प्रसिद्धैः सर्वशब्दैः लिंगनामात्मकैश्च मुख्यतो जनार्दनः । जनान् दुर्योधनादीन् अर्दयतीति जनार्दनः जननमर्दयतीति वा जनार्दनः। मुख्यतः एक एव वाच्यो नाऽन्यः तत्प्रकारणगतलिंगादियुक्तत्वादिति।

**।।इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ।।**

**अणुभाष्यम्**

**मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः।**
**अव्यक्त कर्मवाक्यै(च्यै)श्च वाच्य एकोऽमितात्मकः।।७।।**

**सत्यनाथीया–** एवं तदन्यत्र वाचकैश्शब्दैः प्रसिद्धैः सर्वशब्दैः लिंगनामात्मकैः शब्दैः मुख्यतो जनार्दन एक एव वाच्यः। नाऽन्यः । तत्प्रकरणलिंगादिभिर्युक्तत्वादित्यर्थः । **अव्यक्तः** अव्यक्तनियामकः। अव्यक्त इत्यनेनानुमानिकनयार्थ उक्तो भवति । **कर्मवाक्यैः** कर्मप्रतिपादकवाक्यैर्ज्योतिरादिवाक्यैः । कर्मवाक्यैरित्यनेन ज्योतिरुपक्रमादिति नयार्थः। बहुरूपः एको भिन्नः इति न संख्योपसंग्रहादपि नाना भावातिरेकाच्च इति नयार्थः **अमितात्मक** इति।

**तत्वमञ्जरी–** नन्वेवं त्रिपाद्या जन्मादिसूत्रोक्तसर्वकर्तृत्वतत्सङ्गतपूर्णानन्दत्वादि प्रतिपादक-वाक्यस्थकतिपयशब्दवाच्यत्वोक्त्या विष्णौ कतिपयगुणसिद्धावपि आद्यसूत्रस्थब्रह्म-पदोक्तानन्तगुणत्वासिद्धावपि आद्यसूत्रस्थब्रह्मपदोक्तानन्तगुणत्वासिद्धिरेव। देवतातारतम्यकर्मक्रम-कालादिबोधकवाक्यस्थाशेषशब्दवाच्यत्वस्य अनुक्त्या समन्वयसूत्रप्रतिज्ञाताशेषशब्दसमन्वयस्य अप्रतिपादनादित्यतः प्रवृत्तः चतुर्थः पादः। तदर्थं भाषते – अव्यक्त इति। "इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः। शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः" इत्यन्तिमश्लोकोऽप्यत्राकृष्यते। एको जनार्दन इत्यनुषज्यते।

इत्यादीति भिन्नं पदम् । क्रियाविशेषणं वा । अविभक्तिकोऽयं निर्देशो वा। तृतीयार्थे प्रथमा वा। "इत्याद्यन्तर्याम्युच्यते" इत्यन्तर्यामिनयपूर्वपक्षभाष्यस्थेत्यादिशब्दवत् । यथोक्तं तत्वप्रदीपे इत्यादीति प्रथमा सप्तम्यर्थे। तृतीयार्थे वा । सप्तसु प्रथमेति सूत्रात् । क्रियाविशेषणं वा इति।

तथा चायमर्थः। अव्यक्त इत्यादिभिः अव्यक्तदुःखिबद्धावरवसन्तज्योतिराकाशादिभिः देवतातारतम्यकर्मक्रमादिबोधकवाक्यस्थैरित्यर्थः। अन्यत्र नियतैरपि नियमेनान्यत्र वर्तमानैरपि । अन्यत्रैव प्रसिद्धैरपीति यावत्। न केवलमन्यत्रोभयत्रप्रसिद्धैरित्यपेरर्थः। शब्दैर्मुख्यतया परममुख्यवृत्त्या एको जनार्दन उदितः। सूत्रकृता प्रतिपादितोऽस्मिन् पाद इत्यर्थः। अतोऽखिलशब्दवाच्यत्वात् अनन्तगुण इत्यर्थः। तावता कथमनन्तगुणतेत्यत उक्तम् – **यच्छब्दा योगवृत्तय** इति। यद्यस्मात् शब्दा हरौ यौगिका अत इत्यर्थः।

नन्वेवं देवतातारतम्यकर्मक्रमाद्यलौकिकसर्वपदार्थपरिलोपः तेषां शब्दैकवेद्यत्वादित्यतोऽपि **मुख्यतया अन्यत्र नियतैरपि** इति । निगमनिघण्ट्वादिलोकप्रसिद्धयोगरूढिरूपमुख्यवृत्त्या अन्यवाचकैरपि शब्दैस्तदबाधेन महायोगविद्वद्रूढिरूपपरममुख्यवृत्त्या उदित इति।

ननु समन्वयसूत्रोक्तं सर्वशब्दवाच्यत्वं विष्णोरयुक्तम् । काठके(१-३-१०) ''इन्द्रियेभ्यः'' इत्यादिना ''महतः परमव्यक्तं'' (का.उ.१-३-११) इत्यव्यक्तान्तदेवता तारतम्यमुक्त्वा ''अव्यक्तात्पुरुषः परः'' (क.उ.१-३-११) इति पुरुषोत्कर्षावधित्वेन श्रुताव्यक्तशब्दस्य प्रसिद्धमहत्तत्वपरत्वपुरुषोत्कर्षावधित्वादिलिङ्गेन च प्रधानवाचित्वादित्यतः प्राप्तं - **आनुमानिकमपि** इत्यादिसूत्रनवकम् । तदर्थः **अव्यक्त** इति। एको जनार्दन इति अन्यत्र नियतैरपि मुख्यतयोदितः शब्दैरिति च अत्रोत्तरत्र चान्वेति । अव्यक्त इत्युपलक्षणम् । श्रीवाचितया प्राधान्यादस्योक्तिः । व्यक्तो न भवतीत्यव्यक्तः। ''अव्यक्तात्पुरुषः पर'' (का.उ.१-३-११) इत्यादौ अव्यक्तजीवादिपदप्रवृत्तिनिमित्तयुक्तो अव्यक्तप्राणधारकादिः मुख्यतया एको जनार्दनः । तथा च अवरत्वदुःखित्वादिलिङ्गवशादन्यत्र नियतैः अव्यक्तजीवबद्धादिशब्दैः मुख्यतया परममुख्यवृत्त्या एको जनार्दन उदितः। न तु प्रधानादिः। अव्यक्तादिशब्दप्रवृत्तिनिमित्तस्य विष्णौ सत्त्वे तच्छब्दैरुदितत्वस्य आवश्यकत्वादिति भावः।

अव्यक्तादिशब्दार्थाव्यक्तत्वादिकं कुतो जनार्दनस्येत्यतः **शब्दैः** इति। ''यत्तत्सूक्ष्मं परमं वेदितव्यं'' ''एषोऽणुरात्मा'' ''स जीवनामा भगवान् प्राणधारणहेतुतः'' इत्यादिशब्दैरित्यर्थः। सूक्ष्मस्यैवाव्यक्तत्वार्हत्वादिति भावः।

ननु प्रधानादौ रूढाव्यक्तादिशब्दैः योगमात्रेण कथं मुख्यतयोदित इत्यतोऽपि **शब्दैः** इति। ''अव्यक्तमचलं शान्तम्'' (पिप्पलादशाखा) ''अव्यक्तोऽक्षर उच्यते'' ''अनेन जीवेनात्मना'' ''जीवो विनयिता साक्षी'' (वि.स.नाम) ''नामानि सर्वाणि यमाविशन्ति'' इत्यादि विष्णावव्यक्तादिपदप्रयोगबाहुल्यरूपरूढिप्रदर्शकैः श्रुतिस्मृतिरूपसर्वशब्दवाच्यत्वबोधकशब्दैः, तथा ''तमेवैकं जानथ'' इत्यादिभिः विष्णोरेव मोक्षार्थं ज्ञेयत्वबोधकशब्दैरित्यर्थः।

प्रधानादौ प्रसिद्धैरव्यक्तादिशब्दैः महच्छब्दचमसशब्दयोरन्यत्र प्रसिद्धयोरपि ''महान्तं विभुं'' इत्यादौ विष्णुशिरसोर्मुख्यत्वात् हरौ मुख्यतयोदितत्वं युक्तमिति भावः।

नन्वेवं ''अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते'' (का.उ.१-३-२) इति वाक्ये महत्परत्वलिङ्गेन प्रधानस्यापि मुक्त्यर्थं ज्ञेयत्वोक्तेः तस्यापि वैदिकाव्यक्तादिशब्दैः परममुख्ययोदितत्वं स्यादित्यतोऽपि **शब्दैः** इति। ''महतो महीयान्'' (क.उ.१-२-२०)''अनाद्यनन्तं महतः परं ध्रुवं'' (क.उ.१-३-१५)इति ''परो हि देवः पुरुहूतो महत्तमः'' इत्यादि विष्णोरेव महत्परत्वबोधकशब्दैः, तथा ''तद्विष्णोः परमं पदं'' (क.उ.१-३-९)इत्येतत्प्रकरणार्थोपासकस्य विष्णुपदप्राप्तिबोधकशब्देन पितृसौमनस्यस्वर्ग्याग्निपरमात्मरूपत्रितयमात्रप्रश्नोत्तररूपशब्दैः तद्वाक्ये जनार्दनः प्रागुक्तनिरुक्त्या अनादिः संसारार्दनो भगवान् मुख्यतयोदितो न प्रधानमित्यर्थः।

कथं तर्हि अवरत्वदुःखित्वाद्यर्थकपञ्चम्यादिशब्दोदितत्वोपपत्तिः सर्वेशे निर्दोषे हरावित्यतोऽपि **शब्दैः** इति।

यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते।
स बद्धः स दुःखी स बन्धयति स दुःखयति ।

इत्यादिशब्दैः स्वातन्त्र्यादिना निमित्तेन तत्तच्छब्दवाच्यत्वबोधकैः शब्दैरित्यर्थः। विष्णाव-वरत्वाद्यभावेऽपि अन्यगतावरत्वादिकं प्रति स्वातन्त्र्यात् जयीति शब्देन राजेव पञ्चम्यादिशब्दैरुदित इति भावः ॥१॥

नन्वथापि न विष्णोः सर्वशब्दवाच्यत्वम् । "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादौ कालकर्मक्रमाधिकारिफलादिवाचकशब्दानां विष्णुवाचित्वायोगादित्यतः प्राप्तं - **ज्योतिरुपक्रमात्** इत्यादिसूत्रद्वयम् । तदर्थः - **कर्मवाच्यैश्च वाच्य** इति।

पूर्ववदनुषङ्गः । प्राधान्यादुक्तवक्ष्यमाणसर्वशब्दानां उपलक्षणत्वेन कर्मोक्तिः। कर्म वाच्यं येषां तैः कर्मवाच्यैश्च । न केवलं तरतमभावापन्नार्थवाचकैरिति चार्थः। कर्मतदङ्गतत्क्रम-देशकालाधिकार्यादिवाचकैः अन्यत्र नियतैरपि शब्दैर्मुख्यतया परममुख्यवृत्त्या एको जनार्दनो वाच्यो न कर्मादिः। कुतः ? **शब्दैः** । "ता वा एताः सर्वा ऋचः सर्वे वेदाः" (ऐ.आ.२-२-२) "नामानि सर्वाणि यमाविशन्ति" "तमेवैकं जानथ" "सर्वे वेदा यत्पदमामनन्ति" (क.उ.१-२-१) इत्यादिसर्वशब्दवाच्यत्वावेदकश्रुत्यादिरूपशब्दैः ज्ञायत इत्यर्थः।

अस्तु श्रुत्यादिबलात् सर्वशब्दोदितत्वम् । मुख्यवृत्त्येति तु कुत इत्यतोऽपि **शब्दैः** इति। "एष इमं लोकमभ्यार्चत्" इत्यादिरूपैः हरौ महायोगविद्रूढिप्रदर्शकैः श्रुत्यादिरूपशब्दैरित्यर्थः।

एवं तर्हि कर्मादिपरिलोपः। पदेष्ववयवानामपि विष्णुवाचित्वे हरौ शब्दस्य योगानुप-पत्तिश्चेत्यतोऽपि **कर्मवाच्यैश्च** इति। चोऽप्यर्थः। निगमनिघण्ट्वादिप्रसिद्धयोगरूढिभ्यां मुख्यतया कर्मवाचकैरपि ज्योतिष्टोमादिशब्दैः कर्मादौ लोकसिद्धमुख्यत्वमबाधित्वैव तैः शब्दैः परममुख्यतया हरिरुदित इति। तथा च न कर्मादिलोपदोषः।

अवयवानां अन्यवाचकत्वमुपेत्यैव शब्दस्य हरौ व्युत्पत्त्यङ्गीकारेण न योगासम्भवदोषोऽपि ।

रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत् ।
तथापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके।

अनवस्था निवृत्त्यर्थं यौगिके रूढिकल्पना । इति

रूढिमेव समाश्रित्य विभज्यार्थान् यथाक्रमम् ।
निर्दोषगुणपूर्त्यर्थं विष्णौ योगार्थमानयेत् ।
पश्चादेव यथायोगमितरेष्वपि सन्नयेत् । इत्यक्तेरिति भावः।

अत एव ज्योतिरादिभिरित्यनुक्त्वा कर्मवाच्यैश्चेत्येवं निर्देशः। कर्मवाक्यैश्चेत्येवं पाठेऽपि अयमेवार्थो ध्येयः। अत्र मुख्यतयेति मुख्यतात्पर्यविषयत्वमात्रम् । वाच्यत्वस्य पृथगुक्तेः। अन्यत्र तूभयमपि ।।२।।

नन्वथापि न सर्वशब्दवाच्यता हरेर्युक्ता । काण्वश्रुतौ षष्ठेध्याये ''यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतं'' (बृ.उ.६-४-१७)इत्यादौ पञ्चपञ्चेति वीप्साया यस्मिन्नित्युक्तसर्वशरीरस्थेश्वराधारकतया श्रुतानां पञ्चत्वसङ्ख्यायुतानां ''प्राणस्य प्राणमुत चक्षुषश्चक्षुः'' इत्यादिवाक्यशेषोक्तद्वितीयान्तप्राणादिशब्दितानां जनानां आधाराधेय-भावविरोधेन एकस्य पञ्चत्वरूपबहुसङ्ख्याविरोधेन चाविष्णुत्वेन जनादिशब्दवाच्यत्व-रूपबहुसङ्ख्याविरोधेन चाविष्णुत्वेन जनादिशब्दवाच्यत्वायोगादित्यतः प्राप्तं - **न सङ्ख्योपसंग्रहादपि** इत्यादिसूत्रत्रयम् । तदर्थः - **एकोऽमितात्मक** इति। पूर्ववदनुषङ्गः । एको यस्मिन्नित्येकवचनान्तयत्तदादिशब्दोक्तः पञ्चजनादिशब्दार्थभूतामितात्मक एको जनार्दनः। तथा चाधाराधेयत्वादिना अन्यत्र नियतैरपि पञ्चजनादिशब्दैर्मुख्यतया परममुख्यत्वेनोदितः। तदर्थं बहुत्वसङ्ख्यायुक्तस्य विष्णुत्वे तच्छब्दोदितत्वावश्यंभावात् । हरेः पञ्चजनशब्दार्थ-भूतामितात्मकत्वमेव कुत इत्यतोऽपि **अमितात्मक** इति । अमितानामनेकेषां आत्मा नियामकः स एवामितात्मकः।

शरीरतदन्तर्गताकाशप्राणादिपञ्चजननियामक इत्यर्थः। एतेन ''प्राणस्य प्राणः'' इत्यादिवाक्यशेषे द्वितीयान्ततया प्राधान्येन निर्दिष्टानामेव पञ्चजनशब्दार्थत्वात् तेषामेव च प्राणादिनियामकत्व-रूपविष्णुलिङ्गेन विष्णुत्वादित्युक्तं भवति। तावतापि कथमनेकत्वं हरेरित्यतोऽपि **अमितात्मक** इति। अमितेषु अनेकेषु शरीरतदन्तस्थाकाशपञ्चजनेषु आत्मा स्वरूपं यस्य स इत्यर्थः। नियम्यानामनेकत्वेन तन्नियामकतया तेष्वनेकरूपत्वस्य न्यायप्राप्तत्वादिति भावः।

एवं तर्हि एकस्यैव आधाराधेयभावविरोध इत्येतदपि अमितात्मक इत्युक्त्यैव समाहितम् । शरीरादीनामाधाराधेयभावापन्नतया तन्नियामकेश्वररूपाणां तत्रस्थानामपि तथात्वोपपत्तेरिति।

ननु ''प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं अन्नस्यान्नं मनसो मनः'' इति माध्यन्दिनश्रुतौ अन्नाख्यरूपेण सहामितात्मक उक्तः। काण्वानां श्रुतौ तु ज्योतिषा सह। तथा च को वाऽमितात्मकः पञ्चजनशब्दाभिधेय इत्यतोऽपि - **एक** इत्यादि । श्रुतिद्वयोक्तोऽप्यमितात्मक एक

इत्यर्थः। अन्नज्योतिःशब्दाभ्यां रूपपञ्चकप्रविष्टमेकरूपमुच्यते। न तु रूपभेद इत्यर्थः। यद्वा **एको जनार्दनोऽमितात्मकः**। अमितः अनेकः आत्मा अधिकारी जीवो यस्य स इत्यर्थः। अन्नज्योतिषो भिन्नरूपत्वेऽप्युपासकाधिकारिभेदेन पञ्चकद्वयमिति भावः।

ननु शरीरतत्स्थाकाशप्राणाद्यधिष्ठानभेदेन तन्नियामकतया तत्रास्थितविष्णोरमितात्मकत्वे रूपाणां भेदः स्यादित्यतोऽपि न स्थानतोऽपि इति वक्ष्यमाणन्यायस्मरणायैकौ निर्भेद इत्युक्तम् । कथं निर्भेदोऽप्यमितात्मकः। अन्यत्र लोकेदृष्टेरित्यतोऽपि **अमितात्मक** इति। आत्मनि चैवं विचित्राश्च हीति वक्ष्यमाणन्यायेनापरिमितस्वरूपसामर्थ्यं इत्यर्थ इत्याद्यूह्यम् ।

अत्रामितात्मक इत्युक्त्या विरोधिसर्वबाहुल्य इत्यनुभाष्योक्तदिशा च बहुत्ववाचिनः शब्दा उदाहरणम् । बहुत्वमेव पूर्वपक्षयुक्तिः। सूत्रेऽतिरेकाच्च इत्याधाराधेयसमर्थनञ्च अभ्युच्चयेन । गुहां प्रविष्टावित्यत्र अत्तेत्युक्त्या कर्मफलातृत्वमेव तत्र व्युत्पाद्यम् । "द्वित्वं चैकस्य युज्यते" इत्यनुभाष्यादौ त्वभ्युच्चयत्वेन एकस्यानेकत्वव्युत्पादनम् । अतो न पुनरुक्तिरिति दर्शितम् ॥३॥

**आनन्दमाला –** अन्यत्रैव प्रसिद्धशब्दैरपि विष्णुरेव मुख्यवाच्य इति साधयत्यस्मिन् पादे।

"आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च" (१-४-१) इत्यधिकरणम् **अव्यक्त** इति। "अव्यक्तात् पुरुषः परः" (कठ.३-११) इत्यव्यक्तशब्दो तत्रोच्यते। तस्यैव पुरुषादवरत्वेन तत्प्रतियोगित्वसम्भवात् । न हि स्वस्मादेव स्वयमुत्तम इत्यादि साम्प्रतमिति चेन्न । अन्यदवरयति इत्यवरत्वस्य विष्णोरेव सम्भवात् स एवाव्यक्तशब्देन मुख्यतो गृह्यते। अन्यदमुख्यतयैव। समाकर्षात्, सूक्ष्मत्वादियुक्तेः। श्रुतेश्च तथा दर्शनात् । न चैकस्यैव धर्मिप्रतियोगिविरुद्धम् । अहं माम इत्यादौ कर्तृकर्मत्ववद् विशेषादेव द्वित्वमात्राद् व्यवहारोपपत्तेः। कृष्णात् पूर्वतनो रामः इत्यादिवत् । यथा च तयोः पूर्वापरयोरुभयोरप्यनादित्वं ब्रह्मत्वं चास्ति एवमेवानयोः परावरयोरुभयोरप्युत्तमत्वं ब्रह्मत्वं च युक्तम् । अतो यथा महच्चमसशब्दौ लोकरूढमवरं विहाय श्रुतिसिद्धमर्थान्तरमेव मुख्यं ब्रुवाते, प्रयोजनाधिक्यात्, एवमव्यक्तादिशब्दाः सर्वेऽन्यत्रप्रसिद्धा अपि श्रुतिसिद्धं विष्णुमेव परमं ब्रूयुरिति मथितार्थः ॥१॥

एवं तावदौपनिषदैर्मान्त्रवर्णिकैश्च ज्ञानवाक्यैस्तत्तत्क्रियाकारकपदैश्च विष्णुरेव मुख्यतो वाच्य इत्यायातम् । अथेदानीं ज्ञानैकफलकर्मप्रतिपादकवाक्यैश्च तदेकवाक्यत्वेन मुख्यवाच्य इत्याह – "ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके" (१-४-१०) इत्यधिकरणम् **कर्मवाक्यैश्च वाच्यः** इति। ज्योतिष्टोमादिकर्मणि सृष्ट्यादौ च प्रसिद्धैर्वसन्तादिभिरन्यैश्च वाक्यैः स एव भगवान् मुख्यतो वाच्यः तत्साधनाद्यशेषकारकेषु प्रसिद्धैः स्रुक्स्रुवादिपदैश्चेति चशब्दार्थः। वाक्यपदादिगोचरैश्च वाक्याद्यैर्वाच्य इति वा। तथा ह्येके तत्तन्नामन्यस्मिन्नेव निरूप्याधीयते। न च

तावताग्निष्टोमादिव्यवहारासम्भवः। मुख्यामुख्यकल्पनया तदुभयार्थत्वोपदेशात् । तच्चाविरुद्धम् । मध्वादिशब्दवत् । नन्वेवमपि ज्ञानस्य कर्मशेषत्वात् कर्मण एव मुख्यवाच्यत्वं तत्रेति चेत्, सत्यम्, अपरविद्याख्ये स्वर्गादिमात्रफले क्षुद्रशास्त्रे। न तु परविद्याख्ये समग्रफले महाशास्त्रे। कर्मण एव ज्ञानार्थत्वात् । अत्रापि स्वानुष्ठेयत्वान्यथानुपपत्त्या कर्मणोऽपि मुख्यत्वमापततीति चेत्, सत्यम्, तथापि तत्साध्यज्ञानसाध्यस्य विष्णोः परममुख्यत्वापातादविरोधः ।।२।।

पञ्चदशेत्यादिबहुसङ्ख्यावाक्यैरेक एव कथं वाच्य इत्यत आह - "न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च" (१-४-१२) इत्यधिकरणम् । एकोऽमितात्मकः इति। एकस्यैव विष्णोर्बहुसङ्ख्याकाः स्वरूपांशशब्दिता आत्मानः सन्ति। त एव प्राणचक्षुरादिनामकाः "पञ्चपञ्च" (बृहदा.६-४-१७)इत्युच्यन्ते। न तु भिन्नार्थाः। तच्च बहुत्वं विशेषादेव भवति, न तु भेदादिति ज्ञापयितुं एकः इति विशेषणम् । सर्वजीवेषु पञ्चधा दशधा चावस्थितत्वादमितात्मक उक्तः। अमितं पञ्चजनैः सह न सङ्ख्यातं "यस्मिन्" (बृहदा.६-४-१७)इति तदतिरेकेणैव पठितं रूपान्तरमस्यास्तीत्यप्यमितात्मा। न च तेषु रूपेषु दुःखलेशस्पर्शस्तस्याशङ्क्य इति सुखैकाश्रयत्वं कशब्दाद् ब्रूते ।।३।।

**नृसिंहतीर्थ** – ओं श्रुतिलिंगादिभिरन्यत्र प्रसिद्धशब्दसमन्वयार्थस्य चतुर्थपादस्थ आद्यद्वितीयाधिकरणयोः अव्यक्त ज्योतिष्टोमादिशब्दसमन्वयार्थयोस्तात्पर्यम् **अव्यक्तः कर्मवाक्यैश्च वाच्य एक** इति। जनार्दन इत्यनुवर्तते। वाक्यैरित्यस्य प्रत्येकं सम्बन्धः। अत एव परस्परसमुच्चयार्थश्चशब्दः। चशब्दस्य च अवधारणार्थकस्य वाच्य एवेति सम्बन्धः। तेन दुःखीबद्धादिशब्दानां ईश्वरवाचित्वासम्भवं निराकरोति। एको मुख्यः दुःखादिशब्दप्रवृत्ति-निमित्ताधिकरणत्वाभावेऽपि तत्स्वामित्वेन तच्छब्दमुख्यार्थत्वोपपत्तेरिति। एक इत्येतदुत्तराधि-करणसम्बन्धित्वेन आयोजनीयम् । अन्यत्रैव प्रसिद्धपंचजनादिशब्दसमन्वयार्थस्य तृतीयाधिकरणस्य तात्पर्यम् **एकोऽमितात्मक** इति। अमितरूपात्मक इत्यर्थः । यद्यपि ईश्वरः स्वयमेक एव रूपबाहुल्या तस्य पंचजनादिशब्दवाच्यत्वं युक्तमिति भावः। अत्र अमितात्मक इत्युक्त्या रूपरूपिभेदो नास्तीति सूचयति। अन्यथा अमितरूपवानित्यवक्षत् । अत्र पंचजनसमन्वयार्थ-पंचरूपात्मक इत्येव वक्तव्यम्। अमितात्मक इत्यसंगतम् । तथापि पंचजनशब्दस्योपलक्षकत्वेन दशाद्यमितपर्यन्तं संख्यावाचकशब्दमात्रस्य समन्वीयमानत्वेनेव मुक्तिरिति ज्ञातव्यम् । अत एव सूत्रे न संख्योपसंग्रहादिति सामान्येनोक्तम् । अत एव टीकायामादिपदप्रयोगः।

**श्रीनिवासतीर्थीया–** अन्यत्रैव प्रसिद्धपादीयाधिकरणसप्तकार्थं संगृह्णाति **अव्यक्तः कर्मवाक्यैश्च** इति। आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च इत्यधिकरणार्थः **अव्यक्त** इति। ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके इत्यधिकरणार्थः **कर्मवाक्यैश्च** इति ।

कर्मक्रमप्रतिपादिकैर्वाक्यैर्ज्योतिषा यजेतेत्यादिभिर्वाच्य इति। न संख्योपसंग्रहादित्यस्यार्थः **अमितात्मकः**। बहुरूपः। एकोऽपि भिन्न इति।

**छलारी –**

**हरिः ओम्**
**स्वयमेवागतं कृष्णं श्रीमदार्यपूजितम् ।**
**नवनीतधरं सत्यारुक्मिणीपतिमाश्रये।**

श्रुतिलिङ्गादिभिः अन्यत्रैव प्रसिद्धानां नामलिङ्गात्मकानां शब्दानां विष्णौ समन्वयं प्रदर्शयत्यस्मिन्पादे।

**ओं आनुमानिकमप्येकेषां इति चेन्न शरीररूपकविन्यस्तगृहीतेः दर्शयति च ओं**

आनुमानिकमपि अनुमानपरिकल्पितं प्रधानादिकमेव अव्यक्तादिपदैः कासुचिच्छाखासु उच्यत इति चेन्न, तासु शाखासु अव्यक्तादिपदैः विष्णुरेवोच्यते। कुतः ? दर्शयति च

अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् ।
यो वेद हरिमात्मानं स भयादनुमुच्यते ।। इति (पिप्पलादशाखा)श्रुतिः

"अक्षरं ब्रह्म परमम्"(भ.गी.८-३) "अव्यक्तोऽक्षर इत्यक्तः"(भ.गी.८-२१) इति स्मृतिश्चाव्यक्तादिकं ब्रह्मैवेति यतो दर्शयति तस्मादित्यर्थः। कथं तर्हि अन्यत्र व्यवहारः इत्यत उक्तं – शरीररूपकविंन्यस्तगृहीतेः इति। शरीररूपके – पारतन्त्र्याच्छरीरवद्विद्यमाने प्रधानादौ विन्यस्तस्य स्थितस्य विष्णोरव्यक्तादिपदेन गृहीतेरित्यर्थः। तथा च तत्सम्बन्धादन्यत्र व्यवहार इति सूत्रार्थः।।

अत्र "महतः परमव्यक्तं अव्यक्तात्पुरुषः परः" इत्यादिश्रुत्युक्ताव्यक्तादिशब्दवाच्यो न विष्णुः, किन्नाम प्रधानमेव। अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धत्वात् इति प्राप्ते –

परमात्मैवाव्यक्तादिशब्दवाच्यः। अव्यक्तादिशब्दप्रवृत्तिनिमित्तस्वाम्यत्वात् । अतिशयेन प्रवृत्तिनिमित्ताधिकरणत्वाच्च। कथं तर्हि प्रधानादावव्यक्तादिशब्दप्रयोगः इति चेन्न । प्रधानादौ परमात्मनो विन्यस्ततया तत्सम्बन्धेन तत्र प्रयोगाङ्गीकारादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **अव्यक्त** इति। अव्यक्तशब्दवाच्यो विष्णुरेवेत्यर्थः।।१।।

**ओं ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ओं**

ज्योतिश्शब्दवाच्यो विष्णुरेव। कुतः? हि-यस्मात् एके शाखिनः, उपक्रमात् – "एष इमं लोकं अभ्यार्च्यत्" (ऐ.आ.२-२-२)इत्युपक्रम्य, तु – विशेषेण, तथा ज्योतिरादिसर्वशब्दवाच्यत्वेन, "ता वा एता सर्वा ऋचः" इत्यादिना अधीयते – पठन्तीति सूत्रार्थः।।

अत्र ''वसन्ते वसन्ते ज्योतिषा यजेत'' इत्यादिश्रुत्युक्ताः ज्योतिरादिशब्दाः न विष्णुवाचकाः। किन्तु ज्योतिष्टोमादिकर्मतदङ्गवाचकाः। तेषां तत्रैव प्रसिद्धत्वात् । अन्यथा तदसिद्धिप्रसङ्गादिति प्राप्ते -

विष्णुरेव ज्योतिरादिशब्दवाच्यः। ''ता वा एताः सर्वा ऋचः, सर्वे वेदाः, सर्वे घोषाः, एकैव व्याहृतिः'' इत्यादिश्रुत्या विष्णुरेव सर्वशब्दवाच्यत्वाभिधानात् । न च कर्माद्यसिद्धिप्रसङ्गः। अन्यत्र रूढ्यादिवृत्तिमनिवार्यैव परममुख्यया वृत्त्या भगवत्परत्वाङ्गीकारात् इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **कर्मवाक्यैश्च वाच्य** इति। (कर्मतदङ्गतत्क्रमदेशकालाधिकार्यादिवाचकैः अन्यत्र प्रसिद्धैः शब्दैः वाच्य इत्यर्थः) ।।२।।

**ओं न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ओं**

पञ्चजनादिशब्दवाच्यो विष्णुरेव। कुतः ? तदधीनत्वादिपूर्वोक्तहेतुभ्य एव। तर्हि बहुत्व-संख्याविरोध इत्यत उक्तं - संख्योपसंग्रहादिति। यस्मिन्निति श्रुतौ पञ्च पञ्चजना इति बहुत्वसंख्यावाचकशब्दसंग्रहादपि न विरोधः। कुतः ? नानाभावादतिरेकाच्च । अप्येकस्यापि भगवतो अनेकरूपत्वात् । आधेयपञ्चजननामकरूपापेक्षया यस्मिन्नित्याधाररूपस्यातिरिक्त-त्वाच्चेति सूत्रार्थः।

अत्र ''यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित'' (बृ.उ.६-४-१७)इति श्रुत्युक्त-पञ्चजनादिशब्दवाच्यो न विष्णुः। किन्त्वन्ये। तच्छब्दस्य बहुत्वसंख्याविशिष्टवस्तुवाचित्वात् । बहुत्वस्य ईश्वरे विरुद्धत्वात् । ''एकमेवाद्वितीयम्'' इति श्रुत्या एकस्यैव प्रमितत्वादिति प्राप्ते-

पञ्चजनादिशब्दवाच्यो विष्णुरेव । बाधकाभावात् । न च बहुत्वानुपपत्तिः बाधिका। स्वगतभेदशून्यस्यापि प्रतिशरीरं प्राणादिपञ्चजननियमनाय बहुरूपत्वेन बहुत्वोपपत्तेरिति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **एको अमितात्मक** इति। एक एव बहुरूपात्मक इत्यर्थः। यद्यपीश्वरः स्वयमेक एव। तथापि रूपबाहुल्यात् पञ्चनादिशब्दवाच्यत्वं युक्तमिति भावः। अत्र अमितात्मक इत्युक्त्या रूपरूपिभेदो नास्तीति सूचयति। अन्यथा अमितरूपवानित्यवक्ष्यत् । यद्यप्यत्र पञ्चजनशब्दसमन्वयार्थं पञ्चरूपात्मक इत्येव वक्तव्यम् । अमितात्मक इत्यसङ्गतम् । तथापि पञ्चजनशब्दस्य उपलक्षणत्वेन बहुत्वसंख्याविशिष्टवस्तुवाचकशब्दमात्रस्य समन्वयार्थमेवमुक्तिरिति ज्ञेयम् । अत एव सूत्रे न संख्योपसंग्रहादिति सामान्योक्तिः। अत एव टीकायां पञ्चजनादीत्यादि-पदप्रयोगः, सामान्येन बहुत्वसंख्याविशिष्टवाचिशब्दवाच्यो हरिरित्युपसंहारश्च कृतः इत्यवगन्तव्यम् ।।३।।

**नारायणाचार्य–** अथान्यत्रैव प्रसिद्धाव्यक्तादीनां भगवति समन्वयप्रतिपादनार्थोऽयं पादः। तत्र यदुक्तं तत्तुसमन्वादित्यत्र सर्वशब्दानां भगवति समन्वयेन तत्तद्गुणगणपूर्णतेति तदयुक्तम् । अव्यक्तशब्दस्य "अव्यक्तात्पुरुषः परः" (क.उ.१-३-११) इति श्रुतौ पुरुषावरत्वेन प्रतीतस्य सर्वोत्तमे कथमपि नेतुमशक्यत्वादित्याशंकापरिहाराय सूत्रं **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** । तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्तेविन्यस्तस्य परमात्मन एवाव्यक्तशब्देन ग्रहणात्परमात्मशरीरस्य चिदानन्दरूपत्वादत्र कुत्सायां कप्रत्ययः। तेन प्रतिमारूपमव्यक्तमित्यर्थः। परमात्मन एव मुख्यतयाऽव्यक्तशब्दः तत्तन्त्रत्वेन तच्छरीररूपत्वात् इतरस्याप्यव्यक्तशब्दः। "तुच्छेनाभ्वपिहितं यदासीत्" (ऋ.सं.१०-१२९-३)इति दर्शयति च। तुच्छेन जडेन आभुविभु परब्रह अपि हितमावृतमित्युक्त्या तस्य तच्छरीरत्वप्रतीतेरिति भावः।

अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् ।
यो वेद हरिमात्मानं स भयादनुमुच्यते ।। इति पिप्पलादशाखायाम् ।

"अक्षरं ब्रह्मपरमम्" (भ.गी.८-३)इत्युक्त्या "अव्यक्तोऽक्षर " (भ.गी.८-२१) उच्यते इति वचनाच्च तस्याव्यक्तशब्दवाच्यत्वम् । नन्वस्तु श्रौतस्मार्तप्रयोगबलेनाव्यक्तादिशब्दानां भगवद्वाचित्वम्। तत्र तेषां मुख्यत्वं तु कुत इत्यतः सूत्रं **सूक्ष्मं तु तदर्हत्वात्**। सूक्ष्ममेवाव्यक्तशब्देनोच्यते। तस्यैवाव्यक्ततार्हत्वम्। सूक्ष्मत्वं च तस्यैव मुख्यम्

यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति।
यत्तल्लोका न विदुर्लोकसारं विदंत्येतत्कवयो योगनिष्ठाः ।।

इति च पिप्पलादशाखायाम् । न च मुख्ये सत्यमुख्यं युज्यते। ननु विष्णोर्मुख्यार्थत्वेऽपि प्रकृते "महतः परमव्यक्तमव्यक्तात्पुरुषः पर" (क.उ.१-३-११)इति परावरत्वोक्तेस्तस्याः विष्णौ असम्भवादमुख्यार्थग्रहणयुक्तमित्यतः सूत्रं **ओं तदधीनत्वादर्थवत्** । तदधीनत्वाच्च अव्यक्तत्वपरावरत्वादीनां तस्मिन्परावरादिशब्दजातमर्थवत् ।

मदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते। यथा जीवः परात्मेति यथा राजा जयीत्यपि।।

इति स्कान्दे। एतदेव युक्त्यन्तरेणोपपादयत्सूत्रं **ओं ज्ञेयत्वावचनाच्च** । "तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथ" इति विष्णोरेव ज्ञेयत्ववचनादन्यस्य ज्ञेयत्वानुक्तेः। विष्णोर्ज्ञापनार्थं प्रवत्तस्य वेदस्याऽमुख्यवाच्यत्वं न सम्भवतीति भावः। उक्तमाक्षिप्य समादधत्सूत्रं **ओं वदतीति चेन्न प्राज्ञो हि** ।

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ।। (क.उ.१-३-२)

इत्यन्यस्यापि महत्तत्वात्परस्याव्यक्तस्य मोक्षार्थं ज्ञेयत्वं वेदो वदतीति चेत् न । प्राज्ञः परमात्मा हि तत्रोच्यते। "अणोरणीयान्महतो महीयान्" (क.उ.१-२-२०)इति तस्यैव महत्वं महतः परत्वम् सर्वस्मात्परस्य महत्तत्वात्परत्वं युज्यते। ननु विशिष्योक्तस्य महत्परत्वस्य प्रधानलिंगस्यामुख्यार्थतां स्वीकृत्य अनाद्यनंतादिवाक्यस्य विष्णुपरत्वग्रहणं कुत इत्यतः सूत्रं **ओं प्रकरणात्**। "सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदं" (क.उ.१-३-९) इत्येतत्प्रकरणार्थोपासकस्य वैष्णवपदप्राप्तिरूपस्य फल उक्तत्वादन्योपासनेनान्यप्राप्तेरयोगादेतस्य वैष्णवप्रकरणत्वमवगम्यतेऽतः सर्वं पूर्वमुक्तं युक्तमिति भावः।

हेत्वन्तरेणानाद्यनन्तवाक्यस्यान्यपरतां पराकुर्वत्सूत्रं **ओं त्रयाणामेव चैवमुपन्यासः प्रश्नश्च**। पितृसौमनस्य स्वर्ग्याग्निपरमात्मनां त्रयाणामत्र यमेनोपन्यासः क्रियते नचिकेतसा प्रश्नश्च। न तु प्रधानस्यात्र कश्चित्प्रसंगोऽत्र परमात्मविषयत्वमेवास्य प्रकरणमेवेति भावः।

नन्वव्यक्ततत्वादीनां तदधीनत्वादिना परमात्मनि मुख्यत्वे प्रधानादिष्वेव तच्छब्दानां लोकतःप्रसिद्धिर्न स्यादतः प्रसिद्धिबलात्तेषामेव मुख्यार्थत्वमित्यतः सूत्रं **ओं महद्वच्च** । चशब्दो दार्ष्टान्तिकसमुच्चयः । यथा "महान्तं विभुमव्ययं" इत्यादौ श्रुतमहच्छब्दो महत्तत्वे लोकतः प्रसिद्धोऽपि तत्प्रवृत्तिनिमित्तमहच्छब्दस्य परमात्मनि मुख्यत्वात् तस्यैव मुख्यतो वाचकः। एवमव्याक्तादिशब्दा अपि मुख्यप्रवृत्तिनिमित्तवति भगवत्येव मुख्याः। लोकप्रसिद्ध्यपेक्षया मुख्यवृतिनिमित्तवत्वस्यैव ज्यायस्त्वादिति भावः।

न चैवमव्यक्तादिशब्दानां परमात्मनि योगेन प्रवृत्तिनिमित्तमुक्तं लोकप्रसिद्धेरन्यत्र रूढिरवगम्यते। सा च योगाद्बलवती । अतो वैपरीत्यमेव युक्तमित्यतः सूत्रं **ओं चमसवदविशेषात्** । यथा चमसशब्दो अन्यत्र यज्ञपात्रविशेषे प्रसिद्धोपि "इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" (बृ.उ.४-२-३) श्रुतेः शिरोवाचक एवमव्यक्तादिशब्दा अपि सर्वे अन्यत्र प्रसिद्धा अपि "नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति" इति श्रुतेः । परमात्माभिधायका एवाविशेषाच्छ्रुतेः। तत्तात्पर्यतो व्याचष्टे **अव्यक्त** इति । अत्र इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः। शब्दैरपि वक्ष्यमाणं सिंहावलोकनेन सम्बध्यते। अयमर्थः। अव्यक्त इत्याद्यैः बलवच्छ्रुतिलिंगादिना अन्यत्र नियतैरन्यत्रैव प्रसिद्धैर्भगवानेव मुख्यतया वाच्यः। मुख्यतयेति वदता तस्यैव परमसूक्ष्मत्वादिरूपाव्यक्तताार्हत्वा......... राजा जयीत्यादिव्यपदेशवत् उपपत्तेश्च युक्तमुक्तमित्यादि-सूचितमवगन्तव्यम् । अत्राव्यक्तशब्दो जीवदुःखावरनीचादिशब्दानामुपलक्षक इति ज्ञेयम् ।

ननु तथापि "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिशब्दानां ज्योतिष्टोमादियज्ञपराणां भगवति वृत्त्यसम्भवात् समन्वयसूत्रमयुक्तमित्यतः सूत्रं **ओं ज्योतिरुपक्रमात्तु तथा ह्यधीयते एके** । तस्यार्थः। ज्योतिशब्दवाच्यो हरिरेव। "एष इमं लोकमभ्यार्चत्" इत्युपक्रम्य "ता वा एताः सर्वाः

ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्'' (ऐ.आ.२-२-२) इत्यधिको शाखिनो अधीयते इति । तत्र ज्योतिःशब्दः सकलकर्मशब्दानामुपलक्षण इत्यभिप्रेत्य तद्व्याचष्टे। **कर्मवाच्यैव वाच्य** इति। कर्म ज्योतिष्टोमादियज्ञरूपं वाच्यो एषां शब्दानां ते कर्मवाच्याः ज्योतिरादिशब्दास्तैर्विष्णुरेव वाच्यः। कर्मवाक्यैश्चैति क्वचित्पाठः सः स्पष्टार्थः। अत्र चशब्देन शब्दैरिति प्रकृतस्य समुच्चयः।

तथापि ज्योतिष्टोमादिशब्दैर्वाच्य इत्युक्ते कर्मविलोपः स्यादित्याशंकापनोदाय सूत्रं **ओं कल्पनोपदेशाच्च मध्वादिवदविरोधः**। यथा खलु मधुविद्यायां ''असौ वा आदित्यो देवमधु'' इत्यादिना मध्वादिपदार्थतया परमात्मोपासनोपदेशोऽपि न लौकिकमध्वादिवाचकाभावे तत्तद्व्यवहारलोपरूपो विरोधः।अन्यत्र रूढिमनिवार्यैव महायोगवृत्या विद्वद्रूढ्या ईश्वरपरत्वाभ्युपगमात् । एवं ''ता वा एताः सर्वा ऋचः'' इत्यादिप्रमाणैः महायोगादेरुपदेशात् । सर्वशब्दवाच्यत्वे परमात्मनो अभ्युपगतेऽपि न कर्मादिविरोधः। तदेतदाह **एको वाच्य** इति । एके मुख्यान्यकेवलाः विष्णुरेव वाच्यः। अमुख्यवाच्यस्येतरस्यापि सत्वान्न कर्मादिविरोध इति भावः।

जातमोतं हरौ यस्माज्ज्योतिषः प्राणरूपतः।
आयजेतश्चायजेतो वसन्तिश्च वसन्स्ततः।

इत्यादिपदवर्णयोगस्य तत्रैव सम्भवादनन्तशब्दप्रवृत्तिनिमित्तभूतानन्तगुणवत्वादुक्तमुपपन्नमिति भावेनोक्तं **अमितात्मक** इति। अमितो गुणपूर्ण आत्मा स्वरूपं यस्य स तथा। अमितानां वसन्तादिपदार्थानामात्मान्तर्यामीति अमितात्मक इत्यर्थः। अतः सर्वमुपपन्नमिति भावः।।२।।

नन्वेवमपि ''यस्मिन्पंच पंचजना आकाशश्च प्रतिष्ठितः तमेवमन्य आत्मानं विद्वान्ब्रह्मा-मृतोऽमृतं'' (बृ.उ.६-४१७) इति वाजसनेये श्रुतौ पंचजनाकाशशब्दानां परमात्मपरत्वायोगा-दुक्तमयुक्तम्। यस्मिन्निति सप्तम्या निर्दिष्टस्य वाक्यशेषबलेन परमात्मत्वात्तदाहितानामनेकेषां परमात्मत्वायोगादित्यतः सूत्रं **ओं न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च**। तत्रापिपदेन पूर्वसूत्राद्विरोधपदमाकृष्यते । तेन साकं नञोऽन्वयः। ततश्चायमर्थः। विष्णोरेव पंचजनाकाशशब्दवाच्यत्वेऽपि विरोधो नास्ति। स्वगतभेदशून्यस्यापि नानारूपत्वेन बहुत्वसंख्योपसंग्रहाविरोधाद्यस्मिन्नित्याधारतया निर्दिष्टादतिरेकेण तदाधेयाकाशादिषु भगवतोऽवस्थानाच्चाधाराधेयभावोऽपि युज्यते इति । तस्य तात्पर्यमाह **एकोऽमितात्मक** इति। एकस्यापि तस्यामितात्मकत्वात्पंचजनादिशब्दवाच्यत्वं युक्तमिति भावः।

पंचजनलिंगोक्त्योक्तशंकां परिहर्तुं के ते पंचजना इत्यतः सूत्रम् **ओं प्राणादयो वाक्यशेषात्** । ''प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नमुत मनसो मन'' इति वाक्यशेषात्प्राणादयः पंचजनाः । तेषु प्राणस्य प्राणमित्यादिना प्राणादीनां प्राणत्वादिप्रदस्य भगवल्लिंगस्योक्तेस्तस्यैव पंचजनत्वम् ।

ननु वाक्यशेषोक्तानां प्राणप्राणादीनां विष्णुत्वेऽपि पंचजनानां विष्णुत्वं न युक्तम् । माध्यन्दिनशाखायां पंचानामुक्तत्वेऽपि काण्वानां शाखायां चतुर्णामेवोक्तत्वात्तत्रान्नस्यान्नमित्यपाठात् । अस्य सूत्रस्य सर्वशाखागतवाक्यार्थनिर्णायकत्वादित्यतः सूत्रं **ओं ज्योतिषैकेषामसत्यन्ने** । एकेषां काण्वानां शाखायमपि पंचजनानामुक्तेरुक्तं न विरुद्धम् । तत्रान्नस्यान्नमित्यनुक्तावपि यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते । तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ।। इति किंचत् । द्विरुक्तेन ज्योतिषां ज्योतिषा पंचत्वसम्भवादिति । अत्र ज्योतिरन्नशब्दयोरेकार्थत्वं पृथक्पंचकं वेति ज्ञेयम् ।।३।।

ननु तथापि ''आत्मन आकाशः सम्भूतः आकाशाद्वायुः'' इत्यादौ आकाशशब्दवाच्यत्वं विष्णोर्नास्ति । तेषां कार्यपरत्वादित्यतः सूत्रं **ओं कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः** इति । तस्यार्थः, आकाशादिषु विष्णुरेव स्थितोऽतो तत्तच्छब्दैरभिधीयते । कारणत्वेन च शब्दात्कार्यत्वेन च । ''य आकाशे तिष्ठन्नाकाशमन्तरो यमयति यो वायौ वायुमन्तरो यमयति'' इत्यादिना तत्स्थितत्वात् । न चात्रापि कुतो विष्णुरिति ? यथा विष्णुरविदितत्वादिरूपेण श्रुतिषु स्थितस्तथाविधस्यैव यमाकाशो न वेद यं वायुर्न वेदेत्यादिनोक्तेरिति । तस्य तात्पर्यमाह **अवान्तरं कारणं च** इति । कार्यत्वे सति कारणत्वरूपावान्तरकारणाभिधायकाकाशादिशब्दवाच्योऽपि स एवेत्यतो मूलभूतादभिव्यक्तो वाय्वादिनियामकस्वरूपाभिव्यंजकत्वेनावान्तरं कारणं च भवतीत्यर्थः । यद्यपि भगवान्सर्वेषां मूलकारणं ''सदेव सोम्येदमग्र आसीत्'' इत्यादिश्रुतिनिर्दिष्टं तथाप्याकाशादि-रूपमवान्तरकारणं तच्छब्दवाच्यश्च भवतीति तात्पर्यार्थः ।

**मळगी – अव्यक्तः** उपादानत्वावरत्वदुःखित्वबद्धत्वादीनां तदधीनत्वात् ''यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते । यथा जीवः परात्मेति यथा राजा जयीत्यपि'' इति स्कान्दोक्ते-स्तत्तन्नियामकत्वेन अव्यक्तावरदुःखिबद्धादिवाच्यः । **कर्मवाक्यैः** कर्मणां ज्योतिष्टोमादिकर्मणां तदंगानां च प्रतिपादकवाक्यैः । **वाच्यः एकः** कर्मतदंगेषु च तत्रत्यरूपैरभिन्नोऽपि। **अमितात्मकः** अनेकरूपवत्वहेतुना पंचजनाकाशादिशब्दवाच्यः। अव्यक्तकर्मवाच्यैश्चेत्यपि पाठः । तत्पक्षे । अव्यक्तं च कर्माणि च तथा तान्येव वाच्यानि प्रतिपाद्यनि यैस्ते तथा तैः शब्दैः । **वाच्यः** प्रतिपाद्यः । **एकः** अद्वितीयः **अमितात्मकः** अमितरूप इति वा ।।७।।

**लिंघेरी** – पुनः कीदृशः? मुख्यतः सर्वशब्दैश्च एक एव जनार्दनः वाच्यः। **अव्यक्त-कर्मवाच्यैश्च** अव्यक्तं च कर्माणि च अव्यक्तकर्माणि अव्यक्तकर्माण्येव वाच्याः प्रतिपाद्याः तैः शब्दैः **वाच्यः** प्रतिपाद्यः। पुनः कीदृशः? **एकः** एक एव । **अमितात्मकः** अमितस्वरूपः ।।७।।

**नारायणपण्डित** – अव्यक्तः अव्यक्तनियामकः । अव्यक्तेत्यनेन आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति चेतिनयार्थ उक्तः ।।१।। कर्मवाक्यैः कर्मपरज्योतिर्वाक्य-वाच्यः। कर्मवाक्यैरित्यनेन ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके इति नयार्थः प्रोक्तः ।।२।। अमितात्मकः बहुरूपः। एकोऽभिन्न इति । न संख्योपसंग्रहादपि नानाभावादतिरेकाच्चेति नयार्थः प्रोक्त इति ।।३।।

**गूढकर्तृक** – अन्यत्रैव प्रसिद्धद्विविधशब्दसमन्वयपरतुरीयपादीयाधिकरणार्थं दर्शयन्संगृह्णात्युणु-भाष्यकारो आनन्दतीर्थः। **अव्यक्तकर्मवाक्यैश्च वाच्य एकोऽमितात्मकः। अवान्तरं कारणं च प्रकृतिःशून्यमेव च। इत्याद्यन्यत्रनियतैरपि मुख्यतयोदितः। शब्दैरतोऽनन्तगुणो यच्छब्दाः योगवृत्तय इति। अव्यक्तः** अव्यक्तशब्दवाच्यः। कुतः? "अव्यक्तमचलं शान्तं" इति श्रुतेः। "अव्यक्तोऽक्षर" इत्युक्त इति स्मृतेः। न प्रकृत्यादिः अव्यक्त इत्याद्याधिकरणार्थः **अमितात्मकः** अमितः अपरिमितः आत्मा स्वरूपं यस्य सोऽमितात्मा। स्वार्थे कः। बहुरूप एकोऽभिन्नः। न संख्योपसंग्रहादित्यस्यार्थः।

**अणुभाष्यम्**

**अवान्तरं कारणं च प्रकृतिश्शून्यमेव च।**
**इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः।।८।।**

**शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः।।९।।**

**सत्यनाथीया–** अवान्तरं कारणं कार्यत्वे सति कारणमवान्तरकारणम् । तद्वाचकशब्दवाच्य-श्चेति कारणत्वेन चाकाशादिष्वित्यस्यार्थः। समाकर्षादित्यधिकरणस्य स्वपक्षबाधकपरिहारार्थ-त्वेनान्तर्भेदाधिकरणार्थो दर्शितः। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यस्यार्थःप्रकृतिः इति । शून्यमेव च शमूनं कुरुत इति शून्यशब्दवाच्यः। एतेन सर्वे व्याख्याता इत्यधिकरणार्थो दर्शितः। इत्यादिभिः अव्यक्तादिभिस्तथा इत्यादिभिः तदुपलक्षिततत्प्रकरणगततज्जातीयतत्समानन्याय-कैरन्यत्रनियतैः रूढ्यादिना अन्यत्रैव प्रसिद्धैर्नामात्मकैरप्यन्यत्रोभयत्र प्रसिद्धैरपि मुख्यतया परममुख्यतया वृत्या एको जनार्दनः मोक्षप्रदो हरिरुदितः स्वातन्त्र्यादिहेतुभिः वाच्यतया प्रतिपादितः सूत्रकृता । यत् यस्मात् शब्दाः योगवृत्तयः महायोगयुक्ताः अतोऽखिलशब्दवाच्यत्वादनन्त-गुणोऽनन्तधर्म इत्यर्थः

।। इति श्रीसत्यनाथतीर्थमुनिविरचिताणुभाष्यविवरणे प्रथमोऽध्यायः ।।

**तत्वमञ्जरी–** नन्वथापि न सर्वशब्दवाच्यता विष्णोः। "आत्मन आकाशः सम्भूतः" इति तैत्तिरीयादौ श्रुतभूतोत्पत्तिप्रतिपादकवाक्यस्थाकाशादिशब्दानां कार्यत्वे सति कारणत्वरूपावान्तर–कारणत्वलिङ्गेन आकाशादिभूतमात्रवाचकत्वादित्यतः प्राप्तम् – **कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः** इति । तदर्थः **अवान्तरं कारणं** चेति। पूर्ववदनुषङ्गः। सम्भूतवाक्ये श्रुतं कार्यत्वे सति कारणत्वरूपं यदवान्तरं कारणं च तदेको जनार्दनः। न केवलं आत्मन इति श्रुतं मूलकारणमिति वा प्रागुक्तसमुच्चये वा चशब्दः। तथा चान्यत्रैव नियतैरपि उत्पत्तिमत्वादिलिङ्गेन अन्यत्रैव प्रसिद्धैरप्याकाशवाय्वाग्न्यादिसर्वशब्दैर्मुख्यतया परममुख्यत्वेनैको जनार्दन उदितः। न तु आकाशादिभूतम् । कुतः ? **शब्दैः**। प्रागुक्तसर्वशब्दवाच्यत्वबोधकैः "नामानि सर्वाणि" "ता वा एताः" "तमेवैकं जानथ" इत्यादिशब्दैरित्यर्थः।

विरुद्धमवान्तराकारणमेको जनार्दनः कथमित्यतो **अमितात्मक** इत्यनुवर्त्यम् । अमितेषु अनेकेषु आकाशादिष्वात्मा स्वरूपं यस्य स इत्यर्थः। आकाशादिषु स्थितत्वादिति यावत् । तथा चाकाशाद्युत्पत्तौ आकाशाद्यन्तर्गतत्वेन विष्णोरुत्पत्त्या वाय्वादिस्थरूपोत्पत्तिहेतुत्वेन वा अवान्तरकारणत्वं युक्तमिति भावः।

कथमजस्य जनिमत्त्वमित्यतोऽपि द्युभ्वादिनयोक्तस्मरणाय **मितात्मक** इति व्यवच्छिद्य योज्यम् । मितः व्यक्तः आत्मा स्वरूपं यस्य स इत्यर्थः। जनेरीशेऽभिव्यक्तिरूपत्वस्य द्युभ्वाद्यायतन–मित्यत्राभिधानादुत्पत्तिरत्राभिव्यक्तिः। न त्वभूत्वाभवनादिरूपेति भावः।

क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः।
आकाशादिषु नान्योऽस्ति ह्यभिमानोऽभिमानिनः।। इत्यनुभाष्योक्तेः।

नन्वाकाशादिषु हरेः स्थितिरेव कुत इत्यतोऽपि **शब्दैः** इति । "य आकाशे तिष्ठन् यो वायौ तिष्ठन्" इत्यादौ उक्तान्तर्यामिब्राह्मणोक्तैः शब्दैरित्यर्थः। ननु "य आकाशे तिष्ठन्" इत्यादावपि हरिरिति कुत इत्यतोऽपि **शब्दैः** इति। "यमाकाशो न वेद यं वायुर्न वेद" इत्यादिरूपैः आकाशाद्यविहितत्वामृतत्वाद्यन्तर्यामिनयोक्तधर्मबोधकैः शब्दैः "य आकाशे तिष्ठन्" इत्यादावुक्तो हरिरेवेत्यर्थः। ननु "यमाकाशो न वेद" इत्यादिशब्दैरपि कुतो हरिरित्यतोऽपि **शब्दैः** इति। "स योऽतोऽश्रुतः" इत्यादिरूपैः हरेरविदितत्वादिधर्मबोधकैः। तेषां शब्दानां वैष्णवत्वादित्यर्थः।

अत्र समाकर्षादित्यादिसूत्राष्टकस्य तत्वप्रदीपन्यायरत्नावलीन्यायचन्द्रिकासम्बन्धदीपिकादिप्राचीन–ग्रन्थोक्तरीत्या कारणत्वेन इत्यधिकरणशेषत्वात् पृथक् तदर्थो न संगृहीतः। यद्वा उक्तवक्ष्यमाणसर्वशब्दानां पदवर्णादिरूपेण विष्णुवाचित्वोक्तिपरज्योतिनयार्थसंग्रहेणैव समाकर्षादिति नयार्थोऽपि संगृहीतः। तथा हि यदुक्तं ज्योतिर्नये सर्वशब्दानां विष्णौ मुख्यत्वमिवान्यत्रापि मुख्यत्वान्न कर्मादिलोपो विष्णौ शब्दानां व्युत्पत्त्ययोगो वा नेति। तदयुक्तम् । तथात्वे

अक्षादिशब्दवदनेकेषु मुख्यतापत्त्या मुख्यतया सर्वशब्दैर्विष्णुरेवोच्यते इति तत्तु समन्वयादिति समन्वयसूत्रोक्तावधारणायोग इत्यादिचोद्यनिरासाय प्राप्तम् - **समाकर्षात्** इति सूत्राष्टकम् । तस्याप्यर्थः - **कर्मवाच्यैश्च वाच्य** इति। पूर्ववदनुषङ्गः। क्रमादिवाचकैः मुख्यतयान्यत्र नियतैः उक्तवक्ष्यमाणसर्वशब्दैरेको जनार्दनो मुख्यतया परममुख्यतया वाच्य इत्यर्थः। अमुख्यवृत्तौ गौणी लक्षणेति भेदवत् मुख्यवत्तावपि मुख्यत्वं परममुख्यत्वमिति द्वैविध्यसत्वादिति भावः। न च तत्र मानाभावः। ''शब्दैः परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि'' इति वृत्तितारतम्यबोधकशब्दैः परममुख्यत्वमुख्यत्वयोः बहौ तदन्यत्र चावगमादित्यर्थः। प्राक् प्रतिनयं परममुख्यतयेत्यादिव्याख्यानं अस्माभिरेतदभिप्रायेणैव कृतम् । नन्वीशे परममुख्यत्वेऽन्यत्र सिद्धिर्न स्यादित्यतोऽन्यत्रैव नियतैरन्यत्रैव व्यवह्रियमाणैः अत एवान्यत्र नियतैरन्यत्रैव व्युत्पन्नैरपि शब्दैर्वाच्य इति लोकस्य जगत्येव नैयत्येन शब्दव्यवहारेण तत्रैव तच्छ्रोतृणां व्युत्पत्तेर्नैयत्यात् ईशे तथा बहुलव्यवहाराभावेन व्युत्पत्त्यभावाच्च । अन्यत्र प्रसिद्धेः अज्ञानमूलत्वोपपत्तेरिति भावः।

ननु ''अस्य यदेकां शाखां जीवो जहाति'' इति ''वायुना वै गौतम सूत्रेण'' इति जीववाय्वोरपि स्वातन्त्र्यप्रतीतेः तयोरपि सर्वशब्दवाच्यत्वं स्यादित्यतोऽपि अन्यत्रनियतैरपीति अन्यत्र नियतैरपि अन्यत्र वाचकैरपि शब्दैः जीववाय्वादिशब्दैः एको जनार्दनो मुख्यतया वाच्य इत्यर्थः। जीवादिशब्दैः तत्तदन्तर्यामिणो गृहीतत्वेन तत्र प्रतीतस्वातन्त्र्यस्यापि तदन्तर्यामिगतत्वेन पादान्त्यप्राणनयेऽभिधानादिति भावः।

ननु मुख्यतयाऽन्यत्र नियतैरन्यत्र वाचकैरपि शब्दैः परममुख्यतया हरिर्वाच्य इत्युक्तम् । मुमुक्षुं प्रति कर्मदेवताद्युक्तौ फलाभावात् मुक्तेः ब्रह्मज्ञानादेव सिद्धेः तस्य च पदसमन्वयादिनैव सिद्धेरित्यतोऽपि **अन्यत्र नियतैः** इति। कर्मदेवतावाचित्वेन स्थितैरपि शब्दैरन्ततो मुख्यतो महातात्पर्येणोदित इत्यर्थः। कर्मदेवतावाचित्वेन स्थितानां वाक्यानामन्ततो ब्रह्मपरत्वमित्येवं रूपवाक्यान्वयाभावे मन्दानां प्रतिपदान्वयायोग्यतया तत्र वैमुख्येन ब्रह्मज्ञानाद्यभावः स्यादिति भाव इत्याद्यूह्यम् ।।५।।

नन्वथापि न हरेः सर्वशब्दवाच्यता । परमपुरुषे स्त्रीत्वाभावेन सर्वस्त्रीशिरोमणि-लक्ष्मीवाचिप्रकृत्यादि स्त्रीशब्दवाच्यत्वाभावात् । न च खट्वादिशब्दवदुपपत्तिः। समन्वयस्य गुणपूर्त्यर्थत्वेन - अर्थसाधुत्वस्यैव वाच्यत्वात् । तदधीनत्वन्यायाश्रयणेऽपि स्वातन्त्र्यस्यैव सिद्ध्या स्त्रीशब्दप्रवृत्तिनिमित्तरूपगणासिद्धेः। ''नामानि सर्वाणि'' इत्यस्य सङ्कोचसंभवाच्चेत्यतः प्राप्तम् - **प्रकृतिश्च** इति सूत्रपञ्चकम् । तदर्थः **प्रकृतिः** इति। पूर्ववदनुषङ्गः। प्रकृतिः प्रकृष्टा कृतिः यस्येति प्रकृतिशब्दोक्तः प्रकृष्टकृतिमानेको जनार्दनः। तथा स्त्रीलिङ्गेन अन्यत्र नियतैः अन्यत्रैव प्रसिद्धैः ''सैषा प्रकृतिः'' इत्यादौ श्रुतप्रकृतितदुपलक्षित स्त्रीलिङ्गशब्दैरेको जनार्दनो मुख्यतया परममुख्यवृत्त्योदितो

न तु लक्ष्म्यादिः। कुतः? **शब्दैः**। "हन्त एतमेव सर्वाणि नामान्यभिवदन्ति" इत्यादिप्रतिज्ञा-दृष्टान्ताभ्यां सर्वशब्दवाच्यत्वोपपादकप्रभृतिभिः नामानि सर्वाणि इत्यादिभिः प्रागुक्तैश्च शब्दैरित्यर्थः।

तथा हरेः प्रकृतिशब्दवाच्येच्छास्वरूपत्वावेदकैः "प्रकृतिर्वासनेत्येव तवेच्छानन्त कथ्यते" (भा.ता.१-१-८) इति, "सोऽभिद्या स जूतिः" इत्यादिशब्दैस्तथा "एष स्त्र्येष पुरुषः" (पैङ्गीश्रुति)इत्यादिभिः साक्षात् स्त्रीपुरुषशब्दवाच्यत्वावेदकैः शब्दैः मुख्यतयोदितत्वं ज्ञायते इत्यर्थः।

निमित्ताभावे इत्यतोऽपि **शब्दैः** इति । "अथ हैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार। तस्मात् प्रकृतिः" (भाल्लवेयश्रुति)इत्यादिप्रकृतिशब्दप्रवृत्तिनिमित्तप्रकृष्टकृतिमत्त्वावेदकैः, तथा "यद्भूतयोनिं" इति, सूतिरव्यवधानेन इत्यादिभिः स्त्रीलिङ्गशब्दमात्रप्रवृत्तिनिमित्तभूताव्यवधानेन प्रसवहेतुत्वरूपस्त्रीत्वावेदकैः श्रुतिस्मृतिरूपैः शब्दैः हरौ निमित्ताभावावगमादित्यर्थः ।।६।।

नन्वथापि न हरेः सर्वशब्दवाच्यता । शून्यासत्तुच्छादिशब्दानां निस्स्वरूपवाचिनां सस्वरूपे हरावयोगात्, निस्स्वरूपे नियमनायोगेन तदधीनत्वन्यायासम्भवाच्चेत्यतः प्राप्तम् - **एतेन सर्वे व्याख्याता व्याख्याता** इति। तदर्थः - **शून्यमेव च । इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः। शब्दैः** इति। एवकारस्य अन्यत्रैवेत्यन्वयः। चः पूर्वोक्तसमुच्चये। इत्यादीत्यविभक्तिकम् । इत्यादिभिरित्यर्थः। तथा चान्यत्रैव नियतैः निःस्वरूपवाचित्वेन अन्यत्रैव प्रसिद्धैः शून्यं, असत् , अभावः, तुच्छमित्यादिशब्दैः एको जनार्दन एव मुख्यतयोदितः। न शून्यादिः । कुतः ? **शब्दैः**। "नामानि सर्वाणि" "तमेवैकं जानथ" "ता वा एताः सर्वा ऋचः" "हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति" इत्यादिभिः सर्वशब्दवाच्यत्वावेदकैः शब्दैरित्यर्थः।

निमित्ताभाव इत्यतोऽपि **शब्दैः** इति। "शमूनं कुरुते यस्मात्" इति निर्वचनपरशब्दैः तत्प्रतिपादकस्वातन्त्र्यावेदकसर्वशब्दैरित्यर्थः।

पादार्थमुपसंहरति। **इत्याद्यन्यत्रनियतैरपि मुख्यतयोदितः। शब्दैः** इति। इत्यादीत्यनेन समन्वितैतत्पादीयाव्याक्तादिकृत्स्नशब्दपरामर्शः। तथा च इत्यादिभिः अव्यक्तशब्दप्रभृतिभिः अन्यत्रैव प्रसिद्धैरेको जनार्दनो मुख्यतयोदित इति।

अध्यायार्थमुपसंहरति। **अतोऽनन्तगुणो यच्छब्दा योगवृत्तय** इति। अतः अन्यत्रोभयत्रान्यत्रैव च प्रसिद्धैरशेषशब्दैः वाच्यत्वात् जनार्दनोऽनन्तगुण इति। तावता कथमनन्तगुण इत्यत उक्तम् - **यच्छब्दा** इति। यद्यस्माद्योगेन अवयवार्थसम्बन्धेन वृत्तिः येषां त इति योगवृत्तयो यौगिकाः शब्दाः तस्मादित्यर्थः।

**सङ्क्षेपभाष्यविवृतौ राघवेन्द्रेण भिक्षुणा ।**
**कृतायां तत्वमञ्जर्यां समाप्तोऽध्याय आदिमः ।**

**इति श्रीमदानन्दतीर्थभगवपादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य टीकायां राघवेन्द्रयतिकृतायां तत्वमञ्जर्यां प्रथमाध्यायस्य चतुर्थःपादः ।।४।।** इति प्रथमाध्यायः समाप्तः ।

**आनन्दमाला** – मूलकारणभूतस्यावान्तरकारणत्वाभावात् तच्छब्दैर्नोच्यत इत्यत आह – "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः" (१-४-१५) इति सूत्रम् । **अवान्तरकारणं च** इति। आकाशादिषु संस्थितः परमात्मैवान्तरं च कारणम् । वाय्वादीनामिति शेषः। तथैव श्रुत्युक्तेः **।।४-५।।**

पुरुषोत्तमस्य स्त्रीशब्दवाच्यत्वं सर्वथा नास्तीत्यत आह – "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" (१-४-२४) इत्यधिकरणम् **प्रकृतिः** इति। प्रकृतिर्युवतिरित्यादिस्त्रीशब्दैरपि विष्णुरेव मुख्यत उच्यते। अधिकरणसूत्रितानेकयुक्तिप्रवाहसामर्थ्यात् । प्रतिज्ञादृष्टान्तानुपरोधः, अभिध्याया प्रकृतित्वस्वरूपत्वोपदेशः, साक्षादेव प्रकृतिपुरुषत्वाम्नानम् , प्रकर्षेण करोतीति गुणयोगः, अव्यवधानेनोत्पत्तिद्वारत्वमित्याद्या ह्यधिकरणोक्ता युक्तयः **।।६।।**

"एतेन सर्वे व्याख्याताः व्याख्याताः" (१-४-२९)इति सूत्रम् **शून्यमेव च** इति। अभावधर्मिषु प्रसिद्धैः शून्यादिशब्दैरपि हरिरेव प्रधानवाच्यः। भावार्थस्याप्यभावधर्मसम्भवात्, न च तावता धर्मिण एव शून्यत्वं शङ्क्यमित्यभिप्रायेण पूर्वोक्तलक्षणैः सुसिद्धं भावत्वमेव एवशब्दादवधारयति। चवैतुह्यदिभिर्निपातैश्च वाच्य इति च चशब्दार्थः। ईश्वरस्य त्वीशितव्यसाहित्यं चकारो वक्ति, वैशब्दः श्रुतिप्रसिद्धत्वमित्यादि **।।७।।**

पादार्थं निगमयति – **इत्याद्यन्यत्रनियतैरपि मुख्यतयोदितः । शब्दैः** इति। इत्युक्ता अव्यक्तादिशून्यान्ताः शब्दा आदयो येषां त इत्यादयः। इत्यादिभिर्जनार्दनादन्यत्र जगति नियतैः साक्षादेव वाचका इति लोकतो निश्चितैरपि तत्तच्छब्दैः स भगवानेक एव मुख्यतयोदितः। तदेतत् पादोक्तयुक्तिसमुदायेन निश्चीयते।।

सौत्रस्य द्विर्वचनस्य कृत्यं द्योतयन्नध्यायार्थमपि निगमयति – **अतोऽनन्तगुणो यच्छब्दा योगवृत्तयः** इति। अध्यायोक्तयुक्तिभिः परममुख्यार्थो नारायणः सर्वशब्दानामिति यत्, अतोऽनन्तगुणगणपरिपूर्णमहार्णवः स भगवानिति निश्चीयते। तावता तन्निश्चयः कुत इति चेत् , अनन्तानामपि शब्दराशीनां तत्तद्गुणयोगादेव तस्मिन् वर्तमानत्वात् । "गुणाः श्रुता" (सौपर्ण) इत्यादिश्रुतेः ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदसकृतावानन्दमालायां प्रथमाध्यायस्य चतुर्थः पादः ।। प्रथमाध्यायः समाप्तः ।।**

**नृसिंहतीर्थ** – अवान्तरकारणवाचकाकाशादिशब्दसमन्वयार्थस्य चतुर्थाधिकरणस्य तात्पर्यम् **अवान्तरकारणं च** इति । चशब्दः पूर्वोत्तरसमुच्चयार्थः। कार्यत्वे सति कारणत्वं अवान्तरकारणत्वम् । आकाशाद्यन्तर्गतस्य भगवतः आकाशादिकारणत्वाद्वाय्वादिकारणत्वाच्च अवान्तरकारणत्वम् । अत्र पूर्वसमन्वितशब्दस्यैव समान्वीयमानत्वेन पृथक् तात्पर्यं न वक्तव्यम् । तथाप्याकाशाद्यनन्तशब्दानां समन्वीयमानत्वेन तावन्मात्रत्वाभावेन पृथक् तात्पर्यकथनं युक्तम् । अत एव सूत्रे आकाशादिति निर्देशः। भाष्येऽपि "अवान्तरं कारणं च" इति। अन्यथा आकाश इत्येव उभयत्र निर्देशः स्यादिति।

ननु समाकर्षादित्यधिकरणस्य पृथक्तात्पर्यं कुतो नोक्तम् । न च न तदधिकरणान्तरमिति वाच्यम्। टीकायां पृथगधिकरणतया व्याख्याततत्वादिति चेत् । सत्यं । अस्यत्र मतभेदः। समाकर्षादिति सूत्राष्टकं पूर्वाधिकरणशेष एव नाधिकणान्तरमित्येकं मतम् । अधिकरणान्तरमित्यपरं मतम् । आद्यं तत्वप्रदीपिकाभिप्रेतम् । तन्मूलं चानुव्याख्यानम् । तत्र चैतत्पादीयाधि-करणोपाधिपूर्वपक्षसिद्धान्त युक्तिसंग्रहदशायां एतदधिकरणोपाध्यादेः पृथगनुक्तेः। द्वितीयं टीकाकृतोऽभिप्रेतम् । पूर्वमीमांसायां हेतुदर्शनादित्यस्य विरोधादिकरणशेषत्वेऽपि पृथग्न्याय-सूचकत्वेनाधिकरणान्तरत्ववत् । अस्यापि तदस्तीति सूचयितुं टीकाकृताधिकरणान्तरं कृतम् ।

षष्टाधिकरणस्य तात्पर्यं **प्रकृतिः** इति। अन्यत्रैव प्रसिद्धिनिषेधार्थकशून्यादिशब्दसमन्वयाय तथा योजितम् । आद्यन्ते पृथक्तात्पर्यानुक्तिर्न दोषः। पूर्वाधिकरणशेषत्वादेव द्वितीयेऽपि न दोषः। पूर्वोत्तराधिकणेषु समन्वितानामेव सर्वशब्दानां अत्र समन्वीयमानत्वेन स्वतन्त्रशब्द-समन्वयार्थत्वाभावादिति। अन्यत्रैवप्रसिद्धप्रकृत्यादिस्त्रीलिंगशब्द समन्वयार्थस्य सप्तमाधिकरणस्य तात्पर्यं **शून्यमेव च** इति। एवशब्दस्य उत्तरत्रान्वयः। चशब्दः पूर्वोक्तसमुच्चयार्थः। ब्रह्मणो निषेधरूपत्वाभावच्छून्यादिशब्दवाच्यत्वं असम्भावितमित्याशंकापरिहाराय "शमूनंकुरुते" इति व्युत्पत्त्या ब्रह्म शून्यमेव शून्यशब्दवाच्यमेवेति वा सम्बन्धः।

चतुर्थपादार्थं उपसंहरति **इत्यादि** इति। इतिशब्दः पूर्वप्रकृतपरामर्शकः। इति पूर्वोक्ताः अव्यक्तादिशब्दाः आदयो एषां ते तथा। इत्यादयश्च ते अन्यत्रनियताश्च अन्यवस्तुषु प्रसिद्धाश्च श्रुतिलिंगादिभिरिति शेषः। तैरपीत्यपिशब्दो विरोधस्फोरकः। मानशतकैरिति शेषः। जनार्दन इत्यनुवर्तते। तेनैवशब्दस्य सम्बन्धः। तथा च श्रुतिलिंगादिभिरन्यत्र प्रसिद्धैरपि नामलिंगात्म-कैरव्यक्तादिशब्दैः जनार्दन एव मुख्यतयोदित इत्यर्थः।

एवमस्मिन्नध्याये अशेषशब्दसमन्वयकरणस्य फलमाह **अतोऽनन्तगुण इति**। यस्मात् स्वरवर्णपदवाक्यात्मकाशेषशब्दवाच्यो अनन्तगुण इत्यर्थः। ननु सर्वेषां शब्दानां परमात्मनि केवलरूढत्वे पर्यायत्वापत्त्या तत्प्रवृत्तिनिमित्तस्यैकस्यैव समन्वयार्थस्य सिद्धेः कथमनन्तगुणत्वमित्यत

आह **यत्** इति। **यत्** यस्मात् **शब्दाः** स्वरवर्णपदात्मकाः **योगवृत्तयः** योगवृत्तिमन्तो अनन्तगुणा इति अपूर्वेण सम्बन्धः।

**सत्यानन्दार्यपुत्रोर्यः कोनेरार्यसुशिक्षितः।**
**नरसिंहोऽणुभाष्यस्य तेन भावप्रकाशकम् ।।**

**कृतं समाप्तो ह्यध्यायः प्रथमस्तत्र तेन च ।**
**यत्पुण्यं भावि तत्सर्वं अवाप्नोतु गुरुर्मम ।।**

**इति श्री अणुभाष्यभावप्रकाशिकायां प्रथमोऽध्यायः।**

**श्रीनिवासतीर्थीया–** कारणत्वेनेत्यधिकरणार्थः **अवान्तरं कारणं च** इति। कार्यत्वे सति कारणमित्यर्थः। समाकर्षाधिकरणस्य स्वपक्षे बाधकमात्रपरिहारार्थत्वेनान्तर्भेदाधिकरणार्थत्वात् तदर्थो नोक्तः। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यधिकरणार्थः **प्रकृतिश्च** इति। तदुपलक्षिताशेष–स्त्रीवाचकशब्दवाच्य इत्यर्थः। अन्यमेवेति निषेधार्थकाशेषशब्दवाच्यः । पादार्थमुपसंहरति। इत्यादिभिः तत्तदुपलक्षिततत्तत्प्रकरणगततत्तत्समानव्यापकैः अन्यत्र नियतैः श्रुतिलिंगादिनान्यत्रैव प्रसिद्धैरपि शब्दैर्नामात्मकलिंगात्मकैरपि मुख्यतया परममुख्यया वृत्त्या एको जनार्दन इत्यनुवर्तते। उदितः प्रतिपाद्य इत्यर्थः। उदितः स्वातन्त्र्यादिहेतुभिर्वाच्यतया सूत्रकृता प्रतिपादित इति। अध्यायार्थमुपसंहरति। **अतोऽनन्तगुणो** इति। यद्यस्माद् शब्दा योगवृत्तयः महायोगयुक्ताः अतो महायोगवत्या अखिलशब्दवाच्यत्वादनन्तगुण इत्यर्थः ।

**।। इत्यणुभाष्यविवरणे श्रीमद्यदुपत्याचार्यपूज्यचरणसेवी श्रीनिवासकृतप्रथमाध्यायस्य चतुर्थः पादः ।।**

**।। श्रीकृष्णार्पणमस्तु ।।**

**छलारी –**

## ओं कारणत्वेन च आकाशादिषु यथाव्यपदिष्टोक्तेः ओं

कारणत्वेन कार्यत्वेन च आकाशादिशब्दवाच्यो विष्णुरेव। तर्हि कार्यकारणभावविरोधः इत्यत उक्तं – आकाशादिष्विति। स्थितत्वादिति शेषः। "य आकाशे तिष्ठन् यो वायौ तिष्ठन्" इत्यादिना आकाशादिषु स्थितत्वोक्तेः। तत्रापि विष्णुः कुतः इत्यत उक्तं – यथा व्यपदिष्टोक्तेरिति। यथा – येन प्रकारेण अविदितत्वादिरूपेण, "स योतोश्रुत" इत्यादौ व्यपदिष्टः उक्तः। तादृशस्यैवाकाशादिषु "यमाकाशो न वेद" इत्यादिना उक्तत्वादिति सूत्रार्थः।

अत्र "आत्मन आकाशस्सम्भूतः आकाशाद्वायु, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योन्नम्" इति श्रुत्युक्तावान्तरकारणाकाशादिशब्दवाच्यो न विष्णुः।

आकाशादीनामात्मादिकार्यत्वश्रवणात् । परमात्मनश्च कार्यत्वायोगात् । "न जायते म्रियते" इत्यादिश्रुतेः इति प्राप्ते -

न केवलं मूलकारणवाचकात्मशब्दवाच्यो हरिः। अपि तु कार्यत्वे सति कारणं अवान्तरकारणं, तद्वाचकाकाशादिशब्दवाच्यश्च। न च कार्यकारणभावविरोधः। आकाशाद्युत्पत्तौ आकाशाद्यन्तर्गतत्वेन भगवतोभिव्यक्त्या कार्यत्वस्य वाय्वादिगतरूपाभिव्यक्तिहेतुत्वेन कारणत्वस्य चोपपत्तेः इति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **अवान्तरं कारणं** च इति।

न केवलं मूलकारणा.....चकात्मशब्दवाच्यो विष्णुः अपि तु अवान्तरकारणा-काशादिशब्दवाच्यश्च इत्यर्थः। यद्यप्यत्र पूर्वं समन्वितस्यैव आकाशशब्दस्य समन्वीयमानत्वेन पृथक् तात्पर्यं न वक्तव्यम् । तथा आकाशाद्यन्नान्तशब्दानां समन्वीयमानत्वेन तावन्मात्राभावेन पृथक्तात्पर्यकथनं युक्तमेव। अत एव सूत्रे कारणत्वेन चाकाशादिष्विति निर्देशः। भाष्येप्यवान्तरकारणत्वेनेति। अन्यथा आकाश इत्येवोभयत्र निर्देशः स्यादिति।।४।।

**ओं प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ओं**

न केवलं पुल्लिङ्गशब्दवाच्यः विष्णुः किन्तु प्रकृतिश्च-स्त्रीलिङ्गप्रकृत्यादिशब्दवाच्यश्च । कुतः ? प्रतिज्ञादृष्टान्तानुपरोधात् । तथा सत्येव "हन्तैतमेव" इति भगवतः सर्वशब्दवाच्यताप्रतिज्ञायाः "यथा नद्यः" इति नदीसमुद्रदृष्टान्तस्योपपत्तेः। अन्यथा तदनुपपत्तेरिति सूत्रार्थः।

अत्र "एषा ह्येव प्रकृतिरविकृतिः" । "या प्राणेन संविशन्ति, अदितिर्देवतामयि" इत्यादिश्रुत्युक्तप्रकृत्यादिशब्दाः न विष्णुवाचकाः। प्रकृत्यादिशब्दानां स्त्रीलिङ्गत्वात् । परमपुरुषे च तदयोगादिति प्राप्ते -

हरिरेव प्रकृत्यादिशब्दवाच्यः। "हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति" इति श्रुतौ विष्णोः सर्वशब्दवाच्यत्वं प्रतिज्ञाय "तत्रैव यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्ति। एवमेवैतानि नामानि" इति नदीसमुद्रदृष्टान्ताभिधानात् । अन्यथा प्रतिज्ञादृष्टान्तोपरोधात् । न च स्त्रीशब्दानुपपत्तिः। भगवतः स्त्रीरूपस्यापि सत्त्वात् । न चात्र मानाभावः। "एष स्त्री, एष पुरुषः, एष प्रकृतिः" इति श्रुतेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **प्रकृतिः** इति। प्रकृत्यादिस्त्रीशब्दवाच्य इत्यर्थः।।५।।

## ओं एतेन सर्वे व्याख्याताः व्याख्याताः ओं

एतेन - तदधीनत्वादिप्रागुक्तयुक्तिसमुदायेन, शून्यादिसर्वशब्दाः व्याख्याताः-भगवन्मुख्य-वाचकतया प्रतिपादिताः, द्विरुक्तिःउक्तसाधारणार्थेति सूत्रार्थः।

अत्र "असदेवेदमग्र आसीत्" इत्यादिश्रुत्युक्ताः असदादिशब्दाः न विष्णुवाचकाः। तेषां निषिद्धमुखवाचित्वात् । परमात्मनश्च सद्रूपत्वेन तदयोगादिति प्राप्ते -

परमात्मैव सदादिशब्दवाच्यः। सर्वशब्दवाच्यत्वात् । न चोक्तानुपपत्तिः। निषेधमुख-वेद्यत्वाभावेऽपि "एष ह्येव शून्यः, एष ह्येव तुच्छः, एष ह्येवाव्यक्तोऽदृश्यः" इत्यादिश्रुत्या

शमूनं कुरुते विष्णुरदृश्यस्सन् परः स्वयम्।<br>तस्माच्छून्य इति प्रोक्तस्तोदनातुच्छ उच्यते॥

इत्यादिस्मृत्या च तच्छब्दवाच्यत्वोक्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **शून्यमेव च** इति। चशब्दः पूर्वोक्तसमुच्चायकः। एवकारोऽयोग-व्यवच्छेदकः। जनार्दनः शून्यादिशब्दवाच्य एवेत्यर्थः। अथवा एवकारो अन्ययोगव्यवच्छेदकः। स च भिन्नक्रमः, जनार्दन एव शून्यादिसर्वशब्दवाच्यः इत्यर्थः। एतत्पादार्थमुपसंहरति - **इत्यादि** इति । इति शब्दः पूर्वप्रकृतपरामर्शकः। इति पूर्वोक्ताः अव्यक्तादिशब्दाः आदयः येषां ते तथा। इत्यादयश्च ते अन्यत्रनियताश्च, अन्यत्रप्रसिद्धाश्च श्रुतिलिङ्गादिभिरिति शेषः। नामलिङ्गात्मकैरिति च शेषः। जनार्दन एव इत्यनुवर्तते। तथा च श्रुतिलिङ्गादिभिः अन्यत्रप्रसिद्धैरपि नामलिङ्गात्मकैः अव्यक्तादिशब्दैः जनार्दन एव मुख्यतया उदित इत्यर्थः। एतस्मिन्नध्याये अशेषशब्द-समन्वयकरणफलमाह - **अत** इति। यस्मात्स्वरवर्णपदवाक्यात्मकाशेषशब्दवाच्यः। अतः अनन्तगुण इत्यर्थः। ननु सर्वेषां शब्दानां परमात्मनि केवलरूढत्वे पर्यायत्वापत्या सर्वेषां शब्दानां प्रवृत्तिनिमित्तस्य एकस्यैव गुणस्य सिद्धेः कथमनन्तगुणत्वमित्यत आह - **यत्** इति। यस्माच्छब्दाः स्वरवर्णपदवाक्यात्मकाः योगवृत्तयः योगवृत्तिमन्तः यौगिका इत्यर्थः। यद्वा योगेनावयवार्थसम्बन्धेन वृत्तिः अवस्थितिः येषान्ते योगवृत्तयः यौगिका इत्यर्थः। अतोऽनन्तगुणः इत्यनुषङ्गः ॥६॥

**मदाचार्यमनोधाममध्वमानसमञ्चके।<br>शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां प्रथमाध्यायस्य चतुर्थः पादः॥ ॥ प्रथमाध्यायः सम्पूर्णः॥ ॥श्रीकृष्णार्पणमस्तु॥**

**नारायणाचार्य-** नन्वेतत्कारणत्वं विष्णोरस्तु तथापि तच्छब्दवाच्यत्वं कुत इति चेन्न । "नामानि सर्वाणि यं" इत्युक्त्या सर्वशब्दसमन्वयसिद्धेस्तत्र प्रसक्तविरोधपरिहाराय सूत्रम् । चरितार्थं तत्र युक्तिविशेषकथनं त्वधिकोलाभः । सर्वशब्दानां परमात्मवाचकत्वेऽप्यन्यत्र व्यवहारमुपपादायितुं सूत्रं **ओं समाकर्षात्** इति । परमात्मवाचकाः शब्दा अन्यत्राल्पस्वतन्त्रप्रवृत्तिनिमित्तमपेक्ष्य समाकृष्य व्यवह्रियन्ते ।

परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि ।
व्यवह्रियन्ते सततं लोकवेदानुसारतः ।। इति पाद्मोक्तेः ।

कथं तर्हि तेषां शब्दानां जगत्येव प्रसिद्धिरित्यतः सूत्रम् **जगद्वाचित्वात्** इति । लोकव्यवहारः प्रायेण जगति यथा न तथा परमात्मनि अतो जगति प्रसिद्धिश्च युक्ता । उक्तमाक्षिप्य समादधत्सूत्रं **ओं जीवमुख्यप्राणलिंगादिति चेत्तद्व्याख्यातम्** । सर्वपदार्थानां परमात्माधीनत्वेन यदि तत्तच्छब्दवाच्यत्वं स्यात्तर्हि "अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति" "वायुना हि सर्वे लोका नेनीयन्त" (छां.उ.६-११-२)इत्यादि श्रुतेः । जगन्नियामकत्वस्य जीवमुख्य-प्राणालिंगत्वावगमात् तयोरपि सर्वशब्दवाच्यत्वापत्तिरिति चेन्न । उपासात्रैविध्यादाश्रितत्वादिह तद्योगादिति तस्य व्याख्यातत्वात् ।

यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ।। (भ.गी.१०-४१) इति वचनात् ।

जीवप्राणांतर्गतस्यैव हरेस्तन्नियामकत्वं मुख्यतो मुख्यवाच्यत्वं तस्यैवेति भावः । ननु ज्योतिष्टोमादिशब्दानां कर्माभिधायिनां न भगवद्वाचकत्वम् । कर्मण्येव प्रसिद्धेर्व्यवहाराच्च । न च समाकर्षेण व्यवहारः । भगवज्ज्ञानमात्रेणैव पुरुषार्थसिद्धेः कर्मव्यवहारस्य प्रयोजनाभावात् । अतो मुख्यतः कर्मवाचकत्वमेवेत्याशङ्कापरिहाराय सूत्रं **ओं अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके** । परमात्मज्ञानार्थं कर्मादिकमपि वेदो वदतीति जैमिनिः(मु.उ.१-१-३,४) "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच द्वे विद्ये वेदितव्ये" "कथं नु भगवः स आदेशो भवतीति । यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं स्यात्" (छा.उ.६-१-३)इति प्रश्नव्याख्यानाभ्याम् । एवमपि चैके शाखिनः पठन्ति "यस्तं न वेद किमृचा करिष्यति" (ऋ.सं.१-१६४-३९)इति । यस्तत्परमात्माख्यमक्षरं न वेद स कर्मादिविषयया ऋचा किं करिष्यतीत्यर्थः । ननु न परमात्मज्ञानार्थमन्यद्वक्तव्यम् । अन्यत्कर्मादिकमनुक्त्वापि परमात्ममात्रकथनेन तज्ज्ञानसम्भवात् । खंडपदानामन्यवाचकत्वेन व्युत्पत्युपपत्तेः । अतोऽन्यकथने प्रयोजनाभावात् न तत्र समाकर्ष इत्यतः सूत्रं **ओं वाक्यान्वयात्** । परमात्मनोऽन्यस्यापि वाच्यत्वाभ्युपगमे वाक्यस्यापि परमात्मन्यान्वयो युज्यते । अन्यथा "यतो

वा इमानि'' (तै.उ.३-१)इत्यादिवाक्यस्थपदानां परमात्ममात्रपरत्वे तस्य तत्संसर्गरूपवाक्यार्थत्वं न स्यात् । ततश्च जगत्कर्तृत्वादिगुणान्वयो न स्यात्। ''कः छन्दसां'' इति श्रुतेरल्पाधिकारिणां सर्वपदयौगिकार्थज्ञानासम्भवात् । जिज्ञासावैमुख्यं च स्यात् ।

कर्मज्ञानस्य कथं भगवज्ज्ञानार्थत्वमित्यतः सूत्रं **ओं प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः**। ''नान्यः पन्था अयनाय विद्यते'' (तै.आ.३-१२-७) इति प्रतिज्ञायाः हेतुत्वेन सविस्तरं कर्मादिकमुक्त्वा तस्यानित्यफलत्वलिंगमुच्यते यस्मात्कर्मादिकमनित्यफलकं ''कर्मचितो लोकः क्षीयते। नास्त्यकृतः कृतेन'' इत्यादेस्तस्माज्ज्ञानमेव मोक्षहेतुरिति उपपादनार्थं कर्माप्युच्यत इत्यर्थः।

प्रकारान्तरेण कर्मादिवचनस्य ज्ञानोपयोगं प्रतिपादयत्सूत्रं **ओं उत्क्रमिष्यत एवं भावादित्यौडुलोमिः**। उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यम् । ''कर्मणा ज्ञानमातनोति'' ''ज्ञानेनामृती भवति'' इति मोक्षसाधनज्ञानसाधनत्वेन कर्मणोऽप्यपेक्षितत्वाद्वेदः कर्मादिकपि वदतीत्यर्थः। कर्मणां फलश्रुतिस्तु रोचनार्थेति भावः।

रीत्यन्तरेणाप्युपयोगं प्रदर्शयत्सूत्रं **ओं अवस्थितेरिति काशकृत्स्नः**। सर्वं परमात्मन्यवस्थितमिति ज्ञानं मोक्षसाधनम् । तत्र सर्वांतःपातिकर्मपदार्थज्ञापनार्थं कर्मोच्यत इति वा।

कृष्णद्वैपायनमतादेकदेशविदः परे । वदन्ति ते यथाज्ञानं न विरोधः कथंचन।

इति स्कान्दोक्तेर्न मतानां परस्परविरोधः किन्तु सूत्रकारस्यैव समाधानप्रकाराः सर्वेऽपि । तथापि गुरुणा श्लाघिताः शिष्याः प्रथितयशसो भवन्तीति जैमिन्यादिनामनिर्देशः कृत इति भावः। एतत्तात्पर्यमप्याह **अवान्तरं कारणं च प्रकृतिः** इति । प्रकृष्टा वेदोक्ता या कृतिः ज्योतिष्टोमादिकर्मज्ञानमपि वेदे अवान्तरकारणत्वेनोच्यते। ज्ञानमेव प्रधानकारणं मोक्षस्य। कर्म तु तत्साधनत्वादमुख्यं कारणमिति ज्ञापयितुं तदप्युच्यते। तेनाश्मरथ्यमतमुक्तं भवति। चशब्दात् मतान्तरमपि समुच्चिनोति।

स्त्रीशब्दा अपि तस्मिन्नेवेत्येतदर्थप्रतिपादकं सूत्रं **ओं प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** । ''हन्तैतमेव पुरुषं सर्वाणि नामान्यभिसंवदन्ति यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिसंविशन्ति'' इति प्रतिज्ञादृष्टान्तानुपरोधात्प्रकृतिशब्दवाच्यः स एवेत्यर्थः।

युक्त्यन्तरेण हरेः प्रकृतिशब्दवाच्यतां प्रतिपादयत्सूत्रं **ओं अभिध्योपदेशाच्च**। ''महामायेत्य-विद्येति नियतिर्मोहनीति च । प्रकृतिर्वासनेत्येव तवेच्छानन्त कथ्यते'' इति वचनात्तदभिध्यैव प्रकृतिशब्दवाच्या तदिच्छारूपाभिध्या च तदात्मकैव । ''सोभिध्या स जूतिः स प्रज्ञा स आनन्द'' इति श्रुतेः। ननु तथापि नेश्वरस्य प्रकृतिशब्दवाच्यत्वम् । विशिष्य तथाविधोक्तेरभावात् ''सर्वाणि नामानि इत्यत्र सर्वशब्दस्य तु संकोचसम्भवात् । अतीतसूत्रे इच्छाद्वारा तदुक्तावपि

साक्षादनुक्तत्वादित्यतः सूत्रं **ओं साक्षाच्चोभयाम्नानात्** । न केवलमिच्छाद्वारा तच्छब्दवाच्या किन्तु ''**एषस्त्र्येष** पुरुष एषः प्रकृतिरेष आत्मैव ब्रह्म'' इत्यादि पैंगिश्रुतौ साक्षादेव प्रकृति-पुरुषात्वाम्नानादपि। न चैवं श्रुत्या प्रकृतिशब्दवाच्यत्वोक्तावपि निमित्ताभावात्कथं तद्युज्यते । अन्यथा संकेतमात्रत्वप्रसंगादित्यः सूत्रं **ओं आत्मकृतेः परिणामात्**। प्रकर्षेण करोतीति योगाच्च । प्रकृतावनुप्रविश्य तत्परिणामकर्तृत्वात् । तत्र स्थित्वाऽऽत्मनो बहुधा करणाच्च। ''अथ हैष आत्मा प्रकृतिमनुप्रविश्य आत्मानं बहुधा चकार। तस्मात्प्रकृतिस्तस्मात्प्रकृतिरित्याचक्षते'' इति भाल्लवेयश्रुतेः।

अविकारोऽपि परमो प्रकृतिं तु विकारिणीम् ।
अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते ।। इति (नारदीय)स्मृतेश्च।

ननु तथापि तस्य परमपुरुषस्य स्त्रीलिंगप्रकृतिशब्दवाच्यत्वमयुक्तमित्यतः सूत्रं **ओं योनिश्च हि गीयते**। अव्यवधानेनोत्पत्तिद्वारत्वं च प्रकृतित्वम् । तच्चास्यैव हि गीयते। ''यद्भूतयोनिं परिपश्यन्ति धीरा'' (मु.उ.१-१-६)इति।

व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते।
सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः।।
उभयात्मवस्तुसूतित्वाद्वासुदेवः परः पुमान् ।
प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयते।। इति ब्रह्माण्डे।

एतत्तात्पर्यमाह प्रकृतिः इति । प्रकृतिरित्याद्यैरन्यत्रैव प्रसिद्धैः स्त्रीवाचकैः शब्दैरपि मुख्यतयोदित इत्यर्थः। कीदृशः प्रकृतिः प्रकृष्टाकृतिर्यस्मादिति प्रकृतिः। तच्छब्दप्रवृत्तिनिमित्तवानित्यर्थः। तथापि शून्यादिशब्दानां परमात्मवाचित्वाभावात्समन्वयानुपपत्तौ प्राप्तायां सूत्रं **एतेन सर्वे व्याख्याता व्याख्याता** इति । एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन सर्वे शून्यादिशब्दा अपि व्याख्याताः। एतत्तात्पर्यमाह **शून्यमेव च** इति। शून्यं च भगवानेवेति सम्बन्धः। ''एष ह्येव शून्यः एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्च'' इति महोपनिषदि।

शमूनं कुरुते विष्णुरदृश्यः सन्परः स्वयम् ।
तस्माच्छून्यमितिप्रोक्तस्तोदनात्तुच्छ उच्यते।।

नैष भावयितुं योग्य केनचित्पुरुषोत्तम : ।
अतोऽभावं वदन्त्येनं नाश्यत्वान्नाश इत्यपि (उच्यते)।।

सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता।
अन्येषु व्यवहारार्थमिष्यते व्यवहर्तृभिः।।

इति महाकौर्मे उक्तत्वादिति भावः। शमूनमिति स्वसुखादन्यसुखमल्पं करोतीत्यर्थः। पादार्थमुपसंहरति **इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः। शब्दैः** इति। अन्यत्र नियतैरन्यत्रैव प्रसिद्धैः। समन्वयाध्यायमुपसंहरति **अतोऽनन्तगुण** इति। यत एवं सर्वशब्दवाच्योऽत इति अर्थः। ननु किं केन संगतं सर्वशब्दवाच्यत्वे सर्वगुणत्वं कथं प्राप्तमत आह **यच्छब्दा योगवृत्तयः**। यद्यस्मात्कारणाद्भगवति प्रवर्त्तमानाः शब्दाः योगवृत्तयः योगेनावयववृत्त्या शक्त्या प्रवर्तन्ते न तु डित्थादिशब्दवत्सांकेतिका एव अतस्तच्छब्दप्रवृत्तिनिमित्तगुणकर्मादिलाभादनन्तगुणो विष्णुरिति मुमुक्षुभिः स एव जिज्ञास्य इति सिद्धमिति भावः।

**।। इति श्री नारायणकृताणुभाष्यप्रपंचने समाप्तः प्रथमोध्यायः ।।**

**मळगी – अवान्तरं कारणं च** निमित्तकारणभूतः। चशब्दः समुच्चायकः। ''हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिसंविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिसंविशन्ति'' इत्यादेः। ''अथैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार तस्मात्प्रकृतिस्तस्मात्प्रकृतिरित्याक्षते'' इति। ''अविकारोऽपि परमः प्रकतिं तु विकारिणीम्। अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते'' इति। ''प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयत'' इति भाल्लवेयश्रुतिनारदीयब्रह्मांडवचनेभ्यः प्रकृत्यादिस्त्रीलिंगशब्दैः स्त्रीरूपत्वेन वाच्यः। शून्यं ''शमूनं कुरुते यस्माददृश्यः सन्परः स्वयम्। तस्माच्छून्य इति प्रोक्त'' इत्युक्तेः। स्वसुखापेक्षयान्यसुखमल्पं करोतीति हेतोः शून्यशब्दवाच्यः। यद्वा ''सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधीयते'' इति महाकौर्म्योक्त्या शून्यादीनामपि विष्णवधीनत्वाद्विष्णुः शून्यादिशब्दवाच्य इति। **इत्यादि** इत्यादिभिः। **अन्यत्र** भगवदन्यवस्तुष्वेव। **नियतैः** नियमेन प्रसिद्धैः। **शब्दैरपि मुख्यतया** परममुख्यत्वेन। **उदितः** उक्तः। अध्यायार्थ उपसंहृतः। **यत्** यस्मात्कारणात्। **शब्दाः योगवृत्तयः** विद्वद्रूढिमहायोगवृत्तिभ्यां भगवद्गुणप्रतिपादका अतस्तस्माद्विष्णुः श्री नारायणः अनन्तगुणः। अपरिमितगुणपूर्ण इति सिद्धम्।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां प्रथमाध्यायस्य चतुर्थः पादः ।।**

**लिंघेरी –** पुनः कीदृशः? अवान्तरं कारणं च निमित्तकारणभूतः। चशब्दः समुच्चयार्थः। प्रकृतिरितिशून्यमिति। अन्यत्रनियतैः शब्दैरपि मुख्यतयैव मुख्यत्वेनोदितः। अध्यायार्थमुपसंहरति **अत** इति। अतस्तत्तच्छब्दवाच्यत्वाद्विष्णुः अनन्तगुणः **यत्** यस्मात्कारणात् वैदिकाः अनन्तशब्दाः विद्वद्रूढिमहायोगवृत्तिभ्यां भगवद्वाचकतया तत्तच्छब्दप्रवृत्तिनिमित्तानन्तगुणपरिपूर्णो विष्णुः इति सिद्धम् ।।८।।

**।। इति श्रीमदणुभाष्यव्याख्याने लिंघेरीश्रीनिवासविरचिते प्रथमोऽध्यायः ।।**

**नारायणपण्डित–** अवान्तरं कारणं कार्यत्वे सति कारणं अवान्तरं कारणम् । तद्वाचकाकाशादिशब्दवाच्यश्चेति कारणत्वेन चाकाशादिषु तथा व्यपदिष्टोक्तेरिति नयार्थ उक्तः।।४।। समाकर्षादित्यधिकरणस्य स्वपक्षबाधकपरिहारार्थत्वेन अन्तर्भेदाधिकरणत्वात्तदर्थानुक्तिः। प्रकृतिः प्रकृतिशब्दवाच्यः। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति नयार्थः।।५।। शून्यमेव च शूमूनं कुरुत इति शून्यशब्दवाच्यः। एतेन सर्वे व्याख्याता व्याख्याता इत्यधिकरणार्थ उक्तः ।।७।। इत्यादि इत्यादिभिः अव्यक्तादिभिः तथा इत्यादिभिः तत्तदुपलक्षिततत्तत्प्रकरणगततत्तज्जातीयतत्तत्समानन्यायकैः अन्यत्र नियतैः रूढ्यादिना अन्यत्रैव प्रसिद्धैर्नामात्मकैरपि अन्यत्रोभयत्रप्रसिद्धैरपि मुख्यतया परममुख्यतया परममुख्यया वृत्या एक एव जनार्दनो मोक्षप्रदो हरिरुदितः। स्वातन्त्र्यादि-हेतुभिर्वाच्यतया प्रतिपादितः सूत्रकृता। यद् यस्मात् शब्दयोगवृत्तयः महायोगवृत्तयः महायोगयुक्ताः अतो अखिलशब्दवाच्यत्वानन्तगुणो अनन्तधर्मो हरिरित्यर्थः। **अधिकरणानि ७। सूत्राणि २९।**

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यटीकायां प्रथमाध्यायस्य चतुर्थः पादः। इति प्रथमोध्यायः।।**

**गूढकर्तृक – अवान्तरं कारणं** कार्यत्वे सति कारणम् । आकाशादिनियमाकत्वेनान्तर्गतो हरिरेव कारणत्वेन कार्यत्वेन च आकाशादिशब्दैरुच्यते। रूपान्तरापेक्षया स्वस्यैव स्वाभिव्यक्तिहेतुत्वेन कारणकार्यभावो न विरुद्धः। एतेन कारणत्वेनेत्यधिकरणार्थः। समाकर्षादि-त्यधिकरणस्य स्वपक्षबाधकपरिहारार्थत्वेन अन्तर्भेदाधिकरणत्वादर्थानुक्तिः। प्रकृतिश्चेति "सैषा प्रकृतिः" इत्याद्युक्तं प्रकृतिश्च हरिरेव। सर्वस्त्रीपुंसशब्दग्रहणार्थश्च। अनेन प्रकृत्यधिकरणार्थः। शून्यमेव चेत्यन्तिमाधिकरणार्थः। "एष ह्येव शून्य एष ह्येव तुच्छ" इत्यादि श्रुतेः। "शमूनं कुरुते विष्णु न दृश्यः सन् परः स्वयम् । तस्माच्छून्य इति प्रोक्तः" इत्यादिस्मृतेरत्र शून्यो विष्णुर्नेतरः। **इत्यादि** इत्यादिभिः अव्यक्तादिभिः। तथा इत्यादिभिः तत्तदुपलक्षिततत्तत्प्रकरण-गततत्तज्जातीयतत्तत्समानन्यायकैः अन्यत्र नियतैः रूढ्यादिनाऽन्यत्रैव प्रसिद्धैः शब्दैः नामाद्यात्मकैरपि अन्यत्रोभयत्र प्रसिद्धैरपि मुख्यतया परममुख्यवृत्त्या एको जनार्दनो मोक्षप्रदो हरिरुदितः। स्वातन्त्र्यादिहेतुभिर्वाच्यतया प्रतिपादितः सूत्रकृता । **यत्** यस्मात् शब्दाः **योगवृत्तयः** महायोगयुक्ता अतोऽनन्ततच्छब्दवाच्यत्वादनन्तधर्मो हरिः।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यटीकायां प्रथमाध्यायस्य चतुर्थः पादः । इति प्रथमाध्यायः ।।**

## अथ द्वितीयोऽध्यायः

**सत्यनाथीया–** स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगादिति प्रथमनयार्थो भण्यते **श्रौतस्मृति** इति।

**श्रौतस्मृतिविरुद्धत्वात्स्मृतयो न गुणान्हरेः।**
**निषेद्धुं शक्नुयुर्वेदा नित्यत्वान्मानमुत्तमम् ।।१।।**

**सत्यनाथीया– श्रौतस्मृतिविरुद्धत्वात्** श्रुतिसंवादि पंचरात्रादिस्मृतिविरुद्धत्वात् शिवादिस्मृतयो हरेर्गुणान् निषेद्धुं न शक्नुयुः। तदभावबोधनाक्षमा इत्यर्थः। न विलक्षणत्वादस्यर्थो **वेदाः नित्यत्वान्मानमुत्तमं** इति। वेदाः नित्यत्वादपौरुषेयत्वादुत्तमं मानम्। संवादनिरपेक्षम् । स्मृतयोऽपि तदनुसारेण वेदशब्दवाच्यत्वादुत्तमं मानम् । पुरुषनिबन्धनदोषाभावादित्यर्थः । अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामित्यस्यार्थो वर्ण्यते **देवता** इत्यादिना।

**तत्वमञ्जरी–** ननु यदुक्तं अतोऽनन्तगुण इति तदसाध्विव। तत्र युक्त्यादिभिर्विरोधात् । तत एव हरेर्दोषित्वस्यापाताच्चेति। अतः प्राप्तो द्वितीयोध्यायः। तस्यैकवाक्यत्वसिद्धये प्रतिपाद्योक्तिपरतया **सर्वदोषोज्झितस्तस्मात् भगवान् पुरुषोत्तमः। उक्ता गुणाश्चाविरुद्धास्तस्य वेदेन सर्वशः** इति अन्तिमभाष्यमादावाकृष्य योज्यम् । तथा हि उक्ता इत्यावर्त्यम्। सर्वशः इत्यपि। तस्य भगवतः। सर्वशो वेदेन कृत्स्नवेदेन । पूर्वाध्यायोक्तन्यायानुगृहीतेनेति भावः। उक्ताः सर्वशो गुणाः सर्वकर्तृत्वादयो गुणाः अविरुद्धाश्च युक्तिसमयादिविरोधरहिताश्चोक्ताः। सूत्रकृता प्रतिपादिता इत्यर्थः। तस्मात् सर्वविरोधानां परिहृतत्वात् भगवान् पुरुषोत्तमः सर्वदोषोज्झित उक्तः प्रतिपादित इति। पूर्वोक्तार्थे प्रतीताशेषविरोधनिरासेन निर्दोषाशेषगुणता हरेरत्र निर्णीता सूत्रकृतेति यावत् ।

आद्यपादार्थोक्तिपरतया नायुक्तं तद्वदेच्छ्रुतिः इत्यप्यादावाकृष्य योज्यम् । अतोऽनन्तगुण इत्युक्तं प्रमेयं नायुक्तं युक्तिविरुद्धं न वदेच्छ्रुतिरित्याह अत्राद्यपद्ये सूत्रकृता इति शेषः। युक्तिसमयश्रुतियुक्त्युपेतश्रुतिविरोधभेदेन विरोधस्य चातुर्विध्यात्तत्र प्राबल्यात् युक्तिविरोधमादौ निराहेत्यर्थः। आद्यनयस्य स्मृत्यविरोधपरस्य युक्तिविरोधपरत्वमप्यस्ति। स्मृतिविरोधस्य युक्तिसमयादिचतुर्विधविरोधरूपत्वादिति भावः।

ननु यदुक्तं अतोऽनन्तगुण इति। तन्न । शैवसांख्यबौद्धार्हतादिस्मृतिषु शिवादेरेव सर्वकर्तृत्वादि– महिम्नो वर्णनेन तद्विरोधात् । न च तासामप्रामाण्यम् । सर्वज्ञशिवादिप्रत्यक्षमूलत्वेन तदयोगादित्याशङ्क्य तन्निरासाय प्राप्तं – **स्मृत्यनवकाश** इत्यादिसूत्रत्रयम् । तदर्थं भाषते – **श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः। निषेद्धुं शक्नुयुः** इति।

**श्रौतीभिः** श्रुतिसंवादिनीभिः पाञ्चरात्रादिभिः स्मृतिभिः विरुद्धत्वात् विशेषेण रुद्धत्वात् बाधितत्वादिति यावत् । शैवादिस्मृतयो हरेर्गुणान् निषेद्धुं न शक्नुयुः। तद्भावबोधनाक्षमा इत्यर्थः। सर्वज्ञतमविष्णुप्रत्यक्षमूलत्वात् श्रुतिसंवादाच्च वैष्णवस्मृतीनां प्राबल्यामिति भावः। न चाप्तोक्तानां शैवादिस्मृतीनां अप्रामाण्यायोगादनवकाशत्वमित्यतो न निषेधेयुरित्यनुक्त्वा न शक्नुयुरित्युक्तम् । तदुक्तसाधनानुष्ठानेऽपि योग्यफलानुपलब्धेः अलब्धप्रामाण्यानामेतन्निषेधे शक्त्यभावादित्यर्थः। शिवादेः सर्वज्ञत्वेऽप्ययोग्यजनप्रतारणार्थं कृतत्वेन आप्तोक्तत्वस्यैव तासामभावात् अप्रामाण्य-स्यैवोपपत्तेरिति भावः ।।१।।

ननु फलविसंवादेनाप्रामाण्ये शैवादिस्मृतिवदेव श्रुतिश्रौतस्मृतीनामपि तथात्वं स्यात् । वेदादिष्वपि फलविसंवादस्य बहुलमुपलम्भादित्यतः प्राप्तं - **न विलक्षणत्वादस्य** इत्यादिसूत्रद्वयम् । तदर्थः। **वेदा नित्यत्वान्मानमुत्तमम्** इति।

श्रौतस्मृतय इति विभागविपरिणामाभ्यामनुवर्त्यम् । वेदाः श्रौतस्मृतयश्च उत्तमं प्रमाणं कुत इत्यत श्रौतस्मृतिप्रामाण्यस्य श्रुतिप्रामाण्यायत्तत्वात् वेदप्रामाण्ये हेतुमाह - **नित्यत्वात्** इति। वेदानामिति योग्यतयाऽन्वेति। अपौरुषयत्वादित्यर्थः। अप्रामाण्यस्य दोषैकहेतुत्वात् वाक्ये दोषाणां स्वतन्त्रपुरुषदोषनिमित्तत्वात् वेदे च अभिनवानुपूर्वीरचयितृपुरुषस्याभावेन तद्दोषनिबन्धनदोषाणां अभावनियमादिति भावः। नित्यत्वं च "वाचा विरूप नित्यया"(ऋ.सं.८-६४-६) "नित्या वेदाः समस्ताश्च" इत्यादिश्रुतिस्मृतिसिद्धत्वान्नासिद्धमिति भावः। अत्र वेदस्य नित्यत्वं नाम सजातीयानुपूर्वीकत्वम् । न वर्णवत् कूटस्थनित्यत्वमिति ध्येयम् । "न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः" इति "क्रमस्य कृतकत्वेऽपि" इत्यादितत्वनिर्णयटीकोक्तेः। यत्तु "नित्या वेदाः पुराणाद्याः कालः प्रकृतिरेव च । नित्यानित्यं" इत्यादितत्वसंख्यानटीकायां "नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वं" इति वचनं तत्तु सर्वज्ञेश्वरबुद्धिक्रममपेक्ष्य, न त्वस्मदादि-प्रमोत्पादकक्रममपेक्ष्य। सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात् इति तत्वनिर्णयोक्तेः।

ननु माऽस्त्वप्रामाण्यं वेदस्य । तद्धेतुदोषाणां अभावात् । प्रामाण्यं तु कुतः ? तस्याप्तोक्तत्वादिगुणहेतुकत्वादित्यतोऽपि **नित्यत्वात्** इति। सहजत्वादित्यर्थः। मानत्वस्येति योग्यतयाऽन्वेति। वेदप्रामाण्यं हि यथार्थज्ञानजननशक्तिः। सा च मानत्वस्य प्रमाजननसामर्थ्यस्य नित्यत्वात् स्वाभाविकत्वात् । गुणानपेक्षत्वादिति यावत् । वेदाः उत्तमं मानमित्यर्थः।

ज्ञानजनकत्वमेवासिद्धमित्यतः श्रौतेति प्रस्तावात् श्रुतय इति वाच्ये वेदा इत्युक्तिः "वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदाः" इत्यादेः विदधात्वर्थज्ञानजनकत्वद्योतनाय । तथा च बोधकत्वात् दोषा-भावेन विपरीतबोधकत्वाभावात् वेदाः उत्तमं मानमित्यर्थः।

उक्तं च जैमिनिसूत्रे "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थे-नोपलब्धेः तत्प्रामाण्यं" इत्यादि। वेद इत्युक्त्या "वेदा ह्येवैनं" इति श्रुतिसूचनेन मानान्तरसंवादानपेक्षमेव वेदप्रामाण्यमिति सूचितम् ।

एवं च सति प्रामाण्ये विसंवादः कर्तृवैगुण्यादिकृत इति कल्प्यं अधिकारिणां फलोपलम्भादिति भावेनोत्तममित्युक्तम् ।।२।।

**आनन्दमाला** – प्रथमाध्याये सर्वेश्वरो विष्णुरनन्तशब्दोक्तानन्तगुणः साधितः। तत्र सर्वप्रकारविरोधं परिहरत्यस्मिन्नध्याये। प्रथमपादे युक्तिविरोधम्। युक्त्युपजीव्यस्मृतिविरोधं परिहरन् "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" (२-१-१) इत्यधिकरणं व्याख्याति – **श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः। निषेद्धुं शक्नुयुः** इति। पाशुपतादिस्मृतयो रुद्रादीनां सार्वज्ञ्यादिगुणविधितत्परास्तदन्येषां तान् निषेधन्तीति चेत् ता अपि हरेर्गुणान् निषेद्धुं न शक्नुयुः। श्रुत्यनुसारिणीभिर्व्यासादिस्मृतिभिर्विरुद्धत्वात् । प्रत्युत व्यासादिस्मृतय एव रुद्रादिगुणान् निषेधन्ति । श्रुतिविरोधात् तासामेवाभासत्वोपपत्तेः। किञ्च, तासु स्मृतिषु श्रुतफलसम्बन्धिन्यव्यभिचारित्वबुद्धिश्चात्र श्रौतस्मृतिरुक्ता । तद्विरुद्धत्वं नाम तासूक्तफल-व्यभिचारित्वम् । तेन च तासामप्रामाण्यमेव सुसाधम् । अतो नेष्टानिष्टविधिनिषेधस्तासामस्ति । उपजीव्यविरोधादाभासत्वसम्मतेः। " एतेन योगः प्रत्युक्तः" (२-१-३) इति सूत्रार्थोऽप्येवं व्याख्यातः ।।१।।

वेदानामप्युक्तफलव्यभिचारदर्शनादमानत्वं समानमित्यत आह – "न विलक्षणत्वादस्य तथात्वं च शब्दात्" (२-१-४) इत्यधिकरणम् **वेदा नित्यत्वान्मानमुत्तमम्** । न चेतरस्मृतिवद् वेदानाममानत्वम् । ताभ्यो विलक्षणत्वात् । न ह्यत्र फलोपलब्धिरेव प्रामाण्यस्थापिका । किन्तु अज्ञानमूलत्वादिदोषराहित्यमेव। तच्च नित्यत्वात् इत्युक्त्या अर्थात् सिद्धम् । नित्यत्वं च शब्दादेव प्रतीयते। अतो वेदाः प्रमाणमेव भवन्ति । शब्दादिष्वनुप्रमाणेषु वेदप्रमाणस्य प्रत्यक्षानु-मानाभ्यामाधिक्यविवक्षया उत्तमम् इति विशेषणम् । यथार्थज्ञानस्य केवलाख्यस्य ततोऽप्युत्तमत्वात्। अथवा इतिहासादिश्रौतस्मृत्याख्याः पौरुषेयवेदा अर्थैकनित्यत्वान्मानम् । ऋगाद्याः केवलवेदाः शब्दार्थोभयनित्यत्वादुत्तमं मानमिति विशेषः। न च वेदोक्तफलव्यभिचारः। अधिकारतो दर्शनात् स्वत एव वेदनाद् वेदा इति प्रामाण्यं च स्वत एवेत्यावेदितम् ।।२।।

**नृसिंहतीर्थ** – प्रथमाध्याये सकलश्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वोपलक्षितानन्तगुण-पूर्णत्वमभिहितम्। तत्र युक्त्यादिविरोधेनोक्तसमन्वये निरस्ते दोषवानपि स्यादित्यतः युक्त्यादिविरोधपरिहारद्वारा उक्तसमन्वयदृढीकरणाय भगवतो निर्दोषत्वप्रतिपादनाय चाऽयं द्वितीया-ध्यायः प्रवृत्तः। तत्र युक्तिविरोधपरिहाराय प्रवृत्तस्य प्रथमाधिकरणस्य तात्पर्यम् **श्रौत** इति। **स्मृतयः**

श्रौतीभिः श्रुतिसंवादिनीभिः पाञ्चरात्रादिभिः स्मृतिभिः विरुद्धत्वात् विशेषेण रुद्धत्वात् बाधितत्वादिति यावत् । शैवादिस्मृतयो हरेर्गुणान् निषेद्धुं न शक्नुयुः । तद्भावबोधनाक्षमा इत्यर्थः । सर्वज्ञतमविष्णुप्रत्यक्षमूलत्वात् श्रुतिसंवादाच्च वैष्णवस्मृतीनां प्राबल्यामिति भावः । न चाप्तोक्तानां शैवादिस्मृतीनां अप्रामाण्यायोगादनवकाशत्वमित्यतो न निषेधेयुरित्यनुक्त्वा न शक्नुयुरित्युक्तम् । तदुक्तसाधनानुष्ठानेऽपि योग्यफलानुपलब्धेः अलब्धप्रामाण्यानामेतन्निषेधे शक्त्यभावादित्यर्थः । शिवादेः सर्वज्ञत्वेऽप्ययोग्यजनप्रतारणार्थं कृतत्वेन आप्तोक्तत्वस्यैव तासामभावात् अप्रामाण्य-स्यैवोपपत्तेरिति भावः ।।१।।

ननु फलविसंवादेनाप्रामाण्ये शैवादिस्मृतिवदेव श्रुतिश्रौतस्मृतीनामपि तथात्वं स्यात् । वेदादिष्वपि फलविसंवादस्य बहुलमुपलम्भादित्यतः प्राप्तं – **न विलक्षणत्वादस्य** इत्यादिसूत्रद्वयम् । तदर्थः । **वेदा नित्यत्वान्मानमुत्तमम्** इति ।

श्रौतस्मृतय इति विभागविपरिणामाभ्यामनुवर्त्यम् । वेदाः श्रौतस्मृतयश्च उत्तमं प्रमाणं कुत इत्यत श्रौतस्मृतिप्रामाण्यस्य श्रुतिप्रामाण्यायत्तत्वात् वेदप्रामाण्ये हेतुमाह – **नित्यत्वात्** इति । वेदानामिति योग्यतयाऽन्वेति । अपौरुषयत्वादित्यर्थः । अप्रामाण्यस्य दोषैकहेतुत्वात् वाक्ये दोषाणां स्वतन्त्रपुरुषदोषनिमित्तत्वात् वेदे च अभिनवानुपूर्वीरचयितृपुरुषस्याभावेन तद्दोषनिबन्धनदोषाणां अभावनियमादिति भावः । नित्यत्वं च "वाचा विरूप नित्यया"(ऋ.सं.८-६४-६) "नित्या वेदाः समस्ताश्च" इत्यादिश्रुतिस्मृतिसिद्धत्वान्नासिद्धमिति भावः । अत्र वेदस्य नित्यत्वं नाम सजातीयानुपूर्वीकत्वम् । न वर्णवत् कूटस्थनित्यत्वमिति ध्येयम् । "न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः" इति "क्रमस्य कृतकत्वेऽपि" इत्यादितत्वनिर्णयटीकोक्तेः । यत्तु "नित्या वेदाः पुराणाद्याः कालः प्रकृतिरेव च । नित्यानित्यं" इत्यादितत्वसंख्यानटीकायां "नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वं" इति वचनं तत्तु सर्वज्ञेश्वरबुद्धिक्रममपेक्ष्य, न त्वस्मदादि-प्रमोत्पादकक्रममपेक्ष्य । सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात् इति तत्वनिर्णयोक्तेः ।

ननु माऽस्त्वप्रामाण्यं वेदस्य । तद्धेतुदोषाणां अभावात् । प्रामाण्यं तु कुतः ? तस्याप्तोक्तत्वादिगुणहेतुकत्वादित्यतोऽपि **नित्यत्वात्** इति । सहजत्वादित्यर्थः । मानत्वस्येति योग्यतयाऽन्वेति । वेदप्रामाण्यं हि यथार्थज्ञानजननशक्तिः । सा च मानत्वस्य प्रमाजननसामर्थ्यस्य नित्यत्वात् स्वाभाविकत्वात् । गुणानपेक्षत्वादिति यावत् । वेदाः उत्तमं मानमित्यर्थः ।

ज्ञानजनकत्वमेवासिद्धमित्यतः श्रौतेति प्रस्तावात् श्रुतय इति वाच्ये वेदा इत्युक्तिः "वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदाः" इत्यादेः विदधात्वर्थज्ञानजनकत्वद्योतनाय । तथा च बोधकत्वात् दोषा-भावेन विपरीतबोधकत्वाभावात् वेदाः उत्तमं मानमित्यर्थः ।

उक्तं च जैमिनिसूत्रे "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थे-नोपलब्धेः तत्प्रामाण्यं" इत्यादि। वेद इत्युक्त्या "वेदा ह्येवैनं" इति श्रुतिसूचनेन मानान्तरसंवादानपेक्षमेव वेदप्रामाण्यमिति सूचितम् ।

एवं च सति प्रामाण्ये विसंवादः कर्तृवैगुण्यादिकृत इति कल्प्यं अधिकारिणां फलोपलम्भादिति भावेनोत्तममित्युक्तम् ।।२।।

**आनन्दमाला** – प्रथमाध्याये सर्वेश्वरो विष्णुरनन्तशब्दोक्तानन्तगुणः साधितः। तत्र सर्वप्रकारविरोधं परिहरत्यस्मिन्नध्याये। प्रथमपादे युक्तिविरोधम्। युक्त्युपजीव्यस्मृतिविरोधं परिहरन् "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" (२-१-१) इत्यधिकरणं व्याख्याति – **श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः। निषेद्धुं शक्नुयुः** इति। पाशुपतादिस्मृतयो रुद्रादीनां सार्वज्ञ्यादिगुणविधितत्परास्तदन्येषां तान् निषेधन्तीति चेत् ता अपि हरेर्गुणान् निषेद्धुं न शक्नुयुः। श्रुत्यनुसारिणीभिर्व्यासादिस्मृतिभिर्विरुद्धत्वात् । प्रत्युत व्यासादिस्मृतय एव रुद्रादिगुणान् निषेधन्ति । श्रुतिविरोधात् तासामेवाभासत्वोपपत्तेः। किञ्च, तासु स्मृतिषु श्रुतफलसम्बन्धिन्यव्यभिचारित्वबुद्धिश्चात्र श्रौतस्मृतिरुक्ता । तद्विरुद्धत्वं नाम तासूक्तफल-व्यभिचारित्वम् । तेन च तासामप्रामाण्यमेव सुसाधम् । अतो नेष्टानिष्टविधिनिषेधस्तासामस्ति । उपजीव्यविरोधादाभासत्वसम्मतेः। " एतेन योगः प्रत्युक्तः" (२-१-३) इति सूत्रार्थोऽप्येवं व्याख्यातः ।।१।।

वेदानामप्युक्तफलव्यभिचारदर्शनादमानत्वं समानमित्यत आह – "न विलक्षणत्वादस्य तथात्वं च शब्दात्" (२-१-४) इत्यधिकरणम् **वेदा नित्यत्वान्मानमुत्तमम्** । न चेतरस्मृतिवद् वेदानाममानत्वम् । ताभ्यो विलक्षणत्वात् । न ह्यत्र फलोपलब्धिरेव प्रामाण्यस्थापिका । किन्तु अज्ञानमूलत्वादिदोषराहित्यमेव। तच्च नित्यत्वात् इत्युक्त्या अर्थात् सिद्धम् । नित्यत्वं च शब्दादेव प्रतीयते। अतो वेदाः प्रमाणमेव भवन्ति । शब्दादिष्वनुप्रमाणेषु वेदप्रमाणस्य प्रत्यक्षानु-मानाभ्यामाधिक्यविवक्षया उत्तमम् इति विशेषणम् । यथार्थज्ञानस्य केवलाख्यस्य ततोऽप्युत्तमत्वात् । अथवा इतिहासादिश्रौतस्मृत्याख्याः पौरुषेयवेदा अर्थैकनित्यत्वान्मानम् । ऋगाद्याः केवलवेदाः शब्दार्थोभयनित्यत्वादुत्तमं मानमिति विशेषः। न च वेदोक्तफलव्यभिचारः। अधिकारतो दर्शनात् स्वत एव वेदनाद् वेदा इति प्रामाण्यं च स्वत एवेत्यावेदितम् ।।२।।

**नृसिंहतीर्थ** – प्रथमाध्याये सकलश्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वोपलक्षितानन्तगुण-पूर्णत्वमभिहितम्। तत्र युक्त्यादिविरोधेनोक्तसमन्वये निरस्ते दोषवानपि स्यादित्यतः युक्त्यादिविरोधपरिहारद्वारा उक्तसमन्वयदृढीकरणाय भगवतो निर्दोषत्वप्रतिपादनाय चाऽयं द्वितीया-ध्यायः प्रवृत्तः। तत्र युक्तिविरोधपरिहाराय प्रवृत्तस्य प्रथमाधिकरणस्य तात्पर्यम् **श्रौत** इति। **स्मृतयः**

पाशुपताद्याः। **हरेर्गुणान्** जगत्कारणत्वादीन् निषेद्धुं न शक्नुयुः । कुतः ? स्मृतिविरुद्धत्वात् । पंचरात्रादिवैष्णवस्मृतिबाधितत्वात् । ननु स्मृतित्वाविशेषात् कथं बाधकता इत्यत उक्तम् **श्रौत** इति। पंचरात्रादिस्मृतीनां श्रुतिमूलकत्वेन प्राबल्यात् पाशुपतादिस्मृतिबाधकत्वं युक्तमिति भावः। विष्णोर्जगत्कारणत्वादिप्रतिपादकवेदप्रामाण्ये युक्तिविरोधपरिहारार्थस्य द्वितीयाधिकरणतात्पर्यम् **वेदा** इति। वेदाः **उत्तमं मानं** प्रत्यक्षानुमानापेक्षया मुख्यं प्रमाणम् । नियतयथार्थरूपप्रमाणमिति यावत् । कुतः ? **नित्यत्वात्** अपौरुषेयत्वात् । पुरुषदोषनिमित्तकदोषशंकाशून्यत्वादिति यावत् ।

**श्रीनिवासतीर्थीया–** युक्तिपादार्थं संग्रह्णाति **श्रौतस्मृति** इति।। स्मृत्यनवकाश इति प्रथमाधिकरणार्थः **श्रौत** इति। श्रुतिसंवादिपंचरात्रादिस्मृतिबाधितत्वाच्छैवादिश्रुतिस्मृतयो हरेर्गुणान् श्रुत्युक्तान् निषेद्धुं न शक्नुयुः। तदभावबोधनाक्षमा इत्यर्थः। न विलक्षणत्वादित्यधिकरणार्थो **वेदाः नित्यत्वान्मानमुत्तमं** इति। वेदाः नित्यत्वादेवापौरुषेयत्वादुत्तमं मानम् । संवादनिरपेक्षम् । वेदानुसारित्वात् स्मृतयोऽप्युत्तमं मानम् । पुरुषदोषनिबन्धनदोषाभावादिति भावः।

**छलारी –**

हरिः ओम्

**पराशरात्मजः शक्तेः पौत्रः सत्यवतीसुतः।**
**वशिष्ठनप्ता श्रीव्यासः शुकपुत्रोऽभिभासते।।**

प्रथमाध्याये भगवतः सकलश्रुतिसमन्वयेन अनन्तगुणपूर्णत्वं अभिहितं, तत्र युक्तिविरोधादि-नोक्तसमन्वये निरोधिते दोषवानपि स्यादित्यतः युक्त्यादिविरोधपरिहारेण उक्तसमन्वयदृढीकरणद्वारा भगवतो निर्दोषत्वप्रकटनाय द्वितीयाध्यायः प्रवृत्तः।

उक्तेऽर्थे विरोधः चतुर्विधः स्फुरति। युक्तिविरोधः, समयविरोधः, श्रुतिविरोधः, युक्त्युपेतश्रुति-विरोधभेदात् । अत्र प्रथमे पादे प्राबल्याद्युक्तिविरोधाभावं दर्शयति। तत्रापि प्रथमाधिकरणे स्मृतीनां युक्तिसमयादिरूपत्वेन पाशुपतादिस्मृतिविरोधाभावं दर्शयति।

**ओं स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ओं**

स्मृतीनां – सर्वज्ञरुद्रादिप्रणीतशैवादिस्मृतीनां, अनवकाशेन – निरवकाशत्वेन प्राबल्यात्, तद्विरोधेन विष्णुकर्तृत्वादिप्रतिपादकश्रुतेः अप्रामाण्यदोषप्रसङ्गादिति चेन्न, अन्यस्मृतीनां – अतिसर्वज्ञ-विष्णवादिप्रतीतपञ्चरात्रादिस्मृतीनां अनवकाशेन – ततोऽपि निरवकाशत्वेन अत्यन्तप्राबल्यात् तत्सहितश्रुतिविरुद्धस्मृतीनामेवाप्रामाण्यदोषप्रसङ्गात् । तथा च न तद्विरोधः उक्तार्थस्येति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं, प्रमाणाभावात् । न च "यतो वा" (तै.उ.३-१) इत्यादिश्रुतिः प्रमाणमिति वाच्यम् । तस्याः श्रुतेः यदि विष्णुकारणत्वे तात्पर्यं स्यात्तर्हि

सर्वज्ञरुद्रादिप्रणीतपाशुपतादिस्मृतिविरोधेन अप्रामाण्याख्यदोषप्रसङ्गादिति तर्कविरोधेन विष्णुकारणत्वे तात्पर्यायोगात् । तथा च न विष्णोः जगत्कारणत्वं युक्तमिति प्राप्ते –

युक्तमेव विष्णोः जगत्कारणत्वं "यतो वा" (तै.उ.३-१)इत्यादिश्रुतेः। न च पाशुपतादिस्मृतिविरोधेनाप्रामाण्यात् न श्रुतेस्तत्र तात्पर्यमिति वाच्यम् । श्रुतिविरोधेन स्मृतीनामेव अप्रामाण्यात् । न च स्मृतिभ्यः श्रुतेराधिक्याभावेनाबाधकत्वं पञ्चरात्रादिस्मृत्यनुकूलत्वेन शैवस्मृतिभ्यः श्रुतेराधिक्यसिद्धेः न च तदानुकूल्येऽपि कथं श्रुतेराधिक्यमिति वाच्यम् । तासां विष्ण्वादिभिः नितरां सर्वज्ञैः प्रणीतत्वात् । कुतो विष्ण्वादीनां रुद्रादिभ्योप्याप्ततमत्वं इति चेन्न । तदुक्तस्य संवाददर्शनात् । रुद्राद्युक्तस्य संवादहीनत्वात् । तथा च वैष्णवस्मृतीनां निरवकाशत्वेन प्राबल्यात् तद्विरोध एव शैवस्मृतीनामप्रामाण्यात् सुतरां तत्सहायवत्या श्रुत्या विरोधे अप्रामाण्यमिति युक्तमेव विष्णोः जगत्कारणत्वं इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **श्रौत** इति। स्मृतयः पाशुपताद्याः हरेः गुणान् जगत्कारणत्वादीन् निषेद्धुं न शक्नुयुः। कुतः? स्मृतिविरुद्धत्वात् । पञ्चरात्रादिवैष्णवश्रुतिबाधितत्वात् । ननु स्मृतित्वाविशेषात् कथं बाध्यबाधकभावः इत्यत उक्तं – **श्रौत** इति। श्रुतिसंवादित्वेन श्रुतिसम्बन्धिनीभिः पञ्चरात्रादिस्मृतिभिः विरुद्धत्वादित्यर्थः। तथा च पञ्चरात्रादिस्मृतीनां सर्वज्ञतमविष्णुप्रत्यक्षमूलत्वेन श्रुतिसंवादित्वेन च प्राबल्यात् तद्विरोध एव शैवस्मृतीनां अप्रामाण्यात् सुतरां तत्सहायवत्या श्रुत्या विरोधे अप्रामाण्यमिति न तद्विरोध उक्तार्थस्येति भावः।।१।।

### ओं न विलक्षणत्वादस्य तथात्वं च शब्दात् ओं

अस्य – वेदादेः, विलक्षणत्वात् – पाशुपतादिस्मृतितो नित्यत्वादिवैलक्षण्यात् तथात्वं पाशुपतादिस्मृतिवदप्रामाण्यं नास्ति। कुतः? शब्दात् –"वाचा विरूपनित्यया"(ऋ.सं.८-६४-६) इति श्रुतेः। चशब्दात् अनादिनिधना नित्येति स्मृतेः इति सूत्रार्थः।

अत्र वेदो न प्रमाणम् । तदुक्तानुष्ठानेऽपि फलानुपलम्भादिति प्राप्ते –

वेदः प्रमाणमेव अपौरुषेयत्वात् । न चासिद्धिः। "वाचा विरूपनित्यया" इत्यादिश्रुतेः। "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति (म.भा.शान्तिपर्व)स्मृतेश्च । न च फलविसंवादादप्रामाण्यम् । अधिकारिणां फलोपलम्भेन तदनुपलम्भस्य कर्तृवैगुण्यादिनिमित्तकत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – वेदा इति। उत्तमं मानं प्रत्यक्षानुमानापेक्षया मुख्यं प्रमाणं, कुतः? नित्यत्वात् , अपौरुषेयत्वादित्यर्थः।।२।।

पाशुपताद्याः। **हरेर्गुणान्** जगत्कारणत्वादीन् निषेद्धुं न शक्नुयुः । कुतः ? स्मृतिविरुद्धत्वात् । पंचरात्रादिवैष्णवस्मृतिबाधितत्वात् । ननु स्मृतित्वाविशेषात् कथं बाधकता इत्यत उक्तम् **श्रौत** इति। पंचरात्रादिस्मृतीनां श्रुतिमूलकत्वेन प्राबल्यात् पाशुपतादिस्मृतिबाधकत्वं युक्तमिति भावः। विष्णोर्जगत्कारणत्वादिप्रतिपादकवेदप्रामाण्ये युक्तिविरोधपरिहारार्थस्य द्वितीयाधिकरणतात्पर्यम् **वेदा** इति। वेदाः **उत्तमं मानं** प्रत्यक्षानुमानापेक्षया मुख्यं प्रमाणम् । नियतयथार्थरूपप्रमाणमिति यावत् । कुतः ? **नित्यत्वात्** अपौरुषेयत्वात् । पुरुषदोषनिमित्तकदोषशंकाशून्यत्वादिति यावत् ।

**श्रीनिवासतीर्थीया–** युक्तिपादार्थं संग्रह्णाति **श्रौतस्मृति** इति।। स्मृत्यनवकाश इति प्रथमाधिकरणार्थः **श्रौत** इति। श्रुतिसंवादिपंचरात्रादिस्मृतिबाधितत्वाच्छैवादिश्रुतिस्मृतयो हरेर्गुणान् श्रुत्युक्तान् निषेद्धुं न शक्नुयुः। तदभावबोधनाक्षमा इत्यर्थः। न विलक्षणत्वादित्यधिकरणार्थो **वेदाः नित्यत्वान्मानमुत्तमं** इति। वेदाः नित्यत्वादेवापौरुषेयत्वादुत्तमं मानम् । संवादनिरपेक्षम् । वेदानुसारित्वात् स्मृतयोऽप्युत्तमं मानम् । पुरुषदोषनिबन्धनदोषाभावादिति भावः।

**छलारी –**

हरिः ओम्

**पराशरात्मजः शक्तेः पौत्रः सत्यवतीसुतः।**
**वशिष्ठनप्ता श्रीव्यासः शुकपुत्रोऽभिभासते।।**

प्रथमाध्याये भगवतः सकलश्रुतिसमन्वयेन अनन्तगुणपूर्णत्वं अभिहितं, तत्र युक्तिविरोधादि-नोक्तसमन्वये निरोधिते दोषवानपि स्यादित्यतः युक्त्यादिविरोधपरिहारेण उक्तसमन्वयदृढीकरणद्वारा भगवतो निर्दोषत्वप्रकटनाय द्वितीयाध्यायः प्रवृत्तः।

उक्तेऽर्थे विरोधः चतुर्विधः स्फुरति। युक्तिविरोधः, समयविरोधः, श्रुतिविरोधः, युक्त्युपेतश्रुति-विरोधभेदात् । अत्र प्रथमे पादे प्राबल्याद्युक्तिविरोधाभावं दर्शयति। तत्रापि प्रथमाधिकरणे स्मृतीनां युक्तिसमयादिरूपत्वेन पाशुपतादिस्मृतिविरोधाभावं दर्शयति।

**ओं स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ओं**

स्मृतीनां – सर्वज्ञरुद्रादिप्रणीतशैवादिस्मृतीनां, अनवकाशेन – निरवकाशत्वेन प्राबल्यात्, तद्विरोधेन विष्णुकर्तृत्वादिप्रतिपादकश्रुतेः अप्रामाण्यदोषप्रसङ्गादिति चेन्न, अन्यस्मृतीनां – अतिसर्वज्ञ-विष्ण्वादिप्रतीतपञ्चरात्रादिस्मृतीनां अनवकाशेन – ततोऽपि निरवकाशत्वेन अत्यन्तप्राबल्यात् तत्सहितश्रुतिविरुद्धस्मृतीनामेवाप्रामाण्यदोषप्रसङ्गात् । तथा च न तद्विरोधः उक्तार्थस्येति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं, प्रमाणाभावात् । न च "यतो वा" (तै.उ.३-१) इत्यादिश्रुतिः प्रमाणमिति वाच्यम् । तस्याः श्रुतेः यदि विष्णुकारणत्वे तात्पर्यं स्यात्तर्हि

सर्वज्ञरुद्रादिप्रणीतपाशुपतादिस्मृतिविरोधेन अप्रामाण्याख्यदोषप्रसङ्गादिति तर्कविरोधेन विष्णुकारणत्वे तात्पर्यायोगात् । तथा च न विष्णोः जगत्कारणत्वं युक्तमिति प्राप्ते -

युक्तमेव विष्णोः जगत्कारणत्वं "यतो वा" (तै.उ.३-१)इत्यादिश्रुतेः। न च पाशुपतादि-स्मृतिविरोधेनाप्रामाण्यात् न श्रुतेस्तत्र तात्पर्यमिति वाच्यम् । श्रुतिविरोधेन स्मृतीनामेव अप्रामाण्यात् । न च स्मृतिभ्यः श्रुतेराधिक्याभावेनाबाधकत्वं पञ्चरात्रादिस्मृत्यनुकूलत्वेन शैवस्मृतिभ्यः श्रुते-राधिक्यसिद्धेः न च तदानुकूल्येऽपि कथं श्रुतेराधिक्यमिति वाच्यम् । तासां विष्ण्वादिभिः नितरां सर्वज्ञैः प्रणीतत्वात् । कुतो विष्ण्वादीनां रुद्रादिभ्योप्याप्ततमत्वं इति चेन्न । तदुक्तस्य संवाददर्शनात् । रुद्राद्युक्तस्य संवादहीनत्वात् । तथा च वैष्णवस्मृतीनां निरवकाशत्वेन प्राबल्यात् तद्विरोध एव शैवस्मृतीनामप्रामाण्यात् सुतरां तत्सहायवत्या श्रुत्या विरोधे अप्रामाण्यमिति युक्तमेव विष्णोः जगत्कारणत्वं इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **श्रौत** इति। स्मृतयः पाशुपताद्याः हरेः गुणान् जगत्कारणत्वादीन् निषेद्धुं न शक्नुयुः। कुतः? स्मृतिविरुद्धत्वात् । पञ्चरात्रादिवैष्णवश्रुतिबाधितत्वात् । ननु स्मृतित्वाविशेषात् कथं बाध्यबाधकभावः इत्यत उक्तं - **श्रौत** इति। श्रुतिसंवादित्वेन श्रुतिसम्बन्धिनीभिः पञ्चरात्रादिस्मृतिभिः विरुद्धत्वादित्यर्थः। तथा च पञ्चरात्रादिस्मृतीनां सर्वज्ञतमविष्णुप्रत्यक्षमूलत्वेन श्रुतिसंवादित्वेन च प्राबल्यात् तद्विरोध एव शैवस्मृतीनां अप्रामाण्यात् सुतरां तत्सहायवत्या श्रुत्या विरोधे अप्रामाण्यमिति न तद्विरोध उक्तार्थस्येति भावः।।१।।

**ओं न विलक्षणत्वादस्य तथात्वं च शब्दात् ओं**

अस्य - वेदादेः, विलक्षणत्वात् - पाशुपतादिस्मृतितो नित्यत्वादिवैलक्षण्यात् तथात्वं पाशुपतादिस्मृतिवदप्रामाण्यं नास्ति। कुतः? शब्दात् -"वाचा विरूपनित्यया"(ऋ.सं.८-६४-६) इति श्रुतेः। चशब्दात् अनादिनिधना नित्येति स्मृतेः इति सूत्रार्थः।

अत्र वेदो न प्रमाणम् । तदुक्तानुष्ठानेऽपि फलानुपलम्भादिति प्राप्ते -

वेदः प्रमाणमेव अपौरुषेयत्वात् । न चासिद्धिः। "वाचा विरूपनित्यया" इत्यादिश्रुतेः। "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति (म.भा.शान्तिपर्व)स्मृतेश्च । न च फलविसंवादादप्रामाण्यम् । अधिकारिणां फलोपलम्भेन तदनुपलम्भस्य कर्तृवैगुण्यादि-निमित्तकत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - वेदा इति। उत्तमं मानं प्रत्यक्षानुमानापेक्षया मुख्यं प्रमाणं, कुतः? नित्यत्वात् , अपौरुषेयत्वादित्यर्थः।।२।।

**नारायणाचार्य–**

**.....श्रीपतिस्तेन तुष्यति।**
**श्रीमन्नारायणाख्यातपण्डिताचार्यसद्गुरोः।**
**निर्मितिर्निर्मलाधियामानन्दयतु मानसम् ।।**

श्रीलक्ष्मीनरसिंहायनमः। अथोक्तेऽर्थे विरोधं परिहर्तुं द्वितीयोऽध्याय आरभ्यते । स चतुर्विधः। युक्तिसमयश्रुतिन्योपेतश्रुतिविरोधभेदात्। तत्र प्रथमपादे युक्तिविरोधःपरिह्रियते। तत्रापि प्रथमाधिकरणे स्मृतिविरोधः परिह्रियते। तत्र पाशुपतादिस्मृतिषु पशुपत्यादीनामेव जगत्कारणत्वस्य उक्तत्वात्। तासां च सर्वज्ञशिवादिप्रत्यक्षमूलत्वेनापि पिपीलिकालिपिनिभाबुद्धिपूर्वकश्रुतितोऽपि प्रामाण्यातिशयेन निरवकाशत्वाच्छ्रुत्युक्तमपिविष्णोर्जगत्कारणत्वमयुक्तमिशंकायां आस्तां तावच्छ्रुतिस्मृत्योर्बला–बलचिन्ता। शिवाद्यपेक्षयापि सर्वज्ञतमविष्णुप्रत्यक्षमूलकपंचरात्रादिस्मृतिभिः अपौरुषेयश्रुतिसंवादेन प्रबलाभिः निरवकाशाभिश्च विष्णोरेव सर्वजगत्कारणत्वादेरुक्तत्वेन तद्विरोधादप्रामाण्यं पाशुपतदिस्मृतीनामिति तद्विरोधो अकिंचित्कर इत्येतदर्थप्रतिपादकं सूत्रं **ओं स्मृत्यनवकाश–दोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात्** इति । अस्यार्थः, पाशुपतादिस्मृतीनां अनवकाशे तन्निरवकाशत्वेनार्थान्तरस्य कर्तुं अशक्यत्वात्तदुक्तर्थस्य पशुपत्यादिसर्वोत्तमत्वस्य अनंगीकारे सतीति शेषः प्रामाणिक हानलक्षणादोषः प्रसंग इति चेन्न ततोऽप्यभ्यर्हित–तमपंचरात्रादिवैष्णवस्मृतीनां प्रामाण्यातिशयात्तदुक्तविष्णुसर्वोत्तमत्वस्यानंगीकारे सुतरां प्रामाणिकहानं प्रत्युत बलवत्तरेतरस्मृतिविरोधेन बाधितपाशुपतादिस्मृतिसिद्धान्ताङ्गीकारे अप्रामाणिककल्पनं च अधिको दोषः प्रसज्यते इति तदङ्गीकारो न युक्त इति । तासां च अपौरुषेयश्रुतिसंवादि–त्वात्प्रामाण्यातिशयः तत्कर्तृणां च सार्वज्ञाद्यतिशय इति भावः। तत्तात्पर्य–माह **श्रौतस्मृतिविरुद्धत्वात्स्मृतयो न गुणान्हरेः। निषेद्धुं शक्नुयुः** इति। व्याख्यातप्रायमेतत् । न शक्नुयुरिति शक्त्यभावं वदत्तासां प्रत्यक्षयोग्यफलाभिधात्रीणां यथोक्तानुष्टानेऽपि फलानुपलम्भेना–प्रामाण्यमिति सूचनात् **इतरेषां चानुपलब्धेः** इत्येतदपि सूत्रं याख्यातं भवति।

तथापि सर्वासामवैदिकस्मृतीनां न अप्रामाण्यम् । योगस्मृत्युक्तफलादीनाव्यभिचारेणोप–लंभादित्यतः प्रवृत्तं **एतेन योगः प्रत्युक्त** इत्यपि सूत्रं व्याख्यातम् । यथोक्तयोगाभ्यासेपि तदुक्तप्रत्यक्षफलस्यानुपलब्धेस्तद्दृष्टान्तेन सर्वस्याप्यप्रामाण्यात्तद्विरोधोऽपीति भावः।

नन्वेवं ''पुत्रकामः पुत्रेष्ट्या यजेत'' ''कारीर्या यजेत वृष्टिकाम'' इत्यादिदृष्टफलविधात्रीणां श्रुतानामपि फलानुपलम्भादप्रामाण्यं स्यादित्याशंकापरिहाराय सूत्रं **न विलक्षणादस्य तथात्वं च शब्दात्** इति । अस्यर्थाः। अस्य वेदस्योक्तविधत्वोपि तथात्वं पाशुपतादिवदप्रामाणं न । कुतः ?

अपौरुषेयत्वेन विलक्षणत्वात् । निर्दोषत्वेन प्रामाण्यं न तु पूर्ववत्संवादित्वेन प्रमाण्यम्। तस्य नित्यत्वं च "वाचा विरूपनित्यया" इति शब्दादिति । अभिप्रायः सूक्त एव। ननु यथोक्तकर्मानुष्टानेपि फलादर्शनात् अप्रामाण्यं वेदस्येत्यतः सूत्रं **दृश्यते तु** । अधिकारिणां फलं

ऋग्यजुः सामाथर्वाश्च मूलरामायणं तथा।
भारतं पंचरात्रं च वेदा इत्येव शब्दिताः।।

पुराणानि च यानीह वैष्णवानि विदो विदुः।
स्वतः प्रामाण्यमेतेषां नात्र किंचिद्विचार्यते।।

यत्तेषूक्तं न दृश्येत पूर्वकर्मात्र कारणम्।
नाप्रामाण्यं भवेदेषां दृश्यते ह्यधिकारतः ।।

इति भविष्यत्पुराणोक्तेः। फलादर्शनादेः कर्त्रादिवैगुण्यनिबन्धनत्वादुक्तमुपपन्नमिति भावः। एतत्तात्पर्यमाह। **वेदो नित्यत्वान्मानमुत्तमम्** इति । व्याख्यातप्रायमेतत् ।

**मळगी** – उक्तेऽर्थे युक्तिसमयश्रुतिन्यायोपेतश्रुतिविरोधान् क्रमेण पादचतुष्टयेनापाकरोति । **श्रौतस्मृति** इति। "पंचरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।" इत्युक्तेः श्रुत्यनुसारिपरमाप्त-विष्ण्वादिप्रणीतपंचरात्रादिस्मृतीनां विरुद्धत्वात् **स्मृतयः** विप्रलम्भादिदोषयुक्तरुद्रादि-प्रणीतपाशुपतादिस्मृतयः। **हरेः** श्रीनारायणस्य । **गुणान्** सर्वोत्तमत्वादीन्, स्वातन्त्र्यादीन्वा। **निषेद्धुं** निषेधं कर्तुं **न शक्नुयुः** शक्ता न भवन्ति। अतस्तेषां वेदानां **नित्यत्वात्** अपौरुषेयत्वात् वेदाः। पंचरात्रादीनां तु "वेदा इत्येव शब्दिता" इत्युक्तत्वेन वेदानुसारित्वात् पंचरात्रादिस्मृतयश्च **उत्तमं मानं** मुख्यप्रमाणमिति योज्यम् । अनेन रुद्रादीनां सर्वोत्तमत्वं परास्तम् ।।१।।

**लिंघेरी** – उक्तार्थे युक्तिसमयश्रुतिन्यायोपेतश्रुत्यविरोधान्क्रमेण पादचतुष्टये दर्शयति **श्रौत** इति। **स्मृतयः** पाशुपतादिस्मृतयः **हरेः** नारायणस्य गुणान् **निषेद्धुं** निषेधं कर्तुं **न शक्नुयुः** शक्ता न भवन्ति । कुतः ? इत्याकांक्षायां **श्रौतस्मृतिविरुद्धत्वात्** श्रुतिमूलकस्मृतिविरुद्धत्वात्। मन्वादिस्मृतीनां श्रुतिमूलकत्वेऽपि पाशुपतादीनां विरुद्धत्वम् । कुतः? **वेदाः उत्तमं मानं नित्यत्वात्** वेदानामुत्तममानत्वात् । अनेन रुद्रादीनां सर्वोत्तमत्वं निरस्तम् ।।१।।

**नारायणपण्डित**– श्रौतस्मृति इत्यनेन स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाश-दोषप्रसंगादिति नयार्थो भण्यते। श्रौतस्मृतिविरुद्धत्वात् श्रुतिसंवादिपंचरात्रादिस्मृति-बाधितत्वाच्छैवादिस्मृतयो हरेः श्रुत्युक्तान्गुणान्निषेद्धुं न शक्नुयुः । तद्बाधनाक्षमा इत्यर्थः ।।१।। न विलक्षणत्वादस्य तथात्वं च शब्दादित्यस्यार्थो वेदाः नित्यत्वान्मानमुत्तममिति। वेदाः नित्यत्वादपौरुषेयत्वादुत्तमं मानं संवादनिरपेक्षम्। स्मृतयोऽपि तदनुसारेण वेदशब्दवाच्यत्वादुत्तमं मानम् । पुरुषनिबन्धनदोषाभावादित्यर्थः ।।२।।

**गूढकर्तृक** – तदेतत्पादार्थं संगृह्यात्यणुभाष्यकारः भगवान् । **श्रौतस्मृतिविरुद्धत्वात्स्मृतयो न गुणान् हरेः। निषेद्धुं शक्नुयुर्वेदा नित्यत्वान्मानमुत्तमम् । देवतावचनादापो वदन्तीत्यादिकं वचः। नायुक्तवाद्यसन्नैव कारणं दृश्यते क्वचित् । असज्जीवप्रधानादिशब्दाः ब्रह्मैव नापरम् । वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः। स्वातन्त्र्यात् सर्वकर्तृत्वान्नायुक्तं तद्वदेच्छुतिरिति।** आद्याधिकरणार्थः श्रौतस्मृतीति। **श्रौतस्मृतिविरुद्धत्वात्** श्रुतिसंवादि-पंचरात्रादिस्मृतिबाधितत्वात् । शैवादिस्मृतयो हरेर्गुणान् श्रुत्युक्तान् निषेद्धुं न शक्नुयुः। तदभावबोधनाक्षमा इत्यर्थः। द्वितीयाधिकरणार्थः वेदाः नित्यत्वान्मानमुत्तमम्। वेदाः **नित्यत्वात्** अपौरुषेयत्वात् **उत्तमं मानम्** संवादनिरपेक्षम् । स्मृतयोऽपि तदनुसारेण वेदशब्दवाच्यत्वात् उत्तमं मानम् । पुरुषनिबंधनदोषाभावादित्यर्थः।

**अणुभाष्यम्**

**देवतावचनादापो वदन्तीत्यादिकं(दिना) वचः।**
**नायुक्तवाद्यसन्नैव कारणं दृश्यते क्वचित् ।।२।।**

**सत्यनाथीया– आपो वदन्ति** इत्यर्थानुवादः । "आपोऽब्रुवन् तत्तेज ऐक्षत" इत्यादिकं वचः। न युक्तिविरुद्धार्थः। भूतदेवतावचनात्। स्वातन्त्र्यात् तच्छब्दप्रवृत्तिनिमितवत् मुख्यार्थदेवकर्तृकवचनादिप्रतिपादकत्वादित्यर्थः। असदिति चेन्न प्रतिषेधमात्रत्वात् इत्यस्यार्थः असन्नैव कारणं दृश्यते क्वचित् इति। द्विविधमसज्जगत्कारणं नैव । क्वचिद्वस्तुनि असत्कारणं नैव दृश्यते। प्रमाणैरिति शेषः।

**आनन्दमाला** – ननु "आपोऽब्रुवन्" (शत.ब्रा.१-१-३) इत्यादिवचनमचेतनानां वक्तृत्वं वक्ति। तच्च आपो वक्त्यो न भवन्ति, अचेतनत्वादित्यादियुक्तिविरुद्धम् । तस्माद् वेदवचोऽपि क्वचिदयुक्तार्थवादित्वादमानमित्यत आह –"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्"(२-१-६) इत्यधिकरणम् । **देवतावचनान्नापो वदन्तीत्यादिना वचः। नायुक्तवादि** इति। तत्र ह्यभिमन्यमाना अचेतनरूपा आपो न वदन्तीत्युच्यन्ते। कुतः? तदभिमानिदेवतावचनात् । अस्य पदस्यार्था उच्यन्ते – देवतावक्तृकं हि तद्वचनम्, देवतानामेव वक्तृत्वमिति हि विद्वद्वचनम्, देवताविषयं ह्यबादिशब्दैर्मुख्यतो वचनमित्यादिना विषयविभागन्यायेन निरूप्यमाणे सति युक्तार्थवादित्वावगमाद् वेदवचो नायुक्तार्थं वक्ति। उक्तप्रकारेण निर्दोषत्वात् । "ग्रावाणः प्लवन्ते" इत्यादावप्येवमेव द्रष्टव्यम् ।।३।।

**तत्वमञ्जरी–** नन्वथापि अतोऽनन्तगुण इत्ययुक्तम् ।(शत.ब्रा.६-१-३) "आपोऽब्रुवन्" "मृदब्रवीत्" "ता आप ऐक्षन्त" इत्यादिवेदवचसः अबादिकं न वक्तृ जडत्वात्

घटवदित्यादियुक्तिविरुद्धत्वेन अमानत्वे तत्सामान्यादितरेषु तथात्वमिति जैमिनिन्यायेन सर्ववेदवचसि प्रामाण्येऽनाश्वासादित्यतः प्राप्तम् - **अभिमानिव्यपदेशस्तु** इति योगद्वयम् । तदर्थः - **देवतावचनादापो वदन्तीत्यादिकं वचः । नायुक्तत्वादि** इति।

आपो वदन्तीत्यर्थानुवादः। शाखान्तरवाक्यं वा । ''आपोऽब्रुवन्'' इत्यादिकं वचः न युक्तिविरुद्धार्थवादी। कुतः ? **देवतावचनात्**। देवताकर्तृकवचनादित्यर्थः। उपलक्षणमेतत् । ईक्षणादेः देवताकर्तृकत्वादित्यर्थः।

तदेव कुतः? **देवतावचनात्** । अबादिशब्दैः अबाद्यभिमानिचेतनरूपदेवतानामभिधानादित्यर्थः। ननु कथं युक्तिविरोधमात्रेण अबादिपदानां अमुख्यार्थान्तरग्रहणम् । ''प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्'' इत्युक्तेरित्यतोऽबादिजडादप्यभिमानिचेतने तच्छब्दानां मुख्यत्वमिति सूचनाय वचनादित्यभिधावृत्तिरुक्ता । तत्राबादिशब्दप्रवृत्तिनिमित्ताप्त्वादिकं प्रति स्वातन्त्र्यरूपतदधीनत्व सूत्रोक्तन्यायस्मारणाय स्वामिवाचिदेवतापदप्रयोगः। अन्यथा चेतनेत्येव ब्रूयात् ।

ननु देवता नास्त्येव। मानाभावात् । शरीरेन्द्रियादिमत्त्वे चोपलम्भापत्तेः। अन्तर्धानशक्तौ च न मानमित्यनुपपत्तिनिरासायापि **देवतावचनात्** इति। ''पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजस'' (भ.पु)इत्यादितादृशदेवताप्रतिपादकागमरूपवचनादित्यर्थः। तथा च देवतातद्विग्रहतदन्तर्धानाभिमन्य-मानव्यापकत्वादेः सिद्धत्वान्न कोऽपि दोष इति।।३।।

नन्वथापि न सर्वकर्तत्वाद्यनन्तगुणो हरिरिति युक्तम् । सर्वे भावाः प्रलयेऽसन्तो भावत्वात् कार्यवदिति युक्त्या लये भावमात्रासिद्धौ कार्यस्य कर्त्रुपादानपूर्वकत्वनियमयुक्त्या(छा.उ.६-२-१) ''असदेवेदमग्रे'' ''स यद्यदेव तन्मनोऽकुरुत'' इत्यादिश्रुत्युपसर्जनतया कारणत्वेनोपेतस्य लयवर्तिविश्वप्रागभावस्य कर्तृत्वसाधनेन तद्विरोधादनन्यगत्या तस्यैवोपादानत्वात् । न च जडस्य कर्तृत्वायोगः। वृक्षेण स्थीयते इत्यादौ कर्तृवाचितृतीयादर्शनात् । न चाभावस्य भावोपादानत्वायोगः। नीरूपस्य वायो रूपयुक्ताग्न्युपादानत्ववदुपपत्तेः। कुत एवेश्वरः कुतस्तरां तस्य सर्वकर्तृत्वं कुतस्तमां अनन्तगुणता तस्येत्यतः प्राप्तं - **असत्** इति चेदित्यादिसूत्रषट्कम् । तदर्थः - **असन्नैव कारणं दृश्यते क्वचित्** इत्यादि।

अत्रासच्छब्देन लयवर्तिविश्वप्रागभाव उच्यते। कारणशब्दः कर्तृवचनः। अभावो नैव कर्ता कुत इत्यतोऽपि **असत्** इति। हेतुगर्भमिदम् । अभावत्वात् निषेधैकस्वरूपत्वात् । तावता कुतो कर्तृतेत्यतोऽपि **असन्नैव कारणं दृश्यते क्वचित्** इति । अभावःकर्ता क्वापि नोपलभ्यत इति व्यभिचाराभावोक्त्या योऽभावः सोऽकर्ता इति व्याप्तिलाभात्तद्बलादिति भावः। ननु लोकेऽदृष्टमपि अस्तु विश्वप्रागभावस्य उक्तदिशा कर्तृत्वमुपादानत्वं च । तथा चाप्रयोजको हेतुरित्यतोऽपि -

**असत्** इति। असदेवेत्येवकारान्वयः। यद्यसत् अभावः कर्तृ उपादानकारणं तर्हि क्वचित्प्रलयेऽसदेव स्यादिति शेषः। **अभावमात्रावशेषः स्यात्** । कार्यनाशे उपादानकारणावशेषनियमात् । नेदमनिष्टमित्यतोऽपि **न दृश्यते क्वचित्** इति। क्वापि प्रमाणे लयेऽभावमात्रावशेषस्यादर्शनादित्यर्थः। भावत्वं तु लयरूपे काले व्यभिचारि । श्रुतिगतिस्तु वक्ष्यते। तथा चाप्रामाणिकस्वीकार-रूत्वादनिष्टमेवेति नाप्रयोजको हेतुरिति भावः।

किञ्च प्रामाणिकपरित्यागरूपत्वाच्चेदमनिष्टं इत्यप्याह - **असत्** इत्यादिना। कारणं क्वचित् प्रळये असन्नैव अभावो नैव। किन्तु भाव एव। कुतः ? **दृश्यते क्वचित्** । अनुमानरूपे प्रमाणे तथोपलम्भादित्यर्थः। विमतोत्पत्तिः भावाधीना उत्पत्तित्वात् घटोत्पत्तिवत् । विमतो विनाशः सशेषः नाशत्वात् घटनाशवत् इत्यनुमानेन लये भावकारणसिद्धेरिति भावः।

**नृसिंहतीर्थ** – पुनः विष्णोस्सर्वकर्तृत्वादिप्रतिपादकवेदप्रामाण्यं दृढयितुं विरोधपरिहारार्थस्य तृतीयाधिकरणस्य तात्पर्यम् देवता इति । आपो वदन्तीति वचः अयुक्तत्वात् आपः न वक्तारः जडत्वादिति युक्तिविरुद्धार्थत्वादिति न भवति। कुतः ? देवतावचनात् । अबादि-शब्दैरबाभिमानिदेवताप्रतिपादनात् । देवतानां वक्तृत्वादौ युक्तिविरोधाभावादित्यर्थः। आदिपदेन "मृदब्रवीत्" "ता आप ऐक्षन्त" इत्यादेःग्रहणम् ।

**श्रीनिवासतीर्थीया–** अभिमान्यधिकरणार्थः **देवतावचनादापो वदन्तीत्यादिकं वचः। नायुक्तवादि** इति। आपोऽब्रुवन्नित्यस्यानुवादः आपो वदन्तीति। आपोऽब्रुवन् तत्तेज ऐक्षतेत्यादिकं वचः नायुक्तवादि। कुतः? देवतावचानात्। स्वातन्त्र्यतच्छब्दप्रवृत्तिनिमित्तवत् मुख्यार्थ-भूतदेवताकर्तृकवचनादि प्रतिपादकत्वादित्यर्थः। असदिति चेन्न प्रतिषेधमात्रत्वादित्यधिकरणार्थः **असन्नैव कारणं दृश्यते क्वचित्** इति। अभावस्तत्प्रतियोगि चेति द्विविधमप्यसत् । जगत्कारणेनैव क्वचिदपि वस्तुनि असत् कारणं नैव दृश्यते प्रामाणिकैरिति शेषः।

**छलारी –**

**ओं अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ओं**

अभिमानिव्यपदेशः "मृदब्रवीत्, आपो अब्रुवन्" (शत.ब्रा.६-१-३)इत्यादौ अभिमानि-देवताया एव व्यपदेश न जडस्य । येन युक्तिविरोधः स्यात् । ननु अभिमानिदेवतायाः एकदेशवृत्तित्वनिर्देहत्वयोः अङ्गीकारे क्रमेण देवताङ्गीकारवैय्यर्थ्यवचनाद्ययोगौ स्यातां, व्याप्तिमङ्गीकृत्य सदेहत्वाङ्गीकारे अनुपलम्भबाध इत्यत उक्तं - विशेषानुगतिभ्यां इति। सामर्थ्य-विशेषदेहसहितव्याप्तिभ्यां अनुपलम्भोपपत्तेरिति सूत्रार्थः।।

अत्र वेदो न प्रमाणम् । "आपो अब्रुवन्, मृदब्रवीत् , तत्तेज ऐक्षत, ओषधयः संवदन्त" इत्यादिवेदवाक्यानां, अबादिकं न वदति जडत्वादित्यादियुक्तिविरुद्धत्वादिति प्राप्ते -

वेदो नाप्रामाणं अपि तु प्रमाणमेव। "आपो अब्रुवन्" इत्यादिश्रुतेः अभिमानिदेवतापरत्वेन युक्तिविरोधाभावादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **देवता** इति। आपो वदन्तीत्यर्थानुवादः, शाखान्तरस्थं वाक्यं वा । आपो वदन्तीत्यादिकं वचः वेदवाक्यं, अयुक्तवादि युक्तिविरुद्धार्थवादि न भवति, कुतः ? देवतावचनात् । अभिमानिदेवतावाचकत्वात् । आदिपदेन "ता आप ऐक्षन्त" इत्यादेः ग्रहणम् ।।३।।

**नारायणाचार्य-** ननु "आपो अब्रुवन्" "मृदब्रवीत्" (श.ब्रा६-१-३)इत्यादिवेदस्य युक्तिविरुद्धार्थप्रतिपादकस्य कथं प्रामाण्यमित्याशंकापरिहाराय सूत्रं **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां** इति । अस्यार्थः। अबाद्यभिमनिन एव तत्र वक्तृत्वेन व्यपदिश्यन्ते । तासां सामर्थ्यविशेषस्याभिमन्यमानव्यापकत्वस्य च सत्वादिति। नन्वेतत्कल्पनमप्रमाणिकमित्यतः सूत्रं **दृश्यते च** । तासां सामर्थ्यं महद्भिः ।

पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः।
अचिन्त्याः शक्तयस्तासां दृश्यन्ते योगिभिश्च ताः।। इति ।

तत्तात्पर्यमाह। **देवतावचनादापो वदन्तीत्यादिकं वचः। नायुक्तवादि** इति । अयुक्तस्य युक्तिविरुद्धस्यार्थस्य प्रतिपादकं न भवति । शेषं स्पष्टार्थमेतत् ।

**मळगी - देवतावचनात्** इति आपो वदन्तीत्यादिवचनस्य देवतावचनात् । "पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः। अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः। ताश्च सर्वगता नित्यं वासुदेवैकसंश्रया" इति भविष्यत्पर्वोक्ताबाद्यभिमानिदेवतासंग्राहकत्व-तात्पर्यकत्वेन प्रस्तुतत्वात् तासां देवतानां सर्वत्रानुगतिः विशिष्टं सामर्थ्यं चास्ति अतस्तद्वचः **अयुक्तवादि न** अनुपपन्नभाषि न। "असतः सदजायत" इति श्रुतेः असतः कारणत्वमस्त्विति चेन्न **असत्** शशविषाणादि। **क्वचित्** कस्मिंश्चित्कार्ये। कारणं सन्नैव दृश्यते।।२।।

**लिंघेरी - देवतावचनात्** इति आपो वदन्तीत्यादिकं वचः अभिमानिदेवतावाचकम् । तासां देवतानां सर्वत्रानुगतिः विशिष्टसामर्थ्यं च अस्ति । अतस्तद्वचः अयुक्तवादि न। "असतः सदजायत" इति श्रुते असतः कारणत्वमस्तीति चेन्न असच्छशविषाणं क्वचित्कारणं नैव दृश्यते ।।२।।

**नारायणपण्डित-** अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामित्यस्यार्थो देवतेत्यादिनोच्यते। आपो वदन्तीत्यर्थानुवादः। "अपोऽब्रुवन्, तत्तेजो ऐक्षत्" इत्यादिकं वचः न युक्तिविरुद्धार्थवादि ।

कुतः? देवतावचनत्वात्। स्वातन्त्र्यात् तच्छब्दप्रवृत्तिनिमित्तवत् मुख्यार्थभूतदेवताकर्तृकवचनादि-प्रतिपादकत्वादित्यर्थः ।।३।। असदिति चेन्न प्रतिषेधमात्रत्वात् इत्यस्यार्थः असन्नैव कारणं दृश्यते क्वचिदिति। द्विविधमप्यसज्जगत्कारणं नैव क्वचिदपि वस्तुनि असत्कारणं दृश्यते। प्रमाणैरिति शेषः ।।४।।

**गूढकर्तृक** – अभिमानीत्यस्यार्थः **देवतावचनादापो वदन्तीत्यादिकं वचः । नायुक्तवादीति ।** युक्तिविरुद्धार्थवादी न इत्यर्थः। कुतः ? **देवतावचनात्** स्वातन्त्र्यात् शब्दप्रवृत्तिनिमित्तवन्मुख्यार्थ-भूतदेवताकर्तृकवचनादिप्रतिपादकत्वादित्यर्थः। असदिति चेदित्यस्यार्थः **असन्नेव कारणं दृश्यते क्वचित्** इति। द्विविधमप्यसत् जगत्कारणं नैव क्वचिदपि वस्तुनि असत्कारणं नैव दृश्यते। प्रमाणैरिति शेषः।

**अणुभाष्यम्**

**असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् ।**
**वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः ।।३।।**

**सत्यनाथीया–** एतेन शिष्टा परिग्रहा अपि व्याख्यातेत्यस्यार्थमाह **असज्जीव** इत्यादिना।यथाऽसत्कारणत्वेन क्वापि नोपलब्धम् । सुखादौ जीवस्य स्वातन्त्र्यादर्शनात्। प्रधानादेश्च जडत्वेनास्वातन्त्र्यदर्शनात् । कारणत्वपरासदादिशब्दाः तदधीनत्वादिना मुख्यं ब्रह्म वदन्तीत्यर्थः। भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् इत्यस्यार्थः **पूर्णगुणो हरिः** इति। जीवेशभेदस्य भेदनिर्दोषश्रुत्यादिसिद्धत्वेनाभेदबाधात् पूर्णगुण एव हरिरित्यर्थः।

**तत्वमञ्जरी–** नन्वभावस्य निषेधैकस्वरूपत्वेन विवक्षितकर्तृत्वायोगेऽपि घटादौ कर्तृत्वेन दृष्टस्य जीवस्यैव लाघवयुक्त्या विश्वकर्तृत्वमप्यस्तु। तथा प्रधानस्य विश्वोपादानस्य वाऽस्तु कर्तृत्वं, लाघवात् । अकारणकमेवोत्पद्यतां जगदुक्तयुक्तेः। न च युक्तिरप्रयोजिका । "जीवाद्भवन्ति भूतानि" "प्रधानादिदमुत्पन्नं" "अकस्माद्धीदमाविरासीत्" इत्यादि श्रुतिमूलत्वादित्यतः अमूषां पूर्वोक्तश्रुतेश्च अन्यथासिद्धिं एतेनेति षष्ठगुणसूत्रस्मारितामाह – **असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् । वदन्ति कारणत्वेन क्वापि** इति । "एतेन सर्वे व्याख्याताः" इत्यत्रोक्तन्यायेनेति भावः। तथा च युक्तिर्निर्मूलत्वात् अप्रयोजिकैवेति भावः।

यद्वा "असन्नैव कारणं" इत्यत्र असत्पदोद्धारेण जीवपदावापेन जीवः क्वापि कारणं नैव दृश्यते। येन लाघवावतारः स्यादिति व्याख्येयम् । जीवस्य सुखदुःखादौ स्वतन्त्रकर्तृत्वाभावदर्शनेन घटादावपि तथाऽनुमानादिति भावः ।।४।।

नन्वथापि अनन्तगुणो हरिरित्यसाधु अल्पगुणजीवाभिन्नत्वात् जीववदिति युक्तिविरुद्धत्वात् । न चासिद्धिः। ''परेऽव्यये सर्व एकीभन्ति'' इति श्रुतिसिद्धत्वात् । श्रौतैक्यस्य च ब्रह्मधर्मत्यागेन तस्य जीवसालक्षण्येन वा, जीवधर्मत्यागेन तस्य ब्रह्मसालक्षण्येन वा उभयधर्मत्यागेन चिन्मात्रेण वा निर्वाह्यत्वादित्यतः प्राप्तम् - **भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्** इति। तदर्थः **पूर्णगुणो हरिः** इति।

निर्दोषश्रुतिसाक्षिभ्यां प्रमितेशजीवधर्मत्यागायोगेन ऐक्यस्य बाधिततया हेतोरसिद्धिः। श्रौतैक्योक्तिस्तु उदके उदकान्तरस्यैक्योक्तिवत् स्थानैक्यादिना गौणी नेयेति भावः।।५।।

**आनन्दमाला -** तर्ह्यमनस्कमेवासत् कारणमस्तु। नो चेत् जीवः प्रधानं वा भवतु। तेषामपि युक्तेः। ''अकस्माद्धीदमाविरासीत्'' इत्यादेः जगदाकस्मिकसत्वं सत्त्वात् ब्रह्मवत् । ''जीवाद् भवन्ति भूतानि'' इत्यदेः जीवकर्तृकं कार्यत्वात् घटवत् । ''प्रधानादिदमुत्पन्नम्'' इत्यादेरचेतन-कर्तृकम्, अचेतनत्वात् , दध्यादिवदित्याद्याः शिष्टापरिग्रहा अप्यत्र निराकृताः। तथा च भाष्यार्था उच्यन्ते - अमनस्कमप्यसन्नैव कारणं प्रमाणैः दृश्यते । ''यः सदोषः'' (काषायण) इत्यादिश्रुतेर्जीवस्तु सदोषत्वादसन्नित्युच्यते। सोऽपि नैव स्वतः कारणं ज्ञायते। अस्वातन्त्र्यानुभवात् । अचेतनमपि नीचत्वेन निन्द्यत्वादसदिति गदितम् । तच्च जगतो निमित्तकारणं न श्रूयते। यच्च पुनस्तैस्तैरीदृशमुत्प्रेक्ष्यमाणं नानावस्तु तच्च असदभद्रम् । न ह्यज्ञप्रलपितं कारणमिति विद्वद्बुद्धौ प्रतीयते। पूर्ववादोक्तहेतवश्च सर्वे कालात्ययापदिष्टाः प्रति साधनं च प्रत्येकं समस्ति । असदादिकमजगत्कारणम्, अस्वेच्छाधीनत्वात् । जीवप्रधानादिवदित्यादि। अपि च विमतमनाकस्मिकसत्त्वम् कार्यत्वात् घटादिवत्, विमतमजीवकर्तृकम् घटाद्यतिरिक्तकार्यत्वात् दुःखविशेषवत् । विमतं नाचेतनमुख्यकर्तृकं अतन्निमित्तकत्वात् इच्छादिवदित्यादिकं च प्रतिसाधनं बोद्धव्यम् श्रुत्यादिमूलत्वात् ।

एवं चेदसदादिश्रुतीनां का गतिरित्यत आह - **असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् । वदन्ति कारणत्वेन क्वापि** इति। असदादिवादिभिरुपन्यस्तश्रुतिषु पठ्यमाना असज्जीव-प्रधानादिशब्दाः सर्वेऽपि विष्ण्वाख्यमेकं ब्रह्मैव कारणत्वेन वदन्ति। अपरं तैरुत्प्रेक्षितमसदादिकं कारणत्वेन न वदन्ति। सर्वमानविरोधोक्तेः। तथापि क्वचिदविरोधे मुख्यार्थानन्तरममुख्यमपि लोकरूढं यथायोग्यधर्मेण वदन्ति। तदेतत् कारणत्वेन इति विशेषणसामर्थ्यादवगम्यते। अङ्क्षिशब्दस्त्वसच्छब्दग्रहणाद् गृहीतः। आदिशब्दात् कर्मैव देहं दैविकं मानुषं वा इत्यादिवाक्यगताः कर्मादिशब्दाच्च ब्रह्मैव परमं कारणं वदन्ति। अन्यस्यामुख्यत्वात् ।।४।।

''भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्'' (२-१-१४) इति सूत्रम् **पूर्णगुणः** इति। सुखदुःखादि भोक्तुर्जीवस्य स्वातन्त्र्यादिगुणराहित्यादेव हि कारणत्वं निषिद्धम् । परस्यापि तदेकीभावोक्तेः

**कारणत्वासम्भव इति चेत् । न । स्थानाद्यभेदवचनेऽपि लोकवत् स्वरूपभेदोपपत्तेः । अतः सृष्ट्यादिषु कारणभूतैः स्वातन्त्र्यसार्वज्ञ्यादिभिः स्रष्टृत्वादिभिश्च प्रत्येकमपि पूर्णैर्गुणैः पूर्णतमो नारायण इति न तत्कारणत्वे कश्चिद् विरोधः ।।५।।**

**"तदनन्यत्वमारम्भणशब्दादिभ्यः" (२-१-१५) इत्यधिकरणम् हरिः इति । यद्यपि तत्तत्प्रवर्तन स्वातन्त्र्यसार्वज्ञ्यादिप्रकृष्टगुणविशिष्ट एव सृष्ट्यादौ निमित्तमिष्टः । तथापि तत्तत्कार्यकर-त्वाद्यनन्याधीनगुणयुङ् नानासाधनमेव तन्निर्वाहकमिति न मन्तव्यम् । किन्तु तत्तत्कार्यकरत्वाद्य-गणितगुणगणपरिपूर्णत्वेन निर्वाहकोऽपि हरिरेव सुश्रुतः । अतन्नियतस्य द्रव्यादेः साधनस्य सर्वत्रानुपलभ्यत्वात् ।।६।।**

**नृसिंहतीर्थ –** विष्णोर्जगत्कारणत्वे श्रुतिमूलत्वेन प्रबलयुक्तिविरोधपरिहारार्थस्य चतुर्थाधिकरणस्य तात्पर्यम् **असत्** इति । असत् क्वचित्काले देशे वा क्वचित्कार्ये वा कारणं नैव दृश्यते इत्यर्थः । असतो जगत्कारणत्वं अप्रामाणिकमिति भावः । ननु "असदेवेदमग्र आसीत्" इत्यादिश्रुतिसद्भावात् कथं प्रमाणाभाव इत्यतस्तस्यार्थान्तरं वदन् जीवकारणत्वप्रधानकारणत्वादिप्रतिपादकश्रुति-मूलकयुक्तिपरिहाराय तासामप्यर्थान्तरमाह **असत्** इति । असज्जीवप्रधानादिशब्दाः ब्रह्मैव कारणत्वेन वदन्ति । क्वापि अपरं शून्यादिकं कारणत्वेन न वदन्तीत्यर्थः । अत्रादिपदेनानेकेषामादिशब्दानां ग्रहणम् । अनेनैतदधिकरणशेषस्यैव एतेनेति सूत्रस्य तात्पर्यमुक्तं भवति ।

नन्वसदादिशब्दानां ब्रह्मवाचकत्वं कुत इत्यत आह **पूर्ण** इति । हरिः असदादि-शब्दप्रवृत्तिनिमित्तगुणैः पूर्ण इत्यर्थः । असदादिशब्दप्रवृत्तिनिमित्तत्वमात्रं वक्तव्यं पूर्णगुण इति वचनं तु कैमुत्यार्थम् । अनन्तगुणपूर्णस्य भगवतो असदादिशब्दप्रवृत्तिनिमित्तगुणवत्वं किं वक्तव्यमिति ।

**श्रीनिवासतीर्थीया –** एतेन शिष्टाऽपरिग्रहा अपि व्याख्याता इत्यधिकरणार्थ-माह **असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् । वदन्ति कारणत्वेन क्वापि** इति । यथा असत्कारणत्वेन क्वापि नोपलब्धं तथा अपरं जीवप्रधानकालकर्मादिकमपि कारणं क्वापि नोपलब्धम् । सुखादौ जीवस्य स्वातन्त्र्यादर्शनात् । प्रधानादेश्च जडत्वेनास्वातन्त्र्यत्वात् कारणत्वपर असदादि-शब्दाः तदधीनत्वादिना मुख्यं ब्रह्मैव वदन्तीत्यर्थः । भोक्त्रापत्तेरित्यस्यार्थः **पूर्णगुणो** हरिः इति ।

**छलारी –**

**ओं असदिति चेन्न प्रतिषेधमात्रत्वात् ओं**

असदेवेति श्रुतेःअसत्कारणमिति चेन्न । प्रतिषेधमात्रत्वात् । प्रतिषेधबुद्धिमात्रविषयत्वात् । त्रैकालिकनिषेधप्रतियोगित्वादिति यावत् इति सूत्रार्थः ।

अत्र न विष्णोः जगत्कारणत्वं युक्तम् । प्रमाणाभावत् । न चोक्तश्रुतिः प्रमाणम् । "असदेवेदमग्र आसीत्" इति श्रुत्या असतोऽपि कारणत्वोक्तेः इति प्राप्ते -

युक्तमेव विष्णोः जगत्कारणत्वं न त्वसतः। निस्स्वरूपत्वात् । न हि शशविषाणस्य किञ्चित्प्रति कारणत्वं सम्भवति। न च श्रुतिविरोधः। "एतेन सर्वे व्याख्याता" इति असदादिशब्दानां विष्णुविषयत्वोक्तत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **असन्नैव** इति। असत् शशविषाणादिकं क्वचित् देशे काले वा क्वचित्कार्ये कारणं भवदिति शेषः। नैव दृश्यते। असतो जगत्कारणत्वमप्रामाणिकमिति भावः। ननु असत्कारणत्वे श्रुतिसद्भावात् कथं प्रमाणाभावः इत्यतः श्रुतेः अर्थान्तरं वदन् प्रसङ्गाज्जीवकारण-कत्वप्रधानकारणकत्व अकारणकत्वादिप्रतिपादकश्रुति मूलकयुक्तिविरोधपरिहाराय तासामप्यर्थान्तरमाह - **असज्जीव** इति। असज्जीवप्रधानादिशब्दाः असज्जीवप्रधानादिप्रतिपादिकाः श्रुतयः इत्यर्थः। "असदेवेदमग्र आसीत्" (छां.उ.६-२-१) "असतस्सदजायत" (ऋ.सं.१०-७२-३)

जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः।
जीवे तु लयमिच्छन्ति न जीवात्कारणं परम्।

प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति।
प्रधाने लयमभ्येति न ह्यन्यत्कारणं मतम्।।

"अकस्माद्धीदमाविरासीत् । अकस्मात्तिष्ठति । अकस्माल्लयमभ्युपैति" इत्यादिपदोपात्तश्रुतिः। तथा च असज्जीवप्रधानादिशब्दाः - "असदेवेदमग्र आसीत्" इत्यादिश्रुतयः। ब्रह्मैव विष्णुमेव कारणत्वेन वदन्तीत्यर्थः। क्वापि प्रदेशे अपरं असदादिकं कारणत्वेन न वदन्तीत्यर्थः।

ननु असदादिशब्दानां ब्रह्मवाचकत्वं कुत इत्यत आह - **पूर्णगुण** इति। यत इति शेषः। यतो हरिः असदादिसर्वशब्दप्रवृत्तिनिमित्तगुणैः पूर्ण इत्यर्थः। अन्यथा गुणपूर्णत्वं न स्यात्। गुणपूर्णत्वे हेतुः - **सर्वकर्तृत्वात्** इति। तत्रापि हेतुः - **स्वातन्त्र्यात्** इति ।।४।।

## ओं भोक्त्रापत्तेरविगाश्चेत्स्याल्लोकवत् ओं

भोक्त्रापत्तेः - भोक्तुर्जीवस्य, आपत्तेः - ब्रह्मत्वप्राप्तेः। "परे अव्यये सर्व एकीभवन्ति" इत्यादौ व्यपदेशात् । तयोरविभागः भेदाभावः ऐक्यमिति चेन्नेति शेषः। स्यात् लोकवत् - उदके सिक्तोदकान्तरस्यैक्यव्यपदेशवदयं व्यपदेशः स्यादिति सूत्रार्थः।

अत्र न विष्णोः जगत्कर्तृत्वादिकं युक्तम् । तस्य जीवाभिन्नत्वात् । जीवाभेद एव कुत इति चेन्न। "परेऽव्यये सर्व एकीभवन्ति" इति श्रुतेरिति प्राप्ते -

न विष्णोः जगत्कर्तृत्वादिकं विरुद्धं, जीवेश्वरयोरभेदाभावात् । न च श्रुतिविरोधः। स्थानैक्यालम्बनत्वेन जलैकीभावोक्तिवदुपचरितत्वोपपत्तेः इति सिद्धान्तः कृतः।

एतदधिकरणतात्पर्यस्य अन्यश्च जीवतः इति प्रथमतृतीयत्रयोदशनय एवोक्तत्वात् पृथक्तात्पर्यानुक्तिर्न दोषः ।।५।।

**नारायणाचार्य-** ननु(छां.उ.६-२-१) ''असदेवेदमग्र आसीत्'' ''असतः सदजायत'' (ऋ.सं.१०-७२-३) इत्यादि श्रुत्या सहकृतया युक्त्या असत एव कर्तृत्वमवगम्यते। यद्यपि प्रथमाध्याये असच्छब्दो मुख्यवृत्या हरावेवेत्युक्तम् । तथाप्यवान्तरतात्पर्यं अन्येषु अपि अङ्गीकृतमेवेति मन्वानस्य शंका असच्छब्दस्तु अत्र अभावार्थकः। ईश्वरवादिनापि प्रलये महदादिकार्यप्रागभावः स्वीकृतः । तथा च तस्मादेव कार्योत्पत्तावीश्वरांगीकारो व्यर्थ इत्यशंक्य समादधत्सूत्रं **ओं असदिति चेन्न प्रतिषेधमात्रत्वात्** इति। असत् अभावरूपम् । जगत्कर्तृतदन्यस्य प्रलये असत्वात् ईश्वरादिकं प्रलये असत् वस्तुत्वान्महदादिवदित्यनुमानेनेतरस्याभावात् । कार्यस्य च सकर्तृकत्वनियमादगत्या जडस्यापि प्रागभावस्यैव कर्तृत्वमिति चेन्न प्रतिषेधमात्रशरीरत्वान्नासतो अभावस्य कर्तृत्वं युक्तमित्यर्थः। धर्मद्वारमन्तरेण प्रतिषेधस्वरूपत्वं प्रतिषेधमात्रत्वं अभावैकस्वभावत्वरूपसंसर्गाभावत्वम् । नत्वन्योन्याभावत्वं तस्य भावाभावस्वरूपत्वात् । तेन कुलालादेरितरभेदरूपप्रतिषेधात्मकत्वेऽपि कर्तृत्वान्न व्यभिचारः। सुधाभिप्रायेणायं प्रागभावकर्तृत्ववादपूर्वपक्षः। तत्वप्रकाशिकायां अत्यन्तासदेव गृहीत्वा पूर्वपक्षः। उभयस्यापि तस्य तात्पर्यमाह **असन्नैव कारणं दृश्यते क्वचित्** । कारणं कर्तृरूपम्। तस्यैव प्रक्रमात् । क्वचिन्नैवेति वदता कारणत्वमात्रमपि न सम्भवति किमुत तद्विशेषः कर्तृत्वमिति सूचितम्।

तथाहि तस्य कारणतां वदता किमुपादनात्वमंगीक्रियते कर्तृत्वादिनिमित्तकारणत्वं वा। अत्र उपादनत्वे प्रलये कारणमात्रावशेषात्सर्वासत्त्वं स्यादित्यर्थप्रतिपादकसूत्रं **ओं अपीतौ तद्वत्प्रसंगादसमंजसम्** इति । असत एवोपादनत्वे प्रलये असन्मात्रावशेषः स्यात् । भावप्रधानत्वं असत्वं अपीतौ प्रसज्येतातस्तन्मतमसमंजसमिति सूत्रार्थः। न चेष्टापत्तिरित्यतः सूत्रं **न तु ओं दृष्टान्तभावात्** इति। विमतो विनाशो भावशेषः विनाशत्वात् घटादिविनाशवत् । सच्छेषत्व एव दृष्टान्तभावादसन्मत्रावशेषो न युक्त इत्यर्थः। द्वितीयपक्षप्रतिषेधार्थं चैतत्सूत्रं **ओं न तु दृष्टान्तभावात्** इति। तदपि दृश्यते नैवेति युक्त्या व्याख्यातम् । असतः कर्तृत्वं कुत्रापि न दृश्यते अतो दृष्टान्ताभावात्सत एव कर्तृत्वे दृष्टान्तभावाच्च नासतः कर्तृत्वमित्यर्थः।

प्रलये सर्वासत्वमप्रामाणिकत्वान्नांगीकार्यमित्यर्थकं सूत्रं **स्वपक्षदोषाच्च**। दृष्टान्ताभावादेव स्वपक्षसाधकं नास्तीत्यर्थः।

तर्कबलेन सदसतोः कारणत्वसाधनबाधने आक्षिप्य समादधत्सूत्रं **ओं तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंगः**। एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादन्यथाप्यनुमातुं शक्यत इति चेदेवंसति प्रमाणप्रसिद्धोऽपि मोक्षः अन्यथाप्यनुमातुं शक्यत्वान्मोक्षाभावप्रसंगस्तस्मात्प्रमाणसिद्धेऽप्यर्थे अन्यथानुमाने तत्प्रमाणबाधितमसदनुमानं कथं साध्यं साधयेत्। इदमप्याह **असन्नैव** इति। प्रमाणबाधादसदनुमानादि नैव कारणं प्रमाया इति शेषः। तस्मादुक्तश्रुतेः परमात्मैव कर्तेत्यर्थ इति भावः। नन्वेवमपि "अकस्माद्धीदमाविरासीत्"

जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः।
जीवे तु लयमृच्छन्ति न जीवात्कारणं परम् ।
प्रधानादिदमुपत्न्नं प्रधानमधितिष्टति।
प्रधाने लयमभ्येति न ह्यन्यत्कारणं मतम्।

इत्यादिश्रुत्युपष्टब्धानुमानैः फलपतनघटदध्यादिदृष्टान्तबलेन प्राप्तानि निष्कारणत्वजीवकारणत्वजडकारणत्ववादान्निराकर्तुं सूत्रं **एकेन शिष्टापरिग्रहाः अपि व्याख्याताः** इति ।

पूर्वोक्तन्यायेन दृष्टान्ताभावेन चेतनकतृत्वे एव दृष्टान्तभावेन अवशिष्टा अप्यपरिग्राह्याः विरुद्धसिद्धान्ताः पक्षास्तेऽपि निरस्ता इति तदर्थः। यद्यपि जीवस्य चेतनत्वात् कर्तृत्वसम्भावयितुं शक्यं तथापि स्वीयसुखदुःखाभावयोः अपेक्षितस्य स्वातन्त्र्यादर्शनान्न तस्यात्र कर्तृत्वमिति भावः। इदमप्याह । **असन्नैव** इति । सतो ब्रह्मणोऽन्यज्जीवाचेतनादि कारणं न दृश्यते इत्यर्थः।

ननु तर्ह्युदाहृतश्रुतीनां का गतिरित्यत आह। **असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् । वदन्ति कारणत्वेन क्वापि** इति। ब्रह्मैव वदन्ति नत्वपरमिति वदता अवान्तरतात्पर्येणामुख्यवृत्त्यापि तच्छब्दानामन्यपरत्वं नास्तीति सूचितम् । तदुक्तं यत्रान्यवाचकत्वेऽप्यविरोधः तत्राप्यन्यदमुख्यतयोच्यते। यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियम इति ।।४।।

ननु "परेऽव्यये सर्व एकीभवन्ति" इति श्रुतेर्जीवस्य ब्रह्म प्राप्य एकीभावः प्रतीयते । न चान्यस्यान्यभावो युक्त इति प्रागपि जीवात्मकत्वमेव जीवाभिन्नस्यापूर्णत्वान्न जगत्कारणत्वं युक्तमित्याशंक्य समादधत्सूत्रं **भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्**। इति भोक्तुर्जीवस्य ब्रह्मप्राप्तेरेकीभाव इति चेन्न यथा लोके सायं गोष्टे गाव एकीभवन्तीत्यादौ स्थानैक्यं मत्यैक्यं तदभिप्रायः तथात्रापि स्यादित्यर्थः। न तु मुख्ये सम्भवति लक्षितलक्षणाश्रयणमयुक्तमिति चेन्न मुख्ये बाधके सति तदाश्रयणस्यावश्यकत्वादन्यथा यजमानः प्रस्तर इत्यादावपि तदैक्यमर्थः स्यादिति तात्पर्यमाह **असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् । वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः** इति । अत्रासत् जीवप्रधानादिशब्दाः इति पदानि । योजना तु । शब्दाः वेदाः "परेऽव्यये

सर्व एकीभवन्ति'' इत्यादयः। अपरमनुत्कृष्टं जीवजातं ब्रह्मैव ब्रह्मात्मकमेवेति न वदन्ति । कुतो लक्षणाकल्पनमित्यत उक्तं यतः कारणत्वेन जगज्जन्मादिकारणत्वेन पूर्णगुणः हरिः क्व जीवप्रधानादि जीवेषु प्रधानः श्रेष्ठश्चतुर्मुखः जीवप्रधानः आदिर्यस्येत्येतादृशं जीवजातं असत् दुःखादिदोषस्पृष्टं क्व । तथा च पूर्णापूर्णगुणयोरैक्यायोगादुक्तं युक्तमिति भावः। यद्वा जीवाः ब्रह्माद्याः प्रधानं चित्प्रकृतिः आदिशब्दाज्जडाः असदस्वतन्त्रत्वादिदोषयुक्तम् । शेषं पूर्ववत् ।

तर्हि कस्तेषां शब्दानां अर्थ इत्यत आवृत्त्या कानिचित्पदानि योज्यानि । क्वापि विषये ब्रह्मब्राह्मणसमूहः अपरं भिन्नं न भवति किन्त्वेकमेवेतिवत् न इवार्थे अस्मिन्नर्थे सर्वे ब्राहणाः एकीभवन्ति इतिवत् मत्यैक्याद्यभिप्रायेण व्यपदेशोऽयमित्यर्थः।

**मळगी** –असदादिशब्दवाच्यत्वं हरेरेवेत्याह **असत्** इति। असच्च जीवश्च प्रधानं च तथा तान्येवादयो येषां ते तथोक्ताः असदादिशब्दाः ब्रह्मैव नारायणाख्यं परब्रह्मैव। कारणत्वेन वदन्ति। **अपरं** भगवदन्यं **क्वापि** कस्मिंश्चित्कार्ये। **कारणत्वेन** कर्त्तृत्वेन न वदन्ति ।

**लिंघेरी** – असच्छब्दवाच्यत्वं हरेरेवेत्याह **असज्जीव** इति। असच्च जीवश्च प्रधानं चासज्जीवप्रधानानि तान्येवादयो येषां ते तथोक्ताः। असज्जीवशब्दा ब्रह्मेव जगत्कारणत्वेन वदन्ति। **क्वापि** कस्मिंश्चित्कार्ये स्वातन्त्र्यात् सर्वकर्तृत्वात् हरिः पूर्णगुणः। **तत्** तस्मात्कारणात् श्रुतिः अयुक्तं न वदेत् ।।३।।

**नारायणपण्डित–** एतेन शिष्टा अपरिग्रहा अपि व्यख्याता इत्यस्यार्थ असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरं वदन्ति कारणत्वेन क्वापीति। असत्कारणत्वेन क्वापि नोपलब्धम् । तथा जीवप्रधानकालकर्मादिकमपि कारणं क्वापि नोपलब्धम् । सुखादौ जीवस्य अस्वातन्त्र्यदर्शनात्। प्रधानादेश्च जडत्वेन अस्वातन्त्र्यदर्शनात् कारणत्वपरा असदादिशब्दाः तदधिष्ठानत्वादिना मुख्यं ब्रह्मैव वदन्तीत्यर्थः ।।५।। भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् इत्यस्यार्थः पूर्णगुणो हरिरिति। जीवेशभेदस्य निर्दोषश्रुत्यादिसिद्धत्वेन अबाधात् पूर्णगुण एक एव हरिरित्यर्थः ।।६।।

**गूढकर्तृक** – एतेन शिष्टेति सूत्रार्थमाह **असज्जीवप्रधानीदशब्दा ब्रह्मैव नापरम् । वदन्ति कारणत्वेन क्वापीति**। यथा असत्कारणत्वेन क्वापि नोपलब्धम् । तथा जीवप्रधानकालकर्मादिकं अपि कारणं क्वापि नोपलब्धम् । सुखादौ जीवस्य स्वातन्त्र्यादर्शनात् । प्रधानादेश्च जडत्वेन अस्वातन्त्र्यात् । कारणत्वपराः सदादिशब्दाः तदधीनत्वादिना मुख्यं ब्रह्मैव वदन्तीत्यर्थः। भोक्त्रापत्तेरित्यस्यार्थः। **पूर्णगुणो हरिः** इति। जीवेशभेदस्य निर्दोषश्रुत्यादिसिद्धत्वेन अभेदबाधात् पूर्णगुण एव हरिरित्यर्थः।

## अणुभाष्यम्

**स्वातन्त्र्यात्सर्वकर्तृत्वान्नायुक्तं तद्वेच्छ्रुतिः।**
**भ्रान्तिमूलतया सर्वसमयानामयुक्तितः॥४॥**

**सत्यनाथीया** – तदन्यत्वमारम्भणशब्दात इत्यस्यार्थमाह **स्वातंत्र्यात्** इति। हरेरेव स्वातन्त्र्यात्तदनन्यसाधनत्वात्तन्नास्तीत्युच्यते यतोऽतः किंस्विदासीदिति श्रुतिर्नायुक्तं वदेत् किन्तु युक्तमेव वदतीत्यर्थः । इतरव्यपदेशात् हिताकरणादिदोषप्रसक्तिरित्यस्यार्थमाह **सर्वकर्तृत्वान्नायुक्तं तद्वदेच्छ्रुतिः** इति। हरिरेव सर्वकर्तृत्वात् न युक्तिविरुद्धजीवकर्तृत्वं वदतीत्यर्थः। श्रुतेस्तु शब्दमूलत्वात्, न प्रयोजनवत्वात्, वैषम्यनैर्घृण्येन सापेक्षत्वात्तथाहि दर्शयति, सर्वधर्मोपपत्तेश्च इत्यधिकरणचतुष्टयार्थः **नायुक्तं तद्वदेच्छ्रुतिः** इति। तद्धरेर्निर्दोषत्वसृष्ट्रत्वाद्यनन्तगुणवत्वं नायुक्तम्। तत्र पूर्वपक्षोक्तं युक्तिविरुद्धं यतो निर्दोषश्रुतिस्तथावदेत् वक्ति अत एवेत्यर्थः । शास्त्रीयोपपत्तिरनुसंधेयेति।

**॥ इति अणुभाष्ये द्वितीयाध्यास्य प्रथमः पादः ॥**

**तत्वमञ्जरी–** नन्वथापि न सर्वकर्तृत्वाद्यनन्तगुणो हरिरिति साधु। विमता सृष्टिः कर्त्रन्यस्वतन्त्रसाधनसाध्या, सृष्टित्वात् पटसृष्टिवदित्यनेकस्य स्वातन्त्र्यसाधकयुक्तिविरोधेन ईशस्यैव स्वातन्त्र्यबोधकवेदस्याप्रामाण्यादित्यतः प्राप्ते – **तदनन्यत्वमारम्भणशब्दादिभ्य** इत्यादियोग-सप्तकम्। तदर्थः **स्वातन्त्र्यात्** इति। हरेरिति विपरिणामेनान्वयः। नायुक्तं तद्वदेच्छ्रुतिः इति चेहाप्यन्वेति। हरेरेव स्वातन्त्र्यादन्यस्य अस्वातन्त्र्यात् युक्तिविरुद्धवादिनी श्रुतिर्न भवति। येनोक्तदोषः स्यादित्यर्थः। कुतो हरेरेव स्वातन्त्र्यमित्यतोऽपि **नायुक्तं** इत्यादि । तत् हरेरेव स्वातन्त्र्यं अन्यस्यास्वातन्त्र्यमित्येतत् ''किं स्विदासीदधिष्ठानमारम्भणं''(ऋ.सं.१०-८१-२) ''नासदा-सीन्नोसदासीत्तदानीं नासीद्रजो नो व्योम'' (ऋ.सं.१०-१२९-१) इत्यादिसाधनान्तर-स्वातन्त्र्यनिराकरणपरा श्रुतिर्वदेत् । तथाऽयुक्तं न युक्तिशून्यं न । सर्वस्य तत्तन्त्रत्वात् साधनसत्ताप्रदत्वात् इत्यादियुक्तिसिद्धं च यतोऽत इति योज्यम् ।

स्वरूपनिराकरणपरेयं कुतो नेत्यतः – **अयुक्तं तत्** इति। तत् साधनस्वरूप-निराकरणमयुक्तमित्यर्थः। कुत इत्यतोऽपि **नायुक्तं तद्वदेच्छ्रुतिः** इति। तत् साधनजातं श्रुतिर्वदेत् प्रतिपादयति। तदयुक्तं न । विमता सृष्टिः कर्त्रन्यसाधनसाध्या, सृष्टित्वात् पटसृष्टिवदिति युक्तिसिद्धं च यतोऽत इति योज्यम् । ''अद्भ्यः सम्भूतः पृथिव्यै रसाच्च'' (तै.आ.३-१३)इति, ''तम आसीत्'' (ऋ.सं.१०-१२९-३)इति, ''अद्भ्यः सम्भूतो हिरण्यगर्भ'' (म.ना.उ.१-११)इत्यष्टौ इत्यादिश्रुत्यादौ साधनान्तरसत्त्वोक्त्यन्यथानुपपत्तेः स्वातन्त्र्यरूपधर्मान्तरेण निषेधो न स्वरूपेणेति

भावः। तथा(काषायाणश्रुति) "तद्यदासीत्तदावृतमासीत्" "तस्माद्धान्यन्न परः किञ्च नास" इत्यादिका श्रुतिः तत् हरिस्वातन्त्र्यादिस्पष्टं वदेत् । अतश्चेति च योज्यम् । अप्रामाणिकत्वाच्च साधनान्तरस्वातन्त्र्यं नोपेयमित्याह - **नायुक्तं तद्वदेच्छ्रुतिः** इति। तत् साधनान्तरस्वातन्त्र्यं अयुक्तं युक्तिशून्यं श्रुतिर्न वदेत् । श्रुत्यसिद्धं चेत्यर्थः। प्रत्यक्षं तु तत्र नैव योज्यम्। अतः प्रमाणैरनुपलम्भान्न साधनान्तरस्वातन्त्र्यामिति भावः। विमता सृष्टिः कर्त्रन्यस्वातन्त्र-साधनसाध्येत्यादियुक्तिस्तु प्रागुक्तश्रुत्यादिना बाधिता। साधनसत्त्वश्रुतिस्तु परतन्त्रसाधनपरेति भावः।

नन्वथापि न हरिरेव स्रष्टृत्वाद्यनन्तगुण इति युक्तम् । जीवो महदादिविश्वकर्ता चेतनत्वात् ईशवाद्यङ्गीकृतेशवत् इत्यादियुक्त्या "जीवाद्भवन्ति भूतानि" इत्यादिश्रुत्यनुभवसंवादिन्या जीवकर्तृत्वसाधिन्याविरुद्धत्वेन ईशस्रष्टृत्वश्रुतेरमानत्वादित्यतः प्राप्तं **इतरव्यपदेशात्** इत्यादिसूत्रषट्कम्। तदर्थः **सर्वकर्तृत्वान्नायुक्तं तद्वदेच्छ्रुतिः** इति।

हरेरित्यस्ति। हरेरेव सर्वकर्तृत्वात् नोक्तयुक्तिविरुद्धवादिनी श्रुतिरित्यर्थः। कुत एवं जीवकर्तृत्वमेव कुतो नेत्यतोऽपि **अयुक्तं तत्** इति। तच्च जीवकर्तृत्वमयुक्तं युक्तिशून्यम् । तथा हिताकरणाहित-करणकृत्स्नप्रसक्त्यादियुक्तिविरुद्धं च यतोऽत इति । चेतनत्वं त्वप्रयोजकमिति भावः। श्रुत्यादिमूलं कथमेवमित्यतोऽपि श्रुतिः तज्जीवकर्तृत्वं न वदेदिति योज्यम् । पूर्वोक्तदिशा ब्रह्मपरत्वात् । स्वतन्त्रकर्तृत्वानुभवस्तु अस्वातन्त्र्यानुभवबाधित इति भावः ।।७।।

ननु जीव इवेशेऽपि कृत्स्नप्रसक्त्यादियुक्तिविरोधदोषसाम्यात् हस्तादिकरणशून्यत्वाच्च तस्यापि स्रष्टृत्वाद्यनन्तगुणता न युक्तेत्यतः प्राप्तं - **श्रुतेस्तु शब्दमूलत्वात्** इत्यादिसूत्रपञ्चकम् । तदर्थः - **नायुक्तं तद्वदेत्** इत्यादि।

तत् हरेः स्रष्टृत्वाद्यनन्तगुणत्वं अयुक्तं कृत्स्नप्रसक्त्यादियुक्तिविरुद्धं न । कुतः ? तत् लोके विरुद्धधर्माणां ईशेऽविरुद्धत्वं "योऽसौ विरुद्धोऽविरुद्धः" (पैङ्गी)इत्यादिश्रुतिः तथा तत् अप्राकृतहस्तपाण्यादिमत्त्वं वा। "अपाणिपादो जवनो गृहीता" (श्वे.उ.३-१९)इत्यादिश्रुतिः वदेद्यतोऽत इति। ननु श्रुत्युक्तत्वेऽपि कथं युक्तिविरुद्धमुपेयमित्यतोऽपि **नायुक्तं तत्** इति। तत् प्रागुक्तं युक्तिविरुद्धं न । यतः तत् प्रकृतं ब्रह्म अयुक्तं युक्त्ययोग्यम् । न हि युक्त्यागम्ये युक्तिविरोध इति भावः।

कुत एतत् । यत् मुक्तगम्यत्वं "औपनिषदः पुरुषः" इत्यादिश्रुतिर्वदेद्यतोऽत इति। किञ्च तद् ब्रह्म नायुक्तं सर्वविरोधशामकानन्तशक्तियुक्तमेव। "विचित्रशक्तिः पुरुषः पुराणः न चान्येषां शक्तयः" (श्वेताश्वतर)इत्यादिश्रुतिर्वदेत् । जीवं तु नैवं यतोऽत इति ।।८।।

नन्वथापि न स्रष्टृत्वाद्यनन्तगुणत्वं हरेः साधु । स्रष्टृत्वादेः फलवत्त्वेऽपूर्णतापत्तेः। असति च फले प्रेक्षावत्त्वाभावापत्तेरित्यादियुक्तिविरोधादित्यतः प्राप्तं - **न प्रयोजनवत्त्वात्** इति सूत्रद्वयम् । तदर्थः - **नायुक्तं** इत्यादि।

तत् स्रष्टृत्वाद्यनन्तगुणत्वं अयुक्तं उक्तरीत्या फलमुखयुक्तिविरुद्धं न । कुतः ? तत् स्रष्टृत्वादिसाध्यफलं अनपेक्ष्यैव स्रष्टृत्वादिगुणवत्त्वं केवलं लीलयैवेति ''देवस्यैष स्वभावोऽयमाप्कामस्य का स्पृहा'' इत्यादिश्रुतिः वदेद्यतोऽत इत्यादि योज्यम् । लोके मत्तस्य नृत्तगानादिवत् पूर्णस्यापि हरेर्लीलारूपतया स्रष्टृत्वोपपत्तेरिति भावः। श्रुतौ ''एष'' इत्यस्येच्छारूपः सृष्ट्यादिरूपव्यापार इत्यर्थः ।।९।।

नन्वथापि न स्रष्टृत्वाद्यनन्तगुणत्वं हरेः साधु। निर्निमित्तं प्राणिनां विभागेन सुखदुःखादिदाने वैषम्यस्य नैर्घृण्यस्य चापत्तेरित्यतः प्राप्तं - **वैषम्यनैर्घृण्ये न सापेक्षत्वात्** इत्यादिसूत्रत्रयम् । तदर्थः - **नायुक्तं तत्** इत्यादि ।

तत् स्रष्टृत्वाद्यनन्तगुणत्वं नायुक्तं प्रागुक्तयुक्तिविरुद्धं न भवति। कुतः ? तत् स्रष्टृत्वादिकं ''पुण्येन पुण्यं लोकं नयति पापेन पापं'' इत्यादिका श्रुतिः कर्मसापेक्षं वदेद्यतोऽत इति योज्यम् । अनादितत्तदीयकर्मापेक्षया सुखादिदानान्न वैषम्यादियुक्तिविरोध इति भावः। नन्वेवं कर्मणो स्वातन्त्र्ये पुनर्वैषम्याद्यापत्तिः। स्वातन्त्र्ये तु हरेः सर्वस्वातन्त्र्यादिगुणहानिरित्यतोऽपि **नायुक्तं तत्** इत्यादि। तत् हरेः स्रष्टृत्वस्वातन्त्र्यादिगुणवत्त्वं उक्तयुक्तिविरुद्धं न । कुतः ? तत् स्वाधीनकर्मापेक्षया फलदानं ''स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशितापि'' इत्यादिका श्रुतिरदोषं वदेद्यतोऽत इति योज्यम् । तत्तदीयानादिपूर्वपूर्वपुण्यादिकं अपेक्ष्य आत्मना तैस्तैः कारितोत्तरपुण्यादिकमपेक्ष्य सुखदुःखादिफलदानेन प्राप्तवैषम्यादेरदोषत्वस्य श्रुतावुक्तत्वात् वेदाप्रामाण्यकारणत्वाभावान्न कोऽपि दोष इति भावः ।।१०।।

नन्वथाप्यनन्तगुणो हरिरित्यसाधु। हरिः नानन्तगुणः चेतनत्वात् चैत्रवत् । दोषवान् गुणवत्त्वात् चैत्रवदित्यादियुक्तिविरुद्धत्वादित्यतः प्राप्तं - **सर्वधर्मोपपत्तेश्च** इति। तदर्थः - **नायुक्तं तत्** इत्यादि।

तत् हरेरनन्तगुणत्वादिकं नायुक्तं युक्तिविरुद्धं न । कुतः ? तत् हरेः निर्दोषाशेषसद्गुणत्वं ''गुणाः श्रुताः'' इत्यादिका श्रुतिः वदेद्यतोऽत इति। तथा नायुक्तं तत् उक्तं प्रमेयं युक्तिहीनं न । किन्तु, हरिः प्राप्तानन्तगुणः तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् । हरिः सदा त्यक्ताशेषदोषः तज्जिहासुत्वे सति तत्र शक्तत्वात्, सामान्यव्याप्त्या चैत्रवदित्यादियुक्तियुक्तमेव यतोऽत इति। प्राचीनयुक्तिस्तु उक्तश्रुतियुक्तिबाधितेति भावः।

पादार्थं उपसंहरति – **नायुक्तं** इत्यादि । तत् तस्मात् पूर्ववाद्युक्तयुक्तीनां सिद्धान्त्युक्तश्रुतियुक्ति-बाधितत्वाद्भगवतः सर्वकर्तृत्वाद्यनन्तगुणवत्त्वबोधिका "यतो वा इमानि भूतानि जायन्ते"(तै.उ.३-१) इत्यादि श्रुतिः न युक्तिविरुद्धं वदेदित्यर्थः। श्रुतिरित्येकवचनं अर्थैक्याभिप्रायेण । "पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि" इत्यादिवदिति ।।११।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्यां द्वितीयाध्यायस्य प्रथमः पादः ।।**

**आनन्दमाला** – नन्वेवमपि जीवस्य स्वतः कर्तृत्वं स्वानुभवसिद्धमित्यत आह - "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" (२-१-२२) "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" (२-१-२७) इत्यधिकरणे **स्वातन्त्र्यात्** इति। हरिरेव जीवेऽपि सर्वस्वातन्त्र्यात् तद्गतकार्योपसंहरणादिगुणैः सुपूर्णः निरंशत्वेऽप्येकदेशप्रवृत्तिकरत्वाद्याश्चर्यगुणपूर्णश्च । जीवस्य तु स्वहिताकरणादिदोषैरस्वातन्त्र्यदर्शनादकर्तृत्वम् ।।७-८।।

ईश्वरस्यापि सृष्ट्यादौ प्रयोजनाभावादकर्तृत्वमित्यत आह -"न प्रयोजनवत्वात्"(२-१-३३) इत्यधिकरणम् । **सर्वकर्तृत्वात्** इति। अल्पकर्तृणां हि लोके स्वप्रयोजनपरत्वात् तदभावे कर्तृत्वासम्भवः। आप्तकामतयानिच्छोः प्रयोजनाभावेऽपि कर्तृत्वमविरुद्धम् । अतदर्थत्वात् । आप्तकामत्वे च कुतः कर्तृत्वं सुवचमिति चेत् सुखोद्रेकनिमित्तादेव सर्वप्रवर्तनकर्तृत्वात् ।।९।।

"वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति"(२-१-३५) इत्यधिकरणार्थश्चैतेनैव सुगृहीतः। तथा हि – न च सर्वकर्तृत्वे वैषम्यादिदोषो विष्णोः शङ्क्यः। गुणदोषादेरपि सर्वस्य स्वयमेव कर्तृत्वात् । न ह्यात्मनि दोषापादनेच्छा कस्यचिद् भवति ।।१०।। पादार्थं निगमयति **नायुक्तं तद्वदेच्छ्रुतिः** इति। उक्तमार्गेण निरूप्यमाणे सति युक्तियुक्तार्थवादिनी श्रुतिरिति यत् तत् तस्मादयुक्तार्थं सा न वदेत् । अतो ये ते विष्णोः श्रुत्युदितानन्तगुणाः प्रथमाध्याय-साधितास्तेषां न कश्चिद् युक्तिविरोध इत्यर्थः ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां द्वितीयाध्यायस्य प्रथमः पादः ।।**

**नृसिंहतीर्थ** –पूर्णगुणत्वे हेतुः **सर्वकर्तृत्वात्** इति। तत्रापि हेतुः **स्वातन्त्र्यात्** इति। पंचमाधिकरणस्य पूर्वं निरस्ताभेदनिरासार्थं प्रवृत्तस्य पृथक्तात्पर्यानुक्तिर्न दोषः। स्वातन्त्र्यात्सर्व-कर्त्तत्वादित्यनेनैव स्वंतन्त्रसाधननिरपेक्षस्येश्वरस्य जगत्कर्तृत्वं प्रतिपादयतः षष्टाधिकरणस्य तात्पर्यमुक्तं भवति । एवं सप्तमाधिकरणस्यापि चतुर्थाधिकरणे निरस्तजीवकर्त्तृत्वनिरासप्रपंचनार्थस्य पृथक्तात्पर्यानुक्तिर्न दोषः। पूर्णगुण इत्यनेनैव श्रुतेस्तु शब्दमूलत्वात्, न प्रयोजनवत्वात्,

सर्वधर्मोपपत्तेश्च इति **अष्टमनवमैकादशाधिकरणानां** तात्पर्यं उक्तं भवति। सप्तमाधिकरणे जीवपक्षोक्तकृत्स्नप्रसक्त्यादिदोषाणां परमात्मपक्षे असम्भवप्रदर्शनाय। अष्टमे तस्य शब्दैकसमधिगम्यत्वविचित्रशक्तिमत्वादिगुणपूर्णत्वस्योक्तत्वात्। नवमे ईश्वरस्य सृष्ट्यादिना प्रयोजनाभावाभावपक्षोक्तबाधकपरिहारस्य पूर्णकामत्वस्योक्तत्वात् । एकादशे सर्वधर्मोपपत्तेरिति स्पष्टत एव पूर्णगुणस्योक्तत्वात् । सर्वकर्तृत्वात् । सर्वस्य कर्मादेः कर्तृत्वादित्यनेनैव दशमाधिकरणस्य तात्पर्यमुक्तं भवति। तत्र ईश्वरस्य वैषम्यादिपरिहाराय स्वाधीनकर्मापेक्षया फलदातृत्वस्यैवोक्तत्वात् । पादार्थमुपसंहरति **तत्** इति। तदिति आदौ ग्राह्यम् । तस्मात्सकलयुक्तिविरोधानां परिहृतत्वात् । श्रुतिः जगत्कारणत्वादिप्रतिपादिका अयुक्तं युक्तिविरुद्धं न वदेदित्यर्थः।

**।। इत्यणुभाष्यटीकायां द्वितीयाध्याये प्रथमपादस्समाप्तः ।।**

**श्रीनिवासतीर्थीया–** जीवेशभेदस्य निर्दोषश्रुत्यादिसिद्धत्वेनाभेदबाधात् पूर्णगुण एव हरिरित्यर्थः। तदनन्यत्वमित्यधिकरणार्थः **स्वातन्त्र्यात्** इति। हरेरेव स्वातन्त्र्यात्तदन्यसाधनस्य तदधीनत्वात्तन्नास्ति इत्युच्यते यतो अतः किंस्विदित्यादिश्रुतिर्नायुक्तं वदेत् । किन्तु युक्तमेव वक्तीत्यर्थः। इतरव्यपदेशादित्यधिकरणार्थः **सर्वकर्तृत्वान्नायुक्तं तद्वेदच्छ्रुतिः** इति। हरेः सर्वकर्तृत्वाद्युक्तिविरुद्धं जीवकर्तृत्वश्रुतिर्न वदतीति अर्थः। श्रुतेस्तु शब्दमूलत्वात् इत्यधिकरणचतुष्टयार्थोऽपि अनेन संगृह्यते। तथाहि । हरेः निर्दोषत्वस्रष्टृत्वाद्यनंतगुणवत्वं नायुक्तम् । तत्तधिकरणपूर्वपक्षोक्तयुक्तिविरुद्धं न। यतो निर्दोषश्रुतिस्तथा वदेत् वक्तीति। अत्रोपपत्तिः तदधिकरणभाष्यटीकयोरनुसन्धेया

**। इत्यणुभाष्यविवरणे द्वितीयाध्यायस्य प्रथमः पादः ।।**

**छलारी –**

**ओं तदनन्यत्वमारम्भणशब्दादिभ्यः ओं**

तदनन्यत्वं – स्वतन्त्रसाधनस्य ब्रह्मान्यत्वं ब्रह्मैकमेव स्वतन्त्रसाधनं अन्यत्साधनं तदधीनम्। कुतः ? आरम्भणशब्दादिभ्यः। "किं स्विदासीत्" (ऋ.सं.१०-८१-२)इत्युपादानाद्याक्षेपकश्रुतेः। आदिशब्दात् परतन्त्रत्वस्वतन्त्रत्वसाधनसत्ताप्रदत्वयुक्तिभ्यश्चेति सूत्रार्थः।

अत्र जगत्सृष्ट्यादिकं स्वतन्त्रसाधनसापेक्षम् । विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्र-साधनसापेक्षा सृष्टित्वात् घटादिसृष्टिवदिति युक्तिसिद्धत्वात् । अन्यथा तद्विरोधात् । घटादिसृष्टौ मृदादीनि खलु स्वतन्त्रसाधनानि तानि विना सृष्ट्यनुपपत्तेः। अतः ब्रह्म स्वतन्त्रसाधनसापेक्षमेव सृष्ट्यादि करोतीति स्वातन्त्र्येण सर्वकर्तृत्वाभावात् न तस्य जन्मादिकारणत्वेन सर्वगुणपूर्णत्व-सिद्धिरिति प्राप्ते –

घटादिसृष्टेः स्वतन्त्रबहुसाधनसापेक्षत्वेऽपि जगत्सृष्ट्यादि न तथा कल्प्या। किन्तु स्वतन्त्रसाधनरहितैव। न चोक्तानुमानविरोधः। "किं स्विदासीदधिष्ठानमारम्भणम्" इति श्रुत्या तथा इश्वर स्वतन्त्रसाधनरहितः साधनसत्तादिप्रदत्वात् । व्यतिरेकेण कुलालवदित्यादियुक्तिभिश्च विरुद्धत्वात् । ननु "अद्भ्यस्सम्भूतः पृथिव्यै रसाच्च" (तै.आ.३-१३)इत्यादिना ईश्वरातिरिक्तां स्वतन्त्रसाधनप्रतीतेः, कथं तद्राहित्यं भगवतः इति चेन्न । तेषां साधनानां तदधीनत्वात् । कुतः ? "काल आसीत् पुरुष आसीत्, परम आसीत्, तद्यदासीत्, तदधीनमासीत्, तदावृतमासीत्" इति (काषायण) श्रुतेः।

प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तम :। क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः। इति स्मृतेश्च ।

अतः स्वातन्त्र्येण सर्वकर्तृत्वे सिद्धे विरोधगन्धाभावात् युक्तं सर्वगुणपूर्णत्वमिति सिद्धान्तः कृतः। तस्य तात्पर्यमाह- **स्वातन्त्र्यात्सर्वकर्तृत्वात्** इति। स्वतन्त्रसाधननैरपेक्षेण सर्वजगत्सृष्ट्यादि-कर्तृत्वात् हरिः पूर्णगुणः इत्यनुषङ्गः ।।६ ।।

### ओं इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ओं

इतरव्यपदेशात् - जीवादिश्रुतौ जीवस्य करणत्वेन व्यपदेशात् , यदि जीवः स्वतन्त्रकर्ता स्यात्तर्हि हिताकरणादिदोषप्रसक्तिः - हिताकरणं अहितकरणं च न स्यादिति सूत्रार्थः।

अत्र न विष्णोः जगत्कर्तृत्वं युक्तं जीवस्यैव स्वतः कर्तृत्वानुभवात् । स हि यत्कार्यमारभते तत्समापयतीत्यनुभूयते। न चायमनुभवो भ्रान्तिः। बाधकाभावात् । "जीवाद्भवन्ति भूतानि" इति श्रुतेश्च । अतः जीव एव स्वातन्त्र्येण कर्तेति प्राप्ते -

न जीवः स्वातन्त्र्येण कर्ता अपि तु परमेश्वरः। तर्कविरुद्धत्वात् । तथा हि, यदि स्वातन्त्र्येण कर्ता स्यात् तर्हि हिताकरणं अहितकरणं च न स्यात् । विद्येते च ते । अतः नासौ स्वतन्त्रकर्ता। ननु जीवस्य स्वतः कर्तृत्वाभावो युक्तः।स हि यत्कार्यमारभते तत्समापयतीत्युपसंहारदर्शनात् इति चेन्न । तत्कार्योपसंहारस्येश्वरनिमित्तत्वात् । न च जीवे दृश्यमानत्वेन जीवस्यैवासाविति वाच्यम् । गोषु दृश्यमानस्यापि क्षीरस्य "अन्नं रसादिरूपेण प्राणः परिणयत्यसौ" इति वचनात्, प्राणाधीनत्ववत् "य आत्मानमन्तरो यमयति" इति श्रुतेः। " नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः" (म.भा.शान्ति.२२४-४५) इत्यादिस्मृतेश्च जीवे दृश्यमानस्यापि कार्योपसंहारस्य भगवधीनत्वात् । किञ्च जीवः स्वतन्त्रः कर्ता इति वदन् प्रष्टव्यः किं जीवः सर्वकार्येषु सर्वसामर्थ्येन प्रवर्तते ? उतांशेन ? नाद्यः, एकेनाङ्गुलिमात्रेण तृणादानादवपि पूर्णशक्त्या प्रवृत्तिप्रसक्तेः। न द्वितीयः, अनंशत्वप्रतिपादकश्रुतिविरोधात्। न च पूर्वोक्तश्रुतिविरोधः। तस्या भगवत्परत्वस्य

साधितत्वात् । अतो जीवस्य स्वतः कर्तृत्वानुपपत्तेः युक्तं हरेः स्वातन्त्र्येण जगत्कर्तृत्वमिति सिद्धान्तः कृतः। एतत्तात्पर्यस्यापि **असज्जीवे**त्यत्रैव उक्तत्वात् पृथक् तात्पर्यानुक्तिर्न दोषः ।।७।।

## ओं श्रुतेस्तु शब्दमूलत्वात् ओं

ईश्वरस्य कर्तृत्वाङ्गीकारे जीववत् कृत्स्नप्रसक्त्यादिदोषो न शङ्कनीयः। कुतः ? श्रुतेः। "योऽसौ विरुद्धोऽविरुद्ध" (पैङ्गी)इत्यादिना लोकविरुद्धधर्माणामीश्वरे अविरुद्धत्वस्य श्रूयमाणादेव। ननु श्रौतमपि युक्तिविरुद्धं कथमुपपद्यते इत्याशङ्कापरिहारायोक्तं - शब्दमूलत्वादिति । शब्दः मूलं प्रमाणं यस्य तस्य भावस्तत्त्वं, तस्माच्छब्दैकसमधिगम्यत्वादिति सूत्रार्थः।

अत्र न विष्णोः जगत्सृष्टृत्वं युक्तम् । जीवकर्तृत्वपक्षोक्तदोषस्यापि सम्भवात् । तथा हि । किमीश्वरः कार्येषु सर्वशक्त्या प्रवर्तते? तदेकदेशेन वा ? नाद्यः। तृणादानादावपि कृत्स्नप्रसक्तेः। न द्वितीयः। अनंशत्वप्रतिपादक "नेह नानास्ति किञ्चन" इत्यादिश्रुतिव्याकोपादिति प्राप्ते -

नेश्वरस्य सृष्टिकर्तृत्वे युक्तिविरोधः। श्रुत्युक्तत्वात् । ननु श्रुत्युक्तत्वेऽपि युक्तिविरुद्धं कथमुपेतुं शक्यं, अन्यथा जीवेऽपि प्रत्यक्षबलात् अभ्युपगन्तव्यं अविशेषादिति चेत् । मैवम्। भवेत् जीवप्रतिबन्द्या ईश्वरे युक्तिविरोधः यद्यविशेषो भवेत् । न चैवं, शब्दैकसमधिगम्यत्वं विचित्रशक्तिमत्वादेः। युक्तिविरोधपरिहारोपयोगिनः परमेश्वरे श्रुतिसिद्धत्वात् , जीवे तदभावादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **पूर्णगुण** इति । शब्दैकसमधिगम्यत्वविचित्रशक्तिमत्त्वादि गुणपूर्ण इत्यर्थः ।।८ ।।

## ओं न प्रयोजनवत्त्वात् ओं

पूर्णानन्देन भगवत्कर्तृत्वं, न प्रयोजनवत्त्वादिति सूत्रार्थः।

अत्र न विष्णोः स्रष्टृत्वादि युक्तम् । तथाहि, किं विष्णुः प्रयोजनोद्देशेन सृष्ट्यादिकं करोति, तदनुद्देशेन वा। नोभयथापि सर्वकर्तृत्वम् । आद्ये अपूर्णत्वं स्यात् । द्वितीये प्रवृत्तेरयोगादिति प्राप्ते-

युक्तं विष्णोः सर्वकर्तृत्वम् । तस्य पूर्णानन्दत्वेन प्राप्तप्राप्तव्यतया फलोद्देशेन प्रवृत्त्यनङ्गीकारात् । न चात्र मानाभावः। "देवस्यैषः स्वभावोऽयं आप्तकामस्य का स्पृहा" इति श्रुतेः। न च फलानुद्देशे प्रवृत्त्यनुपपत्तिरिति वाच्यम् । लोकवल्लीलयैव प्रवृत्त्युपपत्तेः। न हि लीला प्रयोजनान्तराय वाच्यम् । मत्तस्य नृत्तगानादिलीलायाः प्रयोजनाभावेऽपि दर्शनादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **पूर्णगुण** इति। आनन्दादिगुणपूर्णः इत्यर्थः। पूर्णानन्दो अपि भगवान् लोकानुग्रहायैव सृष्ट्यादिक्रीडां करोतीति न काचिदनुपपत्तिरिति भावः ।।९ ।।

## ओं वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ओं

भगवतः वैषम्यनैर्घृण्ये न स्तः। कुतः ? सापेक्षत्वात् - कर्मसापेक्षत्वात् । कुत इत्यत उक्तं - तथा हि दर्शयति इति। हि यतः " पुण्येन पुण्यं लोकं नयति" इत्यादिश्रुतिः तथा दर्शयतीति सूत्रार्थः।

अत्र न विष्णोः जगत्कर्तृत्वं युक्तम् । तथा हि। किमसौ प्राणिकर्मसापेक्षः सृष्ट्यादि करोति तदनपेक्षो वा। नाद्यः। नियमेन कर्मापेक्षया प्रवर्तमानस्य अस्वातन्त्र्यापातात् । द्वितीये वैषम्यनैर्घृण्ये स्याताम् । निर्निमित्तं प्राणिनां विभागेन सुखादिप्रदानादिति प्राप्ते -

युक्तमेव विष्णोः जगत्कर्तृत्वम् । न चोक्तदोषप्रसङ्गः। अनादिकर्मापेक्षया फलदातृत्वाङ्गीकारेण वैषम्यादिदोषाभावात् । नन्वथापि ईश्वरस्य कर्मापेक्षया न फलदातृत्वं युक्तं, अस्वातन्त्र्यप्रसङ्गादिति चेन्न । ईश्वरस्य कर्मसापेक्षत्वेऽपि स्वातन्त्र्याहानेः। स्वाधीनसापेक्षायाः स्वातन्त्र्याविरोधित्वात् । न च कर्मणः तदधीनत्वे मानाभावः। "द्रव्यं कर्म च कालश्च" (भा.२०१०-१२)इत्यादेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सर्वकर्तृत्वात्** इति । कर्मापेक्षयेति शेषः। तथा च कर्मापेक्षया सर्वस्य सृष्ट्यादेः कर्तृत्वात् न वैषम्यादिदोषप्रसङ्ग इति भावः ।।१०।।

## ओं सर्वधर्मोपपत्तेश्च ओं

सर्वधर्माणां ज्ञानानन्दादिसर्वगुणानां ईशे उपपत्तेः। स्वतन्त्रत्वाद्युपपत्तिसिद्धत्वात् । चशब्दात् "गुणाः श्रुताः" इति (जाबालखिल)श्रुतेश्चेति सूत्रार्थः।

अत्र न विष्णोः गुणपूर्णत्वं युक्तं , सर्वेषां चेतनानां अपूर्णत्वनियमात् । अस्यापि चेतनत्वेन अपूर्णतायाः अवश्यंभावित्वात् । अन्यथा अतिप्रसङ्गादिति प्राप्ते -

नायुक्तं विष्णोः गुणपूर्णत्वं, तस्य चेतनत्वेऽपि स्वातन्त्र्यादिना गुणपूर्णत्वोपपत्तेः। स्वातन्त्र्यवतः गुणपूर्णत्वनियमात् इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **स्वातन्त्र्यात् पूर्णगुण** इति। विष्णुः सर्वगुणपूर्णः स्वतन्त्रत्वात् व्यतिरेकेण देवदत्तवत् इत्यर्थः।

पादार्थमुपसंहरति - **नायुक्तं तत्** इति । तत् तस्मात् सकलयुक्तिविरोधानां परिहृतत्वादित्यर्थः। श्रुतिः- जगत्कारणत्वप्रतिपादिका श्रुतिः अयुक्तं युक्तिविरुद्धं न भवेदित्यर्थः ।।११।।

मदाचार्यमनोधाममध्वमानसमश्नके ।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां द्वितीयाध्यायस्य प्रथमः पादः ।।

**नारायणाचार्य–** ननु कुलालादिसृष्टिः स्वतन्त्रसाधनसापेक्षा दृष्टा। दण्डचक्रादीनां सत्ताप्रवृत्तिप्रतीत्यादेः कुलालानधीनत्वेन तद्दृष्टान्तेनेश्वरसृष्टावपि तथाविधत्वस्य सुसाध्यत्वात्पूर्ण–शक्त्यादिमत्वं युक्तिविरुद्धमित्यतः सूत्रं **ओं तदनन्यत्वमारम्भणशब्दादिभ्यः** इति । तस्यार्थः स्वतन्त्रसाधनस्य तदनन्यत्वं तस्मादीश्वरादनन्यत्वमीश्वरात्मकत्वम् । ईश्वरातिरिक्तं स्वतन्त्रसाधनं नास्ति किन्त्वीश्वर एव स्वतन्त्रः। कुतः "किं स्विदासीदधिष्टानमारम्भणं कतमस्वित् कथाऽसीत्" इत्याद्यारम्भणाक्षेप्यशब्दात् । आदिशब्देन "परतन्त्रो ह्यपेक्षेत् स्वतन्त्रः किमपेक्षत" इत्यादियुक्तेश्चेति। तदभिप्रायमाह **ओं स्वातन्त्र्यात्सर्वकर्तृत्वान्नायुक्तं तद्वदेच्छ्रुतिः** इति । अत्रैवं योजना। तद्विष्णोः पूर्णशक्त्यादिमत्वमयुक्तं युक्तिविरुद्धमिति न मन्तव्यम् । कुतः ? तस्य स्वातन्त्र्येण सर्वकर्तृत्वांगीकारात् इति। एतेन पूर्वपक्षानुमाने स्वतन्त्रत्वमुपाधिः सूचितः। स्वपक्षे परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षत इति व्यतिरेक्यनुमानरूपा युक्तिश्चोक्ता भवति। तदिदमाह नायुक्तं तत्किन्तुयुक्तिमदेवेति। नञ्द्वयेन स्वकीयानुमानस्य प्राबल्यं परकीयानुमानस्य सोपाधिकत्वेन दौर्बल्यं चोपपादितम्। न केवलं अत्रार्थे युक्तिरेव किन्तु तद्वदेच्छ्रुतिः। "किंस्विदासीत्" इत्यादिरारम्भणादेराक्षेपिकाश्रुतिरपि तद्विष्णोः स्वातन्त्र्यं वदेदित्यर्थः।

युक्त्यन्तरेण स्वतन्त्रसाधनं प्रतिक्षिपत्सूत्रं **ओं भावे चोपलब्धेः**। स्वतन्त्रकारणसद्भावे प्रमाणैरुपलभ्येत "अनुक्तं पंचभिर्वेदैर्न वस्त्वस्ति कुतश्चन" इति स्कान्दे। तदर्थमाह **स्वातन्त्र्यात्** इति। ईश्वरादन्यस्यापि स्वातन्त्र्यात्सर्वकर्तृत्वात्तदनन्यत्वं च युक्तमिति न मन्तव्यम् । कुतः? तथा सति तच्छ्रुतिर्वदेन्न चोच्यते तस्मान्नास्तीति भावः। ननु "अद्भ्यः सम्भूतः पृथिव्यै रसाच्च" (तै.आ.३–१३)इत्यादिश्रुत्या साधनान्तरस्यावगमादुक्तमारम्भणाक्षेपणमयुक्तं तस्य युक्तत्वे वेदसाधनान्तरवचनमयुक्तमित्यतः सूत्रं **ओं सत्त्वाच्चावरस्य** इति । अवरस्य तदधीनसाधनस्य सत्वाभ्युपगमान्नोक्तविरोध इत्यर्थः। एतदप्याह **स्वातन्त्र्यात्** इति। स्वातन्त्र्येणेश्वरस्यैव कर्तृत्वांगीकारात्तदधीनस्य अन्यस्याप्यंगीकारात् आरम्भणाक्षेपश्रुतिर्यद्वदेत तदयुक्तं न किंतु स्वतन्त्रंसाधनस्यैव तत्राक्षेपाद्युक्तमेव । अत एव "अद्भ्यः सम्भूत" इत्यादि श्रुतिरपि अस्वतन्त्रसाधनं प्रतिपादयत्ययुक्तं न वदेदित्यपि योज्यम् ।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्** । एतदप्याह **स्वातन्त्र्यात्** इति। श्रुतिः स्वातन्त्र्यात्सर्वकर्तृत्वादिति ल्यब्लोपे पंचमी। स्वातन्त्र्येण

सर्वकर्तृत्वमित्यनेन रूपेण तदानीं नासीदिति यद्वेदः वदति अतस्तन्नायुक्तमित्यर्थः। साधनशून्यस्य कर्तृत्वे महिमाधिक्यलाभः स्यादित्यतः सूत्रं **ओं युक्तेः शब्दान्तराच्च।**

साधनानां साधनत्वं यदात्माधीनमिष्यते।
तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत्।। इति युक्तेः।

"अद्भ्यः सम्भूत" (म.ना.उ.१-११)इति शब्दान्तराच्च स्वाधीनसाधनान्तरोपपादनेऽपि नेश्वरस्य स्वातन्त्र्यभंगः। अनुमानेनापि साधनान्तरमुपपादयत्सूत्रं **ओं पटवच्च** । पटादौ स्वतन्त्रास्वतन्त्रसाधनवत्वदृष्टेश्चास्वतन्त्रसाधनोपादनं च युक्तम्। ननु पटसृष्टौ तन्त्वादि स्वतन्त्रं दृश्यते इत्यतः सूत्रं **ओं यथा प्राणादिः**। यथा प्राणशरीरे इन्द्रियादिकं प्रेरणार्थं भगवतानुप्रविष्टं तथेदमपि ।

प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः।
क्षोभयामास भगवान्सृष्ट्यर्थे जगतः प्रभुः।। इति कौर्मे ।

इदमप्याह। **स्वातन्त्र्यात्** इति । साधनान्तरेष्वपि स्वस्यैव स्वातन्त्र्येण सर्वकर्तृत्वान्नायुक्तं किन्तु युक्तमेवेति युक्तेरिति सूत्रखंडस्यार्थः। "अद्भ्यः सम्भूत" इति श्रुतिश्च तद्वदेदितरसाधनसद्भावं वदतीति शब्दान्तराच्चेति सूत्रशेषार्थः। तथा प्राणशरीरे इन्द्रियादिष्वपि तस्यैवानुप्रवेशेन स्वातन्त्र्यात्सर्वकर्तृत्वात्पटदृष्टान्तेनायुक्तं न भवति। प्रकृतिमिति श्रुतिश्च तद्वदतीत्यर्थः। अथ जीवकर्तृत्वपक्षं विस्तरान्निराकर्तुं सूत्रं **ओं इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः**। इतरस्य जीवस्य यदि स्वतन्त्रकर्तृत्वं व्यपदिश्यते तर्हि तस्माद्धिताकरणमहितकरणं यत्प्रसक्तमस्ति तन्न स्यादित्यर्थः। एतेन हिता करणादिदोषप्रसक्तिरिति सूत्रखंडार्थस्यैव समासविग्रहं सूचयति। हिताकरणस्यादिशब्दस्याहितकरणस्य च जीवे परिदृश्यमानस्य आकस्मिकत्वरूपो दोषः प्रसज्येत इति । न तु हिताकरणादिरूपो दोषः प्रसज्येतेत्यर्थः। हिताकरणादेः प्रसिद्धत्वेन प्रसंजनायोगाद्दोषशब्दवैय्यर्थाच्च ।

ननु ब्रह्मणः: कर्तृत्वांगीकारे तस्य श्रमादिदोषः प्रसक्तिरित्यतः सूत्रं **ओं अधिकं तु भेदनिर्देशात्** इति। न च ब्रह्मकर्तृत्वपक्षेऽपि तस्य श्रमादिदोषप्रसक्तिः यतस्तत्सर्वशक्तिमत्वेनाधिकमेव (ऐ.आ.३-२-४) "श्रोता मन्ताऽदृष्टाऽदेष्टा घोष्टा" "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" (बृ.उ.५-५-१)इत्यादि श्रुतौ वैलक्षण्येन निर्देशात् । अनुमानेनापि जीवस्य कर्तृत्वाभावं समर्थयत्सूत्रं **ओं अश्मादिवच्च तदनुपपत्तिः**। तस्य चेतनत्वेऽप्यश्मादिवत् अस्वतन्त्रत्वात् कर्तृत्वानुपपत्तिः।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि** इति। जीवेन आरब्धकर्मभोजनादिकमुपसंह्रीयमाणं दृष्टमतः कर्तृत्वमिति चेन्न यथा गोषु

तद्भक्षिततत्तृणादिपरिणामरूपं क्षीरं दृश्यमानमपि न गोकर्तृकं किन्त्वाहारपरिणामकप्राणकर्तृत्वमेव । ''अन्नं रसादिरूपेण प्राणः परिणयत्यसौ'' इति वचनात्तथात्रापीत्यर्थः। यदीश्वर एव शरीरांतस्थः कर्ता तर्हि कुतो न दृश्यत इत्यत सूत्रं **देवादिवदपि लोके** इति। यथा देवादयः सर्वत्र विद्यमाना यथा वा लोके भूतादयो विद्यमाना अप्यन्तर्धानशक्त्या अन्यैर्नोपलभ्यन्ते तथेश्वरोऽपि। ''स हि सर्वस्य कर्ता'' इति श्रुतिसिद्धोऽपि नोपलभ्यत इत्यर्थः।

जीवकर्त्तृत्वपक्षे दोषान्तरं प्रतिपादयत्सूत्रं **ओं कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा** इति । जीवस्तत्तत्पदार्थग्रहणादौ सर्वात्मना उत एकदेशेन प्रवर्तते। नाद्यः तृणादानादौ सर्वशक्त्या प्रवृत्तावनुभवविरोधात् । द्वितीये त्वेकदेशापत्या ''अथ यः स जीवो निरंशो निरवयवो ज्ञाताऽज्ञाता'' (भाल्लवेय) इति निरवयत्वशब्दविरोधापत्तिस्तस्मान्न जीवः सर्वकर्त्तेत्यर्थः। एतत्तात्पर्यमाह **स्वातन्त्र्यात्** इति । जीवस्य स्वातन्त्र्यात्सर्वकर्तृत्वात्स्वातन्त्र्येण कर्तृत्वे अङ्गीक्रियमाणे श्रुतिर्यद्दूषणं वदेत्तन्नायुक्तं किन्तु युक्तमेवेति भावः। पराधीनकर्तृत्ववादस्त्वीश्वरस्वातन्त्र्याविरोधीत्यभ्युपगम्यत एव। तत्र चेश्वराचिन्त्यशक्तिरेव अघटितघटनीकृत्स्नप्रसक्त्यादिदोषं परिहरेदिति भावः।

ननु यथा जीवकर्तृकत्वपक्षे दूषितस्तथेश्वरपक्षोऽपि स्यादित्याशंकापरिहरतः सूत्रं **ओं श्रुतेस्तु शब्दमूलत्वात्** इति । ''योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः'' इति श्रुतेरेव लोकदृष्ट्या विरुद्धवदवभासमानधर्माणामीश्वरे समावेशस्य सिद्धत्वात्। ननु श्रुत्युक्तमपि युक्तिविरुद्धं कथमंगीकार्यमिति चेन्न तस्य शब्दैकसमधिगम्यत्वरूपशब्दमूलत्वात् । न हि तदविषये तद्विरोधः शंक्यत इति भावः। एतमर्थं पिण्डीकृत्याह **ओं नायुक्तं तद्वदेच्छ्रुतिः** इति। तदीश्वरस्य कर्तृत्वं युक्तमुक्तम् । युक्तिविरुद्धं न भवति यतस्तत्कर्तृत्वं श्रुतिरेव वदेत् ।

यद्वाक्योक्तं न तद्युक्तिविरोद्धुं शक्नुयात् क्वचित् ।
विरोधे वाक्ययोः क्वापि किंचित्साहाय्यकारणम्।।

इति पुरुषोत्तमतन्त्रवचनाच्छ्रौतेऽर्थे युक्तिविरोधोऽकिंचित्कर इति भावः। जीव एव युक्तिविरोधो नेश्वर इत्येतदर्थं युक्त्यन्तरेण प्रतिपादनाय सूत्रं **ओं आत्मनि चैवं विचित्राश्च हि** इति।

''विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः स्युः'' इति (श्वेताश्वरतर) श्रुतेः। परमात्मन्येवाचिन्त्यविचित्रशक्तित्वसिद्धेर्न कोऽपि विरोध इति । एतमर्थमपि संक्षेपतो दर्शयति **पूर्णगुणो हरिः** इति । विचित्रशक्त्यादिगुणपूर्णो हरिरेवातो नायुक्तं किन्तूक्तं युक्तमेवेत्यर्थः। जीवे विद्यमानं विचित्रशक्त्यादिकमीश्वरे कुत इत्यतः **स्वातन्त्र्येण सर्वकर्तृत्वात्** इति। न केवलं युक्तिमात्रेणैतदुच्यते किन्तु ''विचित्रशक्तिः पुरुषः पुराण'' इत्यादिका श्रुतिरपि तद्वदेदिति योज्यम् । इतोऽपि जीवपक्षे एव दोषो नेश्वरपक्षे इत्यर्थकं सूत्रं **ओं स्वपक्षदोषाच्च** इति।

ये दोषा इतरत्रापि ते गुणाः परमे मताः।
न दोषः परमे कश्चिद्गुणा एव निरन्तरा । इति वचनादिति भावः।

न केवलमुक्तप्रमाणतो विष्णोर्विचित्रशक्तित्वमात्रसिद्धः किन्तु सर्वदा सर्वविषयविचित्रशक्तित्वं च ईश्वरस्य समर्थयत्सूत्रं **ओं सर्वोपेता च तद्दर्शनात्** इति।

सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम्।
नित्यानन्दा नित्यरूपाजरा च या शाश्वतात्मेति च यां वदन्ति

इति चतुर्वेदशिखोक्तेरिति। सर्वैः सर्वविषयाभिरित्यर्थः। श्रुत्यनुसारेण स्त्रीलिंगनिर्देशः सूत्रे। विष्णोर्जगत्कर्तृत्वमाक्षिप्य समादधत्सूत्रं **ओं विकरणत्वान्नेति चेत्तदुक्तं** इति। "अचक्षुः श्रोत्रं तदपाणिपादं" इत्यादेः । तस्य चक्षुरादिकरणाभावेनानुपपत्तिर्न शंक्या ।

अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स श्रुणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् । (श्वे.उ.३-१९)

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। (श्वे.उ.६-८)

इत्यादिश्रुतेः। पूर्वसूत्रे एव सर्वविरोधपरिहारेऽपि चिदानन्दविग्रहवत्वाख्यविशेषयुक्तिजिज्ञासार्थं पुनराशंकेति ज्ञेयम् । इदमप्याह **पूर्णगुणो हरिः। स्वातन्त्र्यात्सर्वकर्तृत्वात्** इति। अतःश्रुतिस्तस्य कर्तृत्वं वदेत्तन्नायुक्तमित्यर्थः ।।८।।

ननु तथापि नेश्वरस्य जगत्कारणत्वं युक्तं प्रयोजनोद्देशेन करणे अपूर्णताप्रसंगः तदनुद्देशे तु प्रवृत्तिरेव न स्यादित्यतः सूत्रं **ओं न प्रयोजनवत्त्वात्** इति।। ईश्वरसृष्टिर्न प्रयोजनमपेक्ष्योच्यते येनास्यापूर्णता स्यादिति भावः। द्वितीयपक्षोक्तं दोषपरिहाराय सूत्रं **ओं लोकवत्तु लीलाकैवल्यं** इति। लोके यथैवानन्दोद्रेकात्प्रमत्तस्य नृत्यगानादौ प्रवृत्तिस्तथास्यापि केवललीलयैव प्रवृत्तिरिति। इममर्थं संक्षेपेण दर्शयति **पूर्णगुणो हरिः**। पूर्णानन्दः अतस्तस्य स्वातन्त्र्येण सर्वकर्तृत्वोपपत्तेः तन्नायुक्तम् । "देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा" इति श्रुतिस्तदुक्तं प्रमेयं वदेदिति योज्यम् ।

नन्वथापीश्वरस्य विचित्रसृष्टिकर्तृत्वे वैषम्यनैर्घृण्यादिप्राप्तिरित्याशंक्य "पुण्येन पुण्यं लोकं नयति पापेन पापं" (षट्.उ.३-७)इति श्रुतेः कर्मसापेक्षत्वान्न दोष इत्यर्थकं सूत्रं **ओं वैषम्यनैर्घण्ये न सापेक्षत्वात् तथा हि दर्शयति** इति। उक्तमाक्षिप्य समादधत्सूत्रं **ओं न कर्माविभागादिति चेन्नानादित्वात्** इति। यदपेक्षयाऽसौ फलं दद्यात् तदपि तदधीनमित्युक्तदोषानिस्तारान्नैवास्ति कर्मेति

चेन्न अपेक्षणीयकर्मणां ईश्वराधीनत्वेऽपि तद्धेतुपूर्वकर्मपरम्परायाः अनादित्वान्न दोषः। नन्वेवं कर्मणः तदधीनत्वेपि अस्वातन्त्र्यापत्तिस्तदधीनत्वे तु स्वाधीनकर्मापेक्षानामनपेक्षैव पर्यवसन्नेत्युक्तदोषानिस्तार इत्यतस्तादृशकर्मापेक्षया वैषम्यादिकमुपपद्यत श्रुतावुपलभ्यते चेत्याशयेन सूत्रं **ओं उपपद्यते चाप्युपलभ्यते च** इति। तत्तात्पर्यमप्यनेनैवाह **पूर्णगुणो हरिः**। अपेक्षितकर्मादावपि स्वातन्त्र्यवान्सर्वकर्त्ता तथाप्युक्तं नायुक्तं यतस्तादृशवैषम्यं

स कारयेत्पुण्यमथापि पापं न तावता दोषवानिशितापि।
ईशो यतो गुणदोषादिसत्वे स्वयं परो नादिरादिः प्रजानाम् ।

इति चतुर्वेदशिखारूपश्रुतिर्वदेदिति योज्यम् । एवं सति कर्मापेक्षापि निष्फलास्यात् तदभावेऽपि दोषाभावः सम्भवतीति चेत् । मैवं, कर्मानपेक्षत्वे वेदाप्रामाण्यप्रसंगात् । तदुक्तं

वैषम्यं निर्घृणत्वं च वेदाप्रामाण्यकारणम् ।
नांगीकार्यमतोऽन्यत्तु न वैषम्यादिनामकं । इति।

उक्तावशिष्टसर्वगुणान्युक्तिविरोधपरिहारेण समर्थ्य विष्णोः पूर्णत्वं निगमयत्सूत्रं **ओं सर्वधर्मोपपत्तेश्च** इति । तत्र पूर्वपक्षः ईश्वरः पूर्णो न, चेतनत्वादिति। सिद्धान्तस्तु अपूर्णत्वे अस्वातन्त्र्यमुपाधिः सपक्षाद्व्यावर्त्तमानो विष्णोरपूर्णत्वं व्यावर्त्तयतीति तस्य सर्वधर्माः सर्वे गुणाः उपपन्ना एव। न केवलयुक्तिमात्रेण सर्वधर्मोपपत्तिः किन्तु "गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवैत्र शंका। चिन्त्या अचिन्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीता" इति श्रुत्यापि सर्वधर्मोपपत्तिरिति च शब्दार्थः। तत्तात्पर्यमाह। **पूर्णगुणो हरिः** इत्यादिना । हरिः पूर्णगुण इति नायुक्तं किन्तु युक्तमेव।

ननु चेतनत्वयुक्त्या अपूर्णत्वसाधनत्वात्कथं नायुक्तमित्यत उक्तं ओं **स्वातन्त्र्यात्सर्वकर्तृत्वात्** इति। तथा च तत्रास्वातन्त्र्यमुपाधिः पूर्णत्वे चोपाधिव्यतिरेकः स्वातन्त्र्यमेव साधकमिति भावः। न केवलं युक्तिमात्रं पूर्णत्वसाधकं किन्तु तत्पूर्णत्वं "गुणाः श्रुताः सुविरुद्धा" इत्यादिका श्रुतिरपि तद्वदेत् तद्वदति । तस्माद्युक्तमुक्तमिति योज्यम् । सुविरुद्धाः लोकदृष्ट्या अश्रुताः रमादिचिन्त्याः तदचिन्त्याश्च। ते सर्वे गुणाः देवे सन्त्येव। अत्र शंका नैव कार्या । अत्र दोषाः श्रुता अपि न सन्त्येव। ननु श्रुताः कथं न सन्तीत्यतः उक्तं अज्ञैस्तात्पर्यानभिज्ञैर्दोषत्वेन प्रतीता यतः न तु दोषास्ता इत्यर्थः।।।

।। इति नारायणकृताणुभाष्यप्रपंचने द्वितीयाध्यस्य प्रथमः पादः ।।

**मळगी** – यतो **हरिः** श्रीनारायणः। **स्वातन्त्र्यात् सर्वकर्तृत्वात्** पूर्णगुणः। अनन्तगुणपूर्णः। अतस्तस्माच्छ्रुतिः वेदः अयुक्तं अनुपपन्नार्थं न वदेत् कथयन्ती न भवेत् ।।३।।

।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां द्वितीयाध्यायस्य प्रथमः पादः ।।

**नारायणपण्डित–** तदनन्यत्वमारम्भणशब्दादिभ्य इत्यस्यार्थः स्वातन्त्र्यादिति। हरेरेव स्वातन्त्र्यात् तदन्यसाधनस्य तदधीनत्वात् तन्नास्तीत्युच्यते यतः अतो किंस्विदासीदित्यादिश्रुतिर्नायुक्तं वदेत् किन्तु युक्तमेव वक्तीत्यर्थः ।।७।। इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरित्यस्यार्थः सर्वकर्त्तृत्वान्नायुक्तं तद्वदेच्छ्रुतिरिति। हरेरेव सर्वकर्त्तृत्वान्न युक्तिविरुद्धं जीवकर्त्तृत्वं श्रुतिर्वदतीत्यर्थः ।।८।। श्रुतेस्तु शब्दमूलत्वात्,न प्रयोजनवत्त्वात्,वैषम्यनैर्घृण्येन सापेक्षत्वात् तथाहि दर्शयति, सर्वधर्मोपपत्तेश्च इत्यधिकरणचतुष्टयस्यार्थः नायुक्तं तद्वेच्छ्रुतिरिति ।।९–१२ ।। तद्धरेर्निर्दोषत्वसृष्टृत्वाद्यनन्तगुणवत्वम्। नायुक्तं तत्तत्पूर्वपक्षोक्तयुक्तिविरुद्धं न । यतो निर्दोष–श्रुतिस्तथावदेत् । अत एवेत्यर्थः। शास्त्रीयोपपत्तिरत्रानुसन्धेयेति। **अधिकरणानि१२ सूत्राणि३८**

**।। इति श्रीमदणुभाष्यटीकायां द्वितीयस्य प्रथमः पादः ।।**

**गूढकर्तृक –** तदनन्यत्वमित्यस्यार्थः **स्वातन्त्र्यात्** इति। हरेरेव स्वातन्त्र्यात् तदन्यसाधनस्य तदधीनत्वान्नास्तीत्युच्यते। यतोऽतः "किंस्विदासीत्" इत्यादि श्रुतिर्नायुक्तं वदेत् । किंतु युक्तमेव वक्तीत्यर्थः। इतरव्यपदेशादित्यस्यार्थः **सर्वकर्तृत्वान्नायुक्तं तद्वदेच्छ्रुतिः** इति। हरेरेव सर्वकर्तृत्वान्न युक्तिविरुद्धं जीवकर्तृत्वं वदन्तीत्यर्थः। श्रुतेस्तु शब्दमूलत्वादित्याद्यधिकरणचतुष्कस्यार्थः। **नायुक्तं तद्वदेच्छ्रुतिः**। ननु हरेर्निर्दोषत्वसृष्टृत्वाद्यनंतगुणवत्वं नायुक्तम् । तत्तत्पूर्वपक्षोक्तयुक्तिरुद्धं न। यतो निर्दोषश्रुतिस्तथा वदेत् वक्ति अत एवेत्यर्थः। शास्त्रीयोपपत्तिरत्राऽनुसंधेयेति।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने द्वितीयाध्यायस्य प्रथमपादः ।।**

**अणुभाष्यम्**

**भ्रान्तिमूलतया सर्वसमयानामयुक्तितः(क्तता)।**
**न तद्विरोधाद् वचनं वैदिकं शंक्यतां(शंकितां) व्रजेत् ।।५।।**

**सत्यनाथीया–** रचनानुपपत्तेश्च नानुमानमित्यादिद्वितीयपादार्थमाह **भ्रान्तिमूल** इति श्लोकेन। अन्यसमयानां भ्रान्तिमूलतया भ्रान्तिजन्यत्वेन विप्रलम्भादिमूलत्वेन **अयुक्तितः** युक्तिविरुद्धत्वाद्युक्ति–शून्यत्वाच्च तद्विरुद्धत्वात्परस्परं तत्तत्समयविरोधाद् **वैदिकं वचनं शंक्यतां** श्रुतिरप्रमाणमिति शंकास्पदतां **न व्रजेत्** न प्राप्नुयादित्यर्थः।

अक्षपादकणादौ सांख्ययोगार्हतास्तथा।
शिवशक्तिमहावामलोकायतपुरःसराः ।।
दुरागमा इति ज्ञेया ...। इति बृहद्भाष्योक्तेस्तेषां दुरागमत्वं सिद्धम् ।

**तत्वमञ्जरी–** "असदेवेदमग्र आसीत्" (छन्दोग.३-१९-१)इत्यादावसत् कारणमुच्यते। प्रलये तावत् कार्यस्यासत्त्वात् कारणमप्यसद् भवितुमर्हति वस्तुत्वादित्यत आह – "असदिति चेन्न प्रतिषेधमात्रत्वात्" (२-१-८) इत्यधिकरणम् । **असन्नैव कारणं दृश्यते क्वचित्** इति। नैव क्वचिद् देशे काले चासत् कारणं वेदैर्दृश्यते। नापि प्रत्यक्षेणानुमानेन वा। विपर्ययदर्शनात् । असत् कारणं न भवति असत्त्वात् वन्ध्यापुत्रवदित्यादिना निषिद्धं च । विमतं नासत्कारणकम् कार्यत्वात् घटवदिति वा । न ह्यसत्कारणकं किञ्चित् कार्यं क्वापि दृष्टम् । न चात्यन्तासन्मनोमात्रमपि कुर्वद् दृष्टम् । न च युक्तम् । चेतनत्वेन भावत्वप्रसङ्गात्।

नन्वेवं हरेरेव स्वातन्त्र्ये स्वरूपसामर्थ्येनैव सर्वसृष्ट्याद्युपपत्तौ साधनान्तरोपादानमपि तस्य न स्यादित्यतोऽपि नायुक्तं तदित्यादि। तत् साधनान्तरोपादनां स्वतन्त्रस्यापि हरेरयुक्तं न । लीलयोपपत्तेरिति भावः। गमनशक्तस्य पुंस लीलया दण्डमालम्ब्य गच्छतो पङ्गुत्ववदैश्वर्या-विरोधात्। लीलया तूपादानमिति कुतः ? अशक्तस्यैव कुतो नेत्यत आह – **तद्वदेच्छुतिः** इति। लीलयैव साधनान्तरोपादानमित्येतत् "शक्तोऽपि ह्यन्यथा कर्तुं स्वेच्छानियमतो हरिः। कारणैर्नियतैरेव करोतीदं" इत्याद्यनुभाष्योक्तश्रुतिर्वदेद्यतोऽत इत्यर्थ इत्याद्यूह्यम् ।।६।।

ननु श्रुतिः नायुक्तवादिनीत्युक्तं, तथापि साङ्ख्यचार्वाकवैशेषिकादिनानामतविरुद्धवादिनी विष्णुकर्तृत्वादिश्रुतिः अप्रमाणं स्यादित्यतस्तेषां मतानां अप्रामाण्यं विवरीतुं द्वितीयः पादः प्राप्तः।

तस्य भाष्यानुभाष्ययोः विवृतत्वादिह संक्षेपेणार्थमाह – **भ्रान्तिमूलतया सर्वसमयाना-मयुक्तितः। न तद्विरोधाद्वचनं वैदिकं शङ्क्यतां व्रजेत्** इति ।

व्याससमयान्यसर्वसमयानां भ्रान्तिमूलतया भ्रान्तेर्हेतुत्वेन मिथ्याज्ञानजनकत्वेनेति यावत् । तदेव कुतः ? **भ्रान्तिमूलतया** । भ्रान्तिरित्युपलक्षणम् । भ्रमप्रमादविप्रतिलिप्सादिपूर्वकत्वेन । तदेव कुतः ? **अयुक्तितः**। युक्तिशून्यत्वात्, युक्तिविरुद्धत्वाच्चेत्यर्थः। अस्य सर्वस्य न्यायमुक्तावल्यादौ अस्माभिर्विवृतत्वात् नात्रैतत् विव्रियते।

> अक्षपादकणादौ च साङ्ख्ययोगार्हतास्तथा।
> शिवशक्तिमहायानलोकायतपुरस्सराः ।
> दुरागमा...। इति बृहद्भाष्योक्तपाद्मस्मृत्यादौ स्पष्टमेव दुरागमत्वं तेषामिति।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्यां द्वितीयाध्यायस्य द्वितीयः पादः ।।**

**आनन्दमाला –** नारायणपरायणस्य स्वसमयस्य परसमयविरोधमाशङ्क्य परिहरत्यस्मिन् पादे।

"रचनानुपपत्तेश्च नानुमानम्" (२-२-१) इत्यारभ्य "उत्पत्यसम्भवात्" (२-२-४२) इत्यन्तानि पादाधिकरणानि व्याख्याति - **भ्रान्तिमूलतया सर्वसमयानामयुक्तितः। न तद्विरोधाद् वचनं वैदिकं शङ्क्यतां व्रजेत्** इति। साङ्ख्यपूर्वकाः। शाक्तेयपर्यन्ताः परकीयसमयाः सर्वेऽपि भ्रान्तिमूलतया वर्तन्ते। यतो न युक्तिमूलाः श्रुतिमूला वा लक्ष्यन्ते। अतस्तद्विरोधेऽपि वेदगतं वेदानुकूलं स्मृतिगतं वा वचनं प्रमाणविरुद्धमिति न शङ्क्यम् । तेषामनुमाभासत्वेन प्रामाण्यानुपपत्तेः। वैदिकवचनस्योत्तममानत्वोक्त्या च तदन्तरविरोधाभावोऽवसीयते **॥१-१२॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां द्वितीयाध्यायस्य द्वितीयः पादः ॥**

**नृसिंहतीर्थ** –वेदप्रामाण्येन विष्णोर्जगत्कारणत्वादौ द्वादशसमयविरोधपरिहारार्थं प्रवृत्तस्य द्वितीयपादस्य न्यायसामान्येन रचनानुपपत्तेश्च नानुमानमित्यादिद्वादशाधिकणानामेकोक्त्या तात्पर्यमाह **भ्रान्ति** इति। भ्रान्तिमूलतया तत्तत्समयकर्तृभ्रान्तिमूलकत्वेन सर्वसमयानामयुक्ततः। अयोगादित्यर्थः। कर्मणि क्तप्रत्यये भावप्रधानो निर्देशः। अयुक्तत्ववन्त इत्यर्थः। अयुक्तता इति पाठे यतोऽत इत्यध्याहार्यम् । न तद्विरोधात् तैः समयैर्विरोधात् । वैदिकवचनं शंक्यतां प्रामाण्यशंकाविषयतां न व्रजेदित्यर्थः।

**॥ अणुभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः ॥**

**श्रीनिवासतीर्थीया–** समयपादार्थस्य भाष्ये विवृतत्वात् संकुच्याह **भ्रान्तिमूलतया सर्वसमयानामयुक्तितः । न तद्विरोधाद्वचनं वैदिकं शंक्यतां व्रजेत्** । "अक्षपादकणादौ च सांख्ययोगार्हतस्तथा। शिवशक्तिमहावामलोकायत पुरःसराः। दुरगमा इति ज्ञेया" इति बृहद्भाष्योक्तरीत्या दुरागमत्वेन बादरायणसमयान्यसमयानां भ्रान्तिमूलतया भ्रान्तिजन्यत्वेन भ्रान्तिजनकत्वेन च विप्रलम्भादिमूलत्वेन चायुक्ततः युक्तिशून्यत्वात् तद्विरुद्धत्वाच्च तद्विरोधात्परस्परं तद्विरोधात् तत्तत्समयविरोधाद्वैदिकं वचनं श्रुतिः शंक्यतां अप्रमाणमिति शंकास्पदतां न व्रजेत् । न प्राप्नुयादित्यर्थः।

**॥ इत्यणुभाष्यविवरणे द्वितीयाध्यायस्य द्वितीयः पादः ॥**

**छलारी –**

**हरिः ओम्**
**विरुद्धधर्मधर्मित्वं श्रौतं ज्ञापयितुं सताम् ।**
**नृसिंहरूपं बिभ्राणो विभिन्ध्यान्मत्तमस्ततिम् ।**

समन्वये समयाविरोधं दर्शयत्यस्मिन्पादे

## ओं रचनानुपपत्तेश्च नानुमानम् ओं

अनुमानपरिकल्पितं प्रधानं न जगत्कर्तृ । कुतः ? रचनानुपपत्तेः । अचेतनस्य स्वतः प्रवृत्यनुपपत्तेः। चशब्देन साधकमानाभावाच्चेति समुच्चीयत इति सूत्रार्थः।

अत्र न विष्णोः जगत्कर्तृत्वं युक्तं, प्रकृतेरेव महदादिकारणत्वात् । भवितव्यं खलु कार्येण स्वसदृशकारणवतैव, घटादौ दर्शनात्। न हीश्वरस्य महदादिसादृश्यं भवद्भिरभ्युपेयते। न च प्रकृतिप्रेरकत्वेन ईश्वरो अङ्गीकर्तव्यः, केवलप्रकृतेरेव कर्तृत्वाद्यभ्युपगमात् इति निरीश्वरसांख्यमतेन पूर्वपक्षे प्राप्ते –

युक्तमेव विष्णोः सर्वकर्तृत्वं न प्रधानस्य । तस्याचेतनत्वेन घटवत् स्वतः प्रवृत्त्योगेन कर्तृत्वायोगात् । न चेश्वरस्य महदादिसारूप्याभाव इति वाच्यम् । उपादानस्यैव तदङ्गीकारात् । ईश्वरस्य निमित्तत्वादिति सिद्धान्तः कृतः ।।१।।

## ओं अन्यत्राभावाच्च न तृणादिवत् ओं

अन्यत्राभावात् – भगवत्प्रेरणं विना जगतो अभावात्, कस्यापि वस्तुनः अभावादिति यावत् । तृणादिवदिति। तृणादीनां पर्जन्य इव ईशेन अनुग्राहकत्वमात्रं, किन्तु स्वातन्त्र्यमेवेति सूत्रार्थः।

अत्र नेश्वरस्य स्वातन्त्र्येण कर्तृत्वं युक्तं प्रधानादेव जगदुत्पत्तिसम्भवात् । न चाचेतनस्य स्वतः प्रवृत्त्यनुपपत्तिरिति उक्तमिति वाच्यम् । प्रधानादेव जगदुत्पत्तौ ईश्वरस्य अनुग्राहकत्वाभ्युपगमात् । यथा खलु पृथिव्येव तृणादिकार्याणां प्रधानकारणं प्रजन्यस्त्वनुग्राहकस्तथेश्वरो अपीति सेश्वरसांख्यमतेन पूर्वपक्षे प्राप्ते –

युक्तमेव विष्णोः जगत्कारणत्वं स्वातन्त्र्येण । नानुग्राहकत्वमात्रम् । "यच्च किञ्चिज्जगत्सर्वम्" (म.ना.उ) इत्यादिश्रुत्या प्रधानादिसर्वपदार्थानां सत्तादिप्रदानाय सर्वगतत्वेन ईश्वरप्रेरणामन्तरेण कस्यापि वस्तुनः सत्त्वस्यैवासम्भवात् । न हि यदधीनं यत्सत्तादि तत्तस्यानुग्राहकमात्रमिति सम्भवतीति सिद्धान्तः कृतः ।।२।।

## ओं अभ्युपगमेऽप्यर्थाभावात् ओं

अर्थशब्दो विषयादिपरः। अभ्युपगमेऽपि – चार्वाकेण स्वशास्त्रस्य सिद्धान्तत्त्वाभ्युपगमेऽपि, अर्थाभावात् – तद्व्यापकविषयादेः अभावाभ्युपगमात् । स्वव्याहतेरेव तन्मतमयुक्तमिति सूत्रार्थः ।।

अत्र न युक्तं विष्णोः जगत्कारणत्वम्। अन्तरेणापि ईश्वरं पूर्वस्मात्पूर्वस्मात् उत्तरोत्तरोत्पत्तिसम्भवात् । न च श्रुत्यादिबाधो वक्तुं युक्तः। तस्याप्रामाण्यात् । न च तस्याप्रामाण्ये धर्माद्यसिद्धिप्रसङ्गः। अतीन्द्रियवस्तुनः अभावेन इष्टत्वादिति चार्वाकरीत्या पूर्वपक्षे प्राप्ते –

युक्तमेव विष्णोः जगत्कारणत्वम् । चार्वाकसमयस्य विषयादिशून्यतया अप्रमाणत्वेन तद्विरोधाभावात् । तथाहि, न तावच्चार्वाकसमयस्य अदृष्टं विषयः। तदभावात् । नापि दृष्टम् । अप्राप्ते शास्त्रमर्थवदिति न्यायात् । नापि स्वर्गापवर्गाद्यदृष्टफलम् । तदभावात् । नापि दृष्टं धनादि । तस्य कृष्यादिलघूपायसाध्यत्वात् । अत एवाधिकारी निरस्तः। तदभावादेव सम्बन्धोऽपीति सिद्धान्तः कृतः ।।३।।

## ओं पुरुषाश्मवदिति चेत्तथापि ओं

पुरुषस्य चेतनस्य सम्बन्धादचेतनमेव शरीरमश्मादिकमादाय गच्छति। एवं अचेतना अपि प्रकृतिः पुरुषसम्बन्धात् प्रवर्तत इति चेन्न । तथापि एवं पुरुषाश्मादिदृष्टान्तेन साधनेऽपि नेष्टसिद्धिः। "न ऋते" (ऋ.सं.१०-११२-९)इत्यादिना शरीरप्रवृत्तेरपि ईशायत्तत्वेन दृष्टान्तस्य साधन-विकलत्वदिति सूत्रार्थः।

अत्र न हरेः जगत्कारणत्वं युक्तम् । प्रधानस्यैव कर्तृत्वेनेश्वरवैय्यर्थ्यात् । न चाचेतनस्य स्वतः प्रवृत्त्यनुपपत्तिः। केवलस्य तस्य कारणत्वानुपपत्तावपि पुरुषोपसर्जनस्य तदुपपत्तेः। भवति चात्र प्रयोगः। विमता प्रवृत्तिः पुरुषोपसर्जनाचेतनाधीना प्रवृत्तित्वात् अश्मादिप्रवृत्तिवदिति । न च दृष्टान्ते विवदितव्यम् । पुरुषसम्बन्धेनाचेतनस्यैव शरीरस्य अश्मानयनादिप्रवृत्तिदर्शनादिति पुरुषोपसर्जनप्रकृतिकर्तृत्ववादिरीत्या पूर्वपक्षे प्राप्ते-

युक्तमेव हरेः जगत्कारणत्वं पुरुषोपसर्जनप्रकृतेः जगत्कारणत्वे प्रमाणाभावात् । न चोक्तानुमानम् । "न ऋते त्वत्क्रियते किञ्चनारे" इति श्रुत्या शरीरप्रवृत्तेरपि परमात्माधीनत्वे सिद्धे विप्रतिपन्नप्रवृत्तेः पुरुषोपसर्जनप्रकृत्यधीनत्वसाधने दृष्टान्ताभावात् । हरेश्च जगत्कारणत्वे प्रमाणस्योक्तत्वादिति सिद्धान्तः कृतः ।।४।।

## ओं अन्यथानुमितौ च ज्ञशक्तिवियोगात् ओं

अन्यथानुमितौ - प्राचीनमतादन्यथा अनुमितौ पुरुषस्य प्राधान्येन प्रकृतेः उपसर्जनत्वेन पुरुषाश्मदृष्टान्तेन अनुमितौ, पुरुषस्य शरीरसम्बन्धानुपपत्तिः, कुतः ? ज्ञशक्तिवियोगात् । जानातीति ज्ञः पुरुषः तस्य शरीरसम्बन्धे स्वतः शक्त्यभावात् तद्धटकत्वेन ईश्वरः अङ्गीकार्यः। तथा च दृष्टान्तः साध्यविकलः इति सूत्रार्थः।

अत्र न हरेः जगत्कारणत्वं युक्तम् । प्रकृत्युपसर्जनपुरुषादेव जगदुत्पत्तिसम्भवेन ईश्वरवैय्यर्थ्यात्। तथा च प्रयोगः। विमता प्रवृत्तिः अचेतनोपसर्जनपुरुषाधीना प्रवृत्तित्वात् अश्मादानादिवदिति। न दृष्टान्ते विवादः। शरीरोपसर्जनपुरुषस्याश्मानयनादिप्रवृत्तिदर्शनादिति प्रकृत्युपसर्जन-पुरुषकर्तृत्ववादिरीत्या पूर्वपक्षे प्राप्ते -

युक्तमेवेश्वरस्य जगत्कारणत्वम्। प्रकृत्युपसर्जनपुरुषस्य कर्तृत्वे मानाभावात् । प्राचीनपक्षादन्यथानुमितिरिति चेन्न । शरीरसम्बन्धार्थे केवलस्य पुरुषस्य शक्त्यभावेन तद्घटकत्वेन ईश्वरस्याङ्गीकर्तव्यत्वात् । तद् दृष्टान्तेन अश्मानयनादिप्रवृत्तेरपि ईशायत्तत्वे सिद्धे विप्रतिपन्नप्रवृत्तेः प्रकृत्युपसर्जनपुरुषाधीनत्वसाधने दृष्टान्ताभावात् इति सिद्धान्तः कृतः ।।५।।

## ओं महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां ओं

महत्त्वादित्यादि भावप्रधानम् । यथा महत्त्वात् दीर्घत्वाच्च त्र्यणुकादिगतात् चतुरणुकादि-परिमाणमुत्पद्यते तथा ह्रस्वत्वात् द्व्यणुकगतात् त्र्यणुकपरिमाणमुत्पद्येत । पारिमाण्डिल्यात् परमाणुपरिमाणाच्च द्व्यणुकपरिमाणमुत्पद्येत । वाशब्दादन्यथा तयोरपि कारणत्वं न स्यात् विशेषकारणाभावादिति सूचितमिति सूत्रार्थः।

अत्र नेश्वरस्यानन्तगुणवत्वं युक्तम् । वैशेषिकादिमतविरुद्धत्वात् । तथा हि । द्रव्यादयः सप्त पदार्थाः। पृथिव्यादिभेदेन द्रव्यं नवविधम् । तत्राकाशादिपञ्चकं नित्यमेव। भूतचतुष्टयन्तु उभयविधम् । रूपादयः चतुर्विंशतिगुणाः। तेऽप्युभयविधाः। उत्क्षेपणादिभेदेन कर्म पञ्चविधं अनित्यमेव। सामान्यमनेकविधम् । समवायस्त्वेक एव। नित्यद्रव्यवृत्तयः अनन्ताः विशेषाः। एतत्त्रयं नित्यमेव। तत्र अनित्यं समवाय्यादिकारणत्रितयजन्यं समवायिकारणम् । तत्र कार्यद्रव्यस्यावयविसंयोगः असमवायिकारणम् । कार्यगतगुणानां कारणगतगुणाः असमवायिकारणम्, निमित्तमीश्वरादृष्टकालादि। स चेश्वरः आत्मविशेषः परमात्मा, स च संख्यादिपञ्चगुणयुक्तः कर्तृत्वोपयोगिज्ञानेच्छाप्रयत्नशाली चेति कथं तस्य अनन्तगुणत्वं युक्तं स्यात् । अतो व्यर्थ एवायं पूर्वाध्यायः इति प्राप्ते -

युक्तमेव हरेः अनन्तगुणवत्त्वं, वैशेषिकसमयस्याप्रामाणिकत्वेन प्रमाणविरुद्धत्वेन च अविरोध-कत्वात् । अतः सार्थक एवायं पूर्वाध्यायः इति सिद्धान्तः कृतः ।।६।।

## ओं समुदाय उभयहेतुकेऽपि तदप्राप्तिः ओं

समुदाये परमाणुसमुदाये, न केवलं एकपरमाणुहेतुके अङ्गीक्रियमाणे, तदप्राप्तिः - समुदायाप्राप्तिः। व्याहतेः। किन्तु उभयहेतुकेऽपि - मिलितानेकहेतुके अङ्गीक्रियमाणेऽपि, समुदायाप्राप्तिः मेलनस्यैव समुदायत्वेन आत्माद्याश्रयापातात् । विरलानेकहेतुके अङ्गीक्रियमाणे सर्वदा समुदायः स्यात् इति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं, बौद्धैकदेशिवैभाषिकसौत्रान्तिकमतविरुद्धत्वात् । तथाहि पञ्चतन्मात्राः परमाणवो रूपस्कन्धः। अहमिति निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः। दुःखं वेदनास्कन्धः। कुण्डली गौर्गच्छतीत्यादि सविकल्पकं ज्ञानसंज्ञास्कन्धः। रागद्वेषमोहादिरूपः

समनन्तरप्रत्ययः संस्कारस्कन्धः। एवं पञ्चस्कन्धात्मनावस्थितं जगत् परमार्थसत् । तदशेषं परमाणुसमुदायात्मकं न त्ववयवी नाम कश्चिदस्ति। विद्यमानं च सर्वं क्षणिकमेव। तच्चैतत्कार्यं कालकर्मरूपनिमित्तेनैव भवतीति किमीश्वरेण ? न चेश्वरे प्रमाणस्ति । वेदादेरप्रमाणत्वादिति प्राप्ते-

युक्तमेव विष्णोः जगद्कारणत्वं, वैभाषिकसौत्रान्तिकसमयस्य अप्रामाणिकत्वात् प्रमाण-विरुद्धत्वाच्चेति सिद्धान्तः कृतः ।।७।।

## ओं नासतोऽदृष्टत्वात् ओं

असतः जगत्कारणत्वं युक्तं न, कुतः ? अदृष्टत्वात् - अप्रामाणिकत्वादिति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं, शून्यसमयविरुद्धत्वात् । तथाहि, एकमेवशून्यं अन्तत्रयरहितं परमार्थसत् तस्मादेवाशेषं जगदुदेति। न चासङ्गस्य तदनुपपत्तिः। संवृतिसम्बन्धेन तदुपपत्तेः। न च श्रुतिविरोधः। तत्प्रामाण्यानभ्युपगमात् । अतः किमीश्वरेणेति प्राप्ते -

युक्तमेव विष्णोः जगत्कारणत्वं, शून्यसमयस्याप्रामाणिकत्वात् । तथा हि यत्तावदुच्यते शून्यमेव जगत्कारणमिति न तद्युक्तम् । प्रमाणाभावात् । प्रमाणं भवत् प्रत्यक्षमनुमानमागमो वा स्यात् । न तावत्प्रत्यक्षं तत्र प्रमाणमस्ति। विवादाभावप्रसङ्गात् । नाप्यनुमानं, क्वाप्यसतः कारणत्वादर्शनेन दृष्टान्ताभावात् । नाप्यागमः। तत्प्रामाण्यस्य वाद्यसम्प्रतिपत्तेः इति सिद्धान्तः कृतः ।।८।।

## ओं न भावोऽनुपलब्धेः ओं

प्रपञ्चः भावः ज्ञानात्मको न, कुतः? अनुपलब्धेः। जगतो विज्ञानात्मकत्वेन प्रमाणैरनुपलब्धेरिति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं, विज्ञानवादिमतविरुद्धत्वात् । तथा हि - नित्यं निरञ्जनं विज्ञानतत्त्वं एकमेव खलु विद्यमानं तन्मात्रमेतदशेषं जगत् । न ततोऽतिरिक्तं किञ्चिदस्ति। अतो जगदुत्पत्तौ ईश्वरेण कृत्याभावात् अयुक्तं लक्षणमिति प्राप्ते -

युक्तमेव विष्णोः जगत्कारणत्वं, विज्ञानवादिसमयस्य अयुक्तत्वेन अविरोधकत्वात् । तथा हि विज्ञानातिरिक्तं जगन्नास्तीति वदन् पृष्टव्यः विज्ञानतत्त्वे जगदध्यस्तं उत विज्ञानतत्त्वजगतोरभेद इति। नाद्यः निर्बाधं सदिति प्रतीयमानत्वेन आरोपितत्वायोगात् । न द्वितीयः। जगतो विज्ञानात्मकत्वे प्रमाणाभावात् । प्रमाणविरुद्धत्वाच्च । अतो युक्तं विष्णोः लक्षणमिति सिद्धान्तः कृतः ।।९ ।।

## ओं नैकस्मिन्नसम्भवात् ओं

एकस्मिन् वस्तुनि सत्त्वाद्यनेकप्रकाराः न युक्ताः, कुतः? असम्भवात् । अप्रामाणिकत्वेना-सम्भावितत्वात् इति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं, जैनमतविरुद्धत्वात् । तथा हि जैनास्तु सप्तभङ्गि जगदिति वदन्ति। सत्स्यात्, असत्स्यात्, सदसत् स्यात्, सदसद्विलक्षणं स्यात्, सत्त्वे सति सद्विलक्षणं स्यात्, असत्त्वे सति असद्विलक्षणं स्यात्, सदसदात्मकं सदसद्विलक्षणं स्यादिति। तज्जगत्, आत्मादृष्टपरादृष्टसाधनैः भविष्यतीति किमीश्वरेणेति प्राप्ते –

युक्तं विष्णोः जगत्कारणत्वं, स्याद्वादिमतस्याप्रामाणिकत्वात् । तथा हि यदुच्यते जैनैः सप्तभङ्गिजगदिति तदयुक्तम् । सदसद् द्वयातिरिक्तप्रकारस्याप्रामाणिकत्वात्, प्रमाणविरुद्धत्वाच्चेति सिद्धान्तः कृतः ।।१०।।

## ओं पत्युरसामञ्जस्यात् ओं

पत्युः – पशुपतेः, न जगत्कारणत्वं युक्तं, कुतः ? असामञ्जस्यात् – श्रुतौ तस्य पारतन्त्र्यादिदोषकथनेन असमीचीनत्वादिति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं पाशुपतसमयविरुद्धत्वात् । तथा हि – पशुपतिः खलु सार्वज्ञादिगुणशाली मायां उपादानीकृत्य हरिहरहिरण्यगर्भादिजगदुत्पत्त्यादि करोति। श्रुतयश्च अस्मिन्नर्थे भवन्तीति प्राप्ते –

युक्तं विष्णोः जगत्कारणत्वं, पाशुपतादिसमयस्याप्रामाणिकत्वात् । तथा हि – न पशुपतिः जगत्कर्ता । पारतन्त्र्यजननमरणादिदोषदुष्टत्वात् । न चात्र प्रमाणाभावः। "यं कामये तं तमुग्रं कृणोमि"· (ऋ.सं.१०–१२५–५) इत्यादिश्रुतेरिति सिद्धान्तः कृतः ।।११।।

## ओं उत्पत्त्यसम्भवात् ओं

न शक्तिः जगत्कारणं, उत्पत्त्यसम्भवात् – केवलस्त्रीभ्यः उत्पत्त्यसम्भवात् इति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं शाक्तेयमतविरुद्धत्वात् । तथा हि शक्तिरेव खलु सार्वज्ञ्यादिगुणशालिनी सकलजगज्जननी सकलश्रुतिस्मृतीतिहासपुराणेषु पठ्यते। अतः न लक्षणं हरेः युक्तमिति प्राप्ते –

युक्तमेव हरेः जगत्कारणत्वं, शाक्तेयमतस्याप्रामाणिकत्वेन अविरोधकत्वात् । तथा हि न शक्तेरेव जगत्कर्तृत्वं युक्तं पुरुषाननुगृहीतत्वात् । न हि पुरुषाननुगृहीतस्त्रीमात्रात् क्वचिदुत्पत्तिर्दृष्टा । न च "अजामेकां" इत्यादिश्रुतिविरोधः। तासां ईश्वराधीनतयैव जगत्कारणत्वाभिधायित्वात् । सर्वश्रुतिस्मृतिविरुद्धत्वाच्च अतः शाक्तेयमतमसमञ्जसम् । अनयैव दिशा सौरस्कान्दादिसमयाः निरस्ताः वेदितव्याः। तस्मात् उपपन्नमेव विष्णोः जगत्कारणत्वं लक्षणमिति सिद्धान्तः कृतः ।।

तदेतद् द्वादशाधिकरणानां समानन्यायाक्रान्ततया एकदैव तात्पर्यमाह - **भ्रान्तिमूलतया** इति। भ्रान्तिमूलतयेत्यस्यावृत्तिः। व्याससमयान्यसर्वसमयानां भ्रान्तिमूलतया मिथ्याज्ञानजनकत्वेनेत्यर्थः। तदेव कुतः ? भ्रान्तिमूलतया। भ्रान्तीरित्युपलक्षणम् । तत्तत्समयकृद् भ्रमप्रमादविप्रलम्भविप्र-लिप्सादिपूर्वकत्वेनेत्यर्थः। तदपि कुतः ? अयुक्ततः। भावप्रधानो निर्देशः। अयुक्तत्वात् । युक्त्यादिशून्यत्वात् । युक्त्यादिविरुद्धत्वाच्चेत्यर्थः। अप्रामाणिकत्वात् , प्रमाणविरुद्धत्वाच्चेति यावत्। तद्विरोधात् - तैः समयैः विरोधात्, वैदिकवचनं - "यतो वा" इत्यादि वेदवचनं, शङ्क्यतां - अप्रमाणमिति शङ्काविषयतां, न व्रजेदित्यर्थः। अयुक्ततेति पाठे, यतोऽत इत्यध्याहृत्य, तद्विरोधात् शङ्क्यतां न व्रजेदित्यन्वयो बोध्यः।।१२।।

**मदाचार्यमनोधाममध्वमानसमश्रके।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां द्वितीयाध्यायस्य द्वितीयः पादः।।**

**नारायणाचार्य-** युक्तिविरोधपरिहारानन्तरं समयविरोधपरिहारार्थं द्वितीयः पाद आरभ्यते सूत्रकारेण। यद्यपि समया अपि युक्तिमूला। तथा च युक्तिविरोधनिरासेनैव निरस्तप्रायाः। तथाप्यनादिकालतो वादिभिरत्यादरेण परिगृहीतानामेतेषां कथमप्रामाण्यं स्यादिति मन्दाशंकानिरासार्थं विशिष्यापि तत्खण्डनेनातिहेयताप्रदर्शनाय युक्तः पादारम्भः। तत्र समयाः द्विविधाः हैतुकाः पाषण्डकाश्च। उक्तं च

अक्षपादकणादौ च सांख्ययोगौ च हैतुकाः।
बौद्धपाशुपताद्यास्तु पाषण्ड इति कीर्तिताः।।

तत्र पाषण्डेभ्यो हैतुकाः प्रबलाः युक्तिमत्वात्। तेषु चार्वाकसांख्यसमयस्यैव अतिविरोधित्वम्। ईश्वरनिरपेक्षाचेतनप्रवृत्तिवादित्वात्। तत्र चार्वाकसमयस्य अतिविरोधित्वेऽप्यतितुच्छत्वेन प्रथमनिषेध्यतायोगात्सांख्यसमयो निराकर्त्तव्यः। तत्रापि निरीश्वरसांख्यस्यैवातिविरोधित्वादादौ तन्मतनिराकरणार्थं चतुःसूत्री **ओं रचनानुपपत्तेश्च नानुमानम्**। अचेतनस्य स्वतः प्रवृत्यनुपपत्तेः न सांख्यानुमानपरिकल्पितं जडं प्रधानं जगत्कर्तृ प्रमाणाभावदिति चार्थः।**ओं प्रवृत्तेश्च**। चेतनस्यैव स्वतः प्रवत्तिदर्शनाच्च। **ओं पयोऽबुवच्चेत्तत्रापि** । पयोंबुवदचेतनस्यापि प्रवृत्तिः स्यादिति न युक्तम्। तत्रापि(बृ.उ.५-८-९) "एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्याः नद्यः स्यन्दन्ते" "एतेन ह वाव पयो मण्डं भवति" इत्यादेरीश्वरनिमित्ततताया एवांगीकारात् । **ओं व्यतिरेकानवस्थितेश्चानपेक्षत्वात्** । "न ऋते त्वत्क्रियते किन्चनारे" (ऋ.सं.१०-११२-९)

इति ईश्वर प्रेरणाव्यतिरेकेण कस्यापि कर्मणो अनवस्थितिदर्शनात् । अनपेक्षितमेव तन्मतमिति ।।१।।

अथ सेश्वरसांख्यमतम् । यथा पर्जन्यानुगृहीतपृथिव्या एव तृणादिकमुत्पद्यते तथा प्रधानादेवेश्वरानुगृहीतं जगदिदं इत्यतो तन्निराचष्टे **ओं अन्यत्राभावाच्च न तृणादिवत्** इति।

यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः।

''ब्रह्मण्येवेदमाविरासीद्ब्रह्मणि स्थितं ब्रह्मणि एव लयमभ्युपैति। ब्रह्मैवाधस्ताद् ब्रह्मैवोपरिष्टाद् ब्रह्म मध्यतो ब्रह्मसर्वतः। ब्रह्मैवेदं सर्वं'' इत्यादिश्रुतिभ्यः अन्यत्र जगतोऽभावान्न पर्जन्यवत्तृणादीनामिव जगदुत्पत्तावनुग्राहकत्वमीश्वरस्य ।

स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्तिकृत् । (भा.१-१०-२२)

द्रव्यं कर्मच कालश्च(भा.२-१०-१२) इत्यादेश्च। चार्वाकमतं निराकरोति **ओं अभ्युपगमेऽप्यर्थाभावात्** । यस्य धर्माधर्मौ नाभिमतौ तस्य चार्वाकस्य। अभ्युपगमे अभ्युगम्यते प्रामाणिकत्वेन स्वीक्रियते तस्मिन् तत्सिद्धान्ते प्रयोजनाभावात्स्वव्याहतिरेव। सिद्धान्तः सप्रयोजनावानिति नियमात्प्रयोजनशून्यश्च सिद्धान्तश्च इत्यभ्युपगमे कथं न व्याहतिरतो सः उपेक्ष्यः। न केवलं पूर्वोक्तसमया उपेक्ष्याः किन्त्वयमपीत्यपेरर्थः।

निरीश्वसांख्यैकदेशिमतं पुरुषोपसर्जनप्रकृतिकर्तृवादमपाकरोति **ओं पुरुषाश्मवदिति चेत्तथापि** । यथा चेतनसंबन्धेन अचेतनमेव शरीरमश्मादिकमादाय गच्छति, एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात्प्रवर्तते । भवति चात्र प्रयोगः, विमता प्रवृत्तिः पुरुषोपसर्जनाचेतननिमित्ता प्रवृत्तित्वादश्मानयनादिविषयशरीरप्रवृत्तिवदिति चेन्न । तत्रापि ''न ऋते त्वत्क्रियते'' (ऋ.सं.१०-११२-९) इत्यादेरीश्वरस्यैव स्वातन्त्र्यांगीकारात्। दृष्टान्ताभावात् । हैतुकं मन्यश्चायं श्रुत्यवष्टम्बेनोक्तं दृष्टान्तदोषं न गणयतीत्यतो हेत्वन्तरेण दृष्टान्ते साध्यविकलतां साधयत्सूत्रं **ओं अंगित्वानुपपत्तेश्च**। शरीरप्रवृत्तौ पुरुषस्य अङ्गित्वात्। ''अंगमंगीसमादाय यथा कार्यं करोत्यसौ ।'' इति पुरुषेऽगीत्वव्यवहारोऽनुपपन्नः किन्तु शरीरमंगी पुरुषो अङ्गं इति व्यवहारः स्यात् ततश्च न शरीरस्य प्राधन्यमिति ।।४।।

अस्तु तर्हि पुरुषस्यैव प्रकृत्युपसर्जनस्य कर्तृत्वम् । तथा सति अङ्गित्वंचोपपन्नमिति प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति। **ओं अन्यथानुमितौ च ज्ञशक्तिवियोगात्** । पूर्वमतापेक्षया उक्तविधान्यथानुमितावपि तस्य पुरुषस्य शरीरांगीकारे स्वतः शक्त्यभावात्। अनादिताश्रयणे

तदेतद् द्वादशाधिकरणानां समानन्यायाक्रान्ततया एकदैव तात्पर्यमाह - **भ्रान्तिमूलतया** इति। भ्रान्तिमूलतयेत्यस्यावृत्तिः। व्याससमयान्यसर्वसमयानां भ्रान्तिमूलतया मिथ्याज्ञानजनकत्वेनेत्यर्थः। तदेव कुतः? भ्रान्तिमूलतया। भ्रान्तीरित्युपलक्षणम् । तत्तत्समयकृद् भ्रमप्रमादविप्रलम्भविप्र-लिप्सादिपूर्वकत्वेनेत्यर्थः। तदपि कुतः? अयुक्ततः। भावप्रधानो निर्देशः। अयुक्तत्वात् । युक्त्यादिशून्यत्वात् । युक्त्यादिविरुद्धत्वाच्चेत्यर्थः। अप्रामाणिकत्वात् , प्रमाणविरुद्धत्वाच्चेति यावत्। तद्विरोधात् - तैः समयैः विरोधात्, वैदिकवचनं - ''यतो वा'' इत्यादि वेदवचनं, शङ्क्यतां - अप्रमाणमिति शङ्काविषयतां, न व्रजेदित्यर्थः। अयुक्ततेति पाठे, यतोऽत इत्यध्याहृत्य, तद्विरोधात् शङ्क्यतां न व्रजेदित्यन्वयो बोध्यः।।१२।।

**मदाचार्यमनोधाममध्वमानसमञ्चके।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां द्वितीयाध्यायस्य द्वितीयः पादः।।**

**नारायणाचार्य-** युक्तिविरोधपरिहारानन्तरं समयविरोधपरिहारार्थं द्वितीयः पाद आरभ्यते सूत्रकारेण। यद्यपि समया अपि युक्तिमूला। तथा च युक्तिविरोधनिरासेनैव निरस्तप्रायाः। तथाप्यनादिकालतो वादिभिरत्यादरेण परिगृहीतानामेतेषां कथमप्रामाण्यं स्यादिति मन्दाशंकानिरासार्थं विशिष्यापि तत्खण्डनेनातिहेयताप्रदर्शनाय युक्तः पादारम्भः। तत्र समयाः द्विविधाः हैतुकाः पाषण्डकाश्च। उक्तं च

अक्षपादकणादौ च सांख्ययोगौ च हैतुकाः।
बौद्धपाशुपताद्यास्तु पाषण्ड इति कीर्तिताः।।

तत्र पाषण्डेभ्यो हैतुकाः प्रबलाः युक्तिमत्वात्। तेषु चार्वाकसांख्यसमयस्यैव अतिविरोधित्वम्। ईश्वरनिरपेक्षाचेतनप्रवृत्तिवादित्वात्। तत्र चार्वाकसमयस्य अतिविरोधित्वेऽप्यतितुच्छत्वेन प्रथमनिषेध्यतायोगात्सांख्यसमयो निराकर्त्तव्यः। तत्रापि निरीश्वरसांख्यस्यैवातिविरोधित्वादादौ तन्मतनिराकरणार्थं चतुःसूत्री **ओं रचनानुपपत्तेश्च नानुमानम्**। अचेतनस्य स्वतः प्रवृत्यनुपपत्तेः न सांख्यानुमानपरिकल्पितं जडं प्रधानं जगत्कर्तृ प्रमाणाभावदिति चार्थः।**ओं प्रवृत्तेश्च**। चेतनस्यैव स्वतः प्रवत्तिदर्शनाच्च। **ओं पयोंऽबुवच्चेत्तत्रापि** । पयोंबुवदचेतनस्यापि प्रवृत्तिः स्यादिति न युक्तम्। तत्रापि(बृ.उ.५-८-९) ''एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्याः नद्यः स्यन्दन्ते'' ''एतेन ह वाव पयो मण्डं भवति'' इत्यादेरीश्वरनिमित्ततताया एवांगीकारात् । **ओं व्यतिरेकानवस्थितेश्चानपेक्षत्वात्** । ''न ऋते त्वत्क्रियते किन्चनारे'' (ऋ.सं.१०-११२-९)

इति ईश्वर प्रेरणाव्यतिरेकेण कस्यापि कर्मणो अनवस्थितिदर्शनात् । अनपेक्षितमेव तन्मतमिति ।।१।।

अथ सेश्वरसांख्यमतम् । यथा पर्जन्यानुगृहीतपृथिव्या एव तृणादिकमुत्पद्यते तथा प्रधानादेवेश्वरानुगृहीतं जगदिदं इत्यतो तन्निराचष्टे **ओं अन्यत्राभावाच्च न तृणादिवत्** इति।

यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।

"ब्रह्मण्येवेदमाविरासीद्ब्रह्मणि स्थितं ब्रह्मणि एव लयमभ्युपैति। ब्रह्मैवाधस्ताद् ब्रह्मैवोपरिष्टाद् ब्रह्म मध्यतो ब्रह्मसर्वतः। ब्रह्मैवेदं सर्वं" इत्यादिश्रुतिभ्यः अन्यत्र जगतोऽभावान्न पर्जन्यवत्तृणादीनामिव जगदुत्पत्तावनुग्राहकत्वमीश्वरस्य ।

स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्तिकृत् । (भा.१-१०-२२)

द्रव्यं कर्मच कालश्च(भा.२-१०-१२) इत्यादेश्च। चार्वाकमतं निराकरोति **ओं अभ्युपगमेऽप्यर्थाभावात्** । यस्य धर्माधर्मौ नाभिमतौ तस्य चार्वाकस्य । अभ्युपगमे अभ्युगम्यते प्रामाणिकत्वेन स्वीक्रियते तस्मिन् तत्सिद्धान्ते प्रयोजनाभावात्स्वव्याहतिरेव। सिद्धान्तः सप्रयोजनावानिति नियमात्प्रयोजनशून्यश्च सिद्धान्तश्च इत्यभ्युपगमे कथं न व्याहतिरतो सः उपेक्ष्यः। न केवलं पूर्वोक्तसमया उपेक्ष्याः किन्त्वयमपीत्यपेरर्थः।

निरीश्वसांख्यैकदेशिमतं पुरुषोपसर्जनप्रकृतिकर्तृवादमपाकरोति **ओं पुरुषाश्मवदिति चेत्तथापि** । यथा चेतनसंबन्धेन अचेतनमेव शरीरमश्मादिकमादाय गच्छति, एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात्प्रवर्तते । भवति चात्र प्रयोगः, विमता प्रवृत्तिः पुरुषोपसर्जनाचेतननिमित्ता प्रवृत्तित्वादश्मानयनादिविषयशरीरप्रवृत्तिवदिति चेन्न । तत्रापि "न ऋते त्वत्क्रियते" (ऋ.सं.१०-११२-९) इत्यादेरीश्वरस्यैव स्वातन्त्र्यांगीकारात्। दृष्टान्ताभावात् । हैतुकं मन्यश्चायं श्रुत्यवष्टम्बेनोक्तं दृष्टान्तदोषं न गणयतीत्यतो हेत्वन्तरेण दृष्टान्ते साध्यविकलतां साधयत्सूत्रं **ओं अंगित्वानुपपत्तेश्च**। शरीरप्रवृत्तौ पुरुषस्य अङ्गित्वात् । "अंगमंगीसमादाय यथा कार्यं करोत्यसौ ।" इति पुरुषेंऽगीत्वव्यवहारोऽनुपपन्नः किन्तु शरीरमंगी पुरुषो अङ्गं इति व्यवहारः स्यात् ततश्च न शरीरस्य प्राधन्यमिति ।।४।।

अस्तु तर्हि पुरुषस्यैव प्रकृत्युपसर्जनस्य कर्तृत्वम् । तथा सति अङ्गित्वंचोपपन्नमिति प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति। **ओं अन्यथानुमितौ च ज्ञशक्तिवियोगात्** । पूर्वमतापेक्षया उक्तविधान्यथानुमितावपि तस्य पुरुषस्य शरीरांगीकारे स्वतः शक्त्यभावात्। अनादिताश्रयणे

निष्प्रकृतीनां मुक्तानां प्रवृत्तिरुदाहर्तव्या । एवं प्रत्येकं दूषितान्यनीश्वरमतानि सामान्यदूषणेन निराकुर्वत्सूत्रं **ओं विप्रतिषेधाच्चासमंजसम्**। सर्वमपि निरीश्वरमतं सकलश्रुतिस्मृतियुक्तिविरुद्धत्वात् असमंजसं अंगीकारानर्हा। "श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम्। वदन्ति तद्विरुद्धं यो वदेत्तस्मान्नराधमः।। " इति पाद्मोक्तेः।।५।।

अथ परमाण्वारम्भवादं शुष्कतार्किकवैशेषिकादिसंमतमपाकरोति सप्तभिः सूत्रैः । तथाहि तन्मतसंक्षेपः। द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट्भावपदार्थाः। अभावश्चेति सप्तमपदार्थः। तत्र गुणाश्रयो द्रव्यम्। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्मनोभेदेन नवविधम् । तत्राकाशादिपंचकं नित्यमेव। भूतचतुष्टयं तु परमाणुरूपं नित्यमन्यदनित्यमेव। कर्मान्यत्वे सति जातिमात्राश्रयो गुणः। स च रूपरसगन्धस्पर्शशब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कार-बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्माः इति चतुर्विंशतिधाः। ते चानित्याश्रिता अनित्या एव। नित्याश्रिताश्च द्विविधाः। संयोगविभागसमवायिकारणं कर्म। तच्च उत्क्षेपणापक्षेपणाकुंचन-प्रसारणगमनभेदात्पंचविधं अनित्यमेव। नित्यमेकमनेकानुगतं समवेतं समान्यमनेकविधं। नित्यसम्बन्धः समवायः स च सर्वत्रैक एव। नित्यद्रव्यवृत्तयो विशेषाः। एतत्त्रयं नित्यमेव। तत्रानित्यं कारणत्रितयजन्यम् । तत्र यत्समवेतं कार्यमुत्पद्यते तत्समायिकारणम् । परमाण्वादिद्रव्यमेव। आदिसृष्टौ च परमाणवो द्व्यणुकादि क्रमेणावयविनमारभन्ते। समवायिकारणप्रत्यासन्नं अवधृतसामर्थ्यं समवायिकारणं भवति।

प्रत्यासत्तिर्द्विविधा। कार्यैकार्थप्रत्यासत्तिः कारणैकार्थप्रत्यासत्तिरिति। तत्रावयवसंयोग एवावयविद्रव्यस्य कार्यैकार्थप्रत्यासत्या समवायिकारणं भवति। कार्यगुणानां च कारणगुणाः कर्म च कारणैकार्थप्रत्यासत्या सत्यादिना असमवायिकारणम् । कार्यगतकर्मणः कारणगतगुणाः कार्यैकार्थप्रत्यासत्याऽसमवायिकारणम् । तत्र परिमाणं कारणगतं कार्यगतपरिमाणस्य असमवायिकारणं भवन् परमाणुद्व्यणुकगतं परिमाणं द्व्यणुकत्र्यणुकगतपरिमाणस्य कारणं न भवति। किन्तु संख्ययैवतज्जन्म। एतदन्यत्कारणं निमित्तकारणमीश्वरादृष्टकालादि। स चेश्वर आत्मविशेषः।

संख्यापरिमाणपृथक्त्वसंयोगविभागरूपसामान्यगुणपंचकयुक्तः कर्तत्वोपयोगिज्ञानेच्छा-प्रयत्नरूपगुणत्रययुक्तः शिष्टसर्वात्मसाधारणषड्गुणयोग्य इति कथं तस्यानन्तगुणत्वं युक्तं स्यात् । अतो व्यर्थ एव पूर्वाध्याय इति प्राप्ते सूत्रं **महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां** इति । अयमाशयः। युक्तमेव हरेरनन्तगुणत्वम् । न चोक्तवैशेषिकादिसमयविरोधः। तेषामनुपपन्नभाषित्वेन तत्कल्पनाया एवाप्रामाणिकत्वात् । तथाहि यदुच्यते परिमाणं त्र्यणुकादिगतसमवायिकारणं भवति न परमाण्वादिगतमिति। तदसत्। यथामहत्त्वाद्दीर्घत्वाच्च त्र्यणुकादिगतात्कार्ये चतुरणुकादौ

परिमाणमुपपद्यते तथाद्व्यणुकगतात् ह्रस्वत्वाणुगतपरिमाणोत्पत्युपपत्तेः। परमाणुगताच्च पारिमाण्डिल्यात् द्व्यणुकगतपरिमाणोत्पत्तिसम्भवादिति भावः। अन्यथा त्र्यणुकादिपरिमाण-मप्यारम्भकं न स्यात्तत्रापि तद्गतसंख्यैव आरम्भिका स्यादिति चशब्दार्थः।

किंचेश्वरेच्छाया सर्गाद्यकाले परमाणुषु कर्मोत्पद्यते। ततश्च परमाणुद्वयसंयोगाद् द्व्यणुकाद्युत्पत्तिरित्यपि न युक्तमित्याह **उभयथापि न कर्मातस्तदभावः**। ईश्वरेच्छा किं नित्या अङ्गीक्रियते अनित्या वा। आद्ये प्रलयेऽपि तस्याः सत्वेन तदानीं कार्याभावादन्यदापि तदभावापातः। द्वितीये तदुत्पादकाभावादिच्छाया अभावान्न कर्मातः कार्याभाव एवेत्युभयतः पाशारज्जुः ।

वैदिकेश्वरांगीकारवादे तु तस्य वेदेनैवाचिन्त्यशक्तित्वादिना प्रतिपादितत्वात्सर्वमुपपद्यते एवेति भावः। परमते कालस्याखण्डत्वात् तस्यापि नित्यत्वात्सहकारिविरहप्रयुक्तकार्याभावोऽप्यनुपपन्नः। सर्गादिकालोक्तौ तु तस्याः तस्यापि सर्गाद्युपाधिनिमित्तकतया आत्माश्रयाद्यापत्तेर्वैदिकसिद्धान्ते तु स्वत एव काले विशेषांगीकृतेर्न काप्यनुपपत्तिः।

एवं निमित्तकारणं निरूप्य समवाय्यसमवायिकारणनिरासाय समवायं दूषयितुं सूत्रं **समवायाभ्युपगमाच्च साम्यादनवस्थितेः**। कार्यकारणादीनां समवायसम्बन्धाङ्गीकारात् तस्यापि भिन्नत्वसाम्यात्समवायापेक्षायामनवस्थापत्तिः। स एव समवायः स्वनिर्वाहकत्वात्समवायः सम्बद्धः इति बुद्धिं जनयतीत्यपि न युक्तम् । तथात्वे द्रव्यमेव गुणीत्यादिविशिष्टबुद्धिनिर्वाहकमस्त्विति तदंगीकारो व्यर्थ इति भावः।

एवं परपक्षे कारणत्रितयनिरासेन सृष्टिं निरस्य प्रलयनिरासार्थं सूत्रं **नित्यमेव च भावात्**। परपक्षे कार्यं नित्यमेव स्यात्। न तु कदापि प्रलयः। समवायिकारणानां परमाणूनां निमित्तस्य चेश्वरेच्छादेर्नित्यत्वेन सदा सत्वात् । असमवायिकारणस्य च संयोगादेरेतज्जन्यतया तत्सत्वेन तदुत्पत्तेरपि सर्वदा सम्भवात् । अदृष्टस्यापि तदानीं सत्वादन्यथा सर्गकालेऽपि कार्योत्पत्तिर्न स्यात्। तस्य दृष्टकारणसम्पादकत्वेन स्वाभावापराधेन कार्यनिरोधकत्वादर्शनादिति भावः। एवं परमाणूनां नित्यत्वमभिप्रेत्य दूषणमुक्तम्। इदानीं तन्नित्यत्वमपि निराकर्तुं सूत्रं **ओं रूपादिमत्त्वाच्च ओं विपर्ययो दर्शनात्** इति। घटादिदृष्टान्तेन रूपादिमत्वहेतुना परमाणूनामपि प्रकृतनित्यत्वविपर्ययो अनित्यत्वं च स्यात् । अस्त्वनित्यत्वं को दोष इति चेन्न तथा सति प्रलये परमाणूनामभावादग्रेऽपि सृष्टिर्न स्यात्। रूपादिमतामप्येषां नित्यत्वे घटादेरपि नित्यत्वं स्यादविशेषात् इत्युभयथापि अनुपपत्तरेवेत्यर्थप्रतिपादकं सूत्रं **ओं उभयथा च दोषात्** इति। अवतारिकयैव व्याख्यातप्रायमेतत्।

एवं च प्रपंचेन दूषितं परमाण्वारम्भवादमप्रामाणिकत्वेन दूषयितुं सूत्रं **ओं अपरिग्रहाच्चात्यन्तमनपेक्षा** इति। श्रुतिस्मृतिविरुद्धत्वाच्चास्य मतस्य अतिशयेन अनपेक्षता

अहमासं पण्डितैको हैतुको वेदनिंदकः।
आन्वीक्षकीं तर्कविद्यां अनुरक्तो निरर्थकाम् ।। इति मोक्षधर्मे।

शुष्कतर्कशास्त्राभ्यासजनितपापप्राप्तसृगालयोनेः कस्यचित्किंचित्पुण्यनिमित्तकजातिस्मृतिमतः स्वीयकर्मोक्त्या तस्यात्यन्तहेयताया एव प्रतिपत्तेरिति ।

अथ पाषण्डिनां मध्ये परमाणुपुंजवादिनां बौद्धानां मतं निराकरोत्यष्टभिः सूत्रैः। तथा हि तन्मतम् । रूपविज्ञानवेदनासंस्कारसंज्ञारूपं पंचस्कन्धात्मकं जगत्परमाणुसमुदायमात्रं न त्ववयवी नाम कश्चिदस्ति। परमाणुसमुदाय एव घटादिबुध्युपपन्नौ तत्परिमाणस्य तदारब्धकार्यस्य अवयविनोऽभ्युपगमवैयर्थ्यात् । विद्यमानं सर्वं क्षणिकमेव। एतदेव हि पदार्थनां सत्वं यद्देशतः परमाणुत्वं कालतः क्षणिकत्वं चेति। तच्चैतत्कार्यकालकर्मनिमित्तेन भवत्यतः किमीश्वरेणेति। तत्र तावत्समुदायनिराकरणार्थं सूत्रं **ओं समुदाय उभयहेतुकेऽपि तदप्राप्तिः**। कालकर्मादिनिमित्तेन क्षणिकपरमाणुनिमित्तकः समुदायो भवतीत्युच्यते। स समुदायः किं एकपरमाणुहेतुको अनेकपरमाणुहेतुको वा। नाद्यः एकस्मात्समुदाय इत्यस्य व्याहतत्वादनंगीकाराच्च । द्वितीये किं मिलितानेकहेतुकः किं वा विरलानेकहेतुकः। नाद्यः सति समुदाये मिलितत्वं मिलितानां च समुदाय इत्यन्योन्याश्रयतया समुदायानुपपत्तेः। नोत्तरः, अमिलितपरमाणूनां सदा सत्वेन समुदायस्यापि सदातनत्वापत्त्या प्रलयाभ्युपगमविरोधापातादिति भावः।

अत्रोक्तमाक्षिप्य समादधत्सूत्रं **ओं इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तकत्वात्** इति। यदुक्तं समुदायस्य विरलानेकहेतुकत्वे सदातनत्वं स्यादिति। तदङ्गीक्रियत एव। न चैवं प्रलयानुपपत्तिः। सदातनत्वेऽपि समुदायस्य वित्तिव्यवहाराभावेन प्रलयोपपत्तेः। न च विद्यमानत्वे व्यवहाराभावोऽपि कुत इति वा व्यवहारादेरिदं वेदं चेति परमाणुषु परस्परापेक्षानिबन्धनत्वात् । परस्परापेक्षा च परमाणूनां सामीप्यापेक्षा। न चास्ति प्रलये तत्सामीप्यमतो नोक्तदोषः इति चेन्न। तथा सति कदापि समुदाये वित्तिव्यवहाराभावापातात्। विरला हि परमाणवो मिलितपरमाणूनुत्पादयन्ति ते च पुरुषेण दृश्यन्ते। ते एवैकैकं कार्यमुत्पाद्य नश्यन्ति। तेप्येवं तथा च कथं दृष्टुः परस्परापेक्षा ततश्च व्यवहार इति घटेत् । न ह्यन्यत्र दर्शनमन्यत्परस्परापेक्षान्यत्र व्यवहार इति युज्यते। पुरुषस्यापि तन्मते तथात्वादिति भावः। न च विरला मिलितानुत्पाद्य स्थायित एव वर्तन्त इति युक्तम् । क्षणिकत्ववादभंगापत्तेः। कारणे सति कार्यं भवत्येवेति तन्नियमादेकस्माद्धटादल्पतरकाले कुलालशालापरिपूर्त्यापत्तेः। एवं विरलपरमाणुभ्यो मिलितपरमाणूत्पत्तिमंगीकृत्य व्यवहारासम्भवो दर्शितः। अथ विशेषकार्योत्पत्तिं निराकुर्वत्सूत्रं **ओं**

**उत्तरोत्पादे च पूर्वनिरोधात्** । कारणस्य सदृशकार्यजनकत्वनियम इति तन्मतम् । अन्यथा घटादिप्रतिक्षणं घटपरम्परेव पटादिपरम्परापि स्यात् । तथा च परमाणूनामेकरूपत्वात् विचित्र-कार्योत्पत्तिर्न स्यात् । न च ते स्वसदृशं कार्यमुत्पाद्य पश्चात्तत्रैव वैसादृश्यमप्युत्पादयन्तीति वाच्यम्। सदृशकार्योत्पत्तिक्षणे एव कारणविनाशांगीकारात् ।

अथ प्रतिक्षणोत्पत्तिनिरासार्थं सूत्रं **ओं असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** । किं कारणे विनष्टे कार्यमुत्पद्यते विद्यमाने वा। आद्ये तद्विनाशानन्तरमुत्पन्नं तत्कार्यमिति प्रतिज्ञाविरोधः, अतिप्रसंगापत्तेः। द्वितीये द्विक्षणावस्थाने तदुत्तरत्रापि विनाशे कारणाभावात्सर्वकार्याणां यौगपद्यं स्यात्।

अथ क्षणिकवादे विनाशं पराकुर्वत्सूत्रं **ओं प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्**। यः सन्तानेन सह मुद्गरप्रहारेण विनाशः सः प्रतिसंख्याविनाशः प्रतिसंख्याबुद्धिस्तत्पूर्वको विनाशः मध्यमपदलोपी समासः। यश्च सन्तानेन विना प्रतिक्षणं विनाशः सोऽप्रतिसंख्याविनाशस्तस्या-बुद्धिपूर्वकत्वादिति तन्मतम् । भाष्ये टीकायां सन्तानमन्तरेण यः प्रतिक्षणं विनाशः यश्च सन्तानेन सह तयोरनुपपत्तिरिति यद्विनाशद्वयव्याख्यानं कृतं तत्पराभिप्रेतविनाशद्वयोत्पत्तिक्र ममनिरुध्यैव। अबुद्धिपूर्वस्य प्रतिक्षणविनाशस्य पूर्वभावित्वादितरस्य तदनन्तरभावित्वात्सौत्रक्रमव्यत्यासेनेति ज्ञातव्यम् । न तु यथासख्यम् । अन्यथा ''बुद्धिपूर्वविनाशो हि प्रतिसंख्यानिरोधधीः । अबुद्धिपूर्वकस्तेषां निरोधोऽप्रतिसंख्यया।।'' इति विष्णुतत्वनिर्णयटीकायां तदुदाहृतबौद्ध-कारिकाविरोधापत्तेः। न च तन्मते उक्तविनाशद्वयं सम्भवति। तथा हि । कारणं प्रतिक्षणं कार्यं निर्वर्त्य स्वयं नश्यतीति वक्तव्यम्। तदा स्वकार्यवियोगकाले स्वयं सदिति कार्यमुत्पादयेदेव। कारणे सति कार्यं भवत्येवेति नियमात्। तदुत्पत्त्यनन्तरं चैवमिति कथं प्रतिक्षणं नाशो युज्येतेत्याद्यस्तावदनुपपन्नः। नाप्यन्यः । सतो हि घटस्यात्यन्तिको नाशोऽतोऽसौ सत्वात्कार्यमुत्पादयेदेव । कारणे सति कार्यं भवत्येवेति नियमात् । तत्कार्यं चैवमिति कथं सन्तनोच्छेदावसर इति भावः।

ननु सर्वभावानां सत्वं वदद्भिः सर्वैरपि क्षणिकत्वं वक्तव्यमेव। तथाहि अर्थक्रियाकारित्वं हि सत्वं नाम । तच्च प्रतिक्षणं कार्योत्पादकत्वांगीकार एव युज्यते। य एव क्षणः कार्योत्पादमन्तरेण मोघः स्यात्तस्मिन्नेव क्षणे असत्वापत्तिः। न चान्यद्विजातीयं कार्यमुपलभ्यते तन्मात्रोपलम्भादिति सजातीयमेवकार्यमुत्पद्यते इति वक्तव्यम्। तस्मिन्नुत्पन्नेऽपि कारणस्यावस्थितिश्चानेकानुपलब्धि-बाधितेति पूर्वं पूर्वं प्रतिक्षणं नश्यतीत्यगत्यांगीकर्त्तव्यमेव। अतः सत्वान्यथानुपपत्यैव प्रतिक्षणं विनाशोत्पादौ सजातीयकार्योत्पत्तिश्च सिद्धेति कथं क्षणिकत्ववादोऽनुपपन्न स्यादित्याशंका परिहाराय सूत्रं **ओं उभयथा च दोषात्** । अत्र कारणे सति कार्यं भवत्येवेति नियमः स्वीक्रियते न वेति

**पृष्टव्यम्। आद्ये कार्यकारणयोः** समानकालत्वापत्या न कार्यकारणभावो युक्तः। तत्सिध्यर्थं च **द्वितीयपक्षो अङ्गीकर्त्तव्यः । सोऽप्यनुपपन्नः।** तथा सति कार्यापेक्षया पूर्वकाले कारणमस्तीति वक्तव्यम् । तत्रैव कार्यानुत्पादकत्वादसत्वापत्त्या उभयथापि कथं ततः कार्योत्पत्तिः स्यादित्युभयतः पाशारज्जुः। जलाहरणादियोग्यताया एव स च प्रयोजकत्वान्न स्थायिपदार्थवादेऽनुपपत्तिरिति भावः।

ननु यत्क्षणिकं यथा दीपादि सतश्चामीत्यनुमानेन क्षणिकत्वं भविष्यति प्रदीपे च प्रतिक्षणं परिमाणभेददर्शनाद् द्रव्यभेदस्यावश्यतया न साध्यवैकल्यमित्याशंकापरिहाराय सूत्रं **ओं आकाशे चाविशेषात्।** आकाशे पूर्वापरकालयोरविशेषदर्शनेन तत्र क्षणिकत्वाभावात्। तद्दृष्टान्तेन स्थायित्वस्यापि साधयितुं शक्यत्वात्प्रतिपक्षग्रस्तमनुमानमिति भावः। एवं सति प्रतिपक्षेणानुमानं निरस्य बाधेनापि निरसितुं सूत्रं **ओं अनुस्मृतेश्च।** स एवायं घटः स एवायं देवदत्तः इति प्रत्यभिज्ञानात् स्थायिता सिद्ध्या उक्तानुमानं बाधितविषयमिति भावः। परिलूनोत्पन्नकुन्तलकलापे स एवायं कुंतलकलाप इति प्रत्यभिज्ञावात्तस्यापि भ्रान्तित्वकल्पनेऽन्योन्याश्रयः स्यात् । क्षणिकत्वसिद्धौ भ्रान्तित्वसिद्धिः भ्रान्तित्वसिद्धौ च निर्बाधानुमानेन तत्सिद्धिरिति।

अतः चतुःसूत्र्या शून्यवादिमतमपाकरोति। एकं शून्यमेव खल्वन्तत्रयरहितं परमार्थतो विद्यमानं तस्मादेवैतदशेषं जगदुदेत्यतः किमीश्वरेणेति प्राप्ते सूत्रं **ओं नासतो दृष्टत्वात्** इति। क्वापि असतः कारणत्वादर्शनाद्दृष्टान्ताभावेन न शून्यस्य कारणतासिद्धिः। नन्वन्यत्रादृष्टमपि साध्यते को दोषः इत्यतः सूत्रं **ओं उदासीनानामपि चैवं सिद्धिः।** हेयत्वोपदायेत्वरहितनां खपुष्पादीनामपि सकाशात्कस्यचित्कार्यस्यैवं सिद्धिः स्यात् ।

ननु मृदो घट इव शून्याज्जगदुत्पद्यत इत्यंगीकारे को दोषः स्यात् । न चैवं किन्तु शुक्तौ रजतमिव शून्ये जगत्संवृत्तिवशादध्यस्तमित्यंगीकारे को दोष इत्यतः सूत्रं **ओं नाभाव उपलब्धेः।** नेदं रजतमित्यादिबाधात् युक्तं रजतादेः शुक्त्यादावारोपितत्वेनासत्वम् । न च जगदभावो युज्यते। सदित्येव सर्वदोपलभ्यमानत्वेन तद्वद्बाधाभावादित्यर्थः।

ननु स्वाप्नपदार्थेष्वसत्स्वपि सदित्युपलम्भवदयमुपलम्भः किं न स्यादित्यतः सूत्रं **ओं वैधर्म्याच्च न स्वप्नादिवत्** । स्वप्नोत्तरकालं नायं सर्प इति बाधवत्प्रकृते बाधाभावेन वैषम्यादुक्तमयुक्तमिति भावः। स्वप्नशब्देन तत्रारोपितं जाग्रत्वं गृह्यत इति न कश्चित्क्षुद्रोपद्रवः।

विज्ञानवादिमतनिरासार्थं द्विसूत्री । तथा हि तन्मतं नित्यनिरंजनं विज्ञानतत्वमेकमेव खलु तत्वं तन्मात्रमेवेदं जगत् । न तु ततोऽतिरक्तमस्ति। अतो जगदुदये नेश्वरेण कृत्यमतस्तदङ्गीकरणं अयुक्तमिति योगाचारः। तत्राह **ओं न भावोऽनुपलब्धेः।** विज्ञानात्मकं जगदिति वदता किं जगद्विज्ञानेऽध्यस्तमित्युच्यते। उत परमार्थते जगद्विज्ञानयोरभेद इत्युच्यते। तत्राद्यः पूर्वोक्तदिशैव

निरस्तः। द्वितीयस्तु प्रमाणाभावेन तथात्वानुपलब्धेरयुक्तः । युक्त्यन्तरेणापि जगतो विज्ञानात्मकतां प्रतिषेधति **ओं क्षणिकत्वाच्च** । ज्ञानस्य क्षणिकत्वादर्थस्य स्थायित्वाच्च नोभयोस्तादात्म्यं युक्तमित्यर्थः। एवं प्रत्येकं दूषितानि बौद्धमतानि सामान्यदूषणेनापि दूषयितुं सूत्रं **ओं सर्वथानुपपत्तेश्च**। प्रमाणाभावात् पूर्वोदाहृतश्रुतिस्मृतियुक्तिविरुद्धत्वान्नैते पक्षाः ग्राह्याः ।।९।।

अथ स्याद्वादिनां जैनानां मतं निराकरोति चतुर्भिः सौत्रैः। तथा हि तन्मतम् । सदसदुभयमुभयविलक्षणं सदसदुभयविलक्षणं नैतत्सर्वं सर्वं चेति सप्तभङ्गीजगत्तदा आत्मादृष्टपरिदृष्टसाधनैश्च भविष्यति। स चात्मा कायपरिमाणः अतः किमीश्वरेणेत्यतः सूत्रं **ओं नैकस्मिन्नसम्भवात्** । एकस्मिन्पदार्थे नोक्तविधसप्तप्रकारत्वं युक्तम् । व्यवस्थितसदसत्प्रकारातिरिक्तप्रकारस्याप्रामाणिकत्वेनासम्भावितत्वात् । आत्मनः शरीरपरिमितत्वांगीकारे दोषमाह **ओं एवं चात्माकात्स्न्र्यम्** । य आत्मा पिपीलिकादिशरीरस्थः तत्परिमाणः तस्यैवात्मनः कर्मवशाद्गजादिशरीरप्राप्तौ तत्रापूर्णता स्यात् । ततश्च न सर्वशरीरचेष्टेति भावः। गजादिशरीरस्थस्याणुशरीरप्राप्तौ अतिरेकः स्यादित्युभयथापि शरीरपरिमाणत्वभंगः । अथ यदा यच्छरीरं प्राप्नोति तदा तच्छरीरपरिमाण इत्यंगीक्रियत इत्यतः सूत्रं **ओं न च पर्यायादप्यविरोधो विकारादिभ्यः** । तथा सत्यात्मनो विकारित्वापत्तेरनित्यतापातेनानिर्मोक्षप्रसंगात् शास्त्रस्य वैय्यर्थ्यमेव स्यात् । अथात्मनः स्वतः परिणामशून्यत्वाच्छरीरावच्छिन्नपरिमाणमंगीक्रियते इत्यत आह **ओं अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात्** । एवं वदता मोक्षरूपान्त्यावस्थितायमपि आत्मनः शरीरमुररीकरणीयम् । अन्यथा तत्रात्मनोऽसत्वापातात् । न हि परिमाणशून्यं द्रव्यमस्ति। अस्तु तत्रापि शरीरं को दोष इति चेत् तस्यानित्यत्वमंगीकारे संसारित्वापत्तिः नित्यत्वांगीकारे च शरीरत्वाविशेषादेतच्छरीरिणामपि नित्यत्वप्रसंग इति जैनमतमप्यनुपपन्नमेव।।

एवमवैदिकपाषण्डिसमयान् निराकृत्य अधुना वैदिकाभासाः निराकरणीयाः। ते च पाशुपतशाक्तसौरस्कान्दागाणापत्याः। तेषु पाशुपतस्य प्राबल्यात्तन्मतं तावन्निराकरोति पंचभिः सूत्रैः। तथा हि तन्मतं पशुपतिः खलु सार्वज्ञ्यादिगुणसम्पन्नो मायामुपादानीकृत्य हरिहिरण्यगर्भादिजगत्सृजत्यतो विष्णोर्जगत्कारणत्वमनुपपन्नमित्यतः सूत्रं **ओं पत्युरसामंजस्यात्** । पत्युरज्ञजनप्रसिद्धेश्वरस्य पशुपतेः पारतन्त्र्यजननमरणादिदोषकलुषितत्वेन असामंजस्यान्न जगत्कारणत्वं युक्तमित्यर्थः। "अहं रुद्राय धनुरातनोमि"(ऋ.सं.१०-१२५-६) "अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदे हि रुद्रो रुदियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्" (ऋ.सं.७-४०-५)। "न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः । नारातयस्तमिमं स्वस्ति हुवेदेवं सवितारं नमोभिः" ........"एको नारायण आसीन्न ब्रह्मा न च शंकरः" "तत एते व्यजायत" इत्यादिभिस्तस्यापूर्णताश्रवणात् । किंच **ओं सम्बन्धानुपपत्तेश्च**। अशरीरस्य

पशुपतेः जगता सह कार्यकर्तृत्वरूपः सम्बन्धो नोपपद्यते। पशुपतिर्न कर्ता अशरीत्वान्मृतपुरुष-वदित्यनुमानादिति भावः। किं च **ओं अधीष्टानानुपपत्तेश्च** । पृथिव्याद्यधिष्टाने स्थितो हि कुलालादिः कार्यं करोति न चास्य तत्सम्भवतीत्यतो न कर्तेत्यर्थः। ननु कारकग्रामस्यैव साक्षात्प्रयत्नाधिष्ठेयत्वेन शरीररूपत्वादशरीरत्वमसिद्धमित्याक्षिप्य तथा सति शरीरोपादनहान-रूपजन्ममरणादिप्रयुक्तभोगापत्तेः। संसारित्वापत्तिरिति समादधत्सूत्रं **ओं करणवच्चेन्न भोगादिभ्यः**। व्याख्यातप्रायमेतत् ।

उक्तपक्षावेव विकल्पभंग्या दूषयत्सूत्रं **ओं अन्तवत्वमसर्वज्ञता वा** । पशुपतिः शरीरी चेत् नास्य देशतः परिच्छिन्नत्वान्न सर्वजगत्कारणत्वम् । तदभावे च ज्ञानमेव न स्यात् । कुतः सर्वज्ञतेति। विष्णोस्तु श्रुत्यैव ते सर्वविरोधाः परिहृताः। "यदात्मको भगवांस्तदात्मिका व्यक्तिः। किमात्मको भगवान्ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मकः" "बुद्धिमनोंगप्रत्यंगवत्तां भगवतो लक्ष्ययामहे। बुद्धिमान्मनोवानंगवान्प्रत्यङ्गवान्" इति। "सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः। ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षर" इत्यादिकयेति।।११।।

अथ शक्तिपक्षं दूषयति **ओं उत्पत्यसम्भवात्** । न हि पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते। **ओं न च कर्तुः करणम्**। शाक्त्येकदेशिभिर्यदि पुरुषोंऽगीक्रियते सदाशिवः तस्याप्युत्पत्युप-योगिज्ञानादिसाधनाभावेन अनुपपत्तिरेव। **ओं विज्ञानादिभावे वा तदप्रतिषेधः**। यदि ज्ञानादिमान् पुरुषोंऽगीक्रियते तर्हि तस्यैव सर्वकर्तृत्वोपपत्तेः व्यर्थः शक्तिकर्तृत्ववादः। अस्तु को दोष इति चेत् पूर्वोक्तपाशुपतमतस्याप्रतिषेधः कृतो भवति। तन्मताभ्युपगमः कृतो भवति। तच्च पूर्वोक्तमेव निरस्तमिति भावः। **ओं विप्रतिषेधाच्च**। सकलश्रुतिस्मृतिविप्रतिषिद्धत्वाच्च त्रिविधमपि शाक्तमतमसमंजसमिति।

एवं समयविरोधपरिहारार्थं प्रवृत्तस्यास्य पादस्य विस्तृतभाष्यादौ विस्तरेण व्याख्याततत्वात् तत्तत्सर्वसाधारणं दूषणमाचक्षाणः समस्तपादस्य तात्पर्यविषयीभूतमर्थमाह। **भ्रान्तिमूलतया सर्वसमयानामयुक्तितः। न तद्विरोधाद्वचनं वैदिकं शंक्यतां व्रजेत्** इति। तद्विरोधात्समय-विरोधाद्वैदिकं वचनं शंक्यता न व्रजेत् विष्णोर्जगत्कारणत्वादिप्रतिपादितस्य वेदस्याप्रामाण्यं शंकनीयमपि न भवति। दूरे तन्निश्चय इत्यर्थः। कुतो नेत्यत उक्तं सर्वसमयानां भ्रान्तिमूलत्वेनाप्रामाण्यात् । उपलक्षणमेतद्विप्रलम्भादेरपि। तेन बौद्धचार्वाकादिसमयेषु विष्णुबृहस्पत्यादिकर्तृकेषु नासिद्धिरिति ज्ञेयम् । वैदिकमिति वदता च वेदस्यापौरुषेयतया दोषमूलत्वशंकापि नास्तीति ध्वनितम् । ननु भ्रान्त्यादिमूलत्वं कस्मादवगतमित्यत उक्तम् **अयुक्तित** इति। युक्तिर्घटना तदभावोऽयुक्तिः। असम्बन्धार्थप्रतिपादकत्वेन प्रमाणविरोधात् बाधितविषयत्वादित्यर्थः। अयुक्तत इति पाठे भावप्रधानो निर्देशः। नपुंसके भावे क्तो वा । इदमुक्त

भवति। उक्तेऽर्थे समयविरोधेन प्रत्यवतिष्ठमानः किं सर्वेषां समयानां प्रामाण्यमभ्युपैति अन्यतरस्यैव वा। नान्त्यः। सर्वैरपि वादिभिः स्वस्वसमयप्रवर्तकाचार्यस्यैव सर्वज्ञत्वादिकं तदन्यस्य भ्रान्तत्व-मंगीकृतत्वेन विनिगमकाभावेनायमेव प्रमाणमन्योऽप्रमाणमित्यस्य अर्थस्य निश्चेतुमशक्यत्वात्। नाद्यः। परस्परसिद्धान्तप्रतिक्षेपमुखेन प्रवृत्तानां परस्परविरुद्धार्थप्रतिपादकानामन्योन्यविरोधेन प्रागुदाहृतानेकप्रमाणविरोधेन च प्रामाण्यायोगात्। तथा च द्वयोः कलहे तृतीयस्य लाभ इति न्यायेन वेदोक्तार्थस्यैव निर्बाधत्वेन ग्राह्यत्वात्। युक्तं विष्णोर्जगत्कारणत्वं इति भावः। तदिदमाह। सर्वसमयानां भ्रान्तिमूलतया अयुक्तत्वादिति। एतावता सामान्यदूषणेनैव सर्वसमयानां दुष्टत्वे यत्प्रत्येकं सूत्रकारेण विशिष्य तत्तन्मतदूषणाभिधानं कृतं सोऽयं भगवतः सूत्रकारस्य महाननुग्रह इति भावः।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने द्वितीयाध्यायस्य द्वितीयः पादः ।।**

**मळगी –** शाक्तपाशुपतादिसमयेषु शक्त्यादीनां सर्वकर्तृत्वकथनाद्धरेः सर्वकर्तृत्वं कथमित्यत आह **भ्रान्तिमूलतया** इति। **सर्वसमयानां** हैतुपाषंडदुर्मतानां । **भ्रान्तिमूलतया** निरीश्वरसांख्यादिदुर्वादिमिथ्याज्ञानमूलकत्वेन । **अयुक्तितः** अनुपयुक्तत्वात् । **तद्विरोधात्** तेषां दुर्मतानां विरोधात् । **वैदिकं वचनं** निर्दोषवेदवचनं **शंक्यतां** प्रमाणमप्रमाणं वेति संशयवत्तां **न व्रजेत्** न गच्छेत्। न प्राप्नोतीत्यर्थः।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां द्वितीयाध्यायस्य द्वितीयः पादः ।।**

**लिंघेरी –** शाक्तपाशुपतादिसमयेषु शक्त्यादीनां सर्वकर्तृत्वकथनात् हरेः सर्वकर्तृत्वं कथं इत्यत आह **भ्रान्ति** इति। **सर्वसमयानां** सर्वसिद्धान्तानां। **भ्रान्तिमूलतया** भ्रान्तिमूलकत्वेन । **अयुक्तता** युक्तता नास्ति।।४।। **तद्विरोधात्** तेषां विरोधात् । **वैदिकवचनं** वेदोक्तवचनम् । **शंक्यतां न व्रजेत्** न गच्छेत्।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने द्वितीयाध्यायस्य द्वितीयः पादः ।।**

**नारायणपण्डित–** रचनानुपपत्तेश्च नानुमानमिति द्वितीयपादार्थमाह भ्रान्तिमूलतयेत्येकश्लोकेन। व्याससमयान्यसमयानां भ्रान्तिमूलतया भ्रान्तिजन्यत्वेन विप्रलम्भत्वादिमूलत्वेन। अयुक्तितः युक्तिशून्यत्वाद्विरुद्धत्वाच्च तद्विरोधात्परस्परं च तत्तत्समयविरोधात्। वैदिकं वचनं शंक्यतां श्रुतिरप्रमाणमिति शंकास्पदतां। न व्रजेत् न प्राप्नुयादित्यर्थः। ''अक्षपादकणादौ च सांख्ययोगार्हतास्तथा । शिवशक्तिमहावामलोकायतपुरःसराः। दुरागमा इति ज्ञेया'' इति बृहद्भाष्योक्तेः तेषां दुरागमत्वं सिद्धम् । **अधिकरणानि १२ सूत्राणि ४५**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने द्वितीयाध्यायस्य द्वितीयः पादः ।।**

**गूढकर्तृक** – सर्वसमयनिराकरणपरद्वितीयपादार्थस्य भाष्ये विस्तृतत्वात् संकोच्याहाणुभाष्यकारो भगवानानन्दतीर्थमुनिः। **भ्रान्तिमूलतया सर्वसमयानामयुक्तितः। न तद्विरोधाद्वचनं वैदिकं शंकितां व्रजेत्** इति। व्याससमयान्यसर्वसमयानां भ्रान्तिमूलतया भ्रान्तिजनकत्वेन विप्रलम्भादिमूलकत्वेन। अयुक्तितः युक्तिशून्यत्वाद्विरुद्धत्वाच्च तद्विरोधात्परस्परं तत्तत्समयविरोधात् वैदिकं वचनं शंकितां श्रुतिरप्रमाणमितिशंकास्पदतां न व्रजेत् । न प्राप्नुयादित्यर्थः। "अक्षपादकणादौ च सांख्यो योगाहृतास्तथा। शिवशक्तिमहावामलोकायतपुरःसराः। दुरागमा इति ज्ञेयाः" इति बृहद्भाष्ये तेषां दुरागमत्वं सिद्धम्।

**।। इति श्रीमदानन्दतीर्थविरचिताणुभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः ।।**

**अणुभाष्यम्**

## आकाशादिसमस्तं च तज्जं तेनैव लीयते ।।६।।

**सत्यनाथीया–** न वियदश्रुतेः, एतेन मातरिश्वा व्याख्याताः, तेजोऽतस्तथा ह्याह, आपः, पृथिव्याधिकाररूपशब्दान्तरादिभ्यः, तदभिध्यानादेव तु तल्लिंगात्सः, विपर्ययेण तु क्रमोऽत उपपद्यते चेत्यधिकरणाष्टकस्यार्थमाह **आकाश** इत्यादिना। **आकाशदिसमस्तं** तस्माज्जातं तेनैव लीयते संह्रियत इति ।

**तत्वमञ्जरी–** नन्वेवमुक्तदिशा युक्तिसमयानामाभासत्वेन विष्णोरुक्तस्रष्टृत्वादिगुणानां तद्विरुद्धत्वभावेऽपि अधिदैवाधिभूताद्यनादित्वावेदक श्रुतिः विरुद्धं स्यादित्यतः श्रुतिविरोधं परिहर्तुं तृतीयः पादः प्रवृत्तः। तदर्थोक्तिपरतया **उक्ता गुणाश्चाविरुद्धा** इत्यन्तिमार्धं अत्राप्याकृष्य योज्यम् । तथा हि । पूर्वाध्याये अशेषसमन्वयेनोक्ताः हरेः स्रष्टृत्वादयः सर्वशः सर्वे गुणा वेदेनाविरुद्धाः उक्ताः सूत्रकृता प्रतिपादिता इत्यर्थः। हरेः स्रष्टृत्वादिगुणवत्त्वे आकाशाद्यनुत्पत्तिश्रुत्यविरोधं वक्त्यस्मिन् पाद इति यावत् ।

ननु श्रुतिसमन्वयेन विष्णुरेव सर्वकर्तृत्वाद्यनन्तगुण इति समन्वयाध्यायोक्तमयुक्तम् । "अनादिर्वा अयमाकाशः" "वायुर्वा व नित्यः" "नित्यो नित्यानां" इत्यादिना आकाशवायुजीवानुत्पत्तिबोधकवेदेन तथा "वायोरग्निः । अग्नेरापः" इत्यादिना अग्न्यादेः स्वातन्त्र्येण वाय्वाद्यभिमानिचैतन्यकर्तृत्वबोधकेन, स्वातन्त्र्येण वाय्वादिजडोपादनकत्वबोधकेन च वेदवाक्येन विरुद्धत्वादित्यतः प्राप्तानि – **न वियदश्रुतेरिति, एतेन मातरिश्वेति, ज्ञोऽत एवेति तेजोऽतस्तता ह्याहेति, आप** इति च पञ्चाधिकरणानि । तेषामर्थमाह – **आकाशादि समस्तं च तज्जं तेनैव** इति।

अत्राकाशपदेन अवकाशभूताकाशयोः तदभिमानिचित्प्रकृतिविघ्नेशयोः ग्रहः। आदिपदेन च वायुतेजःप्रभृतिभूततदभिमानिदेवानां तथा सौत्रवियत्पदोपलक्षितस्य प्रकृतिजीवकालमहदहंकार-मनोबुद्ध्यादेः तदभिमानिनश्च ग्रहः। एवं च आकाशाद्यधिभूतं अधिदैवं च समस्तं तज्जं, तस्मात्पूर्वप्रकृतहरेः सकाशात् जातम् । पराधीनविशेषावाप्तिरूपजन्मवदित्यर्थः। अत्र तज्जमित्यत्र जं जन्मवदित्यनेन वियदित्यादिना यत्रयार्थोक्त्या अन्त्यशङ्का च निरस्ता । वियत्यविवादात् । तेजः प्रभृतेरतिव्यवहितस्य आत्मसम्भूतत्वे किञ्चिद्व्यवहितवायोः आत्मजत्वस्य सम्भूतवाक्ये कैमुत्यलब्धतया सूत्रकृता तेजःप्रभृतेरेवोक्तावपि कैमुत्यमननुसृत्य भाष्यकृता आकाशादिसमस्तं च तज्जं इत्युक्तम् । केन हेतुना समस्तं जन्मवदिति तज्जमिति च ज्ञायत इत्यतः तेनैवेति वैदिकं वचनं इत्येतत्परामृश्यते। ''आत्मन आकाशः सम्भूतः'' ''इदं सर्वमसृजत'', ''आत्मा वा इदमेकमग्रे'' इत्यादिवैदिकवचनेनैव तथा ''ते वै एते चिदात्मानो व्युच्चरन्ति'' ''एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च'' ''खं वायुर्ज्योतिरापः पृथिवी'', ''तत्तेजोऽसृजत'' इत्यादिना च जन्मवत्त्वं तज्जातत्वं च ज्ञायते इत्यर्थः। अत एवोत्पत्तिवचनबाहुल्यात् आकाशाद्यनुत्पत्तिवचनानि स्वरूपोत्पत्त्यभावादिपरतया गौणार्थानि नेयानीति न तद्विरोध इति भावः।

नन्वेवमपि ''वायोरग्निः'' इत्याद्यन्यजातत्ववचनविरोध इत्यतोऽपि **तेनैव** इति। आकाशादेः परमार्शः। करणे तृतीया । तेनैवाकाशादिनैव। द्वाररूपसाधनेन तज्जं, न तु द्वारकरण-मनपेक्ष्येत्येवार्थः। अन्यजातत्वश्रुतिः। द्वारकारणपरेत्युक्तं भवति। अत्रैवकारप्रयोगेन इदं चोद्यं निरस्तम्। तेन विनापि कर्तुं शक्तस्य द्वारवैय्यर्थ्यमिति। शक्तस्यापि लीलया तेनैव श्रौतद्वारेण समस्तस्य जननादिति।

अत्र ''ज्ञोऽत एव'' इत्यस्यापावादसमाप्तिक्रियमाणजीवविचारसङ्गततया व्यवहितत्वेऽपि तस्य ''एतेन मातरिश्वा'' इत्यस्य च विशेषशङ्कानिवर्तनेन वियन्नयोक्तसर्वजन्मरूपार्थसमर्थनमात्रपरत्वात् , ''तेजोऽतः'', ''आप'' इत्यनयोरपि अन्योपलक्षणतया कैमुत्येन वा सर्वस्य तज्जत्वोक्तिपरत्वं च द्योतयितुं नयपञ्चकस्यार्थं ''आकाशादिसमस्तं च तज्जं तेनैव'' इति संक्षिप्याभाषत इति।

यत्तु हरेः साक्षादन्यद्वारा च सर्वस्रष्टृत्वमुक्तं, तदयुक्तम् । तस्य पृथिवीसृष्टौ ''अद्भ्यः पृथिवी'' इति ह्यपां द्वारत्वश्रुतेः ''ता आप ऐक्षन्त'' ''ता अन्नमसृजन्त'' इत्यपां अन्नद्वारत्वश्रुत्या विरुद्धत्वेन तुल्यबलतया द्वयोरपि द्वारश्रुत्योरप्रामाण्यादित्यतः प्राप्तं - **पृथिव्यधिकाररूप-शब्दान्तरादिभ्यः** सूत्रम् । तस्याप्यर्थः। **आकाशादि समस्तं च** इत्यादि।

तेनैवाकाशादिना ''आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी'' (तै.उ.३-२-३) इत्यादिश्रुत्युक्तद्वारभूतसाधनेनैव तज्जमित्युक्त्या संगृहीतो ध्येयः । ''ता अन्नमसृजन्त'' (छां.उ.६-२-४) इति श्रुत्यन्तरस्थान्नशब्दस्य पृथिव्यर्थत्वेनाविरोधादिति भावः। केन हेतुनाऽन्नश्रुतेः

पृथिव्यर्थत्वं ज्ञायत इत्यतोऽपि **तेनैव** इति । "आपश्च पृथिवी चान्नं" (ऐ.आ.२-३-१) "पृथिवी वा अन्नं" (तै.उ.३-९) इत्यादिवैदिकवचनेनैवेत्यर्थः।

ननु न हरेः सृष्ट्यादिकर्तृत्वं युक्तम् । "रुद्रो मा विशान्तकः" (म.ना.उ.१६-८)इत्यत्र श्रुतौ अन्तकपदेन रुद्रस्य संहर्तृत्वोक्त्या तद्विरोधादित्यतः प्राप्तम् – **तदभिध्यानादेव तु तल्लिङ्गात्सः** इति सूत्रम् । तदर्थं भाषते – **लीयत** इति। तेनैवेति, आकाशादि समस्तं इति च वर्तते। आकाशवायुतेजःप्रभृत्यधिदैवाधिभूतान्तं समस्तमपि तेनैवप्रस्तुतहरिणैव लीयते। न तु रुद्रेणेत्यर्थः। केन मानेन ज्ञेयमित्यत आह – **तेनैव** इति। "यमप्येति भुवनं साम्पराये स नो हरिर्घतमिहायुषेत्तु देवः" "य इदं सर्वं विलापयति स हरिः", "स्रष्टा पाता च संहर्ता स एको हरिः" (स्क.पु) इत्यादिवैदिकवचनेनैवेत्यर्थः। अन्तकश्रुतेः का गतिरित्यतोऽपि **तेनैव** इति। रुद्रेणैव द्वारसाधनेन भगवता कर्त्रा लीयते इत्यर्थः। द्वारपरा सा श्रुतिरिति भावः। अस्यां योजनायां समस्तपदं सम्भावितसर्वपरम् । केनैवं ज्ञायत इत्यतोऽपि **तेनैव** इति। (महोपनिषत्) "स रुद्रेण विलापयति" स्रष्टृत्वादिकमन्येषां दारुयोषावत् निमित्तमात्रमीशस्य इत्यादिवैदिकवचनेनेत्यर्थः।

यत्तु क्रमाद्विलीयत इत्यादिश्रुत्या लोकानुपसारित्वयुक्त्या चोत्पत्तिकर्मेणैव विलीयत इति प्राप्ते "व्युत्क्रमाद्विलयश्चैव" इत्यादि श्रुतिभिः पूर्वोत्पन्नानां सामर्थ्याधिक्ययुक्त्या च विपरीतक्रमेण लीयत इति वक्तुं **विपर्ययेण तु क्रमोऽत उपपद्यते च** इति सूत्रम्।

तदर्थो बुद्धिस्थवाचिना तेनैवेत्यनेन निरवकाशश्रुत्यादिसिद्धेनैव बुद्धिस्थेन विपरीतक्रमेणैव आकाशादि समस्तं च लीयत इत्युक्त्या संगृहीतो ध्येयः। क्रमश्रुतयस्तु विपरीतक्रमस्यापि क्रमत्वात्तत्परत्वेन सावकाशा इति भावः।

समस्तं च तु विज्ञानमनस्तत्वे विना इत्युक्त्या चान्तरा विज्ञानमनसी क्रमेणेत्येतन्नयार्थोऽपि संगृहीतः।

**आनन्दमाला** – जीवजडजनार्दनेषु श्रुतीनां परस्परविरोधं परिहरत्यस्मिन् पादे। स्वसमयेऽपि पूर्वापरार्थविरोधस्य परिहरणीयत्वात् ।

"न वियदश्रुतेः" (२-३-१) "एतेन मातरिश्वा व्याख्यातः" (२-३-८) "तेजोऽतस्तथा ह्याह" (२-३-१०) "आपः" (२-३-११) "पृथिव्यधिकाररूपशब्दान्तरादिभ्यः" (२-३-१२) "ज्ञोऽत एव" (२-३-१८) इत्येतानि तत्तद्वस्तुत्पत्त्यधिकरणानि व्याख्याति। **आकाशादि समस्तं च तज्जम्** इति। अव्याकृतव्याकृताकाशादिकं समस्तमपि पुरस्तात् प्रस्तुताद् विष्णोरेव जातम् । सूक्ष्मत्वेन प्रकाशमानाः प्रकृतिपुरुषकालवेदाश्चाकाशशब्देन यथायोगं संगृह्यन्ते। आदिशब्देन महदाद्या वाय्वाद्याश्चोच्यन्ते। सर्वेषामपि पराधीनविशेषाख्योत्पत्तिसम्भवात् । अत

एवाकाशाद्यभिमानिदेवताश्च आकाशादिशब्दैर्गृहीताः। न च नित्यत्वान्यथानुपपत्त्यानुत्पत्तिमत्वं प्रकृत्यादेः शङ्क्यम् । **सर्वसृष्टिप्रतिज्ञान्यथानुपपत्त्या** नित्यस्यापि नारायणाद् विवक्षितविशेषावाप्ति-मात्रेण जननं श्रुतम्, अविशेषादिति वक्तुम् समस्तं **च** इति विशेषणम् । चशब्दाद् भौतिकं च तत एव जातम्॥

"तदभिध्यानादेव तु तल्लिङ्गात् सः" (२-३-१३) "विपर्ययेण तु क्रमोऽत उपपद्यते च" (२-३-१४) इत्यधिकरणे **तेनैव लीयते** इति। यतो विष्णोरेतत् समस्तं जातमित्युक्तं तेनैव भगवता तल्लीयते, तस्मिन्नेव चेति शेषः। नान्येन । तेनैव तु हरिणाऽनादिरपि संसारो लीयते। किमु सादिरित्यर्थः। सोऽयं लयक्रमः सृष्टिक्रमाद् विपर्ययेण भवति। तथाहि – यच्छाखागतवाक्येन "इदं क्रमादुत्पद्यते" (भाल्लवेय) इत्युक्तं तेनैव तद्गतवाक्येनैव व्युत्क्रमाल्लीयते इत्युच्यते शाखान्तरानन्वेषणेऽपि ॥७-८॥

**नृसिंहतीर्थ –** वेदप्रामाण्येन विष्णोर्जगत्कारणत्वादिसिध्यर्थं जीवपरमात्माधिभूताधि-दैवलक्षणाध्यात्मेतरविषये परस्परश्रुतिविरोधपरिहारार्थं अयं तृतीयपादः। तत्राधिभूताधि-दैवजीवोत्पत्तितद्धर्मविचारपराणां प्रथमद्वितीयचतुर्थपंचमषष्टैकादशद्वादशत्रयोदशपंचदश-षोडशाधिकरणानां तात्पर्यम् **आकाशादि समस्तं च तज्जं** इति॥ चशब्दः तज्जमित्यनेन सम्बध्यते। तेन तद्धर्मसमुच्चयः। तत्र प्रथमाधिकरणे भगवदितरस्य सर्वस्योत्पत्तिविचारात् । एवं सर्वस्य ब्रह्मतात्वे सिद्धे तेजोऽत इति चतुर्थाधिकरणे ब्रह्मणो वायोश्चेत्युभयकारणत्वनिवृत्यर्थं ब्रह्मण एव मुख्यकारणत्वे वायोस्तद्वारत्वमित्येवं तेजसुत्पत्तिविचारात् । आप इति पंचमाधिकरणेऽप्येवमेव आपोऽनुत्पत्तिविचारात्। एवं साक्षादन्यद्वारा ब्रह्मज्ञातत्वे सिद्धे षष्टाधिकरणेऽपि पृथिवीकारणत्वविचारात् । ज्ञोऽत एवेत्येकादशाधिकरणे जीवस्याप्यणुत्वरूपधर्मविचारात् । त्रयोदशाधिकरणे जीवस्य ब्रह्मरूपत्वविचारात्। पूर्वाधिकरणे सर्वेषां जीवानां अणुत्वमुक्त्वा व्याप्तिश्रुतिविरोधपरिहारार्थं तत्रैव योगिनामंशतो व्याप्तिः । अयोगिनां प्रकाशतो व्याप्तिरुक्ता। तत्र योगिनां अंशैः बहुरूपत्वमेवात्र पुनः साधितमिति ज्ञातव्यम् । पंचदशाधिकरणे जीवस्य नित्यत्वरूपधर्मविचारात् । पुंस्त्वादिति षोडशाधिकरणे जीवस्य ज्ञानानन्दादिरूपत्वरूपधर्मविचारात् । तेनैव लीयत इत्यनेन सप्तमाष्टमनवमाधिकरणतात्पर्यमुक्तं भवति। तत्र सप्तमाधिकरणे भगवदितरस्य सर्वस्य भगवता लयस्योक्तत्वात् । अष्टमाधिकरणे सर्वस्य उत्पत्तिक्रमवैपरीत्येन लयस्योक्तत्वात् । नवमाधिकरणे व्युत्क्रमेण लयस्यैवाक्षेपपरिहारात् ।

**श्रीनिवासतीर्थीया–** वियत्पादार्थं संगृह्णाति **आकाशादि** इत्यर्धश्लोकेन । न वियदश्रुतेः, एतेन मातरिश्वा व्याख्यातः, तेजोऽतस्तथा ह्याह, आपः, पृथिव्यधिकाररूपशब्दान्तरादिभ्यः, ज्ञोऽत एव, तदभिध्यानादेव तु तल्लिंगात् सः, विपर्येण तु क्रमोऽत उपपद्यते च

इत्यधिकरणाष्टकार्थमाह **आकाशादिसमस्तं च तज्जं तेनैव लीयते** इति। अत्र आकाशादिपदं अव्याकृताकाशादिनित्यजडतदभिमानिचेतनस्य सर्वस्योपलक्षकम्। आकाशादिजीवान्तं समस्तं नित्यमनित्यं च तज्जं हरेर्जातम्। तत् श्रियः सिसृक्षत्वं प्रकृतेः परिणामः। अव्याकृतस्य मूर्तसम्बन्धः। जीवस्य देहसम्बन्धः । असंसृष्टस्योपचय इति। नित्येषु पराधीनविशेषावाप्ति-रूपोत्पत्तिरनित्येप्यभूत्वा भवनमिति स्वयोग्योत्पत्तिमत् । तेनैव हरिणेवोत्पत्तिक्रमवैपरीत्येनैव लीयते इति । यथायोग्यं लय इत्यर्थः।

**छलारी –**

**हरिः ओम्**
**आनन्दतीर्थसत्तीर्थसत्तीर्थप्रतिपादितम् ।**
**आनन्दतीर्थसत्तीर्थदैशिकं व्यासमाभजे।**

परस्परश्रुतिविरोधाभावं प्रदर्शयत्यस्मिन्पादे।

**ओं न वियदश्रुतेः ओं**

वियदनुत्पत्तिमन्न, किन्तु उत्पत्तमदेव। कुतः? अश्रुतेः, तदनुत्पत्तिश्रुत्यभावात् । प्रत्युत उत्पत्तिश्रुतिसद्भावाच्च । अतो नायुक्तं विष्णोः जगत्कारणत्वमिति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं ''अनादिर्वा अयमाकाश'' इति श्रुतेः। आकाशस्यानादित्वेन आकाशकारणत्वाभावात्। इति प्राप्ते –

युक्तमेव विष्णोः जगत्कारणत्वम् । आकाशस्योत्पत्तिमत्वे ''आत्मन आकाशस्सम्भूतः'' (तै.उ.२–१) इति श्रुतिसद्भावात् । न चानादित्वश्रुतिविरोधः। तस्याः श्रुतेः गौणानादित्वपरत्वादिति सिद्धान्तः कृतः ।।१।।

**ओं एतेन मातरिश्वा व्याख्यातः ओं**

एतेन – अश्रुतेरित्यादिपूर्वोक्तलिङ्गेन, मातरिश्वा–मुख्यवायुः उत्पत्तिमानेव व्याख्यातः इति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तम् । ''वायुर्वाव नित्यः'' , ''स वा एष देवता अनादिर्योऽयं पवते'' इत्यादिश्रुतेः, वायोः उत्पत्त्यभावेन तत्कारणत्वाभावात् । न चाकाशानुत्पत्ति-श्रुतिवदियं श्रुतिः गौणीति वाच्यम् । ''अथ ह नित्याश्चानित्याश्च तेजोबन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्यः। वायुना हि सर्वाणि भूतानि नेनीयन्त'' इति श्रुत्या आकाशस्य अनित्यत्वं उक्त्वा वायोः नित्यत्वोक्तेः। अन्यथा वायोः विशिष्य नित्यत्वोक्तिरयुक्ता स्यादिति प्राप्ते–

युक्तं विष्णोः जगज्जन्मादिकारणत्वं, वायोरप्युत्पत्तिमत्वात् न चात्र प्रमाणाभावः। "प्राणाद्वायुरजायत" इति उत्पत्तिश्रुतेः। न चानुत्पत्तिश्रुतिविरोधः। तस्या स्वरूपानुत्पत्तिपरत्वेन गौणार्थत्वात् । नन्वेवं सति आकाशादीनां अग्त्यित्वमुक्त्वा वायोः विशिष्य नित्यत्वोक्तिः अनुपपन्ना स्यादिति चेन्न । स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण विशिष्य नित्यत्वाद्युक्तिसम्भवादिति सिद्धान्तः कृतः ।।२।।

## ओं असम्भवस्तु सतोनुपपत्तेः ओं

सतः ब्रह्मणस्तु असम्भवः अनुत्पत्तिरेव। कुतः ? अनुपपत्तेः। असतः सदुत्पत्तेः अदृष्टत्वेना-युक्तत्वादिति सूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तम् । तस्याप्युत्पत्तिमत्त्वेन जगत्कारणत्वायोगात् । न च तत्र प्रमाणाभावः। "असतः सदजायत" (ऋ.सं.१०-७२-२)इति श्रुतिसद्भावात् । न च विष्णोः सच्छब्दवाच्यत्वे प्रमाणाभावः। "ओं तत्सदिति निर्देशो ब्रह्मणः त्रिविधः स्मृतः" इति स्मृतेः। न चानादित्वे अपि श्रुतिरस्तीति वाच्यम् । असम्भवदुद्धयोः नभोनभस्वतोः उत्पत्तौ अनादितया समस्य ब्रह्मणो अनुत्पत्तिरयुक्तेति जन्मश्रुतेः सयुक्तिकत्वेन प्राबल्यादिति प्राप्ते -

युक्तमेव विष्णोः जगत्कारणत्वं, असतः सदुत्पत्तेः क्वाप्यदर्शनेन असतः सकाशात् भगवतः उत्पत्त्यनुपपत्तेः। तर्हि "असतः सदजायत" (ऋ.सं.१०-७२-२) इति श्रुतेः का गतिरिति चेदुच्यते। "ब्रह्म वा असत् सद्वाव प्राण" इति (पैङ्गी)श्रुतेः। ब्रह्मणः सकाशात् वायोरुत्पत्तिः श्रुत्यर्थः इति सिद्धान्तः कृतः ।।३।।

## ओं तेजोऽतस्तथाह्याह ओं

अतः ब्रह्मणः एव वायुद्वारा तेजो जायते । कुतः ? हि - यतः श्रुतिः तथा आहेति सूत्रार्थः।

अत्र न विष्णोः असाधारण्येन जगत्कारणत्वं युक्तम् तेजसः वायुजातत्वे वायोरग्निरिति श्रुतिसद्भावेन विष्णुवद्वायोरपि अग्निकारणत्वेन विष्णोः विशेषाभावात् । न च वायुद्वारा तेजसः परमात्मजातत्वाभिधायकत्वं श्रुतेरिति वाच्यम् । किं ब्रह्म वायुद्वारमन्तरेण तेजः स्रष्टुमीष्टे न वा। आद्ये व्यर्थं वायुद्वारा सर्जनम् । द्वितीये सिद्धं नः समीहितम् । यावतास्माभिः अपि उभयकारणत्वमेव उच्यत इति प्राप्ते -

युक्तमेव विष्णोः असाधारण्येन जगत्कारणत्वम् । "तत्तेजोऽसृजत" इति अग्नेः विष्णुजातत्वस्योक्तत्वात् । न च "वायोरग्नि" (तै.उ.२-३)इति श्रुतिविरोधः। तत्र वायुद्वारा तेजसः ब्रह्मजातत्वोक्तेः। न च द्वारवैय्यर्थ्यात् उभयोरपि कारणत्वं वाच्यम् । शक्तस्यापि ब्रह्मणः स्वेच्छयैव लीलया द्वारमनुसृत्य कारणत्वस्य श्रुत्यादिसिद्धत्वादिति सिद्धान्तः कृतः ।।४।।

## ओं आपः ओं

आपोप्यत एव जायन्ते । कुतः? तथा ह्याह श्रुतिरिति सूत्रार्थः ।।

अत्र न विष्णोः जगज्जन्मादिकारणत्वं युक्तम् ।अपामग्नेः जातत्वे अग्नेरापः इति श्रुतिसद्भावादिति प्राप्ते -

युक्तमेव हरेः अशेषजगत्कारणत्वं ''तदपोऽसृजत''इति श्रुतेः। न च ''अग्नेरापः''(तै.उ.२-३) इति श्रुतिविरोधः। तत्रापामग्निद्वारा ब्रह्मजातत्वोक्तेः। ननु श्रुतिद्वयान्यथानुपपत्या ब्रह्मतेजसोः साम्येनैव कारणत्वं किं न स्यादिति चेन्न । ''कर्ता सर्वस्य वै विष्णुः एक एव न संशयः। इतरेषान्तु सत्ताद्याः यत एव तदाज्ञया।।'' (भवि.पु) इति वचनविरोधादिति सिद्धान्तः कृतः।।५।।

## ओं पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ओं

श्रुत्युक्तमन्नं पृथिवी, कुतः ? अधिकारात् - भूतप्रकरणात् । रूपात् - यत्कृष्णमिति कार्ष्ण्यरूपात् । शब्दान्तरात् - विचार्यश्रुत्यपेक्षया श्रुत्यन्तरात् । आदिपदेन वेदाप्रामाण्याभाव-साधकयुक्तिर्ग्राह्येति सूत्रार्थः ।।

अत्र न श्रुतिसमन्वयेन विष्णोः जगत्कारणत्वं युक्तम् । द्वारकारणविषयश्रुतीनां परस्परविरोधेनाप्रामाण्यात् । तथा हि, ''ता अन्नमसृजन्त'' (छा.उ.६-२-४)इति अन्नसृष्टेः अप्सृष्ट्यानन्तर्यमुच्यते। ''अद्भ्यः पृथिवी'' (तै.उ.२-३)इति पृथिवीसृष्टेः अप्सृष्ट्यनन्तर्यमुच्यते। न चोभयं सम्भवति विरोधात् इति प्राप्ते -

युक्तमेव विष्णोः श्रुतिसमन्वयेन जगत्कारणत्वम् । श्रुत्योः विरोधाभावात् । तथा हि, ''ता अन्नमसृजन्त'' इत्यत्र अन्नशब्देन पृथिवी विवक्षिता । ''तत्तेजोऽसृजत तदपोऽसृजत'' इति भूतप्रकरणत्वात् । ''यदग्ने रोहितं रूपं तैजसः तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य'' इतिअन्नस्य कृष्णरूपप्रतीतेः कृष्णरूपस्य पृथिवीलिङ्गत्वात् । न चैवं लक्षणा। ''पृथिवी वा अन्नम्'' (तै.उ.३-९)इत्यादिश्रुत्यन्तरात् , पृथिव्याः अन्नशब्दाभिधानात् । वेदो न अप्रमाणं अप्रामाण्यकारणदोषशून्यत्वात् प्रत्यक्षवदित्याद्युक्तेश्चेति सिद्धान्तः कृतः। ''ता अन्नमसृजन्त'' (छा.उ.६-२-४) इत्यत्र अन्नशब्देन पृथिवी विवक्षिता ।।६।।

## ओं तदभिध्यानादेव तु तल्लिङ्गात् सः ओं

एवेति कैमुत्यसूचकः। सः विष्णुरेव सर्वसंहर्ता। कुतः ? तदभिध्यानात् । ''तस्याभिध्यानात्'' (श्वे.उ.१-१०) इति श्रुतौ भगवदिच्छया अनादिबन्धनिवृत्तिरूपमोक्षश्रवणात् । किञ्चातः तल्लिङ्गात् - तदिच्छाधीनत्वलिङ्गात् मोक्षस्य भगवत्कर्तृकत्वं अनुमीयते। एवं च अनादेः बन्धस्य लयकर्ता सुतरां सादेः जगतः संहारकर्तेति सिध्यति इति सूत्रार्थः।

अत्र न विष्णुः सर्वसंहर्ता । अपि तु रुद्र एव। "रुद्रो माविशान्तकः" (म.ना.उ.१६-८)इति तस्यान्तकत्वश्रवणात् । न च रुद्रादिनाम्नां विष्णुपरत्वादियं श्रुतिः तत्परा किं न स्यात् रुद्रपरत्वेऽपि तस्य द्वारकारणत्वाभिधात्री किं न स्यादिति वाच्यम् । यथाकथञ्चिद्विष्णोः संहर्तृत्वाभ्युपगमे लोकविरोधात् । तस्य जगदुत्पादकत्वात् लोके च पितुरन्यस्यैव मारकत्वदर्शनात् । न च "यत्प्रयन्ति" (तै.उ.)इति श्रुतिविरोधः। तस्याः युक्तिसहितैतच्छ्रुतिविरोधेन अप्रमाणत्वादिति प्राप्ते-

युक्तमेव विष्णोः सर्वसंहर्तत्वम् । "तस्याभिध्यानाद्योजनात् तत्त्वभावाद्भूयश्चान्ते विश्वमाया-निवृत्तिः" (श्वे.उ.१-१०)इति श्रुतौ भगवदिच्छया अनादिबन्धनिवृत्त्युक्त्या कैमुत्यन्यायेन सादेः जगतः संहर्तृत्वस्योक्तत्वात् । "स इदं सर्वं विलापयति" इत्यादिश्रुतेश्च । न च रुद्रस्य संहर्तृत्वाभिधायकश्रुतिविरोधः। तस्याः द्वारकारणत्वाभिधायकत्वात् ।

निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः।
हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव। इति भागवतवचनात् ।

न चोक्तयुक्तिविरोधः। लौकिकपितॄणां ममतायुक्तत्वेन हन्तृत्वायोगेऽपि ईश्वरस्य तदभावेन तत्सम्भवादिति सिद्धान्तः कृतः ॥७॥

**ओं विपर्ययेण तु क्रमोऽत उपपद्यते च ओं**

क्रमस्तु - श्रुत्युक्तक्रमस्तु, विपर्ययेण - विपरीतक्रमापेक्षयैव। कुतः ? अतः श्रुत्युक्तत्वादेव, तर्हि लोकविरोधः इत्यत उक्तं उपपद्यते चेति। पूर्वोत्पन्नानां सामर्थ्यवैशेष्यात् विपरीतक्रमेण लय उपपद्यत इति सूत्रार्थः।

अत्र सर्वमुत्पत्तिक्रमेण भगवता लीयते। "अत एव हीदं परात् क्रमादुत्पद्यते क्रमाद्विलीयते" इति श्रुतेः। न च पक्षान्तरेऽपि व्युत्क्रमाद्विलयश्चैवेति श्रुतिरस्तीति वाच्यम् । "क्रमादुत्पद्यते क्रमाद्विलीयते क्रमेणैव हि अस्योत्पत्तिविलयौ" इत्यादिश्रुतीनां बाहुल्यादिति प्राप्ते -

व्युत्क्रमेणैव लयो युक्तः। क्रमश्रुतेः उत्पत्तिक्रमविपरीतक्रमपरत्वेन बाधकाभावात् । अस्ति च व्युत्क्रमशब्देऽपि क्रमशब्दप्रवेशः कुतो अर्थान्तर कथनमिति चेन्न । "कर्ता प्राणादिकस्यापि हन्ता भूम्यादिकस्य च। यः क्रमाद्युत्क्रमाच्चैव स हरिः पर उच्यते" (भाल्लवेय) इति निरवकाशश्रुतेः। "अनुरूपः क्रमः सृष्टौ प्रतिरूपो लयक्रमः। इति क्रमेण भगवान् सृष्टिसंहारकृद्धरिः" (पद्म.पु)इति निरवकाशस्मृतेश्चेति सिद्धान्तः कृतः ॥८॥

### ओं अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्न अविशेषात् ओं

विज्ञानमनसी - विज्ञानमनस्तत्वे, अन्तरा (विना, क्रमेण)- व्युत्क्रमेण तत्त्वानां लयः, कुतः ? तल्लिङ्गात् - तत्र विज्ञानमनस्तत्त्वविषय एव यथोत्पत्तिलयश्रवणाल्लिङ्गादिति चेन्न। अविशेषात् - विशेषप्रमाणाभावादिति सूत्रार्थः।

अत्र न विष्णोः व्युत्क्रमेण सर्वसंहर्तृत्वं युक्तं , किन्तु विज्ञानमनसी अन्तरा व्युत्क्रमेण लयकर्तृत्वं "मनसश्च विज्ञानम्" इति श्रुतेः। मनसः उत्पन्ने विज्ञानतत्त्वे तद्यच्छेज्ज्ञान आत्मनीति श्रुत्या मनस्तत्वस्य लयश्रवणात् लोकानुगुण्याच्च । लोके क्रमेण युत्क्रमेण च लयदर्शनादिति प्राप्ते-

युक्तमेव विष्णोः व्युत्क्रमेण लयकर्तृत्वं विज्ञानमनसोपि बाधकाभावेन व्युत्क्रमेण लयाङ्गीकारात् । न च "मनसश्च विज्ञानम्" इति श्रुत्या मनस्तत्वाद्विज्ञानतत्त्वस्योत्पन्नत्वेन मनस्तत्वस्य विज्ञानतत्वे लयाङ्गीकारे कथं न विरोध इति वाच्यम् । श्रुत्यर्थापरिज्ञानात् । न हि सा श्रुतिः मनस्तत्त्वाद्विज्ञानतत्त्वस्योत्पत्तिमाचष्टे। किं तर्हि मनोरूपेन्द्रियाज्ज्ञानस्योत्पत्तिमाचष्टे। कुतः ? विज्ञानतत्वात् मनस्तत्वस्य उत्पन्नत्वात् । तदुक्तं

परादव्यक्तमुत्पन्नं अव्यक्तात्तु महांस्तथा।
विज्ञानतत्वं महतः समुत्पन्नं चतुर्मुखात् ।

विज्ञानतत्वात्तु मनो मनस्तत्त्वाच्च खादिकम् । इति सिद्धान्तः कृतः ।।९।।

### ओं नात्माश्रुतेः नित्यत्वाच्च ताभ्यः ओं

नात्मा परमात्मा न लीयते। कुतः ? अश्रतेः तल्लयस्याश्रुतत्वात् । प्रत्युत ताभ्यः- श्रुतिभ्यः नित्यत्वाच्च - तद्देहस्यापि नित्यत्वावगमाच्चेति सूत्रार्थः।

अत्र न विष्णोः जगज्जन्मादिकारणत्वं युक्तं तस्य विनाशित्वात् । "अन्तस्तमसि निलीन" इति श्रुतेरिति प्राप्ते -

युक्तमेव विष्णोः जगत्कारणत्वं विनाशस्य अप्रामाणिकत्वात् । न च "अन्तस्तमसि नीलीनः" इति श्रुतिरत्र प्रमाणमिति वाच्यम् । "एतस्मिन्निलीन प्रकृतिं पुरुषं कालं चानुपश्यति नैनं पश्यति कश्चन" इति श्रुत्या निलीनशब्दस्यापि हितार्थत्वावगमात् । अन्यथा "नित्यो नित्यानां" (क.उ.५-१३)इति बहुश्रुतिविरोधादिति सिद्धान्तः कृतः ।।१०।।

### ओं ज्ञोऽत एव ओं

ज्ञः जीवः, अत एव परमात्मन एवोत्पद्यते, कुतः? अत एव - श्रुतेरितिसूत्रार्थः।

अत्र न विष्णोः जगत्कारणत्वं युक्तं, जीवस्यानादित्वात् , "नित्यो नित्यानाम्" इति श्रुतेरिति प्राप्ते -

युक्तमेव विष्णोः जगत्कारणत्वं, अनादिनित्यान,पेन जीवानां "ते वा एते चिदात्मानो विनष्टाः परं ज्योतिः निविशन्ति। अविनष्टा एवोत्पद्यन्त" (काषायणश्रुति)इत्युपपत्तिविधानात् । न च अनादिनित्यत्वमङ्गीकृत्य उत्पत्तिमत्त्वाङ्गीकारे मे माता वन्ध्येतिवत् व्याघातः। नित्यस्यापि जीवस्य उपाध्युत्पत्त्यपेक्षया उत्पत्त्युपपत्तेः। "उत्पद्यन्ते चिदात्मानः नित्याः नित्यात्परात्मनः। उपाध्येक्षया तेषां उत्पत्तिरिति गीयते।"(व्योमसंहिता)इति वचनादिति सिद्धान्तः कृतः।

न वियदश्रुतेरित्यारभ्य ज्ञोऽत एवेत्यान्तानां एकादशाधिकरणानां उक्तिलाघवाय सङ्कलय्य तात्पर्यमाह - **आकाशादिसमस्तं च तज्जं तेनैव लीयते। सोऽनुत्पत्तिलयः कर्ता** इति।

अत्राकाशादिपदेन अव्याकृताकाशभूताकाशतदभिमानिनां ग्रहणम् । आदिपदेन वाय्वादिभूतानां तदभिमानिनां च ग्रहणम् । तथा सौत्रवियत्पदोपलक्षितानां प्रकृतिजीवकालवेदमहदहङ्कार-मनोबुद्ध्यादीनां तदभिमानिनां च ग्रहणम् । तदुक्तं सुधायां "वियदिति च प्रकृतिजीव-कालवेदमहदहङ्कारमनोबुद्धीन्द्रियादीनां तदभिमानिनां चोपलक्षणम्" इति । एवं च आकाशादिसमस्तं च आकाशादिकं समस्तमपि, तज्जं तस्मात् हरेः जातमित्यर्थः।

अनेन ओं न वियदश्रुतेः, ओं एतेन मातरिश्वा व्याख्यातः, ओं तेजोऽतस्तथा ह्याह, ओं आपः, ओं पृथिव्यधिकाररूपशब्दान्तरादिभ्यः, ओं ज्ञोऽत एव इत्येवं षण्णां एतेषां अधिकरणानां तात्पर्यं उक्तमिति ज्ञातव्यम् । अत्रोत्पत्तेः प्रतिपादनात् । तेनैव लीयत इत्यत्र आकाशादिसमस्तमित्यनुवर्तते। आकाशादिपूर्वोक्तं समस्तमपि, तेनैव - प्रस्तुतहरिणैव लीयते न रुद्रेणेत्यर्थः।।

अनेन ओं तदभिध्यानादेव तु तल्लिङ्गात् सः, ओं विपर्ययेण तु क्रमोऽत उपपद्यते च, ओं अन्तरा विज्ञानमनसीक्रमेण तल्लिंङ्गादिति चेन्न अविशेषात् इति त्रयाणां अधिकरणानां तात्पर्यमुक्तमित्यव-गन्तव्यं, अत्र लयस्य समर्थनात् ।

**सोऽनुत्पत्तिलयः कर्ता** इत्यत्र तच्छब्देन अशेषजन्मलयहेतुत्वेन प्रस्तुतस्य हरेः परमर्शः। न विद्येते उत्पत्तिलयौ यस्य सोनुत्पत्तिलयः इत्यर्थः। कुतः ? कर्तेति हेतुगर्भं, कर्तृत्वात् स्वतन्त्रत्वादित्यर्थः। स्वतन्त्रः कर्तेति स्मरणात् ।

अनेन ओं असम्भवस्तु सतोऽनुपपत्तेः ओं ओं नात्मा श्रुतेः नित्यत्वाच्च ताभ्यः ओं इत्युभयोरधिकरणयोः तात्पर्यमुक्तमिति बोध्यम् । अत्र विष्णोः यथाक्रमं उत्पत्तिलयाभावस्योक्त-त्वात् इति ।।११।।

**मळगी –** शाक्तपाशुपतादिसर्वसमयानां भ्रान्तिमूलत्वादेव शक्त्यादीनां सर्वोत्तमत्वमयुक्तमतो विष्णुरेव सर्वकर्तेत्यत आह। **आकाशादि** इति। ''आत्मन आकाशः सम्भूत'' (तै.उ.२-१)इति श्रुतेः। **आकाशादिसमस्तं** जगत् । **तज्जं** तस्माद्विष्णोरुत्पन्नम् । **तेनैव** हरिणा लीयते। नाशं प्राप्नेति। **स** नारायणः । **अनुत्पत्तिलयः** उत्पत्तिलयरहितः। **कर्त्ता** जगत्कर्त्ता। **जीवः**। **सदा** सर्वदा । **तद्वशगः** विष्णोरधीनस्तदधीन कर्तेति भावः। जीवानां तदधीनत्वमाह **तदाभास** इति। तस्य नारायणस्य आभासः। प्रतिबिम्बभूतः। **हरिः सदा सर्वरूपेष्वपि समः** एकप्रकार इत्यर्थः।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां अणुभाष्ये द्वितीयाध्यायस्य तृतीयः पादः।।**

**नारायणाचार्य–** एवं युक्तिसमयविरोधपरिहारेऽपि न वेदसमन्वयेन विष्णोः जगत्कारण–त्वसिद्धिः। वेदानां परस्परविरोधेन अप्रमाणत्वात् । यद्यप्युक्तेऽयर्थे प्रमाणविरोधो नास्ति । तथापि श्रुतित्वाविशेषादधिभूतादिविषये विरुद्धानां तासामितरत्राप्यप्रामाण्यशंका स्यादतः तत्परिहाराय तृतीयः पादः आरभ्यते। तत्र(तै.उ.२-१) ''आत्मनः आकाशः सम्भूतः'' ''अनादिर्वा अयमाकाशः'' इति आकाशोत्पत्तिविषये श्रुतिविरोधपरिहाराय सूत्रं **ओं न वियदश्रुतेः**। अत्र उत्पत्त्यसम्भवादिति पूर्वपादीयान्तिमाधिकरणादनुवर्तमानमुत्पत्यसम्भवादिति पदं अर्थवशाद्विभक्तिपरिणाम इति न्यायेन विपरिणतमनुषज्यते। तेन वियदुत्पत्यसम्भववन्न किन्तु उत्पत्तिमदेव। अनुत्पत्यश्रवणादिति सूत्रार्थः। न केवलमनुत्पत्यश्रवणं किन्तु उत्पत्तिश्रुतिसद्भावश्चास्तीत्यर्थप्रतिपादकं सूत्रं **अस्ति तु** । ''आत्मन आकाशः सम्भूत'' इति श्रुतिः। ननु अनुत्पत्तिश्रुतेः का गतिरित्यतः सूत्रं **ओं गौण्यसम्भवात्** । अनुत्पत्तिश्रुतिर्गौणानादित्वपरा । भूते तदभिमानिदेवदेहे च कथमप्यवृत्तेः। उत्पत्तिश्रुते सर्वविषयतया मुख्यार्थत्वम् । भूतदेवदेहयोः स्वरूपेणोत्पत्तेः तदभिमानिदेवताजीवस्यापि देहसम्बन्धप्राप्तिलक्षणोत्पत्तेः अव्याकृताकाशस्य तदभिमानिलक्ष्म्याश्च पराधीनविशेषावाप्तिलक्षणोत्पत्तेः सम्भवादिति भावः। अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवात् ।

न केवलमर्थानुपपत्याऽयमर्थ सिद्धः किन्तु तादृशश्रुतेश्चेत्यर्थप्रतिपादकं सूत्रं **शब्दाच्च** । ''अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्ते'' इति भाल्लवेयश्रुतेः। प्राणो मुख्यवायुः। श्रद्धा तत्पत्नी। आकाशशब्देन भूतं तदभिमानितच्छरीरं वाऽत्र भूतस्य देवताशरीरस्य च स्वरूपेणोत्पत्तिश्चेतनस्यापि देहसम्बन्धप्राप्तिरूपोत्पत्तिरिति बहुविषय–त्वादुत्पत्तिश्रुतिर्मुख्यान्या गौणीत्यर्थः।

ननु ''न जायते म्रियते वा कदाचित्'' इत्यादौ मुख्योऽनुत्पत्तिशब्दो दृष्टः। स एवात्र गौणः कथमित्यत आह **ओं स्याच्चैकस्य ब्रह्मशब्दवत्** । यथा ब्रह्मशब्दः परे ब्रह्मणि विष्णौ मुख्यो अन्यत्र चतुर्मुखादौ अमुख्यः तथात्रापि ब्रह्मस्वरूपादौ मुख्यानादित्वपरत्वमाकाशे तु गौणानादित्वपरत्वमनुत्पत्तिशब्दस्य स्यादेवेत्यर्थः।

ननु ब्रह्मशब्दस्य मुख्यामुख्यत्वयोः पूर्णत्वापूर्णत्वरूपप्रवृत्तिकारणसद्भावात् तद्युक्तम् ।प्रकृते तत्कुत इत्यतः सूत्रं **ओं प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः**। ''स इदं सर्वमसृजत''(तै.उ.२-६) इति प्रतिज्ञाहानिः स्यात् । आकाशस्यापि सर्वान्तःपातित्वेन तद्व्यतिरेकाभावात् । ''सदेव सोम्येदमग्र आसीत्''(छां.उ.६-२-१) ''आत्मा वा इदमेक एवाग्र आसीत्'' (ऐ.आ.१-१) ''ब्रह्मैवेदमग्र आसीत्'' ''इदं वा अग्रे नैव किञ्चिदासीत्'' इत्यादि शब्देभ्यः ब्रह्माकाशयोः स्पष्टमुत्पत्यनुत्पत्त्योरुक्तत्वात् । किं च वियदुत्पत्तिमत् विभक्तत्वात् घटवत् इत्यनुमानेनाप्युत्पत्ति-सिद्धिरित्यभिप्रेत्य हेतुसाध्ययोर्व्याप्तिं प्रतिपादयितुं सूत्रं **ओं यावद्विकारं तु विभागो लोकवत्** । विभागो यावद्विकारं उत्पत्याद्यपरपर्यायविकारव्याप्यः। लोके घटादौ दृष्टत्वादित्यर्थः। ''विभागो ह्यल्पशक्तिः स्यान्नैतदस्ति जनार्दने'' इति बृहत्संहितायाम्। अल्पशक्तित्वस्य उत्पत्त्यादि-व्याप्यत्वादेतत्सिद्धिरिति भावः। तस्मात्परमात्मनो वियदुत्पद्यते एवेति सिद्धम् । अत्र सौत्रं वियत्पदं प्रकृत्यादीनामुपलक्षणार्थमिति ज्ञातव्यम् । तथा तासां ''वायुर्वत् स'' इति दिग्देवताभ्यो वायोरुत्पत्तिः श्रूयते। ''सा वा एषा देवतानादिर्योऽयं पवत'' इत्यनुत्पत्तिश्च तत्परिहाराय सूत्रं **ओं एतेन मातरिश्वा व्याख्यातः**। मातरिश्वा मुख्यवायुरपि अनुत्पत्तिमान्न भवति किं तु उत्पत्तिमानेव पूर्वोक्तन्यायादिति । एतदुत्तरं ओं **असम्भवस्तु सतोऽनुपपत्तेः** इत्येतत्सूत्रमप्येकयोक्तया व्याख्यान सौकर्यायाग्रे व्याख्यास्यति। ''वायोरग्निः'' अत्राग्नेः वायुतो जन्मोच्यते। ''सदेव सोम्येदमग्र आसीत्। तत्तेजोऽसृजत्'' इति परमात्मतो जन्म श्रूयते इति विरोध इत्यतः सूत्रं **ओं तेजोऽतस्तथा ह्याह** । तेजोऽप्यतः परमात्मन एवोत्पद्यते। ''तत्तेजोऽसृजत'' इति। तथा ''ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत। अग्नेराप'' इत्यबुत्पत्तिविषये श्रुतिविरोध इत्यतः सूत्रं **ओं आपः** । अत्र सौत्रमाप इति पदं जडवायुपृथिव्योषध्यन्नादेरुपलक्षणं न्यायसाम्यादिति ज्ञेयम् ।

''एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्यधारिणी'' (मु.उ.२-१-३)इति श्रुतेः ब्रह्मण एव अपामुत्पत्तिः। एतेषां सूत्राणां तात्पर्यमाह **आकाशादि समस्तं च तज्जं** इति । आकाशाद्यबाद्यन्तं सर्वं तस्मात् परमात्मन एव जायते। अन्यास्मादुत्पत्तिश्रुतिः द्वारत्वमात्रपरेति भावः। यद्यप्यन्यस्योपादानत्वादीश्वरस्य कर्तृत्वादविरोध इति वक्तुं युक्तम् । तथाप्याकाशादिशब्दैः अधिदैवतस्याप्युक्तत्वात्तस्य च चेतनत्वात् कर्तृत्वमेव वक्तव्यम् । अतो विरोधपरिहारायैवमुक्तम् । तथा ''ता आप ऐक्षन्त'' ''बह्व्यः स्यामः प्रजायेमहि'' इति । ''ता अन्नमसृजन्त'' इत्यद्भ्यो अन्नसृष्टिः श्रूयते। ''अद्भ्यः पृथिवी'' इति कुत्रचित् पृथिवीसृष्टिरिति विरोधात्तत्परिहाराय सूत्रं **ओं पृथिव्यधिकाररूपशब्दान्तरादिभ्यः**। तत्राप्यन्नशब्देन पृथिव्येवोच्यते। भूतोत्पत्त्यधिकारात् । काष्ण्यप्रचुरा च पृथ्वी। यत्कृष्णं तदन्नस्येति कृष्णरूपं पृथिव्या एव लिङ्गम्। आपश्च पृथिवी चान्नं । पृथिवी वान्नम् । ''त आपोऽन्नमसृजन्त'' ''पृथिवी वा अन्नं'' इत्यादिशब्दान्तराच्चादिशब्दाद्युक्तिः। अपौरुषेयत्वादप्रामाण्योयोग इति। इदमप्याह

**आकाशादिसमस्तं च तज्जं** इति । ताभ्योऽद्भ्यो जातं तज्जं नपुंसकनिर्देशात् अन्नमित्यर्थः। यदद्भ्यो जातमन्नमुच्यते तन्न प्रसिद्धान्नं किन्तु आकाशादि भूतचतुष्टयम् । समस्तं समासप्राप्तं संवलितं यस्मिन्तदाकाशादिसमस्तं पृथिवीत्यर्थः। कार्ये कारणानां साक्षात्परंपरानुवेधात् । पृथिवीत्यनुक्त्वा आकाशेत्याद्युक्त्या भूताधिकारादिहेतुकलाभं सूचयति।

ननु ''प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तक'' (म.ना.उ.१६-१८)इत्यादेरन्यो रुद्रादिः संहर्ता प्रतीयते इत्यतः सूत्रं **ओं तदभिध्यानादेव तु तल्लिंगात्सः**। तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते ''विश्वमाया निवृत्ति'' (श्वे.उ.१-१०)इति श्रुतेरनादेरपि बन्धस्य लयस्तदिच्छानिमित्तकः प्रतीयते। किमु सादेर्जगत इत्येतदस्मादेव लिंगात् ज्ञापकात्सर्वसंहारकर्ता विष्णुरिति प्रतीयते किमु ''यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽत्तु देवः'' इत्यादिस्पष्टश्रुतेरित्येवकारार्थः। ''निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः। हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव ।।'' इति भागवतोक्तेः तदन्ये तत्प्रयोज्याः। ''स ब्रह्मणा सृजति स रुद्रेण विलापयति'' इति (महोपनिषत्)श्रुतेश्च स विष्णुरेव संहर्तेत्यर्थः। इदमप्याह **तेनैव लीयते** इति। आकाशादिसमस्तं च तज्जमित्यनुवर्त्तते। तज्जं तस्मादुत्पन्नमाकाशादिसमस्तं विश्वं तेनैव लीयते नत्वन्येन रुद्रादिना। तज्जमित्युक्त्या तस्मादुत्पन्नमनादिबन्धादिकमपि तस्माल्लीयते इति किं वाच्यम् । तज्जमिति सौत्रीमुपपत्तिं सूचयति।

ननु तथापि श्रुतीनां परस्परविरोधेनाप्रमाण्यान्न तद्बलेन भगवति समन्वयो युक्तः। तथा हि भूतलयविषये क्रमव्युत्क्रमतो लयः श्रुतौ प्रतीयते। ''अत एव हीदं पराक्रमादुत्पद्यते क्रमाद्विलीयते नासावुदेति नास्तमेति'' इति भाल्लवेये उत्पत्तिक्रमेण लय उच्यते । ''अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् । व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि ।।'' इति चतुर्वेदशिखायाम् । व्युत्क्रमेण लय उच्यते इत्यतः सूत्रं **ओं विपर्ययेण तु क्रमोऽत उपपद्यते च**। क्रमवचनमपि विपरीतक्रमापेक्षयोपपन्नः बहुश्रुत्यनुरोधात्। व्युत्क्रमेणैव लयः ''अनुरूपः क्रमः सृष्टौ प्रतिरूपो लये क्रमः। इति क्रमेण भगवान्सृष्टिसंहारकृद्धरिः'' इति पाद्मे । इदमप्याह **आकाशादिसमस्तं च तज्जं तेनैव लीयते** इति। आकाशादादिः आकाशादिः महदहंकारादिः। आकाशदिर्यस्येत्याकाशादि भूतपंचकम् । तपरस्तत्कालस्य(पा.सू.१-१-७०) इत्यादाविव तन्त्रावृत्येकशेषाणां अन्यतमाश्रयणेन तच्च आकाशादिमहदादिकार्यजातम्। समस्तं तज्जं तस्माद्यथोक्तप्रकृत्यादिरूपस्वकारणाज्जातं उत्पन्नं तेनैव लीयते। तस्मिन्स्वजनक एव तत्तत्कारणे प्रकृत्यादौ लयं प्राप्नोतीत्यर्थः। तेनेति तृतीयया तस्य कारणस्य कार्यलयं प्रति कारणत्वोक्त्या कार्यलयापेक्षया पूर्ववर्तित्वावगमात्सकार्यलयकाले स्वस्य सत्वावगमात्पूर्वपूर्वकार्यलयस्तदनन्तरं च कारणलय इति सोऽयं विपरीतक्रमो व्युत्क्रम एव। अतो विरोधाभावात् व्युत्क्रमेणैव लय इत्युक्तं भवति। तदिदमाह तेनैवेत्यवधारणेन।

ननु तथापि सर्वेषां न व्युत्क्रमेण लयः किन्तु केषांचिदेवातः पुनः श्रुतिविरोध एवेत्याक्षिप्य समादधत्सूत्रं **ओं अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात्** । विज्ञानमनोव्यतिरिक्तानां विपरीतक्रमेण लयः । विज्ञानमनसोऽस्तु क्रमेण लयः। "प्राणान्मनो मनसश्च विज्ञानं" इति मनसश्च सकाशाद्विज्ञास्योत्पत्तिरुक्ता। "यच्छेद्वाङ् मनसी प्राज्ञस्त-द्यच्छेज्ज्ञान आत्मानि ।"(क.उ.३-१३)इति श्रुतौ पूर्वोत्पन्नस्य मनसः पूर्वं लयः पश्चादुत्पन्नस्य विज्ञानतत्वस्य पश्चाल्लयः प्रतीयते। तथा लोकेऽपि केषांचिदुत्पत्तिक्रमेण केषांचिद्विपरीक्रमेण लयदर्शनाल्लयत्वलिंगेनापि तत्वलयोनियतक्रमेणैव न युक्तमिति चेन्न। अविशेषाद्विज्ञानमनस्तत्व-योरुत्पत्तिक्रमेणैव लयः मन्तव्य इत्यत्र विशेषप्रमाणाभवात्सर्वेषां व्युत्क्रमेणैव लयः।

ननूक्तं लिंगदर्शनादिक मतः कथं प्रमाणाभाव इत्यतः सूत्रं **ओं चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्** । "यच्छेद्वाक्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि" (क .उ.३-१३)इति श्रुतौ ज्ञाने मनसो लयः प्रतीयते स व्युत्क्रमेणैव विज्ञानतत्वात्मनः तत्वस्योत्पन्नत्वात् । "मनसश्च विज्ञानं" इत्यत्रोक्तमनसो विज्ञानस्योत्पत्तिर्न मनोविज्ञानतत्वविषया किं तु मनइन्द्रियाद्विज्ञानमवबोधो भवतीति उच्यते। चराचरविषये मनस आलोचने सति तदन्वयव्यतिरेकानुविधायित्वादवबोधश्चराचरविषयका दृश्यते। तस्मादत्रत्यौ मनोविज्ञानशब्दौ मनस्तत्वेन्द्रियरूपराशेरेकदेशस्येन्द्रियस्य विज्ञानतत्वावबोधरूपराशेरेकदेशस्य बोधस्य वाचकत्वाद्भाक्तौ । भागविषयत्त्वाद् व्यपदेशस्यातस्तत्वविषयत्वाभावान्न तत्वलयविषयश्रुतिविरोधः।

परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा।
विज्ञानतत्वं महतः समुत्पन्नं चतुर्मुखात्।।

विज्ञानतत्वात्तु मनो मनस्तत्वाच्च खादिकम् ।
एवं बाह्या परा सृष्टिः अन्तस्तद्व्यक्त्यपेक्षया।।

विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशिः।

इति स्कान्दोक्तेर्विज्ञानादेव मनसो उत्पन्नत्वावगमादिति । इदमप्याह **आकाशादिसमस्तं च** इत्यादिना। चोऽप्यर्थे । तदर्थश्चाभिविधिः। समस्तं चाकाशादिकं महदादिकार्यजातं यस्माज्जातं तत्रैव लीयते। ननु "विज्ञानमनसी अन्तरा" "मनसश्च विज्ञानं" इत्युत्पत्तिश्रुतेरिन्द्रियाव-बोधविषयत्वेन तत्वविषयत्वाभावादिति भावः ।।९ ।।

अतः परं **नात्माश्रुतेर्नित्यत्वाच्च ताभ्य** इति परमात्मनो लयाभावप्रतिपादकं सूत्रं तत्प्राक् त्यक्तेन **ओं असम्भवस्तु सतोऽनुपपत्तेः** इति परमात्मनो जन्माभावप्रतिपादकेन सूत्रेण सहैकयोक्त्या सिंहावलोकनेन व्याख्यानसौकर्याय व्याचष्टे। इदं च सूत्रं **ओं एतेन मातरिश्वा व्याख्यात**

इत्येतस्मादनन्तरं **तेजोऽतस्तथा ह्याह** इति सूत्रात्पूर्वसूत्रपाठे पठितम् । अतो विस्तृतभाष्ये तत्रैव व्याख्यातम् । अत्र तु आकाशादिपृथिव्यंतविषयकश्रुतिविरोधपरिहारार्थायाः पंचाधिकरण्या एकोक्त्यैव व्याख्यानसौकर्याय तत्र नो व्याख्यातम् । परमात्मविषयकलयश्रुतिविरोधपरिहारावसरे तदुत्पत्तिश्रुतिविरोधपरिहारार्थस्यैव तस्य सन्दर्भशुध्या एकोक्त्यैव व्याख्यानसौकर्यादत्रैव व्याख्यातं सूत्रकारेण। मातरिश्वाधिकरणसिद्धान्तानुसारेण तत्र पूर्वपक्षोत्थानात्संगतिसौकर्येण तत्रैव पठितम् ।

अत्रेयमाशंका। ''असतः सदजायत'' इति श्रुतौ सच्छब्दवाच्यस्य विष्णोर्जन्म प्रतीयते तत्परिहाराय सूत्रं **ओं असम्भवस्तु सतोऽनुपपत्तेः** इति। असतः सकाशादुत्पत्तिमात्रस्यैवानुपपत्तेः सतो ब्रह्मणः सम्भवः सुतरां न सम्भवति इति नैतस्याः श्रुतेरयं प्रतीतिकोऽर्थः किन्तु मूर्तविलक्षणाद्धरेर्मूर्त्तः जायते इत्यादिरूप इति भावः। तथा(क.उ.५-१३) ''नित्यो नित्यानां'' ''अन्तस्तमसि निलीन'' (पैङ्गिश्रुतिः)इति परमात्मलयविषयश्रुतिविरोधपरिहाराय सूत्रं **ओं नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः**। आत्मा परमात्मा लीयते इति न मन्तव्यम् । तल्लयस्याश्रुतत्वात् । ''तमसि निलीन'' इति (पैङ्गी)श्रुतेरपिहितत्वार्थकत्वादिति भावः। कुतः श्रुतेरन्यार्थत्वं ताभ्यो ''नित्यो नित्यानां'' इत्यादिबहुश्रुतिभ्यो नित्यातावगमात् । ''तुच्छेनाभ्ववपिहि तं यदासीत्'' इति स्पष्टश्रुतिबलेन च निलीनश्रुतिः प्रलयेऽपिहितत्वपरेति भावः। तदुभयाधिकरणतात्पर्यमाह **सोऽनुत्पत्तिलयः कर्ता** इति । स पूर्वोक्तो जगज्जन्मादिकर्त्ता परमात्मा उत्पत्तिलयरहित इत्यर्थः।

इतः पराणि **ओं ज्ञोऽत एव** इत्यादीन्यधिकरणानि जीवविषयश्रुतिविरोधपरिहारार्थानि । तत्र ''नित्यो नित्यानां'' इति जीवस्य नित्यत्वावगमान्नित्यभावस्यानादित्वनियमात् ''सर्व एते आत्मनो व्युच्चरन्ति'' इति श्रुतिविरोध इत्यतः सूत्रं **ओं ज्ञोऽत एव**। जानातीति ज्ञः चेतनो जीवः। सोऽप्यतः परमात्मन एवोत्पद्यते। ''ते वा एते चिदात्मानोऽविनष्टाः परं ज्योतिर्निर्विशंत्यविनष्टा एवोत्पद्यन्त न विनश्यन्ति कदाचन'' (काषायणश्रुति) इति शब्दादेवमुपाध्युत्पत्त्यपेक्षया युज्यते चोत्पत्तिरित्यर्थः प्रतिपादकं सूत्रं **ओं युक्तेश्च**। तस्य तात्पर्यमाह। **जीवस्तद्वशगः सदा** । जीवस्तस्य परमात्मनो वशः सन्नेव गच्छति संसारे इति तद्वशगः। तदीयनित्यताया अपि परमात्मनियतत्वादतः एव भगवान् नित्यानामपि नित्य इत्युच्यत इति भावः। तदिदमाह **सदा** इति।

**लिंघेरी –** शाक्तपाशुपतादिसर्वसमयानां भ्रान्तिमूलादेव शक्त्यादीनां सर्वोत्तमत्वमयुक्तं अतो विष्णुरेव सर्वकर्तेत्याह **आकाश** इति। **आकाशादिसमस्तं** जगत् **तज्जं** तस्मादेवोत्पन्नम् । **तेनैव** हरिणा **लीयते** नाशं प्राप्नोति।।५।।

**नारायणपण्डित–** न वियदश्रुतेः, एतेन मातरिश्वा व्याख्याताः, तेजोऽतस्तथा ह्याह, आपः, पृथिव्यधिकाररूपशब्दान्तरादिभ्यः, ज्ञोऽत एव, तदभिध्यानादेव तु तल्लिंगात्सः, विपर्ययेण तु

क्रमोऽत उपपद्यते च इत्यधिकरणाष्टकस्यार्थमाह आकाशेति। आकाशादिसमस्तं तस्माज्जातं तेनैव लीयते संह्रियते इति ।

**गूढकर्तृक** – एतत्पादार्थं गृह्णात्यणुभाष्यकारः। **आकाशादिसमस्तं च तज्जं तेनैव लीयते। सोऽनुत्पत्तिलयःकर्ता जीवस्तद्वशगस्सदा। तदाभासो हरिःसर्वरूपेष्वपि समः सदेति।** न वियत १ एतेन २ तेजोतः३ आपः४ पृथिवी ५ ज्ञः ६ तदभिध्यानात् ७ विपर्ययेण ८ इत्यधिकरणाष्टकस्यार्थमाह। **आकाशादिसमस्तं च तज्जं तेनैव लीयते।** पूर्वोक्तरीत्या व्याख्येयमेतत्।

**अणुभाष्यम्**

**सोऽनुत्पत्तिलयःकर्ता जीवस्तद्वशगः सदा।**
**तदाभासो हरिः सर्वरूपेष्वपि समः सदा ।।७।।**

**सत्यनाथीया–** असम्भवस्तु सतोऽनुपपत्तेः, नात्माश्रुतेर्नित्यत्वाच्च ताभ्य इत्यधिकरणार्थमाह **सोऽनुत्पत्तिलयःकर्ता** इति। स्वतन्त्रकर्तृत्वात् विष्णुरुत्पत्तिलयहीनः। उत्क्रान्तिगत्यादीनां, व्यतिरेको गन्धवच्च तथा हि दर्शयति, पृथगुपदेशात्, यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्, पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् इति नयपंचकस्य तात्पर्यमाह **जीवस्तद्वशगस्सदा** इति । सदा तद्वशगो जीवः सर्वदेत्यन्वयः। अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके, अदृष्टानियमादित्यधिकरणद्वयार्थमाह **जीवस्तद्वशगःसदा** इत्यादिना। सदा तद्गतत्वात् तद्वदाभातीति आभासस्तत्प्रतिबिम्ब इत्युच्यते जीवः। यद्यपि हरिः सर्वपुरुषेषु समस्समानैश्वर्यादिमान्। तथा तत्प्रतिबिम्बरूपाभासो जीवोऽदृष्टवैचित्र्यात्सुरनरादिविचित्ररूप इत्यर्थः

**।। इति अणुभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ।।**

**तत्वमञ्जरी–** ननु हरेरपि ''असतः सदजायत'' (ऋ.सं.१०-७२-२)इति, ''स इदं सर्वं विलाप्यान्तस्तमसि विलीनः'' इति च जन्मलययोः श्रवणान्न तस्य सर्वकर्तृता । न च ''न जायते म्रियते'' इति श्रुतिविरोधः। अस्या जन्मलयाभावश्रुतेः जीवे जन्मलयाभावश्रुतेरिव ईश्वरस्वरूपपरत्वेन जन्मलयश्रुतेस्तु पराधीनविशेषदेहावाप्तितत्त्यागाख्यजन्मलयपरत्वेन च व्यवस्थोपपत्तेरित्यतः प्राप्तं – **असम्भवस्तु सतोऽनुपपत्तेः** इति। **नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः** इति चाधिकरणद्वयम् । तदर्थमाह – **सोऽनुत्पत्तिलयः कर्ता** इति।

सः अशेषजन्मलयहेतुत्वेन प्रस्तुतो हरिः पराधीनविशेषावाप्तिरूपोत्पत्तिशून्यः । देहत्यागाख्यलयशून्यश्चेत्यर्थः। कुतः ? कर्तेति हेतुगर्भमिदम् । कर्तृत्वात् स्वतन्त्रत्वादित्यर्थः। स्वतन्त्रः कर्तेति स्मरणात् । तज्जन्मश्रुतिः वायोरीशजत्वपरा । विलीनश्रुतिरपि अपिहितत्वपरेति भावः।

अत्रासम्भवस्त्वित्यस्य असम्भवज्जन्मनोर्नभोनभस्वतोः श्रुत्यैव जन्मोक्तौ तर्हि तादृशीस्यापीशस्य श्रुत्यैव जन्मास्तु इत्युत्पन्नचोद्यनिरासकतया पूर्वत्रैव संगतत्वेन पूर्वत्र निवेशेऽपि, तथा, नात्मा श्रुतेरित्यस्य तु सर्वस्य व्युत्क्रमेण श्रुत्यैव लयोक्तौ तर्हि ब्रह्मणोऽपि तथैव सोऽस्त्वितिशङ्कानिरासकतया लयप्रकरणानन्तरं निवेशेऽपि श्रोतुर्बुद्धिसौकर्याय व्यवहितयोरपि एकत्रैव संक्षिप्यैवार्थभाषणम् । एवमग्रेपि बोध्यम् ।

ननु यथा आकाशादेः जन्मोक्त्यैव लयः सिद्धः एवं भगवतोऽपि असम्भवस्त्वित्यनेन जन्माभावोक्त्यैव लयाभावः सिद्धः। तत्किं नात्मेति सूत्रेण। न ह्यकाशादेः लयव्युत्पादनार्थमधिकरणान्तरमस्ति। तदभिध्यानादित्यादौ केन लय इत्यदेरेव चिन्तनादिति चेत् । उच्यते। पराधीनविशेषावाप्तिरूपजन्मशून्यस्यापि लीलया देहोत्पादनत्यागरूपलयो नेति समर्थनार्थत्वादवैय्यर्थ्यम् । अस्य "नित्यो नित्यानां" इति देहनित्यानां इति देहनित्यत्वस्याप्युक्तेरिति।

नन्वथापि "अणुर्ह्येष आत्मा" (गौपवन)इति जीवाणुत्वश्रुतेः "व्याप्ता ह्यात्मानः" इति तदनणुत्वश्रुतिविरोधेन अमानत्वेन प्रागुक्तश्रुतिसमन्वयो हरावयुक्त इत्यतः प्राप्तं - **उत्क्रान्तिगत्यागतीनां** इत्यादिसूत्रसप्तकम् । तदर्थमाह - **जीवस्तद्वशगः सदा** इति । गच्छतीति गमेर्डः। सदा उत्क्रान्तिकाले परलोकादिगमनागमनकाले च प्रस्तुतहर्यधीनगमनागमनादिमान् जीव इत्यर्थः। "सोऽत्माच्छरीरादुत्क्रम्यामुं लोकमधिगच्छति" (पौष्यायण)इत्यादिश्रुतेः गत्यागतिमत्त्वादणुर्जीवः। व्याप्तिश्रुतिः ब्रह्मपरेति भावः। अणुत्वे सौत्रयुक्तिसूचनायैवं निर्देशः। न चेश्वरे व्यभिचारः। तत्राणुत्वस्यापि अक्षरनयसिद्धत्वात् । न च मध्यमपरिमाणत्वेऽप्युपपत्तिः। अनित्यत्वापातेन तस्य न च पर्यायादपीत्यत्रोक्तदिशा निरस्तत्वादिति तात्पर्यम् । न च गत्यादेर्मनोगतस्य आत्मन्युपचारादसिद्धिः। "स तत्र पर्येति जक्षन् क्रीडन्" इति मुक्तावपि श्रवणात्। अत एव सदेत्युक्तिः। अत्र गत्यादिमान् जीव इत्येव वाच्ये गत्यादेरीशवशत्वोक्तिस्तु स्वात्मना चोत्तरयोरिति सूत्रोक्तं गत्यादेरीशाधीनत्वं च संग्रहीतुम् । "परेण नीयते" इत्यादिश्रुतेः। तेन जीवमादाय हरेर्लोकान्तरगमने जीववदेव दुःखभोगादिकं स्यादिति निरस्तम् । स्वतन्त्रत्वेन तस्य तत्परिहारसम्भवादिति सूचितम् । उक्तं च सम्भोगप्राप्तिरिति चेन्न वैशेष्यादिति। परमधार्मिक इत्यत्रेव तद्वश इत्यत्राप्यर्थो ध्येयः।

नन्वथापि "स एकधा न सप्तधा" (पाराशर्यायण)इति जीवैकरूप्यश्रुतेः "स पञ्चधा स सप्तधा" इति तद्बाहुरूप्यश्रुतिविरोधेन अमानत्वान्न हरौ श्रुतिसमन्वयो युक्तः । न च बाहुरूप्यमाणौ जीवे युक्तम् । योगप्रभावात् कायव्यूहेन बाहुरूप्यमित्यस्य विभावेव सम्भवेन अणावयोगात् । न च भिन्नांशशून्यस्यापि जीवस्य अघटितघटकशक्त्या अगस्त्यादेः समुद्रपानादिकमिव युक्तं बहुरूपत्वमिति

वाच्यम् । तथा सति जीवस्येश्वरेण साम्यापातादित्यतः प्राप्तं – **व्यतिरेको गन्धवत्तथा च दर्शयति** इति । तदर्थमाह – **जीवस्तद्वशगः सदा** इति। जीवः योगीभूतोंऽशी जीवः भगवद्वशः सन्नेवांशतः पृथग्गतिमानित्यर्थः। योगीजीवस्य योगाऽधितभगवत्प्रसादेन अंशानां पृथग्गतिसम्भवेन बहुरूपत्वस्य ईशाधीनत्वान्न तेन गुणसाम्यापातः। "यथा यथेश्वरः कुरुते तथा तथा भवति" (शाण्डिल्य)इति श्रुतेः ऐकविध्यश्रुतिस्वरूपैक्यपरेति भावः।

नन्वथापि "द्वासुपर्णा" (मुं.उ.३-१-१)इत्यादिजीवेशभेदश्रुतेः तत्त्वमस्याद्यभेदश्रुतिविरुद्धत्वेन अमानत्वे जीवेशभेदासिद्ध्या न हरेः विश्वकर्तृत्वादौ श्रुतिसमन्वयो युक्त इत्यतः प्राप्तं – **पृथगुपदेशात्** इति सूत्रद्वयम् । तस्यार्थो – **जीवस्तद्वशगः सदा** इति।

जीवः सदा तद्वशगो हर्यधीनत्वेन वर्तमानो न कदाचित्तदैक्यं प्राप्नोतीत्यर्थः। तर्ह्यभेदश्रुतिरमानं स्यादित्यतो जीवस्तद्वश इत्येव वाच्ये जीवस्तद्वशग इत्युक्तम् । गमिरत्र ज्ञानार्थः। आनन्दादेरुपलक्षणम् । जीवः प्रस्तुतहर्यधीनज्ञानानन्दादिमांश्चेत्यर्थः। तथा च ईश्वरवज्जीवोऽपि ज्ञानादिमानिति कृत्वा आदित्यो यूपः, सिंहश्चैत्र इत्यादिवदभेदश्रुतिः सादृश्यादभेदपरेत्युक्तं भवति।

नन्वथापि ज्ञोऽत एवेति जीवस्याप्युत्पत्तिरुक्ता । तथात्वे जीवो विनाशी जनिमत्त्वादिति युक्त्युपेतया "ब्रह्मल्लयमभ्युपैति" इति जीवानित्यत्वश्रुत्या "सोऽनादिना पुण्येन पापेन चानुबद्धः। परेण निर्मुक्तः आनन्त्याय कल्पते" इति जीवनित्यत्वश्रुतेर्विरुद्धत्वेन अमानत्वे प्राप्ते ज्ञोऽत इत्यत्र च रेतोरूपोपाध्युत्पत्त्युक्तावपि उपाध्युत्पत्त्या प्रतिबिम्बरूजीवोत्पत्तेरावश्यकत्वे विनाशित्वध्रौव्यादित्यतः प्राप्तम् – **यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्** इति । तस्याप्यर्थः – **जीवस्तद्वशगः सदा** इति। जीवः सदा तद्वशत्वेन विद्यमानः न कदाचिदुपाधिनाशादिना हीयते इत्यर्थः। बाह्यदेहरूपोपाधेः जन्मलयवत्वेऽपि स्वरूपोपाधेः अन्यस्यानादिनित्यस्य भावात् । तस्य योऽनुत्पत्तिलय इत्युक्तदिशा अनादिनित्यबिम्बभूतेश्वरसन्निधेश्च भावेनानादिनित्यो जीव इति भावः।

नन्वथापि जीवस्य "विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र" (ष.उ.४-११)इत्यादिज्ञानानन्दात्मकत्वादिश्रुतेः "स दुःखाद्विमुक्तः आनन्दीभवति" (पैङ्गी)इत्यादिना आनन्दाद्यनात्मकत्वश्रुतिविरुद्धत्वेन अमानत्वे प्रागुक्तश्रुतिसमन्वयायोग इत्यतः प्राप्तम् । – **पुंस्तवादिवत्त्वस्य सतोऽभिव्यक्तियोगात्** इत्यादिसूत्रद्वयम् । तस्याप्यर्थः **जीवस्तद्वशगः सदा** इति। गच्छतिरत्र निवृत्ते गतमिति प्रयोगान्निवृत्यर्थो वा । एवं च जीवस्तद्वशगः हर्यधीनाभिव्यक्ति-शब्दितानन्दगोचरानुभववानिति वा हर्यधीनाभिव्यक्त्या इदानीं पुमान्न पुरा इत्याद्युक्तिस्तथा । जीवस्वरूपस्यैव आनन्दादेः प्रागविद्यावृतस्य मुक्तावपि ईशप्रसादायत्ताया आनन्दज्ञप्तिरूपाया अविद्यानिवृत्तिरूपाया वा अभिव्यक्तेर्भावेन "दुःखाद्विमुक्तः आनन्दीभवति" (पैङ्गी)इत्यादि-व्यपदेशोपपत्त्या जीवस्यानन्दाद्यात्मकत्वे न श्रुतिविरोध इति भावः। अत्र जीवोऽभिव्यक्तिमानिति

वाच्ये तस्येशवशत्वोक्तिः अनादिभावरूपाविद्याख्यावरणस्य निवृत्तिरसम्भावितेऽति शङ्कानिवृत्त्यर्थं अचिन्त्यशक्तिकेश्वरनिवर्त्यत्वं द्योतयितुम् । एतच्च तदभिध्यानादित्यत्र व्यक्तमिति भावः।

नन्वथापि "यत्कर्म कुरुते तदभिसम्पद्यते" (बृ.उ.६-४-५)इति जीवकर्तृत्वश्रुतेः "नान्यः कर्ता" इति तदकर्तृत्वश्रुत्या, इतरव्यपदेशादित्यत्र हिताकरणादिना तदकर्तृत्वोक्त्या च विरुद्धत्वेन अमानत्वप्राप्तेरित्यतः प्राप्तं - **कर्ता शास्त्रार्थवत्त्वात्** इत्यादिसूत्रनवकम् । तस्याप्यर्थः - **जीवस्तद्वशगः सदा** इति। कर्तेत्यन्वेति। जीवः सदा तद्वशगः सन् कर्ता नत्वीशवत् स्वतन्त्रः सन् कर्तेत्यर्थः। "नान्य कर्ता" इति श्रुतिः पूर्वोक्तिश्च स्वतन्त्रकर्तृत्वनिषेधपरेति भावः। अत्र सदेत्युक्तिः "जक्षन् क्रीडन्" इति मुक्तावपि कर्तृत्वश्रवणेन कदाचिन्निवर्तत इति कर्तृत्वं तात्विक-मिति वक्तुम् । तद्वश इत्येव पूर्तौ तद्वशगः इत्युक्तिः भगवदधीनविहितनिषिद्धविषयप्रवृत्ति-निवृत्तिरूपगतिमानित्यर्थप्रतीत्या विधिनिषेधरूपशास्त्रार्थवत्त्वरूपयुक्तिसूचनाय । ज्ञानं यथा तद्वशं न तु स्वाधीनमेवं कृतिरपीत्युपलब्धिवदनियम इति सूत्रार्थसङ्ग्रहाय चेति। गतेरपि ईशवशत्वोक्तिः ईशस्य विध्याद्यविषयत्वं सूचयितुम् ।

नन्वथापि जीवानां "अंशा एव हीमे जीवाः परस्य" इति ईशांशत्वश्रुतेः "नैवांशो न सम्बन्धः" इत्यनंशत्वश्रुतिविरोधेन अमानत्वप्राप्तेः जीवानां मत्स्यादिवत् ईशांशत्वे मत्स्यादि-साम्यापत्तेः, मत्स्यादेश्च जीवसाम्यापत्तेश्चेत्यतः प्राप्तं - **अंशो नानाव्यपदेशात्** इत्यादि सूत्राष्टकम्। तदर्थः - **जीवस्तद्वशगः सदा। तदाभासो हरिः सर्वरूपेष्वपि समः सदा** इति।

गतिरत्र प्रवृत्तिः। अपिस्तदाभासोऽपीत्यन्वेति। जीवः सर्वदा हर्यधीनप्रवृत्तिमान् । तदाभासोऽपि हरिप्रतिबिम्बभूतश्च । हरिः मत्स्यादिसर्वरूपेष्वपि सदा सम इत्यर्थः। तथा च जीवस्येशाधीन-प्रवृत्तिमत्त्वात् ईशप्रतिबिम्बत्वाच्च मत्स्यादेः तदुभयाभावात् तयोरीशांशत्वाविशेषेऽपि न साम्यापत्तिः। जीवस्य भिन्नांशत्वात्, मत्स्यादेरभिन्नांशत्वादिति भावः। अत्रोक्तासु सर्वास्वपि योजनासु उक्तार्थेषु प्रमाणापेक्षायां वैदिकवचनपरामर्शकतया तेनैवेति पदं प्रतियोजनमनुवृत्त्य भाष्योक्तवचनान्यूह्यानि । ग्रन्थगौरभयान्न प्रपञ्च्यते।

नन्वथापि जीवस्य "रूपं रूपं प्रतिरूपो बभूव" (ऋ.सं.६-४७-१८)इति प्रतिबिम्बत्वश्रुतेः "नैवांशो न सम्बन्धः" इत्यप्रतिबिम्बत्वश्रुत्या सुरनरादिविचित्रजीवराशेः अविचित्रेश्वरप्रति-बिम्बत्वायोगादिति युक्त्युपेतया विरुद्धत्वेन अमानत्वप्राप्तेरित्यतः प्राप्तं - **अदृष्टानियमात्** इत्यादिसूत्रत्रयम् । तदर्थः - **तदाभासो हरिः सर्वरूपेष्वपि समः सदा** इति। अपिस्त-थापीत्यर्थः। जीव इत्यस्ति। यद्यपि हरिः सर्वरूपेषु सदा समः एकरूपः । तथापि जीवस्तदाभासः

हरिप्रतिबिम्ब इत्यर्थः। बिम्बावैचित्र्येऽपि तदीयानाद्यदृष्टवैचित्र्येण देवदानवमानवादिवैचित्र्यसम्भवात् प्रतिबिम्बता युक्तेति भावः। एतस्मिन्नेवार्थे जीवस्तद्वशगः सदेति वानुवर्त्य तच्छब्दस्य बुद्धिस्थादृष्टाद्यर्थपरमर्शित्वं वर्णयित्वोक्ताभिप्रायोः ध्येयः।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्यां द्वितीयाध्यायस्य तृतीयः पादः ।।**

**आनन्दमाला** – आकाशादिवदीशस्यापि केनचिदुत्पत्तिलयौ स्यातामित्यत आह – "असम्भवस्तु सतोऽनुपपत्तेः" (२-३-९) " नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः" (२-३-१७) इत्यधिकरणे। इति। स सर्वेश्वरो विष्णुः सर्वथाप्युत्पत्तिलयवर्जितः। सर्वप्रकारेणाप्यसम्भवात्। तथाहि न तावद् दध्यादिवदीश्वरस्य पूर्वशब्दविलोपलक्षणं जन्माभ्युपगन्तुं पार्यते। तद्वदनिवर्त्यान्यथाभावस्याभावात् । सर्वदा सर्वरूपेषु सर्वशब्दवाच्यत्वाच्च। न च भूताद्यनित्यत्ववत् साक्षादुद्भवः। अप्राकृतत्वात्, नित्यत्वाच्च । नापि प्रधानवत् परिणामः। वस्त्वन्तरोत्पत्तावनु-पादानत्वात् । निमित्तत्वात् चेतनत्वाच्च । न च जीववद् विकारवस्त्वभिमानः। नित्युमुक्तत्वात्। अस्तु तर्हि रमावत् पराधीनः कश्चिद् विशेषः नित्यमुक्तत्वेऽपि तत्सम्भवादिति चेत्, मैवम् । पूर्णस्वातन्त्र्यात् , सर्वनियन्तृत्वाच्च। न तावदस्वाधीनां किञ्चित् कर्मादिकमुत्पत्त्यादौ कारणं समस्ति निमित्तमुपादानं वा। तत्र प्रमाणाभावात् । पुण्यादेः प्रकृत्यादेश्च भगवान् स्वयमेव हि साक्षान्निमित्तम् ।

न च विष्णोरुत्पत्तिलयोक्तिः कुत्रचिदाशङ्कनीया। तत्र हि "अजायमानो बहुधा विजायते" (तै आ.३-१३) "तमसि निलीनः व्युत्तिष्ठते" इत्यादिना पराधीनविशेषलक्षणेन जन्मना पराश्रयप्रवेशलक्षणेन लयेन च विनैव सर्वैश्वर्यं लक्षणया स्वेच्छया यदा कदाचिल्लोकदृष्ट्य-पेक्षयाविर्भावतिरोभावावेव तस्योच्यते। "अजायमानः" इति जन्मप्रतिषेधात् । व्युत्तिष्ठते न हि लीयत इत्यर्थाल्लयप्रतिषेधाच्च । युज्यते तस्य स्तम्भादिवाऽविर्भावो लोकजन्मविलक्षणः तथैव तादृशस्तिरोभावश्च। अधिकशक्तित्वात् । तस्मात् "सोऽनुत्पत्तिलयः" इति सुष्टूक्तम् ।।३।९।।

**"कर्ता शास्त्रार्थवत्वात्" (२-३-३२) इत्यधिकरणम् । कर्ता जीवस्तद्वशगः सदा इति । शास्त्रे तावद् धर्माधर्मयोर्विधिः प्रतिषेधश्च श्रूयते। न च तयोः कर्तारं संसारिणं अधिकारिण-मन्तरेण तत् (धियः सा स्यात् । तस्माज्जीवोऽपि कर्ता। न च तावता विष्णोरेव सर्वकर्तृत्व-वचनविरोधः शङ्क्येत् । यतो जीवस्तस्य विष्णोर्वशगः सन्नेव कर्ता। न च संसार एव तथा। "स्त्रीभिर्वा" (छन्दो८-१२-३) इत्यादिना सदा मुक्तावपि तद्वशः सन्नेव सर्वान् भोगान् गच्छति प्राप्नोतीत्युक्तेः। लोकेऽपि प्रत्यक्षत एव प्रव्रश्चनादिप्रवृत्तये परश्वाद्युपगमदर्शनात्, "आत्मानमेव**

**लोकमुपासीत''  (बृहदा.८-१२-३) इति श्रुतौ दर्शनाच्च तद्दत्तं कर्तृत्वं जीवेऽप्यस्तीति । अत एव च तस्य शक्तिविपर्ययसमाध्यभावौ युज्येते। परवशत्वात् । यथा च तक्षजीवःकारयितृवशगः कर्ता च लक्ष्यते तथा सर्वोऽपि जीवो भगवद्वशः कर्तेति युक्तम् । ''न सन्ति यदुपेक्षया'' (पैङ्गि)इत्यादेः। तत्प्रेरकत्वस्य च जीवकृतप्रयत्नापेक्षत्वान्न कोऽपि दोषः ।।१६।।**

**''उत्क्रान्तिगत्यागतीनाम्''(२-३-१९) ''व्यतिरेको गन्धवत् तथा च दर्शयति''(२-३-२६) ''अदृष्टानियमात्''  (२-३-५०) इत्यधिकरणान्यप्यनेनैव भाष्यवाक्येन मुखतो अर्थतश्च व्याख्यातानि वेदितव्यानि। तथा हि ''स एतेनैव स्वात्मना'' (पौष्यायण) इत्यादिना जीवः परमात्मवश एवेममुं च लोकं गच्छति कर्म च कुरुत इत्यणुरेव। न हि व्याप्तस्य गमनागमने श्रूयमाणे सम्भवतः। सोऽयं यद्वशगः स परमात्मैव हि व्याप्तोऽभिधीयते। जीव प्राणधारणे इति धातुपाठात् , प्राणस्य च हृदयसद्मतया जीवपदेनैव हृदि स्थितत्वोक्तेरवस्थितिवैशेष्यात् चन्दनवदालोकवच्च प्रकाशव्याप्तिरपि भाषितैव। ''तं यथा यथेश्वरः प्रकुरुते'' (शाण्डिल्य)इति श्रुतेस्तद्वशगा एवांशिनो जीवादंशाः पृथग् गच्छन्ति गन्धवदिति व्यतिरेकोऽपि व्याख्यातः। न च प्रतिबिम्बवैचित्र्ये कारणाभावः। तदधीन एव प्रतिबिम्बःस्वाविद्याकर्मादिवैचित्र्याद् वैचित्र्यं गच्छतीत्युपपत्तेः ।।११।।१२।।१८।।**

**''पृथगुपदेशात्''  (२-३-२७) इत्यधिकरणं तु अन्यश्च जीवतः इति पूर्वमेव स्फुटं व्याख्यातम् । अत्रापि तद्वशग इति कटाक्षयति।।१३।।**

''अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयते एके''  (२-३-४२) इत्यधि-करणम् । तत्र प्रथमतो जीवस्वरूपनिर्णायकानि ''आभास एव च''  (२-३-४९)इत्यादीनि सूत्राणि व्याख्याति - तदाभासः इति।तत्प्रतिबिम्बत्वाच्च नेश्वराभेदो जीवस्य । न च तावता ''ब्रह्म दाशाः''  इत्यादिविरोधः। यतस्तादृशा अभेदव्यवहारास्तदंशत्वमेव भेदगर्भमनुमोदन्ते। ''पृथगुपदेशात्''  (२-३-३७) इति स्फुटवचनात् । प्रतिबिम्बभूतान् दाशादीन् प्रतिबिम्बत्वं हि नामैक्यं तत्र विहितम् , स्वातन्त्र्याद्यैक्यं वा तस्मात् तदपि भेद एव प्रमाणम्।

नन्वनयोर्भेद इति धर्मस्यैकत्वं धर्मिद्वित्वं पर्यनुयुंक्ते। नह्येकधर्मेण धर्मित्वमुभयोः साम्प्रतम् । तस्मादैक्यमेव जीवेशयोरिति। मैवम् । तत्र ह्येकवचनस्य समुदायार्थत्वाद् धर्मद्वयेनैव भेदिनावुदितौ। उपवीतिनावितिवत्।

तर्हि व्यावहारिकः प्रातिभासिकश्चेति भेदद्वयमभिधीयते नापरमिति चेत् , किमेतत् बाध्यम् , आहोस्विदबाध्यम् ? आद्ये नासीन्नास्ति न भविष्यतीति ज्ञानगम्यत्वात् सूत्रोदितभेदस्य प्रतिषेधो नाम दोषः प्रसज्येत् । नायं दोषः पूर्वमतत्वादस्येति चेत् किं तर्ह्यस्य प्रतिषेधकम् । उत्तरसूत्रमिति

चेत्, तस्यापि तदुत्तरं तथेत्यनवस्था विपर्ययो वा किं न स्यात् ? न हि यत्किञ्चिद् विवेचकमस्ति। पूर्वपक्षसूत्राणां सिद्धान्तसूत्रं निषेधकमित्येव ब्रूम इति चेत्, तदप्यचारु। नह्येकमपि सूत्रं समग्रं पूर्वमतानुवादपरं ब्रह्मसूत्रेष्वस्ति। किमुत बहूनि। प्रत्येकमपि सिद्धान्तपरत्वात्। पूर्वमतानुवादस्तु यत्र क्वचित् यैः कैश्चित् पदविशेषैरेव सुकरः। अतो नात्र सूत्रं सूत्रान्तरं प्रतिषेधति। न च जीवेशयोरभेदः कुत्रापि सूत्रितः। अतः सूत्रितभेदस्य पूर्वमतत्वासम्भवाद् बाध्यत्वाङ्गीकारो न सञ्जाघटीति। उक्तदोषप्रसङ्गात् । चरमे जीवादीशस्य ईशाज्जीवस्येति भेदद्वयं पारमार्थिकमेव तेनाप्यङ्गीकृतमिति किं नश्छिन्नम्?

अपि च, जीवजडप्रतियोगिक ईशभेदः, ईशजडप्रतियोगिको जीवभेदः, जीवेशप्रतियोगिको जडभेदः। पुनश्च जीवानामन्योन्यप्रतियोगिकः, जडानाञ्च तादृशः, एवं पञ्चविधो भेदः पृथक् - इति सूत्रितोऽत्राप्यभिप्रेयते। "अन्यश्च जीवतः" इतिविस्पष्टोक्तेरेवात्र पुनर्मुखतोनुक्तिः। तत्रेशभेदवाचकोऽन्यशब्दश्चतुर्विधसमुच्चयार्थश्चशब्दः।

कुतस्तर्हि सोऽयं भेदो भाष्येन पञ्चधा प्रपञ्चित इति चेत्, प्रपञ्चित एव हि मुखतोऽर्थतो वा तत्रापि। तथा, हि "भिन्नोऽचिन्त्यः" इतीशभेदः। "भिन्न एव जीवः" इति जीवभेदः। "जीवसङ्घात्" इति मिथस्तद्भेदः। "बन्धात्" इति व्यधिकरणोक्तेर्बन्धकजडभेदस्यार्थादवगमः। बन्धकस्य लिङ्गशरीरस्य प्रतिचेतनं विद्यमानत्वाज्जडानामन्योन्यभेधश्चार्थात् सिद्धः। न हि पूर्वापरकालेषु मुच्यमानानां तदा तदा भज्यमानं लिङ्गशरीरमेकमेवेति समञ्जसम् । न च भाष्याख्यश्शास्त्रे तात्पर्यार्थो नैतावानस्तीति शङ्क्यम् । तदेकदेशसम्बद्धे प्रकरणे श्रुतिमुखत एव भेदपञ्चकस्योपन्यस्तत्वात् । तस्मादत्यर्थविस्तरे भाष्याख्ये महाशास्त्रे प्रपञ्चितोऽयं भेदप्रपञ्चः सत्य एव सम्मतः सन्नत्रापि संगृह्यत इत्यनवद्यम्।

जगद्भेदस्य सत्यत्वेऽपि धर्मत्वात् फलश्यामत्ववद् विनाशसिद्ध्या रक्तत्ववदभेदः कुतो न भविष्यतीति चेत्, भेदस्यैव क्रमुकत्वादिवद् यावदाश्रयभावित्वादविनाशसिद्धेः, तथाप्याश्रयनाशे नाशः स्यादिति चेत् सत्यमनित्याश्रयाणां क्रमुकत्वादीनाम् । नित्याश्रयस्य भेदस्य ब्रह्मत्वादि-वदविनाश एवेति नेष्टहानिः।

ननु ब्रह्मव्यतिरिक्तस्योत्पत्तिलयोक्तेर्जीवजडभेदस्याश्रयनाशाद् ब्रह्मभेदस्य प्रतियोगिनाशादिति सर्वभेदविनाशाद् ब्रह्मैकवस्त्ववशेषःस्वयमेव सिद्ध्यतीति च मातिशङ्कि। जीवजडयोरपि यावद्ब्रह्मभावित्वेन नित्यत्वात् । तथा हि अनाद्यनन्तकालीनं हि ब्रह्म सम्प्रतिपन्नम् । तद्यदा यस्मिन् काले तिष्ठति जीवोऽपि तदा सर्वदाप्याभासत एव। स्वयम्प्रकाशमानस्तिष्ठति नित्यस्वरूप इत्यर्थः। न च जीवनाशो यत्र क्वापि श्रुतः सूत्रितो वा। "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च" (भ.गी.२-२४) इति विपर्ययश्रवणात् । नित्यत्वेऽपि जीवस्य स्वदेहसंयोगवियोगाख्ये जन्ममृती युज्येते श्रूयेते च ।

जडप्रकृतेरपि नित्यत्वमवगम्यते । "सत्त्वाच्चावरस्य" (२-१-१७) "अपीतौ तद्वत्प्रसङ्गाद-समञ्जसम्" (२-१-९) "न तु दृष्टान्तभावात्" (२-१-१०) इत्यादिसूत्रश्रुतिस्मृतियुक्ति-सामर्थ्याद्विकृतिसंकृतिभ्यां स्थूलत्वसूक्ष्मत्वापत्ती एव जन्ममरणशब्दिते। अतो न ब्रह्ममात्रावशेषः कदाचिच्छङ्क्यः। न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितःइति भेदपञ्चकस्य सुस्थैर्य(**मेव हि स्थिरीक्रियते। ननु कथं तर्हि पूर्वमनानन्दादिरूपः पश्चादानन्दरूपो भवति। स्वरूपधर्माणां यावदाश्रयभावित्वादिति? उच्यते। न हि पूर्वम**)विद्यमानं सुखादिरस्वरूपं पश्चादुत्पद्यते। किं तर्हि। यो जीवः पूर्वं यद्रूपाभास आसीत सुखादिरूपो दुःखादिरूपो मिश्ररूपो वा स तु पश्चात् स्वसाधनपरिपाके तद्रूप एवाभिव्यज्यते। यथैव बाल्ये पुंरूपः स्त्रीरूपो वा वर्तमानः सन् यौवनेऽपि तद्रूप एवाभिव्यज्यते तथैव स्वमोक्षेऽपि सम्भवात् ॥

अंशाधिकरणशेषं प्रर्यवसाययन् "प्रकाशादिवन्नैवं परः" (२-३-४५) इत्यादीनि सूत्राणि व्याख्याति - **हरिः सर्वरूपेष्वपि समः सदा** इति। हर्यंशानां जीवानां तदधीनत्वात् तदनुग्राह्य-त्वादिकं युक्तम् । तदंशोऽपि मत्स्यादिः परो न जीवसम इति मन्तव्यम्। किन्तु मत्स्यादिरूपी हरिः कूर्मादिषु मूलरूपे च समः, मूलरूपी च हरिर्मत्स्यादिषु सम इत्येव वेदितव्यम् । तच्च साम्यं नाम स्वातन्त्र्याद्यशेषगुणोन्नद्धनिर्दोषैकरूपत्वेनैव स्थितिः। न तु सादृश्यमात्रम् । तथा सति तैः सम इत्येव वक्तव्यत्वात् । न च मत्स्यादिरूपेण द्वैधीभावकाले पुनरेकीभावकाले वा कदाचिदपि पारतन्त्र्यादिवैशिष्ट्येन विषमः शङ्क्योऽयमिति सदा कालं सम इत्युक्तम् । यथा च हरिः सूर्यः अक्षिमानिनां भिन्नांशानामनुग्राहकोऽपि स्वमण्डलप्रकाशमानिषु स्वरूपांशेषु सम एक एव, तथैवोपपत्तेः **॥१४॥१५॥१७॥**

पादार्थनिगमनार्थश्चायं सदाशब्दः। यदेतत् पादोक्तं जगतो जन्मादि, विष्णोरनुत्पत्त्यादि, जीवस्येशाधीनकर्तृत्वादि, तयोः पृथक्त्वादि चेति तत् तावत् केषुचिदेव पराख्यकालेषु तथा भवति, न सर्वेष्विति मा भूच्छङ्का। अतीतानागतानन्तपरपरम्पराख्यकालेषु सर्वदापि तथैव तद्भवति, नान्यथेत्यर्थः ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां द्वितीयाध्यायस्य तृतीयः पादः ॥**

**नृसिंहतीर्थ** – परमात्मानुत्पत्तिलयसमर्थनाय तृतीयदशमाधिकरणयोस्तात्पर्यम् **सोऽनुत्पत्तिलय** इति। अत्रोभयत्र तच्छब्देन हरेः परामर्शः। न विद्येते उत्पत्तिलयौ सोऽनुत्पत्तिलय इत्यर्थः। तत्र तृतीयाधिकणे परमात्मन अनुत्पत्तेरुक्तत्वात् । दशमाधिकरणे परमात्मनो लयाभावस्योक्तत्वात्। पूर्वं निरस्ताभेदनिरासार्थं प्रवृत्तस्य चतुर्दशाधिकणस्य तात्पर्यं पृथक् नोक्तम् । जीवस्येश्वराधीन-कर्तृत्वप्रतिपादकस्य सप्तदशाधिकरणस्य तात्पर्यं **कर्ता जीवस्तद्वशगः सदा** इति। जीवः तद्वशगः

कर्ता तदधीनकर्तेत्यर्थः । जीवः कर्तेत्येवोक्ते स्वतन्त्रकर्तेति प्रतीतिः स्यादतस्तद्वशग इत्युक्तं **सदा** इति। मुक्तौ संसारे चेत्यर्थः।

जीवस्येश्वरप्रतिबिम्बत्वप्रतिपादकस्य अष्टादशाधिकरणस्य तात्पर्यं **तदाभास** इति। तस्य हरेराभासात्तदधीनत्वे सति तत्सदृशत्वरूपप्रतिबिम्ब इत्यर्थः। सुरनरतिर्यगादिभेदेन विचित्रस्वभावानां जीवानामनतिविचित्रभगवतप्रतिबिम्बत्वमनुपपन्नमित्यतो बिम्बवैचित्र्याभावेऽपि प्रतिबिम्बवैचित्र्यं अदृष्टवैचित्र्येणोपपन्नमित्यर्थप्रतिपादकस्य एकोनविंशाधिकरणस्य तात्पर्यम् **हरिः सर्वरूपेष्वपि समस्सदा** इति। अपिशब्दो गुणादिसमुच्चयार्थः। तेन गुणकर्मावयवादीनामपि मत्स्यादिरूपवदेव सृष्ट्यादिकं सूचयति **सर्वरूपेषु** इति। नियामकरूपाणां अवताररूपाणां च संग्रहार्थं **सदा** इति। रामादिरूपेषु कंसहननादिक्रियाणां अनुपलम्भेन अभावशंकानिरासार्थः। अव्यक्तत्वेनानुपलंबस्यान्यथासिद्धेरिति भावः। अयं च नैतदधिकरणस्य वाचिनिको अर्थः किन्तु अभिप्रेतोऽर्थ इति ज्ञातव्यम् ।

यद्वा अस्याप्यधिकरणस्य प्रतिबिम्बसमानार्थत्वेन अस्यापि तदाभास इत्यनेनैव तात्पर्यमुक्तं भवति। जीवानामीश्वरांशित्वे मत्स्यादिसाम्यं स्यादंशत्वाविशेषात् इत्याशंकापरिहारकस्य प्रकाशादिवन्नैवं पर इत्यादिसूत्रज्ञातस्य तात्पर्यमनेनोच्यते **सर्वरूपेषु** इति। मूलरूपेषु अवताररूपेष्वित्यर्थः। उक्तं च स्मरन्ति **च** इति। सूत्रभाष्ये "स्वांशश्चार्थो विभिन्नांश इति द्वेधांश इष्यत" इत्यादिना

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्ये द्वितीयाध्यायस्य तृतीयपादः ।।**

**श्रीनिवासतीर्थीया–** असम्भवस्तु सतोऽनुपपत्तेः, नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य इति अधिकरणद्वयस्यार्थमाह **सोऽनुत्पत्तिलयः कर्ता** इति। स्वतन्त्रकर्तृत्वाद्विष्णुरुत्पत्तिलयाभ्यां विधुरः इत्यर्थः। उत्क्रान्तगत्यागतीनां, व्यतिरेको गन्धवत्तथाहि दर्शयति, पृथगुपदेशात्, यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्, पुंस्त्वादिवत्वस्य सतोऽभिव्यक्तियोगात्, कर्ता शास्त्रार्थवत्वात् इत्यधिकरणषट्कतात्पर्यार्थमाह **कर्ता जीवस्तद्वशग** इति। सदा तद्वशगो जीवः कर्तेत्यन्वयः । अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयते एके, अदृष्टानियमादित्यधिकरणद्वयार्थमाह **तदाभासो हरिः सर्वरूपेष्वपि समः सदा** इति। जीवः सदा तद्वशगत्वात्तद्वदाभाति इत्याभासः। तत्प्रतिबिम्ब उच्यते। यद्यपि हरिः सर्वरूपेषु मत्स्यादिरूपेषु समः समानैश्वर्यादिमान् । तथापि तत्प्रतिबिम्बरूपाभासो जीवः अदृष्टवैचित्र्यात्सुरासुरादिरूपविचित्ररूप इत्यर्थः।

**।। इत्यणुभाष्यविवरणे द्वितीयाध्यायस्य तृतीयः पादः ।।**

छलारी –

### ओं उत्क्रान्तिगत्यागतीनाम् ओं

जीवः अणुरेव, कुतः ? उत्क्रान्तिगत्यागतीनां श्रुत्युक्तानां हेतूनां सकाशादिति शेषः। उत्क्रान्त्यादिमत्त्वादिति सूत्रार्थः।

अत्र जीवो व्याप्त एव नाणुः। "व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च" (काषायण)इति श्रुतेरिति प्राप्ते –

जीवोऽणुरेव व्याप्तो न । उत्क्रान्तिगत्यागतिमत्त्वात् । पतत्रिशरीरवत् । न हि व्याप्तद्रव्यस्य व्योमादेरुत्क्रान्त्याद्यस्ति। न चात्र प्रमाणाभावः। "सोऽस्माच्छरीरात् उत्क्रम्य अमुं लोकं अधिगच्छति अमुष्मादिमं लोकं आगच्छति" (पौष्यायण)इति श्रुतेः। मध्यमपरिमाणत्वे चानित्यत्वप्रसङ्गात् । न चोक्तश्रुतिविरोधः। "स आत्मेदं सृजति" इत्यादिना प्रकृतस्य परमात्मन एवात्राभिधानात् । न च बहुवचनविरोध इति वाच्यम् । "स आत्मा, स आत्मानः, स ईशः, स विष्णुः" इत्यादिना बहुवचनान्तपदवाच्यत्वेन तस्यैव प्रकृतत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **जीवः तद्वशगः सदा** इति। गच्छतीति गर्मेर्डः। जीवः सदा उत्क्रान्तिकाले परलोकादिगमनागमनकाले च प्रस्तुतहर्यधीनगमनादिमानित्यर्थः। तस्माज्जीवः अणुरेव न व्याप्त इत्यर्थः ।।**१२**।।

### ओं व्यतिरेको गन्धवत्तथा च दर्शयति ओं

जीवस्य अणुत्वेऽपि तदंशानां च गन्धवत् व्यतिरेको विभागो अस्ति। कुतः? यतः श्रुतिः तथा दर्शयति, च शब्दात् स्मृतिरिति सूत्रार्थः।

अत्र जीवो नैकधा अनेकशरीरावच्छिन्नः, किन्तु एकेनैव। "स नित्यो निरवयः पुण्ययुक्त पापयुक् च स इमं लोकं अमुञ्चावर्तते स विमुच्यते स एकधा न सप्तधा न दशधा" इति (गौपवन) श्रुतेरिति प्राप्ते –

न जीवस्य एकरूपत्वमेवेति नियमः। किं तर्हि योगाद्यापादितेश्वरानुग्रहेण केषाञ्चिद्युगपदनेक-रूपत्वमपि । न चांशिनं विहाय अंशस्य गमनानुपपत्तिः। दृश्यते खलु गुणस्यापि गन्धस्य धर्मिणं विहाय अन्यत्र गतिः। सति चैवं काऽनुपपत्तिः, द्रव्यस्यांशस्य अंशिनं विहाय अन्यत्र गमने "स एकधा" इति श्रुतिविरोधः। तस्याः स्वरूपैक्यविषयत्वात् । कुत एतत्सर्वं इति चेन्न । "अथैक एव सन् गन्धवद्व्यतिरिच्यते। अथ एकीभवति" इति (शाण्डिल्य)श्रुतेः। "अचिन्त्ययैशशक्त्यैव ह्येकोवयववर्जितः। आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा ।।" इति स्मृतेश्चेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह –**जीवस्तद्वशगस्सदा** इति। योगिभूतोंऽशी जीवः भगवद्वशस्सन्नेव गन्धवदंशतोऽन्यत्र गतिमानित्यर्थः। तस्मात् केषाञ्चिज्जीवानां युगपदनेकरूपत्वमपि सम्भवतीति भावः ।।१३।।

## ओं पृथगुपदेशात् ओं

पृथक् – ईशाज्जीवो भिन्न एव। कुतः? उपदेशात्, तथा श्रुतेरिति सूत्रार्थः।

अत्र परमात्माभिन्न एव जीवः ''तत्त्वमसि'' (छा.उ.३-८-७)इत्यादिश्रुतेः इति प्राप्ते - परमात्मभिन्न एव जीवः। ''भिन्नोचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः'' इति (कौशिक) श्रुतेः। न चाभेदेऽपि अस्ति श्रुतिरिति वाच्यम् । विरुद्धधर्माधिकरणत्वरूपयुक्तियुक्तत्वेन भेदश्रुतेः प्राबल्यादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **जीवस्तद्वशगस्सदा** इति।। जीवः सर्वोऽपि सदा तद्वशगः हर्यधीनत्वेन वर्तमानो न कदाचित्तदैक्यं प्राप्नोतीत्यर्थः ।।१४।।

## ओं यावदात्मभावित्वाच्च न दोषः तद्दर्शनात् ओं

यावदात्मभावित्वात् – यावत्कालं परमात्मा तिष्ठति तावज्जीवस्य भावित्वात् – विद्यमानत्वात् नित्य एव जीवः, तस्मान्न दोषः – जीवस्यानादिकर्मसम्बन्धबोधिकायाः ''सोऽनादिना पुण्येन पापेन चानुविद्ध'' इति श्रुतेरप्रामाण्यदोषो नास्ति । कुतः? तद्दर्शनात् । तस्य यावदात्मभावित्वस्य दर्शनात् । चशब्दात् श्रवणाच्चेति सूत्रार्थः।

अत्र अनित्य एव जीवः, अनित्यत्वश्रुतेः। न च वाच्यं ''सोऽनादिना'' इति श्रुतिः जीवनित्यत्वेऽप्यस्तीति। अनित्यत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । उक्ता खलु जीवस्योत्पत्तिः ''ज्ञोऽत एव'' इति उत्पत्तिमतः च अनित्यत्वं घटादौ दृष्टत्वात् इति प्राप्ते – नित्य एव जीवः। ''नित्यः परो नित्यो जीवो अनित्यास्तस्य धातवः। अत उत्पद्यते च म्रियते च विमुच्यते च'' इति (अग्निवेश्य)श्रुतेः। ''आत्मा नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो धातुरस्य त्वनित्य'' इति (म.भा.स्वर्ग.५-६३) स्मृतेश्च। न च सयुक्तिकानित्यत्वश्रुतिविरोधः। तस्याः उपाधिविषयत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **जीवस्तद्वशगस्सदा** इति। जीवः सदा तद्वशत्वेन विद्यमानो न कदाचित् उपाधिनाशादिना नश्यतीत्यर्थः ।।१५।।

### ओं पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ओं

पुंस्त्वादिवत् - यथा बालस्य सत एव पुंस्त्वस्य यौवने अभिव्यक्तियोगः एवं सतस्तु - प्राग्विद्यमानस्यैव ज्ञानानन्दादेः ईश्वरप्रसादेन मुक्तावभिव्यक्तियोगात् स आनन्दः आनन्दीभवति इति व्यपदेशोपपत्तेः इति सूत्रार्थः

अत्र न जीवो ज्ञानानन्दादिस्वरूपः "स दुःखाद्विमुक्तः आनन्दीभवति । सोऽज्ञानाद्विमुक्तो ज्ञानी भवति" इति (पैङ्गी)श्रुतेः इति प्राप्ते -

भवत्येवानन्दादिरूपो जीवः। "बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभो" इति (गौपवन)श्रुतेः। न च "आनन्दीभवति" इत्यादिश्रुतिविरोधः। यथा पुरुषयोषिदादीनां अपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि कालतस्तदभिव्यक्तेः नायं पूर्वं पुमान् इदानीं पुमान् इत्यादि युज्यते, एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेः ईश्वरप्रसादेन अभिव्यक्तिनिमित्तत्वेन आनन्दीभवतीत्यादिव्यपदेशोपपत्तेः इति सिद्धान्तः कृतः ।।

तस्य तात्पर्यमाह - **जीवः तद्वशगः सदा** इति। गतिरत्र ज्ञानार्थः। एवं च जीवः हर्यधीनप्राग्विद्यमानानन्दाद्यनुभववानित्यर्थः। तथा च बाल्ये विद्यमानस्य पुंस्त्वस्य तारुण्येऽभि-व्यक्तिवत् पूर्वं विद्यमानस्यैव आनन्दादेः ईश्वरप्रसादेन मुक्तावभिव्यक्तिः युज्यत इति भावः ।।१६।।

### ओं कर्ता शास्त्रार्थवत्वात् ओं

जीवोऽपि कर्ता, कुतः? शास्त्रार्थवत्वात्, जीवस्य कर्तृत्वाङ्गीकारे विधिनिषेधशास्त्रस्य अर्थवत्त्वसिद्धेः इति सूत्रार्थः

अत्र जीवो न कर्ता । "नान्यः कर्ता" इति श्रुतेरिति प्राप्ते -

अस्त्येव जीवस्यापि कर्तृत्वं अन्यथा विधिनिषेधशास्त्रस्य वैयर्थ्यप्रसङ्गात् । न चोदाहृत-श्रुतिविरोधः। तस्याः परमात्मातिरिक्तचेतनस्य स्वातन्त्र्यनिषेधपरत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **जीवः तद्वशगस्सदा** इति। कर्तेति वर्तते। तद्वशगः कर्ता तदधीनकर्तेत्यर्थः। जीवः कर्तेत्येवोक्ते स्वतन्त्रकर्तेति प्रतीतिः स्यात्, अतः तद्वशग इत्युक्तम् । सदा - मुक्तौ संसारे चेत्यर्थः ।।१७।।

### ओं अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ओं

अंश एव जीवः परमात्मनः। कुतः? नानाव्यपदेशात् । "नाना ह्येनं व्यपदिशन्ति" इति (पाराशार्यण)श्रुतौ पितृत्वादिनानाप्रकारेण ईशसम्बन्धित्वव्यपदेशात्। किञ्च दाशकितवादित्वं "ब्रह्मदाशाः ब्रह्मकितवाः ब्रह्मैवेते दाशाः" इति ब्रह्माभिन्नत्वं, अन्यथापि - "अन्यः परोऽन्यो

जीवः'' इति ब्रह्मभिन्नत्वमपि एके शाखिनः अधीयते । जीवेशयोर्भेदाभेदोक्त्यन्यथानुपपत्त्या भेद-मुपेत्याभेदस्थाने प्रतिबिम्बांशत्वं निवेश्यते अभेदस्य बाधात् , उक्तं चाभेदश्रुतयोंऽशत्वा-दिति सूत्रार्थः ।।

अत्र न जीवो हरेरंशः। ''नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य'' इति (भाल्लवेय)श्रुतेरिति प्राप्ते -

अंश एव जीवः परमात्मनः। ''अंशो ह्येष परस्य योयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति सखेति च'' इति (पाराशर्यायण)श्रुतेः ''पादोऽस्य विश्वा भूतानि''(ऋ.सं.१०-९०-३)इति मन्त्रवर्णाच्च । ''ममैवांशो जीवलोके'' इतिं (भ.गी.१५-७) स्मृतेश्च । न चानंशत्वश्रुतिविरोधः। तस्या मत्स्यादिवत् स्वरूपांशत्वाभावपरत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **जीवस्तद्वशगस्सदा तदाभास** इति। गतिरत्र प्रवृत्त्यर्थः। सदा हर्यधीन-प्रवृत्तिमान् जीवः तत्प्रतिबिम्बांश इत्यर्थः ।।१८।।

## ओं अदृष्टानियमात् ओं

जीवानामेकब्रह्मप्रतिबिम्बत्वेऽपि मिथो वैचित्र्यं विद्यते। कुतः? अदृष्टस्य विद्याद्यदृष्टस्य अनियमात् - वैचित्र्यादिति सूत्रार्थः ।।

अत्र न जीवाः भगवत्प्रतिबिम्बाः '' नैवांश'' इति श्रुतेः। न च प्रतिबिम्बत्वेऽपि ''रूपं रूपं प्रतिरूपो बभूव'' (ऋ.सं.६-४७-१८)इति श्रुतिरस्तीति वाच्यम् । प्रतिबिम्बत्वाभावश्रुतेः सयुक्तिकत्वात् । तथा हि । अस्ति खल्वयं जीवानां अन्योन्यभेदः सुरासुरनरतिर्यगादिरूपः। न चैकप्रतिबम्बानां मिथो वैचित्र्यं सम्भवति। तदयं प्रयोगः। न जीवाः एकप्रतिबिम्बाः भेदवत्त्वात् दर्पणे प्रतीयमानघटपटवदिति। अतः सयुक्तिकश्रुतिविरोधात् प्रतिबिम्बत्वश्रुतिः अप्रमाणमेवेति प्राप्ते-

जीवाः भगवत्प्रतिबिम्बाः ''रूपं रूपं प्रतिरूप'' इति श्रुतेः। न चोक्तश्रुतिविरोधः। तस्याः अर्थान्तरपरत्वात् । न च प्रतिबिम्बत्वाभावप्रतिपादकयुक्तिविरोधः।

द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः।
प्रतिबमम्बांशकश्चाथ स्वरूपांशक एव च।

प्रतिबिम्बंशका जीवाः प्रादुर्भावाः परे स्मृताः।
प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु।। इति स्मृतिविरोधात् ।

न च वैचित्र्यान्यथानुपपत्त्या सर्वेषां प्रतिबिम्बत्वाभावो वाच्यः। अशेषजीवानां भगवत्प्रतिबिम्बत्वेऽपि विद्यादृष्टादिवैचित्र्येण देवदानवमानवादिवैचित्र्योपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **तदाभास** इति। वक्ष्यमाणं हरिरित्यादिपदत्रयं अत्रापि सम्बध्यते। जीव इत्यनुवर्तते। अपि यद्यपि हरिः समः एकरूपः तथापि जीवः तदाभासः हरिप्रतिबिम्बांशाः इत्यर्थः। बिम्बावैचित्र्येऽपि तत्तदीयविद्यादृष्टादिवैचित्र्यात् देवदानवमानवादिवैचित्र्यसम्भवेन प्रतिबिम्बत्वं युक्तं इति भावः।

ननु जीवस्य ईश्वरांशत्वमयुक्तं तथा सत्यंशत्वाविशेषात् मत्स्यादिसाम्यापातादित्याशङ्क्य जीवानां मत्स्यादीनां च भगवदंशत्वाविशेषेऽपि न सर्वसाम्यं मत्स्यादीनां स्वरूपांशत्वात् । जीवानां भिन्नांशत्वात् । स्वरूपांशानामेव साम्यमित्यर्थप्रतिपादकप्रकाशादिवन्नैवं पर इत्यादिसूत्रजातस्य तात्पर्यमाह - **हरिः सर्वरूपेष्वपि समस्सदा** इति। अपिशब्दो गुणादिसमुच्चायार्थः ।।१९ ।।

**मदाचार्यमनोधाममध्वमानसमञ्चके ।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां द्वितीयाध्यायस्य तृतीयः पादः ।।**

**नारायणाचार्य –** ननु तथापि ''व्याप्ताः ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मानः सर्वरूपा अनन्ता'' इति काषायणश्रुतौ जीवानां व्याप्तत्वं प्रतीयते । आत्मन इति बहुवचनेन परमात्म–विषयत्वानुपपत्तेः। ''अणुर्ह्येष आत्मायं वा एते सिनीतः । पुण्यं (चापुण्यं)च पापं च'' इति गौपवनश्रुतौ तेषामणुत्वं च प्रतीयते अतो विरोध इत्यतः सूत्रं **उत्क्रान्तिगत्यागतीनां**।एतेषां हेतूनां सकाशादणुरेव जीवः। न हि व्याप्तस्योत्क्रमणादिकं सम्भवतीति भावः। ''सोऽस्माच्छरीदुत्क्राम्यामुं लोकमभिगच्छन्त्यमुष्मादिमं लोकमागच्छति स गर्भी भवति स प्रसूयते स कर्म कुरुते'' इति पौषायणश्रुतौ तदुक्तेः। इदमप्याह **जीवस्तद्वशगः सदा**। जीवः सदा परमात्मवशगः सन् गच्छति देहाद्बहिर्निःसरति उत्क्रामतीति यावत् । तथा उत्क्रम्यामि गच्छत्यूर्ध्वमारोहति ततोऽप्यधमा गच्छत्यतो व्याप्तस्य तदयौगात् । निरस्तमध्यमपरिमाणो असौ अणुरेवेति भावः।

एवं निरस्तमध्यमपरिमाणस्य व्याप्तत्वाभावेनाणुत्वे सिद्धे प्रसंगादन्यदपि चिन्त्यते। तत्र पूर्वोदाहृतपौष्यायणश्रुतौ ''सोऽस्माच्छरीरात्'' इत्यत्र उत्क्रान्त्यादौ जीवस्य स्वातन्त्र्यं प्रतीयते। अतस्तस्य पूर्वोक्तमीश्वराधीनत्वमनुपपन्नमित्यतः सूत्रं **ओं स्वात्मना चोत्तरयोः**। ''स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति'' तथा ''एष ह्येनं जीवमभिगमयति एष उद्गमत्येष आगमयति'' इत्युत्तरयोः वाक्ययोः सकाशात्परमात्मनैव उत्क्रान्त्यादयः । उक्तमाक्षिप्य समादधत्सूत्रं **ओं**

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्** । "व्याप्ता ह्यात्मान" इत्यत्राणुत्वान्यस्य व्याप्तत्वस्य श्रवणान्नाणुरिति चेन्न "स आत्मेदं सृजति स द्विधेदं बिभर्ति अन्तर्बहिश्च । स बहुधेदं अनुप्रविश्यात्मनोऽभिनयति। स आत्मा स आत्मान· स ईशः स विष्णुः सः परः परोवरीयन्" इति परमात्माधिकारत्वात् व्याप्तश्रुतेः परमात्मविषयत्वात् । "एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः। एक एवोच्यते वेदैस्तावता नास्य भिन्नता।।" (भवि.पु)इति वचनात् तदयं "प्राणोऽधितिष्ठति" (ऐ.आ.२-३-८) इत्येकवचनेन निर्दिष्टं तदुक्तमृषिणा "आ तेन यातं मनसो जवीयसा" इति द्विवचनान्तशब्दोपेतमन्त्रयोः प्रमाणीकृतत्वाच्च न बहुवचनविरोधः। दुर्बलप्रकरणेन कथं बहुश्रुतिबाध इत्यतः सूत्रं **ओं स्वशब्दोन्मानाभ्यां च** । "एषो ह्यात्मा अध्युद्गतो मानशक्तेस्तथाप्यसौ प्रमितिं याति वेदैः" इति वाक्यशेषे श्रुतात्मश्रुतेरपरिमितत्वलिंगाच्च। तथा च श्रुतिलिंगप्रकरणैः श्रुतिमात्रबाधो युक्त इति भावः। "व्याप्ता ह्यात्मान" इत्यत्रैवात्मशब्दे सत्यपि तस्य बहुवचनान्ततया अन्यार्थप्रतीतिभासकत्वाद्वाक्यशेषस्थात्मशब्दस्योदाहरणमिति ज्ञेयम् ।

नन्वणोर्जीवस्य सर्वशरीरगतत्वाभावात्कथं सर्वशरीरगतसुखाद्यनुसन्धानमित्यतः सूत्रं **ओं अविरोधश्चन्दनवत्** । यथैकदेशपतितायाः हरिचन्दनविप्लुषः सर्वशरीरव्याप्त्या द्रौत्यकारित्वं तथैकदेशवर्तिनोऽपि जीवस्य सर्वशरीरे अव्याप्ततया सुखाद्यनुसन्धाने न विरोधः।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि**। हरिचन्दनविप्लुट् यत्प्रदेशे पतिता तत्र तस्याः सम्यगवस्थानमन्यत्रासम्यगवस्थितिः दृष्टा। जीवे तु कथमिति चेत् न अत्रापि "हृदि ह्येष आत्मा" (ष.उ.३-६) इति श्रुतेः हृदये सम्यगन्यत्रा-सम्यगवस्थानं च युज्यते। एवं स्वरूपतदंशाभ्यामात्मनः शरीरे व्याप्त्यव्याप्ती सदृष्टान्तमुक्त्वा प्रकारान्तरेणापि उपपादयितुं सूत्रं **ओं गुणाद्वाऽऽलोकवत्** । यथा प्रदीपाद्यालोकस्य प्रकाशरूपगुणेन व्याप्तिः ज्योतीरूपेण अव्याप्तिः। एवं जीवस्य चिद्रूपेण व्याप्तिः जीवरूपेणाव्याप्तिरिति च। पूर्वोक्तांशतो व्याप्तिर्देवताविषया गुणतो व्याप्तिस्तदन्यविषया । उक्तं च स्कान्दे "असम्यक् सम्यगिति च ह्यवस्थाभेदतः सुराः । व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा ।।" इति। एतत्तात्पर्यमाह **जीवस्तद्वशगः सदा** इति। जीवः सदा उत्क्रान्तगत्यागत्यादिषु अवस्थासु परमात्मवश एव। स च तद्वशः। तद्वशेन तदाज्ञया गच्छति उत्क्रामति गच्छत्यागच्छति चेति। व्याप्तस्योत्क्रम-णादेरसम्भवादणुः। तच्चोत्क्रमणादिस्तदाज्ञयैवेत्यस्वतन्त्रोऽपीति भावः ।।१२।।

ननु तथापि "स नित्यो निरवयः पुण्ययुक् पापयुक् च स इमं लोकं अमुं चावर्तते स विमुच्यते स एकधा स सप्तधा स शतधा" इति गोपवश्रुतावेकस्य जीवस्य बहुत्वं श्रूयते। "स पंचधा स सप्तधा स दशधा भवति स शतधा सहस्रधा स गच्छति स मुच्यते" इति पाराशर्यायणश्रुतौ बहुरूपत्वं चेत्यतो विरोध एवेत्यतः सूत्रं **ओं व्यतिरेको गन्धवत्तथा च दर्शयति**। स्वरूपेण

**एकस्यापि जीवस्यानेकांशैर्बहुरूपतापि युज्यते।** अंशिनं परित्यज्यांशस्य व्यतिरेकः पृथग्भवनरूपः **पुष्पाद्गन्धस्येव युज्यते।** "अथैक एव सन् गन्धवद्‌व्यतिरिच्यते । अथैकीभवति । अथ **बह्वीभवति** । तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयान्" इति शाण्डिल्यश्रुतिः। "अचिन्त्ययेशशक्त्यैव ह्येकोऽप्यवयवर्जितः। आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा।।" इति पाद्मे। इदमप्याह **जीवस्तद्वशगः सदा** इति। तद्वशेन गच्छन्ति नानाशरीराणि प्रविशतीत्यर्थः। स्वतो निरंशो निरवयवोऽपि जीवः ईश्वरवशत्वात्तदीयाचिन्त्यशक्त्या योगप्रभावेन सौभर्यादिभिरिव बहुरूपोऽपि भवत्यतो न विरोध इति भावः।।१३।।

ननु तथापि (छा.उ.३-८-७) "तत्वमसी" "अहं ब्रह्मास्मि" (बृ.उ.३-४-१०) इत्यादिषु जीवस्य परेणाभेदः प्रतीयते।(श्वे.उ.६-१३) "नित्यो नित्यानां चेतनश्चेतनानां" "द्वा सुपर्णा" (श्वे.उ.४-६)इत्यादिषु भेदश्चेत्यतः सूत्रं **ओं पृथगुपदेशात्** ।

भिन्नोऽचिन्त्यः परमो जीवसंघात्पूर्णः परो जीवसंघो ह्यपूर्णः।
यतस्त्वसौ नित्यमुक्तोऽप्ययं च बन्धान्मोक्षं तत एवाभिवांछेत्।।

इति सोपपत्तिककौशिकश्रुतेर्भिन्न एव जीवः। तस्य तात्पर्यमाह। **सोऽनुत्पत्तिलयः कर्ता जीवस्तद्वशगः सदा** इति। विरुद्धधर्माधिकरणयोः नियम्यनियामकभावापन्नयोर्भेदएव युक्तः। जीवस्तेन परमात्मना तत्प्रसादेन सदा नित्यं मुक्तिकालीनं वं ज्ञानं शं सुखं च गच्छतीति तद्वशगः गत्यार्थात् वातेः घञर्थे भावे कप्रत्यये आतो लोप इटि च (पा.सू.६-४- ६४)इत्यालोपे वशब्दो ज्ञानार्थः। तेन "बन्धान्मोक्षं तत एवाभिगच्छेत्" इति श्रुत्यर्थ उक्तो भवति। तर्हि तत्वमस्याद्यभेदव्यपदेशस्य का गतिरित्यतः सूत्रं **ओं तद्गुणसारत्वात्तु तद्‌व्यपदेशः प्राज्ञवत्** । तस्य ब्रह्मणो गुणाः ज्ञानानन्दादयः त इव गुणाः सारं स्वरूपं यस्य तत्वात्। अभेदव्यपदेशः प्राज्ञवत्। यथा परमात्मा सर्वं खल्विदं ब्रह्मेत्यभेदेन व्यपदिश्यते। न ह्यनित्यजडादिभिरभेदः सम्भवति। परमात्मनः जगद्गुणसदृशगुणात्मकत्वेन सर्वनियामकत्वादिना वा तथात्रापीत्यर्थः। इदमप्याह **जीवस्तद्वशगः सदा तदाभास** इति। शश्वदीश्वरवशौ ज्ञानानन्दौ तस्य ब्रह्मणो वशाविवशौ गच्छति प्राप्नोतीति तद्वशगः। स्वपदं वर्णयति । तद्वदाभासते इति तदाभासः। अतः सिंहो देवदत्त इतिवदभेदव्यपदेशः। न हि परमतेऽपि तत्त्वंपदार्थयोर्विशिष्टयोरभेदः सम्भवति। अन्यथा भागत्यागलक्षणायाः वैय्यर्थ्यापातादिति भावः।।१४।।

जीवस्य नित्यस्य नित्यानामित्यादौ नित्यत्वमुक्तं। तदयुक्तं "ब्रह्मन्लयमभ्युपैति" इति श्रुतेः। अनित्यत्वस्यैव युक्तत्वात् । ज्ञोऽत एवेत्युत्पत्तेरुक्तत्वात् । जन्यभावस्य विनाशित्वनियमात् । न च तदुपाधेरुत्पत्युक्तावपि कथं तस्योत्पत्तिः उपाध्युत्पत्त्यादेः प्रतिबिम्बोत्पत्तिनियमादित्यतः सूत्रं **ओं यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्** । जीवस्य परमात्मप्रतिबिम्बत्वात् परमात्मनश्च बिम्बस्य

नित्यत्वनियमात्स्वरूपोपाधेर्बिम्बसन्निधानस्य च नित्यत्वाच्च न कोऽपि दोषः। "जीवो नित्यो धातुरस्य त्वनित्य" (म.भा.स्वर्गारो.५-६३) इति बाह्योपाधेरेवानित्यत्वदर्शनात् । इदमप्याह **जीवस्तद्वशगः सदा। तदाभास** इति। जीवः सदास्तीति अवगमात् तद्योगः नित्य इत्यर्थः । कुतः? यतस्तस्य परमात्मनः आभासः प्रतिबिम्बः। "जीवोपाधिर्द्विधा प्रोक्तः स्वरूपो बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः।। " इति वचनादिति भावः।

ननु तथापि(ष.उ.४-११) "विज्ञानात्मा सह देवैश्च सर्वैः" "स आनन्द स बलः स ओजः सः परेणामुं लोकं नीयते स विमुच्यते" इति जीवस्य ज्ञानानन्दरूपत्वमुच्यते। तथा "स दुःखाद्विमुक्तः आनन्दीभवति। सोऽज्ञानाद्विमुक्तो ज्ञानी भवति। सोऽबलाद्विमुक्तो बली भवति" इति पैंगिश्रुतावानन्दरूपतापीत्यतो विरोध इत्यतः सूत्रं **ओं पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्ति-योगात्**। यथा बालस्य सदेव पुंस्त्वं यौवने अभिव्यज्यते एवं सतामेवानन्दादीनां व्यक्त्यपेक्षया तदुक्तिः। "बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्। स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः" इति गौपवनश्रुतेः। इदं च सज्जीवविषयं इतरेषामपि स्वरूपस्योपलक्षणं एतदप्याह **जीवस्तद्वशगः सदा । तदाभास** इति। जीवो यद्यपि तद्वशगः। ते इदानीमननुभूयमाने वशे ज्ञानसुखे गच्छति प्राप्नोत्येतादृशः सदा वर्तते तथापि तदा तस्मिन्काले मोक्षे आसम्यग्भासयति अनुभवतीत्यर्थः। सर्वदा विद्यमानमेव कालविशेषे व्यनक्तीति भावः।

ननु स्वरूपानन्दादेरावरणे सिद्धे भवेदेतत्सर्वं तदेव कुत इत्यतः सूत्रं **ओं नित्योप-लब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा**। आवरणानङ्गीकारे देवादीनां मुक्तियोग्यानां नित्योपलब्धिरानन्दादेः स्यात् । असुराणां नित्यानुपलब्धिः सुखस्य किन्तु सर्वदा दुःखानुभव एव स्यात् । मध्यमानां नित्यमुपलब्ध्यनुपलब्धी सुखस्य उपलब्धिः तस्यैव केवलस्यानुपलब्धिश्च स्वरूपसुखदुःखयोर्युगपदनुभवश्च प्रसज्येतेत्यर्थः। अनुपलब्धिरित्यत्र नञ् विरुद्धार्थः। तेन सुखोपलब्धिविरुद्धोपलब्धिर्दुःखोपलब्धिरित्यर्थो लभ्यते। अन्यथा असुराणां सुखोपलब्ध्य-भावेनाचरणसिद्धिरयुक्ता स्यात् । न हि तेषां स्वरूपसुखानुपलब्धिराचरणनिमित्ता किं तु तदभावनिमित्तैव । नित्यसंसारिणामपि लिंगदेहभंगोऽस्त्येवेति वदतामिदमेव सूत्रभाष्यटीकादिकं ज्ञापकमिति प्रतिभाति। आवरणानंगीकारे सर्वदा सुखदुःखमिश्रस्वरूपस्य तेषां नित्यमनुभवा-पादनमन्यथाऽसंगतं स्यात् । तेन ज्ञायते इदानीमनुपलभ्यमानत्वेप्यावरणभंगानन्तरमेवोपलब्धि-रनुमतेति। तेषु नित्यसंसारिशब्दस्तु सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखमिदानीमिवावरण-निवृत्यनन्तरमनन्तकालं तैरनुभूयते इत्यनुपपन्नः। इदानींतनं जन्यं तदुत्तरं त्वजन्यमित्यन्यदेतत् । अत एव भगवत्पादैः "स्रक्ष्ये हि चेतनगणान्सुखदुःमध्यसम्प्राप्तये " (महा.ता.नि.१-५) इत्यत्र तेषामपि मुक्तितमोयोग्यप्रायपाठे न स्वरूपस्यैवानुभवरूपासम्प्राप्तिरुक्ता। न हि साऽऽवरणभंगाभावे सम्भवतीति तेषामाशयः।

तत्र तत्वसंख्याने मुक्तियोग्यानां तमोयग्यानां च मुक्तितमस्कं च सृतिसंस्थत्वं चेति **द्वैविध्यकथनवन्नित्यसंसारिणामपि द्वैविध्यं कुतो नोक्तमिति** ...महान्तः प्रष्टव्याः । ''नित्यानन्द-ज्ञानबला देवा नैवं तु दानवाः। दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः। तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतं'' इति भविष्यत्पर्वोक्तेः। स्वरूपात्मकानां तेषामननुभवे आवरणमेव निमित्तमिति भावः। इदमप्याह **तदाभास** इति । जीवः सदेति वर्त्तते। आवरणानंगीकारे जीवः मुक्तियोग्यः सदा सर्वदा तदाभासः तयोर्वशः शब्दाभ्यां प्रकृतयोर्ज्ञानानन्दयोराभासोऽवभासो यस्येत्येतादृशः। स्यादिति वाक्यशेषः। तथा जीवस्तमोयोग्यः तयोरासम्यगाभासः किन्तु दुःखस्यैव अवभासो यस्येत्येतादृशः । स्यादेवं मनुष्यजीवोऽपि आ ईषत् तदाभासो यस्य किंचित्सुखस्य किंचिदुःख-स्येत्युभयाभासः स्यादित्यर्थः। प्रागीश्वरस्यैव सर्वकर्तृत्वमुक्तं ''यतो वा'' इत्यादिश्रुतिभिर्लक्षणसूत्रे ''यत्कर्मकुरुते तदभिसम्पद्यते'' (बृ.उ.६-४-५)इति जीवस्योपलभ्यते अतो विरोध इत्यतः सूत्रं **ओं कर्त्ता शास्त्रार्थवत्वात्** । जीवस्य कर्तृत्वाभावे शास्त्रस्याप्रयोजकत्वप्राप्तेर्जीवोऽपि कर्त्ता । अन्यथा स्वर्गापवर्गादिरूपक्रियाफलभोक्ता न स्यादिति भावः।

न चैतत्कर्तृत्वमौपाधिकम्। मुक्तावुपधिनिवृत्तावपि ''स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा'' (छां.उ.८-१२-३)इत्यादिक्रीडाया उक्तत्वादित्याशयेन प्रवृत्तं सूत्रं **ओं विहारोपदेशात्** । अस्तु प्रमाणानुरोधान्मोक्षकर्तृत्वं वास्तवं संसारे काल्पनिकं किं न स्यादित्यतः सूत्रं **ओं उपादानात्** । आध्यासिककर्तृत्वे परानुष्ठितभोजनक्रियायामापि स्वीयत्वाध्यासेन स्वस्य तृप्त्यादिप्रसंग इति भावः। साधनाद्युपादानप्रतीतेश्च कर्ता इत्यर्थः।

संसारेऽपि एवमनुपपत्या प्रत्यक्षेण इव साधितं कर्तृत्वं श्रुत्येहापि साधयत्सूत्रं **ओं व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः**। ''आत्मानमेव लोकमुपसीत'' (बृ.उ.१-४-१५)इति परमात्मोपासनरूपक्रियायां कर्तृत्वेन श्रुतौ व्यपदिष्टत्वाच्च जीवः कर्ता। ननु चात्र जीवपदाश्रवणात्कथं जीवो कर्तेति चेत् । न, अत्र प्रतीतक्रिया तावत्सकर्तृका वाच्या । तत्र च जडस्य कर्तृत्वायोगेन असम्भवात् जीवस्यापि कर्तृत्वानंगीकारे ईश्वरः कर्ता स्यात् । तथा सति ''आत्मैव लोकमुपासीत'' इति निर्देशविपर्ययः स्यात् । तस्माज्जीवोऽपि कर्ता अन्यथा निर्देशविपर्ययः स्यादिति भावः। तर्हि ईश्वरस्यैव कर्तृत्वमित्यतः सूत्रं **ओं उपलब्धिवदनियमः**। यथेदं ज्ञास्यामीतीच्छायामपि न नियमेनोपलब्धिः प्रत्युतानिच्छतोऽपि दुर्गन्धाद्युपलब्धिर्भवति। एवं कर्मण्यपि स्वेच्छानुसारेण कर्मनिष्पत्तिनियमादर्शनादीश्वर एव कर्त्ता जीवस्तु परतन्त्र इति। ''य आत्मानमन्तरो यमयति'' इति हि श्रुतिः। कुतः? शक्तिविपर्ययात्। अल्पशक्तित्वाज्जीवस्य। किं च **ओं समाध्यभावाच्च**। तस्यालंबुद्धिरूपसमाधानाभावाच्चास्वातन्त्र्यं जीवस्य। अतः सूत्रं **ओं यथा च तक्षोभयथा** । यथा तक्षणः कारयितृनियतत्वं कर्तृत्वं च विद्यते एवं जीवस्यापि

परमात्मरूपकारयितृनियम्यत्वं कर्तृत्वं च विद्यते। न च तदपि कर्तृत्वं स्वसामर्थ्येनैव जीवस्येति मन्तव्यमित्याशंका परिहाराय प्रवृत्तं सूत्रं **ओं परात्तु तच्छ्रुतेः**। सापि कर्तृत्वशक्तिः परमात्मन एव। ''कर्तृत्वं कारणत्वं च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया'' इति पैंगिश्रुतेः।

ननु कर्तृत्वशक्तेरीशाधीनत्वे पुनरीशस्य वैषम्याद्यापन्नमित्यत उक्तं स्मारयितुं सूत्रं **ओं कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः**। विधिनिषेधात्मकशास्त्रवैय्यर्थ्यं आदिपदेन वैषम्यनैर्घृण्यभावाः। जीवस्य कृतपूर्वकर्मप्रयत्नं चापेक्ष्य परमात्मा प्रेरयत्यतो न दोषः। ''पूर्वकर्मप्रयत्नं च संस्कारं चाप्यपेक्ष्य तु। ईश्वरः कारयेत्सर्वं तच्चेश्वरकृतं स्वयम् । अनादीत्वाददोषश्च पूर्णशक्तित्वतो हरेः'' इति भविष्यत्पर्वणि। एतत्तात्पर्यमाह **कर्ता जीवस्तद्वशगः सदा** इति। जीवः कर्त्ता । स च सदा। मोक्षेऽपि कर्तृत्वश्रवणान्न तात्काल्पनिकम् । तथा सदा संसारेप्युपादनात् । शक्त्यभावादपूर्णत्वाच्च तद्वशगस्तद्वत्कर्ता तथा कर्ता जीवस्तद्वशगः। तन्मते क्रियत इतिवत् । कर्मादिकं प्रयत्नश्च तद्वशगः कर्तेति नोक्तविरोध इत्यर्थः **।।१८।।**

ननु तथापि ''अंशा एव हीमे जीवा अंशी हि परमेश्वरः। स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः ।। '' इति गौपवनश्रुतावंशत्वं जीवस्योच्यते। तथा ''नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य । तथा तु यथा योगं फलदः प्रभुरेकराट् । न नियम्य स कस्यापि स सर्वस्य नियामकः।।'' इति भाल्लवेये चानंशत्वप्रतीयतेऽतो विरोध इत्यतः सूत्रं **ओं अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयते एके**।

''मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः ।'' ''यस्तद्वेद स पितुष्पिता सत् यस्ता विजानात्स पितुष्पिताऽसत्'' (म.ना.उ.१-१४) इति । ''द्वा सुपर्णा सयुजा सखाया'' (मु.उ.३-१-१) इत्यादि नानव्यपदेशादंशो जीवः। ''अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशंति पितेति पुत्रेति भ्रातेति सखेति च'' इति पाराशर्यायणश्रुतिः। सम्बन्धित्व-व्यपदेशात्सम्बन्धित्वमेवांशत्वम् । ''अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन। नायं तस्यापि कश्चन'' इति काषायणश्रुतिरन्यथापि वदति। ''ब्रह्म दाशा ब्रह्म कितवा ब्रह्मैवेमे दाशा'' इत्यभेदेनाप्येके शाखिनो अधीयते। वाराहे च ''पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः। बहुधा गीयते वेदैर्जीवोंऽशस्तस्य तेन तु। यतो भेदेन तस्यायमभेदेन च गीयते। अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यत'' इति। तथा च भेदश्रुतिबलात् भेदमंगीकृत्याभेदश्रुत्या अंशत्वमंगीक्रियते तेन भिन्नाभिन्नत्वमेव सिद्धम्। श्रुत्याप्येतमर्थं समर्थयत्सूत्रं **ओं मन्त्रवर्णात्** । ''पादोऽस्य विश्वा भूतानि'' (ऋ.१०-९०-३)इति पादोंशः। स्मृत्याप्येतत्समर्थनार्थं सूत्रं **ओं अपि स्मर्यते**। ''ममैवांशो जीवलोके जीवभूतः सनातनः'' (भ.गी.१५-७)। तर्ह्यनंशत्वश्रुतेः का गतिरित्यत आह

**ओं प्रकाशादिवन्नैवं परः**। अंशत्वेऽपि यथा परो मत्स्यादिरंशस्तदभिन्न : एवं जीवो न भवति किंतु भिन्नांश एव इत्यनंशत्वश्रुतेस्तु तत्परः इत्यर्थः। यथा तेजोंऽशस्य कालाग्नेः खद्योतस्य च नैकप्रकारता । यथा जलांशस्यामृतसमुद्ररूपस्य मूत्रादेश्च। यथा पृथिव्यांशस्य मेरोः विष्टादेश्च तथेत्यर्थः। यद्यप्यत्र भेदाभेदसाम्यमेव कालानलत्वखाद्योतादीनां तथाप्यभिमानिदेवतापेक्षया इयमुक्तिः। विष्टादिष्वपभ्रष्टानामभिमानिनामभिन्नत्वान्मेर्वाद्यभिमानिनां च महाभूताभिमान-देवतांशत्वादिति ।

ननु तत्र तथात्वेऽपि प्रकृते जीवानां मत्स्यादीनां चाभेदः किं न स्यादित्यतः सूत्रं **ओं स्मरंति च**। वराहाद्यवतारान् प्रकृत्या "एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयं" (भा.१-३-२८) इत्यत्र एते वराहाद्याः पुंसः परमपुरुषस्य स्वरूपांशभूताः कलाः अवताराः भगवान्कृष्णो मूलरूपी परमात्मैवेत्युक्तम्। "कृष्णो मुक्तैरिज्यते वीतमोहैः" इति मूलस्वरूपस्यापि श्रुत्यानन्दस्वरूपत्वेन कृष्णशब्दवाच्यत्वात् । तदनन्तरं च जीवानामंशत्वमात्रमुच्यते। "रवयो मनवो देवा मनुपुत्रा महौजसः। कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः।।" इति भागवते । वाराहे च "स्वांशश्चाथो विभिन्नांश इति द्वैधांश इष्यते। अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथा स्थितिः। तदेव नाणुमात्रोऽपि भेदः स्वांशाशिनोः क्वचित् । विभिन्नांशोऽल्पशक्तिः स्यात्किंचित्सादृश्यमात्रयुक्" इति। "नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य" इति च।

अत्रार्थे युक्त्यन्तरं आह **ओं अनुज्ञापरिहारौ देहसम्बन्धाज्योतिरादिवत्** । परानुज्ञया प्रवृत्तिः परतो बंधनिवृत्तिश्च जीवस्य प्रतीयते देहसम्बन्धात् । "य आत्मानमन्तरो यमयति" "तमेवं विद्वानमृत इह भवति" इति श्रुतेः। युज्यते च ज्योतिरादिवत् । आदित्यः वियद्गतः प्रकाशश्च एकप्रकारः । तदंशस्याप्यक्ष्णो देहसम्बन्धान्न तादृशी शक्तिः। तदनुग्राह्यत्वं तेनैव प्रवृत्तिपरिहारश्चेति। युक्त्यन्तरेणाप्येतदर्थप्रतिपादकं सूत्रं **ओं असन्ततेश्चाव्यतिकरः** । बलज्ञानानन्दादीनां खण्डितत्वेनापूर्णत्वान्न जीवरूपांशानां मत्स्याद्यंशैः अव्यतिरेकः साम्यम् । किन्तु वैषम्यमेवेत्यर्थः। उक्तं च चतुर्वेदशिखायां "तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति । तस्य ह वा एतस्य पंचरूपाणि सहस्ररूपाण्यमितरूपाणि । तानि ह वा एतानि सर्वाणि पूर्णानि सर्वाण्यनन्तानि सर्वाण्यसम्मितानि । अथावराः सर्व एव बध्यन्तेऽथ मुच्यन्ते च केचन" इति । युक्त्यन्तरेणाप्येतमर्थं समर्थयत्सूत्रं **ओं आभास एव च**। "रूपं रूपं प्रतिरूपो बभूव" (ऋ.सं.६-४७-१८) इति जीवस्य परमात्मप्रतिबिम्बत्वेन ततोऽत्यन्तभिन्नत्वान्न मत्स्यादिसाम्यमित्यर्थः। वाराहे च

द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः।
प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च।।

प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः।
प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु।। इति।

तस्यैतस्य सर्वस्य तात्पर्यमाह **जीवस्तद्वशगः सदा तदाभासो हरिः सर्वरूपेष्वपि समः सदा** इति। जीवस्य तद्वशत्वात्तदधीनबन्धमोक्षादिमत्वात्तत्प्रतिबिम्बत्वाच्च भिन्नांशत्वाच्च । सर्वमत्स्यादि-रूपेषु तु पूर्णत्वसाम्यान्मत्स्यादिरूपः स हरिरेव इति तेषां स्वरूपांशत्वान्न तत्साम्यं जीवानाम्। अत एव तेषामनंशत्वश्रुतिरप्युपपन्नेति भावः।

ननु जीवानामीश्वरैकप्रतिबिम्बत्वे मिथो वैचित्र्यासम्भवादुक्तमयुक्तमित्यतोऽधिकरणं **ओं अदृष्टानियमात्** । अनाद्यविद्याकर्मादिवैचित्र्यात् विचित्रदेवदानवनरतिर्यगादिरूपं युक्तम्। ''यथाप्रज्ञं हि सम्भवः'' इति श्रुतेः। ननु रागद्वेषादिवैचित्र्यादेव वैचित्र्यमस्तु किमदृष्टवैचित्र्येणैत्यत आह **ओं अभिसन्ध्यादिष्वपि चैवम्** । अभिसन्धिरिच्छाराग इति यावत् । तद्वैचित्र्येऽप्यन्ततो दृष्टवैचित्र्यमेव वक्तव्यमतस्तदेवास्त्विति भावः। तर्हि स्वर्गभूम्याधिप्रदेशस्थितवैचित्र्यमेवास्तु नियामकं सुरनरत्वादौ इत्यत आह **ओं प्रदेशादिति चेन्नान्तर्भावात्** । प्रदेशविशेषस्थितेरपि अदृष्टवैचित्र्यनिबन्धनत्वेन अत्रैव अन्तर्भूतत्वात् तद्वैचित्र्यमेव नियामकमतो बाधकाभावाद्युक्तं प्रतिबिम्बत्वमिति भावः। एतदप्याह **जीवस्तद्वशगः सदा। तदाभासो हरिः सर्वरूपेष्वपि समः सदा** इति। यद्यपि सर्वरूपेषु देवदानवमन्वादिषु बिम्बभूतः हरिः समः एकरूप एव। तथापि जीवस्तदाभास एव। तर्हि कुतो वैचित्र्यमित्यत उक्तं **तद्वशग** इति। तच्छब्दपरोक्षार्थः। तस्य पूर्वकर्मणोऽदृष्टस्य वशे स्थित इत्यर्थः। वैचित्र्याद्वैचित्र्यमिति भावः।।

।। इति नारायणकृतावणुभाष्यप्रपंचने तृतीयेंघ्रिपर्यगमद् द्वितीयाध्यायसंगतः।।

**लिंघेरी – स** नारायणः **अनुत्पत्तिलयः** उत्पत्तिलयरहितः । **कर्ता** जीवः **सदा तद्वशगः** विष्णोर्वशगः। जीवानां तदधीनत्वमाह **तदाभास** इति। **स** जीवः **तदाभासः** नारायणस्य प्रतिबिम्बभूतः । **हरिः** सर्वरूपेष्वपि **समः** समानरूपः।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ।।

**नारायणपण्डित–** असम्भवस्तु सतोऽनुपपत्तेः। नात्मा प्रतीतेर्नित्यत्वाच्च ताभ्य इत्यधिकरणद्वयस्यार्थमाह सोऽनुत्पत्तिलयः कर्तेति। स्वतन्त्रकर्तृत्वाद्विष्णुरुत्पत्तिलयहीन इत्यर्थः। उत्क्रान्तिगत्यागतीनां, व्यतिरेको गंधवच्च तथा च दर्शयति, पृथगुपदेशात्, यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् , पुंस्त्वादिवत्वस्य सतोऽभिव्यक्तियोगात्, कर्ता शास्त्रार्थवत्वात् इति नयषट्कतात्पर्यं कर्ता जीवस्तद्वशगः सदेति। सदा जीवस्तद्वशगः कर्तेत्यन्वयः। अंशो नानाव्यपदेशादन्यथा चापि तु दाशकितवादित्वमधीयत एके अदृष्टानियमात् इत्यधिकरणार्थमाह

जीवस्तद्वशग इत्यादिना । सदा तद्वशगत्वात् तद्वदाभासतीति तदाभासस्तत्प्रतिबिम्ब इत्युपपद्यते। यद्यपि हरिः सर्वरूपेषु समः समानऐश्वर्यादिमान् तथापि तत्प्रतिबिम्बरूपाभासो जीवो अदृष्टवैचित्र्यात्सुरासुरादिविचित्ररूप इत्यर्थः। **अधिकरणानि १९ सूत्राणि ५३।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ।।**

**गूढकर्तृक –** असम्भवस्तु १, नात्मा २ इत्यधिकरणद्वयार्थः **सोऽनुत्पत्तिलयः।** स्वतन्त्र-कर्तृत्वाद्विष्णुरुत्पत्तिलयहीन इत्यर्थः। उत्क्रान्तिः१, व्यतिरेकः२, पृथक् ३, यावत् ४, पुंस्त्वादि ५, कर्ता ६ इत्यधिकरणषट्तात्पर्यं **कर्ता जीवः तद्वशगः सदा** इति। सदा तद्वशगो जीवः कर्तेत्यन्वयः। अंशो १, अदृष्ट २ इत्यधिकरणद्वयार्थः **जीवस्तद्वशगस्तदा। तदाभासो हरिःसर्वरूपेष्वपि समः सदा** इति। सदा तद्वशगत्वात्तद्वदाभासतीति तदाभासः। तत्प्रतिबिम्ब इत्युच्यते जीवः। यद्यपि हरिः सर्वरूपेषु मत्स्यादिषु समः समानैश्वर्यमान् । तथापि तत्प्रतिबिम्बरूपाभासो जीवः अदृष्टवैचित्र्यात् सुरासुरादिविचित्ररूपः इत्यर्थः।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ।।**

**अणुभाष्यम्**

**मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः।**
**मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा ।।८।।**

**सत्यनाथीया–** तथा प्राणाः, तत्प्राक्श्रुतेश्च, तत्पूर्वकत्वाद्वाचः, सप्त गतेर्विशेषितत्वात्, अणवश्च, श्रेष्ठश्चेति षण्नयार्थमाह **मुख्यप्राणश्च** इति। इन्द्रियाणि तदुद्भवानि विष्णोरेवोत्पत्ति-मन्ति। मुख्यप्राणश्च तदुद्भवः। संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादित्यस्यार्थमाह **देहश्चैव तदुद्भव** इति। देहादिलक्षणं नामरूपात्मकप्रपंचोऽपि विष्णूद्भव एव। चक्षुरादिवत्तु सहशिष्ट्यादिभ्य इत्यस्यार्थमाह **मुख्यप्राणवशे इति।** सर्वं जगत्सदा मुख्यप्राणवशे । तन्मुख्यप्राणस्सदा विष्णोर्वशगः।

**तत्वमञ्जरी–** नन्वेवं कतिपयश्रुत्यविरोधेऽपि श्रुतिस्मृत्युदितयुक्तिसहितश्रुतिविरोधस्तु प्रागुक्तसमन्वयसिद्धगुणानां स्यादित्यतः प्राप्तः चतुर्थः पादः। तदर्थमाह – **उक्ता गुणश्चाविरुद्धाः तस्य वेदेन सर्वशः** इत्यग्रेतनार्धेन अत्राप्याकृष्टेन न केवलं कतिपयश्रुत्यविरोधोऽपि किन्तु सर्वशः सर्वेण श्रुत्याद्युपात्तयुक्तिसहितेनापि वेदेनाविरुद्धाः उक्ताः प्रतिपादिताः सूत्रकृता अस्मिन् पाद इत्यर्थः।

तथा हि श्रुतिमसन्वयेन यत्सर्वकर्तृत्वादिगुणो हरिरित्युक्तं, तदयुक्तम् । "यत्प्राप्तिः यत्परित्यागः" इति (वायुप्रोक्त)स्मृत्युक्तसर्वजन्मस्मृतिहेतुत्वयुक्त्युपेतया "नैष प्राण उदेति" इति प्राणानुत्पत्तिश्रुत्या

"आत्मन एषो प्राणो जायते" (प्र.उ.३-३)इति प्राणोत्पत्तिश्रुतेरप्रमाणत्वादित्यतः प्राप्तम् - **श्रेष्ठश्च** इति सूत्रद्वययुक्तं षष्ठमधिकरणम् । तदर्थमाह - **मुख्यप्राणश्च** इति। तदुद्भव इति अत्राप्याकृष्यते। चशब्दोऽप्यर्थः सन् तेनाप्यन्वेति । तच्छब्दः पूर्वप्रकृतजीवेश्वरयोः परामर्शकः। तदुद्भवश्च तस्य जीवराशेः उद्भवो जन्म । उपलक्षणमेतत् । मृतिश्च यस्मात्स इति व्युत्पत्त्या सर्वजनिमृतिहेतुरपि । मुख्यप्राणश्च तदुद्भव तस्मात्प्रकृतहरेः सकाशात् उद्भवो जन्म यस्येति व्युत्पत्त्या भगवदधीनोत्पत्तिमानित्यर्थः। न केवलं "एतेन मातरिश्वा" इत्यत्रोक्तो बाह्यो मुख्यवायुः किन्तु आध्यात्मिकप्राणरूप्यपीति वा वक्ष्यमाणेन्द्रियापेक्षया वा समुच्चये चशब्दः। तेन "एतेन मातरिश्वा व्याख्यातः" इत्यनेन अपौनरुक्त्यं सूचितम् । अत्र उद्भववानित्येव पूर्ती अत्र पुनर्विप्रतिपत्त्यभावेन कारणत्वस्य सूत्रकृता विचारात् सिद्धवत्कृत्य तदुद्भव इत्युक्तम् । तदुत्पत्तिः पराधीनविशेषवाप्तिरिति सूचयितुं वा। तेन "सौक्ष्म्येण वा एषोऽवतिष्ठते स्थूलत्वेनोदेति" इति श्रुत्युक्तदिशा अनुत्पत्तिश्रुतिः स्वरूपपरा । जन्मश्रुतिः शरीरपरेति व्यवस्था सूचिता । प्राण इत्येव पूर्तौ मुख्यप्राण इत्युक्त्या मुख्यप्राणः परस्माच्च इति स्मृत्यादिसिद्धहरेः मुख्यप्राणजन्मेति सूचितम् । तेन "यत्प्राप्तिः यत्परित्यागः" इत्याद्युक्तमाहात्म्यवतोऽपि ततोऽप्यतिमहतो हरेरुत्पत्त्युक्त्या युक्तिविरोधोप्यपोऽढः। तदुक्तं न्यायविवरणे - "महत्त्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट् । किं नाम न सृजेदेष येन शक्त्येदमावृतम्।। इति श्रुतेः ततोऽपि महात्म्याद्विष्णोरिति।"

नन्वथापि "सर्वे वा एते मुख्यदासाः" (कौण्डिण्य)इति, "मुख्यस्यैव रूपाणि प्राणाद्याः" (गौपवन)इति च श्रुत्योः प्राणापानव्यानोदानसमानशब्दितपञ्चवायूनां मुख्यप्राणदासत्वतत्स्वरूपत्वबोधिकयोः प्राणापानादयः सर्वे इति स्मत्युक्तमुख्यप्राणाज्ञाधीनत्वयुक्त्या, "पायूपस्थे अपानं चक्षुश्श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते। मध्ये तु समान एष ह्येतद्धुतमन्नं समं नयति" इत्यादिश्रुत्युक्तव्यक्तसद्गुणत्वयुक्त्या चोपेतयोः तुल्यबलयोर्विरुद्धत्वेनाप्रामाण्ये प्रागुक्तसमन्वयायोग इत्यतः प्राप्तम् - **पञ्चवृत्तिर्मनोवद् व्यपदिश्यत** इत्यष्टममधिकरणम् । तस्याप्यर्थः - **मुख्यप्राण** इति।

प्राणशब्दोऽत्र "य एष प्राण इतरान् प्राणान्" इत्यत्रेव प्राणापानव्यानोदानसमानाख्यपञ्चवायुपरः तन्त्रेण वर्गद्वयवाची । एवञ्च मुख्याः प्रधानाः स्वरूपभूता इति यावत् । प्राणशब्दिताः प्राणापानादयः पञ्चवायवो यस्य स इति। तथा मुखे प्रधाने, "मणिर्मुखं प्रधानश्चेत्युत्तमस्य वचो भवेत् ।" इति बृहद्भाष्योक्तेः। भवा मुख्याः । प्रधानवायावुत्पन्ना इति यावत् । प्रधानवायुदासभूताः प्राणाः प्राणशब्दिताः पञ्चवायवो यस्य स इति च। मुख्यप्राण इत्यर्थः। अत एव प्राण इति वा श्रेष्ठइति वा निर्देशमकृत्वा मुख्यप्राण इति निरदिक्षत् । स्वरूपभूतप्राणादिपञ्चकान् दासभूतप्राणादिपञ्चकवांश्च मुख्यप्राणस्तदुद्भव इत्यन्वयेन च वर्गद्वयस्यापि "तेजोऽतस्तथा ह्याह" इत्युक्तन्यायेन ईश्वरादेव जन्मेत्यपि सूचयितुमेवं निर्देशः। अन्यथा पृथगेव तदर्थमवक्ष्यत् ।।८।।

जीवस्तद्वशग इत्यादिना । सदा तद्वशगत्वात् तद्वदाभासतीति तदाभासस्तत्प्रतिबिम्ब इत्युपपद्यते। यद्यपि हरिः सर्वरूपेषु समः समानऐश्वर्यादिमान् तथापि तत्प्रतिबिम्बरूपाभासो जीवो अदृष्टवैचित्र्यात्सुरासुरादिविचित्ररूप इत्यर्थः। **अधिकरणानि १९ सूत्राणि ५३।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ।।**

**गूढकर्तृक –** असम्भवस्तु १, नात्मा २ इत्यधिकरणद्वयार्थः **सोऽनुत्पत्तिलयः।** स्वतन्त्र-कर्तृत्वाद्विष्णुरुत्पत्तिलयहीन इत्यर्थः। उत्क्रान्तिः१, व्यतिरेकः२, पृथक् ३, यावत् ४, पुंस्त्वादि ५, कर्ता ६ इत्यधिकरणषट्तात्पर्यं **कर्ता जीवः तद्वशगः सदा** इति। सदा तद्वशगो जीवः कर्तेत्यन्वयः। अंशो १, अदृष्ट २ इत्यधिकरणद्वयार्थः **जीवस्तद्वशगस्तदा। तदाभासो हरि:सर्वरूपेष्वपि समः सदा** इति। सदा तद्वशगत्वात्तद्वदाभासतीति तदाभासः। तत्प्रतिबिम्ब इत्युच्यते जीवः। यद्यपि हरिः सर्वरूपेषु मत्स्यादिषु समः समानैश्वर्यमान् । तथापि तत्प्रतिबिम्बरूपाभासो जीवः अदृष्टवैचित्र्यात् सुरासुरादिविचित्ररूपः इत्यर्थः।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ।।**

**अणुभाष्यम्**

**मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः।**
**मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा ।।८।।**

**सत्यनाथीया–** तथा प्राणाः, तत्प्राक्श्रुतेश्च, तत्पूर्वकत्वाद्वाचः, सप्त गतेर्विशेषितत्वात्, अणवश्च, श्रेष्ठश्चेति षण्नयार्थमाह **मुख्यप्राणश्च** इति। इन्द्रियाणि तदुद्भवानि विष्णोरेवोत्पत्ति-मन्ति। मुख्यप्राणश्च तदुद्भवः। संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादित्यस्यार्थमाह **देहश्चैव तदुद्भव** इति। देहादिलक्षणं नामरूपात्मकप्रपंचोऽपि विष्णूद्भव एव। चक्षुरादिवत्तु सहशिष्ट्यादिभ्य इत्यस्यार्थमाह **मुख्यप्राणवशे इति।** सर्वं जगत्सदा मुख्यप्राणवशे । तन्मुख्यप्राणस्सदा विष्णोर्वशगः।

**तत्वमञ्जरी–** नन्वेवं कतिपयश्रुत्यविरोधेऽपि श्रुतिस्मृत्युदितयुक्तिसहितश्रुतिविरोधस्तु प्रागुक्तसमन्वयसिद्धगुणानां स्यादित्यतः प्राप्तः चतुर्थः पादः। तदर्थमाह - **उक्ता गुणश्चाविरुद्धाः तस्य वेदेन सर्वशः** इत्यग्रेतनार्धेन अत्राप्याकृष्टेन न केवलं कतिपयश्रुत्यविरोधोऽपि किन्तु सर्वशः सर्वेण श्रुत्याद्युपात्तयुक्तिसहितेनापि वेदेनाविरुद्धाः उक्ताः प्रतिपादिताः सूत्रकृता अस्मिन् पाद इत्यर्थः।

तथा हि श्रुतिमसन्वयेन यत्सर्वकर्तृत्वादिगुणो हरिरित्युक्तं, तदयुक्तम् । "यत्प्राप्तिः यत्परित्यागः" इति (वायुप्रोक्त)स्मृत्युक्तसर्वजन्मस्मृतिहेतुत्वयुक्त्युपेतया "नैष प्राण उदेति" इति प्राणानुत्पत्तिश्रुत्या

''आत्मन एषो प्राणो जायते'' (प्र.उ.३-३)इति प्राणोत्पत्तिश्रुतेरप्रमाणत्वादित्यतः प्राप्तम् - **श्रेष्ठश्च** इति सूत्रद्वययुक्तं षष्ठमधिकरणम् । तदर्थमाह - **मुख्यप्राणश्च** इति। तदुद्भव इति अत्राप्याकृष्यते। चशब्दोऽप्यर्थः सन् तेनाप्यन्वेति । तच्छब्दः पूर्वप्रकृतजीवेश्वरयोः परामर्शकः। तदुद्भवश्च तस्य जीवराशेः उद्भवो जन्म । उपलक्षणमेतत् । मृतिश्च यस्मात्स इति व्युत्पत्त्या सर्वजनिमृतिहेतुरपि । मुख्यप्राणश्च तदुद्भव तस्मात्प्रकृतहरेः सकाशात् उद्भवो जन्म यस्येति व्युत्पत्त्या भगवदधीनोत्पत्तिमानित्यर्थः। न केवलं ''एतेन मातरिश्वा'' इत्यत्रोक्तो बाह्यो मुख्यवायुः किन्तु आध्यात्मिकप्राणरूप्यपीति वा वक्ष्यमाणेन्द्रियापेक्षया वा समुच्चये चशब्दः। तेन ''एतेन मातरिश्वा व्याख्यातः'' इत्यनेन अपौनरुक्त्यं सूचितम् । अत्र उद्भववानित्येव पूर्ती अत्र पुनर्विप्रतिपत्त्यभावेन कारणत्वस्य सूत्रकृता विचारात् सिद्धवत्कृत्य तदुद्भव इत्युक्तम् । तदुत्पत्तिः पराधीनविशेषवाप्तिरिति सूचयितुं वा। तेन ''**सौक्ष्म्येण वा एषोऽवतिष्ठते स्थूलत्वेनोदेति**'' इति श्रुत्युक्तदिशा अनुत्पत्तिश्रुतिः स्वरूपपरा । जन्मश्रुतिः शरीरपरेति व्यवस्था सूचिता । प्राण इत्येव पूर्तौ मुख्यप्राण इत्युक्त्या मुख्यप्राणः परस्माच्च इति स्मृत्यादिसिद्धहरेः मुख्यप्राणजन्मेति सूचितम् । तेन ''यत्प्राप्तिः यत्परित्यागः'' इत्याद्युक्तमाहात्म्यवतोऽपि ततोऽप्यतिमहतो हरेरुत्पत्त्युक्त्या युक्तिविरोधोप्यपोऽढः। तदुक्तं न्यायविवरणे - ''महत्त्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट् । किं नाम न सृजेदेष येन शक्त्येदमावृतम्।। इति श्रुतेः ततोऽपि महात्म्याद्विष्णोरिति।''

नन्वथापि ''सर्वे वा एते मुख्यदासाः'' (कौण्डिण्य)इति, ''मुख्यस्यैव रूपाणि प्राणाद्याः'' (गौपवन)इति च श्रुत्योः प्राणापानव्यानोदानसमानशब्दितपञ्चवायूनां मुख्यप्राणदासत्वतत्स्वरूपत्वबोधिकयोः प्राणापानादयः सर्वे इति स्मत्युक्तमुख्यप्राणाज्ञाधीनत्वयुक्त्या, ''पायूपस्थे अपानं चक्षुश्श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते। मध्ये तु समान एष ह्येतद्धुतमन्न समं नयति'' इत्यादिश्रुत्युक्तव्यक्तसद्गुणत्वयुक्त्या चोपेतयोः तुल्यबलयोर्विरुद्धत्वेनाप्रामाण्ये प्रागुक्तसमन्वयायोग इत्यतः प्राप्तम् - **पञ्चवृत्तिर्मनोवद् व्यपदिश्यत** इत्यष्टममधिकरणम् । तस्याप्यर्थः - **मुख्यप्राण** इति।

प्राणशब्दोऽत्र ''य एष प्राण इतरान् प्राणान्'' इत्यत्रेव प्राणापानव्यानोदानसमानाख्यपञ्चवायुपरः तन्त्रेण वर्गद्वयवाची । एवञ्च मुख्याः प्रधानाः स्वरूपभूता इति यावत् । प्राणशब्दिताः प्राणापानादयः पञ्चवायवो यस्य स इति। तथा मुखे प्रधाने, ''मणिर्मुखं प्रधानश्चेत्युत्तमस्य वचो भवेत् ।'' इति बृहद्भाष्योक्तेः। भवा मुख्याः । प्रधानवायावुत्पन्ना इति यावत् । प्रधानवायुदासभूताः प्राणाः प्राणशब्दिताः पञ्चवायवो यस्य स इति च। मुख्यप्राण इत्यर्थः। अत एव प्राण इति वा श्रेष्ठइति वा निर्देशमकृत्वा मुख्यप्राण इति निरदिक्षत् । स्वरूपभूतप्राणादिपञ्चकान् दासभूतप्राणादिपञ्चकवांश्च मुख्यप्राणस्तदुद्भव इत्यन्वयेन च वर्गद्वयस्यापि ''तेजोऽतस्तथा ह्याह'' इत्युक्तन्यायेन ईश्वरादेव जन्मेत्यपि सूचयितुमेवं निर्देशः। अन्यथा पृथगेव तदर्थमवक्ष्यत् ।।८।।

नन्वथापि "प्राण एवाधस्तात्" इति प्राणव्याप्तिपरश्रुत्या "यतः सर्वं जगद्व्याप्तं" इति स्मृत्युक्तजगद्धारकत्वयुक्त्युपेतया "प्राणोऽणुः" इति श्रुतेरमानत्वे प्रागुक्तसमन्वयायोगः इत्यतः प्राप्तम् – **अणुश्च** इति नवमाधिकरणम् । तदर्थः – **मुख्यप्राणश्च** इति । प्रकृष्टमननं चेष्टा यस्येति प्राणः। अन चेष्टायामिति धातोः भावे घञ् । मुख्यश्चासौ प्राणश्चेति प्रकृष्टचेष्टाख्यक्रियावान् मुख्यप्राण इत्यर्थः। तथा च उत्क्रान्तिगत्यागतीनामित्युक्तन्यायेन उत्क्रान्त्यादिक्रियावत्त्वादणुरित्यर्थः। चशब्दात् व्याप्तेश्चेति समुच्चीयते। "अन्तर्वाणुः बहिर्महीयान्" इति श्रुत्या देहान्तः प्राणरूपेणाणुत्वस्य बहिः मुख्यवायुरूपेण व्याप्तत्वस्यावगमादिति भावः। प्राण इत्येव पूर्तौ मुख्यप्राण इत्युक्तिः "अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिः ।" इति न्यायविवरणोक्तश्रुतिसूचनाय। श्रेष्ठोऽणुरित्येव वाच्ये यौगिकप्राणशब्दोक्तिः उत्क्रान्तिसूत्रोक्तन्यायस्मारणार्था। तथा च प्राणाणुत्वश्रुतेरपि सयुक्तिकत्वान्न व्याप्तिश्रुतिबाधेनाप्रामाण्यमिति भावः ।।९।।

नन्वथापि "नोपादानं हीन्द्रियाणां" इति स्मृत्युक्तनिरुपादनत्वयुक्त्युपेतया प्राणा एवानादयः इतीन्द्रियाणामनुत्पत्तिश्रुत्या तथा "नित्यं मनोऽनादित्वात्, न ह्यमनाः पुमांस्तिष्ठति" इति सयुक्तिकमनोनुत्पत्तिश्रुत्या तथा "वाग्वा नित्या न ह्येषोत्पद्यते स्यां श्रुतिरवतिष्ठते" इति अनादिनित्यश्रुत्याश्रयत्वयुक्त्युपेतया वागिन्द्रियानुत्पत्तिश्रुत्या च "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति सर्वेन्द्रियोत्पत्तिश्रुतेः विरुद्धत्वेनाप्रामाण्ये प्रागुक्तसमन्वयायोग इत्यतः प्राप्तानि – **तथा प्राणाः, तत्प्राक् श्रुतेश्च , तत्पूर्वकत्वाद्वाचः** इति त्रीण्यधिकरणानि । तेषामर्थः – **इन्द्रियाणि** इति । तदुद्भवानीति विपरिणम्यान्वेति । बहुवचनेन वाङ्मनसयोरपि ग्रहः। मनःप्रभृतिसर्वाण्यपीन्द्रियाणि हर्यधीनोत्पत्तिमन्तीत्यर्थः। अत्रोत्पत्तिमन्तीत्येव वाच्ये तदित्युक्ति-रुक्ताभिप्राया। तेनेन्द्रियाणामनुत्पत्तिश्रुतिः सूक्ष्मरूपपरा जन्मश्रुतिस्तु उपचयपरेति व्यवस्था सूचिता। "नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः। तेषां भूतैरुपचयः सृष्टिकाले विधीयते।" इत्यादेः मनःप्रभृतेरल्पोपयादिना नित्यत्वोक्त्युपपत्तेरिति नयद्वयस्य विशेषशंकानिरसने प्राणनयोक्तार्थ-मात्रसमर्थनपरत्वद्योतनाय वा वाङ्मनसयोरपि सह निर्देशः कृतः ।।**१–३**।।

नन्वथापि "सप्तप्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः" इति, "द्वादश एते प्राणा द्वादश मासाः" इति इन्द्रियाणां सङ्ख्याविषयश्रुत्योरभिमन्यमानयोः समसङ्ख्यानियमेन अभिमानिनां सप्तत्वद्वादशत्वरूपसङ्ख्यावत्त्वेन अभिमन्यमानेन्द्रियाणामपि तथात्वमिति युक्तेरुभयत्र तुल्यबलयोर्द्वयोरपि विरुद्धत्वेनाप्रामाण्यप्राप्तेरित्यतः प्राप्तम् – **सप्तगतेः** इत्यादिसूत्रद्वयम् । तस्याप्यर्थः इन्द्रियाणीत्युक्त्या संगृहीतः। "श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम् । मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु ।" इत्युक्तदिशा मनोबुद्धिसाहित्येन श्रोत्रादिपञ्चकस्य सप्तत्वेन "सप्तप्राणाः" इति श्रुतेः द्वादशेत्युक्त्या "द्वादश वा" इति श्रुतेश्चोपपत्तेः सूचनात् । अन्यथा प्राणा इत्येव ब्रूयादिति ।।४।।

नन्वथापि दूरश्रवणदर्शनादियुक्त्युपेतया "दिवीव चक्षुराततं" इतीन्द्रियव्याप्तिश्रुत्या "प्राणा वा अणवः" इति तदणुत्वश्रुतेर्विरुद्धत्वेन अप्रामाण्यं स्यादित्यतः प्राप्तम् - **अणवश्च** इति । तस्याप्यर्थः इन्द्रियाणीत्युक्त्यैव संगृहीतः। "विषयद्रवणात्तेषां इन्द्रियत्वमुदाहृतम्" इत्युक्तदिशा द्रवणरूपक्रियावत्त्वेनाणुत्वस्य ध्रुवादिपर्यन्तं द्रवणोक्त्या तेजसा व्याप्तत्वस्य च सूचनेन इन्द्रियाणुत्वानणुत्वश्रुत्योरविरोधसूचनादिति ।

अत्र सूत्रेषु तारतम्यक्रमानुरोधेन इन्द्रियाणां विचारानन्तरं सर्वेन्द्रियप्रेरकस्य मुख्यप्राणस्य विचार इति भावेन तस्याभ्यर्हितत्वं सूचयितुं भाष्ये क्रमोल्लङ्घनम् ॥५॥

नन्वथापि "जीवस्य करणान्याहुः प्राणान्" इतीन्द्रियाणां जीवकरणत्वश्रुत्या जीववशत्वेनानुभवात् जीवकरणानीति युक्त्युपेतया विरुद्धत्वेन "ब्रह्मणो वा एतानि करणानि" इति ब्रह्मकरणत्वश्रुतेरमानत्वे प्रागुक्तसमन्वयायोग इत्यतः प्राप्तम् - **ज्योतिराद्यधिष्ठानं तु** इत्यादिसूत्रत्रयोपेतं दशमाधिकरणम् । तस्याप्यर्थः। **इन्द्रियाणि तदुद्भवानि** इति ।

सूक्ष्मरूपेण नित्यानीन्द्रियाणि सृष्टिकाले भूतैरुपचयरूपेशाधीनोत्पत्तिमन्तीत्युक्त्या सर्वभूत-प्रेरकेश्वरप्रयोज्यत्वस्य भूतकार्येन्द्रियाणां सूचनेन ब्रह्मकरणत्वस्य, जीवकरणत्वश्रुतेः जीवेन्द्रिय-सम्बन्धस्य बहुकालीनपरत्वस्य च सूचनात् । अन्यथा इन्द्रियाण्युत्पत्तिमन्तीत्येव ब्रूयात् । तदिति नावक्ष्यत्। अत्र तत्प्रयोज्यानीन्द्रियाणीत्येव वाच्ये तदुद्भवानीत्युक्तिः भूतप्रेरकत्वादीश्वरस्य तत्कार्येन्द्रियाणीत्येव वाच्ये तदुद्भवानीत्युक्तिः भूतप्रेरकत्वादीश्वरस्य तत्कार्येन्द्रियप्रयोजकत्वं न्याय्यमिति ज्योतिराद्यधिष्ठानमिति सूत्रांशसूचितयुक्तिसूचनार्था। यद्वा, तेनेशेन उद्भवः कार्याभिमुख्यं येषां तानि तदुद्भावानि, तत्प्रयोज्यानीत्यर्थः ॥१०॥

नन्वथापि "प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति" (गौपवन)इति सामान्यतो मुख्यप्राण-तदन्यप्राणमात्रेन्द्रियत्वश्रुत्या विषयद्रवणरूपयुक्त्युपेतया "द्वादशैवेन्द्रियाण्याहुः मनोबुद्धी तु द्वादश ।" इति (काषायण) श्रुतेर्विरुद्धत्वेनामानत्वं स्यादित्यतः प्राप्तम् - **त इन्द्रियाणि तद्व्यपदेशात्** इत्यादिसूत्रत्रयात्मकैकादशाधिकरणम् । तस्याप्यर्थः - **मुख्यप्राणश्चेन्द्रियाणि** इति मुख्यप्राण-स्येन्द्रियाणां च पार्थक्येन निर्देशात्संगृहीतः।

तेन मुख्यप्राणस्यानिन्द्रियत्वं तदन्येषामिन्द्रियत्वमित्यर्थस्य सूचनेन "द्वादशैव" इति श्रुतेः मुख्यप्राणादन्यप्राणानां द्वादशत्वेन तत्परत्वस्य "प्राणा वा इन्द्रियाणि" इति सामान्यश्रुतेः "द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् ।" इति (पौत्रायण) विशेषश्रुत्यनुरोधेन मुख्यप्राणेतरप्रमापरत्वस्य च सूचनात् । अत एव प्राणा इत्यनुक्त्वा इन्द्रियाणीत्युक्तिः। एवं सप्ताधिकरण्या इन्द्रियविषयत्वद्योतनाय इन्द्रियाणीत्युक्त्या सप्तनयार्थमपि समक्षिपत् । केचित्तु प्रागुक्तसर्वकर्तृत्वसिद्ध्यर्थं इतरानादित्वशङ्कानिरासेन तदुत्पत्तिसमर्थनपरप्रदानाधिकरणप्रमेयस्यैवात्र

संक्षेपः कृतो नत्ववान्तराधिकरणप्रमेयस्यापि । अनुभाष्येऽपि किञ्चिन्निरूपणस्य दर्शनादित्याहुः ।।११।।

नन्वथापि ''यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते'' इति (ब्रह्म.पु)स्मृत्युक्तविरिञ्चत्वयुक्ति-युक्तया। ''विरिञ्चो वा इदं सर्वं विरेचयति'' (गौपवन)इति विरिञ्चस्य देहादिकर्तृत्वश्रुत्या, ''परमाद् ध्येते नामरूपे व्याक्रियेते'' (आग्निवेश्य) इति हरेः तत्कर्तृत्वश्रुतेर्विरुद्धत्वेन अमानत्वं स्यादित्यतः प्राप्तम् – **संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्** इति द्वादशमधिकरणम् । तदर्थमाह – **देहश्चैव तदुद्भव** इति । देह इत्युपलक्षणम् । नामरूपात्मकदेहादिप्रपञ्चश्च न केवलं मुख्यप्राण इति चार्थः। तदुद्भव एव न विरिञ्चोद्भव इत्येवकारार्थः। विरिञ्चकर्तृकत्वश्रुतिस्तु ''ब्रह्माद्यास्तदवान्तराः'' इति स्मृत्यावान्तरकर्तृत्वपरेति भावः।

अस्याधिकरणस्योपान्त्यत्वेऽपि उत्पत्तिमत्त्वरूपैकार्थपरत्वद्योतनाय क्रमोल्लङ्घनम् । अत्रेशसम्भव इत्याद्यनुक्त्वा तदिति तत्पदप्रयोगेण ''सेयं देवता इमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतमेकैकामकरोत्'' इत्यादिश्रुतौ त्रिवृत्कर्तृत्वेन प्रसिद्धस्य परामर्शमपि सूचयति। तेन रूपादिसृष्टेः त्रिवत्करणसापेक्षत्वात् तत्कर्तुरेव देहादिकर्तृत्वमिति युक्तिः सूचिता ।।१२।।

नन्वथापि ''आपो वा मांसमापः शरीरं'' (कौण्डिण्य)इति, ''पृथिवीं शरीरमप्येति'' इति, ''सोऽग्नेः देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति'' इति च श्रुतिभिः प्रत्येकं शरीरस्याप्यत्वपार्थिवत्वतैजसत्वमात्रप्रापिकाभिः क्रमेण तत्प्रापककठिनत्वादिरूपयुक्त्युपेताभिः देहस्यैकैकभूतमात्रकार्यत्वप्राप्तेः इच्छयैकपक्षाङ्गीकारे चान्यपक्षद्वयप्रापकसयुक्तिकश्रुतिद्वयस्य, भूतत्रयकार्यत्वे च आपः शरीरमित्यादिविशेषोक्त्ययोगेन ''इमास्तिस्रो देवताः पुरुषं प्राप्य'' इति भूतत्रयात्मकत्वश्रुतेश्च अप्रामाण्यादित्यतः प्राप्तम् – **मांसादि भौमम्** इत्यादिसूत्रद्वयात्मक-मन्तिमाधिकरणम् । तस्याप्यर्थमाह – **देहश्चैव तदुद्भव** इति।

प्रागुक्तदिशा त्रिवृत्पदसन्निधापितं वा, इन्द्रियोपचयहेतुत्वेन सन्निधापितं वा पृथिव्यप्तेजोरूपभूतत्रयं तदिति परामृश्यते। देहश्च तदुद्भव एव। भूतत्रयजन्य एव। नत्वेकैकमात्रजन्य इत्येवकारार्थः। अत्र तदुद्भव इत्युक्त्या यस्मिन् देहे यस्य भूतस्योद्भूतिः विषयसंयोगोस्ति तन्निमित्तो विशेषव्यपदेश इति सूचनादापः शरीरमित्यादिविशेषश्रुतिगतिर्दर्शिता ।।१३।।

नन्वथापि ''यदाश्रयादस्य चेष्टा'' इति भारतोक्ताखिलचेष्टकत्वरूपमाहात्म्यवत्त्वात्प्राणः स्वतन्त्रः इति युक्त्युपेतया ''न प्राणः किञ्चिदाश्रितः'' (आग्निवेश्य)इति प्राणस्वातन्त्र्यश्रुत्या ''प्राणः परवशे स्थितः'' (पैङ्गी)इति प्राणपारतन्त्र्यश्रुतेः विरुद्धत्वेनाप्रमाण्यं स्यादित्यतः प्राप्तम् – **चक्षुरादिवत्** इत्यादिसूत्रद्वयात्मकं सप्तममधिकरणम् । तदर्थं भाषते – **मुख्यप्राणवशे सर्वं स विष्णोर्वशगः**

**सदा** इति। सर्वं रुद्रादिजगत् स मुख्यप्राणः। अत्र मुख्यप्राणः विष्णोर्वशग इत्येव पूर्तौ मुख्यप्राणवशे सर्वमित्युक्तिः। प्राणस्वातन्त्र्यश्रुत्यादेः अवान्तरेश्वरानन्येश्वरपरत्वरूपगतिसूचनाय । अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् । "अनन्येश्वरता प्राणे तदन्येश्वरवर्जनात्" इत्यादेः।

तथा च चक्षुरादेरिव मुख्यप्राणस्यापि ईशवशत्वेऽवान्तरेश्वरत्वमपि न स्यात् तद्वदेवेति शङ्काव्युदासाय च तत्राकरणत्वरूपयुक्तिसूचनाय मुख्यप्राणवश इति मुख्यप्राणपदप्रयोगः। "तानि ह वा सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान्मुख्य इत्याचक्षते" इति (माण्डव्य)श्रुतेः।

अत्र सर्वदा विष्णुवशगो न कदाचिदन्यथेत्युक्त्या उत्पत्ताविव पारतन्त्र्येऽप्यस्तु काचिद्व्यवस्थेति निरस्तम्।

मुख्यप्राणः तदुद्भवः इत्युक्त्यैव विष्णुवश इत्यस्य लाभो यद्यपि । तथापीह प्राणस्वातन्त्र्यश्रुत्यादिबलात् श्रेष्ठश्चेत्यत्रोक्तप्राणोत्पत्तिरयुक्तेति शङ्कायां "प्राणस्यैतत् वशे सर्वं" इति विशेषवाक्येन सामान्यस्वातन्त्र्यश्रुत्यादेः नेयत्वादिति परिहारार्थत्वादस्याधिकरणस्यापौनरुक्त्यं ध्येयम्। अत एव व्यवधानेनास्य भाषणम् ॥७॥

**आनन्दमाला** – युक्तिसहिताभिः श्रुतिभिर्विरोधं श्रुतीनामपाकरोत्यस्मिन्पादे।

"तथः प्राणाः" (२-४-१) "तत्प्राक् श्रुतेश्च" (२-४-४) " तत्पूर्वकत्वाद् वाचः" (२-४-५) "श्रेष्ठश्च"(२-४-९) "सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्"(२-४-२१) इत्याद्यधिकरणानि व्याख्याति – **मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः** इति। मुख्यप्राणादयः सर्वेऽपि तत एव सर्वेश्वराद् विष्णोरुद्भविनो निर्णीयन्ते। उद्भवश्रुतियुक्तीनामेव बहुत्वादिना बलवत्त्वान्मुख्यार्थतोपपत्तेः। अनादित्वश्रुतियुक्तीनामल्पत्वादिना दुर्बलत्वाद् गौणार्थत्वोपपत्तेश्च।

अत्र तावत् सर्वजन्तूनामिन्द्रियाणि मनोवाक्पूर्वाणि, तन्नियन्ता मुख्यप्राणश्च, तेषामेतैरभोगस्यायतनं देहश्चेत्येतेषां विष्णोरेवोद्भव इति ह्युक्तम् । ये पुनरेतेषां विशेषा इष्यन्ते ते चात्र चशब्दाभ्यां संगृह्यन्ते। तथा हि – श्रोत्रादिप्राणानामिदं विषयं प्रति द्रवणादिन्द्रियत्वम्, ज्ञानेन्द्रियत्वेन सप्तत्वम्, तेषामेव कर्मेन्द्रियसाहित्येन द्वादशत्वं , स्वरूपतोऽणुत्वं , प्रकाशतो व्याप्तत्वं, गुणतो जीवाधीनत्वम् मुख्यतो मुख्यप्राणाधीनत्वम् , परममुख्यतो विष्ण्वधीनत्वं च, अथ मुख्यप्राणस्य त्वनिन्द्रियत्वम्, तन्नियन्तृत्वम्, अन्तरणुत्वम्, बहिर्महत्वं चेत्यादयः प्राणविशेषाः प्रथमचकारसंगृहीताः। अथ मांसादेर्देहावयवस्य भौमत्वम्, लोहितादेराप्यत्वम्, मज्जादेस्तैजसत्वमित्यादयो देहविशेषाश्चरमचकारसंगृहीताः ॥१–६॥१०–१३॥

"पञ्चवृत्तिर्मनोवद् व्यपदिश्यते" (२-४-१३) "अणुश्च" (२-४-१४) इत्यधिकरणे। **मुख्यप्राणवशे सर्वम्** इति। प्राणगणाधिपतिः प्रधानवायुर्हि मुख्यप्राणो नाम। स तावत्

प्राणापानादिनामवद्भिः स्वरूपैः पञ्चधा वर्तमानत्वात् तादृग्दासनियामकत्वाद् वा पञ्चवृत्तिः प्रपञ्चितः। **तस्य वशगमेवेदं सकलमपि जगज्जातम् । स हीदमन्तर्बहिश्च स्थित्वा धत्ते।।८–९।।**

''चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः'' (२-४-११) इत्यधिकरणम् । **स विष्णोर्वशगः सदा** इति। अन्यजगदीश्वरो मुख्यप्राणो विष्णोरेव वशगः। नत्वन्यवशगः स्ववशो वा। अवान्तर-मुख्येश्वरत्वात् तयोः। संसारेऽप्यवान्तरेश्वरस्य मुक्तौ मुख्येश्वरत्वमपि सुलभमिति सन्देहापोहार्थम् सदा विष्णोर्वशगः इत्युक्तिः। मुक्तावपि स्वातन्त्र्याभावान्न मुख्येश्वरत्वमित्यर्थः। न हि स्वतन्त्रयुगलं युक्तं श्रुतं दृष्टं वा भवति । नाप्यन्यस्य तदैक्यं सर्वथेत्युक्तम् ।।७।।

**नृसिंहतीर्थ** – वेदप्रामाण्येन विष्णोर्जगत्कारणत्वादिसिध्यर्थं अध्यात्मविषयश्रुतीनां सयुक्तिकश्रुत्यन्तरविरोधपरिहारार्थस्य चतुर्थपादस्यापि समानन्यायानां केषांचिदधिकरणानां संकलय्य तात्पर्यमाह। **मुख्यप्राण** इत्यादिना **तदुद्भव** इत्यन्तेन । इन्द्रियाणीत्यत्रापि चशब्दो योज्यः। तेन तद्धर्मसमुच्चयः। यद्यप्यत्र पादे प्रथममिन्द्रियाणामुत्पत्तिविचारः। अनन्तरं मुख्यप्राणस्योत्पत्तिविचारः। तथापि प्राधान्यक्रममनुसृत्य मुख्यप्राणस्यादावुक्तिः। मुख्यप्राणस्तदुद्भवश्चेत्यनेन षष्ठअष्टमनवम-एकादशानां तात्पर्यमुक्तं भवति। श्रेष्ठश्च इति षष्टाधिकरणे मुख्यप्राणस्योत्पत्तिविचारात् । अष्टमाधिकरणे प्राणादिपंचरूपविचारात् । अणुश्चेति नवमाधिकरणे प्राणपरिणामविचारात् । एकादशाधिकरणे मुख्यप्राणानिन्द्रियत्वरूपधर्मविचारात् । **इन्द्रियाणि तदुद्भवानि च** इत्यनेन आद्यधिकरणपंचकस्य दशमस्य च तात्पर्यमुक्तं भवति। तत्र तथा प्राणा इति प्रथमाधिकरणे इन्द्रियाणामुत्पत्तिविचारात् । द्वितीयाधिकरणे प्राकृतेन्द्रियान्तर्गतमनस एव पुनः अभ्यधिका-शंकयोत्पत्तिविचारात् । तृतीयाधिकरणे अभ्यधिकाशंकयैव वायोरनिन्द्रियस्युत्पत्तिविचारात् । चतुर्थाधिकरणे इन्द्रियसंख्यारूपधर्मविचारात् । पंचमे इन्द्रियपरिमाणरूपधर्मविचारात् । दशमाधिकरणे इन्द्रियाणां ब्रह्मकरणत्वरूपविचारात्। **देहस्तदुद्भवश्च** इत्यनेन द्वादशत्रयोदशाधिकरणतात्पर्यमुक्तं भवति। चशब्दः भूम्यादिरूपोपादनसमुच्चायकः। तत्र द्वादशाधिकरणे शरीरस्य परमात्मनोत्पन्नत्व-विचारात् । त्रयोदशाधिकरणे शरीरस्य पांचभौतिकत्वस्य समर्थिततत्वादिति। मुख्यप्राणस्य भगवदन्येश्वरत्वभगवदधीनत्वप्रतिपादकस्य सप्तमाधिकरणस्य तात्पर्यम्। **मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा** इति। सदेति वर्त्तते इति शेषः। सः मुख्यप्राणः सदा मुक्तौ संसारे च विष्णोर्वशगः वशे विद्यमान इत्यर्थः। यद्यपीदमधिकरणं मुख्यप्राणस्तदुद्भवश्चेत्यनेन संगृहीतुं शक्यते। मुख्यप्राणधर्मविचारपरत्वात् । तथापि अवश्यज्ञातव्यतया प्रधानप्रमेयत्वात् पृथक्तात्पर्यकथनम्।

**श्रीनिवासतीर्थीया–** न्यायोपेतश्रुतिविरोधपरिहारार्थं संगृह्णाति **मुख्यप्राणश्चेन्दियाणि** इति श्लोकद्वयेन। तथा प्राणाः, तत्प्राक् श्रुतेश्च, तत्पूर्वकत्वाद्वाचः, सप्तगतेर्विशेषितत्वाच्च, अणवश्च,

श्रेष्ठश्च इत्यधिकरणषट्कस्यार्थमाह **मुख्यप्राणश्चेन्द्रियाणि** इति। इन्द्रियाणि तदुद्भवानि विष्णोरेवोत्पत्तिमन्ति। मुख्यप्राणश्च तदुद्भवः । संज्ञामूर्तिक्लृप्तिस्त्वित्यधिकरणार्थः **देहश्चैव तदुद्भव** इति। देहादिलक्षणरूपनामात्मकप्रपंचोऽपि विष्णूद्भव एव । चक्षुरादिवत्तु तत्सह शिष्ट्यादिभ्य इत्याद्यधिकरणानामर्थमाह। **मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा** इति। सर्व जगत् सदा मुख्यप्राणवशेऽस्ति।

**छलारी –**

हरिः ओम्

**जानुमात्रं भवाब्धिस्स्यात् कण्ठावधिसुखं भवेत् ।**
**मत्सेवयेति हस्ताभ्यां रामो रक्षतु सूचयन् ।।**

श्रुतीनां युक्त्युपेतश्रुतिविरोधाभावं प्रदर्शयत्यस्मिन्पादे ।

**ओं तथा प्राणाः ओं**

उत्पत्तिमन्त एव प्राणाः, कुतः? तथा आकाशादौ कथितयुक्तिसमुदायादेवेति सूत्रार्थः।।

अत्र न प्राणाः उत्पत्तिमन्तः, "प्राणा एवानादयः प्राणा एव नित्याः" इति (काषायण)श्रुतेः। "नोपादानं हीन्द्रियाणां अतोऽनुत्पत्तिरिष्यते। उपादानकृता सृष्टिः सर्वलोकेषु दृश्यते।।" इति (भविष्यत्पर्व)स्मतिसिद्धयुक्तेश्चेति प्राप्ते –

उत्पत्तिंमन्त एव प्राणाः। "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" (मु.उ.२-१-३) इति श्रुतेः। न चोक्तसयुक्तिकश्रुतिविरोधः। तस्यानादिसूक्ष्मेन्द्रियपरत्वेन गौणार्थत्वात् । न चात्र मानाभावः।

नित्यान्येतानि सौक्ष्मेण हीन्द्रियाणि तु सर्वशः।
तेषां भूतैरुपचयः सृष्टिकाले विधीयते।
परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्यनित्यता।

इति स्मृतेरिति सिद्धान्तः कृतः।।१।।

**ओं तत्प्राक् श्रुतेश्च ओं**

तस्य मनः उत्पत्तिमदेव। कुतः? तत्प्राक् श्रुतेः तस्य मनसः "मनस्सर्वेन्द्रियाणि"(मु.उ.२-१-३) इति इन्द्रियेभ्यः प्रथमोत्पन्नत्वेन श्रुतत्वात् । चशब्देन स्मृतिर्ग्राह्येति सूत्रार्थः।।

अत्र मनो नोत्पत्तिमत् । "द्विधा हैवेन्द्रियाणि नित्यान्यनित्यानि च" (गौपवन)। तत्र नित्यं मनः अनादित्वादिति सयुक्तिकश्रुतेः। न च "मनस्सर्वेन्द्रियाणि च" इत्युत्पत्तिश्रुत्यनुसारेण

इन्द्रियानुत्पत्तिश्रुतिवत् अनादित्वश्रुतेः गौणार्थत्वमिति साम्प्रतम् । इन्द्रियाणामनित्यत्वमुक्त्वा विशिष्य मनसो नित्यत्वाभिधानादिति प्राप्ते-

नानुत्पत्तिर्मनसो युज्यते। "मनस्सर्वेन्द्रियाणि च" इति उत्पन्नत्वे श्रुतिसद्भावात् । न चान्येन्द्रियवन्मनसोऽप्युत्पत्तिमत्वे तस्येन्द्रियान्तर्गतस्य पृथगभिधानं व्यर्थमिति वाच्यम् । अन्येन्द्रियेभ्यो प्रागुत्पन्नत्वाभिप्रायेण तदुपपत्तेः। न च तस्य उत्पत्तिमत्त्वे अनुत्पत्तिश्रुतिविरोधः इति वाच्यम् । तस्याः सूक्ष्मरूपमनोविषयत्वात् । न च विशिष्य नित्यत्वोक्तिविरोधः। अन्येन्द्रियेभ्यो अल्पोपचयाभिप्रायकत्वात् तस्याः। न चात्र मानाभावः। "पूर्वं मनस्समुत्पन्नं ततोऽन्येषां समुद्भवः। तदनुत्पत्तिवचनमल्पोपचयकारणात्।।" इति (वायुप्रोक्त)स्मृतेरिति सिद्धान्तः कृतः ।।२।।

## ओं तत्पूर्वकत्वाद्वाचः ओं

वाचः वागिन्द्रियस्य नानुत्पत्तिः। कुतः? तत्पूर्वकत्वात् । मनः कारणकत्वेन श्रुतत्वादिति सूत्रार्थः ।।

अत्र न वागुत्पत्तिमती । "वाग्वाव नित्या न ह्येषोत्पद्यते अस्यां हि श्रुतिरवतिष्ठते" इति (पौष्यायण) सयुक्तिकश्रुतेः। न चेयं श्रुतिः वेदविषयेति वाच्यम् । अस्यां "श्रुतिरवतिष्ठते" इति श्रुतश्रुत्याश्रयत्वायोगादिति प्राप्ते -

वागुत्पत्तिमती। "तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्" (ऐ.आ.३-१-१)इति श्रुतेः। अत्र पूर्वोत्तरशब्दयोः कार्यकारणपरत्वात् । न चोक्तश्रुतिविरोधः। श्रुतावुपचारेण नित्यत्वाभिधानात् । तदुक्तम् । "वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता" (वायुप्रोक्त)इति । इति सिद्धान्तः कृतः।

समानन्यायानां एतेषां त्रयाणामप्यधिकरणानां सहैव तात्पर्यमाह - **मुख्यप्राणश्चेन्द्रियाणि** इति। मुख्यप्राण इत्यस्य उत्तरत्रोपयोगं वक्ष्यामः। इन्द्रियप्रेरकत्वेन प्राधान्यात्प्रथमतो निर्देशः। इन्द्रियाणीत्यत्र लिङ्गवचनविपरिणामेन तदुद्भवानीत्यनुषङ्गः। तच्छब्देन हरेः परामर्शः। तेनोद्भवः उत्पत्ति येषां तानीति विग्रहः ।।३।।

## ओं सप्तगतेर्विशेषितत्वाच्च ओं

गतेर्ज्ञानस्य साधनानीन्द्रियाणि सप्तसंख्याकानि । कुतः? विशेषितत्वात् । गुहायां गुहाशयायां, बुद्धौ बुद्ध्यर्थमित्यर्थत्वात् । चशब्दात् स्मृतेश्चेति सूत्रार्थः।

अत्र सप्तैव प्राणाः "सप्त प्राणाः प्रभवन्ति तस्मात्" इति श्रुतेः। किञ्च अभिमानिनां सप्तत्वात् प्राणानां सप्तत्वम् । अभिमान्यभिमन्यमानयोः समसंख्याकत्वनियमादिति । अथ वा द्वादश प्राणाः। "द्वादश वा एते प्राणाः" इति (कौण्डिण्य)श्रुतेः। न च सयुक्तिकत्वेन बलवत्या सप्तत्वश्रुतिबाधः। सप्तत्वे कथितयुक्तेरत्रापि साम्यात् । एवञ्च श्रुत्योः विरुद्धत्वादप्रामाण्यमिति प्राप्ते-

द्वादशैव प्राणाः। "द्वादश वा एते प्राणाः" इति श्रुतेः। न च सप्तत्वश्रुतिविरोधः। द्वादश प्राणेषु सप्तत्वस्यापि भावात् । न च विवक्षाविशेषमन्तरेण सप्तत्वोक्तिर्व्यर्थेति वाच्यम् । श्रोत्रचक्षुस्पर्शनरसनाघ्राणमनोबुद्धीनां ज्ञानसाधनेन्द्रियत्वेन तद्विवक्षया सप्तत्वोक्तिसम्भवात् । तदुक्तं – सप्त प्राणास्त्ववगतेः पञ्च प्राणाश्च कर्मणः। एवं प्राणद्वादशकं शरीरे नित्यसंस्थितम् । (भविष्यत्पर्व)इति। ततश्च श्रुत्योः विरोधाभावात् नाप्रामाण्यमिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **इन्द्रियाणि** इति । द्वादशैवेति शेषः। ज्ञानेन्द्रियाणि सप्त कर्मेन्द्रियाणि पञ्च, एवं इन्द्रियाणि द्वादशैवेत्यर्थः।।४।।

### ओं अणवश्च ओं

अणव एव प्राणाः। कुतः? तथा श्रुतेः। तेजसा व्याप्ताश्चेति चार्थः इति सूत्रार्थः।

अत्र व्याप्ताः प्राणाः, "दिवीव चक्षुराततम्" (ऋ.सं.)इति व्याप्तश्रुतेः। दूरश्रवणदर्शनादित्युक्तेश्चेति प्राप्ते –

"अणव एव प्राणाः अणुभिः पश्यति अणुभिः कृणोति प्राणा वाऽणवः" इति (कौण्डिण्य) श्रुतेः। न च व्याप्तिश्रुतिविरोधादणुत्वाभावः। अणुत्वस्याप्युक्तश्रुतिसिद्धत्वात् । न चैवं सत्य (व्याप्ति)निर्णयः। तद्यथा "ह्यणुनश्चक्षस प्रकाशो व्यातत" इति श्रुतेः विस्पष्टवादित्वेन व्याप्तिश्रुतितोपि बलवत्वात् । न च तदप्रामाण्यम् । "तद्यथा" इति श्रुत्यनुसारेण व्याप्तिश्रुतेः तेजसा व्याप्त्यर्थकत्वनिर्णयादिति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह – **इन्द्रियाणि** इति। अत्राणूनिति शेषः। इन्द्रियाणि अणुपरिमाणान्येव न व्याप्तानीत्यर्थः।।५।।

### ओं श्रेष्ठश्च ओं

इतरप्राणवत् श्रेष्ठश्च – मुख्यप्राणोऽपि जायते एव ईश्वरात् । तथा श्रुतेरिति सूत्रार्थः।

अत्र मुख्यप्राणो नोत्पत्तिमान् , "नैष प्राण उदेति नास्तमेति" इति श्रुतेः।

"यत्प्राप्तिर्यत्परित्यागः उत्पत्तिर्मरणं तथा। तस्योत्पत्तिः मृतिश्चैव कथं प्राणस्य युज्यते।।" इति स्मृतिसिद्धयुक्तेश्चेति प्राप्ते –

यथेतरे प्राणा उत्पद्यन्ते तथा श्रेष्ठोऽपि । "सौक्ष्मेण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेति" इति (गौपवन)श्रुतेः। न चोक्तश्रुतिविरोधः, सूक्ष्मरूपविषयत्वात् तस्याः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **मुख्यप्राणः तदुद्भव** इति। प्राण इत्येव पूर्तौ मुख्यप्राण इत्युक्त्या "मुख्यप्राणादिदं जगत् । मुख्यप्राणः परस्माच्च न परः कारणान्वित" (वायुप्रोक्त)इत्यादिस्मृतिसिद्धं हरेः मुख्यप्राणजन्मेति सूचयति।।६।।

## ओं चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ओं

चक्षुरादिवत् मुख्यप्राणोऽपि भगवदधीन एव । कुतः ? तत्सह शिष्ट्यादिभ्यः प्राणश्च प्राणाश्च प्राणिनश्चेति श्रुतौ तैः चक्षुरादिभिस्सह तद्वशत्वेन शिष्टेः - शासनात् । ईशद्वयायोगरूपयुक्तेश्चेति आदिपदार्थ इति सूत्रार्थः।

अत्र स्वतन्त्र एव मुख्यप्राणः। "प्राणादिदमाविरासीत् प्राणो धत्ते, प्राणे लयमभ्येति न प्राणः किञ्चिदाश्रितः" इति श्रुतेः।

"यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत् । यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेत्।।" इति युक्तेश्चेति प्राप्ते -

मुख्यप्राणः परमात्माधीन एव। "सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोति" इति श्रुतेः। न चोक्तयुक्त्युपेतवचनविरोधः। तस्यावान्तरेश्वर-परत्वात्। तदुक्तं -

सर्वकर्तापि सन् प्राणः परमाधारतस्थितः।
अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् ।।
अतो मध्यमतामाहुः तस्य वेदेषु वेदिनः। इति। इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा** इति। सर्वं रुद्रादिजगत् । सः विष्णोः वशग इत्येव पूर्तौ मुख्यप्राणवशे सर्वमित्युक्तिः मुख्यप्राणस्वातन्त्र्यश्रुत्यादेः अवान्तरेश्वरपरत्वरूपगतिसूचनायेति ध्येयम् ।।७।।

## ओं पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ओं

मुख्यप्राणः पञ्चवृत्तिः - प्राणादिपञ्चस्वरूपः प्राणादिपञ्चदासवांश्च । कुतः ? यतो मनोवद्व्यपदिश्यते। यथा वर्गद्वयोपेतं मनः "यथा ह वै मनः पञ्चधा व्यपदिश्यते। मनोबुद्धिरहङ्कारश्चित्तं चेतनेति तेभ्यो वा एतेभ्यो पञ्च दासाः प्रजायन्ते। मनसो वाव मनो बुद्धेः बुद्धिः अहङ्कारादहङ्कार चित्ताच्चित्तं चेतनाया एव चेतनैवमिति" इति श्रुतौ व्यपदिश्यते। एवं मुख्यप्राणोऽपि वर्गद्वयवान् "प्राणो वाव पञ्चवृत्तिः प्राणोपानो व्यानोदानस्समान" इति । "तेभ्यो वा एतेभ्यः पञ्चदासाः प्रजायन्ते। प्राणाद्वाव प्राणोऽपानादपानो, व्यानाद्व्यानः, उदानादुदानः, समानादेव समान" इति श्रुतौ व्यपदिश्यत इति सूत्रार्थः।।

अत्र प्राणादय मुख्यप्राणदासा एव। "सर्वे वा एते मुख्यप्राणदासाः प्राणोऽपानो व्यानोदानः समानः" इति श्रुतेः।

"प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम् । अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वते ।।" (वायुप्रोक्त)इति युक्तेश्चेति एकः पूर्वपक्षः।

प्राणादयः मुख्यप्राणस्वरूपाण्येव। "मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्चवायवः। स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशम्" इति श्रुतेः। उक्तसद्गुणत्वादियुक्तेश्च । न च व्यक्तसद्गुणत्वं असिद्धमिति वाच्यम् । "पायूपस्थेऽपानं , चक्षुश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते। मध्ये तु समानः एष ह्येतद्धुतमन्नं समं नयति। तस्मात् एताः सप्तार्चिषो भवन्ति। नाडीसहस्राण्यासु व्यानश्चरत्येकयोर्ध्वमुदानः" इति श्रुतेः। न चैतद् व्यक्तसद्गुणत्वं दासेषु भवति। उभयत्रापि तद्भावे स्वामिभृत्यभावानुपपत्तेः इति अपरः पूर्वपक्षः। एवं च श्रुत्यो समबलत्वेन विरुद्धत्वाद-प्रामाण्यमिति प्राप्ते -

न केवलं प्राणादयो मुख्यप्राणदासाः एव अपि तु तत्तत्स्वरूपाण्यपि । कुतः पूर्वोदाहृतो-भयविधश्रुतेः।

"अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च । तद्दासाः पञ्च चान्योऽपि प्राणाद्याः सद्गुणैर्युताः" इति श्रुतेश्च। ततश्च श्रुत्योः विरोधाभावात् नाप्रामाण्यमिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **मुख्यप्राण** इति। मुख्यप्राण इत्यस्यावृत्तिः। एकं विशेष्यं अपरं विशेषणम् । प्राणशब्दोऽत्र "एषः प्राणः इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते" इत्यत्रेव प्राणापानादिपञ्चप्राणपरः।

तन्त्रेण वर्गद्वयवाची । एवं च मुख्याः प्रधानाः स्वरूपभूताः इति यावत् । प्राणाः प्राणशब्दवाच्याः प्राणापानादयः पञ्च वायवो यस्य सः तथोक्तः। प्राधानाद्वायोः उत्पन्न इति यावत्। दासभूताः प्राणशब्दवाच्याः पञ्च वायवो यस्य स तथा । स्वरूपभूतप्राणादिपञ्चकवान् दासभूतप्राणादिपञ्चकवांश्च मुख्यप्राण इत्यर्थः। ततश्च श्रुत्योः विरोधाभावात् नाप्रामाण्यमिति भावः ।।८।।

## ओं अणुश्च ओं

मुख्यप्राणः शरीरान्तः प्राणरूपेण अणुः बहिः वायुरूपेण महांश्च । कुतः ? तथा श्रुतेरिति सूत्रार्थः।

अत्र व्याप्त एव मुख्यप्राणः। "प्राण एवाधस्तात्प्राण उपरिष्टात् प्राणो मध्यतः प्राणः सर्वतः प्राणः एवेदं सर्वम्" इति व्याप्तिश्रुतेः।

यतः सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु। अतो धृतं जगत्सर्वं अन्यथा केन धार्यते।।

## ओं चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ओं

चक्षुरादिवत् मुख्यप्राणोऽपि भगवदधीन एव । कुतः ? तत्सह शिष्ट्यादिभ्यः प्राणश्च प्राणाश्च प्राणिनश्चेति श्रुतौ तैः चक्षुरादिभिस्सह तद्वशत्वेन शिष्टेः - शासनात् । ईशद्वयायोगरूपयुक्तेश्चेति आदिपदार्थ इति सूत्रार्थः।

अत्र स्वतन्त्र एव मुख्यप्राणः। "प्राणादिदमाविरासीत् प्राणो धत्ते, प्राणे लयमभ्येति न प्राणः किञ्चिदाश्रितः" इति श्रुतेः।

"यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत् । यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेत्।।" इति युक्तेश्चेति प्राप्ते -

मुख्यप्राणः परमात्माधीन एव। "सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोति" इति श्रुतेः। न चोक्तयुक्त्युपेतवचनविरोधः। तस्यावान्तरेश्वर-परत्वात्। तदुक्तं -

सर्वकर्तापि सन् प्राणः परमाधारतस्थितः।
अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् ।।
अतो मध्यमतामाहुः तस्य वेदेषु वेदिनः। इति। इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा** इति। सर्वं रुद्रादिजगत् । सः विष्णोः वशग इत्येव पूर्तौ मुख्यप्राणवशे सर्वमित्युक्तिः मुख्यप्राणस्वातन्त्र्यश्रुत्यादेः अवान्तरेश्वरपरत्वरूपगतिसूचनायेति ध्येयम् ।।७।।

## ओं पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ओं

मुख्यप्राणः पञ्चवृत्तिः - प्राणादिपञ्चस्वरूपः प्राणादिपञ्चदासवांश्च । कुतः ? यतो मनोवद्व्यपदिश्यते। यथा वर्गद्वयोपेतं मनः "यथा ह वै मनः पञ्चधा व्यपदिश्यते। मनोबुद्धिरहङ्कारश्चित्तं चेतनेति तेभ्यो वा एतेभ्यो पञ्च दासाः प्रजायन्ते। मनसो वाव मनो बुद्धेः बुद्धिः अहङ्कारादहङ्कार चित्ताच्चित्तं चेतनाया एव चेतनैवमिति" इति श्रुतौ व्यपदिश्यते। एवं मुख्यप्राणोऽपि वर्गद्वयवान् "प्राणो वाव पञ्चवृत्तिः प्राणोपानो व्यानोदानस्समान" इति । "तेभ्यो वा एतेभ्यः पञ्चदासाः प्रजायन्ते। प्राणाद्वाव प्राणोऽपानादपानो, व्यानाद्व्यानः, उदानादुदानः, समानादेव समान" इति श्रुतौ व्यपदिश्यत इति सूत्रार्थः।।

अत्र प्राणादय मुख्यप्राणदासा एव। "सर्वे वा एते मुख्यप्राणदासाः प्राणोऽपानो व्यानोदानः समानः" इति श्रुतेः।

"प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम् । अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वते ।।" (वायुप्रोक्त)इति युक्तेश्चेति एकः पूर्वपक्षः।

प्राणादयः मुख्यप्राणस्वरूपाण्येव। "मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्चवायवः। स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशम्" इति श्रुतेः। उक्तसद्गुणत्वादियुक्तेश्च । न च व्यक्तसद्गुणत्वं असिद्धमिति वाच्यम् । "पायूपस्थेऽपानं , चक्षुश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते। मध्ये तु समानः एष ह्येतद्धुतमन्नं समं नयति। तस्मात् एताः सप्तार्चिषो भवन्ति। नाडीसहस्राण्यासु व्यानश्चरत्येकयोर्ध्वमुदानः" इति श्रुतेः। न चैतद्व्यक्तसद्गुणत्वं दासेषु भवति। उभयत्रापि तद्भावे स्वामिभृत्यभावानुपपत्तेः इति अपरः पूर्वपक्षः। एवं च श्रुत्यो समबलत्वेन विरुद्धत्वाद-प्रामाण्यमिति प्राप्ते -

न केवलं प्राणादयो मुख्यप्राणदासाः एव अपि तु तत्तत्स्वरूपाण्यपि । कुतः पूर्वोदाहृतो-भयविधश्रुतेः।

"अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च । तद्दासाः पञ्च चान्योऽपि प्राणाद्याः सद्गुणैर्युताः" इति श्रुतेश्च। ततश्च श्रुत्योः विरोधाभावात् नाप्रामाण्यमिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **मुख्यप्राण** इति। मुख्यप्राण इत्यस्यावृत्तिः। एकं विशेष्यं अपरं विशेषणम् । प्राणशब्दोऽत्र "एषः प्राणः इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते" इत्यत्रेव प्राणापानादिपञ्चप्राणपरः।

तन्त्रेण वर्गद्वयवाची । एवं च मुख्याः प्रधानाः स्वरूपभूताः इति यावत् । प्राणाः प्राणशब्दवाच्याः प्राणापानादयः पञ्च वायवो यस्य सः तथोक्तः। प्राधानाद्वायोः उत्पन्न इति यावत्। दासभूताः प्राणशब्दवाच्याः पञ्च वायवो यस्य स तथा । स्वरूपभूतप्राणादिपञ्चकवान् दासभूतप्राणादिपञ्चकवांश्च मुख्यप्राण इत्यर्थः। ततश्च श्रुत्योः विरोधाभावात् नाप्रामाण्यमिति भावः ।।८।।

### ओं अणुश्च ओं

मुख्यप्राणः शरीरान्तः प्राणरूपेण अणुः बहिः वायुरूपेण महांश्च । कुतः ? तथा श्रुतेरिति सूत्रार्थः।

अत्र व्याप्त एव मुख्यप्राणः। "प्राण एवाधस्तात्प्राण उपरिष्टात् प्राणो मध्यतः प्राणः सर्वतः प्राणः एवेदं सर्वम्" इति व्याप्तिश्रुतेः।

यतः सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु। अतो धृतं जगत्सर्वं अन्यथा केन धार्यते।।

(वायुप्रोक्त)इति स्मृतिसिद्धयुक्तेश्चेति प्राप्ते -

अणुरेव मुख्यप्राणः "स वा एष प्राणोऽणुः" इति (कौण्डिण्य)श्रुतेः। न च व्याप्तिश्रुतिविरोधः। तस्याः देहाद्बहिर्वर्तमानवायुरूपविषयत्वात् । कुत एतदिति चेन्न । "अन्तर्वा अणुर्बहिर्महान्" (कौण्डिण्य)इति विशेषश्रुतेरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **मुख्यप्राणश्च** इति । अणुरिति शेषः। चशब्दाद्व्याप्तश्चेति समुच्चीयते। उभयविधश्रुतेः इति भावः ।।९।।

### ओं ज्योतिराद्यधिष्टानन्तु तदामननात् ओं

तदिति व्यस्तं समस्तं च, ज्योतिराद्यधिष्ठानमित्यस्यावृत्तिः। ज्योतिरादि अधिष्ठानं यस्य सः तथा । चक्षुरादिमूलभूततेजःप्रभृतिभूतनियामकं इति यावत् । यद् ब्रह्म तत्तु तदेव ज्योतिराद्यधिष्ठानं ज्योतीरूपतदंशभूतचक्षुरादिनियामकं, कुतः? तस्य ज्योतिराद्यधिष्ठानत्वस्य चक्षुराद्यधिष्ठानत्वस्य च "यः प्राणे तिष्ठन्" (बृ.उ.७-५-६)इत्यादिना आमननादिति सूत्रार्थः।।

अत्र इन्द्रियाणि जीवसम्बन्धीनि।

"जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः। यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिषु ।।" (सौत्रायण)इति सयुक्तिकजीवसम्बन्धित्वश्रुतेः इति प्राप्ते -

ब्रह्मैव चक्षुरादिभिः करणैः दर्शनादि कारयतीति ब्रह्मसम्बन्धीन्येवेन्द्रियाणि न पुनर्जीवस्य । चक्षुरादिमूलभूततेजःप्रभृतिभूतस्य ब्रह्मनियम्यत्वेन सुतरां तदंशभूतानां एतेषां तन्नियम्यत्वात् । सर्वप्राणिप्रेरकमुख्यप्राणप्रेरकत्वप्रतिपादिकायाः "यः प्राणे तिष्ठन्" (बृ.उ.७-५-१६)इत्यादिश्रुतेः। "यश्चक्षुषि तिष्ठन् यस्तेजसि तिष्ठन्" इत्यादिश्रुतेश्च । नन्वेवं तर्हि जीवसम्बन्धित्वश्रुत्यप्रामाण्यप्रसङ्गः इति चेन्न। जीवकरणसम्बन्धित्वस्य अनादिनित्यत्वेन तदभिप्रायेण प्रवृत्तायाः तस्या प्रामाण्योपपत्तेः। दृश्यते खलु लोके परकीये बहुकालसम्बन्धिनि तदीयत्वोपचार इति सिद्धान्त कृतः।

तस्य तात्पर्यमाह - **इन्द्रियाणि तदुद्भवानि** इति । तथा च सूक्ष्मरूपेण नित्यानामपीन्द्रियाणां सृष्टिकाले भूतोपचयरूपेशाधीनोत्पत्तिमत्वेनेश्वरप्रयोज्यत्वाद् ब्रह्मसम्बन्धीन्येवेन्द्रियाणि न पुनः जीवसम्बन्धीनीति भावः ।।१०।।

### ओं त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ओं

श्रेष्टादन्यत्र मुख्यप्राणादन्ये ते प्राणाः चक्षुराद्याः इन्द्रियाणि मुख्यप्राणस्त्वनिन्द्रियम् । कुतः? तद्व्यपदेशात् । तत्प्रतिपादकश्रुतेरिति सूत्रार्थः।

अत्र सर्वेऽपि प्राणाः इन्द्रियाणि । "प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति" (पौत्रायण) इति सयुक्तिकश्रुतेः सामान्यश्रुतेश्च सर्वगामित्वादिति प्राप्ते - न सर्वे प्राणाः इन्द्रियाणि । किन्तु मुख्यप्राणमृते द्वादशैव।

"द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् । द्रवतामिन्द्रियाणान्तु नियन्ता प्राण एकाराट्" (पौत्रायण) इति विशेषश्रुतेरीरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **मुख्यप्राणश्चेन्द्रियाणि** इति । तथा च मुख्यप्राणश्चेन्द्रियाणीति मुख्यप्राणस्येन्द्रियाणां च पार्थक्येन निर्देशात् मुख्यप्राणस्यानिन्द्रियत्वं तदन्येषां इन्द्रियत्वं च सूचितमिति बोद्धव्यम् । अन्यथा सर्वेऽपि प्राणाः तदुद्भवाः इत्यवक्ष्यत् ।।११।।

**ओं संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ओं**

संज्ञामूर्त्योः नामात्मकरूपात्मकप्रपञ्चयोः क्लृप्तिः सृष्टिः त्रिवृत्कुर्वत एव त्रीणि तेजोऽबन्नानि वृणोति मिश्रयति इति त्रिवृत् । "तासां त्रिवृतं त्रिवृतं एकैकामकरोत्" इति श्रुतेः। त्रिवृदित्येतत् भावप्रधानं तेजोबन्नानां मिश्रणं कुर्वतो विष्णुरेव, कुतः ? उपदेशात् । तथा श्रुतेरिति सूत्रार्थः।

अत्र विरिञ्च एव नामरूपात्मकदेहादिप्रपञ्चकर्ता, "विरिञ्चो वा इदं विरेचयति विदधाति ब्रह्म वा व विरिञ्चः एतस्माद्धीमे रूपनामनी" इति (गौपवन) श्रुतेः।

"यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते । एको हि कर्ता जगतो ब्रह्मैव तु चतुर्मुख ।।" इति स्मृतिसिद्धंयुक्तेश्चेति प्राप्ते -

परमात्मैव नामरूपात्मकदेहादिप्रपञ्चकर्ता । "सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन्यदास्ते" (तै.आ.३-१२)इति पुरुषसूक्तमन्त्रोक्तत्वात् । न च विरिञ्चस्यापि नामादि-कर्तृत्वे श्रुतिरस्तीति वाच्यम् । तस्याः श्रुतेः अवान्तरकारणत्वमात्रार्थत्वात् ।

सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः।
एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तराः।। इति स्मृतेरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **देहश्चैव तदुद्भव** इति। देह इत्युपलक्षणम् । नामरूपात्मकाशेषप्रपञ्चश्च । न केवलं मुख्यप्राणादिरिति चार्थः। तदुद्भव एव - तज्जन्य एव, न विरिञ्चोद्भवः इत्येवकारार्थः ।।१२।।

**ओं मांसादि भौमं यथाशब्दमितरयोश्च ओं**

मांसादि - देहस्थं अस्थिमांसाद्येव यत्कठिणं वस्तु, भौमं - पार्थिवं न सर्वशरीरं, कि तर्हि इतरयोश्च अप्तेजसोश्च कार्यं शोणितमज्जादि शरीरे वर्तते। यच्च यथाशब्दं - यत्कठिणमिति

श्रुत्यनुसारेण अङ्गीकर्तव्यमिति। यद्वा मांसादि भौमं – भूमिकार्यं नैतावदेव किन्तु अप्तेजसोश्च कार्यं, यथा शब्दं "मिश्राणि हि भूतानि" इति शब्दोक्तदृशा अङ्गीकार्यमिति सूत्रार्थः।

अत्र आप्यमेव शरीरं "अद्भ्यो हीदमुत्पद्यते" इति श्रुतेः। शरीरावयवेषु मांसादिषु अब्धर्म-कत्वदर्शनादित्येकः पक्षः।

प्रार्थिवमेव शरीरं "पृथिवीं शरीरमप्येति" इति श्रुतेः। कार्यस्य स्वकारण एवाप्ययनियमात्। काठिण्यादियुक्तेश्चेत्यपरः।

तैजसमेव शरीरं, तथा श्रुतेः औष्ण्यदर्शनाच्चेत्यन्य इति प्राप्ते –

यच्छरीरं कठिणं मांसादि तदेव पार्थिवम् । यच्च शोणितादि तदेवाप्यं, यच्च मज्जादि, तदेव तैजसं, शरीरन्तु त्र्यात्मकं, "यत्कठिणं सा पृथिवी, यद् द्रव्यं तदापो, यदुष्णं तत्तेजः" इति श्रुतेः। यदि शरीरं नैकभूतकार्यं कथं तर्हि विशेषोक्तिरिति चेन्न, तत्तच्छरीराणां तत्तद्भूतसंयोगविशेषसद्भावेन वैशेष्यात् तद्व्यपदेशोपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **देहश्चैव तदुद्भव** इति। इन्द्रियोपचयकारणत्वेन प्रकृतं पृथिव्यादिभूतत्रयं तदिति परामृश्यते। देहश्च – सर्वोऽपि देहः तदुद्भव एव भूतत्रयजन्य एव न त्वेकैकमात्रजन्य इत्येवकारार्थः।

केचित्तु पूर्वोक्तसर्वकर्तृत्वसिध्यर्थं इतरादित्वशङ्कानिवर्तनेन तदुत्पत्तिसमर्थनपरप्रधानाधिकरण-प्रमेयस्यैव अस्मिन्नणुभाष्ये संग्रहः कृतः। न त्ववान्तराधिकरणप्रमेयस्यापि । अनुव्याख्यानेऽपि तत्र तत्र किञ्चिन्निरूपणस्य दर्शनादित्याहुः।

तेषां "पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः" इत्येतद्ग्रन्थविरोधः। तथा –

अनन्तोऽर्थः प्रकटितः त्वयाणौ भाष्यसंग्रहे। अहो आत्मपरिज्ञप्त्यै कृष्णेनेवाननान्तरे ।

इति मध्वविजयविरोधश्च दुष्परिहरः।

**नारायणाचार्य–** पूर्वपादे अधिभूताधिदैवाध्यात्मविषयश्रुतिविरोधः परिहृतः। अतः परं अध्यात्मविषये युक्त्युपेतश्रुतिविरोधो अस्मिन्पादे परिह्रियते। यद्यपि पूर्वपादेऽपि युक्तयः श्रुत्यनुग्राहिका उपन्यस्तास्तथापि ताः श्रुत्यनुपात्ताः अत्र तु श्रुत्यैव संगृहीताः इति विषयः। अत्र "प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे । भूतेभ्योऽण्डमण्डस्यान्तस्त्विमे लोकाः। अथ प्राणा एवानादयः प्राणाः नित्या" इति काषायणश्रुतौ प्राणानामनुत्पत्तिः श्रूयते।

नोपादानं हीन्द्रियाणामतो नोत्पत्तिारिष्यते। उपादानकृता सृष्टिः सर्वलोकेषु दृश्यते।।

इति युक्तिश्च भविष्यत्पर्वणि । ''एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च'' इत्युत्पत्तिश्च श्रूयते। अतो विरोधस्तत्परिहाराय सूत्रं **ओं तथा प्राणाः**। यथा वियदादय उत्पत्तिमन्तस्तथा प्राणा इन्द्रियाण्युत्पत्तिमन्त्येव । तर्ह्यनादित्वश्रुतेः का गतिरित्यतः सूत्रं **ओं गौण्यसम्भवात्**। ''एतस्माज्जायते'' इत्युदाहृतोत्पत्तिश्रुतिविरोधेन मुख्यानादित्वासम्भवात्सूक्ष्मरूपविवक्षया गौणानादित्वपरोत्पत्तिश्रुतिः।

नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि च सर्वशः। तेषां भूतैरुपचयः सृष्टिकाले विधीयते।।

परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्यनित्यता । इति भविष्यत्पर्वणि।

''स इदं सर्वमसृजत'' इति प्रतिज्ञानुपरोधार्थमपीन्द्रियोत्पत्तिः स्वीकर्त्तव्येत्येतमर्थप्रतिपादकं सूत्रं **ओं प्रतिज्ञानुपरोधाच्च** इति।।१।।

''द्विधा हैवैन्द्रियाणि नित्यानि चानित्यानि च । तच्च नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठत्यनित्यान्यन्यानि'' इति गौपवनश्रुतौ मनसोऽनुत्पत्तिः सयुक्तिका श्रूयते अत आह **ओं तत्प्राक् श्रुतेश्च**। ''मनः सर्वेन्द्रियाणि च'' (मु.उ.२-१-३)इति तत्पूर्वश्रतावुक्तत्वान्नानु-त्पत्तिर्मनसो युक्ता।

पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः। तदनुत्पत्तिवचनमन्योपचयकारणात्।।

इति वायुप्रोक्तवचनं चशब्देन संगृहीतम् ।।२।।

''नित्यया ऽनित्यया स्तौमि परमात्मानमच्युतं'' इति ''वाग्वाव नित्या न ह्येषोत्पद्यतेऽस्यां हि श्रुतिरवितष्ठते'' (पौष्यायण)इति सयुक्तिकं वागिन्द्रियस्यानुत्पत्तिः श्रूयतेऽत आह **ओं तत्पूर्वकत्वाद्वाचः**। ''मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वं रूपं वागुत्तररूपं'' इति मनः पूर्वत्वाद्वाचो नानुत्पत्तिः।

वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता । उत्पतिर्मनसो यस्मान्न नित्यत्वं कुतश्चन।।

इति वायुप्रोक्ते।।३।।

''सप्तप्राणाः प्रभवन्ति तस्मात्'' ''सप्तैव मारुताः बाह्ये प्राणाः सप्त तथात्मनि । अधिदैवे तथाध्यात्मे संख्यासाम्यं विदो विदुः।। '' इति स्कान्दे। ''द्वादशा वा एते प्राणाः द्वादशमासा द्वादशादित्या द्वादशराशयो द्वादशग्रहा'' इति कौण्डिण्यश्रुतौ द्वादशप्राणाः दृश्यन्ते अतो विरोध इत्यत आह **ओं सप्तगतेर्विशेषितत्वाच्च**। ज्ञानेन्द्रियापेक्षया सप्तत्वम् । घ्राणरसनचक्षुस्त्वक् श्रोत्रमनोबुद्धिभेदात्सप्तत्वम् । प्राणगुहाशयां निहिताः सप्त सप्तेतिविशेषितत्वात् । हृदयगुहाः आशयः स्थानं यस्यास्तां गुहाशयांबुधिप्रतिनिहिताः सप्तेत्यर्थः। प्रतिशरीरस्थित्यपेक्षया वीप्सायां द्विरुक्तिः। गतेर्ज्ञानस्य सप्तैवेन्द्रियाणि

सप्तप्राणास्त्ववगतेः पंचप्राणाश्च कर्मणः। एवं प्राणद्वादशकं शरीरे नित्यसंस्थितं।।

इति भविष्यत्पर्ववचनं चशब्दात् । नन्वतो अभ्यधिकसत्वे कुतो अत्र नोक्तं इत्यत सूत्रं **ओं हस्तादयस्तु स्थितेऽतो नैवम्** । हस्तादीनां कर्मेन्द्रियत्वान्न ज्ञानेन्द्रियैः सह पाठः।

संसारस्थितिहेतुत्वात् स्थितं कर्मविदो विदुः। तस्मादुद्गतिहेतुत्वात् ज्ञानं गतिरिहोच्यते।।

इति वायुप्रोक्ते ।।४।।

''दिवीव चक्षुराततं'' (ऋ.सं.१-२२-२०)इति व्याप्तिः श्रूयते। दूरश्रवणदर्शनादियुक्तिश्च। ''अणुभिः पश्यत्यणुभिः करोति प्राणा वा अणवः प्राणो ह्येतद्भवति'' इति कौण्डिण्यश्रुतेश्च विरोध इत्यत आह **ओं अणवश्च**। ''तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततोऽणुर्ह्येवैष पुरुषो भवति'' इति शाण्डिल्यश्रुतौ व्याप्तिश्रुतिगतेरुक्तत्वादणव एव प्राणाः।।५।।

''नैष प्राण उदेति नास्तमेत्येकल एव मध्ये स्थाता । अथैनमाहुर्मध्यम'' इति मुख्यप्राणस्यानुत्पत्तिः श्रूयते।

यत्प्राप्तिर्यत्परित्याग उत्पतिर्मरणं तथा। तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते।।

इति युक्तिश्चोक्ता वायुप्रोक्ते। ''आत्मन एव प्राणो जायते'' इति चेत्यत आह **ओं श्रेष्ठश्च**। ''सौक्ष्म्येण ह वा पुरुषोऽवतिष्ठते स्थूलत्वेनोदेति'' इति गौपवनश्रुतेरुक्तश्रुतिद्वयस्य व्यवस्थित्वाच्छ्रेष्ठप्राणोऽपि सादिरनादिश्च भवतीत्यर्थः। ननु

चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते। प्राणशब्दस्त्रिषु ह्येषु मुखे मुख्यः प्रकीर्तितः।।

इति मुख्यप्राणे मुख्यवृत्या प्रवर्त्तमानस्य च युक्तिः तयोरपि वाचकत्वात् ''स प्राणमसृजत'' इति उत्पत्तिश्रुतिस्तद्विषयकं किं न स्यादित्यत आह **ओं न वायुक्रिये पृथगुपदेशात्** । ''स प्राणमसृजत''... ''खं वायुज्योतिराप''....''तपो मन्त्राः कर्म'' इति वायुक्रिययोः पृथगुपदेशादुत्पत्तेः।

भूतानि चेष्टा मन्त्राश्च मुख्यप्राणादिदं जगत् ।
मुख्यप्राणः परस्माच्च न परः कारणान्वितः ।। इति वायुप्रोक्ते।।६।।

एतस्याधिकरणषट्कस्य तात्पर्यं **मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भव** इति। एकेनैव वाक्येनोक्तिसौकर्याय भाष्यकृताऽत्र निर्दिष्टम् । तदुद्भवेत्येतदर्थवशेन लिंगवचनपरिणामेन च योजनीयम्। मुख्यप्राणस्तस्माद्विष्णोरुद्भवो यस्येत्येतादृशः। एवमिन्द्रियाणि च तदुद्भवान्येव । उत्पत्तिमवधारयतानुत्पत्तिश्रुतिः सूक्ष्मरूपापेक्षया सावकाशेति सूचितम् । तदिदमाह **देहश्चैव तदुद्भव**

इति। मुख्यप्राणस्य देहः शरीरम् । इन्द्रियाणां तु देहः उपचयः देहउपचय एव तस्माद् भावे घञ् । "तेषां भूतैरुपचयः सृष्टिकाले विधीयते ।" इत्युक्तात्वात् । यद्वा मुख्यप्राणस्तदुद्भव इत्येवान्वयः। चशब्दादमुख्यप्राणा अपि संगृहीताः। कीदृशो मुख्यप्राणइन्द्रियाणिदेह इति एकमेव पदं तद्विशेषणम् । इन्द्रियाणां अणिः गतिः विषयान्प्रति गमनं ददातीति इन्द्रियाणीह चेष्टा यस्येत्येतादृशः। अणिरितिधातुनिर्देशे इक् तेन तदर्थो लक्ष्यते । ईक्षतेरित्यादिवत् । तेन मुख्यप्राणादिदं जगदित्ययमर्थो उक्तो भवति। इन्द्रियाणां गत्युक्तया च तेषामव्याप्तिश्चोक्ता भवति। न हि व्याप्यस्य गतिरुपपद्यते। द्वितीयश्चशब्दोऽप्यर्थे। एवेत्येतत्तदुद्भव इत्यनेन सम्बध्यते। तेनैतादृशः जगदुद्भवादिकर्तापि मुख्यप्राणः परमात्मोत्पन्नः तदा किं वाच्यं तस्य माहात्म्यमित्युक्तं भवति। तथा अणुधातोर्गत्यर्थस्य ज्ञानक्रियोभयार्थकत्वात् तत्साधनज्ञानकर्मेन्द्रियाणां द्वादशानामप्युपादानात्तत्संख्याविषयश्रुतिविरोधपरिहारार्थस्य सप्तगतेर्हस्तादयस्तु इति च सूत्रद्वयस्य तात्पर्यमुक्तं भवति।

अथ "प्राणादिदमाविरासीत्प्राणो धत्ते प्राणे लयमभ्युपैति न प्राणः किंचिदाश्रितः" इत्यग्निवेश्यश्रुतौ प्राणस्य स्वातन्त्र्यं प्रतीयते।

यदाश्रयादस्य चेष्टाः सोऽन्यं कथमुपाश्रयेत् ।
यथाप्राणस्तथा राजा सर्वस्यैकाश्रयो भवेत् ।। इति च युक्तिर्भारते।

प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः। न परः किंचिदाश्रित्य वर्त्तते परमो यतः।।

इत्यत आह **ओं चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः**। चक्षुरादिवन्मुख्यप्राणोऽपि परमात्मवश एव। "सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोति" इति गौपवनश्रुतौ चक्षुरादिभिः सह तद्वशत्वेनैव शासनात्।

सर्वकर्तापि सन्प्राणः परमाधारतःस्थितः ।
कथमेवान्यथा सः स्याद्यतो नैवेश्वरद्वयम्।
अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् ।
अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः।।

"नान्योऽतोऽस्ति द्रष्टा" इत्यादेश्च। नन्वेवं तस्य चक्षुरादिसाम्यापत्या स्वातन्त्र्यश्रुतिर्व्यर्था स्यादित्यत आह **ओं अकरणत्वाच्च न दोषस्तथा हि दर्शयति**। चशब्दादितरेषां करणत्वमभ्युपैति । एतस्य करणत्वाभावादन्येभ्य उत्तमत्वमतो न स्वातन्त्र्यश्रुतिविरोधदोषः। माण्डव्यश्रुतिश्च "तानि ह वा एतानि सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान् मुख्यस्तस्मान्मुख्य इत्याचक्षते" इति ।।७।।

एतत्तात्पर्यमाह **मुख्यप्राणवशे सर्वं स विष्णोर्वशगःसदा** इति। स्पष्टार्थमेतत् । "सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदानः समान इति । अथ प्राणो वाव सम्राट्" इति कौण्डिण्यश्रुतिः।

प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम् ।
अतस्तदाज्ञया सर्वे स्वानि कर्माणि कुर्वते ।। इति युक्तिर्वायुप्रोक्ते।

मुख्यस्यैव स्वरूपाणि प्राणद्याः पंचवायवः।
स एव प्राणिनां देहे पंचधा वर्ततेऽनिशम् ।।

इति च गौपवनश्रुतिरिति विरोध इत्यतः सूत्रं **ओं पंचवृतिर्मनोवद्व्यपदिश्यते** । "अथ पंचवृत्यैतत्प्रवर्तते प्राणो वा व पंचवृत्तिः प्राणोऽपानो व्यान उदानः समान इति । तेभ्यो वा एतेभ्यः पंचदासाः प्रजायन्ते । प्राणाद्वाव प्राणोऽपानादपानो व्यानाद्व्यान उदानादुदानः समानादेव समानो यथा ह वै मनः पंचधा व्यपदिश्यते मनो बुद्धिरहंकारश्चित्तं चेतनेति । तेभ्यो वा एतेभ्यः पंचदासाः प्रजायन्ते । मनसो वाव मनो बुद्धेर्बुद्धिरहंकारादहंकारश्चित्ताच्चित्तं चेतनाया एव चेतनैवमिति" इति व्यपदेशात्तेषामुभयविधत्वान्न श्रुतिविरोध इति भावः। तत्तात्पर्यमाह **तदुद्भवः**। मुख्यप्राणवशे इति तस्मान्मुख्याप्राणादुद्भवो यस्येत्येतादृशः प्राणादिपंचगणः मुख्यप्राणवशे वर्तते तद्दास इत्यर्थः। न केवलं स एव किंतु सर्वं च तद्वशे अर्थात् यस्तदुद्भवो न भवति प्राणादिपंचकः स तदात्मक एवेति सूचितम्। स मुख्यप्राणः सदा विष्णोर्वशग इत्यर्थः।।८।।

"प्राण एवाधस्तात्प्राण उपरिष्टात्प्राणो मध्यतः प्राणः सर्वतः प्राण एवेदं सर्वं" इति प्राणस्य व्याप्तिः श्रूयते।

यतः सर्वजगद्व्याप्य तिष्ठति प्राण एव तु । अतो धृतं जगत्सर्वं अन्यथा केन धार्यते।।

इति युक्तिर्वायुप्रोक्ते। "अणुनैतत्सृज्यतेऽणुनैतद्धार्यते अणौ लयमभ्युपैति प्राणो वा अणुः प्राणो ह्येतद्भवति" इति सौत्रायणश्रुतिः। अत आह **ओं अणुश्च**। "स वा एष प्राणोऽणुर्महान्ना-माऽन्तर्वाऽणुर्बहिर्महान्प्राणो वा ईशितव्येश ईशो ह्यसौ सर्वस्येशितव्यश्च परस्य" इति कौण्डिण्यश्रुतेः। देहान्तर्गतस्वरूपेणाणोः अपि बहिर्देहाद्वर्तमानेन मुख्यवायुरूपेण व्याप्तत्वं चेति सौत्रचशब्दार्थः। एतत्तात्पर्यमाह **तदुद्भवः मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा** इति। मुख्यो मुखे भवः आध्यात्मिकदेहान्तर्गतरूपः । बृहदारण्यके "अथ हेममासन्यं प्राणमूचुः" इत्यत्र प्राणस्यासन्यत्वमुक्तम् । आस्ये भवः आसन्य इति व्युत्पत्तेः। पद्दन्नोमस् (पा.सू.६-१-६३) इति सूत्रेणास्यशब्दस्यासन्नित्यादेशः। शस्प्रभृतिष्वित्यत्र प्रभृतिग्रहणात्क्वचित्तद्धितेऽपीति ह्युक्तम्। यत्तु कौमुद्यामासनशब्दस्यासन्नित्युक्तं पदन्नितिहृदयोदकासनानां हृदउदन्नासन्नित्यादि च तद्वृत्तिभाष्यविरुद्धत्वात् उपेक्ष्यम् । तत्रास्यशब्दस्यैवासन्नादेश इत्युक्त्या 'अभिक्रन्दति

हरितेभिरासभिः' इत्यत्र विद्यारण्येनापि आस्यैरिति व्याख्यतत्वाच्च । तस्मान्मुख्यो नाम देहस्थप्राण एव। छान्दोग्येऽप्युक्तं "एतमु एव आयास्यं" इति प्राणस्यायास्य शब्दवाच्यत्वम् । तथा मुख्यश्रेष्ठो देह बाह्यो मुख्यवायुश्चामुख्यश्च मुख्यः तपरस्तत्कालस्य (पा.सू.१-१-७०)इत्यादिवत्। तस्य देहान्तर्गतप्राणस्य मूलवायोश्च ये प्राणवशे रूपे । अणोर्भावः आणवं अणुत्वं यस्मिन् तत्प्राणवं अत्यन्तसूक्ष्मं नाडीसंचाराद्यर्थं देहस्थरूपं तच्च शंमूलवायुरूपं च तयोः समाहारः प्राणवशं तस्मिन् "शंरूपमाश्रिता वायुं तेन श्रीरिति कीर्तिता ।" (म.ता.नि.१८-१०४)इति भगवत्पादैरुक्तत्वात् यथाक्रमं सम्बन्धः । मुख्यस्थस्य प्राणवायोर्यत्प्राणवं अत्यन्तसूक्ष्मरूपं यच्च श्रेष्ठस्य मूलवायोः शंरूपं तत्र च सर्वं सधवश्च तयोः समाहारः। सर्वं रोरभावात् हशि च (६-१-११४) इत्युक्तत्वं न। अणुत्वं व्याप्तत्वं च यथायथमुपपद्यते इति शेषः। तदुभयमुपपादयितुमुक्तं **सदा विष्णोर्वशगः**। वायुस्तदुद्भवो यत इति विष्णोर्वशगः इति विशेषणोपादनेन तदर्थोपेतादीशो ह्यसौ सर्वस्येशितव्यश्च परस्येति भाष्योदाहृतपरिमाणद्वयस्य विरोधाभावप्रतिपादककौण्डिण्यश्रुतिरत्रार्थे प्रमाणमिति सूचितम् । सरणं सृ गतावस्माद्भावे । विचू प्रसरणं व्याप्तत्वम् । तथा चाणवः अल्पीभवनमित्यर्थः। गन्धनार्थाद्वातेर्घञर्थकविधानमिति कः। आतो लोप इटि च (पा.सू.६-४-६४) इत्यालोपः। गन्धनं चाल्पत्वं गन्धशब्दान्तस्य बहुव्रीहेः अल्पाख्यायां (पा.सू.५-४-१४८)इति इकारोऽतादेशः स्यादिति अल्पाख्यायां इति (पा.सू.५-४-१३६) सूत्रे उक्तं । उदाहृतं च वृत्तिकृद्भिः। सूपगन्धिभोजनमिति। अल्पोऽस्मि सूपन् इत्यर्थः। तच्छब्देन देहलयश्चैवेति पूर्ववाक्यस्थो देहः परामृश्यते। तस्मिन्देहे उत् उत्कर्षेण भवः सद्भावः भूसत्तायामिति धातोः। अवस्थितिर्यस्येत्येतादृशः। शरीरे प्रेरणाद्यर्थं देहे स्थितस्यास्ति-सूक्ष्मनाडीसंचाराद्यर्थं सूक्ष्मरूपं च युक्तम् । तथा तस्माद्देहाद् उद्गत बहिर्भूतः भवः सद्भावः यस्येत्येतादृशः तस्य शंरूपस्य महदादिसर्वप्रेरणार्थं व्याप्तरूपं च युक्तमिति। अत एवागाम्यधिकरणे व्याख्यानार्थं देहश्चैवेति प्रसंगादत्रैव ग्रथितम् । तदुद्भव इत्यत्र तच्छब्देन परामर्शलाभार्थम्। अतः श्रुतिद्वयार्थस्याप्यविरोधेनोत्पन्नत्वाद्युक्तं श्रुतीनां प्रामाण्यं तेन युक्तो भगवति श्रुतिसमन्वय इति भावः। करणत्वं प्राणानामुक्तम् । "जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः। तस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिषु" इति सौत्रायणश्रुतौ सयुक्तिकं जीवकरणत्वं प्रतीयते। "ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागिति तद्धेतैः कारयति" इति काषायणश्रुतौ ब्रह्मकरणत्वमुक्तमत आह **ओं ज्योतिराद्यधिष्ठानं तु तदामननात्**। यत्तु ज्योतिरादीनां अधिष्ठानमिति हेतुगर्भम्। "तत्तेजोऽसृजत" इत्यादिना मूलतेजः प्रभृतिप्रेरकस्य तदंशभूतचक्षुरादिप्रेरकत्वं कैमुत्यसिद्धमिति सूचनार्थम्। तर्हि जीवकरणत्वोक्तेः का गतिरित्यतः सूत्रं **ओं प्राणवता शब्दात्** । जीवेनैव करणैः कारयति परमात्मा। अतो न विरोधः। "एष ह्यनेनैवात्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मनयति बुध्या बोधयति" इति भाल्लवेयश्रुतेः। परकीयकुठारेण वृश्चेतोऽसौ तत्करणमुच्यते इति भावः।

जीवकरणत्वश्रुतेः अर्थान्तरं चाह **ओं तस्य च नित्यत्वात्** । प्राणानां ब्रह्मकरणत्वेऽपि जीवकरणतत्सम्बन्धस्यानादित्वात् । परकीयेऽपि बहुकालसम्बन्धिन्युपचारात्तदीयत्वव्यवहार इति भावः। अतो विरोधाभावात्। ब्रह्मकरणान्येवेन्द्रियाणीति सिद्धम्। एतत्तात्पर्यमाह **मुख्यप्राणवशे** इत्यादिना। मुख्येन वायुना प्राणिति जीवतीति मुख्यप्राणो जीवः तद्वशे सर्वं चक्षुरादीन्द्रिय-जातं वर्त्तते परंतु स सर्वदा विष्णोर्वशगः। अतो विष्णोर्वेदकरणं तस्यैव हीदं यथेष्टविनि-योगार्हत्वात्तत्स्वामिकम् । ननु जीवस्य जीवेच्छानुसारसत्ताप्रतीतिप्रवृत्त्यादेरभावान्न जीवस्य करणत्वमिति भावः **।।१०।।**

''अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति'' इति सयुक्तिकं पौत्रायणश्रुतौ प्राणशब्दवाच्यत्वाविशेषान्मुख्यप्राणसंहिता। तां चक्षुरादीनां त्रयोदशानामिन्द्रियत्वं प्रतीयते। द्वादशैवेन्द्रियाण्याहुर्मनो बुद्धिस्तु द्वादश (काषायणश्रुति)इति एकादशद्वादशे इन्द्रिय इत्यर्थः। अतः कस्येन्द्रियत्वनिवार्यमत आह **ओं त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्** । श्रेष्ठान्मुख्य-प्राणानन्यत्र ते चक्षुरादयः इन्द्रियाणि। ''द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम्। द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराट्'' इति पौत्रायणश्रुतौ तस्यानिन्द्रियत्वव्यपदेशात् ।

श्रोत्रादीनि तु पंचैव तथा वागादिपंचकम् । मनोबुद्धिःसहायानि द्वादशैवेन्द्रियाणि तु।

तेषां नियामकः प्राणः स्थित एवाखिलः प्रभुः। इति बृहत्संहितायाम्।

तर्हि चक्षुरादिकमपीन्द्रियं न स्यादविशेषादित्यतः सूत्रं **ओं भेदश्रुतेः**। ''स्थित एव हीदं मुख्यप्राणः करोति कारयति च '' । ''अर्थेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति'' इति भेदश्रुतेः। नन्ववान्तरवैलक्षण्यस्य प्रत्यवायमिन्द्रियेष्वपि सत्वादित्यतो अनिन्द्रियत्व-प्रयोजकवैलक्षण्यं प्रतिपादयत्सूत्रं **ओं वैलक्षण्याच्च**। पुरुषापेक्षया प्रवृत्तिरिन्द्रियाणां दृश्यते न तु मुख्यस्य । ''प्राणाग्नय एवैतस्मिन्पुरे जाग्रति'' इति श्रुतेः। इन्द्रियाणामीशाधीनजीवायत्तप्रवृत्तित्वात्। प्राणस्य चेशैकाधीनप्रवृत्तिकत्वेन वैलक्षण्यादनिन्द्रियत्वमिति भावः। इदमप्याह सर्वं पूर्वोक्त-मिन्द्रियदेहादिकं मुख्यप्राणवशे अतस्तस्यानिन्द्रियत्वादुक्तं युक्तम्। तदिदमाह **स विष्णोर्वशगः सदा** । असाधारण्येन व्यपदेशा भवन्तीति विष्णोरेव वशः अर्थात्तेषामन्यवशत्ववै-लक्षण्यादिति भावः**।।११।।**

''विरिंचो वा इदं सर्वं विरेचयति विदधाति ब्रह्मा वाव विरिञ्चः एतस्माद्धीमे रूपनामनी इति गौपवनश्रुतेः देहादिनामरूपात्मकप्रपंचकर्तृत्वं सोपपत्तिकं चतुर्मुखस्य प्रतीयते ।

यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भाव्यते। एको हि कर्ता जगतो ब्रह्मैव च चतुर्मुख ।।

इति युक्तिः ब्राह्मे। तथा "अथ कस्मादुच्यते परम इति परमाद्ध्येते नामरूपे व्याक्रियेते" इत्याग्निवेश्यश्रुतेश्च विरोध इत्यत आह **ओं संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्**। संज्ञा नाम मूर्तिः रूपान्तरयोः क्लृप्तिः निर्माणं परादेव त्रिवृत्कुर्वतो भवति। "सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाभिवदन्य आस्ते (तै.आ.३-१२)इति श्रुतौ उपदिष्टत्वात्। यत्तु "स एतास्तिस्रो देवता अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति परब्रह्मण एव कर्तृत्वोपदेशाच्च । "सर्वनाम्ना च रूपाणां व्यवहारेषु केशवः। एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तरा" इति पाद्मे । इदमप्याह **देहश्चैव तदुद्भवः** इति । "अम्मयं तु यतो मांसमतस्तृप्तिश्च मांसत" इति युक्तिश्च भारते । नामरूपात्मकं सर्वं तस्माद्विष्णोरेवोद्भवो यस्येत्यर्थः **।।१२।।**

"आद्भ्यो हीदमुत्पद्यते आपो वाव मांसमस्थि च भवत्यापः शरीरमापत्वेदं सर्वं" इति कौण्डिण्यश्रुतिः। प्रपंचः पृथिवीशरीरमाकाशमात्मा इति श्रुतौ शरीरं पृथिवीमप्येतीति पृथिव्यां शरीरलयः प्रतीयते तेन पृथिवीकारणत्वं चावगम्यते। तथा "सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यं शरीर ऊर्ध्वः स्वर्गं लोकमेति" इति तैजसत्वं चोच्यते अतो विरोध इत्यत आह **ओं मांसादि भौमं यथाशब्दमितरयोश्च**। "यत्कठिणं सा पृथिवी यद् द्रवं तदापो यदुष्णं तत्तेज" इति श्रुतेर्मांसाद्येव भौमं इतरयोरप्तेजसोश्च यथाशब्दकार्यं अंगीकर्त्तव्यम् । कथं तर्हि विशेषवचनं पार्थिवमाप्यं तेजसमित्यतः सूत्रं **वैशेष्यात्तु तद्वादस्तद्वादः**।

पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता। इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः ।
इति सामान्यतो ज्ञेयं भेदश्च प्रतिपूरुषम् । स्वर्गस्थानां शरीराणां अर्धं तेज उदाहृतम् ।।

एवमाप्येष्वर्धभाग आप इतरेऽर्धे त्रिभागिनी। पृथिवीतेजश्चैकभागमिति सर्वत्र तत्तत्भागस्य भूयस्त्वात्तत्तद्विशेषोक्तिर्युक्तेत्यर्थः। सर्वाध्यायर्थावधारणार्थं अध्यायान्ते द्विरुक्तिः। एतदधिकरणार्थमप्याह **देहश्चैव तदुद्भव** इति। तच्छब्देन पूर्वोक्त एव मुख्यप्राणः परामृश्यते प्राणन्ति जीवन्त्यनेनेति प्राणः आपः अन्नस्यापि जीवनहेतुत्वान्मुख्य इति विशेषणं मुख्यजीवनहेतुत्वं चापामेव। "काममयोऽपि वाऽपोमयः" इति छान्दोग्ये जीवनस्य तदेकमात्राधीनत्वोक्तेः। अत एवजीवनमित्यपां नाम । असाधारण्येन तद्व्यपदेशोऽतो न विरोध इति भावः।

**मळगी –** सर्वदेवानामपि तस्मादुत्पत्तिमाह **मुख्यप्राण इति**। मुख्यप्राणो मुख्यवायुः । **इन्द्रियाणि** दशेन्द्रियाणि। तदभिमानिदेवाश्च। **देहश्च** शरीरमपि। **तदुद्भवः** तस्मादुत्पन्नः । **सर्वं** रुद्रादिजगत् । मुख्यप्राणाधीनम् । **स** मुख्यप्राणः । **सदा विष्णोर्वशगः**विष्णुवशे स्थितः **।।७।।**

**लिंघेरी** – सर्वदेवानामपि तस्मादुत्पत्तिरित्याह **मुख्यप्राण** इति। **मुख्यप्राणः** वायुः । **इन्द्रियाणि** दशेन्द्रियाणि । **देहश्च तदुद्भवः** तस्मादुत्पन्नः। **सर्वं** जगत् मुख्यप्राणाधीनम् । **स** मुख्यप्राणः सदा **विष्णोः वशगः** विष्णुवशे स्थितः ।।७ ।।

**नारायणपण्डित–** तथा प्राणाः, तत्प्राक् श्रुतेश्च, तत्पूर्वकत्वाद्वाचः, सप्तगतेर्विशेषित्वात्, अणवश्च, श्रेष्ठश्च इति नयषट्कार्थः मुख्यप्राणश्चेन्द्रियाणीति। इन्द्रियाणि तदुद्भवानि विष्णोरेवोत्पत्तिमन्ति। मुख्यप्राणश्च तदुद्भवः। संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादित्यस्यार्थः देहश्चैव तदुद्भव इति। देहादिलक्षणरूपनामात्मकप्रपंचोऽपि विष्णूद्भव एव । चक्षुरादि-वत्तु तत्सहशिष्ट्यादिभ्यः इत्यस्यार्थः मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदेति। सर्वजगत्सदा मुख्यप्राणवशेऽस्ति । सः मुख्यप्राणः सदा विष्णोर्वशगः सन् अस्ति।

**गूढकर्तृक** – एतत्पादार्थं संगृह्णात्यणुभाष्यकारः भगवान् पूर्णप्रज्ञः। **मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः। मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा। सर्वदोषोज्झितस्त-स्माद्भगवान्पुरुषोत्तमः। उक्ता गुणाश्चाविरुद्धास्तस्य वेदेन सर्वश** इति। तथा प्राणा इत्यधिकरणषट्कार्थः **मुख्यप्राणश्चेन्द्रियाणि इति। इन्द्रियाणि तदुद्भवानि** विष्णोरेवोत्पत्तिमन्ति। मुख्यप्राणश्च तदुद्भवः । देहश्चैव तदुद्भव इति संज्ञेत्यधिकरणार्थः। देहादिलक्षण-रूपनामात्मकप्रपंचोऽपि विष्णूद्भव एव। चक्षुरादिवत्वित्याद्यधिकरणार्थः **मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा** इति। सर्वं चेतनाचेतनात्मकं जगत्सदा मुख्यप्राणवशेऽस्ति स मुख्यप्राणः सदा विष्णोर्वशगः सन्नस्ति।

**सत्यनाथीया** – पादार्थमुपसंहरति **सर्व** इति।

**सर्वदोषोज्झितस्तस्माद्भगवान् पुरुषोत्तमः।**
**उक्ता गुणाश्चाविरुद्धास्तस्य वेदे न सर्वशः ।।९।।**

**सत्यनाथीया–** तस्मादुक्तरीत्या श्रुतीनामन्योन्यविरोधाभावात् अकर्तृत्वादिसर्वदोषोज्झितः। तस्माद् भगवान्पूर्णः तस्मात्पुरुषोत्तमः सर्वोत्तम इत्यर्थः। अध्यायमुपसंहरति **उक्ता गुणा** इति । सर्वशः वेदनोक्ता सर्वे तस्य विष्णोर्गुणा आनन्दाद्या जगत्कर्तृत्वादयश्च गुणाः अविरुद्धाः। युक्त्यादयश्च गुणा अविरुद्धाः। युक्त्यादिचतुर्विधविरोधरहिता इति सिद्धम् ।

**।। इति श्रीसत्यनाथतीर्थमुनिविरचिताणुभष्यविवरणे द्वितीयोऽध्यायः ।।**

**तत्वमञ्जरी–** अन्तिमपादद्वयार्थोपसंहारं सूचयन्नध्यायार्थमुपसंहरति। **सर्वदोषोज्झितः तस्माद्भगवान् पुरुषोत्तमः। उक्ता गुणाश्चाविरुद्धास्तस्य वेदेन सर्वशः।** अत्रोत्तरार्धेऽपि

तस्मादित्यस्यानुवर्तनेन पादार्थोपसंहारस्तावद्बोध्यः। तथा हि तस्माद्विरोधिभूतसर्वश्रुतीनां सावकाशितत्वात्तस्य भगवतः उक्ताः पूर्वाध्यायोक्ताः गुणाः स्रष्टृत्वादयो गुणाः सर्वशो वेदेन बाह्ययुक्त्युपेतेन च वेदेन, यद्वा अधिभूताधिदैवपरमात्मजीवविषयेण अध्यात्मप्राणादिविषयेण च सर्वेण वेदेनेत्यर्थः, अविरुद्धाः इत्यर्थः।

समग्रश्लोकेनाध्यायार्थोपसंहारः। तथा हि तस्मात्सर्वविरोधानां परिहृतत्वात् भगवान् पुरुषोत्तमः सर्वदोषोज्झितः न केवलमेतावत् तस्य भगवतः सर्वशो वेदेन कृत्स्नवेदसमन्वयेन पूर्वाध्यायोक्ता गुणाश्चाविरुद्धा युक्त्यादिविरुद्धा न भवन्तीत्यर्थः।

**संक्षेपभाष्यविवृतौ राघवेन्द्रेण भिक्षुणा।**
**कृतायां तत्वमञ्जर्यां द्वितीयोऽध्याय ईरितः।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्यां द्वितीयाध्यायस्य चतुर्थः पादः।।**

**आनन्दमाला** – पादार्थेन सहैवाध्यायार्थमपि निगमयति- **सर्वदोषोज्झितस्तस्माद्भगवान् पुरुषोत्तमः। उक्ता गुणाश्चाविरुद्धास्तस्य वेदेन सर्वशः** इति। अस्मिन् पादे तावत्सर्वोत्पादकत्वात् सर्वस्य तदधीनत्वाच्च भगवान् विष्णुरेव सर्वेश्वर इति ह्यर्थादुक्तम् । तत्रोक्तयुक्तिप्रवाहात् सर्वेश्वरत्वरोधकैः सर्वैरपि दोषैः स उज्झितः। तस्य सर्वेश्वरत्वसिद्धये अस्माभिरुक्ताः सार्वज्ञ्यादिगुणाश्च वेदेन न विरुद्धाः। तस्य वेदस्य सर्वप्रकारयुक्तिसाहित्ये केवलत्वेऽपि । कुतः? तादृग्वेदस्यानन्तयुक्तिसहितानन्तश्रुतिविरोधात् । न च तस्याप्यप्रामाण्यम्। एतदविरुद्धार्थसम्भवनियमात् । अत एव गतिसामन्यमवष्टभ्य सर्वथा इति दृढमेव निगमयाञ्चक्रे।

स सर्वेश्वरो विष्णुर्भगवानध्यायोपन्यस्तप्रमाणसामर्थ्यात् सर्वकर्तृत्वविरोधिभिः सर्वदोषैरुज्झितः। अज्ञानपारतन्त्र्यादिभिः गर्भीभावजन्मादिभिः अशनायापिपासादिभी रागद्वेषादिभिर्गरिष्ठैर्लघिष्ठैर्वा सर्वैरपि दोषैरुज्झितः। ये चास्य विष्णोरनन्तवेदपदसमुदायेन योगवृत्तितः प्रतिपादितानन्तगुणाश्च- तुर्धाप्यविरुद्धाः। तथा हि – स्मृत्यादियुक्तिभिः साङ्ख्यादिसमयैः वियदादिकेवलश्रुतिभिः प्राणादिसयुक्तिश्रुतिभिरित्येभिः प्रत्येकमपि चतुर्विधैर्विरोधिप्रमाणैरविरुद्धाः। कथमेतदिति चेत् षोडशप्रकारमपीदं किञ्चित् सदोषं किञ्चिन्निर्दोषमिति द्विविधम् । तत्र सदोषस्य भगवद्गुणनिषेधकर्मण्यशक्तिः। निर्दोषस्यानारम्भ एव। तस्मादुभयथाप्यविरुद्धा एव चशब्दान्निर्दोषत्वं च हरेरविरुद्धम् । "गुणाः श्रुताः" (सौपर्ण)इत्यादिश्रुतेः।।

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां द्वितीयाध्यायस्य चतुर्थः पादः**

**द्वितीयाध्यायः समाप्तः।**

**नृसिंहतीर्थ –** अध्यायार्थमुपसंहरति **सर्व** इति। तस्मादिति आदौ ग्राह्यम् । चो यस्मादित्यर्थे। यस्मात्कारणात्। **तस्य** पुरुषोत्तमस्य । **सर्वशः** सर्वेण वेदेन । जातावेकवचनम् । सर्वैर्वेदैरुक्ताः प्रतिपादिताः **सर्वशः** सर्वे गुणाः सर्वशः सर्वैर्युक्त्यादिभिरविरुद्धाः विरुद्धा न भवन्ति । तस्मात्पुरुषोत्तमः सर्वदोषोज्झितः सर्वदोषरहित इत्यर्थः। भगवानिति मध्येऽपि मंगलार्थम् । विशिष्टवस्तुसंकीर्तनमेव मुख्यतो मंगलं किं ततोऽन्यं मंगलं नामेति।

## इति श्री अणुभाष्यभावप्रकाशिके द्वितीयोऽध्यायः।

**श्रीनिवासतीर्थीया –** स मुख्यप्राणः सदा विष्णोर्वशगः सन्नस्तीति पादार्थमुपसंहरति **सर्वदोषोज्झित** इति। तस्मादुक्तरीत्या श्रुतीनामन्योन्यविरोधाभावादकर्तृकत्वादि-सर्वदोषोज्झितः। तस्मात् भगवान्पुरुषोत्तमः सर्वोत्तम इत्यर्थः। अध्यायार्थमुपसंहरति। **उक्ता** इति। वेदेनोक्ताः सर्वशः सर्वे तस्य विष्णोर्गुणाः आनन्दाद्यादिजगत्कर्तृत्वादयश्चाविरुद्धा युक्त्यादिचतुर्विध-विरोधरहिताः सिद्धाः इति। ज्ञेयमित्यर्थः।

**।। इत्यणुभाष्यविवरणे द्वितीयाध्यायस्य चतुर्थः पादः ।।**

**छलारी –** अध्यायार्थं उपसंहरति – **तस्मात् सर्वदोषोज्झित** इति। चशब्दो यस्मादित्यर्थे। यस्मात् कारणात् तस्य पुरुषोत्तमस्य सर्वशः – सर्वेण वेदेन जातावेकवचनम् । सर्वैः वेदैरुक्ताः कृत्स्नवेदसमन्वयेन पूर्वाध्याये प्रतिपादित इति यावत् । सर्वशः सर्वे गुणाः स्रष्टृत्वादयो गुणाः सर्वशः सर्वैः युक्तिसमयादिभिः अविरुद्धाः पूर्वोक्तप्रकारणे विरुद्धा न भवन्ति, तस्मात् पुरुषोत्तमः सर्वदोषोज्झितः सर्वदोषरहित इत्यर्थः। **भगवान्** इति मध्येऽपि मङ्गलं कर्तव्यमिति सूचयति। विशिष्टवस्तुसङ्कीर्तनस्यैव मुख्यतः मङ्गलत्वादिति ।।१३।।

**मदाचार्यमनोधाममध्वमानसमञ्चके।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां द्वितीयाध्यायस्य चतुर्थः पादः ।।**

**नारायणाचार्य–** एवं चतुर्विधविरोधपरिहारस्य फलमाह **सर्वदोषोज्झितस्तस्मात् भगवान् पुरुषोत्तमः**। क्षराक्षरपुरुषाभ्यां जीवप्रकृतिरूपाभ्यामुत्तमः। उक्तरीत्या प्रकृत्यादिकर्तृत्वनिरासे सति जगत्कर्तुरितस्य तदुत्तमत्वं सिद्धं भवति। न केवलं विरोधपरिहारेण दोषाभावमात्रसिद्धमपि तु प्रथमाध्यायोक्तानन्तगुणवत्त्वेऽपि विरोधाभावात्तदपि दृढीकृतं भवति इत्याशयेनाह **उक्ता गुणाश्चाविरुद्धास्तस्य वेदेषु सर्वशः** इति । हरेः सर्वेष्वपि वेदेषु उक्ताः पूर्णानन्दत्वादयो गुणाश्च

अविरुद्धाः विरोधपरिहृताः अतस्तस्यैतत्सृष्ट्याद्यष्टकर्तृत्वेन परब्रह्मत्वं मुमुक्षुभिरुपास्यत्वं सिद्धमिति सर्वमवदातंमिति भावः ।।

।। इति नारायणकृतावणुभाष्यप्रप्रंचने तुरीयोऽङ्घ्रिःपर्यगमद् द्वितीयाध्यासङ्गतः ।।

**मळगी –** सर्वस्य विष्ण्वधीनत्वाद्विष्णुरेव निर्दोष इत्याह । **सर्वदोषोझ्झित** इति। यतः **तस्य** नारायणस्य **वेदेन उक्ताः** प्रतिपादिताः। **सर्वशः** समस्ताः । **गुणाः** ज्ञानानन्दादयः। **अविरुद्धाः** परस्परं युक्त्यादिविरुद्धाः न । **तस्मात्पुरुषोत्तमः** क्षराक्षरपुरुषश्रेष्ठो **भगवान्** श्रीनारायणः। **सर्वदोषोझ्झितः** सर्वैः समस्तैः दोषैः चिन्तासन्तापादिभिः उझ्झितः रहितः ।।८।।

इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां द्वितीयाध्यायस्य चतुर्थः पादः ।।

**लिंघेरी –** सर्वस्य विष्ण्वधीनत्वाद्विष्णुरेव निर्दोष इत्याह **सर्वदोषोझ्झित** इति। यस्मात्कारणात् **भगवान् सर्वदोषोझ्झितः** सर्वदोषरहितः तस्मात्कारणात् पुरुषोत्तमः वेदोक्तः । **सर्वशः तस्य** नारायणस्य गुणाः **अविरुद्धाः** परस्परविरोधरहिताः ।।८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने द्वितीयाध्यायः ।।

**नारायणपण्डित–** पादार्थमुपसंहरति **सर्व** इति। तस्मादुक्तरीत्या श्रुतीनामन्योन्यविरोधाभावात् अकर्तृत्वादिसर्वदोषोझ्झितः। तस्माद्भगवान् पूर्णगुणः। तस्मात् **पुरुषोत्तमः** सर्वोत्तम इत्यर्थः। अध्यायार्थमुपसंहरति **उक्ताः गुणा** इति । **सर्वशः** वेदेनोक्ताः **सर्वशः** सर्वे **तस्य गुणाः** विष्णोर्गुणाः आनन्दाद्याः जगत्कर्तृत्वादयश्च **अविरुद्धाः** युक्यादिचतुर्विधविरोधरहिता इति सिद्धम् । **अधिकरणानि १३ सूत्राणि २३**

।। इति श्रीमन्नारायणपण्डिताचार्यविरचितब्रह्मसूत्रस्यार्थसंग्रहे द्वितीयाध्यायः ।।

**गूढकर्तृक –** पादार्थमुपसंरति **सर्व** इति। तस्मादुक्तरीत्या श्रुतीनामन्योन्यविरोधाभावात् अकर्तृत्वादिसर्वदोषोझ्झितस्तस्माद्भगवान् पुरुषोत्तमः सर्वोत्तम इत्यर्थः। अध्यायार्थमुपसंहरति। **उक्ता** इति। वेदेनोक्ताः सर्वशः सर्वे तस्य गुणाः विष्णोरानन्दाद्याः जगत्कर्तृत्वादयश्चाविरुद्धाः। युक्त्या चतुर्विधविरोधरहिताः सिद्धा इति ज्ञेयम् । **द्वितीये चतुर्थपादार्थो निरूपितः ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने द्वितीयाध्यायः ।।

## अथ तृतीयाध्यायः

**अणुभाष्यम्**

**शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा।**
**मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् ।।१।।**

**याति तस्माद्विरक्तस्सन् ज्ञानमेव समाश्रयेत्।।२।।**

**सत्यनाथीया–** तदन्तरप्रतिपत्ताविति नयार्थमाह **शुभेन** इति। शुभेन कर्मणा स्वर्गं यान्ति इति । संयमनेत्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनादित्यादेस्तात्पर्यमाह **निरयं** इति। विकर्मणा सत्कर्माकरणेन निषिद्धकर्मणा निरयं यातीति। न तृतीये तथोपलब्धेरित्यादेस्तात्पर्यमाह **मिथ्याज्ञानेन** इति। मिथ्याज्ञानेन विकर्मणा च तमो यातीति। भाक्तं वा अनात्मवित्वात्तथा हि दर्शयतीत्यस्यार्थमाह **ज्ञानेन** इति। अपरोक्षज्ञानेनैव परं पदं मोक्षं यातीति। पादार्थमुपसंहरन् उत्तरपादार्थं दर्शयति **तस्मात्** इति। स्वर्गादिषु विरक्तः सन् मोक्षसाधनं भक्तिपूर्वकमुपासनं समाश्रयेत् सम्पादयेदित्यर्थः ।

**।। इति अणुभाष्ये तृतीयाध्यायस्य प्रथमः पादः ।।**

**तत्वमञ्जरी–** एवमुक्तदिशा निर्दोषाऽनन्तगुणो विष्णुश्चेत् किं मया कार्यमित्यधिकारिणः शङ्कायां मुक्तिहेतुभगवत्प्रीत्यर्थं साधनमनुष्ठेयमिति भावेन साधनविचारार्थोऽयमध्याय इति भाष्याद् व्यक्तम् ।

तत्राद्यपादे गत्यागतिस्वर्गनरकगर्भवासादिस्वरूपस्यैवोक्त्या मुक्तिहेत्वीशप्रीतिसाधनस्यानुक्तेः कथमस्य पादस्य एतदध्यायेऽन्तर्गतिरिति चोद्यनिरासाय फलतोऽन्तर्भावोक्तिपरतया **तस्माद्विरक्तः सन् ज्ञानमेव समाश्रयेत्** इत्यन्तिमभाष्यमादावाकृष्य योज्यम् । जीव इत्यनुवृत्तिः शेषो वा । तस्मादिति ल्यब्लोपे पञ्चमी। तदनुसन्धायेति। एतत्पादप्रतिपाद्यमनुसन्धाय जीवो विरक्तो भवन्निति ज्ञानान्यसाधने तद्जन्यफले च वैराग्याय स्वर्गादिस्वरूपनिरूपणमत्र क्रियत इत्यर्थः।

ननु कथं वैराग्यमपि मुक्तिहेतुगतिजनकम् । येन साधनाध्यान्तर्भावोऽस्य पादस्य स्यादित्यतोऽपि **तस्माद्विरक्तः सन्** इति। तस्माद्वैराग्यात् । विशब्दवाच्ये परमात्मनि, "विः पक्षिपरमात्मनोः" इत्यभिधानात्, विशेषेण स्वरतः स्नेहयुक्तः भक्त इति यावत् । भवन्निति । अन्यत्र वैराग्यात् भगवति भक्तिदार्ढ्यं भवतीत्यर्थः। ननु तावतापि कथमीश्वरप्रीतिः। "प्रियो हि ज्ञानिनोऽत्यर्थं अहं स च मम प्रियः" इति ज्ञानस्यैव मुक्तिहेतुप्रीतिजनकत्वोक्तेरित्यनूक्तम् – **ज्ञानमेव समाश्रयेत्** इति। अन्यत्र वैराग्याद्भगवति दृढभक्तिमान् सन् , संशब्दोक्तैः श्रवणमनननिदिध्यासनरूपसाधनैः

ईश्वरज्ञानमेवाश्रयेदित्यर्थः। एवं परम्परया वैराग्यस्य मुक्तिहेतुज्ञानोपायत्वोक्त्या वैराग्यभक्त्युपासनज्ञानपादानां चतुर्णां क्रमबीजमपि सूचितम् । तदुक्तमनुभाष्ये (३-३-१)

वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् । आपरोक्ष्यं भवेद्विष्णोरिति पादक्रमो भवेत्।

ननु (वाराह) "भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्" "भूतानां विनिवृत्तिस्तु मरणं" (भारत)इति स्मृतिभ्यां मृतिमात्रेण मुक्त्यवगमात् किं वैराग्यादिसाधनेनेत्यतः शुभादिकृतः मृत्वा लोकान्तरं गच्छतो जीवस्य भूतैरविनाभावसमर्थनार्थं सूत्रम् - **तदन्तरप्रतिपत्तौ रंहति** इत्यादि। तत्र विशेषाशङ्कासमाधानाभ्यां तदर्थस्यैव समर्थनार्थं **त्र्यात्मकत्वात्** इत्यादीनि पञ्चाधिकरणानि । तेषां सूत्राणां तात्पर्यार्थं भाषते - **शुभेन कर्मणा स्वर्ग** इति । जीव इत्यन्वेति। यातीत्याकृष्यते। इह मृत्वा गच्छन् जीवः शुभेन कर्मणा स्वर्गं याति। न तु शुभकर्मकृत् मुक्त्याख्यं परं पदं यातीत्यर्थः । तथा च मरणमात्रेण पुनरावृत्तिमल्लोकस्यैव प्राप्त्या मोक्षाभावात् , भूतनिवृत्तेः मुक्तिहेतुत्वेऽपि मृतौ निःशेषभूतनिवृत्तेरभावात्, तदर्थं काम्यशुभकर्मणि वैराग्यं विधेयमिति भावः ।।१-६ ।।

ननु तथापि "अपाम सोमममृता अभूम" (ऋ.सं.८-४८-३)इत्यादिना शुभकृतोऽपि मुक्तिप्रतीतेः न पुण्ये वैराग्यं युक्तमित्यतः प्राप्तम् - **भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति** इति । तस्याप्यर्थः - **शुभेन कर्मणा स्वर्गम्** इति । ज्ञानेनैव परं पदं याति इत्येतदप्याकृष्यते । काम्यकर्मकृच्चेत् तदा सोमयागादिरूपशुभकर्मणा स्वर्गं याति। न तु मोक्षं नापि ज्ञानमित्यर्थः। "अपाम" (ऋ.सं.८-४८-३) इति श्रुतौ श्रुतममृतं किञ्चित्कालीनं स्वर्गाख्यमेव। न तु मुख्यमिति भावः। अकाम्यकृच्चेत् तदा सोमयागाद्यकाम्यशुभकर्मणा। जातेनेति शेषः। ज्ञानेनैव परं याति न तु साक्षादित्यर्थः। साक्षादेव कुतो नेत्यतोऽपि - **ज्ञानेन** इति। यतो ज्ञानेनैव परं पदं याति नत्वन्येनात इति योज्यम् । "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय" (तै.आ.३-१३) इति श्रुतेरिति भावः। "ज्ञानेनैव परं पदं" इत्यस्यात्रैव वाच्यत्वेऽपि ज्ञानफलयोः सर्वातिशयद्योतनायान्ते भाषणम् ।।७।।

नन्वथापि कृतस्य कर्मणः स्वर्गादौ भोगेन निःशेषकरणात्, "कर्मणा बध्यते जन्तुः" इत्यादेः कर्मनिबन्धनस्य बन्धस्य कर्माभावे स्थित्ययोगात् किं वैराग्येणेत्यतः प्राप्तम् - **कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम्** इति । तस्याप्यर्थः - **शुभेन कर्मणा स्वर्गम्** इति । विकर्मणेति यातीति चान्वेति। कर्मणेत्यादितृतीया सहयोगे "सहयुक्तेऽप्रधाने" (२-३-१९)इति पाणिनीयस्मृतौ विनाऽपि तद्योगं तृतीया भवतीति तदभियुक्तव्याख्यानात् । वृद्धो यूना तल्लक्षणश्चेदेव विशेषः इत्यत्रेव । अस्वर्गमिति च पदच्छेदः। तच्च स्वर्गादन्यमस्वर्गमिति भूलोकपरः। नञ् युक्तमिव युक्तमन्यस्मिन् सदृशादिकरणे प्रतिपत्तिं गमयति इति शाब्दिकन्यायात् । "इमं चामुं चोभौ लोकावनुसञ्चरति" इत्यादौ

**द्यावाभूम्योः प्रतिद्वन्द्वितया प्रसिद्धेश्च**। तथा च कर्मणा विकर्मणा च सह तद्युक्त एव अस्वर्गं भूलोकं यातीत्यर्थः। स्वर्गाल्लोकाद्भूलोकं पुण्यादिकर्मशेषयुक्त एव प्राप्नोति। तथा हि । स्वर्गादौ भोगेन कर्मणो निःशेषनाशाभावात् तत्र वैराग्यं कार्यमिति युक्तमिति भावः ।।८।।

नन्वथापि कर्मी येन मार्गेण स्वर्गादिलोकं गतः तेनैव मार्गेण भूलोकं प्रत्यागच्छति। अपरिचितमार्गान्तरकृतक्लेशाभावाच्च अतीव कर्मादौ वैराग्यं न विधेयमित्यतः प्राप्तम् – **यथेतमनेवं च** इति। तस्याप्यर्थः – **शुभेन कर्मणा स्वर्गं याति** इति।

**स्वर्गमस्वर्गमिति च द्वेधा च पदच्छेदः**। आङोप्यत्रोपश्लेषः । यथा तथेति शेषः। तथा च **शुभेन कर्मणा स्वर्गं यथा येन मार्गेण याति अस्वर्गं भूलोकं च** ईषत् तथा यातीत्यर्थः। येन मार्गेण स्वर्गं प्राप्तः तेनैव मार्गेण किञ्चिद्दूरमागत्य ततोर्वाङ् मार्गान्तरेण भूलोकं यातीत्यर्थः। "धूमादभ्रं" (काषायण)इत्यादिभाष्योक्तश्रुतेरिति भावः।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातङितं विद्याद्वाक्यस्मरणयोरङित्।।

इति शाब्दोक्तेः ईषदर्थत्वं आङो बोध्यम् ।।९।।

नन्वथापि न कर्मणि वैराग्यम् । "रमणीयचरणा रमणीयं योनिमापद्यन्ते"(छां.उ.५-१०-७) इति गमनागमनादेः कर्माङ्गभूताचारफलत्वश्रवणेन कर्मफलत्वाभावादित्यतः प्राप्तम् – **चरणादिति चेन्न तदुपलक्षणार्थ** इत्यादिसूत्रत्रयम् । तस्याप्यर्थः – **शुभेन कर्मणा स्वर्गं याति** इति।

स्वर्गमस्वर्गं भूम्यादिकं वा यज्ञादिकर्मणा याति, न तु तदन्येन आचारेणेत्यर्थः। श्रुतौ चरणशब्दस्य यज्ञादिकर्मोपलक्षणार्थत्वस्य वा यज्ञादिकाम्यार्थत्वस्य वोपपत्तेरिति भावः ।।१०।।

ननु तर्हि अस्तु काम्ये यज्ञादिकर्मणि वैराग्यं, आगमनादेः यज्ञादिशुभकर्मफलत्वात् । न तु विकर्मणि वैराग्यम् । पापकृतः प्रत्यवायभयाभावेन पतनाभावात् । "बिभ्यत्पतति पादपात्" इति न्यायादित्यतः प्राप्तं – **अनिष्टादिकारिणामपि च** इत्यादिसूत्रत्रयम् । तदर्थमाह – **निरयं च विकर्मणा । मिथ्याज्ञानेन च तम** इति। यातीत्यन्वेति। वीत्यभाववाची विरुद्धवाची च । "नामरूपाद्विमुक्तः" इत्यत्रापि नामरूपाविमुक्तत्वमुच्यते "विप्रिय" इत्यादिवदिति षट्प्रश्नभाष्ये वीत्यस्याभावार्थत्वोक्तेः। अनिष्टाधिकारी हि द्विविधः। अज्ञो मिथ्याज्ञानी चेति। तत्र द्वयोः फलमुच्यते। विकर्मणा स्वोचितकर्माननुष्ठानेन विरुद्धकर्मणा पापकर्मणा च निरयं याति। नरकं च प्रतिपद्यते, न केवलं शुभफलाप्राप्तिमात्रमिति चार्थः। मिथ्याज्ञानिनोऽधिकं चाह । मिथ्याज्ञानेन तमश्च याति इति । नरकमनुभूय पश्चान्नित्यनरकं तमश्च प्राप्नोति। मिथ्याज्ञानार्हविकर्मणि मिथ्याज्ञाने च वैराग्यं विधेयमिति भावः ।।११।।

ननु नित्यनरको नाम नास्त्येव। "यावदिन्द्राश्चतुर्दश" इति नरकभोगस्यानित्यत्वोक्तेरित्यतः प्राप्तम् - **अपि सप्त** इति। तस्याप्यर्थः **निरयं तम** इति च नरकभेदोक्त्या सूचितः।

"रौरवोऽथ महांश्च" (भारत)इति स्मृतौ नित्यानित्यनरकविभागोक्त्या "यावदिन्द्राः" इत्यादेरनित्यनरकविषयत्वेन नित्यनरकस्य तमसो भावादिति भावः **।।१२।।**

नन्वथापि नरकस्य दुःखानात्मकत्वान्नरके तत्साधने वा वैराग्यं कार्यम् । न च तस्य दुःखरूपताङ्गीकर्तुं शक्या । तस्य दुःखात्मकत्वे तद्भोक्तृजीवाप्रेरकत्वे हरेः"सर्वं प्रवर्तयति" इति सर्वप्रेरकत्वश्रुतिविरोधेन तत्प्रेरकत्वे वाच्ये दुःखभोक्तृनरकस्थप्रेरकस्य हरेरपि दुःखभोगप्रसङ्गादित्यतो दुःखाभोगेनैव तत्प्रेरकत्वं हरेर्वक्तुं सूत्रं **तत्रापि च तद्व्यापारादविरोध** इति। तस्याप्यर्थमाह - **निरयं च विकर्मणा** इति। वेः विशब्दवाच्यस्य परमात्मनः कर्मणा प्रेरणरूपव्यापारेण जीवो निरयं च यातीति योज्यम् । न केवलमितरावस्थाः, नरकदुःखमपि तत्प्रेरणयैवानुभवति जीव इति चार्थः। दुःखरूपनरकानुभवितृप्रेरकत्वेऽपि ईश्वरस्य ईश्वरत्वादेव दुःखसाक्षात्कारकृतनीचोच्चता-रूपभोगाभावोपपत्तेरिति भावः **।।१३।।**

यत्तु यत्र दुःखं तत्र सुखमिति व्याप्तेः तमस्यपि सुखमस्तीत्यतः तस्य दुःखैकरूपत्वं वक्तुं - **न तृतीये तथोपलब्धेः** इत्यादिसूत्रपञ्चकम् । तस्याप्यर्थः । विकर्मफलदुःखरूपनिरयादपि मिथ्याज्ञानफलत्वेन तमसो विशिष्योक्त्या संगृहीतो बोध्यः। "तिर्यक्षु नरके चैव सुखलेशो विधीयते" (भवि.पु)इत्यादेः नरके सुखलेशसत्त्वेऽपि तमसि तदभावसूचनात् **।।१४।।**

नन्वथापि "अथैतयोः पथोर्नैकतरेण च तानीमानि च क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति" इति श्रुतौ एतयोर्देवयानपितृयानयोर्मध्ये "यान्येकेनापि पथा न गच्छन्ति तानीमानि अल्पानि सुखदुःखमिश्राणि सदा गत्यादिमन्ति" इति देवयानपितृयानरूपफल एव जीवानां स्वातन्त्र्यं प्रतीयते। न हि पुरुषप्रयत्नाविषये न गच्छन्तीति प्रयोगो युज्यते। अतो "मूले लब्धफलो नैव शाखाग्रं गन्तुमिच्छति" इति न्यायेन फल एव स्वातन्त्र्यात् किं वैराग्यसाधनेनेत्यतः प्राप्तम् **विद्याकर्मणोः** इति तु प्रकृतत्वादिति तदर्थमाह- **ज्ञानेनैव परं पदं याति** इति । शुभेन कर्मणा स्वर्गमित्यनुवर्त्यम् । कर्मणैवेत्येवकारान्वयः। शुभकर्मणैव स्वर्गं याति । भगवज्ज्ञानेनैव परमं पदं याति । न तु स्वर्गं परमं पदं वा स्वातन्त्र्येण यातीत्येवकारार्थः। तथा च फलरूपयोः परपदयानस्वर्गया-नरूपदेवयानपितृयानयोः ज्ञानकर्मरूपसाधकायत्तत्वेन जीवानां तत्र फले स्वातन्त्र्याभावादीशाधीनमपि स्वातन्त्र्यं कर्मादिरूपसाधन एवेति काम्यकर्मणि वैराग्यं कार्यमेवेति भावः **।।१५।।**

नन्वथापि न कर्मणि वैराग्यं युक्तम् । "धूमो भूत्वाभ्रं भवति" इति श्रुतौ कर्मकृतो महासुखहेतुदेवताभावस्योक्तेरित्यतः प्राप्तम् - **तत्स्वाभाव्यापत्तिरुपपत्तेः** इति। तस्याप्यर्थमाह -

**ज्ञानेनैव परं पदं याति** इति। शुभेनेत्याकृष्यान्वेति । स्वर्गमेवेत्येवकारान्वयः। शुभेन कर्मणा जीवः स्वर्गं याति । न तु देवतात्वादिकम् । कुतः ? यतो ज्ञानेनैव स्वयोग्यज्ञानेनैव परं उत्तमं पदं स्वर्गरूपं देवत्वं देवतापदवीं वा याति। न तु कर्मणा " विद्यागम्यं पदं यस्मात्" (गारुड)इत्युक्तेरित्यर्थः। "धूमो भूत्वा" इति श्रुतिस्तु "धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव च" (गारुड)इत्यादिस्मृतेः देवतासायुज्यपरेति भावः ।।१६।।

यत्तु स्वर्गादवरूढस्य कर्मिणः "यथेतमाकाशमाकाशाद्वायुः वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति" (काषायण)इत्यदौ बहुस्थानप्राप्त्युक्तेः, अनेकस्थानेषु कल्पान्तं तत्तद्देवतासायुज्येन महासुखहेतुत्वात् किं कर्मणि वैराग्येणेत्यतः प्राप्तम् – **नातिचिरेण विशेषात्** इति सूत्रम् ।

तदर्थस्य "शुभेन कर्मणा स्वर्गं" इति प्राचीनभाष्येणैव भोगावशिष्टशुभकर्मादिसहितो जीवः ईषत् अल्पकालेनैव अस्वर्गं स्वर्गादन्यत् भूम्यादिकं याति, न तु चिरेणेति योजनया संग्रहसम्भवान्न पृथगुक्तिः। "स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात्पूर्वमेव तु। मातुः शरीरमाप्नोति" (नारदीय) इत्यादेरिति ।।१७।।

ननु "त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्ते" इति श्रुतौ कर्मिणो व्रीह्यादिभावश्रवणात् सुखसाधनतया वेदोपदिष्टकर्मवतां व्रीह्यादिभावेन दुःखित्वे "ब्राह्मणो निर्वेदमायात्" इत्यादिवेदविहितवैराग्यादावपि तच्छङ्का स्यात् । यज्ञानां हिंसायुतत्वेन ततः पापस्य सम्भवेन दुःखहेतुत्वस्य न्याय्यत्वेन सुखहेतुत्वेन विधानायोगाच्चेत्यतः प्राप्तम् – **अन्याधिष्ठिते पूर्ववदभिलापात्** इत्यादियोगद्वयम्।

तदर्थस्यापि शुभेनैवेति भाष्येणैव शुभेन कर्मणा स्वर्गं यातीति यज्ञादिकर्मणः शुभत्वस्वर्ग-रूपसुखहेतुत्वयोरुक्त्या, तथा शुभेन कर्मणा अस्वर्गं स्वर्गादन्यत्, पदमित्यन्वेति, व्रीह्यादिस्थानमेव याति, न तु तद्भावं प्राप्नोतीत्युक्त्या च संग्रहो बोध्यः। यागीयहिंसायाः ब्रह्महिंसावत् निषिद्धत्वाभावात् , प्रत्युत "वायव्यं श्वेतमालभेत्" इति विहितत्वाच्च पापाहेतुत्वेन शुभत्वात् पापहेतुत्वेनैव दुःखानापादकत्वात् तद्युक्तयज्ञानां सुखसाधनत्वं दुःखहेतुत्वं च युक्तमेव। "व्रीहियवाः" (छा.उ.५-१०-६) इति श्रुतिस्तु व्रीह्याद्यभिमानिजीवेन स्थानैक्यपरेति भावः ।।१८।।

यत्तु "स्वर्गादवागतश्चापि मातुरेवोदरं व्रजेत्" इत्युक्तेः स्वर्गादवरूढस्यापि पितृप्रवेशं विनैव मातृप्रवेश इत्याशङ्क्य पितृक्रमेण मातृप्रवेशं वक्तुं सूत्रम् – **रेतःसिग्योगोऽथ** इति। यच्च "देहं गर्भस्थितं क्वापि प्रविशेत्स्वर्गतो गतः" इत्युक्तेः पितृप्रवेशं विनैव मातृप्रवेशोऽस्तु। आस्तीकादौ दर्शनात् । द्रुपदमान्धातृशुकादौ दर्शनान्मातृप्रवेशोऽपि व्यर्थ एवेत्याशङ्क्य कर्मिणां पितृक्रमेण योनिद्वारा मातृप्रवेशोक्त्यर्थं सूत्रम् – **योनेः शरीरम्** इति।

तत्र पित्रादिक्रमेणैव जननमौत्सर्गिकम् । क्वचिदन्यथाभावो बलवत्कारणकृत इति भावेन प्रसिद्धत्वात् । पित्रादिक्रममुक्त्वा अन्यथाभावेऽपि हेतुमाह - **ज्ञानेनैव परं पदं याति** इति।

शुकादिजीवा यत्परं अन्यत्पदं स्थानं प्रसिद्धं मातापित्रादिस्थानं विना यत्स्थानान्तरपुरुषमातृप्रभृतिं यान्ति तज्ज्ञानेनैव भगवज्ज्ञानप्रभावेणैवेत्यर्थः। तेषां ज्ञानित्वेन ज्ञानप्रभावात् क्वचिदन्यथात्वेऽपि कर्मी पितृप्रवेशक्रमेणैव शरीरं प्रतिपद्यत इति नियमात् विधेयमेव कर्मणि वैराग्यमिति तदुक्तमनुभाष्ये - जीवपुरुषयोनीनां सङ्गातिनियमोज्झितिम् । अथशब्देन भगवानाह कारणतश्च ताम्।। इति।

उक्तं च न्यायविवरणे -

विशेषकारणादेव विशेषाज्जनिरिष्यते। सामान्यजननं चैव नृणां सामान्यहेतुतः।। इति ।

उक्तं च सुधायां "जन्मकारणदृष्टाकृष्टो जन्तुः बीजादिसम्बन्धेन शरीरमापद्यत इत्युत्सर्गः। स च क्वचिज्ज्ञानतपोयोगादिलक्षणेन कारणविशेषेणापोद्यते" इत्यादि। एवं संक्षेपतो निरूपितस्य एतत्पादीयाशेषनयार्थस्य परम्परया मुक्तिहेतौ वैराग्ये उपयोगं वदन्नुपसंहरति - **तस्मात्** इति । ज्ञानादन्यस्य अस्थिरानर्थफलसाधनत्वात्, ज्ञानस्यैव स्थिरमहाफलसाधनत्वात् अन्यत्र विरक्तः सन् भगवज्ज्ञानमेव सम्पदोक्तभक्तिश्रवणसाधनैः आश्रयेत्, सम्पादयेदित्यर्थः ।।**१९-२०**।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्यां तृतीयाध्यायस्य प्रथमः पादः ।।**

**आनन्दमाला** - मोक्षसाधनं विधीयतेऽस्मिन्नध्याये । वस्तुनिर्णयस्य पुरस्तात् कृतत्वात् । तच्च साधनं ज्ञानमेव प्रधानमिति वदन्, तन्मूलसाधनं वैराग्यं प्रतिपादयत्यस्मिन्पादे। तत्प्रतिपादनं च कर्मादेर्मोक्षव्यतिरिक्तनानाफलत्वप्रकटनेन तन्निन्दनपूर्वकं भवति।

"तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्" (३-१-१) "यथेतमनेवं च" (३-१-९) "तत्स्वाभाव्यापत्तिरुपपत्तेः" (३-१-२३) "नातिचिरेण विशेषात्" (३-१-२४) "अन्याधिष्ठिते पूर्ववदभिलापात्" (३-१-२५) "रेतः सिग्योगोऽथ" (३-१-२७) "योनेः शरीरम्" (३-१-२८) इत्यधिकरणानि व्याख्याति - **शुभेन कर्मणा स्वर्गम्** इति। योऽयमिष्टापूर्तं वरिष्ठं मन्यमानस्तदनुष्ठाता प्रमूढः स तावत् तेन शुभेन कर्मणा विष्णोरीषत्प्रसादसाहित्यात् स्वप्नसुखकल्पं स्वर्गसुखं याति। तद्भुक्त्यवसाने ततः पुनरुद्बोधमिवाधःपातं च । तद् वक्ष्यमाणचशब्दाद् बोद्धव्यम् । अत्रायं विशेषः - धूमाद्यभ्राकाशमार्गेण चन्द्रलोकं गच्छति। तत आकाशवायुधूमाभ्रमेघवर्षमार्गेणेमं लोकमागच्छति। न च तत्र कर्मिणो धूमादिस्वारूप्यापत्तिः। नापि तत्पदप्राप्तिः। किन्तु ? तत्स्वाभाव्यापत्तिरेव। तस्यैवोपपत्तेः। न चागमनं मन्वन्तरान्तराले क्वचिदिति मन्तव्यम् । वत्सरात्पूर्वमेवेति नियमात् । न च तस्य व्रीह्यादिषु दुःखानुभवः।

प्रवेशमात्रवचनात्। रेतोरक्तसंयोगाच्छरीरी भूत्वा तत एव हि भोगान् भुंक्ते । एवं हीश्वरक्लृप्तिरिति ।। १–२ ।। ७–११ ।।

"अनिष्टादिकारिणामपि च श्रुतम्" (३–१–१३) इति सूत्रम् । **निरयं च विकर्मणा** इति। यश्च पुनर्विहितमकुर्वन् निषिद्धं वा कुर्वन् मूर्खः स तु कामक्रोधादिनाचरितेन विपरीतकर्मणा भगवद्वैमुख्याद् रौरवादिनामकं निरयं याति, चशब्दात्कथञ्चित् ततः पुनरुत्थाने तिर्यक्त्वं च । अथवा कथञ्चिन्निरयशब्दितं तिर्यक्त्वमेव याति। चशब्दात् पुनर्मानुष्यं च। अयं जीवः शुभेन कर्मणा स्वर्गं याति, विकर्मणा निरयम् , चशब्दात् पुनरिमं लोकं चेति हि तदुभयतः पुनरावर्तनं चशब्दो वक्ति। अनावृतियोग्यस्य तमसो मुक्तेश्च पृथगेव वक्ष्यमाणत्वात् ।।

"संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्" (३–१–१४) इति सूत्रम् । **मिथ्याज्ञानेन च तमः** इति। संयमनमनभूय केषाञ्चित् तत आरोहवाचिन एतत्सूत्रावयवस्य व्याख्यानं "निरयं च" इति वाक्येन कृतम् । तस्मादवरोहवाचिन एवेदं व्याख्यानम् । अयमर्थः – य एतद् वस्तुतत्त्वं समस्तमपि विपरीतं जानाति न हि किञ्चिदपि यथातथं वेत्ति, सर्वथाप्यतद्योग्यत्वात् । तद्यथा – अब्रह्म ब्रह्मत्वेन अन्यदनन्यत्वेन, सत्यं मिथ्यात्वेन मानममानत्वेन विपरीतं विपर्ययेण सरूपं सावयवं सगुणं सक्रियं सविशेषं चातद्वत्त्वेनेत्यादि सोऽयं मायी हरिगुरुवेदद्वेष्टा तदवमन्ता च सन्ततमिति भगवतोऽत्यन्तमप्रियः। अत एव सोऽन्यथाज्ञानी तेनान्यथाज्ञानेनान्धन्तमो नामकं नित्यनिरयं च याति। कुम्भीपाकनामकादनित्यनिरयाच्चावरुह्येति शेषः। चशब्दोऽवधारणे। न च कदाचित् ततः पुनरुत्तिष्ठते। नाप्यत्र कश्चित् सुखलेशः दुःखस्यापि न पुनर्ह्रासो विद्यते, यथाक्लृप्तपरिपूर्तिरिवेत्यादयोऽपि विशेषाश्चकारोपलक्षिताः। विस्पष्टमेव श्रुतिस्मृत्युपदिष्टत्वात्। न च तत्रापि प्रवर्तयितुर्विष्णोर्दुःखस्पृष्टिः शङ्क्या। "सर्वदोषोज्झितः" इत्यादिना दत्तोत्तरत्वात् ।।३–४।।६।।

"विद्याकर्मणोरिति तु प्रकृतत्वात्" (३–१–१८) इत्यधिकरणे तात्पर्यतो विवक्षितमर्थं वदन् "विद्यैव तु निर्धारणात्" (३–३–४८) इत्युपरि पठिष्यमाणमप्यधिकरणमिहैव व्याख्याति – **ज्ञानेनैव परं पदं याति** इति। अथ य एतद् वस्तुतत्त्वं समस्तं सम्यगेव जानाति च वदति च, न च किञ्चिदन्यथा व्यवहरति सम्यग्ज्ञानयोग्यत्वात्, तद्यथा – स्वतन्त्रं स्वतन्त्रत्वेन, परतन्त्रं परतन्त्रत्वेनेत्यादि यथाविषयमेव स तु सम्यग्ज्ञानी तेन सम्यग्ज्ञानेनैव भगवत्प्रसादसम्पदा देहोत्क्रान्त्यनन्तरं यथाप्रथितेन पथा गत्वा परं पदं वैकुण्ठादिनामकं विशिष्टस्थानं प्राप्नोति ।

तच्च ज्ञानं नारायणपरायणपरविद्याख्यसच्छास्त्राविरतावृत्तिजन्यं तद्भक्त्यादिगुणबृंहितं तदापरोक्ष्येण च युतमभिप्रेयते। "दर्शनाच्च" (३–३–४९) इति पृथक्सूत्रात् । यथाप्रथितश्च पन्था अर्चिरादिरिहैव वक्ष्यमाणः। तच्च स्थानं यथायोग्यपरिपूर्णसान्द्रानन्दैकभोजनायतनम् । न च

कदाचित् ततः पुनरावर्तते। असौ मोक्षी वैकुण्ठादिगतं परं पदं विष्णोरेव स्वरूपं सम्पद्यत इति वा तदर्थः। एवशब्दः कर्मादेर्मोक्षसाधनत्वं निवारयति।। ५ ।।

पादार्थं निगमयति - **तस्माद् विरक्तः सन् ज्ञानमेव समाश्रयेत्** इति। कर्मादिकमुक्तप्रकारेण मुक्तिव्यतिरिक्तस्यैव साधनमिति यत् तस्मान्मुमुक्षुः सन् तत्साधनभूतं सम्यग्ज्ञानमेव समाश्रयेत् । तच्चापरोक्षविषयं हि विवक्षितम् । वेदगम्यस्य विष्णोरापरोक्ष्यं चोपास्तिजन्यम् । सा च भक्त्यायत्ता। भक्तिरपि वैराग्यजन्या । तस्मात् तदर्थतया वैराग्यं प्रथमत आपादनीयम् । एवं ज्ञानस्य मूलसाधनत्वादेवास्य ''विरक्तः सन्'' इत्युक्तिः।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां तृतीयाध्यायस्य प्रथमः पादः ।।**

**नृसिंहतीर्थ** - साधनं निरूप्यते अस्मिन्नध्याये। तत्रादौ वैराग्यसाधनं निरूपयति **शुभेन** इति।। शुभेन कर्मणा स्वर्गं याति। विकर्मणा तु । चस्त्वर्थः। समुच्चयार्थो वा । अवधारणार्थो वा। विरुद्धकर्मणात्तु। अशुभकर्मणेत्यर्थः। निरयं याति। निरयेष्वपि नित्यतमस्तु मिथ्याज्ञानेन अयथार्थज्ञानेन सर्वं मिथ्येति ज्ञानेन याति। चस्त्वर्थः। स्वगेष्वपि परं पदं ज्ञानेनैव अपरोक्षज्ञानेनैव याति। तस्माद्विरक्तः सन् भौमस्वर्गस्रक्चन्दनादिविषयेषु विगतरागस्सन् ज्ञानमेवापरोक्षज्ञानमेव समाश्रयेत्

**।। इति नृसिंहतीर्थविरचित अणुभाष्यभावप्रकाशिके तृतीयाध्यायस्य प्रथमः पादः ।।**

**श्रीनिवासतीर्थीया-** अत्र तावदेतत्पादीयानां केषांचिदधिकरणानां तात्पर्यमाह **शुभेन** इति। ज्ञानेनैव परं पदं यान्तीत्यनेन रंहति सम्परिष्वक्तप्रश्न इत्यादि अश्रुतत्वादिति चेन्नेष्टाधिकारिणां प्रतीतेरित्यन्तानां षण्णां अधिकरणानामपि फलितमुक्तम् । तथाहि। अत्र खलु प्रसिद्धमरणस्यैव मोक्षत्वात्तस्य नियतत्वाद् व्यर्थं वैराग्यादीति प्राप्तपूर्वपक्षं निराकरोति **ज्ञानेनैव** इति। न प्रसिद्ध-मरणस्यैव मोक्षत्वं तस्य ज्ञानमात्रसाध्यत्वात्। मरणस्य ज्ञानाभावेऽपि जायमानत्वादित्यर्थः। तदुक्तं न्यायविवरणे ''ज्ञानादिगुणाधिक्योपदेशात्'' इति। तथा च मोक्षस्य ज्ञानसाध्यत्वात् तदर्थं वैराग्यादिकं आवश्यकमेवेति भावः। शुभेन कर्मणा स्वर्गं ज्ञानेनैव परं पदं यातीत्यनेनैव भाक्तं वाऽनात्मवित्वात् तथाहि दर्शयतीति तात्पर्यमुक्तम् । तथाहि। ''अपाम सोमममृता अभूम'' इति श्रुतेः। सुकरस्य कर्मणः मोक्षसाधनत्वेन व्यर्थो वैराग्यादिसम्पादनायास इति शंका निरस्यते। न कर्मणा मोक्षः अपामिति श्रुतेरन्यार्थत्वात् । अत्र हि सोमयागस्यामृतसाधनत्वं प्रतीयते स किं काम्यो वा अकाम्यो वा । आद्ये आह **शुभेन** इति। काम्येनेत्यर्थः। तथा च ''अमृतो वाव सोमपो भवति'' इत्यादिश्रुत्यनुसारेण अमृतशब्दो गौण्या वृत्त्या स्वर्गपर इत्यक्तं भवति। अनेन भाक्तमिति सूत्रांशो व्याख्यातः। तदुक्तं भाष्ये ''भागतस्तदमृतत्वम्'' इति। अमृतशब्दस्य मोक्षार्थत्वमेव किं

न स्यादित्यतो अनात्मवित्वादिति हेतुं व्याचष्टे **ज्ञानेनैव** इति । मिथ्याज्ञानेन चेत्यतश्च-शब्दोऽनुवर्तते। स च हेत्वर्थकः। यस्मात्परमात्मज्ञानेनैव परं पदं मोक्षं यान्ति। "नान्यः पन्था" इति श्रुतेः। तस्मान्मोक्षस्य न कर्मसाध्यत्वं श्रुत्यर्थः इत्यर्थः।। अकाम्यस्यापि यदि ज्ञानिसत्कृतं तदपि नाऽयं श्रुत्यर्थ इत्याह **शुभेन** इति। अत्र कर्मणः शुभत्वं फलाफलानभि-सन्धिपरमात्मभक्त्यनुसंधानादिपूर्वकत्वम् । "कर्मणा ज्ञानमातनोति" इत्यादिश्रुत्यनुसारेण परम्परया मोक्षसाधनत्वप्रतिपादकत्वं श्रुत्यर्थ इत्यर्थः। यदि ज्ञानिकृतं अकाम्यं कर्मादि तदपि नायं श्रुत्यर्थ इत्याह **शुभेन** इति। अत्र स्वर्गशब्देन मोक्षगतसुखातिशय उच्यते। "तत्सुखं स्वः पदास्पदम्" इति वचनात् । तथा च "स य आत्मानमेव लोकमुपास्ते" इत्यादिश्रुत्यनुसारेणामृत-शब्दस्तदेकदेशलक्षणया मोक्षगतसुखातिशयपर इत्युक्तं भवति। अधिकरणफलितमाह **तस्मात्** इति। यस्मात्काम्यकर्मणो स्वर्गसाधनं तस्माच्च ज्ञानेनैव मोक्षस्तस्मान्मुमुक्षुः तत्र काम्यकर्मणि विरक्तः सन् ज्ञानमेव सम्पादयेदित्यर्थः। यद्वा यस्मादेवं कर्मणो मोक्षसाधनत्वं नास्ति किन्तु ज्ञानस्यैव तस्मादिति वा। कृतात्येऽनुशयवान्दृष्टश्रुतिस्मृतिभ्यामित्यधिकरणतात्पर्यमाह **शुभेन** इति। शुभेन कर्मणा साधनेन स्वर्गं प्रतिगतः पुरुषः कर्मणा सहैव याति गच्छति। ततः शेषेणेमं लोकम्। भुक्तशेषानुशयवानिति वचनादित्यर्थः। यथेतमनेवं चेति नवमाधिकरणतात्पर्यं दृष्टव्यमित्यभिप्रेत्य चरणादिति चेन्न तदुपलक्षणार्थेति काष्र्णाजिनिरित्यधिकरणतात्पर्यमाह **शुभेन** इति। यतो "नाऽन्यः पंथा" इत्यादि श्रुतिविरोध इत्यत आह **शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा** इति। अत्र स्वर्गनिरयशब्दावुत्तमाधमजन्मपरौ। तथा च रमणीयचरणाः शुभकर्माणः रमणीयां योनिमापद्यन्ते कपूयचरणा अशुभकर्माणः कपूयां योनिमिति चरणशब्दस्य कर्मोपलक्षकतया तद्वाचकतया चरणश्रुत्यर्थोपपत्तेर्न विरोध इति भावः। अनिष्टादिकारिणामित्यधिकरणतात्पर्यमाह **कर्मणा स्वर्गं** इति। अत्र स्वर्गशब्देन गतागतं लक्ष्यते। तथा च यतोऽशुभकृतस्तेऽशुभमनुभूयावर्तन्ते इत्यादिश्रुत्या अनिष्टादिकार्यपि पुरुषः कर्मणा गतागतं याति। अतो न तेषां तदभाव इति भावः। न केवलमेषां गतागतमात्रं किन्तु अधिकमपि दुःखमस्तीति प्रतिपादनार्थं सूत्रं संयमनेत्विति। तत्तात्पर्यमाह **निरयं च** इति। निरयशब्दः संयमनार्थः। नित्यनरकार्थश्च। उपलक्षणमेतत् । आरोहमित्यपि ग्राह्यम्। ततश्च ते अशुभकृत इत्यादिश्रुत्या विकर्मणा असत्कर्मकरणेन निषिद्धकर्मणा च निरयं संयमनं याति। ततः कश्चिदारोहं याति । कश्चिन्नरकं याति इति सूत्रार्थः सम्पद्यत इति भावः। अपि सप्तेत्यधिकरणतात्पर्यमाह **निरयं च** इति। अत्र निरयशब्दो नित्यानित्यनरकपरः। तथा च रौरवोऽथ महांश्चैवेत्यादि स्मृत्यनुसारेण विभावो नित्यानित्यसम्भवान्नित्यनरकोक्त्यसम्भव इति भावः। तत्रापि च तद्व्यापारादित्यधिकरणफलितमाह **निरयं च** इति। तेन निरयस्य विकर्मलभ्यत्वात् सदुःखत्वं इत्युक्तं भवति। न चेश्वरस्य दुःखप्राप्तिः। "नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते" इति

वचनानुसारेणादुःखेनैव नियामकत्वोपपत्तेरिति भावः। विद्याकर्मणोरिति प्रकृतत्वादित्यधि-करणमाह **शुभेन कर्मणा स्वर्गं ज्ञानेनैव परं पदं** इति। तथा च यतो कर्मणैव स्वर्गं ज्ञानेनैव मोक्षं यातीत्यतो तयोरिति श्रुतौ एतच्छब्देन "ये च इमेऽरण्ये श्रद्धा तप इत्युपासते अथ य इमे ग्रामा इष्टापूर्तेर्दत्तम्" इत्युपासत इति विद्याकर्ममार्गयोः प्रकृतत्वेन तत्परामर्शोपपत्तेरिति भावः । तृतीये तथोपलब्धेरित्यधिकरणतात्पर्यमाह **मिथ्याज्ञानेन च** इति। मिथ्याज्ञानेन विकर्मणा च तमः न सुखानुवृत्तं "केवलं ह्यत्र दुःखं भवति" इति श्रुतेः केवलं दुःखरूपं तमो यातीत्यर्थः। तत्स्वाभाव्यापत्तिः इत्यधिकरणपंचकस्पष्टाभिप्रायं इत्यभिप्रेत्य पादार्थमुपसंहरति **तस्मात्** इति। तस्मादेवं काम्यकर्ममिथ्याज्ञानानां अनित्यानर्थादिफलकत्वं तस्माद्विरक्तः सन् शुभे कर्मणि विकर्मणि च कर्माकरणेन ज्ञानमेव भक्तिपूर्वकोपासनेन संपादयेदित्यर्थः

**।। इत्यणुभाष्यविवरणे तृतीयाध्यायस्य प्रथमः पादः ।।**

**छलारी –**

**चतुर्दोषं च निर्दोषं निर्गुणं षड्गुणं परम् ।**
**अश्रीकं चैव सश्रीकं वेङ्कटेशमहं भजे ।। १ ।।**

एवं अध्यायद्वयेन समन्वयाविरोधाभ्यां गुणपूर्णनिर्दोषब्रह्मस्वरूपे सिद्धे एवंविधस्य प्रसादः कया विधया सिध्यतीत्यतः वैराग्यभक्त्युपासनापरोक्षज्ञानलक्षणैः साधनैरित्यभिप्रेत्य तत्स्वरूपनिरूपणार्थं अयं तृतीयाध्यायः प्रवृत्तः ।।

तत्र प्रथमे पादे वैराग्यजननाय दुःखस्वरूपगत्यागतिस्वर्गनरकगर्भवासादिस्वरूपं निरूप्यते।

**ओं तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ओं**

जीवः पूर्वदेहं हित्वा गच्छन् भूतैः सम्परिष्वक्तः रंहति गच्छति, स्वर्गं प्रतीति शेषः। किमर्थं ? तदन्तरप्रतिपत्तौ – तदिति प्रागुक्तदेहपरामर्शः, देहान्तरप्राप्त्यर्थं, कुतः ? प्रश्ननिरूपणाभ्यां – "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति श्वेतकेतुं प्रति प्रवाहणस्य राज्ञः प्रश्नलिङ्गात्। तथा श्वेतकेतोः परिहारासामर्थ्ये तत्पित्रा गौतमेन पृष्टस्य प्रवाहणस्यैव "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" (छां.उ.५-९-१) इति परिहारलिङ्गाच्च । पञ्चम्यामाहुतौ योषिति हुताया आपः अद्भिः सम्परिष्वक्तः जीवो लब्धदेहः, पुरुषवचसः पुरुष इति नामवान् भवतीति श्रुत्यर्थ इति सूत्रार्थः।

अत्र नानुष्ठेयमेव वैराग्यादिसाधनम् । फलार्थं खलु साधनानुष्ठानं, फलं च बन्धनिवृत्तिरूपा मुक्तिः न मरणादतिरिच्यते ।

"भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्" (वाराहे)। "भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम्" इति वचनात् ।

न च मरणार्थमेव साधनमनुष्ठेयम् । वैराग्याद्यननुष्ठानेऽपि मरणदर्शनादिति प्राप्ते –

अनुष्ठेयमेव वैराग्यादि, बन्धनिवृत्तिरूपफलसद्भावात् । न च मरणमेव बन्धनिवृत्तिः। मरणे भूतसम्परिष्वक्तस्यैव जीवस्य गमनाङ्गीकारात् । न चात्र प्रमाणाभावः। प्रश्नपरिहारवाक्ययोः जीवस्य भूतपरिष्वङ्गाभिधानात् ।

"भूतयुक्तः परं लोकं इमं लोकं च गच्छति" इति स्मृतेश्च । न च भूतानां विनिवृत्तिरिति वचनविरोधः। तस्य भूतभागनिवृत्त्यभिप्रायत्वादिति सिद्धान्तः कृतः ।।१ ।।

### ओं त्र्यात्मकत्वात्तु भूयस्त्वात् ओं

जीवः सर्वभूतैः सम्परिष्वक्तः न तु अद्भिरेव। न च प्रश्नादिस्थाप्शब्दविरोधः। अपां त्र्यात्मकत्वात् – तेजोऽबन्नात्मकत्वात् । त्र्यात्मकत्वेऽपि श्रुतौ अप्शब्दः कुतः इत्यत उक्तं – भूयस्त्वादिति। श्रुतावप्शब्दस्तु पार्थिवादिसर्वदेहेषु सम्भूय पृथिवीतेजसोरप्यपां बाहुल्याद्युज्यत इति सूत्रार्थः।

अत्र न जीवेन सह आप एव गच्छन्ति, न सर्वाणि भूतानि । "आपः पुरुषवचसो भवन्ति" इत्यत्र अपामेव गतिश्रवणात् । अन्यथा श्रुतौ भूतानीति सामान्यप्रयोगः स्यात् इति प्राप्ते –

सर्वभूतपरिष्वक्त एव जीवो गच्छति। नाद्भिरेव। न चैवं विशेषनामविरोधः। अपां क्षितिसलिलानलात्मकत्वेन तद्ग्रहणेन अन्यभूतानामपि प्राप्तेः। " तासां त्रिवृतं त्रिवृतमेकैकामकरोत्। मिश्राणि हि भूतानि" इति श्रुतेरिति सिद्धान्तः कृतः ।।२ ।।

### ओं प्राणगतेश्च ओं

भूतव्यापकप्राणानां सहगतिवचनाच्च भूतानि सह गच्छन्तीति सूत्रार्थः।

अत्र न भूतानि जीवेन सह गच्छन्ति विशेषप्रमाणाभावादिति प्राप्ते –

गच्छन्त्येव भूतानि सह जीवेन विशेषप्रमाणस्य अनुमानस्य विद्यमानत्वात् । अस्ति तावद्भूतानां इन्द्रियाणां च अविनाभावः। "यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि करणानि च । न चैतानि कदाचिद्वियुज्यन्ते, न च विलीयन्ते" (भाल्लवेय)इति श्रुतेः। प्राणानां च अस्ति जीवेन सह गतिः "प्राणैर्वाव न वियुञ्जन्ते" इति श्रुतेः। अतः प्राणाविनाभूतभूतानां च अस्ति जीवेन सह गतिरिति ज्ञायत इति। तथा चेत्थं प्रयोगः। भूतानि जीवेन सह गच्छन्ति तत्सहगन्तृप्राणाविनाभूतत्वात् । यद्येन सह गन्तृविनाभूतं तत्तेन सह गच्छति। यथा राज्ञा गन्तृअमात्यविनाभूतो भृत्यो राज्ञा सह गच्छतीति सिद्धान्तः कृतः ।।३ ।।

### ओं अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ओं

न प्राणा जीवेन सह गच्छन्ति । कुतः? "अग्निं वागप्येति" (बृ.उ.५-२-१३)इति वागादीन्द्रियाणां अग्न्यादीन् प्रति गतिश्रुतेरिति चेन्न। भाक्तत्वात्- अग्न्यादिगतिश्रुतेः भागविषयत्वात् । अतः नानुपपत्तिरिति सूत्रार्थः।

अत्र न प्राणाः जीवेन सह गच्छन्ति। "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रम्" इति प्राणानां अग्न्यादिगतिश्रुतेरिति प्राप्ते -

प्राणाः जीवेन सह गच्छन्ति। "प्राणैर्वाव न वियुज्यते" इति श्रुतेः। न च "अग्निं वागप्येति" इति विशेषश्रुतिविरोधः। प्राणानां भागेन अग्न्यादौ गत्यङ्गीकारेण श्रुतेस्तत्परत्वात् । तदुक्तम् -

पुरुषस्य मृतौ ब्रह्मन् प्राणाः भागत एव तु । अधिदैवं प्राप्नुवन्तु भागतोऽनुव्रजन्ति तम्। (ब्राह्म)इति सिद्धान्तः कृतः ।।४।।

### ओं प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ओं

प्रथमे "एतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" (छा.उ.५-४-२)इत्युपक्रमे भूतैस्सह गमनाश्रवणान्न भूतसम्परिष्वक्तो रंहति जीव इति चेन्न । हि यस्मात् ता एव - प्रस्तुता आप एव अजहल्लक्षणया श्रद्धाशब्देनोच्यन्ते। कुतः? उपपत्तेः -"आपः पुरुषवचसो भवन्ति"(छा.उ.५-९-१) इत्युपसंहारस्योपपत्तेः अन्यथानुपपत्तेरिति सूत्रार्थः।

अत्र न भूतानि जीवेन सह गच्छन्ति। "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इत्युपक्रमे उत्क्रान्तस्य श्रद्धासहितस्यैव द्युनामके प्रथमाग्नौ होमश्रवणात् । भूतानामपि सह गतौ उपक्रमे तथोक्तिप्रसङ्गादिति प्राप्ते -

उपक्रमे भूतसहितस्य होमाश्रवणात् न भूतानामसहगतिः कल्पनीया। "आपः पुरुषवचसो भवन्ति" इत्युपसंहारे त्र्यात्मकानां अपां जीवेन सह गतिश्रवणात् तदनुसारेण "श्रद्धां जुह्वति" इत्युपक्रमस्य श्रद्धया अद्भिश्च युक्तं जीवं जुह्वतीति व्याख्येयत्वादिति सिद्धान्तः कृतः ।।५।।

### ओं अश्रुतत्वादिति चेन्न इष्टादिकारिणां प्रतीतेः ओं

प्राणानामग्न्यादिगतिवज्जीवेन सह भूतगतेः साक्षादश्रवणात् उक्तमयुक्तमिति चेन्न । इष्टादिकारिणां - ईष्टापूर्तादिकारिणां, अथैनमिति श्रुत्या भूतैस्सह गतिप्रतीतेरिति सूत्रार्थः।

अत्र न भूतानि जीवेन सह गच्छन्ति। "यत्रास्य पुरुषस्य मृतस्य अग्निं वागप्येति" इत्यादि-वद्विशिष्य जीवेन भूतगतेः अश्रुतत्वादिति प्राप्ते -

न प्रत्यक्षश्रुत्यभावेन भूतानामसहगतिः मन्तव्या। यजमानमरणे भूतानां सहगतेः "अथैनं यजमानं किं न जहाति, भूतान्येव भूतैरेव गच्छति, भूतैर्भुङ्क्ते, भूतैरुत्पद्यते, भूतैश्चरति भूतैर्विचरति" (कौण्ठरव्य)इति श्रुतौ विस्पष्टमभिहितत्वेन तद्दृष्टान्तेन सर्वत्रापि भूतगतिसिद्धेः इति सिद्धान्तः कृतः ।।६।।

## ओं भाक्तं वाऽनात्मवित्वात्तथाहि दर्शयति ओं

अमृतत्वमिति शेषः । काम्यकर्मसाद्यं अमृतत्वं भाक्तं गौणमल्पकालीनमिति यावत् । कुतः ? अनात्मवित्त्वात् , काम्यकर्मकर्मिणः अनात्मज्ञानित्वात् । आत्मज्ञानिन एव मुख्यामृतत्वं, वाशब्दात् "अपामसोम" इति श्रुतेरर्थविशेषः सूचितः। जिज्ञासुकृताकाम्यकर्मणा शुद्धान्तःकरणस्य ज्ञानद्वारा मुख्यामृतत्वम्, तथा अपरोक्षज्ञानिकृताकाम्यकर्मणा ज्ञानेन सिध्यति मोक्षे अतिशय इति । किमत्र मानमित्यत उक्तं - तथा हि दर्शयतीति । हि यस्मात् "तमेवं विद्वान्" (तै.आ.३-१३) इत्यादिश्रुतिसमूहः तथा दर्शयतीति सूत्रार्थः।

अत्र न मुमुक्षुणा अवश्यमनुष्ठेयं, कर्मणैव मोक्षसिद्धेः। "अपाम सोमममृता अभूम" इति श्रुतेरिति प्राप्ते-

अवश्यमनुष्ठेयमेव मुमुक्षुणा वैराग्यादि, तद्विना मोक्षासिद्धेः। न चैवं श्रुतिविरोधः। तस्याः अन्यार्थत्वात् । तथा हि - कर्म द्विविधं, काम्यमकाम्यं च । अकाम्यमपि द्विविधम् । ज्ञानात्पूर्वभावि पश्चाद्भावि चेति। तत्सर्वमपि श्रुत्यर्थ एव, अधिकारिभेदात् । अत्र यदा काम्यकर्मपरा श्रुतिः तदामृतपदेन न मुख्यामृतत्वमाह । किन्तु बहुकालावस्थायित्वरूपगौणार्थमाह । यदा तु ज्ञानात्पूर्वभाव्यकाम्यकर्मपरा, तदा मुख्यामृतत्वरूपमर्थमाह । किं नाम न साक्षात् । किन्तु कर्मणा शुद्धसत्त्वस्य वैराग्यादिद्वारा मोक्षसाधनत्वमाह । यदा तु ज्ञानोत्तरकर्मपरा तदा ज्ञानेन मोक्षेऽतिशयाधायकत्वमाहेति कथमपि कर्मणां साक्षान्मोक्षसाधनत्वं नास्तीति सिद्धान्तः कृतः ।।७।।

## ओं कृत्यात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ओं

कृतस्य कर्मणः अत्यये स्वर्गादौ भोगेन क्षये अनुशयवान् कर्मशेषसम्बन्धवानेवेमं लोकमायाति, कुतः? दृष्टस्मृतिभ्यां - तथा श्रुतेः स्मृतेश्चेति सूत्रार्थः।

अत्र अनपेक्षितमेव वैराग्यादि। कृतस्य कर्मणः भोगेनैव क्षये बीजाभावेन संसाराभावरूपमोक्षसम्भवादिति प्राप्ते -

अपेक्षितमेव वैराग्यादि। "ततः शेषेणेमं लोकमायाति। पुनः कर्म कुरुते। पुनर्गच्छति। पुनरागच्छति" इति श्रुतेः।

"भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः। कर्म कृत्वा पुनर्गच्छेत् पुनरायाति नित्यशः। आचतुर्दशमाद्वार्षात्क र्माणि नियमेन तु। दशावराणां देहानां कारणानि करोत्ययम् । अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति। इति स्मृतेश्च" इति सिद्धान्तः कृतः ।।८।।

**ओं यथेतमनेवं च ओं**

यथा येन मार्गेण इतं - स्वर्गं प्रति गतं तथेमं लोकमायाति। अनेवं च - गमनमार्गादन्यमार्गेण चायाति। कुतः ? तथा श्रुतेरिति सूत्रार्थः।

अत्र गमनानुसारेणैव आयाति जीवः। "यथेतमागच्छति" इति श्रुतेः इति प्राप्ते -

न जीवो यथा गतस्तथायाति। किन्त्वन्यथापि । "धूमादभ्रं अभ्रादाकाशं आकाशाच्चेन्द्रलोकं, यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वा अभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति" (काषायण)इति श्रुतेः। न चैवं प्राचीनश्रुतिविरोधः। आकाशपर्यन्तं गमनानुसारेण आगमनस्याङ्गीकृतत्वेन श्रुतेः तद्विषयत्वादिति सिद्धान्तः कृतः ।।९।।

**ओं चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजनिः ओं**

गतागतं चरणात् कर्माङ्गाचारात् भवति न यज्ञादिकर्मणः, कुतः? तथा श्रुतेरिति चेन्न । तदुपलक्षणार्था - यज्ञाद्युपलक्षणार्था श्रुतिरिति कार्ष्णाजनिराचार्यो मन्यते इति सूत्रार्थः।

अत्र आचारफलमेव गतागतं न यज्ञादिकर्मणः। "तद्यइह रमणीयचरणाः रमणीयां योनिमापद्यन्ते । कपूयचरणाः कपूयां योनिमापद्यन्ते" (छां.उ.५-१०-७)इति श्रुतेरिति प्राप्ते -

न गतागतस्य कर्मफलत्वाभावः शङ्क्यः। "इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति" इति श्रुत्या "त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते" (भ.गी.९-२०)इति स्मृत्या च गतागतस्य कर्मफलत्वोक्तेः। न च "तद्य इह" इति श्रुतिविरोधः। तस्याः उदाहृतश्रुत्याद्यनुरोधेना-जहत्स्वार्थलक्षणया यज्ञाद्यर्थत्वोपपत्तेः। अथ "यज्ञेन दानेन तपसा लोकान् जयन्ति" इति विस्पष्टश्रुतेश्चेति सिद्धान्तः कृतः।

एतेषां दशानां अधिकारिणां युगपदेव तात्पर्यमाह - **शुभेन कर्मणा स्वर्गम्** इति। काम्येनेति शेषः। यातीति वक्ष्यमाणं अत्रापि सम्बध्यते। स्वर्गमित्युपलक्षणम् । तथा च काम्येन शुभेन पुण्येन कर्मणा स्वर्गं गत्यागतिगर्भवासादिकं च यातीत्युक्तं भवति।

नन्वेतेषामधिकरणानां अनेन तात्पर्यं कथं प्रतिपादितमिति चेदित्थम् । प्रथमाधिकरणे जीवानां सामान्यतः भूतसाहित्येन स्वर्गगमनप्रतिपादनात् । द्वितीये समस्तभूतसाहित्येन गमनसमर्थनात् ।

तृतीये भूतानां जीवेन सह गतिसाधनाय भूताविनाभूतप्राणानां सह गतेः समर्थितत्वात् । चतुर्थे पूर्वोक्तप्राणगतेः एवाक्षिप्य समाधानात् । पञ्चमषष्ठयोः पुनः पूर्वोक्तभूतगतेरेवाक्षिप्य समाधानात् । सप्तमाष्टमयोः वैराग्यादेरावश्यकत्वप्रतिपादनेन एतयोरपि गत्याद्युपयुक्तार्थप्रतिपादकत्वात् । न हि वैराग्यादेरनावश्यकत्वे तदर्थं गत्यादिप्रतिपादनं युक्तम् । नवमे स्वर्गादागतिप्रकारस्योपपादनात् । दशमे गत्यादेः कर्मफलत्वस्योपपादितत्वादिति ।।१०।।

## ओं अनिष्टादिकारिणां च श्रुतम् ओं

इष्टं यागः, दत्तादिरादिपदार्थः। नञ् तदभावे तद्विरुद्धे च वर्तते। न केवलं इष्टादिकारिणामेव गतं, किन्नाम, इष्टाद्यकारिणां तद्विरुद्धपापकारिणामपि । कुतः? श्रुतं इति हेतुगर्भं, श्रुत्युक्तत्वात् । चशब्दः दुःखान्तरसमुच्चये इति सूत्रार्थः।।

अत्र इष्टादिपुण्यकृतामेव गतागतादिक्लेशः। नत्विष्टाद्यकारिणां तत्तद्विरुद्धब्राह्मणहननादि-कारिणामपि। इष्टादिकारिणां विधिनिषेधभीतियुक्तत्वात् । अन्येषां तदभावात् । बिभ्यत्पतति पादपात् इति न्यायादिति प्राप्ते –

न केवलमिष्टादिकारिणामेव गतागतादिक्लेशः। किन्नाम, इष्टाद्यकारिणां तद्विरुद्धब्राह्मणहननादि-कारिणामपि। "तद्य इह शुभकृतो ये चाशुभकृतः ते अशुभमनुभूयावर्तन्ते। पुनः कर्म कुर्वन्ति पुनः गच्छन्ति। पुनरागच्छन्ति" (भाल्लवेय)इति श्रुतेः। "सर्वे वा एते अशुभकृतः संयमने प्रपतन्ति" (कौण्ठरव्य) इति श्रुत्यन्तराच्च। "गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः । इति स्मृतेश्च" इति सिद्धान्तः कृतः।।११।।

## ओं अपि सप्त ओं

ब्रह्महननादिफलानि वैराग्यादीनि नरकाणि पञ्च । मिथ्याज्ञानफले तामिस्रान्धतामिस्राख्ये द्वे नरके। एवं सप्तापि सन्ति, कुतः? तथा स्मृतेरिति सूत्रार्थः।

अत्र नरकभोगो न नित्यः। यावदिन्द्राश्चतुर्दशेत्यादौ अवधिमत्त्वश्रवणादिति प्राप्ते –

नरकभोगो भवत्येव नित्यः। "नैवेत उत्तिष्ठन्ते अपि कर्हिचित्" इति श्रुतेः। अनित्यत्वप्रतिपादकमानविरोध इति चेन्न । भवेदयं विरोधः यदि नरकैक्यं स्यात् । न चैवम् । किन्नाम, सप्त नरकाणि सन्ति। कुतः?

> "रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा। कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ।
> तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ । इति वचनात्"

इति सिद्धान्तः कृतः।।१२।।

### ओं तत्रापि च तद्व्यापारादविरोधः ओं

तत्रापि सदुःखेऽपि नरके तद्व्यापारात्। ईश्वरप्रेरणाख्यव्यापाराभ्युपगमात् । चशब्देन दुःखाननुभवेनेति सूचयति। तथाचाविरोधः। ईश्वरस्यापि दुःखं स्यादिति विरोधो नास्ति । कुतः? तथा श्रुतेः स्मृतेश्चेति सूत्रार्थः।

अत्र न नरकं सदुःखं ईश्वरस्यापि तद्गतस्य दुःखप्रसङ्गादिति प्राप्ते -

भवत्येव नरकं सदुःखं, न चेश्वरस्य तद्गतस्य दुःखप्राप्तिः। नरकस्य तद्वशत्वेन दुःखानुभवाभावेऽपि तत्प्रेरकत्वाभ्युपगमात् । न च तत्र प्रमाणाभावः। "स स्वर्गे स भूमौ स नरके सोऽन्धेतमसि प्रवृत्तिकृदेक एवानुप्रविष्टो नासौ दुःखभुगीश्वरः । प्रभुत्वात्सर्वं पश्यति। सर्वं कारयति" इति श्रुतेः।

"नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते। नीचोच्चतैव दुःखादेः भोग इत्यभिधीयते।
नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः । इति स्मृतेश्च"

इति सिद्धान्तः कृतः ।।१३।।

### ओं विद्याकर्मणोरिति तु प्रकृतत्वात् ओं

"अथ एतयोः पथोः न कतरेण च गच्छन्ति" (छां.उ.५-१०-८)इति श्रुतिबलेन भूतानां फलरूपगतिस्वातन्त्र्यं न मन्तव्यं, कुतः ? विद्याकर्मणोरिति तु प्रकृतत्वात् । अत्रेति शब्दो वाक्यविशेषद्योतकः। तुशब्दोऽपिशब्दार्थः। "तद्य इत्थं विदुः" इत्यत्र विद्याकर्ममार्गयोः प्रकृतत्वेन श्रुतेस्तद्विषयत्वोपपत्तेः इति सूत्रार्थः।

अत्र भवन्त्येव जीवाः गत्यादिफले स्वतन्त्राः "तेऽर्चिषमभिसम्भवन्ति। ते धूममभिसम्भवन्ति" इत्युक्त्वा "अथैतयोः पथोः न कतरेण च तानीमानि क्षुद्रमिश्राणि असकृदावर्तीनि भूतानि भवन्ति। जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्" इत्युक्तत्वात् । न हि स्वातन्त्र्याभावे गच्छन्ति न गच्छन्तीति व्यपदेशो युज्यत इति प्राप्ते -

न जीवाः गत्यादिफले स्वतन्त्राः, प्रमाणाभावात् । न च पूर्वोक्तश्रुतिरेव प्रमाणमिति वाच्यम् । तस्याः मार्गद्वयरूपविद्याकर्मविषयत्वात् । "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते ते धूममभिसम्भवन्ति" इति विद्याकर्ममार्गयोः प्रकृतत्वात् । न च विद्याकर्मवत् फलभूतदेवयानपितृ-यानयोः अपि प्रकृतत्वात् अनिर्णय एवेति वाच्यम् ।

विद्यापथः कर्मपथो द्वौ पंथानौ प्रकीर्तितौ। तद्वर्जितः त्रिधा याति तिर्यग्वा नरकं तमः। (भारत)

इति **स्मृतिसमाख्यानान्निर्णयोपपत्तेः**। न च साधनवत्फलेऽपि स्वातन्त्र्यं स्यादिति युक्तम् । साधने **विधिसद्भावात्** । **फले तदभावात्** । विध्यादिशास्त्रावैयर्थ्यायैव हि साधनेषु ईश्वरः स्वातन्त्र्यं ददातीति प्रागुक्तमिति सिद्धान्तः कृतः।

एकादशाधिकरणमारभ्य चतुर्णामधिकरणानां युगपदेव तात्पर्यमाह – **निरयं च विकर्मणा** इति। चशब्दः विकर्मणेत्यनेन सम्बध्यते। स च तुशब्दार्थः। सदुःखमिति शेषः। यातीत्यस्यात्राप्यनुषङ्गः। गत्यादावस्वतन्त्र इति शेषः। विकर्मणेत्यत्र वीत्यभावार्थो विरुद्धार्थश्च, नामरूपाद्विमुक्ता इत्यत्रापि नामरूपादमुक्तत्वमुच्यते विप्रियमित्यादिवदिति षट्प्रश्नोपनिषद्भाष्ये वीत्यस्याभावार्थत्वोक्तेः।

कृष्णस्य विप्रियो राजा धार्तराष्ट्रः सहानुजः । इति भारतोक्तेश्च ।

विरुद्धार्थत्वं तु स्फुटमेव। एवं च विकर्मणा तु यज्ञादिकर्माकरणेन ब्राह्मणहननादिविरुद्धकर्मणा निषिद्धकर्मणेति यावत् । उक्तविधं निरयं यातीत्यर्थ उक्तो भवति। कथं तात्पर्यमुक्तमिति चेन्न । एकादशे विहितकर्माकारिणां निषिद्धकर्मकारिणां च निरयप्राप्तेः समर्थनात् । द्वादशे अविहितकर्मफलस्य निरयस्य नित्यत्वसमर्थनात् । त्रयोदशे विकर्मफलस्यैव निरयस्य सदुःखत्वसमर्थनात् । चतुर्दशे विकर्मफलनरकादिगतिस्वातन्त्र्यनिरासादिति ॥१४॥

**ओं न तृतीये तथोपलब्धेः ओं**

तृतीये अन्धेतमसि तिर्यग्यातनापेक्षया तमसस्तृतीयत्वम् । सुखं न मन्तव्यं कुतः ? तथोपलब्धेः। श्रुतौ स्मृतौ च तथा दर्शनादिति सूत्रार्थः।

अत्र अन्धन्तमोऽपि सुखयुक्तमेव। दुःखयुक्तत्वात् । दुःखं हि सुखाविनाभूतम् ।

"यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते। अपि नीचगतौ किञ्चित् किमु मानुषदेहिनः"

इति वचनादिति प्राप्ते –

नान्धे तमसि सुखलेशो मन्तव्यः। "अथाविद्वानकर्मावाग्गच्छति। त्रिधा ह वाऽवाग्गतिस्तिर्यग्यातना तम इति। द्वे वा व सुखानुवृत्ते न तमः सुखानुवृत्तम्" इति श्रुतेः।

तिर्यक्षु नरके चैव सुखलेशो विधीयते। नान्धेतमसि मग्नानां सुखलेशोऽपि कश्चन।

इति स्मृतेश्चेति सिद्धान्तः कृतः॥

तस्य तात्पर्यमाह – **मिथ्याज्ञानेन च तम** इति। चशब्दः पूर्वोक्तविकर्मसमुच्चायकः। हरिद्वेषादिरूपविकर्मणा मिथ्याज्ञानेन च तमः इति सुखलेशरहितं नित्यनरकं यातीत्यर्थः॥**१५**॥

## ओं तत्स्वाभाव्यापत्तिरुपपत्तेः ओं

तत्स्वाभाव्यापत्तिः तस्य धूमादेः स्वभाव इव स्वभावो यस्य सः तत्स्वभावः तस्य भावः तत्स्वाभाव्यम् । धूमादिदेवतास्वभावसदृशस्वभावत्वं नस्यापत्तिः प्राप्तिः न तु तदैक्यं तत्पदप्राप्तिर्वा कुतः ? उपपत्तेः। अन्यस्यान्यभावानुपपत्या अस्यैवार्थस्योपपत्तेः इति सूत्रार्थः।

अत्र कर्मिणः स्वर्गादागतौ धूमादिदेवतैक्यं तत्पदप्राप्तिर्वा भवतीत्यभ्युपेयम् । "धूमो भूत्वाभ्रं भवति" (छां.उ.५-१०-५)इति सामानाधिकरण्यश्रुतेरिति प्राप्ते -

न कर्मिणस्तत्तादात्म्यं तत्पदप्राप्तिर्वा सम्भवति । अन्यस्य अन्यभावासम्भवात् । तत्पदस्य नियताधिकारिभिः ज्ञानेनैव प्राप्यत्वात् । तस्माद्धूमादिषु प्रविश्य तद्गतौ गतिः तत्स्थितौ स्थितिः इत्यादिरूपधूमादिदेवतास्वभावसदृशस्वभावत्वप्राप्तिरेव श्रुत्यर्थः। न तु तदैक्यं तत्पदप्राप्तिर्वा ।

धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु। स्थितिः स्थितौ प्रवेशश्च लघुत्वादिस्तथैव च।

(गारुड) इति स्मृतेरिति सिद्धान्तः कृतः ।।१६।।

## ओं नातिचिरेण विशेषात् ओं

कर्मिणः अतिचिरेण स्वर्गादागमनं नास्ति। किन्त्वचिरेण कुतः? विशेषात् । शीघ्रागमनप्रतिपादकविशेषवचनादिति सूत्रार्थः।

अत्र कर्मी स्वर्गान्निर्गतश्चिरेणैव देहं प्राप्नोति। "यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वाभ्रं भवति, अभ्रं भूत्वा मेघो भवति" इत्यादावागमनवेलायां बहुस्थान-प्राप्तिश्रवणात् । बहुस्थानगमनं च नातिचिरेण सम्भवतीति प्राप्ते -

कर्मी अचिरेणैव संवत्सरादर्वाक् देहं प्राप्नोति। "तद्य इह रमणीयचरणाः अभ्याशो ह यत्ते रमणीयं योनिमापद्यन्ते" (छा.उ.५-१०-६)इति श्रुतेः।

स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात्पूर्वमेव तु। मातुः शरीरमाप्नोति पर्यटन् यत्र तत्र च । (नारद) इति स्मृतेरिति सिद्धान्तः कृतः ।।१७।।

## ओं अन्याधिष्ठिते पूर्ववदभिलापात् ओं

आगतौ कर्मिणः श्रुत्युक्तव्रीह्यादिभावो नाम अन्याधिष्ठिते व्रीह्यादिदेहे प्रवेश एव न तु तदभिमानित्वम् । येन छेदनादिना दुःखं स्यात् । कथं तर्हि व्रीहियवा इत्यैक्येनोक्तिरित्यत उक्तं - पूर्ववदिति। धूमो भूत्वेति पूर्वोक्तयुक्तिर्यथा तथेति, कुतः ? श्रुतौ स्मृतौ च तथाभिलापादिति सूत्रार्थः।

अत्र अस्त्येव कर्मिणामागमने दुःखं ''त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्त'' (छा.उ.५-१०-६) इति श्रुतौ तेषां व्रीह्यादिभावदर्शनात् । तद्भावे छेदनादिना दुःखं भवति नियमादिति प्राप्ते -

नागतौ कर्मिणां व्रीह्यादिभावेन दुःखं मन्तव्यम् । तत्रैव मानाभावात् । न चोक्तश्रुतिर्मानं, यतोऽस्यां श्रुतौ कर्मिणो धूमादाविव व्रीह्यादिशरीरप्रवेश एवोच्यते। न तु तच्छरीराभिमानित्वम्। न च तच्छरीराभिमानाभावे वृद्ध्याद्ययोगः। तदन्येनाधिष्ठितत्वादिति सिद्धान्तः कृतः।।१८।।

## ओं रेतः सिग्योगोऽथ ओं

कर्मिणः प्रथमं रेतः सिग्योगः पितृप्रवेशः, अथ पितृप्रवेशानन्तरं मातृप्रवेशः। कुतः? तथा श्रुतेः इति सूत्रार्थः।

अत्र न जीवस्य पितृप्रवेशोऽस्ति। स्वर्गादवाग्गतो देही व्रीह्यादीतरदेशगः। इति वचनादिति प्राप्ते-

अस्त्येव पितृप्रवेशो जीवस्य । ''ततो रेतस्सिचमेवानुप्रविशति, अथ मातरं, अथ प्रसूते, स कर्म कुरुते'' इति (कौण्ठरव्य)श्रुतेः। न च पितृप्रवेशो व्यर्थः। पितृप्रवेशस्योत्पत्स्यमानजीवसंस्कारतया ईशक्लृप्त्या तस्य संस्कारार्थत्वात् । ''ईशक्लृप्त्यैव पितरं प्रविश्यायाति मातरम् ।'' इत्यादेः। न च मातुरेवोदरं व्रजेदित्यवधारणानुपपत्तिः। अवधारणस्यायोगव्यवच्छेदार्थत्वाङ्गीकारादिति सिद्धान्तः कृतः।।१९।।

## ओं योनेः शरीरम् ओं

कर्मी पितृद्वारा मातृयोनेः प्रवेशानन्तरं शरीरं प्राप्नोतीति सूत्रार्थः।

अत्र स्वर्गादागतस्य कर्मिणः पितृशरीरं प्रविश्य योनिद्वारा मातरं प्रविश्य कललबुद्बुदादिक्रमेण देहप्राप्तिर्नास्ति किन्तु केषाञ्चिच्छुकादिजीवानां मातृप्रवेशादिकमन्तरेण देहप्राप्तेः दर्शनात् । कस्यचित्पितरं प्रविष्टस्य योनिप्रवेशमन्तरा संस्पर्शद्वारेण मातृप्रवेशेन देहलाभः। अपरस्य तु पितृप्रवेशं विनैव अन्नादिद्वारा मातृप्रवेशेन देहलाभः। अपरस्य मातृप्रवेशमन्तरा पितुरेव देहप्राप्तिः । कस्यचित् अन्तर्वा बहिर्वा सिद्धदेहप्राप्तिः। अतो अत्यायासाभावान्नातिवैराग्येण कृत्यमिति प्राप्ते -

अस्त्येव स्वर्गादागतस्य कर्मिणः पितृप्रवेशः। ततो योनिद्वारा मातृप्रवेशः ततः कललबुद्बुदादिक्रमेण देहप्राप्तिश्च। कुतः ? ''दिवःस्थास्नून् गच्छति, स्थास्नुभ्यः पितरं पितः मातरं मातुश्शरीरं शरीरेण जायते'' (पौष्ययण)इति श्रुतेः।

स्थावराणि दिवः प्राप्तः स्वावरेभ्यश्च पूरुषम् । पुरुषात् स्त्रियमापन्नः ततो देहं यथाक्रमम् ।

देहेन जायते जन्तुः इति सामान्यतो जनिः। विशेषजननं चापि प्रोच्यमानं निबोध मे।
स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा। गर्भे वा बहिरेवाथ क्वचित्स्थानान्तरेषु च ।''

(ब्राह्म)इति स्मृतेश्च। अतः सामान्यजन्मनि अत्यायासभावादितरत्रातिवैराग्येण भगवान् भजनीय इति सिद्धान्तः कृतः।।

षोडशाधिकरणमारभ्य एतेषां पञ्चानां अधिकरणानान्तु तात्पर्यस्योपलक्षणया **शुभेन कर्मणा स्वर्गं** इत्यनेनैवोक्तत्वात् न पृथगुक्तम् । कथमिति चेन्न । षोडशाधिकरणे स्वर्गादागतस्य अचिरेण गर्भवासादिप्राप्तेः समर्थनात् । अष्टादशाधिकरणे आगमनकाले व्रीह्यादिशरीरप्रवेशस्योक्तत्वात् । एकोनविंशत्यधिकरणे आगतिकाले पितृप्रवेशसमर्थनात् । विंशत्यधिकरणे स्वर्गादागतस्य पितुःसकाशात् योनिद्वारा मातृप्रविष्टस्य शरीरप्राप्तेः समर्थनादिति। एवं पादत्रयेण पादतात्पर्यमभिधाय चतुर्थपादेन परिशेषसिद्धमर्थमाह - **ज्ञानेनैव परं पदम्** इति । एवकारेण काम्यकर्मादिव्यावृत्तिः। ज्ञानेनैव परं पदं उत्तमस्थानं मोक्षं यातीत्यर्थः।

पादार्थमुपसंहरति - **तस्मात्** इति। यस्मात् काम्यकर्मादिना स्वर्गादिप्राप्तिः यस्माच्च ज्ञानेनैव नित्यपुमर्थो मोक्षः तस्मान्मोक्षादितरत्र विरक्तस्सन् मोक्षार्थं ज्ञानमेव समाश्रयेदित्यर्थः ।।२०।।

**मदाचार्यमनोधाममध्वमानसमञ्चके।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां तृतीयाध्यायस्य प्रथमः पादः।।**

**नारायणाचार्य-** श्रीगुरुभ्योनमः। साधनविचारोऽयमध्यायः। पूर्वोक्ताध्यायद्वयेन भगवतो विष्णोः अनन्तानवद्यगुणपूर्णत्वे सिद्धे अधिकारिणः किं मया कर्तव्यमित्याकांक्षोदयात्साधनानुष्ठानं कार्यमिति तद्वक्तुं तद्विचारस्यावसरप्राप्तत्वात् । तत्रापरोक्षज्ञानमेव प्रसादद्वारा मुख्यं साधनम्। तच्च चतुर्थपादे विचारयिष्यते। तत्साधनीभूतश्रवणमनननिदिध्यासनरूपोपासना च तृतीयपादे वक्ष्यते। तत्साधनीभूतभक्त्यतिशयसाधनार्थं द्वितीये भगवन्माहात्म्यविशेषो अभिधास्यते। तज्ज्ञाने सत्यपि तस्मिन् स्नेहातिशयलक्षणा भक्तिः न भवति यावद्विषयेष्वैहिकामुष्मिकेषु वैराग्यं न भवत्यतो तत्र वैराग्योत्पादनाय तेषामनित्यत्वाल्पत्वदुःखसंवलितफलकत्वप्रतिसन्धानार्थं हेयताव्युत्पादनं प्रथमपादे विधीयते इति भावेन प्रवृत्तस्य भाष्यस्य तात्पर्यमाह **शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा। मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् । याति तस्माद्विरक्तः सन् ज्ञानमेव समाश्रयेत्** इति। तत्रेयमाशंका । मोक्षार्थं साधनं नानुष्ठेयम् । ''भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो

विमोचनम् ।'' इति वाराहोक्तेर्भूतबन्धनाश एव मोक्ष । सः ''भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम् । भूतानां संप्रयोगश्च जनिरित्येव पण्डितैः ।।'' इति भारतवचनान्मरणसमय एव भवत्यतो न तदर्थं वैराग्योपयोगः। सरामाणामपि रमणस्य नियतत्वादित्यांशंकापरिहाराय सूत्रं **ओं तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्यां** इति। शरीरान्तरप्रतिपत्तौ भूतसम्परिष्वक्त एव रंहति गच्छति। ''वेत्थ यथा पंचम्यामाहुतावापः पुरुषवचसो भवन्ति'' (छां.उ)इति प्रश्नात् ''इति तु पंचम्यामाहुतावापः पुरुषवचसो भवन्ति'' (छां.उ.५-९-१)इति परिहाराच्च। अप्शब्दोपलक्षितसकलभूतपरिष्वक्तस्यैव देहान्तरप्राप्तिश्रवणात् प्रागुदाहृतभारतवचनस्य भागत्याग-विषयत्वमतो युक्तं वैराग्यानुष्ठानमिति भावः। तदिदमाह **तस्माद्विरक्तः सन् ज्ञानमेव समाश्रयेत्** इति । यस्मान्नोक्तरीत्या भूतविमोचनं मोक्षः किन्तु ज्ञानेनैव परं पदं याति। अत्र ज्ञा अनेन एवेति पदच्छेदः। जानीतीति ज्ञा चिद्रूपजीवव्यक्तिः। सा अनेन अन्यते अनेनेत्यन्नं घञर्थे कः । ''अन्नं यत्कृष्णं तदन्नस्य'' इति श्रुतेः। पृथिवीत्यर्थः। तथा अन्यते जीव्यते अनेन इति अन्तं जीवनं । जलं तथा अनो वायुः तस्येदं तज्जातं आनं तेजः तथा अनो वायुः तथा अनस्य वायोः इदं जनकं नभः आनं ईषदर्थाङ्पूर्वकाणामेषां समाहारैकशेषेण आनं सूक्ष्मभूतपंचकम् । तेन सहैव परं पदं लोकान्तरं याति। न तु तद्विनिर्मुक्ता अतस्तदर्थं ज्ञानमेव समाश्रयेत् । तच्च विरक्तः सन्नेव। अविरक्तस्य तदयोगादिति भावः ।।१।।

न च आप एवागच्छन्ति न सर्वाणि भूतानि । तथात्वे ''आपः पुरुषवचसो भवन्ति'' इति विशेषोक्तिर्न स्यादिति नातीव वैराग्यं युक्तमित्यत सूत्रं **ओं त्र्यात्मकत्वात्तु भूयस्त्वात्**। त्रिवृत्करणेन भूतानां मिश्रत्वेन तत्राबंशस्य बाहुल्यात्तदुक्तिर्युज्यते । ननु अप्सु अबंशबाहुल्यमिव भूतान्तरेऽपि तत्तदंशबाहुल्यमस्तीत्यतोऽप्युक्तं भूयस्त्वादिति। सर्वदेहेषु संभूय तेजसोरप्यपां भूयस्त्वात्। ''तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ।'' इति भारते । अतः सर्वभूतपरिष्वंगेनैव जीवस्य गमनाद्युक्तं वैराग्यम् । तदप्याह प्रसादादुत्पद्यते प्राप्यते तत्पदं तेजोबन्नात्मकं शरीरजातं अनेन जीवनेन उदकेनैव परमुत्कृष्टं अतस्तत्र भूयस्त्वाभिप्रायपरं केवलं युज्यते इति शेषः। अत एव ज्ञा जीवव्यक्तिः अनेनैव जलेनैव सह परंपदं परलोकं यातीत्युक्तिरपि युक्तैवेत्यर्थः। तस्माद्विरक्तः सन्नित्यादि ।।२।।

अनुमानेनापि भूतैः सह जीवस्य गमनं प्रतिपादयत्सूत्रं **ओं प्राणगतेश्च**। प्राणानामिन्द्रियाणां सह गमनं तावदस्ति तेषां च भूताविनाभावात् तैः सह गमनम् । ''यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि च करणानि च नैतानि कदाचिद्वियुज्यन्ते न च विलीयन्ते'' इति भाल्लवेयश्रुतेः। इदमप्याह ज्ञायते यैस्तानि ज्ञानि । करणे घञर्थकः। आलोपश्च । ज्ञानेन्द्रियाणि तथा। अन्यते चेष्ट्यते यैस्ते आनाः कर्मेन्द्रियगणाः। करणे घञ् । घञबन्तश्च (३५)इति

लिंगानुशासनसूत्रात् घञन्तस्य पुल्लिंगता। ज्ञानि च आनास्तेषां समाहारः ज्ञानां ज्ञानकर्मेन्द्रियगणः। तेने सह परं पदं यातीति श्रुति सिद्धम्। स च भूताविनाभावीत्यतो अनुमानेनापि भूतैः सह गच्छतीति युक्तमिति भाव :।।३।।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं अग्न्यादिश्रुतेरिति चेन्न भाक्तत्वात्**। ''यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः'' (बृ.उ.५-२-१३) इति श्रुतेर्न प्राणानां जीवेन सह गतिरिति चेन्न । भागतो अग्न्यादिप्राप्तेः। ''पुरुषस्य मृतौ ब्रह्मन्प्राणा भागत एव तु। अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम्।।'' इति ब्राह्मे ।।४।।

पुनरुक्तमाक्षिप्य समादधत्सूत्रं **प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः**। प्रवाहणेन राज्ञा गौतमं प्रति पंचाग्निविद्यानिरूपणं कृतम्। तत्र अस्माल्लोकात्प्रेतस्य स्वर्गे लोके प्रवेशः उक्तः ततः परावृत्तिकाले पर्जन्ये प्रवेशः ततः पृथिव्यां प्रवेशः ततो अन्नद्वारा पुरुषशरीरप्रवेशस्तद्वारा च मातृशरीरे प्रवेश इति। तान्येतानि पंचमप्रवेशस्थानानि अग्नित्वेनोच्यन्ते। प्रविष्टः प्राणी तु आहुतित्वेनोच्यते। तथा च छान्दोग्ये श्रूयते ''असौ वाव लोके गौतमाग्निः'' इत्यादिकमुक्त्वा ''तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राज सम्भवति।।१।। ततः पर्जन्यो वाव गौतमाग्निः तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वन्ति तस्य आहुतेर्वर्षः सम्भवति।।२।। पृथिवी वाव गौतमाग्निः तस्मिन्ते तस्मिन्नग्नौ देवाः वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवति।।३।।

पुरुषो वाव गौतमाग्निस्तस्मिन्नेतस्मिन्नग्नौ देवाः आजुहन्ति तस्या आहुतेरेतः सम्भवति।।४।। योषा वाव गौतमाग्निस्तस्मिन्नेतस्मिन्नग्नौ देवाः जुह्वन्ति तस्या आहुतेर्गर्भः सम्भवति इति तु पंञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति इति।।।५।। तत्र प्रथमाग्नावपामश्रवणात् श्रद्धां जुह्वन्तीति श्रद्धाया एव श्रवणान्न भूतैः सम्परिष्वक्तो रंहतीति चेन्न। तत्रापि श्रद्धाशब्देन ताः भूतोपलक्षका आप एवोच्यन्ते। कुतः इति तु पंचम्यामुहुतावाप इत्युपसंहाराल्लक्षणोपपत्तेरिति सूत्रार्थः। तदिदमाह **ज्ञानेनैव परं पदं याति** इति। यातीति पुमान् तस्मिन्याति। लोकान्तरं गच्छति । ज्ञाने जीवे यद्यपि पूर्वश्रद्धापदमेव अनुवर्तते न त्वाप इति शेषः। तथापि परं अनन्तरं उपसंहारे पंचमाग्नौ अनैव अनन्ति जीवन्ति अनेनेत्यन् तेन आना जीवनेन जलेन युक्तं पदं आप इत्येतदस्ति। अतस्तदनुरोधेनोपक्रमस्थमपि श्रद्धापदं जलपरमेवेति भावः।।५।।

उक्तमाक्षिप्य समादधत् सूत्रं **ओं अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः**। भूतैः सह गच्छतीति तत्राश्रवणादिति चेन्न। ''अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति इति कौंठरव्यश्रुतेः। यागादिकर्तृणां भूतैः सह गमनप्रतीतेः।।६।।

ननु ''अपाम सोमममृता अभूम'' इति श्रुतेर्मोक्षस्य यागादिकर्मसाध्यत्वावगमात् न तदर्थं वैराग्यादि सम्पादनीयमित्यतो सूत्रं **ओं भाक्तं वाऽनात्मवित्वात्तथा हि दर्शयति**। यागादि

साध्यममृतं भाक्तं गौणं तच्छुतस्यामृतशब्दः स्वर्गादिपर इति यावत्। कुतः? कर्तुरनात्मवित्वात् । आत्मविद एव च "नान्यः पन्था" (तै.आ.३-१३) इति श्रुतेर्मोक्षदर्शनादिति सूत्रार्थः। वाशब्देन मुमुक्षुकृतयागादेः "कर्मणा ज्ञानमातनोति" इति श्रुतेरन्तःकरणादिशुद्धिद्वारा ज्ञानसाधनत्वमभिप्रैति। तत्तात्पर्यमाह **शुभेन कर्मणा स्वर्गं** इति। यतः शुभेन कर्मणा यागादिना स्वर्गमेव याति न मोक्षं तस्मात् तदर्थं ज्ञानमेव समाश्रयेत्। तच्च विरक्तः सन्नेव तदर्थं वैराग्यं सम्पदानीयमेवेत्यर्थः ।।७।।

ननु "कर्मणा बध्यते जन्तुः" इति संसारस्य कर्मनिबन्धनतावगमात् । कर्मणि च भोगेन क्षीणे सति स्वयमेव मोक्षो भविष्यत्यतो व्यर्थं ज्ञानार्थं वैराग्यादिसम्पादनमित्यतः सूत्रं कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां इति। कृतस्य कर्मणो भोगेनात्ययेऽपि तदनुशयेन तच्छेषेणैव सह पुनरायाति। "ततः शेषेणेमं लोकमायाति पुनःकर्म कुरुते पुनर्गच्छति पुनरागच्छति" इति श्रुतेः।

भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः। कर्म कृत्वा पुनर्गच्छेत्पुनरायाति नित्यशः।

आचतुर्दशमाद्वर्षात्कर्माणि नियमेन तु । दशावराणां देहानां कारणानि करोत्ययम् ।

अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ।। इत्यादि स्मृतेश्चेत्यर्थः।

तदिदमाह। यस्मात्कर्मणां भोगेनैव क्षय इति नास्ति तस्मात् ज्ञानार्थं विरक्तो भवेदिति।।८।।

नन्वेवमपि स्वर्गफलस्यानित्यत्वेऽपि स्वर्गात्प्रत्यावृत्तिसमये "यथेतमागच्छति" इति श्रुतेः। येन यथागतस्तेनैव परिचितमार्गेण गमनेऽत्यन्तक्लेशाभावान्नातीव वैराग्यं तत्र कर्तव्यमित्यतः सूत्रं **ओं यथेतमनेवं च** इति। "धूमादभ्रमभ्रादाकाशामाकाशाच्चन्द्रलोकं यथेतमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" इति काषायणश्रुतेर्यथेत-मन्यथावगच्छति तस्मादतिक्लेशसत्वात् तत्र विरक्तः सन् ज्ञानमेव समाश्रयेदिति।।९।।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं चरणदिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः**। "तद्य इह रमणीयचरणा अभ्याशो ह यत्ति रमणीयां योनिमापद्यन्ते" (छां.उ.५-१०-७) इतिश्रुतेश्चरणफलमेव गमनादिर्न यज्ञादिफलम्। "आचार इति सम्प्रोक्तः कर्मांगत्वेन शुद्धिदः। अशुद्धिदस्त्वनाचारश्चरणं तूभयात्मकम्" इति स्मृतेः कर्मांगभूतोऽयमाचारः। "आचान्तेन कर्तव्यं यज्ञोपवीतिना कर्त्तव्यं बद्धशिखेन शुचिना कर्तव्यं" इत्यादिना सर्वकर्मांगता। विहितस्याचमनाद्यंगस्यैवैदं फलम् । यथा दध्ना इन्द्रियकामस्य जुहुयादित्यादौ क्रत्वंगभूतदध्न एवेन्द्रियफलं नत्वग्निहोत्रहोमस्य तस्य स्वर्गादिफलकत्वात् । एवं चरणवाक्याद्गतागतमप्यंगस्यैव फलम् । तथा च कर्मणामपुनरावृत्तिस्वर्ग एव फलम् ।

नन्वेतद्विरुद्धं प्रधानांगयोर्विरुद्धफलकत्वात्कथमंगांगिभाव इति चेत् । इत्थं यदा क्रत्वर्थमेव दधिकामनयोपादीयते तदांगफलं अन्यथा तु क्रतुफलमेव। एवमत्रापि कर्मांगभूत

एवाचारस्तत्फलकामनयाऽनुष्ठीयते तदा तदेव फलं भवति। उक्तं च रमणीयचरणानां ब्राह्मणादि-योनिप्राप्तिरूपफलं च तत्तत्कामस्यैव भवति । युज्यते च तत्कामाना। वाजपेयराजसूयाद्यनुष्ठानार्थम् । तत्कर्मजन्यानन्तफलार्थं ब्राह्मणादियोनिं प्राप्य पुनः पुनः कर्माणि कृत्वा अतिशायितमनन्तफलं भोक्षामीति। यज्ञाद्युपलक्षणार्थं चरणादिश्रुतिरिति कार्ष्णाजिनिः मन्यते। उक्तमाक्षिप्य समादधत्सूत्रं **ओं आनर्थक्यमिति चेन्न तदपेक्षत्वात्** । तर्हि रमणीयाः कपूया इत्येव स्याच्चरणशब्द-स्यानर्थक्यमिति चेन्न चरणापेक्षत्वात् रमणीयत्वादेस्तज्ज्ञापनार्थत्वोपपत्तेः। प्रकारान्तरेण शब्दार्थं वक्तुं सूत्रं **ओं सुकृतदुष्कृते एवेति तु बादरिः**। "धर्मं चर माऽधर्मं" इति धर्माधर्मानुष्टाने चरणशब्दप्रयोगात् । सुकृतदुःष्कृते एव चरणशब्दोक्ते इति बादरिर्मन्यते। तुशब्दात्स्वस्यापि तदेव सम्मतमित्येवावधारयति। अतो गतागतस्य कर्मफलत्वाद्युक्तं तत्रैव वैराग्यम्। तदप्युक्तं **तस्माद्विरक्त सन्** इत्यादि।।१०।।

नन्विष्टादिकारिणामेव प्रत्यवायभयवत्वेन पतनसम्भवाद्गतादिक्लेशोऽपि तेषामेव । बिभ्यत्पतति पादपात् इति न्यायात्। इष्टाधिकारिणस्तु स्वयमेवात्मानं विधिनिषेधाभ्यां बध्नन्ति नेतरे अतः पुण्यकृतामेव क्लेशस्तदिति तेषां तु गतागतादिक्लेशरहितो मोक्षो अतः पुण्ये तत्फले च वैराग्यमस्तु नत्वन्यत्र विषये इत्यतः सूत्रं **ओं अनिष्टादिकारिणामपि च श्रुतम्** । अनिष्टादिकारिणा इति तदकारिणस्तद्विरुद्धकारिणश्चोच्यन्ते। तदिदमप्याह **शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा** इति। विकर्मशब्देन कर्माकरणं निषिद्धकर्मकरणं चोच्यते। न केवलमनिष्टादिकारिणं गतागतक्लेशमात्रं किन्तु दुःखं चान्यदस्तीत्यर्थप्रतिपादकं सूत्रं **ओं संयमने त्वनुभूयेतरेषा-मारोहावरोहौ तद्गतिदर्शनात्** इति। तस्यार्थः संयमने यमशासने दुःखमनुभूय तदवसाने इतरेषामनिष्टादिकारिणां केषांचिदारोहस्तत उत्थानं केषांचिदवरोहस्ततोऽपि नीचस्थाने नित्यनरके पातो भवति । कुतस्तेषां तथागतिः। श्रुतौ दृष्टत्वात् । तथा च श्रुतिः। "सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ह ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवेते उत्तिष्टन्तेऽपि कर्हिचित् वव्रं वा एतदित्याहुरथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ति" इति कौण्ठरव्यश्रुतिः। **ओं स्मरन्ति च** ।

गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः। तत्र भुक्ताः पतन्त्येव ये द्विषन्ति जनार्दनम् ।
महातमसि मग्नानां न तेषामुत्थितिः क्वचित् । इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च।
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखं । इति सर्वत्र नियमः पंचकष्टे तु तत्सदा।।
तथा – तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्।।
(भ.गी.१६-१९,२०) इति ।

न च बिभ्यत्पततीति न्यायविरोधः। अबिभ्यतापि धार्ष्ट्येन पीतस्य विषस्य मारकत्वदर्शनात्। "तद्य इह शुभकृतो ये वाऽशुभकृतस्तेऽशुभमनुभूयावर्तन्ते पुनः कर्म कुर्वन्ति पुनर्गच्छन्ति पुनरागच्छन्ति" (भाल्लवेय)इति श्रुतौ तेषामपि गतागतं श्रुतं तदभिसन्धायाह **निरयं च विकर्मणा। मिथ्याज्ञानेन च तमो याति।** तस्माद्भगवज्ज्ञानार्थं तत्र विरक्तिः सम्पादनीयेति भावः ।।११।।

ननु "यावदिन्द्राश्चतुर्दश चकार नरकं शून्यं" इत्यादेर्नरकाणामनित्यत्वावगतेः संयमनेत्युक्तं नित्यनरकवचनमयुक्तमित्यतः सूत्रं **ओं अपि सप्त।**

रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा। कुंभीपाक इति प्रोक्ता अन्यानि नरकाणि तु।

तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ। इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् ।।

इत्युक्तेर्नित्यत्वानित्यत्वप्रतिपादकवचनानां युक्तत्वेन विरोधाभावाद्भगवद्द्वेषरूपमिथ्याज्ञानेन तमो यात्यतस्तत्र भवितव्यमेव विरक्तेनेति भावः ।।१२।।

ननु भगवद्द्वेषफलेऽपि नरकदुःखाभावात्किमिति तत्र वैराग्यं विधेयम् । तत्रापि दुःखांगीकारे तत्प्रेरणार्थं प्रविष्टस्य ईश्वरस्यापि दुःखानुभवप्रसङ्गात् । तदनङ्गीकारे च सर्वप्रेरकत्वसर्वज्ञत्व-विरोधादित्यतः सूत्रं **ओं तत्रापि च तद्व्यापारादविरोधः** इति। नरकेऽपि ईश्वरप्रेरणादिव्यापारात्तत्र च सर्वज्ञत्वात्तदीयदुःखं पश्यतोऽपि सामर्थ्यात्तत्प्रयुक्तनीचोच्चतापत्तिरूपभोगाभावेन न कश्चिद्विरोधः। तथा च भागवततन्त्रे -

"नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते। नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते।

नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः।।" इति यस्मात्तस्मात्तत्र विरक्तः सन् ज्ञानमेव समाश्रयेदिति ।।१३।।

नन्वेवमपि(छां.उ.५-१०-१) "तेऽर्चिषमभिसम्भवन्ति.....ते धूममभिसम्भवन्ति" "अथैतयोः पथोः न कतरेण च तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यत" (छां.उ.५-१०-८)इति भूतानां गतिस्वातन्त्र्याभिधानात्तत एव च फलेऽपि स्वातन्त्र्यसम्भवान्न तत्रातीव वैराग्यं कार्यमित्यतः सूत्रं **ओं विद्याकर्मणोरिति तु प्रकृतत्वात्।** तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषामभिसम्भवन्त्यथ य इमे ग्रामा इष्टापूर्तेदत्तमित्युपासते ते धूममभिसम्भवन्ति इति विद्याकर्ममार्गयोः प्रकृतत्वात् । एतच्छब्दो न तत्परामर्शाच्छास्त्रावैय्यर्थ्याय साधनस्वातन्त्र्यं पराधीनमभ्युपगतं फले तु तन्नास्ति अतस्तत्र विरक्तः सन् ज्ञानमेव समाश्रयेदिति ।।१४।।

नन्वेवमन्धंतमोऽपि यत्र दुःखं तत्र सुखमिति व्याप्तेः दुःखयुतत्वादेव सुखयुक्तमपि स्यादतो नातीव वैराग्यं तत्र युक्तमित्यतः सूत्रं **ओं न तृतीये तथोपलब्धेः।** अथाविद्वानकर्माऽवागच्छति त्रिधा

ह वाऽवाग्गतिस्तिर्यग्यातना तम इति। द्वे वाव सुखानुवृत्ते, न तमः सुखानुवृत्तं केवलं ह्येवात्र दुःखं भवति'' इति श्रुतेः। न केवलं श्रुतेः किन्तु स्मृत्यनुमानाभ्यामपीति सूत्रं **ओं स्मर्यतेऽपि च लोके**। ''अतिप्रिये यथा राजा न दुःखं सहते क्वचित्। अत्यप्रिये सुखमपि तथैव परमेशवर'' इति (ब्राह्म)स्मृतेश्च। चशब्दात्समुच्चितमनुमानं लोके इत्यनेन सूचितम्। तदयं प्रयोगः विप्रतिपन्नाः न सुखवन्तः तथात्वेनेश्वरेणानिष्यमाणत्वात्। यो यथात्वेन तेन नेष्यते नासौ तथा यथा विषाणित्वेन शश इति। योगिप्रत्यक्षेणाप्येतमर्थं साधयत्सूत्रं **ओं दर्शनाच्च**।

नारायणप्रसादेन समिद्धज्ञानचक्षुषा। अत्यन्तदुःखसल्लीनान् निःशेषसुखवर्जितान्।
नित्यमेव तथा भूतान्विमिश्रांश्च गणान्बहून्। निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः।
अपश्यत्त्रिविधा ब्रह्मा साक्षादेव चतुर्मुखः॥ इति दर्शनवचनाच्च पाद्मे।

न तृतीयाऽवागिति रूपे तमसि न सुखलेशोऽपीत्येतमर्थापत्त्यापि साधयत्सूत्रं **ओं तृतीये शब्दावरोधः संशोकजस्य** इति। अत्र तृतीयशब्दावरोध इत्यतो .... तृतीय इत्यनुवर्तते। ततश्च तृतीयावाग्गतिरूपे तमसि यस्तृतीयो भाग ऊर्ध्वमध्यापेक्षया अधः प्रदेशोऽत्यन्तद्वेषिणामेव गम्यस्तस्मिन् तृतीये विषये यः शब्दः श्रूयते। तेन शब्दश्रवणेनावरोधः प्राप्तिर्भवति कस्य संशोकजस्य मोहस्येति सूत्रार्थः। तत्स्वरूपश्रवणमात्रेण तच्छ्रोतृणामपि महामोहप्राप्त्यन्यथानुपपत्या न तत्र सुखलेश इति भावः। कुतस्तच्छ्रोतृणां मोहप्राप्तिरित्यवगतमित्यतः सूत्रं **ओं स्मरणाच्च** इति। तथा –

''महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम्। श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत्।
तस्मान्न विस्तरेणैतत्कथ्यते राजसत्तम॥'' (कौर्म) इत्यर्थप्रतिपादकं स्मरणादित्यर्थः।

तस्माद्विरक्तः सन्ज्ञानमेव समाश्रयेदिति॥१५॥

ननु ''धूमो भूत्वा अभ्रं भवति'' (छां.उ.५-१०-५) इत्यादिश्रुतौ स्वर्गादग्वाग्गतस्य धूमादिदेवतापदप्राप्तिः श्रूयते। सामानाधिकरण्येन निर्देशात्। न च कर्मिणां कथं पूर्वावस्थितदेवतात्वापत्तिरसम्भावादिति वाच्यम्। तत्पदे कर्मिणां धूमादिदेवताभिः सहावस्थानात्स्नेहवशेन ताभिरेव स्वपदस्य दातुमपि शक्यत्वात्। तासां च कल्पस्थायित्वेन व्यर्थं कर्मणि तत्फले च वैराग्यमतः सूत्रं **ओं तत्स्वाभाव्यापत्तिरुपपत्तेः**। अत्र कर्मिणां धूमादिभावो नाम तत्स्वभावत्वप्राप्तिरेव न तु तत्पदप्राप्तिः। धूमादिप्रवेशेन तद्गतौगतितत्स्थितेस्थितिः इत्यादितदीयभावापत्तिः। न ह्यन्यस्यान्यभावो युज्यते।

धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु। स्थितौ स्थितिः प्रवेशश्च लघुत्वादिस्तथैव च।
न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते। विद्यागम्यं पदं यस्मान्न तत्प्राप्यं हि कर्मणा।

एकदेशस्वभावेन वागभेदाऽपि युज्यते। यथा जीव : परं ब्रह्म ब्रह्मेदं जगदित्यपि।। इति।

इदमप्याह **तस्मात्** इति। तस्मात्तत्र विरक्तो भवेदिति ।।१६ ।।

नन्वेवमपि बहुस्थानसंचरणे विलम्बात् कल्पान्तमेव स्यादतो नातीव तत्र वैराग्यमतः सूत्रं **ओं नातिचिरेण विशेषात्** । ''तद्येह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते तथैव कपूयचरणा अभ्याशो ह यत्ते कपूयामापद्येरन्'' (छां.उ.५-१०-६)इति श्रुतौ अभ्याशः इति शीघ्रवाचिपदविशेषोपादनात् । अविलम्बेनैवागत्या तत्तद्योनिप्राप्तगर्भवासदुःखप्राप्तिरतो युक्तं वैराग्यम् । आपद्यन्त इति शाखांतरपाठः। तदप्याह **तस्माद्विरक्तः सन्निति** ।।१७ ।।

ननु वेदेन सुखार्थमुपदिष्टानि कर्माणि दुःखसाधनानि दृश्यन्ते तथा हि । ''त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते'' (छा.उ.५-१०-६)इति कर्मिणामागमनकाले व्रीह्यादिभावस्य कर्मफलत्वेनोक्तत्वात् । न च भूमादिभाववद्गौणतया व्याख्येयम् । तन्मुख्ये बाधकाभावात् व्रीह्यादित्वापत्तौ च छेदभेदावघातादिजन्यदुःखप्राप्तिरवर्जनीया । भूमादिव व्रीह्यादिजीवैः सहवासेऽपि तेन सह दुःखानुभवस्यापातात् । न हीश्वरोऽसौ येन दुःखिनासह वसन्नपि दुःखं नानुभवेत् । तस्माद्दुःखसाधनीभूतकर्मणां सुखफलकत्वप्रतिपादिकायाः श्रुतेराश्वासायोगात् । श्रुतित्वाविशेषेण मोक्षार्थं वैराग्यं संपादयेदिति श्रुतेरप्यनाश्वासान्न तदर्थं वैराग्यं सम्पादनीयमित्यतः सूत्रं **ओं अन्याधिष्ठिते पूर्ववदभिलापात्** । अन्याधिष्ठिते व्रीह्यादिशरीरे कर्मणा प्रवेश एव । न तु व्रीह्यादिजीववत्प्रविष्टस्यापि विघातादिदुःखभोगः। ''धूमो भूत्वाऽभ्रं भवति'' इति पूर्ववत् । ''सोऽवाग्गतः स्थावरान्प्रविश्याभोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद्भोगाननुभुंक्ते'' इति कौषारवश्रुतौ अभिलापात् । उक्तमाक्षिप्य समादधत्सूत्रं **ओं अशुद्धमिति चेन्न शब्दात्**। यज्ञादिकर्मणः पशुहिंसारूपत्वात्पापस्यापि सम्भवात्तत्प्रयुक्तं दुःखं च भवतीति चेत् न शब्दविहितत्त्वात् ।

हिंसा त्ववैदिका या तु तथाऽनर्थो ध्रुवं भवेत् । वेदोक्तया हिंसया तु नैवानर्थः कथंचन ।। इति वाराहे ।।१८।।

तथा स्वर्गादवाग्गतस्य पितृशरीरप्रवेशप्रतिपादकं सूत्रं **ओं रेतः सिग्योगोऽथ** इति। ''अथानन्तरं रेतः सिंचति'' इति रेतः सिक्तेन योगः तच्छरीरप्रवेशो भवतीत्यर्थः ।।१९ ।।

ततः पितृद्वारा मातृशरीरप्रवेशेन शरीरप्राप्तिर्भवतीत्यर्थकं सूत्रं **ओं योनेः शरीरं** इति।।२०।।

''दिवस्थास्नून् गच्छति स्थास्नुभ्यः पितरं पितुर्मातरं मातुः शरीरं शरीरेण जायते इति सम्मितम्। यथासम्मितं स्थास्नुभ्यो जायते पितुर्मातुरंतरे वा गर्भे वा बहिर्वा'' इति पौषायणश्रुतिः। सम्मितं सर्वसाधारणं जन्म। असंमितं कारणविशेषणनिबन्धनमसाधारणं जन्म। स्थास्नुभ्यः शुकादयः ।

पितुरेव यथा मान्धात्रादयः। प्रमदायामास्तिकादयः। जरत्कार्वाद्यनुग्रहात् मातृगर्भेपूर्वं सिद्धंमेव शरीरं प्रविशन्ति। बहिर्द्रुपदादयः। स्थानान्तरेषु धृष्टद्युम्नादयः। तस्मादतिक्लेशवत्वात्तत्र विरक्तः सन् ज्ञानमेव समाश्रयेदिति युक्तं ज्ञानार्थं वैराग्यसाधनं सिद्धमिति ।।

**।। इति नारायणकृतावणुभाष्यप्रपंचने प्रथमोंघ्रिःपर्यगमत्तृतीयाध्यासंगतः ।।**

**मळगी** – इदानीमस्मिन् तृतीयाध्याये मोक्षसाधनविचारः क्रियते । **शुभेन** इति। **शुभेन कर्मणा** सत्कर्मणा। **स्वर्गं** मन्वन्तरभोग्यं स्वर्गम् । **याति** प्राप्नोति। **विकर्मणा** विरुद्धकर्मणा। **निरयं** नरकम् । **मिथ्याज्ञानेन** रुद्रादिसर्वोत्तमत्वज्ञानेन। **तमः** अन्धतमो याति । **ज्ञानेनैव** हरिसर्वोत्तमत्वज्ञानेनैव। **परं पदं** वैकुंठम् । यातीत्युत्तरेणान्वयः ।।१ ।। तस्माद्विरक्तो भूत्वा **ज्ञानमेव** यथार्थब्रह्मापरोक्षज्ञानमेव। **समाश्रयेत्** सम्पादयेदित्यर्थः।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां तृतीयाध्यायस्य प्रथमः पादः ।।**

**लिंघेरी** – अस्मिन् तृतीयाध्याये मोक्षसाधनविचारः क्रियते **शुभेन** इति । शुभेन कर्मणा स्वर्गं याति। **विकर्मणा** विरुद्धकर्मणा । **निरयं** नरकं याति । **मिथ्याज्ञानेन** रुद्रादिसर्वोत्तमत्वज्ञानेन । तमः याति। **ज्ञानेनैव** हरिसर्वोत्तमत्वज्ञानेनैव । **परं पदं** वैकुंठं । याति (इति) उत्तरश्लोकेन अन्वयः ।।१।। तस्मात्कारणात् विरक्तः सन् । **ज्ञानमेव समाश्रयेत्** ज्ञानसम्पादनं कुर्यात् । स एकः परमेश्वरः **सर्वावस्थाप्रेरकः** जागृत्सुषुप्तिस्वप्नानां प्रेरकः । सर्वरूपेषु सर्वदेशेषु सर्वकालेषु **अभेदवान्** भेदरहितः । चशब्दात्तद्भक्तोऽपि भवेदिति सूचयति।।२।। तद्भक्त्या किं भवतीत्यत आह **तद्भक्ति** इति। **तद्भक्तितारतम्येन** नारायणे भक्तितारतम्येन । **तारतम्यं** जीवानां तारतम्यम् । **विमुक्तिगं** मोक्षस्थितं भवति।।३।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने तृतीयाध्यायस्य प्रथमः पादः ।।**

**नारायणपण्डित**– तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्यां इत्याद्यधिकरणतात्पर्यं शुभेन कर्मणा स्वर्गं यातीति । संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनादित्यादेस्तात्पर्यं विकर्मणा । असत्कर्मकरणेन निषिद्धकर्मणा निरयं यातीति। न तृतीये तथोपलब्धेरित्यादेस्तात्पर्यं मिथ्याज्ञानेन विकर्मणा च तमो यातीति। भाक्तं वा अनात्मवित्वात्तथा हि दर्शयतीत्यस्यार्थः ज्ञानेनैव आपरोक्ष्येण परं पदं मोक्षं यातीति। पादार्थमुपसंहरन्नुत्तरपादार्थं दर्शयति तस्मादिति। तस्मात्स्वर्गादिषु विरक्तः सन्मोक्षसाधनं भक्तिपूर्वकमुपासनेन सम्पादयेदित्यर्थः। **अधिकरणानि २० सूत्राणि २९**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने तृतीयाध्यायस्य प्रथमः पादः ।।**

**गूढकर्तृक** – एवं पूर्वाध्यायोक्ताभ्यां समन्वयाविरोधाभ्यां संजाते ब्रह्मनिर्णये किं वा कार्यमित्यधिकारिणः शंकायामथजिज्ञासापदोक्तमोक्षसाधनान्यस्मिन्नध्याये विचार्यते। ज्ञानकारणोपासनांगभक्तिदार्ढ्यापादक वैराग्याय गत्यागतिस्वर्गनरकगर्भवासादिस्वरूपप्रतिपादनपराद्यपादार्थं संकुच्याहाणुभाष्यकारो भगवानाचार्यवर्यः। **शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा। मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् । याति तस्माद्विरक्तः सन् ज्ञानमेव समाश्रयेत्** इति। तदन्तरप्रतिपत्तावित्याद्यधिकरणतात्पर्यं **शुभेन कर्मणा** इति। **शुभेन** ज्योतिष्टोमादिना कर्मणा स्वर्गं यान्तीति। संयमनेत्यनुभूयेत्यादेस्तात्पर्यं **विकर्मणा** इति। **विकर्मणा** सत्कर्माकरणेन निषिद्धकर्मणा **निरयं** नरकं यान्तीति। न तृतीये तथेत्यादेस्तात्पर्यं मिथ्याज्ञानेन। जगन्मिथ्या ईश्वरोऽहमित्यादिना विकर्मणा च तमो यातीति। भाक्तं वाऽनात्मवित्त्वादित्यस्यार्थः ज्ञानेनैव। सम्यग्ज्ञानेनैव सर्वस्वामी मम स्वामी सर्वकर्ता च ईश्वरो नारायण इत्यादिना ज्ञानेनैवापरोक्षेन **परं पदं** मोक्षं याति पादार्थमुपसंहरति। **तस्मात्** कर्मसाध्यस्वर्गादेश्चानित्यत्वात्तेषु विरक्तः सन् मोक्षसाधनं ज्ञानमेव समाश्रयेदिति। भक्तिपूर्वमुपासनेन सम्पादयेदिति प्रथमपादार्थः ।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने तृतीयाध्यायस्य प्रथमः पादः ।।**

**अणुभाष्यम्**

**सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान्।**
**सर्वदेशेषु कालेषु स एक परमेश्वरः।।३।।**
**तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ।**

**सत्यनाथीया** – सन्ध्ये सृष्टिराह हीत्यादेस्तात्पर्यमाह **सर्वावस्था** इति । सर्वदेशेषु कालेषु सर्वावस्थाप्रेरकः परमेश्वर एक एवेति न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हीत्यादिदेशेषु कालेषु गतेषु सर्वरूपेषु अभेदवानिति। वृद्धिह्रासभाक्त्वं अन्तर्भावादुभयसामंजस्यादेवमित्यादेस्तात्पर्यं **तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम्** इति।

**।। अणुभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ।।**

**तत्वमञ्जरी**– एवमुक्तदिशा उक्तार्थमनुसन्दधतोऽधिकारिणो वैराग्योत्पत्तिसम्भवेऽपि अनुबन्धादिभ्य इति वक्ष्यमाणदिशा भक्तिमत एव श्रवणादिभिः ईश्वरापरोक्षज्ञानोदयात् भक्तिनिरूपणार्थोऽयं द्वितीयः पादः इति भक्तिरस्मिन् पाद उच्यत इति विस्तरभाष्यात्स्पष्टम्।

ननु तत्र भक्तिरुच्यत इति कोऽर्थः किं सा कर्तव्येति विधीयते किं वा तत्स्वरूपमुच्यते। नाद्यः। प्रयत्नागोचरत्वेन विधेयत्वाभावात् । नान्त्यः । भगवन्माहात्म्यस्यैव निरूपणेन भक्तिस्वरूपानिरूपणात् । "भक्त्यर्थं भगवन्महिमोच्यते" इति श्रीमद्भाष्योक्तेश्च । न हि महिमोक्तेः

भक्तावुपयोगोऽस्तीत्याशङ्कानिवृत्त्यर्थं "विरक्तः सन् ज्ञानमेव समाश्रयेत्" इति पूर्वभाष्यमत्रानुवर्त्य योज्यम् । तथा हि सन्निति श्येनेनाभिचरन् यजेत, अर्जयन् वसतीत्यादाविव लक्षणहेत्वोः क्रियाया इति हेतौ शतृप्रत्ययान्तं पदम् । नीतितन्त्रम् । विशब्दवाच्ये परमात्मनि विशेषेण रक्तः सन् रक्तो भवितुं, भक्तो भवितुमिति यावत्। भगवन्माहात्म्यज्ञानमेव समाश्रयेत् सम्पादयेदित्यर्थः।

"माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः। स्नेहो भक्तिः" (म.ता.नि.१-८५) इत्युक्त्या माहात्म्यज्ञानपूर्वकस्नेहस्यैव भक्तित्वात् माहात्म्यानुक्तौ च तज्ज्ञानवत् स्नेहस्य चानुदयात् तयोरुत्पत्त्यर्थं अत्र पादे भगवन्माहात्म्योक्तिरिति भावः। अत्रैवकारेण एतच्चोद्यं प्रत्युक्तम् । विनापि माहात्म्यज्ञानं पुत्रादौ स्नेहदृष्टेः। क्वचिन्माहात्म्यज्ञानेऽपि स्नेहादृष्टेः अन्वयव्यतिरेकव्यभिचारात् माहात्म्यज्ञानं स्नेहाहेतुरिति। हेत्वन्तरेण फलसिद्धावप्यस्य हेतुत्वाविरोधात् । कारीरीं विना वृष्टिर्दृष्टेति कारीर्या वृष्ट्यहेतुत्वाभावात् । ज्ञातमाहात्म्यस्यापि पुंसः स्नेहानुत्पत्तेः मात्सर्यादिनिरुद्धत्वेन अकारणत्वानापादकत्वादिति भावः।

ननु यदुक्तं प्रथमाध्याये सर्वमीशाधीनमिति तदसाध्विव। स्वाप्नपदार्थानामसत्यत्वेन तत्प्रतीतेः बाह्यपदार्थज्ञानाधीनत्वेन तेषां तत्प्रतीतेश्च ईशाधीनत्वाभावात् । तथा स्वाप्नतिरोधानमपि नेशाधीनम्। स्वाप्नप्रतीतेः बाह्यार्थज्ञानाधीनत्वेन तदप्रतीतेः बाह्यार्थज्ञानाधीनत्वौचित्यात् । जाग्रत्सुषुप्त्यवस्थयोरपि नेशाधीनत्वम् । तयोः कालाद्यधीनत्वानुभवात् । सुषुप्तौ जीवस्य "सता सोम्य तदा सम्पन्नः" इति श्रुत्या ईशप्राप्त्युक्त्या तदधीनत्वोपगमे तदा नाडीषु सुप्तो भवति इति श्रुतिविरोधः। तथा सुप्तप्रबोधस्य मूर्छायाश्च नेशाधीनत्वम् । तयोः भेरीताडनाद्यधीनत्वानुभवात् । मूर्छायामीशादन्यत्र चक्षुरादौ जीवस्यावस्थाने जाग्रदाद्यवस्थानुप्रवेशेन, भगवत्यवस्थाने सुप्तिसाङ्कर्येण तस्याः पृथगवस्थात्वायोगाच्चेति चोद्यानां निरासाय प्राप्तानि - **सन्ध्ये सृष्टिराह हि** इति, **पराभिध्यानात्** इति, **देहयोगाद्वासोऽपि** इति, **तदभावो नाडीषु** इति, **अतः प्रबोधोऽस्मात्** इति, **मुग्धेऽर्धसम्पत्तिः** इति षडधिकरणानि । तेषु को महिमा विष्णोरुक्त इत्यतस्तेषां भावार्थमाह - **सर्वावस्थाप्रेरकश्च** इति।

सर्वासामवस्थानां स्वप्नतत्तिरोधानजाग्रत्सुषुप्तिसुप्तिप्रबोधमोहरूपावस्थानां प्रेरको नियन्ता । स एकः परमेश्वरः इत्यग्रेतनं वाक्यमत्राकृष्य योज्यम् । वक्ष्यमाणेन समुच्चयार्थश्चशब्दः। योऽध्यायद्वयेन निर्दोषगुणपूर्णो निर्णीतः स इति तच्छब्दार्थः। स्वप्नतिरोधानसुप्तप्रबोधयोः पृथगवस्थात्वाभावेऽपि प्रसिद्धजाग्रदाद्यवस्थैकदेशत्वादेवावस्थात्वोक्तिः। यद्वाऽवस्थानमिति स्वप्नजाग्रत्सुषुप्तिमोहावस्थानामेव ग्रहणं तत्तिरोधायको बोधकश्चेति चशब्दार्थः। यद्वाऽवस्था अवस्थितयः जीवानामवस्थितानि। तेषां प्रेरक इत्यर्थः। सूर्यादिभासक इतिवदयं निर्देशो बोध्यः। अत्र स इत्युक्त्या प्रथमाध्यायोक्तमहिम्न एवात्र विशेषशङ्कानिरासेन प्रपञ्चनमिति सूचितम् । तत्र

परमेश्वर इत्युक्त्या "मनोगतांश्च संस्कारान् स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय" इत्यादिवाक्यसूचनेन स्वाप्नानां मनोवासनोपादानेन ईश्वरजन्यतया तस्यत्वात्, बन्धमोक्षादिसर्वेश्वरत्वात् स्वप्नाद्यवस्थाप्रेरकत्वं तस्य युक्तमिति दर्शितम् ।।१-७।।

ननु लोके राजादेः खण्डेशत्वदर्शनेन ईश्वरस्यापि केषाञ्चित् किञ्चिदवस्थायाः प्रेरकत्वमस्तु, न सर्वेषां सर्वावस्थानामित्यतः प्राप्तं - **स एव च कर्मानुस्मृतिशब्दविधिभ्य** इति षष्ठमधिकरणम् । तस्याप्यर्थः **सर्व** इत्यादि। सर्वेति तन्त्रम् । सर्वासां प्रजानां सर्वासामवस्थानां प्रेरकः सः य एकदेशप्रेरकत्वेनाङ्गीकृतः स एकः परमेश्वरः नत्वनेक इत्यर्थः। तत्रैकपरमपदाभ्यां "प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु। परमः पुरुषो विष्णुः" इत्यादिवाक्यसूचनेन परमेश्वरत्वहेतुरुक्तो भवति। अन्यथा ईशावरत्वमेव स्यान्न परमेश्वरत्वम् । तच्च वचनसिद्धमिति भावः।

अत्र यद्यपि "तदभावो नाडीषु" इति नये जीवस्य नाडीस्थितपरमात्मनि सुप्तिरित्युच्यते न तु सुप्त्यवस्थायामीशाधीनत्वम् । तथा "मुग्धेऽर्धसम्पत्तिः" इति नयेऽपि मोहावस्थायां जीवस्य भगवति न समग्रप्राप्तिः सुखानुसन्धानात् । नाप्यप्राप्तिरेव । अन्यार्थादर्शनात् । अतः परिशेषादर्धप्राप्तिरिति मोहावस्थानमेवोक्तम् । न तु सुप्तिमोहावस्थयोरीशाधीनत्वमुच्यते। तथापि तयोरवस्थयोरीशाधीनत्वस्य "स एव च कर्मानुस्मृतिः" इत्येतन्नयेनैव सिद्धत्वं द्योतयितुं तदर्थोक्तिपरभाष्येण सर्वावस्थाप्रेरक इत्यनेनैव सहेतरषडधिकारणभावार्थोऽपि भाषितः। यथोक्तं श्रीमद्भाष्ये मोहनये "सोऽपि तत एवेति सिद्धं" इति। नन्वेवं सुप्त्याद्यवस्थाप्रेरकत्वस्यापि "स एव च" इति नयेनैव सिद्धेः तदुक्त्यर्थं "सन्ध्ये सृष्टिराह हि" इत्यादि व्यर्थमिति चेन्न । सामान्यतोऽवस्थाप्रेरकत्वसिद्धावेव किमेकदेशप्रवर्तकोऽथ सर्वप्रवर्तक इति चिन्ताऽवसरात् ।

अत्र सूत्रेषु जीवसम्बन्धिसुप्त्याद्यवस्थाप्रेरकत्वोक्त्या कैमुत्यन्यायसिद्धनानादेशकालस्थितनानाजडगतवृद्धिह्रासाद्यवस्थाप्रेरकत्वं इत्यपि सूचयितुं सर्वावस्थेति समान्योक्तिरिति ।।६।।

नन्वेवं सर्वेषां सर्वावस्थाप्रेरकत्वे अधिष्ठानभूतप्रेर्यजीवानां सुरनरतिर्यगादिभेदेन भेदात्तत्प्रेरकोऽपि भिन्नाधिष्ठानगतघटादिवत् भेदवान् स्यात् । तथा "दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः। आकाशे च हृदि प्राज्ञः त्रिधा देहे व्यवस्थितः।।" इति दक्षिणाक्ष्यादि देशभेदेन, "विश्वो हि स्थूलभुङ्नित्यं" इति जाग्रदादिकालभेदेन च तथा "कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ। प्राज्ञः कारणबद्धस्तु" (मां.उ.२-३)इत्यादिरूपभेदवचनाच्च स्वरूपेषु भेदवान् स्यादित्यत प्राप्तं - **न स्थानतोऽपि** इत्यादिसूत्रत्रयम् । तदर्थमाह - **सर्वरूपेष्वभेदवान् । सर्वदेशेषु कालेषु स एकः परमेश्वर** इति।

सुरनरादिशरीरदक्षिणाक्ष्यादिसर्वदेशेषु जाग्रदादिसर्वकालेषु स्थितेषु विश्वादिसर्वरूपेष्वभेदवान् स परमेश्वरः इत्यर्थः। कुत इत्यत **एकः परमेश्वर** इति। ''यतो नैवेश्वरद्वयं'' इति चक्षुरादिवत्त्वित्यत्र भाष्योक्तयुक्त्या एको हि परमेश्वरो न त्वनेकः। रूपाणां भेदेऽनेकेश्वरापातादिति भावः।

ननु च रूपाणां भेदेऽप्येकस्मिन्नेव रूपे भगवान् परमैश्वर्यवान् । अन्यानि रूपाणि तदनुग्राहकाणि सन्त्वतो न दोष इत्यतोऽपि **सर्व** इति। स प्रागुक्तो भगवान् परमेश्वरः सर्वदेशकालस्थित-रूपेष्वभेदवान् । अविशेषवानित्यर्थः।

नन्वेवं सर्वदेशकालस्थितरूपाणामभेदे व्योमवत्पादाद्येकदेशेनैव तत्र तत्रावस्थानं ईश्वरस्येति स्यात्। तच्च ''सप्ताङ्ग एकोनविंशति मुखः'' (मां.उ.१-४)इत्यादिश्रुतिविरुद्धमित्यतोऽपि - **सर्व** इत्यादि। सर्वशब्दः समग्रवाची । सर्वदेशेषु सर्वकालेषु सर्वभूतेषु प्राणिपादाद्यवयवैः समग्ररूपेषु सत्सु अभेदवान् स परमेश्वर इत्यर्थः।

ननु समग्ररूपेण सर्वदेशाद्यवस्थानं कथं हरेरुपपद्यते। अन्यत्रादृष्टत्वादित्यत **स एकः परमेश्वर** इति हेतुगर्भम् । स एकोऽपि परमेश्वरत्वात् तादृशरूपेणाभेदवानिति। ''ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते'' इति स्मृतेरिति भावः। परमेश्वर इत्युक्त्यैव ''बद्धो बन्धादि साक्षित्वात्'' इति स्मृतिसूचनेन भेदोक्तेर्गतिरपि सूचितेति।।८।।

नन्वेवं सर्वदेशादौ हरेः पाणिपादादिसमग्ररूपाणां अवस्थितिमुपेत्य तेषामभेदोक्तौ रूपवत्त्वात् यज्ञदत्तवदनित्यत्वप्रसङ्गः। ''अरूपमव्ययं'' ''तदरूपमनामयं'' इत्यादिश्रुत्यप्रामाण्यं च स्यादित्यतो हरेरप्राकृतं रूपं वक्तुं अरूपवदेवेत्यादिसूत्रचतुष्टयम्। तस्याप्यर्थः - **सर्व** इत्यादि।

स परमात्मा सर्वरूपेष्वभेदवान् सर्वस्वात्मीयकरचरणादिमद्विग्रहेष्वभेदवान् । न तु यज्ञदत्तादिजीवसम्बन्धिप्राकृतशरीरेषु यज्ञदत्तादिरिव भेदवानित्यर्थः। तथा च ''ऐकात्म्यप्रत्ययसारं'' ''आनन्दरूपममृतं'' इत्यादिश्रुतिस्मृतिभ्यो ज्ञानानन्दाद्यात्मकेश्वरतादात्म्येन रूपस्य प्राकृतदेहवैलक्षण्यात् गृहान्तः नयनादिप्रकाशे सत्यपि चक्षुषादिप्रकाशस्य लौकिकप्रकाशवैलक्षण्येन नास्ति प्रकाश इत्यादिव्यवहारवत् ''अरूपं'' इत्यादिश्रौतव्यवहारस्य, अप्राकृतरूपवत्त्वेन अनित्यत्व-प्रसङ्गस्य चोपपत्तेरिति भावः। कुत एतादृशरूपवत्त्वं हरेः? लोके सर्वरूपाणां प्रकृत्याद्यात्म-कत्वनियमादित्यतः - **सर्वदेशेषु** इति। सर्वदेशेषु कालेषु स एकः परमेश्वरः । प्रकृत्यादिसर्व-स्वामीत्यर्थः। सर्वरूपाणां लोके प्रकृत्याद्यात्मकत्वेऽपि हरेः प्रकृतिभूतादिसर्वेश्वरत्वात् न तत्र प्राकृतादिरूपं युक्तम् । स्वाधीनेन स्वात्मबन्धनाभावादिति भावः। क्वापि कदापि किञ्चिदपि रूपं स्वात्मना भिन्नं नेति वक्तुं देशकालसर्वपदानामुक्तिः। विवृतमेतत् द्वितीयगीताभाष्यादौ तत्र तत्रैवेति।।९।।

नन्वीश्वररूपाणां मत्स्यादीनामीश्वरेणाभेदे मत्स्यादीनामिव जीवादीनामपि ईश्वरांशत्वेनेश्वरेणा-भेदोऽस्तु। न च "पृथगुपदेशात्" इति जीवेश्वरभेदोक्तिविरोधः। सर्वजीवसमुदायस्येशत्वेन एकैकजीवस्य ईश्वरेण भेदाभेदात् अभेदेपि भेदाविरोधादित्यतः प्राप्तम् – **अत एव चोपमा सूर्यकादिवत्** इति। तस्य तात्पर्यार्थमाह – **स एकः परमेश्वर** इति । स विष्णुरेकः परमेश्वरः न जीवोऽपीश्वरकोटौ निवेश्यत इत्यर्थः। अंशत्वं तु भेदेनैव "अंशो नानाव्यपदेशात्" इत्यत्र द्वितीये व्याख्यातमिति भावः ।।१०।।

ननु यदुक्तं जन्मादिसूत्रे सर्वकर्तेति, सृष्टिस्थित्याद्यष्टव्यापारकर्तेति तदयुक्तम् । सृष्टौ सत्यां यावत्संहारं जगत्स्थितेः स्वत एव सिद्धेः संहर्तिः संहारातिरिक्तव्यापारस्य पालनरूपस्यायोगादित्यतः पृथग्व्यापारं वक्तुं प्राप्तम् – **प्रकृतैतावत्त्वं हि प्रतिषेधति** इत्यादिसूत्रम् ।

तथा भक्तिं विना स्तम्भादेरिव पुरुषप्रयत्नेनैव ईश्वरापरोक्ष्यसम्भवाच्च भक्तिर्व्यर्था। तस्याव्यक्तैकस्वभावत्वेन स्तम्भादिवैलक्षण्ये तु सुतरां व्यर्था। साधनशतेनापि तादृशस्यादृष्टस्येव आपरोक्ष्यासम्भवादित्यतोऽनन्तशक्तिकेन प्रसन्नेनेश्वरेणैव आपरोक्ष्यं भवतीति वक्तुं प्राप्तम् – **तदव्यक्तमाह हि** इत्यादिसूत्रपञ्चकम् ।

तथा पूर्वं वैशेषिकनये समवायापाकरणेन ज्ञानानन्दादिगुणानां वस्तुस्वरूपत्वोपगमेन ईश्वरस्य ज्ञानादिगुणवत्त्वं न स्यात् । गुणवत्त्वाङ्गीकारे च स्वरूपत्वं न स्यादित्यतो भगवतो गुणात्मकत्वं विशेषबलाद्गुणित्वं चेति वक्तुं **उभयव्यपदेशात्** इत्यादिसूत्रचतुष्टयम् । तेषामर्थमाह – **परमेश्वर** इति। एक इति च । परश्चासौ मेश्वरश्चेति विग्रहः। स विष्णुः परः पालक इत्यर्थः। पृ पालनपूरणयोः पचाद्यच्। धारणपोषणादिरूपव्यापारस्य रक्षादिरूपस्य भाष्योक्तश्रुत्यादिसिद्धत्वादिति भावः। मेश्वरः परेत्यन्वेति। परस्य लोकविलक्षणस्य अव्यक्तैकस्वभावस्येति यावत् । परमात्मनः सम्बन्धिन्या इति वा, पराया उत्तमाया इति वा, मायाः प्रमाया ईश्वरापरोक्षज्ञप्तेः ईश्वरः स्वामीत्यर्थः। "नित्याव्यक्तोऽपि भगवान् ईक्ष्यते निजशक्तितः" इत्यादेः । अव्यक्तस्वभावोऽपि प्रसन्नः सन् स्वात्मापरोक्षज्ञानं भक्तेभ्यो ददातीति भावः।

तथा एकः गुणादिभिरभिन्न इत्यर्थः। तर्हि कथं गुणित्वमित्यतो वस्तुसामर्थ्यापरपर्यायविशेषबलात् गुणित्वं स्यादिति भावेन परमेश्वर इति यथाश्रुत एवार्थः ।।१३–१५ ।।

यत्तु ईश्वरज्ञानादिकं लौकिकज्ञानादिवदेव "विज्ञानमानन्दं ब्रह्म" इत्यादिना ज्ञानानन्दादि-पदवाच्यत्वात् अलौकिकं नेत्यतस्तस्य अलौकिकत्वं वक्तुं – **परमतः सेतून्मानसम्बन्ध-भेदव्यपदेशेभ्यः** इति सूत्रत्रयम् । तस्याप्यर्थः – **स एकः परमेश्वर** इति। स एको विष्णुरेव परमेश्वरः। परं अलौकिकं मा प्रमा, आनन्दादेरुपलक्षणं, ज्ञानानन्दादिगुणजातं यस्य स परमः।

स चासावीश्वर इत्यर्थः। अलौकिकज्ञानादिमत्त्वे हेतुत्वेनेश्वर इति। "एष सेतुर्विधृतिः" (छां.उ.८-४-१) "य एष आनन्दः परस्य" इति, "एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति" इत्यादिनोक्तसेतुत्वोपजीव्यत्वबिम्बत्वादिना स्वामी यत इत्यर्थः। अलौकिकेऽपि ज्ञानानन्दादौ ज्ञानादिशब्दप्रयोगस्तु तस्य अर्थप्रकाशत्वानुकूलवेद्यत्वादिज्ञापनार्थ इति भावः ।।१६।।

नन्वेवं ईश्वरज्ञानानन्दादेः ब्रह्मादिज्ञानानन्दादिकं प्रतिबिम्बत्वे ब्रह्मादिज्ञानानन्दादौ तारतम्यवदीश्वरज्ञानानन्दादिगुणेषु तारतम्यं स्यादित्यतः प्राप्तम् - **स्थानविशेषात्** इत्यादियोगद्वयम्। तस्याप्यर्थः - **स एकः परमेश्वर** इति। स विष्णुरेकः ज्ञानानन्दादिभिः एकप्रकार एव न तु तारतम्यवानित्यर्थः। बिम्बानन्दाद्यवैचित्र्येऽपि प्रतिबिम्बवैचित्र्यस्य बिम्बभूतभगवदैश्वर्यवशात् उपपत्तेरिति भावेनोक्तम् - **परमेश्वर** इति। स्थानगुणस्याप्युलक्षणम् ।

"ऐश्वर्यात्परमाद्विष्णोः भक्त्यादीनामनादितः । ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता।।" (पाद्म)इति स्मृतेरिति भावः ।।१७।।

नन्वेवं ईश्वरस्य बिम्बत्वे सूपपन्ने सति तत्प्रतीत्यर्थं न भक्त्यादिसाधनापेक्षा । ध्यानकाले पुरुषप्रयत्नेन प्रतीतस्यैव बिम्बभूतविष्णुरूपत्वात् । यत्किञ्चिद्ध्यानेन ईश्वरस्य फलदानायोगादित्यतो ध्यानकाले प्रतीतस्याविष्णुत्वं वक्तुं सूत्रं - **तथान्यत्प्रतिषेधात्** इति। तस्याप्यर्थः - **स एकः परमेश्वर** इति। स विष्णुरेकः परमेश्वरश्चेत्यर्थः। ध्यानप्रतीतस्य तु ध्यातृपुरुषबहुत्वेन अनेकदुर्लक्षणत्वादिना अनीश्वरत्वमिति कथं तस्य विष्णुत्वमित्यर्थः। ध्यानकाले प्रतीतस्याब्रह्मत्वेऽपि ब्रह्माधिष्ठानत्वात् तद्ध्यानस्य ब्रह्मध्यानत्वेनैतावतैव ईश्वरस्य फलदानोपपत्तेः। "ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदं" (ब्रह्मतर्क)इत्यादिस्मृतेरिति भावः। विष्णोः ध्यानप्रतीता-दन्यत्वयुक्तिसूचनाय ततोऽन्य इत्याद्यनुक्त्वा एवं विन्यासः कृतः ।।१८।।

नन्वेवं ध्यातृभ्यः फलदानवत् देशान्तरे कालान्तरेऽन्यस्य स्वातन्त्र्यमपि दत्वा ततः सृष्ट्यादिकमपि कुर्यात्। लोके राजादौ देशादिभेदेन अनेकस्वातन्त्र्यस्य दर्शनात् । हरेरप्यवतारेषु विविधलीलादर्शनाच्च । अतो न अस्यैव सर्वकर्तृत्वमित्यतः प्राप्तम् - **अनेन सर्वगतत्वमायामयशब्दादिभ्यः** इति। तस्याप्यर्थमाह - **सर्वदेशेषु कालेषु स एकः परमेश्वर** इति। सर्वत्र सर्वदा एक एव स्वतन्त्रः सन् सृष्ट्यादिकर्ता, नत्वनेक इत्यर्थः। "स्वातन्त्र्यात्क्रीडते विष्णुः न हि स्वातन्त्र्यमन्यगम् । करोति" इत्यादेरिति भावः ।।१९।।

नन्वेवमपि नेश्वरस्य फलदातृत्वं युक्तम् । तस्य कर्म विना कृतस्य फलदातृत्वे कर्मणां वैय्यर्थ्यापातेन तद्विधायकवेदाप्रामाण्यापातात् । तस्य वैषम्यादिदोषानुषङ्गाच्च । अकृतकर्मणां पुंसां फलादर्शनाच्च फलस्य कर्मान्वयव्यतिरेकित्वेन कर्मैव फलप्रदं नेश्वर इत्यतः - **फलमत उपपत्तेः**

इत्यादियोगचतुष्टयम् । तस्याप्यर्थः - **स एकः परमेश्वर** इति। स एको विष्णुरेव परः फलदानादिसमर्थः। न तु कर्म, तस्याचेतनत्वेन फलदानानुपपत्तेः। "रातिर्दातुः परायणं" (बृ.उ.५-७-२७) "पुण्येन पुण्यं लोकं नयति" (प्र.उ.३-३-७)इत्यादेः कर्म निमित्तीकृत्य ईश्वर एव फलदातेति भावः ।।३०।।

नन्वेवं अष्टादशभिः नयैः भगवतो यन्माहात्म्यवर्णनं तदयुक्तमिव। तस्य भक्त्यर्थत्वेन भक्तेरेवानुपयोगादित्यानन्दज्ञानादिमत्त्वस्य मोक्षत्वेन नित्यसिद्धत्वात् नित्यसिद्धस्य तस्याभिव्यक्तेरपि सुप्ताविव कदाचित् स्वयमेव सम्भवादित्यतः प्राप्तम् - **अम्बुवदग्रहणात्तु न तथात्वम्** इति सूत्रम् । तथा भक्तेरावश्यकत्वेऽपि केषाञ्चित् सम्यङ् मुक्तिः केषाञ्चित् असम्यङ् मुक्तिरित्यस्यायोगेन सर्वेषां मुक्तेरेकरूपत्वेन तद्धेतोः भक्तेरपि ब्रह्मादिष्वन्येषु चैकप्रकारत्वमेवोपेयम् । तद्वैषम्यं तु निर्बीजमित्यतः प्राप्तम् - **वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्** इत्यादियोगद्वयम् । तयोरप्येकाद-शद्वादशाधिकरणयोः अर्थं श्रुत्यर्थाभ्यां भाषते -**तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम्** इति। विमुक्तिगं विशेषेण सम्यङ्मुक्तिः तत्र विद्यमानमानन्दादितारतम्यं तद्भक्तितारतम्येन प्रकृतपरमेश्वर-भक्तितारतम्येन हेतुना भवति नान्येनेति श्रौतोऽर्थः। मुक्तौ सर्वेषां अविद्यानिवृत्त्यादेः निश्शेषतो भावेन सम्यङ्मुक्तिभावेन तत्र स्वरूपानन्दादितारतम्यस्य "अथात आनन्दस्य मीमांसा भवति" इत्यादिश्रुत्यादिसिद्धत्वात् फलवैषम्यस्य साधनवैषम्यैकाधीनत्वात् श्रुतिसिद्धमुक्तिगत-ब्रह्माद्यानन्दतारतम्यस्य अन्यथानुपपत्त्या भक्तितारतम्यमुपेयमिति भावः।

तथा सुप्तौ आनन्दादेरीषदभिव्यक्तावपि सम्यगभिव्यक्तेरेव मुक्तित्वात्, तस्याश्च भक्तिं विनाऽयोगात्, भक्तेर्मुक्तिफलत्वसमर्थनात्सिद्धमिति मुक्त्यर्थं भक्तिरावश्यकीत्यार्थिकोऽर्थः।

सामान्यादौ विशेषचिन्ताया अनवसरदुःस्थत्वेन विशेषोक्त्या सामान्यस्याक्षेपादिति भक्तिविचारपराधिकरणद्वयस्य सूत्रकृता "अत एव चोपमा" इति पूर्वसूत्रे ज्ञानानन्दादिमत्त्वरूपस्य भगवत्सादृश्यस्य जीवे प्रकृतसुप्ताविव भक्तिं विनाप्यभिव्यक्तिसम्भवात् भक्तिर्व्यर्था इत्यादिशङ्कानिरासार्थतया अवान्तरसङ्गतिवशेन मध्ये निवेशितत्वेऽपि तदर्थस्यान्ते भाषणं त्वेतत्पादीयसर्वाधिकरणेषु विष्णुमाहात्म्यनिरूपणस्य भक्तावुपयोग इति सूचयितुम् ।।११-१२।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्यां तृतीयाध्यायस्य द्वितीयः पादः।**

**आनन्दमाला** - संसारविरक्तस्य मुमुक्षोर्भगवद्भक्तिरस्मिन्पाद उच्यते। तदर्थमिह तन्महिमोक्तिः।

"सन्ध्येसृष्टिराह हि" (३-२-१) "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" (३-२-५) "देहयोगाद् वासोऽपि" (३-२-६) " तदभावो नाडीषु तच्छ्रुतेरात्मनि ह" (३-२-७) "अतः प्रबोधोऽस्मात्" (३-२-८) "स एव च कर्मानुस्मृतिशब्दविधिभ्यः" (३-२-९) " मुग्धेऽर्द्धसम्पत्तिः परिशेषात्" (३-२-१०) "अत एव चोपमा सूर्यकादिवत्" (३-२-१८) "स्थानविशेषात् प्रकाशादिवत्" (३-२-३५) "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" (३-२-२२) "फलमत उपपत्तेः" (३-२-३९) इत्येतानि व्याख्याति - **सर्वावस्थाप्रेरकश्च** इति। सर्वजीवैरनुभूयमानानां स्वप्नजाग्रत्सुषुप्तिमोहावस्थानां सर्वासामपि तैजसविश्वप्राज्ञनामको भगवानेक एव प्रेरकः। तत्र तैजसप्राज्ञावेव च मोहावस्थाप्रवर्तकौ। मोहस्यापि स्वप्नसुषुप्त्यो समुच्चयरूपत्वात् । चशब्दात् स एव तासां निवर्तकश्च । समस्त-प्रवृत्तिनिवृत्त्योस्तदिच्छाधीनत्वात् । एवं संसारावस्थाप्रवर्तकस्त्रिरूपो भगवान् अथ वासुदेवाख्य-स्तुरीयरूपस्तन्निवर्तको मोक्षावस्थाप्रवर्तकश्च। न चैतामन्यः स एव वा कश्चिन्निवर्तयति । नित्यस्थितेरेव तदिष्टत्वात् । न च काञ्चिदप्यवस्थामन्यः प्रवर्तयेन्निवर्तयेद् वा। स्वयमेव तद्वशत्वात्। एवं सर्वावस्थासु तदधीनत्वादेव तदाभासो जीवः सूर्यकाद्युपम उच्यते। न पुनर्जडत्वादिना। सर्वस्य च जगतःसृष्टिस्थितिसंहाराद्यवस्थाश्च सर्वाः स एव प्रेरयति। कर्मादीनां च साधनावस्थायां साध्यावस्थायां चेश्वर एव प्रेरकः। चशब्दान्मोक्षकाले निवर्तकश्च । तस्यैव तदुपपत्तेः ।।१-७।१०।१२।१५।१८।।

"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (३-२-११) "अरूपवदेव हि तत्प्रधानत्वात्" (३-२-१४) "तदव्यक्तमाह हि" (३-२-२३)"उभयव्यपदेशात्त्वहिकुण्डलवत्" (३-२-२८) इत्यधिकरणानि व्याख्याति - **सर्वरूपेष्वभेदवान्** इति। स्वाप्नादिस्थानानामन्योन्यभेदेऽपि तत्प्रेरकेषु रूपेषु न भेदो विष्णोरस्ति । न हि स्थानभेदस्तद्भेदस्य ज्ञापकः कारको वा स्यात् । न केवलं वासुदेवादिचतुर्मूर्तिष्वभेदो मूलमूर्तेः। किन्तु मत्स्यनारायणविश्वाजितपरादिषु दशशतसहस्रामितानन्त-मूर्तिष्वप्यभेदस्तस्येति वक्तुं सर्वशब्दोपसर्जनम् । अपरथा तेषु रूपेष्वित्येव पूर्णत्वात् । यद्यप्येकस्यैव रूपस्य योगशक्त्या बहुभावसम्भवात् तेषु रूपेष्वन्योन्यधर्मिप्रतियोगिको भेदस्तद्वतो न विद्यते इति वचनादेकमेव तद् रूपमित्यभिप्रेयते। तथापि रूपरूपिणोर्विरुद्धलक्षणत्वाद् भेदोऽस्तीति मा भूत् तेषु रूपेषु प्राकृतत्वविनाशित्वादिलक्षणेऽपि न भेदो विष्णोरस्ति लोकतो विलक्षणत्वात्। अत एव रूपिणि सिद्धं शुद्धज्ञानानन्दमात्रत्वलक्षणं मुख्यैक्यमेव तस्य रूपेष्वपीति राद्धान्तः श्रुतिहृदये निर्लोडितः। किञ्चिद् रूपं व्यक्तम् , किञ्चदव्यक्तम्, स्वयं तु व्यक्ताव्यक्त इति च न कश्चिद्भेदोऽस्य भवति। तेषु च रूपेषु विद्यमानैर्गुणक्रियादिभिस्तद्धर्मिको वा भेदो न विद्यते। एकस्यैव गुणगुण्यादिभावे निदर्शनबाहुल्यात् । एवं रूपाणां धर्मित्वप्रतियोगित्वाधिकरणत्वविवक्षया

रूपेषु इत्येवोक्तिः। अन्यतरमात्रविवक्षायां तावन्मात्रानुसारेण प्रयोगोपपत्तेः। ''नेह नानास्ति किञ्चन'' (कठ.४-११) इति हि श्रुतिः। ध्यानजन्यस्य तु ब्रह्मत्वप्रतिषेधात् प्रतिबिम्बत्वोक्तेश्च भेद एव ।।८-९ ।।**१३-१४** ।।**१६** ।।

देशान्तरे कालान्तरे वा तदन्योऽप्युक्तावस्थानां प्रेरकः स्यादित्यत आह - **अनेन सर्वगतत्व-मायामयशब्दादिभ्यः** (३-२-३८) इत्यधिकरणम् । **सर्वदेशेषु कालेषु स एकः परमेश्वर** इति। **अन्तर्बहिः समीपे दूरे** चेत्यादिसर्वदेशेषु , तदानीमिदानीं पूर्वं पश्चाच्चेत्यादिसर्वकालेषु इत्युभयेष्वपि स एको विष्णुरेव सर्वेश्वरत्वात् सृष्टिस्थित्यादिसर्वावस्थानां तासु वा सर्वेषां प्रवर्तक उक्तः ।।**१७**।।

''अम्बुवदग्रहणात्तु न तथात्वम्'' (३-२-१९) इत्यधिकरणार्थं वदन् ''वृद्धिह्रासभाक्त्व-मन्तर्भावादुभयसामञ्जस्यादेवम्'' (३-२-२०) इति सूत्रं विशेषतो व्याख्याय पादार्थनिगमनं चाभिप्रैति - **तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम्** इति। येयं भगवति विष्णौ भक्तिः ब्रह्मादीनां तारतम्येन विधीयमाना तैस्तारतम्येनानुष्ठीयमाना वा दृश्यमाना तत्तारतम्यानुसारेण तेषां विमुक्तिगं सुखतारतम्यमवगम्यते। अतः सा यथा शक्त्यनुष्ठेया फलवृद्ध्यर्थमिति मथितार्थः ।।**११** ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां तृतीयाध्यायस्य द्वितीयः पादः ।।**

**नृसिंहतीर्थ** – भक्त्यर्थंभगवन्महिमोक्तिमाहात्म्यमुपपादयन् भक्तिमत्र निरूपयति **सर्वावस्थाप्रेरक** इति। स्वप्नतिरोधानजाग्रत्सुषुप्तिप्रबोधाख्यसर्वावस्थायाः मोहावस्थायाश्च मूर्छावस्थायाश्च प्रेरकः सः परमात्मैव। स्थानभेदाद्रूपभेदमाशंक्य परिहरति **सर्वदेशेषु** इति। सर्वस्थानगतेषु सर्वरूपेषु अभेदवान् । भेदाभाववांश्च। जीवेभ्यो भेदवांश्चेत्यर्थः। अतस्स एक एव परमेश्वरः परममुख्यस्वामी। वृद्धिह्रासभाक्तं सार्वकालिकमित्याह **तद्भक्तितारतम्येन** इति। तेषां ब्रह्मादीनां भक्तितारतम्येन तारतम्यं विमुक्तिगम्। मुक्तावपि विद्यमानम् । अतो भक्तिः तत्तत्स्वभावभूतेति ज्ञातव्यम् ।

**।। इति तृतीये अनुभाष्यभावप्रकाशिके द्वितीयपादः ।।**

**श्रीनिवासतीर्थीया–** एतत्पादीयानां केषांचिदधिकरणानां तात्पर्यमाह **सर्वावस्था** इति। अत्र प्रेरक इति सृष्ट्याद्युपलक्षणम् । सर्वावस्थाशब्देन स्वप्नतिरोधानजाग्रत्सुषुप्तिप्रबोधनमोहावस्थां उच्यते। तत्र स्वप्नावस्थाप्रेरक इत्यनेन सन्धेः सृष्टिराह हि इत्यधिकरणमुक्ततात्पर्यं भवति । स्वप्नतिरोधानकर्तेत्यनेन पराभिध्यानत्तु तिरोहितमित्यधिकरणमुक्तार्थम् । सुषुप्त्यवस्थाप्रेरक इत्यनेन तदभावो नाडीष्वित्यधिकरणमुक्ताभिप्रायम् । सुप्तिप्रबोधप्रवर्तक इत्यनेनातः प्रबोधोऽस्मात्

इत्यधिकरणमुक्तार्थम्। स एव च कर्मानुस्मृतिशब्दविधिभ्य इत्यधिकरणतात्पर्यमाह **सर्वावस्था** इति। सर्वजीवसम्बन्धिन्यो अवस्था सर्वावस्था सर्वदेशेष्वित्याद्युत्तरत्र सम्बध्यते। एवं स्मृतिप्रमाणानु-सारेणैक इति । स इत्यनुवादेन परमेश्वर इति व्याख्यातम् । तथा च प्रदर्शकस्तु सर्वेषामित्यादि-प्रमाणानुसारेण स परमेश्वर एक एव सर्वदेशेषु कालेषु सर्वजीवसम्बध्यवस्थाप्रेरक इत्यर्थः। मोहावस्थाप्रेरक इत्यनेन मुग्धेऽर्धसम्पत्तिः परिशेषादित्यधिकरणतात्पर्यमुक्तम् । न स्थानतोऽपीत्यधि-करणतात्पर्यमाह **सर्वरूपेष्वभेदवान्** इति। सर्वदेशेषु कालेषु सर्वरूपेष्वभेदवानित्यर्थः। एवमष्टाधिकरणतात्पर्यमुक्त्वा अधुना अनेन सर्वशब्दादिभ्य इत्यधिकरणतात्पर्यमाह **सर्वदेशेषु कालेषु** इति। सर्ववस्तुसृष्ट्यादिकर्तेति शेषः। सर्वदेशेषु कालेषु सर्ववस्तूनां सृष्ट्यादिकर्ता सः परमेश्वर एक एव नत्वन्योऽस्ति कुत इत्यत आह **सर्व** इति । वर्तत इत्युपस्कर्तव्यम् । तथा "एषः सर्वः सर्वगतः" इत्यादिश्रुतौ परमेश्वरस्यैव सर्वगतत्वमुच्यते। सर्वगतत्वं च ब्रह्मणः सृष्ट्याद्यर्थमेव। "अनुप्रविश्य नामरूपे व्याकरोत्" इत्यादेः। तस्य जीवादेः सार्वकालिकत्वेऽपि सर्वदेशीय-त्वाभावादित्यर्थः। वृद्धिह्रासभाक्त्वमन्तर्भावादित्यादेस्तात्पर्यमाह **तद्भक्तितारतम्येन** इति। ब्रह्मादीनां च सर्वेषामानन्दादेर्यथाक्रममित्युत्तरार्धानुव्याख्यानोक्तं ग्राह्यम् । अन्यथा अन्वयापरिपूर्तेः। ब्रह्मादीनां च शब्दादस्मदादीनां यथाक्रमं श्रौतकर्मानतिक्रमेण यद्विमुक्तिगमानंदादेस्तारतम्यं तत्तस्य भगवतो भक्तितारतम्येनैव भवतीत्यर्थः।

**।। इत्यणुभाष्यविवरणे तृतीयाध्यायस्य द्वितीयः पादः ।।**

**छलारी –**

**हरिः ओम्**
**सर्वदेवमुखान्तस्थं अञ्चितं समयद्वये।**
**परश्वधधनुष्मन्तं भार्गवं राममाश्रये।।१।।**

वैराग्यनिरूपणानन्तरं अवसरसङ्गत्या प्राप्ता भक्तिरस्मिन्पादे निरूप्यते।

**ओं सन्ध्ये सृष्टिराह हि ओं**

सन्ध्ये जाग्रत्सुषुप्तिसन्धौ भवे स्वप्ने सृष्टिः– स्वप्नार्थानां ईश्वरादेव उत्पत्तिरनन्तरमेव निरोधश्च भवति। कुतः? हि यस्मात् श्रुतिरिममर्थमाहेति सूत्रार्थः।

अत्र स्वप्नविषयो नेश्वराधीनः असत्त्वात् । न चासिद्धो हेतुः। प्रागूर्ध्वमनुपलम्भात् । न च तात्कालिकसृष्टिनिरोधाभावात् अनुपलम्भो न दोषायेति वाच्यम् । प्रमाणाभावात् । कर्त्रुपादाननिमित्तानां अभावाच्चेति प्राप्ते –

ईश्वराधीन एव स्वप्नविषयः, सत्यत्वात् । न च प्रागूर्ध्वमुपलम्भप्रसङ्गः। तत्काल एव सृष्टिनिरोधाङ्गीकारात् । न चात्र प्रमाणाभावः। "अथ रथान् रथयोगान् पथः सृजते" (बृ.उ.६-३-१०) इति श्रुतेः। न च कर्तुरभावात् सृष्ट्ययोगः। "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" (क.उ.५-८)इति श्रुत्या ईश्वरस्यैव कर्तृत्वाङ्गीकारात् । न चोपादाननिमित्ताभावः। वासनायाः उपादानत्वेन ईश्वरेच्छायाश्च निमित्तत्वेनाङ्गीकारात् । न चात्र मानाभावः।

"मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः। प्रदर्शयति जीवाय स स्वप्न इति गीयते।। इति स्मृतेश्च" इति सिद्धान्तः कृतः ।।१।।

**ओं पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ओं**

पराभिध्यानात्तु ईश्वरेच्छयैव तिरोहितं स्वप्नतिरोधानं न प्रबोधेन । कुतः? हि - यस्मात् अस्य जीवस्य बन्धमोक्षौ, ततः - परमेश्वरेच्छयैव इति सूत्रार्थः।

अत्र स्वप्नतिरोभावो नेश्वरेच्छाधीनः किन्तु बाह्यज्ञानाधीनः, तन्निमित्तत्वेन प्रतीयमानत्वादिति प्राप्ते-

स्वप्नतिरोभावः ईश्वराधीन एव। ननु बाह्यज्ञाननिमित्तत्वेन प्रतीयमानत्वात् कथमीश्वराधीनत्वमिति चेदित्थम् । यथा खलु बन्धमोक्षयोः अज्ञानज्ञाननिमित्तत्वेन प्रसिद्धावपि न बन्धमोक्षौ अज्ञानज्ञानाधीनौ तयोः जडत्वेन अस्वातन्त्र्यात् । किन्नाम । "बन्धको भवपाशेन भवपाशाच्च मोचकः" इत्यादेरीश्वराधीनावेव। कुतः?

"स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च। तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ। (कौर्म)इति स्मृतेः"इति सिद्धान्तः कृतः ।।२।।

**ओं देहयोगाद्वासोऽपि ओं**

जीवस्य देहयोगात् देहाभिमानेन वासोऽपि अवस्थितिरपि जाग्रदवस्थापि पराभिध्यानादेव। कुतः ? तथा श्रुतेरिति सूत्रार्थः।

अत्र न जागरणं भगवदधीनं तस्य कालाधीनत्वात् इति प्राप्ते -

"स एव जागरिते स्थापयति स स्वप्ने स प्रभुः" इति (कौण्ठरव्य)श्रुतेः जागरणमपि भगवदधीनमेव। न कालाधीनं तस्याचेतनत्वेन अस्वातन्त्र्यादिति सिद्धान्तः कृतः ।।३।।

**ओं तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ओं**

तदभावः - जाग्रत्स्वप्नाभावः सुषुप्तिरिति यावत् । नाडीष्वात्मनि - नाडीस्थे परमात्मनि, ह - प्रसिद्धं, कुतः ? तच्छ्रुतेः, तथा श्रुतेरिति सूत्रार्थः।।

अत्र केवले परमात्मन्येव सुषुप्तिः न नाडीषु परमात्मनोऽन्यत्रावस्थाने सुप्तस्य जाग्रत्स्वप्नयोरिव दुःखित्वप्रसङ्गात् । न च मुक्तवत् सुप्तस्य दुःखमस्ति तदा सुखमात्रानुभवात् इति प्राप्ते -

नाडीषु सुप्तिर्जीवस्य । न चैवं दुःखप्राप्तिः। परमात्मनि सुप्त्यङ्गीकारात् । परमात्मन्येव सुप्तिः अङ्गीक्रियतां किं नाडीस्थविशेषेण इति चेन्न । "आसु तदा नाडीषु सुप्तो भवति" (छां.उ.८-६-३) "सता सोम्य तदा सम्पन्नो भवति" (छां.उ.६-८-१)इति उभयविधश्रुतेः अन्यथानुपपत्तेरिति सिद्धान्तः कृतः ।।४।।

**ओं अतः प्रबोधोऽस्मात् ओं**

यतस्तस्मिन्सुप्तिरतः अस्माद्धेतोः अस्मादेव परमेश्वरात् प्रबोधो भवति। कुतः? तथा श्रुतेरिति सूत्रार्थः।

अत्र सुप्तप्रबोधो नेश्वराधीनः क्वचिद्भेरीताडनादीनामपि कारणत्वदर्शनादिति प्राप्ते -

ईश्वराधीन एव सुप्तिप्रबोधः। तस्मिन्नेव जीवानां सुप्तत्वेन तत्प्रेरणां विना प्रबोधायोगात् । भेरीताडनादीनां कारणताप्रतीतेः "एष एव सुप्तं प्रबोधयति। एतस्माज्जीव उत्तिष्ठति" (कौण्डिण्य)इति असाधारणश्रुतिविरुद्धत्वेन निमित्ततामात्रविषयत्वादिति सिद्धान्तः कृतः ।।५।।

**ओं स एव च कर्मानुस्मृतिशब्दविधिभ्यः ओं**

स एव परमात्मैव सर्वेषां सर्वत्र सर्वावस्थाप्रेरकः, कुतः? कर्मानुस्मृतिशब्दविधिभ्यः - कर्मेति व्यापारमात्रस्य भगवदधीनत्वप्रतिपादक श्रुतिर्लभ्यते। "एष ह्येव साधु कर्म कारयति"(कौ.उ.३-८) इति श्रुतेः। प्रदर्शकस्तु सर्वेषां इत्यभिलषितार्थसाधकतयानुसारिस्मृतेश्च । "एष स्वप्नान् दर्शयति" इति विशेषश्रुतेश्च । "आत्मानमेव लोकमुपासीत" (बृ.उ.३-४-१५)इति परमात्मन एवोपास्यत्वविधेश्च । अन्यस्यापि प्रेरकत्वे एवकारायोगादिति सूत्रार्थः।

अत्र न सर्वेषां जीवानां सार्वकालीनाः सर्वावस्थाः भगवदधीनाः। किन्नाम, केषाञ्चित्कादाचित्काः काश्चिदेव। राजादीनां खण्डेशत्वदर्शनादिति प्राप्ते -

परात्मैव सर्वेषां सर्वत्र सर्वदा सर्वावस्थाप्रेरकः। "एष ह्येव साधु कर्म कारयति। एष ह्येवासाधु कर्म कारयति" (कौ.उ.३-८)इति सर्वकर्मणां भगवदधीनत्वस्य श्रुतत्वात् । "प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु। परमः पुरुषो विष्णुः ततोऽन्यो नास्ति कश्चन ।" इति अनुस्मृतेः। एष स्वप्नान् दर्शयतीति विशेषश्रुतेः। आत्मानमेवेति विधेश्च इति सिद्धान्तः कृतः ।।६ ।।

## ओं मग्धेऽर्धसम्पत्तिः परिशेषात् ओं

मुग्धे – मूर्च्छावस्थायां, भावे क्तः । जीवस्य हृदयस्थे प्राज्ञेऽर्धप्राप्तिः – अर्धप्रवेशः। कुतः ? परिशेषात् । हृदयस्थाद्धरेः दूरस्थत्वसमीपस्थत्वसमग्रप्रवेशार्धप्रवेशेषु आद्यत्रयस्य जाग्रदाद्य-वस्थात्रयधर्मत्वेनार्धप्रवेशस्यैव परिशेषप्रमाणसिद्धत्वादिति सूत्रार्थः।

अत्र न मोहावस्था जीवस्य भगवदितरत्र किन्तु परमात्मन्येव जाग्रत्स्वप्नातिरिक्तावस्थात्वात्। न चैवं सुप्तिसङ्करप्रसङ्गः। बाह्यार्थाविषयत्वेन तत्सङ्करस्येष्टत्वादिति प्राप्ते –

मोहे भगवत्यर्धप्रवेश एव जीवस्य, न समग्रप्रवेशः परिशेषात् । तथा हि मोहे तावत् हृदयस्थाद्धरेः जीवस्य दूरस्थत्वसमीपस्थत्वसमग्रप्रवेशार्धप्रवेशाः प्रसक्ताः। न तावत्त्रयः कल्पाः सम्भवन्ति। तेषां जाग्रदाद्यवस्थाधर्मत्वात् । जीवस्य जाग्रदवस्थायां अक्षिस्थत्वात् । स्वप्नावस्थायां कण्ठस्थत्वात् । सुषुप्त्यवस्थायां प्राज्ञे प्रविष्टत्वात् । एवं च प्रसक्तप्रतिषेधे अन्यस्याप्रसङ्गान्मोहे परिशिष्टः अर्धप्रवेशः एव जीवस्य । तदुक्तम् ।

हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति। समीपस्थः तथा स्वप्नं स्वपित्यस्मिन् लयं व्रजन् ।

यत एवं त्रयोऽवस्थाः मोहस्तु परिशेषतः। अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः। इति।

मोहत्यावस्थात्रयातिरेकित्वे भवेदेतत् । तदेव कुतः इति चेत् । अत्र वक्तव्यम् । किं मोहस्य सुप्तावन्तर्भावः उच्यते। उत जाग्रत्स्वप्नयोः । न तावदाद्यः। वैलक्षण्यात् । तथा हि, मुग्धः कदापि नोच्छ्वसति। सवेपथुश्चास्य देहो भवति। भयानकं चास्य वदनं भवति। विस्फारिते चास्य नेत्रे भवतः। सुप्तस्तु प्रसन्नवदनः तुल्य कालं पुनः पुनः उच्छ्वसति। निमीलिते चास्य नेत्रे भवतः। न चास्य देहो वेपते। पाणिपेषणमात्रेण च सुप्तमुत्थापयन्ति। न तु मुग्धं मुद्गरघातेनापीति महावैलक्षण्यस्य सत्त्वात् न सुप्तावन्तर्भावः। नापि जाग्रत्स्वप्नयोरन्तर्भावः। दुःखात्मकालाति-रिक्तविषयादर्शनात् । अतः मोहो अवस्थान्तरमेव इति सिद्धान्तः कृतः ।।

एतेषां सप्ताधिकरणानां युगपदेव तात्पर्यमाह – **सर्वावस्थाप्रेरकश्च** इति। परमेश्वर इति उत्तरत्र वक्ष्यमाणं अत्रापि सम्बध्यते। चशब्दस्य निवर्तकश्चेत्यर्थः। प्रथमाधिकरणे स्वप्नावस्थायाः भगवदधीनत्वस्य समर्थितत्वात् । द्वितीये भगवतः स्वप्ननिवर्तकत्वस्य उक्तत्वात् । तृतीये जाग्रदवस्थाप्रवर्तकत्वस्य उक्तत्वात् । चतुर्थे सुप्तप्राप्यत्वकथनेन तदवस्थाप्रेरकत्वस्य उक्तत्वात् । पञ्चमे सुप्तबोधकत्वस्य उक्तत्वात् । षष्ठे सार्वकालिकसर्वावस्थाप्रेरकत्वस्य उक्तत्वात् । सप्तमे मोहावस्थाप्रेरकत्वस्य उक्तत्वात् सर्वमनवद्यम् ।।७।।

### ओं न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ओं

स्थानतः - स्थानभेदेऽपि परस्य - परमात्मनः उभयलिङ्गं - भिन्नरूपं नास्ति। कुतः? सर्वत्र हि यस्मात् सर्वस्थानेषु निर्भेदः परमात्मा सर्वेषु भूतेषु "एतमेव ब्रह्मेत्याचक्षते" इत्यादौ श्रूयते इति सूत्रार्थः।

अत्र सर्वशरीरेषु अक्ष्यादिस्थानेषु च स्थितो विश्वादिरूपो हरिरन्योन्यं भिन्न एव। भिन्नस्थानत्वात् । घटादिवदिति प्राप्ते -

विश्वादिरूपी हरिः भिन्नस्थानोप्यभिन्न एव प्रतिपत्तव्यः। "सर्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षते" (ऐ.आ.३-२-३)इति श्रुतेः। न चोक्तभेदसाधकानुमानविरोधः। तस्योक्तश्रुतिबाधितत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सर्वरूपेष्वभेदवान्** इति । परमेश्वर इत्यस्यात्राप्यनुषङ्गः। जाग्रदाद्यवस्थाप्रेरकविश्वादिरूपेषु अभेदवान् शरीराक्ष्यादिस्थानभेदात् भेदवान् न भवतीत्यर्थः ।।८।।

### ओं अरूपवदेव हि तत्प्रधानत्वात् ओं

तदिति व्यस्तं समस्तं च । तद् ब्रह्म अरूपवत् न प्राकृतभौतिकरूपवत् । कुतः? तत्प्रधानत्वात् - प्रकृत्याद्युत्तमत्वात् । एवशब्देन ज्ञानानन्दात्मकरूपवत्वं अङ्गीकरोति। हिशब्देन उक्तार्थे श्रुत्यादिप्रसिद्धिमाहेति सूत्रार्थः

अत्र भगवान् रूपवान् न वा । नाद्यः, रूपवत्त्वे अनित्यत्वप्रसङ्गात् । न द्वितीयः। "यदा पश्यः पश्यते रुक्मवर्णं" (मुं.उ.३-१-३)इत्यादिश्रुतिविरोधापातादिति प्राप्ते -

भगवान् रूपरहित एव। कुतः? रूपं हि भवत्प्राकृतं भौतिकं वा भवेत् । न च तत्सम्भवति। तस्य प्रकृतिविलक्षणत्वात् । भूतविलक्षणत्वाच्च । न च "रुक्मवर्णम्" इत्यादिश्रुतिविरोधः। अप्राकृतरूपाङ्गीकारात् । न च तत्र प्रमाणाभावः। "आनन्दरूपममृतं यद्विभाति" इति श्रुतेः। "शुद्धस्फटिकसङ्काशम्" इति स्मृतेश्च इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **परमेश्वर** इति। परमा सर्वेभ्यः परमा। अथवा परा च सा मा च परमा सर्वोत्तमा प्रकृतिः तस्या ईश्वरः उत्तमः। प्रकृत्यादिप्रेरकत्वेन तदुत्तमः विलक्षण इत्यर्थः। तस्मात्प्राकृतादिरूपरहित इत्यर्थः ।।९।।

### ओं अत एव चोपमा सूर्यकादिवत् ओं

न भेदादिति सूत्राच्चेन्नेत्यनुवर्तते। अत एव - भगवदंशत्वादिहेतोरेव, जीवस्योपमा मत्स्यादिसाम्यं मत्स्यादिवदीश्वराभेद इति यावत् , इति चेन्न। सूर्यकादिवत् - यथा प्रतिबिम्बत्वात्सूर्यकादि, सूर्येण नाभिन्न तथा जीवोऽपि प्रतिबिम्बत्वान्नेश्वराभिन्न इति सूत्रार्थः।

**अत्र जीवः परमात्मनो न भिद्यते चेतनत्वात् तदंशत्वाद्वा मत्स्यादिवदिति प्राप्ते -**

**जीवः न परमात्माभिन्नः तत्प्रतिबिम्बत्वात् । यो यत्प्रतिबिम्बः नासौ तदभिन्नः यथा सूर्यकादिः । न च असिद्धो हेतुः । "रूपं रूपं प्रतिरूपो बभूव" (बृ.उ.४-५-१९)इति श्रुतेः ।**

**"बहवः सूर्यका यद्वत् सूर्यस्य सदृशा जले । एवमेवात्मका लोके परात्मसदृशा मताः ।"इति स्मृतेश्च ।**

न च प्राचीनानुमानविरोधः । तस्याप्रतिबिम्बत्वोपाधिदुष्टत्वादिति सिद्धान्तः कृतः । एतदधिकरण-तात्पर्यं समन्वयाध्याय एव **अन्यश्च जीवत** इत्युक्तत्वात् अत्रानुक्तिरिति बोध्यम् ।।१०।।

## ओं अम्बुवदग्रहणात्तु न तथात्वम् ओं

स्नेहात्मकाम्बुपदेन मानसस्नेह उपलक्ष्यते। ग्रहणं - ज्ञानं अम्बुवदिति ग्रहणस्य विशेषणं अम्बुवदग्रहणात् - अम्बुवद्ग्रहणाभावात् स्नेहयुक्तज्ञानाभावात् भक्त्यभावादिति यावत् । तथात्वं - ज्ञानानन्दादिभगवत्सादृश्यं न सम्यगभिव्यज्यते किन्तु तद्भक्त्यैवेति सूत्रार्थः ।।

अत्र न मोक्षो भक्तिफलम् । अनादिसिद्धत्वात् । नित्यानन्दज्ञानादिमत्त्वं हि मोक्षः । तच्च स्वरूपमेवेति प्राप्ते -

भक्तिफलमेव मोक्षः, ज्ञानानन्दादेः जीवस्वरूपत्वेन नित्यसिद्धत्वेऽपि तदाविर्भावस्य भक्ति-साध्यत्वात् । न चात्र प्रमाणाभावः । "यमेवैषवृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्" (क.उ.२-२३)इति श्रुतेः ।

"महत्त्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाभिधीयते। तथैव व्यज्यते सम्यक् जीवरूपं सुखादिकम् ।" (पाद्म)इति स्मृतेश्चेति सिद्धान्तः कृतः ।।११।।

## ओं वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ओं

भक्त्यादेः वृद्धिह्रासभाक्त्वं वृद्धिह्रासवत्त्वं तारतम्यं विद्यते। कुतः? अन्तर्भावात् - ब्रह्मादीनां मनुष्योत्तमानां च भक्तेष्वन्तर्भावात् । तेषां महदल्पफलत्वस्य प्रमाणसिद्धत्वादिति भावः । फलतारतम्येऽपि कुतो भक्त्यादितारतम्यं इत्यत उक्तम् । एवं उभयसामञ्जस्यादिति । एवं भक्त्यादितारतम्याङ्गीकार एव तारतम्येन फलदातुरीश्वरस्य उभयान् प्रति ब्रह्मादीन् अस्मदादीन् प्रति सामञ्जस्यात् समत्वसम्भवात्, अन्यथा वैषम्यादिदोषापत्तेरिति सूत्रार्थः ।

अत्र सर्वेषां मुक्तियोग्यानां एकप्रकारैव भक्तिः तत्फलस्य मुक्तत्वानन्दित्वादेः सर्वेषु साम्यादिति प्राप्ते-

नैकप्रकारा सर्वेषां भक्तिः । किन्तु वृद्धिह्रासवती। फलस्य वृद्धिह्रासवत्त्वात् । न चात्र प्रमाणाभावः। "अथात आनन्दस्य मीमांसा भवति" (तै.उ.२-८)इत्यादिश्रुतेः ।

"यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे। तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने । इति स्मृतेश्च" इति सिद्धान्तः कृतः।

अनयोः अधिकरणयोः तात्पर्यमाह - **तद्भक्तितारतम्येन तारतम्यं विमुक्तिगं** इति। तस्य परमेश्वरस्य भक्तितारतम्येन विमुक्तिगं मुक्तौ विद्यमानं तारतम्यं भवतीति शेषः । भक्तितारतम्येन मुक्तितारतम्यं भवतीति योजनद्वयमभिप्रेतम् । तत्र प्रथमयोजनया प्रथमाधिकरणस्य द्वितीययोजनया द्वितीयाधिकरणस्य च तात्पर्यमुक्तमित्यवन्तव्यम् ।।१२।।

## ओं प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ओं

भगवानेव पालनकर्ता, न स्वतःसिद्धिः। कुतः? हि यस्मात् नैतावदिति श्रुतिः प्रकृतैतावत्त्वं हरेः प्रकृतस् सृष्टिसंहारकर्तृत्वस्य एतावत्त्वं तावन्मात्रत्वं प्रतिषेधति, ततस्तदपेक्षया भूयः अधिकं पालनं च ब्रवीति तस्मादिति सूत्रार्थः।

अत्र नेश्वरः पालकः जगत्सृष्टा स्थितस्येश्वरस्य संहारे प्रवृत्त्यभावे स्वत एव जगत्स्थिति-सम्भवादिति प्राप्ते -

भवत्येवेश्वरः पालकः। "नैतावदेना परो अन्यदस्त्युक्षा स द्यावा पृथिवी बिभर्ति" (ऋ.सं.१०-३१-८) इति श्रुत्या हरेः पूर्वप्रकृतसृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य पालकत्वस्याप्यभिधानात् ।

"सृष्टिं च पालनञ्चैव संहारं नियमं तथा । एक एव करोतीशः सर्वस्य जगतो हरिः। " (ब्रह्माण्ड)इति स्मृतेश्च । न च संहारविलम्बमात्रेणैव स्थितिसिद्धेः न तदर्थमीश्वरापेक्षेति वाच्यम् । सर्वस्य धारणार्थं चेतनानामन्नपानाद्यर्थं ईश्वरव्यापारस्य आवश्यकत्वादिति सिद्धान्तः कृतः।

एतस्यापि तात्पर्यं समन्वयाध्याये **सर्वकर्ता** इत्यनेनैव प्रतिपादितमिति न पृथगुक्तिरिति।।१३।।

## ओं तदव्यक्तमाह हि ओं

तत्तु ब्रह्म अव्यक्तं - पुरुषप्रयत्नेन द्रष्टुमशक्यं, कुतः? हि यस्मात् , अरूपमिति श्रुतिः तस्याव्यक्तत्वमाह इति सूत्रार्थः।

अत्र व्यक्त एवायमीश्वरः। "यदा पश्यः पश्यते" (मुं.उ.३-१-३)इति श्रुतिः। न हि अव्यक्तस्वभावत्वे साधनशतेनापि दर्शनमुपपद्यते इति प्राप्ते -

अव्यक्त एवायमीश्वरः। "अरूपमक्षरं ब्रह्म सदाव्यक्तं च निष्कलं" (कौण्ठरव्य)इति श्रुतेः। ननु यदि सदा व्यक्तं ब्रह्म तर्हि व्यर्थैव तद्भक्तिः। अव्यक्तस्वभावस्य साधनशतेनापि व्यक्तीकर्तुमशक्यत्वादिति चेन्न । अव्यक्तस्वभावस्य साधनसामर्थ्येन ग्रहणासम्भवेऽपि भक्तिपूर्वकं श्रवणाद्यभ्यासेन तत्प्रसादे जाते तदपरोक्षाङ्गीकारात् । अत एव "यदा" इति श्रुति-विरोधोऽप्यपास्तः। नन्वव्यक्तस्वभावस्य प्रसादेनापि कथं व्यक्तत्वमिति चेन्न ।

अघटितघटकानन्तशक्तित्वात् । तदुक्तम् ''नित्याव्यक्तोऽपि भगवान् ईक्ष्यते निजशक्तितः। तमृते परमात्मानं कः पश्येतामितं प्रभुम् ।।(नारायणाध्यात्म)इति'' इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **परमेश्वर** इति। अघटितघटकपरमैश्वर्योपेत इत्यर्थः। अत्र जीवशक्त्या उपलब्ध्ययोग्यत्वरूपाव्यक्तत्वस्य स्वप्रसादेन व्यक्तत्वस्य च समर्थितत्वात् । तस्य चाचिन्त्यैश्वर्यनिर्वाह्यत्वादिति ।।१४।।

**ओं उभयव्यपदेशात्त्वहिकुण्डलवत् ओं**

उभयव्यपदेशात् - गुणत्वगुणित्वरूपोभयस्य ''आनन्दम्'' इत्यादिश्रुतौ व्यपदेशात् । ब्रह्मणः गुणत्वं गुणित्वं च श्रौतमिति कथमङ्गीकार्यं क्वाप्यदृष्टेरित्यत उक्तं - अहिकुण्डलवदिति। यथा अहिः - कुण्डली कुण्डलं च एवं भगवानपीति सूत्रार्थः।

अत्र न भगवद्भक्तिर्युक्ता तस्यानन्दाद्यात्मकत्वेन आनन्दित्वादिशून्यत्वात् । न ह्यगुणिनि भक्तिरुपपद्यत इति प्राप्ते -

कर्तव्यैव भगवद्भक्तिः। ''आनन्दं ब्रह्मणो विद्वान्''(तै.उ.२-४) ''आनन्दो ब्रह्म''(तै.उ.३-६) ''अथैष एव परमानन्द'' (बृ.उ.६-३-३३) इत्यादिश्रुतिषु गुणात्मकत्वेन च व्यपदेशात् । कुण्डलात्मकस्याप्यहेः कुण्डलित्वव्यपदेशदर्शनादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **परमेश्वर** इति । परमै सवोत्कृष्टैः ज्ञानानन्दादिगुणैः ईश्वरः समर्थः गुणपूर्ण इति यावत् । अतः तस्मिन् भक्तिरुपपद्यते इति भावः ।।१५।।

**ओं परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ओं**

ब्रह्मानन्दादिकं अतः लौकिकानन्दादेः परं विलक्षणं, कुतः? सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः । सेतून्मानेति भावप्रधानम्। ''एष सेतुः''(छां.उ.८-४-१)इति ''यतो वाचो निवर्तन्ते''(तै.उ.२-४) इति पूर्णत्वरूपोन्मानत्वस्य ''एतस्यै वानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'' (बृ.उ.६-३-३२)इति बिम्बप्रतिबिम्बभावरूपसम्बन्धस्य ''अन्यज्ज्ञानन्तु जीवानां अन्यज्ज्ञानं परस्य च''इति भेदस्य वैलक्षण्यस्य च व्यपदेशेभ्यो हेतुभ्य इति सूत्रार्थः।

अत्र ब्रह्मानन्दादिकं लोकसदृशं आनन्दादिशब्दवाच्यत्वात् इति प्राप्ते -

ब्रह्मानन्दादिकं लोकानन्दादिविलक्षणमेव। ''एष सेतुः विधृतिः'' । ''य एष आनन्दः परमस्य'' इत्यादिश्रुतिषु लोकानन्दादौ असम्भावितसेतुत्वोन्मानत्ववैलक्षण्यस्य व्यपदेशात् । अलौकिकोऽपि ज्ञानानन्दादौ ज्ञानादिशब्दप्रयोगस्तु तस्यार्थप्रकाशकत्वानुकूलवेद्यत्वादिज्ञापनार्थत्वात् इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **परमेश्वर** इति। परमैः लोकविलक्षणैः गुणैः ईश्वरः लौकिकानन्दादि-विलक्षणानन्दादिगुणवानित्यर्थः ।।१६।।

**ओं स्थानविशेषात्प्रकाशादिवत् ओं**

प्रकाशादिवत् - सूर्यादिप्रतिबिम्ब इव यथा बिम्बभूतस्यादित्यस्याविशेषेऽपि स्थानविशेषात् - सूर्यकान्तादिस्थानगुणात् प्रतिबिम्बविशेषः तथा भगवदानन्दादौ विशेषाभावेऽपि ब्रह्मादिस्थानगुणात्तदानन्दादौ विशेष इति सूत्रार्थः।

अत्र जीवानन्दादिः न भगवदानन्दादिप्रतिबिम्बभूतः। तथात्वे मिथो वैचित्र्यायोगात् । मिथो विचित्राणां तत्प्रतिबिम्बत्वे बिम्बभूतभगवदानन्दादौ वैचित्र्यं स्यादिति प्राप्ते -

प्रतिबिम्बभूत एव जीवानन्दादिः भगवदानन्दादेः। न तावता प्रतिबिम्बवैचित्र्यापत्तिः। नापि बिम्बवैचित्र्यापत्तिश्च । यथा खलु सूर्यादिबिम्बवैचित्र्याभावेऽपि सूर्यकान्तजनादिस्थानगुणेन प्रतिबिम्बेषु अग्निजनकत्वतदभावादिवैचित्र्यमेवं ब्रह्मादिस्थानगुणभक्त्यादिवैचित्र्येण बिम्बभूतभगवदै-श्वर्यवशेन च बिम्बानन्दाद्यवैचित्र्येऽपि तत्प्रतिबिम्बानां जीवानां गुणादीनां वैचित्र्योपपत्तेः। कुतः?

''ऐश्वर्यात्परमाद्विष्णोः भक्त्यादीनामनादितः। ब्रह्मादीनां सूपपन्ना ह्यानन्दादेः विचित्रता । इति स्मृतेः''इति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **स एकः परमेश्वरः** इति । स विष्णुरेकः ज्ञानानन्दादिभिः एकप्रकार एव। न तु तारतम्यवानित्यर्थः। बिम्बानन्दाद्यवैचित्र्येऽपि प्रतिबिम्बानन्दादिवैचित्र्यस्य बिम्बभूत-भगवदैश्वर्यवशात् उपपत्तेरिति भावेनोक्तं - **परमेश्वर** इति। स्थानगुणस्याप्युपलक्षणम् । अथवा तस्य तात्पर्यमाह - **तद्भक्तितारतम्येन तारतम्यं विमुक्तिगं** इति। भगवदानन्दादौ विशेषाभावेऽपि ब्रह्मादिस्थानगुणभक्त्यादिवैशेष्यात्तदानन्दादौ विशेष इत्यर्थः ।।१७।।

**ओं तथाऽन्यप्रतिषेधात् ओं**

यथा जीवानन्दादेः अन्यद्भगवदानन्दादिकं तथा ब्रह्मध्यानविषयप्रतीकादन्यत्, न तु तदेव। कुतः प्रतिषेधात् । ''नेदं यदिदमुपासते'' (के.उ.१-६)इति ध्यानकाले प्रतीतस्य ब्रह्मत्वनिषेधादिति सूत्रार्थः।

अत्र न ब्रह्मणोऽव्यक्तत्वम् । तस्य ध्यानकाले चित्ते प्रतीयमानत्वादिति प्राप्ते -

न ध्यानकाले प्रतीयमानत्वेन व्यक्तत्वं ब्रह्मणो मन्तव्यम् । ध्यानकाले प्रतीयमानस्याब्रह्मत्वात्।

''यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते''(के.उ.१-६) इति श्रुतौ ध्येयस्य ब्रह्मत्वनिषेधात् । न चैवं ब्रह्मणः ध्यानफलप्रदत्वानुपपत्तिः। ध्येये ब्रह्मणः

सत्त्वेन तस्यैव फलप्रदत्वाङ्गीकारात् । न चानुपासितस्य फलप्रदत्वानुपपत्तिः। प्रतिमोपासनावत् प्रतिबिम्बोपासनस्यापि ब्रह्मोपासनत्वात् । तदुक्तं –" ब्रह्मैव प्रतिबिम्बे यत् अतस्तेषां फलप्रदम् । तदुपासनं च भवति प्रतिमोपासनं यथा।" (ब्रह्मतर्क)इति सिद्धान्तः कृतः।

एतदधिकरणतात्पर्यन्तु तदव्यक्त माह हीत्यत्रैव उक्तमिति न पृथक् वक्तव्यम् ॥१८॥

**ओं अनेन सर्वगतत्वमायामयशब्दादिभ्यः ओं**

अनेनैव परमेश्वरेणैव सर्वत्र सर्वदा सृष्ट्यादिकं प्रवर्तते। कुतः ? "एष सर्वगत" (भाल्लवेय)इति सर्वगतत्वप्रतिपादकश्रुतेः।

"सर्वत्र सर्वमेतस्मात्सर्वदा सर्ववस्तुषु। स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः। अतो मायामयं विष्णुं प्रवदन्ति सनातनम्" इति मायामयशब्दव्याख्यानश्रुतेः। आदिशब्दसूचितान्यत्र-प्रमाणाभावयुक्तेश्चेति सूत्रार्थः।

अत्र न सर्वसृष्ट्यादि ब्रह्मण एव। किन्तु देशकालान्तरे अन्यतोऽपि राजादीनां तथा दर्शनादिति प्राप्ते –

भगवतैव सर्वदेशकालीनसृष्ट्यादि न तु देशकालान्तरे अन्येन, तथा हि। किं विष्णोः श्रुतिसिद्धसर्वसृष्ट्याद्युपयोगिसर्वगतत्वादौ प्रमाणाभावादेतत्कल्प्यते। अन्यत्र प्रमाणसद्भावाद्वा । नाद्यः "एष सर्वः एष सर्वगतः एष सर्वेश्वरः एषोऽचिन्त्यः" (भाल्लवेय) इति श्रुतिसद्भावात् । न द्वितीयः तदभावात् । इति सिद्धान्तः कृतः॥

तस्य तात्पर्यमाह – **सर्वदेशेषु कालेषु स एकः परमेश्वरः** इति। स एक एव परमेश्वरः सर्वदेशेषु कालेषु सृष्ट्यादिकर्तेति शेषः॥१९॥

**ओं फलमत उपपत्तेः ओं**

अतः ईश्वरादेव फलं, कुतः? उपपत्तेः। तस्य चेतनत्वेन फलदानोपपत्तेः इति सूत्रार्थः।

अत्र कर्मैव फलदातृ न त्वीश्वरः। कुतः ? यैः फलदातृत्वं ईश्वरस्योच्यते तैरपि तस्य कर्मापेक्षयैव फलदातृत्वाङ्गीकारात् । ततश्च आवश्यककर्मण एव फलदातृत्वोपपत्तेः नेश्वरेण कृत्यं पश्यामः इति प्राप्ते –

ईश्वर एव फलदाता, न कर्म, तस्य चेतनत्वेन फलदानोपपत्तेः। कर्मणश्चाचेतनत्वेन तदनुपपत्तेः। न च ईश्वरस्य चेतनत्वे फलदातृत्वसम्भावनैव न तु निश्चयः इति वाच्यम् । "विज्ञानमानन्दं ब्रह्मरातिर्दातुः परायणम्" (बृ.उ.५-९-२७) "पुण्येन पुण्यं लोकं नयति पापेन पापम्" (प्र.उ.३-७)इति श्रुतेरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **स एकः परमेश्वरः** इति । स एको विष्णुरेव परमेश्वरः, फलदानादौ चेतनत्वेन परमसमर्थः। न तु कर्म। तस्याचेतनत्वेन स्वतः फलदानानुपपत्तेरित्यर्थः। यद्यपि तद्भक्तितारतम्येन तारतम्यं विमुक्तिगं इत्येतत् ओं अम्बुवदग्रहणात्तु न तथात्वं ओं, ओं वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं ओं इत्यादिसूत्रतात्पर्यकथनार्थं प्रवृत्तत्वात् पूर्वमेव वक्तुमुचितम् । तथापि व्यत्यासस्तु भक्तिपादत्वेन भक्तेरन्ते निवेशार्थमित्यवगन्तव्यम् ॥२०॥

**मदाचार्यमनोधाममध्वमानसमश्नके ।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥**

**नारायणाचार्य–** वैराग्यानन्तरं उपसनांगभूतभक्त्यतिशयार्थं भगवन्माहात्म्यातिशयवर्णनं अस्मिन्पादे क्रियते। तत्र जाग्रत्स्वप्नयोः सन्धौ भवत्वात्सन्ध्ये स्वप्ने करितुरगानेकविचित्रपदार्थसृष्टिः परमात्मन एव साकाशाद्भवति। ''न तत्र रथाः न रथयोगा न पन्थानो भवत्यथ रथान् रथयोगान् पथः सृजति'' (बृ.उ.६-३-१०)इति श्रुतिर्यतः आहेत्यर्थप्रतिपादनाय सूत्रं **ओं सन्ध्ये सृष्टिराह हि** इति। तत्र कर्तृप्रतिपादनाय सूत्रं **ओं निर्मातारं चैके पुत्रादयश्च**। ''य एष सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्मिमाणः'' इति निर्मातारं पठति। तथा ''एतस्माद्ध्येव पुत्रो जायते एतस्मात् भ्रातैतस्मात् भार्या यदेनं पुरुषमेष स्वप्नेनाभिहन्ति'' (क.उ.५-८)इति श्रुतेः । ''पुत्रादयोऽप्यस्मादेव'' (गौपवन)इत्येके शाखिनो अधीयते। केनोपादनेन सृजतीत्यत आह **ओं मायामात्रं तु कात्स्नेनानभिव्यक्तस्वरूपत्वात्** । वासनाख्यमानससंस्कारात् स्वेच्छारूपमात्रेण प्रदर्शयति। नान्येन साधनेन सम्यगनभिव्यक्तस्वरूपत्वात् । मृदाद्युपादानत्वे जाग्रद्धटादिवदभिव्यक्तता स्यात् । मायया वासनया मितं मायया भगवदिच्छया त्रातमतो मायामात्रमित्यर्थः। एवं सति तस्य सत्यत्वप्रतिपादनाय सूत्रं **ओं सूचकश्च हि श्रुतेराचक्षते च तद्विदः**। साधनान्तराभावेन सम्यगनभिव्यक्तोऽपि शुभाशुभफलयोः सूचको भवति। अतः सन्नैवेति भावः।

''यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति। समृद्धं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने''॥ (बृ.उ.६-३-१०)इत्यादि श्रुतेः। हि शब्दाद्दर्शनाच्च ।

''यद्वाऽपि ब्राह्मणो भूयादेवतावृषभोऽपि वा। स्वप्नस्थमथवा राजा तत्तथैव भविष्यति॥ इत्याचक्षते स्वप्नविदो व्यासादयः।'' इति स्वप्नोत्पादकत्वमाहात्म्यं तस्योक्तम् ॥१॥

तथा स्वप्नतिरोधायकत्वमपि तस्येवेत्यर्थप्रतिपादनाय सूत्रं **ओं पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ** इति। परस्य परमात्मन इच्छयैव स्वाप्नं सर्वं तिरोहितम्। यतो बन्धमोक्षावपि। जीवस्य तदिच्छाया एव भवत इति सूत्रार्थः ॥२॥

तथा जाग्रदवस्थाप्रेरकत्वमपि तस्यैवेत्येतदर्थं सूत्रं **ओं देहयोगाद्वासोऽपि** इति। देहयोगेन देहाभिमानेन वासो अवस्थानं जाग्रदपि यावत् । तदपि तत एव भवति इत्यर्थः ।।३।।

तथा सुषुप्त्यवस्थाप्रदत्वमपि तस्यैव इत्येतदर्थं सूत्रं **ओं तदभावो नाडीषु तच्छ्रुतेरात्मनि ह** इति। जाग्रत्स्वप्नाभावः सुप्तिः नाडिस्थपरमात्मनैव। "आसु तदा नाडीषु सुप्तो भवति" (छा.उ.८-६-३) । "सता सोम्य तदा सम्पन्नो भवति प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेदनान्तरं" (छा.उ.६-८-११)इति श्रुतेरित्यर्थः ।।४।।

तथा सुप्तप्रबोधकत्वरूपमाहात्म्यमपि तस्यैवेत्यर्थप्रतिपदानाय सूत्रं **ओं अतः प्रबोधोऽस्मात्**। यतस्तस्मिन्सुप्तिरतो हेतोरस्मात्परमेश्वरादेव प्रबोधो भवति। "एष एव स्वप्नं प्रबोधयत्येतस्माज्जीव उत्तिष्ठत्येष प्रमातैष परम" इति कौण्डिण्यश्रुतेरित्यर्थः ।।५।।

तथा भगवतः सर्वेषामपि सर्वदेशकालेषु सर्वावस्थाप्रेरकत्वं प्रतिपादयितुं सूत्रं प्रवृत्तं **ओं स एव च कर्मानुस्मृतिशब्दविधिभ्य** इति। "एष ह्येव साधु कर्म कारयति" (कौ.उ.३-८)इति सर्वकर्मणां भगवदधीनत्वोक्तेः।

"प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु। परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन।।" इत्यनुसारिस्मृतेः। "स एषः स्वप्नान् दर्शयति एष परम आनन्दयति" इति शब्दात् । "आत्मानमेव लोकमुपासीत" (बृ.उ.३-४-१५)इति तस्यैवोपासनाविधेश्च । स एव सर्वेषां सर्वावस्थाप्रेरको न तु केषांचिदेव कतिपयावस्थानां इत्युक्तम् ।।६।।

तथा मूर्छारूपावान्तरावस्था अपि तदधीन इति समर्थयितुं प्रवृत्तं **ओं मुग्धेऽर्धसम्पत्तिः परिशेषात्** इति सूत्रं। मोहावस्थायां परमेश्वरे अर्धप्राप्तिर्भवति। "हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति। समीपस्थस्तथा स्वप्नं स्वपित्यस्मिन् लयं व्रजन् । यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः। अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः इत्युक्तम् ।।७।।

एवं सप्ताधिकरणतात्पर्यविषयीभूतमर्थमाह **सर्वावस्थाप्रेरकश्च** इति। सर्वदेशेषु कालेषु स एकः परमेश्वर इति वक्ष्यमाणं सिंहावलोकनन्यायेन सम्बध्यते। स्वप्नजागरितसुषुप्तिमूर्छाद्यखिला-वस्थाप्रेरकोऽपि सर्वत्र सर्वदा अप्रतिहतैश्वर्यः स एव नान्यः कश्चिदतो युक्ता अस्मिन् भक्तिरिति सिद्धम् ।

ननु भगवतो जाग्रदाद्यवस्थाप्रेरकत्वमुक्तम्। जाग्रदाद्यवस्थाप्रेरकाश्च विश्वतैजसप्राज्ञाः तेषामवस्थानभेदेनाम्नानमस्ति। "दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः। आकाशे च हृदि प्राज्ञ" इत्यादिश्रुतेः। युगपदनेकस्थानस्थितिश्च तस्यायुक्ता। न चाकाशवदुपपत्तिः। तस्यांशतो नैकस्थानस्थितत्वाद्युक्तम् । विश्वादीनां च सप्तांग एकोनविंशतिमुखो मध्ये हस्तिमुख इति प्रत्येकं रूपश्रवणात्सांगतायामंशित्वस्यैवोक्तत्वादतोऽमीषां परस्परभेदः।

तथाचानुग्राह्यानुग्राहकत्वादिकमप्यापन्नमतो निरतिशयितमहिम्नो अभावान्न तत्र भक्तिः कर्तव्येति प्राप्ते सूत्रं **ओं न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि** इति। अक्ष्यादिभिन्नस्थानापेक्षया परस्य परमात्मनः उभयलिंगभिन्नं रूपमिति न मन्तव्यम् । "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" (ऐ.आ.३-२-३)इति हि प्रसिद्धा श्रुतिः। "एकरूपः परो विष्णुः सर्वत्रापि न संशयः। ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयत" इति मात्स्ये । "प्रतिदृशामिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोह" इति भागवते चोक्तत्वादिति सूत्रार्थः। उक्तमाक्षिप्य समादधत्सूत्रं **ओं न भेदादिति चेन्न प्रत्येकमतद्वचनात्** इति। "कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ। प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्येन सिद्ध्यतः" (मा.उ.२-२) जाग्रत्स्वप्नप्रवर्तकौ विश्वतैजसौ बन्धद्वयवन्तौ । सुषुप्तिप्रवर्तकः प्राज्ञस्तु एकबन्धवान् । तुर्यस्तु बन्धद्वयरहित इति भेदश्रवणान्नैक्यमिति चेत् । न, (बृ.उ.५-७-३) "एष त आत्मान्तर्याम्यमृतः" "अयमेव स योऽयमात्मा" (बृ.उ.४-५-१) इति प्रत्येकरूपाणामभेदवचनात् । ननु भेदश्रुतिबलाद्विश्वादीनां भेद एव किं न स्यादभेदश्रुतेः कतिपयविषयत्वेनाप्युपपत्तेरित्यतः सूत्रं **ओं अपि चैवमेके** । एवमभेदेन चशब्दादाततत्वेन चैके शाखिनः पठन्ति। "अमात्रोऽनन्तमात्रश्च द्वैतस्यापशमः शिवः। ओंकारो विदितो येन स मुनिर्नेतरो जनः।" (मां.उ.४-६)इति विश्वाद्यनन्तरूपाणामभेदेन पठितत्वान्न भेदश्रुतिमालम्ब्य तद्भेदो ग्राह्य इत्यर्थः। अमात्रो भिन्नांशशून्यः। पुनरनन्तांशः। द्वैतस्य मिथ्याज्ञानस्योपशमकर्त्ता द्वाभ्यां प्रकाराभ्यां इत् नपुंसके भावे क्तः। ज्ञानम् । इणो गत्यर्थस्य ज्ञानार्थत्वात् । तत् द्वीतं द्वीतमेवद्वैतं संशयरूपं ज्ञानं उपलक्षणमेतत् । विपर्यस्यापीत्यनेन। यद्वा पुरोवर्तिनिष्ठ तदनिष्ठरूपप्रकारद्वयोपेतं संशयविपर्ययसाधारणं उभयत्राप्यधिष्टानेदंतायाः तदवृत्तिप्रकारस्याचावगाहनादिति भयेन द्वैतं मिथ्याज्ञानमिति व्याख्यातम् । ओमित्या क्रियमाण ओंकारः । अभेदेपि विशेषबलेन भेदश्रुतिः सावकाशेति भावः। तस्य तात्पर्यमाह **सर्वरूपेष्वभेदवान् । सर्वदेशेषु कालेषु स एकः परमेश्वर** इति। कलयंतीति ज्ञापयन्तीति कालाः अक्ष्यादीन्द्रियरूपासर्वदेशाः सर्वाण्यक्ष्यादिस्थानानि तेषु स्थितेषु विश्वतैजसादिषु सर्वरूपेषु अभेदवान् । भेदरहितः कथं तर्हि अनेकेषु स्थानेष्वेकदेवस्थितः इत्यत उक्तं एकः अन्यः अनेकरूप इत्यर्थः। एके मुख्यान्यकेवलाः । तत्किं भिन्नः न किन्त्वेकः अभिन्नः। नन्वेतद्विरुद्धं कथमेकत्र स्यादित्यत उक्तं परमेश्वरः अचिन्त्यैश्वर्यमहिम्ना सर्वमुपपन्नमिति भावः। तदुक्तं अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् । उच्यते भगवान् विष्णुरैश्वर्यात् पुरुषोत्तम" इति।।८।।

नन्वेवमपि तस्य भक्तिर्न कर्त्तव्या । तथा हि परमेश्वर किं रूपी इत्यंगीक्रियते नीरूपो वा। आद्ये घटादिवदनित्यः स्यात् । द्वितीये सौन्दर्याद्यभावप्रसंगेन तत्र भक्तेरेवानुदयात् । "आदित्यवर्णं स्तमसः परस्तात्" । "हिरण्यरूपः" "शुद्धस्फटिकसङ्काशो मेखश्याम" इत्यादिश्रुतिस्मृतिविरोधा-पत्तेश्चेत्यतः सूत्रं **ओं अरूपवदेव हि तत्प्रधानत्वात्** इति। रूपरहितमेव ब्रह्म । अतो

नानित्यत्वापत्तिः। रूपं हि अनित्यत्वापादकं प्राकृतं तस्यास्य प्रकृत्यादिभ्योऽपि प्रधानत्वात्तद्वन्धविरुद्धस्य तद्रूपत्वाभावात्।

भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः। अरूपवानतः प्रोक्तः क्व तदव्यक्ततः परे।।

इति मात्स्ये । न चैवं सौन्दर्याद्यभावः। रुग्मवर्णादिश्रुतिवैय्यर्थ्यं चेत्याशयेन सूत्रं **ओं प्रकाशवच्चावैय्यर्थ्यम्** । यथा गृहान्तर्नयनादिप्रकाशे सत्यपि सौरादिप्रकाशाभावान्नास्ति प्रकाश इति व्यवहारः तथा चिदात्मकरूग्मवर्णादिमत्वेऽपि विलक्षणप्राकृतरूपाभावेनैव अरूपत्वम् । अतो न श्रुतिवैय्यर्थ्यं सौन्दर्याभावोऽपि । चिदानन्दस्वरूपात्मकरूपस्य सत्वं श्रुत्यादिसिद्धमित्याशयेन सूत्रं **ओं आह च तन्मात्रं** इति। "आनन्दमात्रमजरं पुराणं एकं सन्तं बहुधा दृश्यमानम् । तमात्मस्थं येन पश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषां" (चतुर्वेदशिखा)इति श्रुतिरानन्दमात्रत्वमाह। नन्वान्दमात्रत्वं भवतु ब्रह्मणस्तावता रूपस्य किमायातमित्यतः सूत्रं **ओं दर्शयति चाथो अपि स्मर्यत** इति ।(मुं.उ.२-२-८) "आनन्दरूपममृतं यद्विभाति" "शुद्धस्फटिकसंकाशं वासुदेवं निरंजनम्। चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः" इति श्रुतिस्मृतिभ्यां चिन्मात्रस्यैव रूपादेरुक्तत्वादिति। तस्य सर्वस्यापि तात्पर्यमाह **सर्वरूपेष्वभेदवान् । सर्वदेशेषु कालेषु स एकः परमेश्वर** इति। स विष्णुः सर्वरूपेषु शुक्लपीतादिषु सत्स्वपि अभेदवान् । भेदनं भेदो विनाश इति यावत् । तद्वान्न भवति। कुतः? भौतिकस्य वा प्राकृतस्य वा रूपस्य अनित्यताव्याप्तत्वम् । तथा च भौतिकरूपाभावात् । भूतानां देशतः कालतः परिच्छिन्नत्वादस्य च सर्वदेशकालेषु सत्वात् । नापि प्राकृतम् । यतः परमेश्वरः परा उत्कृष्टादव्यक्ततत्वाभिमानिनी या महालक्ष्मीस्तस्या अपीश्वरः। तथा च स्वाधीनप्रकृतिकस्य न प्राकृतगुणकृतविक्रियादिति । तेन अरूपवदेव हि तत्प्रधानत्वात् इति सूत्रं प्रवृत्तं भवति। तथा च परिशेषाच्चिदानन्दात्मक-भगवत्स्वरूपमेव तद्रूपमित्युक्तं भवति।।९।।

तदिदमाह **सर्वरूपेष्वभेदवान्** इति। सर्वेष्वपि शुक्लपीतादिरूपेषु स्वात्मना सह अभेदवान् । भेदरहित इत्यर्थः । तेन च **ओं आह च तन्मात्रं** इति सूत्रं प्रवृत्तं भवति। सर्वरूपेष्वभेदवानिति वदता अर्थाद्याति स्वस्य स्वरूपाणि न भवन्ति। जीवादयस्ततो भेदवानित्युक्तं भवति। तेन च **ओं अत एव चोपमा सूर्यकादिवत्** इति सूत्रं चोक्ततात्पर्यो भवति। यस्मादेवं मत्स्यादिपरमेश्वररूपाणां ज्ञानैश्वर्यादौ न कश्चिद्दोषः । अतो जीवो अल्पज्ञानशक्त्यादिमत्वान्न तत्स्वरूपांशः। तस्मात्तत्प्रतिबिम्ब एव । एवं च सूर्यकोपमत्वमेव जीवेश्वरयोरिति सूत्रार्थः। "रूपं रूपं प्रतिरूपो बभूव" (बृ.उ.४-५-१९)।

बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जले । एवमेवात्मका लोके परात्मसदृशा मताः। इत्यादेः।

तेन सर्वेषु रूपेषु नानाविधेष्वनेकेष्वपि सूर्यकादिवत्प्रतिरूपेषु सत्स्वपि स्वयं बिम्बरूपः। अभेदवानेक एवेति योजनां सूचयति ।।१०।।

नन्वेतावता प्रबन्धेन यद्भगवन्माहात्म्यं वर्णितं न तद्युक्तं निष्प्रयोजनज्ञानत्वात् । ननूक्तं भक्त्यर्थं भगवन्महिमोच्यते इति। सत्यं भक्तेरेव प्रयोजनाभावान्न च मोक्षस्तत्प्रयोजनम् । नित्यानन्दज्ञानरूपभगवत्सादृश्यरूपस्य तस्य स्वतः सिद्धत्वादित्यतः सूत्र **ओं अम्बवदग्रहणात्तु न तथात्वं** इति। अम्बुवत्स्नेहेन ग्रहणं विना न तथात्वं भगवत्सादृश्यं सम्यगभिव्यज्यते। ग्रहणस्यांबुसादृश्योक्त्या स्नेहवत्वं लक्ष्यते । जलस्य स्नेहगुणवत्वात्तदादाय दृष्टन्तः। यद्वा अम्बुवत्तु पिष्टादिकं गृह्णाति पिण्डीकरोति तत्स्नेहेन स्नेहश्चित्कणता गुणः। एवमेव परमात्मनः स्नेहेन ग्रहणं भक्त्या ज्ञानं तद्भावान्न भगवत्स्वरूपं व्यज्यते । ''यमैवेष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वां'' (क.उ.२-२३)इति श्रुतेः। भगवत्प्रसादः स्वरूपाभिव्यक्तिहेतुः प्रतीयते प्रसादश्च भक्तिं विना नास्त्येव।

भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप।। (भ.गी.११-५४)इति भगवदुक्तेः।

साक्षात्तदर्थप्रतिपादकस्मृतिश्च अत्रार्थे अस्ति। महत्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते। तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकं'' (पद्म.पु)इति ।।११।।

किं च अस्ति तावद्ब्रह्मादीनामुत्कृष्टत्वं मनुष्योत्तमादीनां चापकृष्टत्वमिति। भक्तानां वृद्धिह्रासभाक्तरूपमानन्दतारतम्यं सर्वेषां सर्वमपि भक्तेष्वन्तर्भावात् । तदुभयस्यापि भक्त्यधीनत्वेन सामञ्जस्यं भगवतः। भगवत्यन्यथावैषम्यापत्तेरित्येतदर्थप्रतिपादनायसूत्रं **ओं वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामंजस्यादेवम्**। एवं भक्त्यादिविशेषांगीकारादीश्वरस्य ब्रह्मादीनन्यांश्च प्रति सामंजस्यं भवति। ''साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः। ब्रह्मादयः क्रमेणैव यथानन्दश्रुतौ श्रुताः'' (ब्र.पु)इति पाद्मोक्तेः। नन्वानन्दतारतम्यमेव कुतः इत्यतः सूत्रं **ओं दर्शनाच्च** । ''अथात आनन्दस्य मीमांसा भवति'' (तै.उ.२-८)इत्यादिना ब्रह्मपर्यन्तेषु सुखे विशेषदर्शनात् । ''यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिंगभेदने'' इति स्मरणाच्चेति ।।१२।।

तस्य सर्वस्य तात्पर्यमाह **तद्भक्तितारतम्येन तारतम्यं विमुक्तिगं** इति। मोक्षे विद्यमानं ब्रह्मादिमनुष्योत्तमानां यत् तारतम्यं ज्ञानानन्दादिवृद्धिह्रासरूपं तत्तस्य विष्णोर्या भक्तिस्तस्याः यत्तारतम्यं तन्निमित्तमेवेत्यर्थः। साधनतारतम्यस्य फलतारतम्यं प्रति हेतुत्वं वदता यद्विशेषयोः कार्यकारणभावो असति बाधके तत्सामान्ययोरपीति न्यायसूचनात् भक्तिमात्रं मोक्षमात्रं प्रति कारणं ध्वनितम् । तेन च अम्बुवदिति सूत्रं विवृतम्। अम्बुवद्ग्रहणं स्नेहयुक्तं ज्ञानं भक्तिरिति यावत् ।

तदभावान्न तत्सादृश्यं सम्यगभिव्यज्यत इति सूत्रार्थः। कण्ठोक्त्या च वृद्धिह्रासेति द्वितीयमधिकरणं च विवृतं बोद्धव्यम् । अतो युक्तं भगवन्माहात्म्यकथनमिति भावः। सृष्टिसंहारकर्तृत्वमेव भगवतो न तु पालकत्वं तदुभयाभावे तस्य स्वत एव सिद्धत्वादित्याशंका परिहाराय सूत्रं **ओं प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः**। पूर्वोक्तसृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य ततो अधिकं पालनमपि श्रुतिः ब्रवीति। "नैतावदेना परो अन्यदस्त्युक्षा स द्यावा पृथिवी बिभर्ति" (ऋ.सं.१०-३१-८) इति।

सृष्टिं च पालनं चैव संहारं नियमं तथा। एक एव करोतीशः सर्वस्य जगतो हरिः।। इति ब्रह्माण्डे।

एतत्तात्पर्यमाह **सर्वदेशेषु कालेषु स एकः परमेश्वरः** इति। न केवलमुत्पत्तिसंहारकालयोः सः परमेश्वरः किन्तु सर्वकालेष्वपि तथा च स्थितिकालेऽपि स एव ईश्वरः। पालक इति यावत् ।।१३।।

अथ भगवत्प्राप्तिसाधनभक्त्यर्थं तस्योपलब्ध्ययोग्यत्वरूपमाहात्म्यातिशयं प्रतिपादयितुं पंचसूत्री **ओं तदव्यक्तमाह हि** । तद्ब्रह्म अव्यक्तमेव स्वतः।

अव्यक्त(अरूप)मक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् ।
यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाक्षयो(चाव्ययो) भवेत् ।।

इति कौण्ठरव्यश्रुतिराह यतः। तथाप्याराधनरूपपुरुषप्रयत्नेन व्यक्तीभविष्यतीत्यतः सूत्रं **ओं अपि संराधने प्रत्यक्षानुमानाभ्याम्** । भक्तिरहिताराधनेऽपि तदव्यक्तमेव। कुतः? ज्ञानिप्रत्यक्षात् । परमसूक्ष्मत्वलिंगकानुमानाच्च । नन्वस्तु ब्रह्ममूलरूपेणाव्यक्तस्वभावं अवतारादिकार्यरूपं व्यक्तं भविष्यति । यथाग्न्यादिप्रकाशः । सूक्ष्मपरमाणुः तेजोरूपेण अव्यक्तः स्थूलकार्यरूपे च व्यक्त इत्यतः सूत्रं **ओं प्रकाशवच्चावैशेष्यम्**। अग्न्यादिस्थूलसूक्ष्मत्वविशेषाभावात् । दृष्टान्तवैषम्यमिति भावः। "स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे। सर्वत्रैकस्वरूपोऽसौ सर्वरूपेष्वजो यतः।।" इति गारुडे।

तर्हि तद्दर्शनार्थं यत्नं व्यर्था इत्यतः सूत्रं **ओं प्रकाशश्च कर्मण्यभ्यासात्** । श्रवणाद्यभ्यासं प्रतिकर्मणि विषयभूते अस्मिन्श्रवणाद्यभ्यासात्प्रकाशश्च भवति। ननु नित्याव्यक्तस्य ततोऽपि कथं प्रकाश इत्यतः सूत्रं **ओं अतोऽनन्तेन तथा हि लिंगम्** । उभयत्र प्रमाणसद्भावात् प्रसंगेन अनंतेन परमात्मना तत्प्रसादादेव प्रकाशो भवति। "नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः। तमृते परमात्मानं कः पश्येतामृतं विभुम् ।। इति नारायणाध्यात्मे।"

एतत्तात्पर्यमाह। **सर्वरूपेष्वभेदवान्** । **सर्वदेशेषु कालेषु स एकः परमेश्वर** इति। सर्वरूपेषु मूलरूपावताररूपेषु भेदरहित इत्यनेन प्रकाशवच्चावैशेष्यमित्युक्तार्थं भवति। एतादृशो

अव्यक्तस्वभावो भगवान्सर्वं ददातीति सर्वदा सर्वदानामीशाः सर्वदेशाः तेषु सर्वपुरुषार्थसाधनश्रेष्ठेषु कालेषु कल ज्ञाने एतस्माद्भावे घञ्। तथा विज्ञानेषु स्वविषयसाक्षात्कारेषु विषयेषु स एवैकः परमेश्वरः परमसमर्थः। भक्तेभ्यः स्वदर्शनं दातुं स एव समर्थः। न तु तत्प्रसादं विना भक्तप्रयत्नेनैव साक्षात्कर्तुं शक्य इत्यर्थः। अतो अनन्तेनेति सूत्रगतानन्तशब्दं परमेश्वर इत्यनेन व्याचष्टे । तेनाव्यक्तस्वभावोऽपि स्वकीयाचिन्त्यशक्त्या भक्तान्प्रति प्रकटीभवतीत्यतस्तस्मिन्कर्तव्या एव भक्तिरिति भावः ।।१४।।

स्वरूपभूतेनानन्देन कथमानन्दित्वमित्यतः सूत्रं **ओं उभयव्यपदेशात्त्वहिकुण्डलवत्**। "आनन्दं ब्रह्मणो विद्वान्" (तै.उ.२-४)इति सम्बन्धव्यपदेशात्तथा(बृ.उ.६-३-३३) "अथैष एव परम आनन्दः" "विज्ञानमानन्दं ब्रह्म" ()इति अभेदव्यपदेशाच्च अहिकुण्डवद्विशेषबलाद् व्यवहारो युज्यते। यथा अहेः कुण्डलं अहिकुण्डलमिति व्यपदेशः। दृष्टान्तान्तरमाह **ओं प्रकाशाश्रयवद्वा तेजस्त्वात्** । यथा आदित्यस्य प्रकाशत्वं प्रकाशित्वं च एवं वा दृष्टान्तः। तेजोरूपत्वात् ब्रह्मणः सूर्यदृष्टान्तः । दृष्टान्तान्तरमाह **ओं पूर्ववद्वा** । यथा पूर्वः काल इति पूर्वात्मकस्यापि कालस्य विशेष्यत्वं च तथा अत्रापि पुरुषमतीनां स्थूलसूक्ष्मत्वादिना वैचित्र्यादनेकदृष्टान्तोक्तिः। ननु गुणगुणिनोः भेदव्यपदेशेनैव गुणित्वव्यवहारोऽस्तु आनन्दव्यवहारस्तु औपचारिकोऽस्तु इत्यतः सूत्रं **ओं प्रतिषेधाच्च**। "एकमेवाद्वितीयं ब्रह्म" "नेह नानास्ति किञ्चन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति भेदस्य प्रतिषिद्धत्वादुक्तं युक्तमेव ।।१५।।

एतत्तात्पर्यमाह **सर्वरूपेष्वभेदवान्** इत्यादिना। सर्वरूपेष्वानन्दादिधर्मेषु तत्र तत्स्वपि तैः सह अभेदवान् तदात्मकोऽपि व्यपश्यत इत्यर्थः। तत्र लुप्तोपमया दृष्टान्तमाह। यथासर्वदेशेषु कालेषु व्यपदेशस्तथेत्यर्थः। अयं पूर्वदेशः अयमुत्तरदेश अयं पश्चिमदेश इति देशात्मकस्यैव पूर्वपश्चिमभागस्य विशेषण विशेष्यभावव्यपदेशः। यथा वा भूतभविष्यद्वर्त्तमानकालेषु पूर्वकालः पुण्यकालो वर्त्तमानकाल इति कालात्मकस्याधिपूर्वापरवर्तमानविभागस्य विशेषणविशेष्य-भावव्यपदेशस्तथेत्यर्थः। गुणगुणिनो भेद एव किं न स्यादित्यत उक्तं **स एकः** एकमेवेति श्रुत्याभेदं प्रतिविध्यैकत्वेनौवोक्तत्वात्। ऐश्वर्याच्च सर्वमुपपन्नमिति परमेश्वर इत्यनेनाह।

अथ भगवतो माहात्म्यातिशयार्थं तदीयानामानन्दादिगुणानां लोकानन्दादिवैलक्षण्यं प्रतिपादयितुं सूत्रं **ओं परमतसेतून्मानसम्बन्धभेदव्यपदेशेभ्यः**। अतो लौकिकानन्दादेः ब्रह्मानन्दादिकं परं उत्कृष्टं विलक्षणं च । कुतः(छा.उ.८-४-१) "एष सेतुर्विधृतिः" " य एष आनन्दः परस्य" "एष नित्यो महिमा ब्रह्मणस्य"(बृ.उ.६-४-२३) "ब्राह्मणोऽयं वा तपः आनन्दादिगुणगणाः" इति सेतुत्वमुत्तरावधित्वम् । तथा "यतो वाचो निवर्त्तंते । अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चन" (तै.उ.२-४)इत्युन्मानत्वं पूर्णत्वम् । तथा "एतस्यैवानन्दस्य सर्वाणि

**भूतानि मात्रामुपजीवन्ति'' इति। मात्रं तत्प्रतिबिम्बांशमिति सम्बन्धो बिम्बप्रतिबिम्बभावरूपः। तथा अन्यं ज्ञानन्तु जीवानामन्यज्ज्ञानं परस्य च। नित्यानन्दाव्ययं पूर्णं परं ज्ञानं विधीयते । इति।**

भेदश्च व्यपदिश्यते यतः। हेत्वन्तरेणाप्येतमर्थं समर्थयत्सूत्रं **ओं दर्शनात्तु** । अन्यानन्दादीनां दृश्यमानत्वात् । ''ब्रह्मानन्दं तु अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजोबलमिति ब्रह्मणस्त-स्माद्ब्रह्मेत्याचक्षते'' (कौण्डिण्यश्रुतिः) इत्यदृष्टत्वोक्तेः वैलक्षण्यम्। ननु लोकविलक्षणे कथमानन्दादिशब्दानां व्युत्पत्तिरित्यतः सूत्रं **ओं बुद्ध्यर्थः पादवत्**। यथा प्रसिद्धचरणविलक्षणे ''त्रिपादस्यामृतं दिवि'' (ऋ.सं.१०-९०-३)इति श्वेतद्वीपानन्तासनवैकुण्ठवर्तिमूर्तित्रयविलक्षणे च भूतपादे ''पादोऽस्य विश्वा भूतानि'' इति पादपदं प्रयुज्यते। यथा पुरुषपादस्य तदंशत्वमेवं भूतानामिति जीवेश्वरयोः अंशांशिभावज्ञापनार्थम्। ज्ञानांशभावस्तु भेदश्रुतिपर्यालोचनया भिन्नांशत्वमवगच्छति। तथा लौकिकविलक्षणेऽप्यानन्दादौ तत्पदप्रयोगो युज्यते। तस्यानुकूल-वेद्यत्वादिज्ञापनार्थत्वादिति। एवं च भगवदानन्दादौ चानन्दादिशब्दव्यवहारे बुध्यर्थस्तस्यानुकूल्य-वेद्यत्वज्ञापनार्थः। यथा भूतेषु भगवत्पादव्यपदेशस्तद्भिन्नांशत्वाभिप्राय इति सूत्रार्थः।

अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते। ज्ञापनाय तु लोकस्य यथा राजेव देवराट् इति पाद्मे ।।

एतत्तात्पर्यमाह सर्वदेशेषु कालेषु स एकः परमेश्वरः। '' सर्वं भक्ताभीष्टं दिशन्ति प्रदिशन्ति ते सर्वदेशाः भक्ताभीष्टप्रदाः । कलनं कालः ज्ञानम् । बहुवचनमाद्यर्थे। अर्धर्चाः(पा.सू.२-४-३१) पुंसि चेतिवत् । तादृशाः ये ज्ञानानन्दादिगुणास्तेषु तद्विषयेऽपि स एकः अभिन्नः परमैश्वर्यवांश्चेत्यर्थः। गुणेषु परमैश्वर्यं च गुणानामलौकिकत्व एव भवति। अथ ब्रह्मादिदेवानन्दादीनां भगवदानन्दादिप्रतिबिम्बत्वाद्भगवतो माहात्म्यातिशयं दर्शयन् तत्र बिम्बस्यैक च रूपत्वात्प्रतिबिम्बेषु तारतम्यरूपवैचित्र्यानुपपत्तिशंकां परिहरन्नाह **ओं स्थानविशेषात्प्रकाशादि-वत्**। बिम्बस्यैकत्वेऽपि यथा दर्पणजलतैलखड्गादिस्थानविशेषात् प्रकाशप्रतिबिम्बानां वैचित्र्यं तथा अत्रापि तत्तत्स्वरूपस्थानवैचित्र्यात् प्रतिबिम्बभूतानन्दादेरपि वैचित्र्यं युक्तम् ।

ब्रह्मादिगुणवैशेष्यादानन्दादिः परस्य च ।<br>
प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषतः ।। इति वाराहे।

युक्त्यन्तरेणापि बिम्बस्यैकत्वेऽपि प्रतिबिम्बवैचित्र्यं समर्थयत्सूत्रं **ओं उपपत्तेश्च**।

ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः।<br>
ब्रह्मादीनां तूपपन्ना ह्यानन्दस्य विचित्रता। (पद्म.पु)इत्युपपादनाच्च

इदमप्याह **सर्वदेशेषु कालेषु स एकः परमेश्वरः**। ब्रह्मादिदेवतारूपसर्वदेशेषु सर्वस्थानेषु विद्यमाना ये कालाः। ज्ञानानन्दादिगुणाः। तेषु निमित्तभूतो बिम्बरूपः स एक एव परमेश्वरानन्दः। परमेश्वर इति वदता च 'ऐश्वर्यात्परमाद्विष्णोः' इत्युपपत्तश्चेति सूत्रोक्तोपपत्तिरपि समसूचि।।१७।।

ध्यानकाले यश्चित्ते प्रदृश्यते तदेव ब्रह्मरूपमतः कथं तस्याव्यक्तता स्यादित्यतः सूत्रं **ओं तथाऽन्यत्प्रतिषेधात्** । यथा जीवानन्दादेरन्यद्ब्रह्मानन्दादिः तथोपासकृता तु मानसवासनामयत्वे-नोत्पत्यादिदोषवतो निर्दोषं ब्रह्मान्यदेव । श्रुतौ (के.उ.१-६) तस्य ब्रह्मत्वप्रतिषेधात् । ''यन्मनसा न मनुते येनाहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'' (के.उ.१-६)। अतः सालग्रामादिवन्मनसश्चैतस्य भगवत्प्रतिमात्वात् ब्रह्मोपासनमैवतद्भवति। ब्रह्मस्त्वव्यक्तमेव। अन्यः सिद्धान्तरहस्यमजानानः अपेयदिक्षितो यत्किंचिज्जजल्प। अन्योपासनया अन्यप्राप्तिः स्वयमंगीकृता। वासनामयस्य ब्रह्मण एव ध्यानेन ब्रह्मप्राप्तिरभ्युपगमात्। सगुणोपासनया निर्गुणमभ्युपगच्छतो अस्मान् प्रति दूषणमभिधीयते। सगुणमिथ्याभूतस्य उपासनया तदन्यस्य सत्यस्य ब्रह्मणः प्राप्तिरयुक्तेति। तथा निर्गुणेन गुणारोपेणोपासना च मिथ्योपासनत्वादयुक्तेत्युच्यते। स्वयं च तत्र जडे वासनामये वस्तुनि चिदानन्दात्मादिगुणोपसंहारः कर्तव्यतयोच्यते इति कथं न स्वव्याहतमिति। तदप्यपास्तम् ।

यस्मिन् गुणोपसंहारः क्रियते परमात्मनि तदीयमानसप्रतिमाया मनसावलोकनं तत्तदीयध्यानं इत्यंगीकारात् । न हि एतन्मानसस्य ध्यानम् । किं नाम तस्य मानसः सक्षात्कारः एव। गुणोपसंहारश्च तदन्तर्गते क्रियते। तदीयमानसप्रतिमायाः मनसा अवलोकनं तदीयध्यानम् । तथा प्रोषितयोषित्सुता(पुत्रा)दिध्यानम् । न ह्यतीतं प्रोषितं वा पुत्रादिकं मनसा पश्यन्ति किन्तु वासनामयम् । न चासौ पुत्रः नाप्यत्र पुत्रत्वाद्यारोपयति। अतीतत्वेन विशेषदर्शनात् । किन्तु तत्सदृशं वासनामयं चित्रलिखितमिव पश्यन् तुष्यति। न हि चित्रं स एवेति स्वस्थात्मा भ्रमतीति। नापि शिलाधात्वादिमयप्रतिमासु विष्णुत्वादिकमारोप्यते। न प्रतीके न हि सः इत्यादिना तथा भावस्य चतुर्थे निरस्तत्वात् । स्वधीः कलत्रादिषु भौमइज्यधीरित्यादिना प्रतिमायामभेदज्ञानिनां निन्दित्वाच्चेत्यलम् ।

एतत्तात्पर्यमाह **सर्वदेशेषु कालेषु स एकः परमेश्वरः**। सर्वेषामुपासकानां देशाः हृदयाकाशाः तेषु स्थिताः ये कालाः कलनानि ध्यानानि तेषु यः विषयो भवति मानसवासनामयः । स एकः अन्य इत्यर्थः। ''एके मुख्यान्यकेवला'' इत्यभिधानम्। यतः स परमेश्वरः अर्थादिदं उत्पत्तिविनाशादिमत् अतो भिन्न इत्यर्थः। तस्मात्प्रतीयमानादन्यो अतस्तस्याव्यक्तस्वभावत्वं युक्तमेवेति भावः।।१८।।

अथ भगवतः सर्वदेशकालेषु सृष्ट्याद्यष्टकर्तृत्वमहिमानं प्रतिपादयितुं सूत्रं **ओं अनेन सर्वगतत्वमायामयशब्दादिभ्यः**। सकलदेशादिकालीनं सृष्टियाकमनेनैव भवति। सर्वगतत्वश्रुतेः। मायामयशब्दनिर्वचनश्रुतेश्च। ''एष सर्व एष सर्वगत एषोऽचिन्त्य एष परम'' (भाल्लवेयश्रुति)इति सर्वगतत्वं श्रुतौ च सर्वत्र सृष्ट्यादिप्रतिपादनार्थमिति भावः।

सर्वत्र सर्वमेतस्मात्सर्वदा सर्ववस्तुषु ।
स्वरूपभूतयाऽचिन्त्यशक्त्या मायाख्यया यतः।
अतो मायामयं विष्णुं प्रवदन्ति सनातनम्।। इति।

एतत्तात्पर्यमाह **सर्वदेशेषु कालेषु स एकः परमेश्वरः**। सकलदेशकालगतसृष्ट्यादिविषये स एक एव परमेश्वरः। न तु देशविशेषे कालविशेष एव ततोऽन्यः कश्चिदित्यर्थः **।।१९।।**

अथ भगवति भक्त्यतिशयार्थं तस्य कर्मफलदातृत्वसमर्थनार्थमधिकरणं **ओं फलमत उपपत्तेः**। अतः परमेश्वरात्फलं भवति। न तु कर्मण एव। तस्य चेतनत्वेन तद्दातृत्वमुपपद्यते । कर्मणस्त्वचेतनत्वान्नोपपद्यते। न केवलं चेतनत्वयुक्त्या किन्तु तथोक्तेरपीत्याह **ओं श्रुतत्वाच्च**। ''विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं'' (बृ.उ.५-९-२७)इति। दातुर्यजमानस्य रातिः फलदातृकर्मस्वरूपमात्रमीश्वरादुपपद्यते। उत्पन्नं च कर्म स्वयमेव फलं ददातीति जैमिनिमतावष्टम्भेन पूर्वपक्षसूत्रं **ओं धर्मं जैमिनिरत एव।** यतः फलं तं धर्मं अतः परमेश्वराद्भवतीति जैमिनिर्मन्यते। ''एष ह्येव साधुकर्म कारयति'' (कौ.उ.३-८)इति श्रुतेः। धर्मशब्दोऽधर्मस्याप्युपलक्षकः। सिद्धान्तमाह **ओं पूर्वं तु बादरयाणो हेतुव्यपदेशात्** । फलदाने पूर्वं फलमत इति पूर्वसूत्रोक्तं ब्रह्मैव कर्तृ कर्म तु करणमेव। तस्य चेतनस्य अचेतनत्वेन वैपरीत्यस्यासम्भवात् । ''पुण्येन पुण्यं लोकं नयति पापेन पापं नयति'' (प्र.उ.३-७)उभयतः कर्तृत्वकरणत्वरूपहेतुव्यपदेशात् इति भगवान्बादरायणो मन्यते। जैमिनिस्तु सामान्यतः कर्मणः करणत्वमभ्युपगतम् । तच्च सिद्धान्तेऽपि संमतमेवेति न मतयोः परस्परविरोधः। एतत्तात्पर्यमाह **सर्वेदेशेषु** इत्यादिना। सर्वं ददतीति ते सर्वदाः यज्ञेषु सर्वस्वदातारो ये ईशाः। यज्ञपतयः एताः असदन् सुकृतस्य लोके ताविष्णो पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनित्यं'' इत्यत्र यज्ञपतित्वेन यजमानस्योक्तेः यजमानाः तेषां कलाः कलयन्ति गमयन्ति स्वर्गलोकान्प्रति ते कालाः कर्माणि इत्यर्थः। कलगताविति धातोः। अथ वा कल ज्ञाने कलयन्ति ज्ञापयन्ति ते कालाः कर्माणि ''कर्मणा ज्ञानमातनोति'' इति श्रुतेः। त्रैवर्गिकाणां स्वर्गादिसाधनेषु मुमुक्षुणां च ज्ञानसाधनेषु कर्मसु स एको विष्णु परमेश्वर

स्वतन्त्र कर्ता कर्म तु तत्करणमिति भावः । अतस्तस्योक्तमहामहिमोपेतत्वात् कर्तव्या तस्मिन् भगवति भक्तिरिति सिद्धम्।

।। इति नारायणकृतावणुभाष्यप्रपंचने द्वितीयोंघ्रिः पर्यगमत्तृतीयाध्यासंगतः
इति तृतीयाध्यास्य द्वितीयः पादः ।।

**मळगी** – यः **सर्वावस्थाप्रेरकः** जाग्रत्स्वप्नसुषुप्त्यवस्थानां प्रेरकः। **सर्वरूपेषु सर्वदेशेषु कालेषु** सर्वदेशकालगतरूपेषु **अभेदवान्** भेदरहितः ।।२।। **स एकः** स नारायण एव। **परमेश्वरः** उत्तमस्वामीति भक्तस्तद्भक्त्युद्रिक्तो भवेदिति **च** शब्देनासूचि । तद्भक्त्या किं भवतीत्यत आह **तद्भक्ति** इति। **तद्भक्तितारतम्येन** तस्मिन् भगवति भक्तितारतम्येन **तारतम्यं** जीवानामानन्दादिस्वरूपतारतम्यं **विमुक्तिगं** मोक्षस्थितं भवति ।।३।।

।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां तृतीयाध्यायस्य द्वितीयः पादः ।।

**नारायणपण्डित–** सन्ध्ये सृष्टिराह हीत्यादेस्तात्पर्यं सर्वदेशेषु कालेषु सर्वास्थाप्रेरकः सः परमेश्वरः एक एवेति। न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हीत्यादेस्तात्पर्यम् । **अधिकरणानि २० सूत्राणि ४२**

।। इति इतिश्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां तृतीयाध्यायस्य द्वितीयः पादः ।।

**गूढकर्तृक** – द्वितीयपादार्थं संक्षेप्याहाणुभाष्यकारः। **सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान् । सर्वदेशेषु कालेषु स एकः परमेश्वरः। तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम्** इति। संध्ये सृष्टिरित्यादेस्तात्पर्यं सर्वदेशेषु कालेषु सर्वावस्थाप्रेरकः स परमेश्वर एक एवेति। न स्थानतोऽपीत्यादेस्तात्पर्यं सर्वदेशेषु कालेषु गतेषु सर्वरूपेषु अभेदवानिति। वृद्धिह्रासमित्यादेस्तात्पर्यं तद्भक्तितारतम्येन तारतम्यं विमुक्तिगं भवतीति।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां तृतीयाध्यायस्य द्वितीयः पादः ।।

**अणुभाष्यम्**

**सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः(सुरादिकैः)।**
**यथाक्रमं बहुगणैर्ब्रह्मणा त्वखिलैर्गुणैः ।।४।।**

**उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम्(क्रमम्) ।**
**ज्ञेयो विष्णुर्विशेषश्च ज्ञाने स्यादुत्तरोत्तरम् ।।५।।**

**सत्यनाथीया–** आनन्दादयः प्रधानस्येति नयार्थः **सर्ववेदैश्च** इति। उक्तरीत्या सच्चिदानन्द आत्मेति चतुर्गुणैर्मानुषैरप्यधिकारिभिरुपास्यो विष्णुरिति। इतरे त्वर्थसामान्यादित्यादेरर्थः **सुरेश्वरैः** इति। मानुष्यादिभिर्यथाक्रमं तारतम्यप्रकारमनतिक्रम्य । बहुगुणैः ब्रह्मणा तु विशेषेण विष्णुरुपास्य इति सर्ववेदान्तप्रत्ययरित्यादेरर्थः। सर्वैरधिकारिभिर्यथाबलं स्वशक्तिमनतिक्रम्य सर्वैर्वेदैश्च तदुक्त–रीत्या विष्णुर्ज्ञेय इति प्रज्ञान्तरपृथक्त्ववद्दृष्टिरित्यादेस्तात्पर्यार्थः। अग्न्यादिदेवानामन्येषां चोत्तरोत्तरं यथा यथा तारतम्यानुसारेण । ज्ञाने अपरोक्षे तु विशेषतारतम्यमस्त्येवेत्यर्थः।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां तृतीयाध्यायास्य तृतीयः पादः ।।**

**तत्वमञ्जरी –** एवमाद्यसूत्रस्थाथपदोक्ताधिकारिविशेषणवैराग्यभक्ती निरूप्य इदानीं जिज्ञासा–शब्दोक्तोपासनानिरूपणार्थोऽयं पादः । तदर्थोक्तिपरतया अग्रेतनं "उपास्यो विष्णु" इति पदद्वयं आदावाकृष्य योज्यम् । इत्युच्यत इति शेषः। विष्णुः जिज्ञासापरपर्यायश्रवणमनन–ध्यानरूपोपासनाविषयः कार्य इत्युच्यते। तद्विषया सा कार्येत्यत्र पादे निरूप्यत इत्यर्थः। व्यक्तं च जिज्ञासोपासनयोरेकार्थत्वं अनुभाष्ये "सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी। ध्यानरूपा परा च" इति। उक्तं च टीकायां "उपासना नाम ब्रह्मजिज्ञासा" इति।

तत्राद्यनयार्थः सर्ववेदविषयश्रवणमनने कार्ये इत्येवं रूपम् । तस्य मन्दमध्योत्तमाख्य–सर्वाधिकारिकत्वस्फोरणायान्ते विवक्षुः ध्यानरूपोपासनाप्रकारोक्तिपरनानानयार्थान् विक्षिप्योक्तान् श्रोतृबुद्धिसौकर्याय सोपानारोहणन्यायेन अधिकारिक्रममनुसृत्य संक्षिप्याह –**सच्चित्** इत्यादिना।

तत्र सर्वमुमुक्षूपास्येशगुणानां संख्यानिर्देशाभ्यां क्लृप्तौ नियामकाभावेन अनिर्णयान्न कस्याप्युपासनमित्युपासनासामान्याक्षेपनिरासाय सर्वमुमुक्षुसाधारणगुणोपासनां वक्तुं पञ्चाधिकरणम् । **आनन्दादयः प्राधनास्य** इति। तदर्थमाह – **सच्चिदानन्द आत्मेति मानुषैश्च सुरेश्वरैः। यथाक्रमं बहुगुणै** इति। सर्वैरुपास्यो विष्णुरित्यत्राप्यन्वेति। सुरेश्वरैश्चेति चान्वेति। उपासनाशब्दोऽत्र ध्यानमात्रपरो न पूर्वत्रेव त्रितयपरः। आत्मशब्दश्च लोके शरीरप्रति–सम्बन्धिवाचित्वात् इहे शरीरस्थानीयसर्वचिदचित्प्रतिसम्बन्धिवाची सन् स्वामिपरः। यद्वा "आदानार्थत्वतश्चायमात्मशब्दः पतिं वदेत्" (४–१–१६)इति चतुर्थानुभाष्योक्त्या भृत्यानादत्त इति स्वामिपरः। निर्दोषः ज्ञानमानन्द स्वामीत्येवं प्रकारेण बहुगुणैरनेकगुणैः नत्वकैकगुणेन मनुष्यप्रभृतिब्रह्मान्तैः सर्वैरपि मुमुक्षुभिरुपास्यो विष्णुरित्यर्थः। कुतः ? **यथाक्रमम्** इति। स्वप्राप्यफलमनतिक्रम्येत्यर्थः। निर्दोषज्ञानानन्दानुभवरूपमोक्षस्य सर्वाधिकारिप्राप्यत्वात् फलसाम्येनोपासनायाः कार्यत्वात् । "तं यथा यथोपासते" इत्यादेः आत्मत्वोपासनस्य च प्रीतिहेतुत्वात् ।

सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता।
सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता ।। इत्यादिस्मृतेरिति भावः ।।५।।

यत्तु "तस्य प्रियमेव शिरः" (तै.उ.२-५)इत्यादिश्रुत्युक्तस्य प्रियशिरस्त्वादेरपि सर्वापेक्षितत्वात् सर्वोपास्यतेति प्राप्ते नेति वक्तु सूत्रं - **प्रियशिरस्त्वादि** इत्यादि तस्याप्यर्थः - **सच्चिदानन्द आत्मेति** इति । चोऽवधारणे। विष्णुरुपास्य इत्यन्वेति। सच्चिदानन्द आत्मेत्येव मानुषादिभिः ब्रह्मान्यैः उपास्यो विष्णुः न प्रियशिरस्त्वादिसर्वगुणविशिष्टत्वेनापि । कुतः ? यथाक्रमं स्वप्राप्यफलानुसारात् । प्रियशिरस्त्वादेः सर्वाप्राप्यत्वादिति भावः ।।६ ।।

यदपि "उक्षास द्यावापृथिवी बिभर्ति एषो हि सर्वेषु लोकेषु भाति" इति श्रुतभरणप्रकाशयोः सर्वापेक्षितत्वात् सर्वोपास्यता तयोरपीति प्राप्ते नेति वक्तुम् - **सम्भृतिद्युव्याप्त्यपि चात** इति चतुर्दशमधिकरणम्। तदर्थोऽपि सच्चिदानन्द आत्मेतीत्येव मानुषैरुपास्यो विष्णुः न सम्भृतिद्युव्याप्तिमत्त्वेनापि । तयोर्देवमात्रोपास्यत्वादित्युक्त्या सङ्गृहीतः ।।१४।।

तथा दुष्टजननिग्रहस्य सर्वसज्जनापेक्षितत्वात् "तं प्रत्यञ्चमर्चिषा विध्यमर्मन्" इत्याद्युक्तवेधादिगुणानामपि सर्वोपास्यतेति प्राप्ते नेति वक्तुम् वेधाद्यर्थभेदादिति यत्तु षोडशमधिकरणं तदर्थो यत्यादिरूपैरपि मानुषादिभिः सच्चिदानन्द आत्मेत्येवोपास्यो न वेधादिगुणवत्त्वेनेत्यर्थोक्त्यैव सङ्गृहीतः। तत्रोभयत्र हेतुर्यथाक्रममित्येव । तदर्थः पूर्ववत् ।।१६ ।।

यदपि प्रियशिरस्त्वादिवत् "यो वै भूमा" इति श्रुतं निरतिशयत्वापरपर्यायं भूमत्वमपि सर्वप्राप्यं नेति न सर्वोपास्यमिति प्राप्ते सर्वोपस्यमिति प्राप्ते सर्वोपास्यमेवेति वक्तुम् - **भूम्नः क्रतुवज्ज्यायस्त्वम्** इत्यादि सप्तत्रिंशमधिकरणम् । तदर्थोऽपि बहुगुणैरित्युक्त्या संगृहीतः। ‍बहुः पूर्णतायां‍ इति छान्दोग्यभाष्योक्तेः बहुशब्दः पूर्णत्ववाची। तथा च सच्चिदानन्द आत्मेत्येवं प्रकारेण बहुगुणैः मानुषादिसुरेश्वरान्तैरुपास्यो विष्णुरित्यर्थः ।।३७ ।।

यच्च पूर्णत्वरूपं भूमत्वं ज्ञानानन्दादिगुणेषु मानुषैः सुरेश्वरैश्चैकप्रकारेणैव उपास्यमिति प्राप्ते मासपक्षादिना आनन्त्यादिवत् पूर्णत्वमपि मानुषादीनां तारतम्येनैवोपास्यमिति वक्तुं **नानाशब्दादिभेदात्** इति सूत्रं तदर्थोऽपि यथाक्रमं बहुगुणैः स्वयोग्यतानुरोधेन पूर्णत्वेन ज्ञातगुणैः मानुषादिभिरुपास्य इत्युक्त्या सङ्गृहीतो ध्येयः ।।३८ ।।

यदपि दुरितनिवृत्त्यर्थकतया काम्यं नृसिंहाद्युपासनं मोक्षानुपयोगित्वात् मुमुक्षुणा न कार्यमिति प्राप्ते मुमुक्षुणापि तादृशफलप्राप्तीच्छुना तादृशोपासनं परम्परया मोक्षोपयोगित्वात् कार्यमेवेति वक्तुं - **विकल्पो विशिष्टफलत्वात्** इति सूत्रं तदर्थोऽपि यथाक्रमं दुरितनिवृत्त्यादिरूपस्वप्राप्यफलानुरोधेन मानुषादिभिः नृसिंहादिरूपी विष्णुरुपास्य इत्युक्त्या सङ्गृहीतः ।।३९ ।।

एतेनैव अर्थादिसाधनतया काम्यभगवद्रूपविशेषाद्युपासनमपि सर्वेषामवश्यकमिति प्राप्ते मुमुक्षूणां नावश्यकं अन्येषामावश्यकम् । मुमुक्षणामपि कामप्रहाणेन भगवत्प्रीत्यर्थत्वेनावश्यकमित्यादि वक्तुं प्राप्तस्य **काम्यास्तु यथाकामं समुच्चीयेरन्** इत्यादि सूत्रस्यार्थोऽपि सङ्गृहीतः। यथाक्रमं स्वस्वप्राप्यकाम्यफलानुरोधेन बहुगुणैः विष्णुरुपास्यो मानुषादिभिरित्यर्थकथनात् ।।४०।।

यत्तु "तमवैकं जानथ" इत्यादिश्रुतेः विष्णुरेक एवोपास्यो नान्येऽपि देवा इति प्राप्ते, अन्येऽपि भगवत्परिवारत्वेनोपास्या न प्रधानत्वेनेति वक्तुं - **अङ्गावबद्धास्तु** इत्यपि षट्त्रिंशमधिकरणं तदर्थोऽप्युक्तो **मानुषैश्च** इत्यादिना।

सुरेश्वरैरिति सहयोगे तृतीया । सहयुक्तेऽप्रधाने इत्यत्र युक्त इत्युक्त्या सहपदाप्रयोगेऽपि तदर्थसत्त्वेऽपि तृतीयायाः स्मरणात् । तथा च सुरेश्वरैः ब्रह्मादिभिरप्रधानैः परिवारभूतैश्च सह विष्णुर्मानुषादिभिरुपास्यो न केवल इत्यर्थः ।।३६।।

यत्तूक्तं चतुर्गुणैरेव विष्णोः सर्वोपास्यत्वनिर्णयात् देवैरपि तावद्भिरेवोपास्यो नाधिकगुणैरिति प्राप्ते स्वस्वप्राप्यफलानुरोधेन चतुर्भ्योऽधिकैरपि गुणैरुपास्यो विष्णुरिति वक्तुं - **इतरे त्वर्थसामन्यात्** इति सप्तममधिकरणम् । तदर्थमाह - **सुरेश्वरैर्यथाक्रमं बहुगुणैः** इति। विष्णुरुपास्य इत्यन्वेति। सच्चिदानन्द आत्मेतीति वर्तते। इतिशब्दः प्रभृत्यर्थः। सुरैश्वरैः सच्चिदानन्दात्मप्रभृतिभिः बहुगुणैरुपास्यो विष्णुरित्यर्थः। तत्र हेतुर्यथाक्रममिति। स्वस्वप्राप्यफलानुरोधेनेत्यर्थः। मनुष्येभ्योऽतिशायितफलस्य प्राप्यत्वात् ततोऽधिकगुणोपासनायाः कार्यत्वात् । फलानुसारित्वादुपासनायाः। मनुष्येभ्योऽतिशयितफलवत्त्वे हेतुसूचनाय सुरैरित्यनुक्त्वा सुरेश्वरैरित्युक्तम्। सुराश्च ते ईश्वराश्च लोकस्येति विग्रहः। किं सर्वैर्देवैः साम्येनोपास्यो नेत्याह - **यथाक्रमम्** इति। अनादिस्वस्वयोग्यताक्रमानुरोधेनेत्यर्थः ।।७।।

एतेन उपासनायोग्यतानियमे प्रमाणाभावात् उपासना न योग्यतानुसारिणीति प्राप्ते मुक्तावानन्दतारतम्यस्य अन्यथानुपपत्तिसिद्धत्वात् योग्यतानियमस्य तदनुसारिण्येवोपासनेति वक्तुं प्राप्तस्य **यावदधिकारमवस्थितिराधिकारिकाणाम्** इति विंशाधिकरणस्यार्थः, तथानागन्तुकोपासनाया आगन्तुकयोग्यताधीनत्वायोगात् अर्जुनादीन्द्रांशानां उत्पत्त्यादिमतां स्वरूपभूतयोग्यताया अनादित्वायोगात् न योग्यतानुसारिण्युपासनेति प्राप्ते अंशांशिनोरभेदेन योग्यताप्यनादिरेवेति वक्तुं प्राप्तस्य **एक आत्मनः शरीरे भावात्** इति पञ्चत्रिंशाधिकरणस्यार्थश्च सङ्गृहीतो भवति ।।२०-३५।।

तथा सुरेश्वरैरित्यादिनैव "अङ्गेषु यथाश्रयभावः" "न वा तत्सहभावश्रुतेः" इत्येतत्पादीयोपान्त्यान्तिमनययोरप्यर्थः सङ्गृहीतो ध्येयः। तत्राद्यनये विष्णौ सूर्याद्याश्रयचक्षुष्कत्वादि गुणानां

चतुर्गुणमात्राधिकारत्वेन निर्णीतमनुष्याधिकारित्वायोगात् देवाधिकारिकतयानुपास्यतेति प्राप्ते "शीर्षो द्यौः" इत्यादिवाक्यसन्निधावश्रवणेऽपि क्वचित् श्रुतिषु श्रवणात् "शीर्षो द्यौः" इत्याद्युक्त्य-न्यथानुपपत्त्या च देवाधिकारिकत्वसिद्धेः देवोपास्यतेत्युक्तम् । तदर्थद्वयस्यापि सुरैश्च यथाक्रमं स्वस्वप्राप्यतदङ्गाश्रितत्वरूपफलक्रमानुरोधेन बहुगुणैः सूर्यादितत्तद्देवाश्रितचक्षुराद्यङ्गकत्वादिरूपानेकगुणैः विष्णुरुपास्य इत्युक्त्या प्राप्तत्वात् सुरेश्वरैरित्युक्तम् । तत्र ब्रह्मणो विशेषमाह - **ब्रह्मणा त्वखिलैर्गुणैः । उपास्यः सर्ववेदैश्च** इति। विष्णुरित्यन्वेति। यथाक्रममिति वर्तते। सम्पूर्णस्व-प्राप्यफलानुरोधेनेत्यर्थः। सम्पूर्णफलस्य ब्रह्मप्राप्यत्वात् तेन सच्चिदानन्दात्मप्रभृतिभिरशेषैः गुणैः नानावेदोक्तैः उपास्यो विष्णुरित्यर्थः ।।४१-४२।।

एतेन स्वगुणोपसंहारेणेश्वरध्यानस्य कर्तुमशक्यत्वात् अकर्तव्यत्वे प्राप्ते विध्यादिबलात् कर्तव्यत्वं वक्तुं प्राप्तस्य **उपसंहारोऽर्थाभेदात्** इत्यादि द्वितीयाधिकरणस्य, तथा कतिपयगुणोपासनयैव फलसिद्धेः नाखिलगुणैरुपास्यो विष्णुरिति प्राप्ते अल्पगुणोपासनेन अप्राप्तफलविशेषभावात् सर्वगुणैरुपासना कार्यैवेति वक्तुं प्राप्तस्य **सर्वाभेदादन्यत्रेऽमे** इति चतुर्थाधिकरणस्य चार्थ उक्तो भवति। अत्र ब्रह्मणेति ब्रह्मण्या अप्युपलक्षणम् । गुणैरित्युक्त्या क्रियासु विशेषः सूचितः ।। २-४ ।।

अत्राधिकारिभेदेन अल्पगुणबहुगुणाखिलगुणैरुपास्यत्वोक्त्या गुणोपसंहारानुपसंहारयोः अधिकारिभेदेन कार्यत्वोक्तिपरस्य **प्राप्तेश्च समञ्जसम्** इति नयस्यार्थः, तथोपसंहारयोः प्रमितत्वाद्युक्त्या अवश्यकर्तव्यत्वोक्तिपराणां **आध्यानाय प्रयोजनाभावात्, आत्मगृहीति-रितरवदुत्तरात् , अन्वयादिति चेत्स्यादवधारणात्, न वा विशेषात्, पुरुष विद्यायामपि चेतरेषामनाम्नानात्** इति पञ्चानां नयानां अर्थश्च सङ्गृहीतो भवति।।३-८-९-१०-१३-१५।।

तथा तत्र गुणैरुपस्यत्वोक्त्या विष्णुगुणानामप्यलौकिकत्वस्य परमत इत्यत्रोक्तत्वात् तेषां च बुद्धावनारोहात् न ध्येयत्वमिति प्राप्ते, उपदेशेन तज्ज्ञानसम्भवात् अलौकिकमोक्षाख्यफलानुसारित्वात् अलौकिकैरेव गुणैरुपास्य इति वक्तुं प्राप्तस्य **कार्याख्यानादपूर्वं** इत्यस्यार्थः, तथा सर्वत्र यथाक्रमं स्वस्वप्राप्यफलक्रमानुरोधेन उपास्य इत्युक्त्यैव उपासनायाः स्वानुसारिफलदत्वसमर्थनपरस्य **समान एवं चाभेदात्** इति नयस्यार्थोऽप्युक्तः।

तथा मुक्ताविति वा संसार इति वा कालविशेषमनुपादाय उपास्यो विष्णुरिति सामान्योक्त्या सदाप्युपास्यत्वलाभात् **हानौ तूपायनशब्दशेषत्वात्** इति मुक्तावप्युपासनोक्तिपरनयार्थः, गुणैरुपास्य इत्युक्त्या कर्मभिरुपासनं तु मुक्तिदशायां न नियतमिति सूचनाय मुक्तौ कर्मोपास्त्यनियमोक्तिपरस्य **छन्दत उभयाविरोधात्** इत्यस्यार्थश्च सङ्गृहीतो भवति।।११-१२-१७-१८।।

तथा **सर्वैरधिकारिभिरुपास्य** इति **सर्वपदोक्त्यैव** उपासना जन्यज्ञानद्वारा सर्वेषां मुक्तिनैयत्यसूचनात् **अनियमः सर्वेषां** इति नयार्थोऽपि सङ्गृहीतः ।।१९ ।।

तथा अधममध्यमोत्तमाधिकारिणां ब्रह्मान्तत्वकथनेनाधिकारिणां मुख्यप्राणावधित्वोक्तिपरस्य **इयदामननात्** इति नयस्यार्थं उपास्यो विष्णुरित्येकवचनान्तेन निर्दिश्य, ब्रह्मादिसर्वोपास्यत्वोक्त्या मुख्यप्राणादनन्तरं विष्णोरेकस्यैवोत्तमत्वोक्तिपरस्य **व्यतिहारो विशिंषन्ति हीतरवत् , सैव हि सत्यादयः** इति नयद्वयस्यार्थः सङ्गृहीतः ।।२१–२२–२३ ।।

तथा तत्राधिकारिवर्गे उपास्येश्वरकोटौ वा श्रीतत्वनिर्देशभावेनाबद्धत्वस्य ईश्वरतन्त्रत्वस्य च सूचनाय तस्य निरुपाधिकभक्त्यतिशयेनैव विष्णूपासनं न विधिबद्धत्वादिनेति वक्तुं प्राप्तस्य **कामादितरत्र** इति नयस्यार्थोऽपि सूचितः ।।२४ ।।

यत्तु ध्यानरूपोपासनोपयोगितया सर्वैरपि यथाशक्ति सर्ववेदविषयश्रवणमननाभ्यां ब्रह्मणो ज्ञेयत्वं वक्तुं प्राप्तम् **सर्ववेदान्तप्रत्ययं** इत्यादिसूत्रपञ्चकं तदर्थं भाषते – **सर्वैरपि यथाबलम् । ज्ञेयो विष्णुः** इति ।

सर्वैरपि मानुषादिभिः अशेषैरधिकारिभिः ज्ञेयः । न केवलमधिकैर्गुणैरिति चार्थः । यथायोग्यगुणैः नोपास्यः किन्तु व्यवस्थयैव मानुषादिभिः स्वस्वयोग्यगुणैरेवोपास्यो विष्णुः न तथा ज्ञाने विशेषः ।

अखिलैर्गुणैः सर्वैर्वेदैश्च यथाबलं विष्णुर्ज्ञेय इति सर्ववेदान्तनयस्य वक्ष्यमाणध्यान-रूपोपासनोपयोगितया उपोद्घातत्वेन सूत्रकृतादौ निवेशितत्वेऽपि उपासनोपयोगस्फोरणाय उपासनायामेवाधिकारिव्यवस्था नत्विह सास्तीति द्योतनाय चोपासनोक्त्यनन्तरमत्र तदर्थभाषणं कृतम् । अन्यथा ज्ञानवदुपासनायामप्यविशेषेण सर्वेऽप्यधिकारिण इति धीः स्यादिति ।।१।।

अत्र सर्वैरपीति पदमावर्त्यम् । ज्ञेय इत्यपरोक्षज्ञानपरं बोध्यम् । तथा च सर्वैरपि श्रवणमनननिदिध्यासन प्रीतिपूर्वकगुरूपदेशहरिगुरुभक्तिशमदमादिभिरपि यथाबलं ज्ञेयोऽपरोक्षीकर्तव्य इत्यर्थः । तथा च सति फलभेदोक्त्या श्रवणादित्रितयकर्तव्यत्वोक्तिपरस्य तन्निर्धारणार्थनियम इति नयस्य, भक्त्यादिकं अपि अङ्गमित्युक्तिपरस्य अनुबन्धादिभ्य इति नयस्य, भक्तेरेव स्वातन्त्र्येण ज्ञानहेतुत्वं पराकृत्य प्रधानाङ्गत्वं वक्तुं प्राप्तस्य परेण च शब्दस्य ताद्विध्यं इति नयस्य, ज्ञेय इत्युक्त्या ज्ञानस्य पुमर्थहेतुत्वसूचनात् **विद्यैव तु निर्धारणात्, श्रुत्यादिबलीयस्त्वाच्च न बाधः** इति नयद्वयस्य चार्थः सङ्गृहीतो ध्येयः ।।२५–३० ।।३१ ।।३४ ।।

यत्तु यथाबलं विष्णुर्ज्ञेय इत्युक्तं ज्ञाने तारतम्यमयुक्तम् । "दृष्ट्वैव तं मुच्यते नापरेण" इत्यादौ सर्वेषामविशेषितज्ञानेनैव मोक्षश्रवणादित्यतः असत्येवोपासनातारतम्यात्तत्फले ज्ञानेऽपि तारतम्यमिति वक्तुं प्राप्तं **प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम्** इति तदर्थमाह – **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्** इति ।।

उपासनातारतम्यवत् ईशापरोक्षज्ञाने विशेषस्तु तारतम्यं उत्तरोत्तरं मानुषानारभ्य ब्रह्मान्तं स्यात् तेन विना मुक्तौ तारतम्यानुपपत्तेः। ज्ञानतारतम्यस्य उपासनातारतम्याधीनत्वात् । अत एव पूर्वमुपासना तारतम्यं भाषितमिति भावः ।।३२।।

यत्तु भगद्रूपाणामविशेषात् यत्किञ्चिद्रूपज्ञानमपि मुक्ति हेतुः न तु स्वबिम्बभूतरूपविशेषज्ञानमेवेति प्राप्ते, रूपाणां साम्येऽपि रूपविशेषज्ञानमेव मुक्तिहेतुः न तु ज्ञानमात्रमिति वक्तुं प्राप्तं न **सामान्यादप्युपलब्धेः मृत्युवन्न हि लोकापत्तिः** इति सूत्रं तदर्थोऽपि ज्ञाने भगवदपरोक्षज्ञाने विशेषस्तु स्वबिम्बविषयकत्वरूपविशेषस्तु स्यान्मुक्तस्य इत्यर्थकथनेन सङ्गृहीतो ध्येयः ।।३३ ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्यां तृतीयाध्यायस्य तृतीयः पादः ।।**

**आनन्दमाला –** भक्तानां भगवदुपासना अस्मिन् पाद उच्यते। तस्या एव तद्दर्शनद्वारत्वात् । सा चोपासकानामधिकारभेदाद् भेदेनोच्यते। " आनन्दादय प्रधानस्य" (३-३-१२) "आत्म-शब्दाच्च" (३-३-१६) इत्यादीन्यल्पगुणोपसंहारसूत्राणि व्याख्याति - सच्चिदानन्द आत्मेति मानुषैस्तु इति। यत्तन्निर्दुःखानन्दानुभवलक्षणं साक्षान्मोक्षाख्यं धर्मादिषु प्रधानफलं तावन्मात्रलब्धियोग्यैरल्पाधिकारिभिर्मानुषजातिभिस्तदर्थमानन्दश्चित् सदात्मेत्येभिश्चतुर्गुणैरुपास्यो भगवान् विष्णुर्विधीयते। तैरनुपास्य तत्फलासिद्धेः। गुणैरुपासना गुणैः सह भगवद्ध्यानम् । तुशब्दात् पूर्णत्वं नाम वैलक्षण्यं गुणानां स्मर्तव्यम् । अथ चतुर्गुणोपास्तेरशक्यत्वे आनन्दादीनामात्मगुण एकीकारेणापि कथञ्चिदुपास्तिः समस्ति। तथा च योजना - सच्चिदानन्दो विष्णुरात्मेत्युपास्य इति। निर्दोषपरिपूर्णज्ञानानन्द स्वामी विष्णुरिति ध्यानं प्रवचनं च कर्तव्यमित्यभिप्रायः ।।

"न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्" (३-३-८) "सम्भृतिद्युव्याप्त्यपि चातः" (३-३-२४) "समान एवं चाभेदात्" (३-३-२०) "न वा विशेषात्" (३-३-२२) इत्यादीनि क्रमाद् बहूपसंहारसूत्राणि व्याख्याति - **सुरेश्वरैः। यथाक्रमं बहुगुणै** इति। अयमर्थः - ये पुनस्तत्फलेऽप्यानन्दोद्रेकपूर्वकान् विशेषानिच्छन्ति। न तु फलमात्रम्, योग्यतायामाधिक्य-विशेषात्, तैः सुरेश्वरैस्तदर्थं स्वस्वयोग्यतातारतम्यक्रमानुसारेण सच्चिदादिचतुर्गुणेषु प्रियशिरस्त्वादि-विशेषगुणानां संयोगाच्चतुःसङ्ख्यात्ययेन बहुभिः, बहुप्रकरणेषु बहुशाखासु वा पठितैर्गुणैरुपास्यो भगवान् । न केवलं चतुर्भिरेव। सुरा ईश्वरा येषामृषिगन्धर्वाणां ते सुरेश्वरा उच्यन्ते।

पुनश्च स्वरूपसुखादिष्वतिव्याप्तत्वादिमहाविशेषलिप्सुभिः सुरैरेव लोकेश्वरैर्वह्निवरुणसूर्य-सोमादिभिः यथाक्रमं प्रियशिरस्त्वादिसहितेषु भृतिव्याप्त्यादिगुणानां संयोगात् तेभ्योऽपि बहुभिर्महाशाखोदितमहागुणैरुपास्यः। न केवलं प्रियशिरस्त्वादिसहितैरेव। ऋष्यादिभ्योऽप्येषा-माधिक्यात् ।

अथापि पुनर्मौक्तिकेषु स्वगुणेष्वतिसान्द्रत्वादिमहिष्ठविशेषलब्धियोग्यैः सुराणामीश्वरैरिन्द्ररुद्राद्यैः यथाक्रमं बहुगुणैः सर्ववेदोपवेदेषु आदित अन्तादुदितैर्द्रव्यगुणक्रियायां सामान्यरूपैरनन्तरूपत्व-सर्वज्ञत्वसर्वकर्तृत्वादिभिरपि महागुणैरुपास्यः । न तु सहितैरेव।

अथ यथाक्रमं बहुगुणैः इत्येतद् दशगुणितैः शतगुणितैः सहस्रगुणितैरित्यादिरूपेण गुणानां परिमाणविषयेऽपि द्रष्टव्यम् । न तु सङ्ख्यामात्रविषये। तथैवोपासकविषयेप्येतद्विशेषणमिष्यते। तदा यथात्मजातिक्रमं बहवो हि भक्त्यादयः शमादयो वैराग्यादयश्च स्वगुणा येषामृष्यादीनामिति बहुव्रीहिः ।।

''अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्'' (३-३-५७) ''मन्त्रादिवद् वाऽविरोधः'' (३-३-५८) ''अङ्गेषु यथाश्रयभावः'' (३-३-६३) इत्याद्यङ्गदेवोपास्ति सूत्राण्यप्यनेनैव वाक्येन व्याख्यातानि लक्ष्यन्ते। तथा हि अप्रधानेऽपि गुणशब्दप्रवृत्तेःबहुगुणा इति बहवः परिवारजना अप्युच्यन्ते। यथात्माधिक्यक्रमं तैरपि सहैव भगवान् भक्तेरुपास्यः। एकशब्दस्य प्रधानेऽपि प्रसिद्धेरनेकपर्यायस्य बहुशब्दस्याप्यप्रधानवाचकत्वं सिद्ध्यति। तस्माद्बहुशब्देनाप्यप्रधानभूता अङ्गदेवा गृह्यन्ते। तेषां गुणैरपि यथाविधिक्रमं स एवोपास्य इति वा ।।

''उपसंहारो अर्थाभेदाद् विधिशेषवत् समाने च'' (३-३-६) ''आध्यानाय प्रयोजनाभावात्'' (३-३-१५) ''सर्वाभेदादन्यत्रेमे'' (३-३-११) ''सम्बन्धादेवमन्यत्रापि'' (३-३-२१) इत्यादीनि सर्वोपसंहारसूत्राणि व्याख्याति - **ब्रह्मणा त्वखिलैर्गुणैः। उपास्यः** इति। य एते सुरेश्वरैरुपास्यमाना आनन्दाद्या प्रियशिरस्त्वाद्यैः सम्भूत्याद्यैः सर्वरूपत्वाद्यैश्च सहिताः सर्वकर्तृत्वान्ताः पूर्वोक्ताः गुणाः तेष्वेव प्रायशः सर्वशब्दवाच्येषु पुनस्तदेतत्कर्तृत्वादीनां क्रियाविशेषाणामपि गुणानां संयोगादखिलैः सम्पूर्णसङ्ख्याकैः सर्ववेदेष्वाद्यन्तत आक्षरादा स्वरादा घोषाच्चापुनरुक्त्योदितैर्निर्दोषपरिपूर्णैर्गुणैरुपास्यः परमपुरुषो विष्णुः सर्वाधिकार्याधिपतिना चतुर्मुखब्रह्मणा, नैवान्यैः सामान्याधिकारिभिरेवमुपास्यः। ''सम्पूर्णोपासनाद् ब्रह्मा सम्पूर्णानन्दभाग् भवेत्। इतरे तु यथायोगम्'' (पाद्म)इति वचनात् ।

क्रियादीनां विशेषसामान्यविभागश्चानुव्याख्यायां व्याख्यातः -

> ब्रह्मा सर्वैर्गुणैश्चैव क्रियासमान्यतश्च गीः।
> गुणसामान्यतो रुद्रो द्रव्यसामान्यतः परे।। (३-३-१७१) इति।

तदर्थश्च नयचन्द्रिकायां गुरुभिरेव व्यक्तं विवृतः -

ब्रह्मेत्यादेरयमर्थः - ब्रह्मा तु सर्ववेदोदितैः सर्वविशेषसहितैर्गुणक्रियांशाद्यात्मकैः सर्वैर्गुणैः सहितत्वेन विष्णुमुपासीत् । ब्रह्माणि तु तत्र क्रियाणां सामान्यत उपास्तिं कुर्यात् । अन्येषां विशेषत

एव। यथा घटस्रष्टा पटस्रष्टेत्यादिविशेषान् विना सर्वस्रष्टेत्यादीनाम् । रुद्रो गुणानां सामान्यत उपास्तिं कुर्यात् । यथा घटज्ञः पटज्ञ इत्यादिविशेषात् । विनैव सर्वज्ञ इत्यादि। किमुत क्रियाणाम् ? द्रव्याणां तु विशेषत एव। क्रियादीनामपि गुणान्तर्भूतत्वे सत्यपि ज्ञानादीनां गुणशब्देन पृथगुक्तिर्ब्राह्मणपरिव्राजकन्यायानुसारात्। परे पार्वत्यादयो द्रव्याणां भगवद्रूपाणामपि सामान्यत उपास्तिं कुर्युः। किमुत गुणक्रियाणाम् इत्यादि।

अत्र तुशब्दाद् ब्रह्मणा दोषाभावैश्चाखिलैरुपास्यः। तदन्यैर्यथाक्रमं सामान्यत एव गुणोक्तन्यायवत्। तुशब्दस्त्वधिकारीयत्तां च सूचयति "इयदामननात्" (३-३-३५) इति सूत्रिताम्। अथ यावन्तो अनन्तगुणा ब्रह्मणा गुणिनि हरावुपसंह्रियन्ते तावतस्तावतोऽनन्त-गुणांस्तदनन्तगुणेष्वपि प्रत्येकमुपसंहृत्यैव नित्यमुक्ता अपि प्रकृतिः स्वेच्छयैव स्वपतिं विष्णुमुपास्ते। न केवलं विरिञ्चवद् गुणिन्येवानन्तगुणानुपसंहृत्य । सन्त्येव ह्येकस्मिन्नपि गुणे पुनरप्य-नन्तास्तद्विशेषगुणयुक्ताः। तथा हि ब्रह्मणोपसंह्रियमाणेषु क्रियाविशेषगुणेष्वेको गुणो घठस्रष्टृत्वं हि। तस्मिन्नेव गुणे तत्परमाणुस्रष्टृत्वाद्यास्तद्विशेषगुणाः पुनरनन्ता युज्यन्ते। एकघटपरमाणूनामपि घटादिद्रव्यवदनन्तत्वात्, तदेकपरमाण्ववयवानामपि तत्परमाणुवदनन्तत्वात्, तदेकावयवानामपि तद्वदनन्तत्वमित्यपर्यवसितिः। न च परमाणुर्निरंशः। दशदिक्सम्बन्धान्यथानुपपत्त्या शून्यत्वाभावान्यथानुपपत्त्या कार्यप्रथिमान्यथानुपपत्त्या च परमाणुरपि सांश एवेति सिद्धेः। तस्मादनन्तपदार्थेष्वेकैकस्मिन्नेव वस्तुन्यपर्यवसितविशेषावस्थापकत्वाद्याः तत्तद्विशेषगुणा अपर्यवसिता एव परमेश्वरस्येति निश्चीयन्ते। न च तेषामल्पत्वमेवेति शङ्क्यम् । अणोरणीयस्त्वेऽप्यैश्वर्या-तिरेकेण महतोऽपि महीयस्त्वोपपत्तेः। तथा चोक्तमनुव्याख्याने - "ते चाखिलविलक्षणाः। सर्वे सर्वगुणात्मनः सर्वकर्तार एव च । तथापि सविशेषाश्च"(३-२-१६७.८) इत्यादि। न च देव्या अप्येवमेवमुपासीतेति विधिर्विज्ञेयः। नित्यमुक्तत्वेन तदतीतत्वात् । कादाचित्कमुक्ता अपि कृतकृत्यत्वात् स्वेच्छयैव ह्युपासते, कर्म वा कुर्वन्ति। अत एव ह्यधिकारीयत्तामुक्त्वैव प्रकृतिप्रस्तावः कृतः।।

अथ येषामेवमुपासीतेति विधिर्विज्ञायते बद्धत्वात् , तैस्तदर्थं किं कार्यम् , उपास्यो वा किमेषां स्यादित्यनयोरुत्तरं वितरति। - "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" (३-३-१) "प्रदानवदेव हि तदुक्तम्" (३-३-४४) "लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि" (३-३-४५) "पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत्" (३-३-४६) "तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्" (३-३-४३) इत्यधिकरणानि। **सर्ववेदैश्च सर्वैरपि यथाबलम् । ज्ञेयो विष्णुः** इति। स्वस्वयोग्योपासनार्थं सर्वैरप्यधिकारिभिर्यथाशक्त्यधीतैः सर्ववेदैर्यथाशक्ति विचार्यमाणैः सर्ववेदान्तैश्च विष्णुः सम्यग्ज्ञेयः। चशब्दात् तदनुकूलतर्कैश्च । न ह्यज्ञातस्योपासनं कर्तुं शक्यम् । तच्च

ज्ञानमाचार्योपदेशशक्त्यनुसारेणैव भवति। तथैव स्वोत्साहशक्त्यनुसारेण च । गुरूपदेशस्तु तत्प्रसादबलानुसारेण हि सफलो लक्षितः। समग्रानुग्रहबलानुसारेण गुरुरपि पूर्वप्राप्त उत्तरो वेति निर्णीयते। तत्रोत्तमगुरोरात्मशक्त्यनुसारेण शिष्यग्रहणं शक्यम् । अवरस्य तूत्तमानुज्ञाबलानुसारेणेति विशेषः। शिष्यस्यापि स्वयोग्यताबलानुसारेणैव स्वोत्साहस्तत्त्वज्ञानसंग्रहस्तत्फलं च स्युः। तस्मादाचार्यवर्यतस्तत्परिचर्यापूर्वकं सच्छास्त्रश्रवणादि कृत्वा तत्तदज्ञानसंशयादीन् व्युदस्य परोक्षत एव भगवान् प्रथमतो ज्ञेयः। अपि चैवं सर्ववेदार्थवित्वाद्यथायोग्यं सर्ववेदशब्दितैः सर्वाधिकारिभिर्यथात्मध्यानबलमपरोक्षतोऽपि भगवान् विष्णुर्ज्ञातुं शक्यः स्यात् । एतदेव ह्यपरोक्षज्ञानं मोक्षसाधनमिति निर्धारितम्।।

**यथाबलं ज्ञेयः** इति **सामान्यत** उक्तं ज्ञानविशेषं विस्पष्टं चाह – ''प्रज्ञान्तर पृथक्त्ववद् दृष्टिश्च तदुक्तम्'' (३-३-५२) इत्यधिकरणम्। **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्** इति। मनुष्यादीनामुपासनायां यद्वदुत्तरोत्तरं विशेष उक्तस्तद्वदेव तेषामपरोक्षज्ञानेऽपि तज्जन्ये यथाक्रममुत्तरोत्तरमाधिक्यं नाम विशेष उक्तस्तद्वदेव तेषामपरोक्षज्ञानेऽपि तज्जन्ये यथाक्रममुत्तरोत्तरमाधिक्यं नाम विशेषः स्यात्। तुशब्दात् तत्फलेऽपि मोक्षे तद्वद् विशेषः स्यात् । देशकालविशेषाच्च तेषां ज्ञाने विशेष इष्यते। देहाद् बहिरन्तः सर्वत्र च ब्रह्माण्डे तदावरणे च तद्बहिश्चेति देशतो विशेषः। तज्जन्मनि तन्मन्वन्तरे तत्कल्पे च तत्परे तत्पूर्वपरे ततोऽपि पूर्वस्मिन्नित्यादिकः कालतो विशेषः। उभयतोऽप्युत्तरोत्तरमाधिक्येनैव तेषां ज्ञानं जायत इत्यर्थः।। एवञ्चैतादृशमोक्षसिद्धये यथाशक्त्युपासनं कार्यमिति पादाभिप्रायः।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां तृतीयाध्यायस्य तृतीयः पादः ।।**

**नृसिंहतीर्थ** – उपासनाप्रकारोऽत्राभिधीयते **सच्चिदानन्दात्मा** इति। **सत्** सत्यः **चित्** ज्ञानरूपः **आत्मा** स्वामीति मानुषैः विष्णुरुपास्यः। सुरेश्वरैस्तु सुराश्चते इश्वराश्चेति तथा तैः सुनवकोटितत्वाभिमानिदेवैरित्यर्थः। यथाक्रमं तारतम्यक्रममनतिक्रम्य बहुगुणैः विष्णुरुपास्यः। ब्रह्मणा तु ब्रह्मवाय्वोरेकत्वात्सोऽप्यत्र संगृहीतः। ब्रह्मत्वयोग्यानन्तजीवजातेन त्वित्यर्थः। अखिलैर्गुणैर्विष्णुरुपास्यः। सर्वैरपि यथा बलम् । यथा शक्त्यानुसारेणेति यावत् । सर्ववेदैश्च कर्मकाण्डात्मकब्रह्मकाण्डात्मकानन्तवेदैश्च ज्ञेयः। ज्ञाने विशेषस्तु उत्तरोत्तरं यथा भवति तथा स्यात्।

**।। इति तृतीये अणुभाष्यभावकाशिके तृतीयः पादः।।**

**श्रीनिवासतीर्थीया–** एतत्पादार्थं संक्षिप्य संगृह्णाति **सत्** इति । आनन्दादयः प्रधानस्येत्यधिकरणार्थः **सत्** इति। सर्वैर्वेदैरित्यत्रापि सम्बध्यते। सर्वैर्वेदैरित्युक्त्या सच्चिदानन्द आत्मेति

चतुर्गुणैर्मानुषैरधिकारिभिरुपास्यो विष्णुरित्यर्थः। सत्वं निर्दोषत्वम् । तच्च ज्ञानानन्दादौ च मुक्तौ सर्वेषामपेक्षितं फलमिति सच्चिदानन्दाः तावदुपास्याः। यत्तु आत्मत्वापरपर्यायं स्वामित्वं, तदपि स्वसम्बन्धानुस्मरणस्य भगवत्प्राप्तिहेतुत्वात् उपास्यमित्यवधेयम्। इतरे त्वर्थसामान्यादित्यधिकरणार्थः **सुरेश्वरैः** इति। सुरेश्वरैस्तु यथाक्रमं तारतम्यम् । क्रममनतिक्रम्य विष्णुर्बहुगुणैरुपास्य इत्यर्थः। अत्र सर्वत्रोपपादनादिविशेषो भाष्यादौ द्रष्टव्यः। अस्य संकोचत्वादिति भावः। आध्यानायेत्य-धिकरणतात्पर्यम् **ब्रह्मणा तु** इति। गुणैरित्युपलक्षणम्। रूपादिभिश्चेति ज्ञेयम्। सर्ववेदैरुक्त-प्रकारेणाखिलैः गुणैः रूपैः क्रियादिभिश्च ब्रह्मणा हिरण्यगर्भेण तु विशेषेणोपास्य इत्यर्थः। सर्ववेदान्तप्रत्ययमित्याद्यधिकरणतात्पर्यमाह **सर्वैरपि** इति। सर्वैरधिकारिभिर्यथाबलं स्वशक्ति-मनतिक्रम्य सर्वैवेदैरुक्तरीत्या विष्णुर्ज्ञेय इत्यर्थः। प्रज्ञान्तरपृथक्त्ववदित्यादेस्तात्पर्यम् **विशेषस्तु** इति। उत्तरोत्तरं देवादीनां तारतम्यानसारेण ज्ञाने परोक्षे अपरोक्षे च विशेषेण तारतम्यं स्यादेवेत्यर्थः।।

**।। इत्यणुभाष्यविवरणे तृतीयाध्यायस्य तृतीयः पादः।।**

**छलारी –**

**हरिः ओम्**
**पाण्डुरङ्गमहं वन्दे रुग्मिणीपतिमादरात् ।**
**समपादं नीलवर्णं कटिबद्धकरं हरिम् ।**

भक्तिसाध्यत्वात् भक्त्यनन्तरं ज्ञानात्पूर्वं उपासनास्वरूपं अस्मिन् पादे निरूप्यते।

**ओं सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ओं**

सर्ववेदान्तप्रत्ययं सर्ववेदानामन्तेन निर्णयेन उत्पाद्यः प्रत्ययः ज्ञानं यस्य तत् तथा सर्वैः यथाशक्ति सर्वैः वेदैः श्रवणमननाभ्यां ब्रह्म ज्ञातव्यमेवेत्यर्थः। कुतः ? चोदनाद्यविशेषात् । चोदना विधिः, चोदनानां ''आत्मेत्येवोपासीत'' (बृ.उ.३-४-७)इत्यादिविधीनां आदिपदेन तत्समीपोक्तानां अर्थवादादिरूपयुक्तीनां च अविशेषात् सर्वाधिकारिसाधारण्यात् , अन्यथा काण्वैरेवेदं ज्ञेयमित्यादिरूपेण विधिसमीपे अधिकारिविशेषनिर्देशः स्यादिति सूत्रार्थः।।

अत्र स्वस्वशाखोक्तमेव ब्रह्म तेन तेन ज्ञेयं न सर्वशाखोक्तम् । शाखाप्रतिपाद्यानां नानात्वात् । न हि सर्वशाखोक्तं वस्तु एकं कस्याञ्चिच्छाखायां विज्ञानानन्दादिरूपं वस्तूच्यते। क्वचिच्च सत्यज्ञानानन्दादिरूपं, क्वचिच्छ्रोतृमन्त्रादिरूपं अपहतपाप्मादिरूपं च अन्यत्रेत्येवमादि। अन्यथा सर्वशाखास्वप्येकप्रकारोक्तिः स्यादिति प्राप्ते –

सर्वशाखोक्तं एकमेव ब्रह्म सर्वैर्ज्ञातव्यम् । ''आत्मेत्येवोपासीत'' ''श्रोतव्यो मन्तव्यः'' इत्यादिविधीनां सर्वसाधारणत्वात् । न हि काण्वादिशाखासु काण्वैरेवेदं ज्ञेयं नान्यैः, माध्यन्दिनैरेवेदं

ज्ञेयं नान्यैः इति अधिकारिविशेषनिर्देशोऽस्ति। येन साधारण्यं न स्यात् । न च प्रतिपाद्यभेदः तत्तद्गुणविशिष्टस्य एकस्यैव ब्रह्मणः सर्वत्रोक्तत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सर्ववेदैश्च सर्वैरपि यथाबलं ज्ञेयो विष्णुः** रिति । सर्वैरप्यधिकारिभिः यथाबलं स्वस्वशक्त्यनुसारेण सर्ववेदैरपि विष्णुः ज्ञेयः। न स्वस्वशाखोक्तप्रकारेण तेन तेन ज्ञेयः इत्यर्थः। यद्यपि स्ववेदान्तेति प्रथमसूत्रे सर्वेषां सर्ववेदोक्तप्रकारेण स्वस्वशक्त्यनुसारेण सर्ववेदार्थपरिज्ञानस्योक्तत्वात्तत्तदनुरोधेन भाष्यकारेणापि सर्ववेदैश्चेत्यादिना एतदधिकरणतात्पर्यं प्रथमतो वक्तव्यम् । तथापि सर्ववेदार्थपरिज्ञानस्योपासनार्थत्वेनोपासनायाः प्राधान्यज्ञापनार्थं सोपासनावरोहणन्यायेन अधिकारिक्रममुपेत्य ''सच्चिदानन्द आत्मा'' इत्यादिना उपास्य इत्यन्तेन क्रमोल्लङ्घनं कृतमित्यदोषः। सूत्रकारेण तु श्रवणमननरूपसर्वपरिज्ञानस्य सर्वाधिकारिकत्वात् तत् प्रथममुक्तमिति अवधेयम् ।।१।।

**ओं उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ओं**

अर्थाभेदात् - सर्ववेदार्थानां आनन्दादिगुणानां दोषाभावानां च अभेदात् अविभागेनोपसंहारः कार्यः। अत्र उपसंहारो नाम एकबुध्युपारूढत्वं अविभागेन तानुपसंहृत्य ब्रह्म ध्येयमित्यर्थः। कुतः ? विधिशेषवत् विधिभिः शिष्टानि विधिशेषाणि विधिवाक्योक्तानि कर्माणीवेत्यर्थः। यथा विहितत्वात् सन्ध्यावन्दनादिकं कार्यं एवं विहितत्वात् उक्तरूपेण ध्यानं कार्यम् । उक्तस्यापवादः समाने चेति, समान एव भगवतियोग्यगुण एव न त्वयोग्यरोदनादिविषये । कुतः? ''गुणैरेव स तूपास्यो नैव दोषैः कथञ्चन'' (बृहत्तन्त्र)इति उक्तेरिति सूत्रार्थः।

अत्र नेश्वरः सर्ववेदोक्तगुणोपसंहारेण ध्यातव्यः अशक्यत्वादिति प्राप्ते -

परमात्मा सर्ववेदोक्तगुणोपसंहारेण ध्यातव्यः।

उपास्यः एकः परतः परो वा वेदैश्च सर्वैः सह चेतिहासैः।
सपञ्चरात्रैः सपुराणैश्च देवः सर्वैः गुणैः तत्र तत्र प्रतीतैः।।

(भाल्लवेय)इति विहितत्वात् । विहितसन्ध्यावन्दनादिकर्मवत् । अन्यथा वेदविहितक्रिया-लोपप्रसङ्गेन सन्ध्यावन्दनाद्यकरणे प्रत्यवायवत् प्रत्यवायः स्यात् तदुक्तम् -

विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि । यथा कार्याणि सर्वैश्च सर्वाण्येवाविशेषतः।

एवं सर्वगुणान् सर्वदोषाभावांश्च यत्नतः। योजयित्वैव भगवान् उपास्यो नान्यथा क्वचित्।

(आग्नेय)इति। न चाशक्यत्वात् न सर्वगुणोपसंहारो युक्त इति वाच्यम् । शक्त्यनुसारेणैव उपसंहारानुपसंहारयोः उक्तत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **ब्रह्मणा त्वखिलैर्गुणैः उपास्यः सर्ववेदैश्च** इति। उपसंहृत्येति शेषः। विष्णुः ब्रह्मणा सर्ववेदान् सर्वगुणानुपसंहृत्यैव ध्यातव्य इत्यर्थः ।।२।।

**ओं प्राप्तेश्च समञ्जसम् ओं**

उपसंहारोऽनुपसंहारश्चेत्यर्थद्वयं समञ्जसं उपपन्नं, कुतः? प्राप्तेः - योग्यतायाः व्यवस्थितत्वादिति सूत्रार्थः।

अत्रायुक्तौ प्रागुक्तोपसंहारानुपसंहारौ, विरोधात् । न चाधिकारिभेदेन उभयस्योपपत्तिः। नियामकाभावादिति प्राप्ते -

उपपन्नावेवोपसंहारानुपसंहारौ पुरुषभेदेन। न च नियामकाभावः। "यस्य यावद्गुणाः स्पष्टं प्रतिभासन्त्युपासने। युगपत् स्वभुजौ यद्वत् ध्यायेत्तावत एव सः" इति श्रुतेरेव नियामकत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सर्वैरपि यथाबलम्** । यथायोग्यं उपसंहृत्योपास्य इति युगपत् स्वभुजवत् यस्य यावद्गुणप्रतीतिः तस्य तावद्गुणोपसंहारः। तत्र युगपत् सर्वगुणप्रतीतिः ब्रह्मणः, अन्येषां तु यथायोग्यं बहुगुणप्रतीतिः। मनुष्योत्तमानां चतुर्गुणप्रतीतिः। मनुष्योत्तमेभ्योऽपि नीचानामात्मत्वरूपैकगुणप्रतीतिरिति ज्ञातव्यम् । तदुक्तम् - "गुणैः सर्वैः उपास्योऽसौ ब्रह्मणा परमश्वरः। अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु" (भविष्यत्पर्व)इति ।।३।।

**ओं सर्वाभेदादन्यत्रेमे ओं**

इमे - ब्रह्मादयः अन्यत्र फले अल्पगुणोपसंहर्तृफलविलक्षणसम्पूर्णानन्दात्मके मोक्षफले भवन्ति, तद्भाजो भवन्ति। कुतः ? सर्वाभेदात् । सर्वगुणानामविभागेनोपासनात् । सर्वगुणयुक्तत्वेनोपासनादिति यावत् । अन्ये तु अल्पगुणोपासनादल्पफलभाजो भवन्तीति सूत्रार्थः।

अत्र न च बहुगणोपसंहारः कर्तव्यः अल्पगुणोपसंहर्तृफलापेक्षया फलातिशये प्रमाणाभावादिति प्राप्ते-

कर्तव्य एव बहुगुणोपसंहारः । साधनतारतम्ये फलतारतम्यस्य नियतत्वात् । न च फलातिशये प्रमाणाभावः। " सम्पूर्णोपासनाद्ब्रह्म सम्पूर्णानन्दभाग्भवेत् । इतरे तु यथोयोग्यं" (पाद्म)इत्यादि प्रमाणसद्भावात् इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - सर्वैः यथाक्रमं अखिलैः गुणैः उपसंहृत्योपास्य इति। सर्वशब्दः अल्पोपसंहर्त्रातिरिक्ताधिकारिपरः। अखिलशब्दः बह्वर्थोंकः। तथा च मनुष्योत्तमव्यति-रिक्ताधिकारिभिः यथायोग्यं बहुगुणोपसंहारेण ध्येयः इत्यर्थः ।।४।।

**ओं आनन्दादयः प्रधानस्य ओं**

प्रधानस्य मोक्षस्यार्थे आनन्दः ज्ञानं निर्दोषत्वं स्वामित्वं चेति चत्वारो गुणाः प्रायशः सर्वोपास्याः इति सूत्रार्थः।

अत्र न सर्वमुमक्षूपास्याः क्लृप्तगुणाः सन्ति, नियामकाभावात् इति प्राप्ते -

सत्यानन्दादयः चत्वरो गुणाः सर्वोपास्याः, न च नियामकाभावः। "सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता। सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता। (ब्रह्मतर्क)इति स्मृतेरेव नियामकत्वादिति" सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **सच्चिदानन्द आत्मेति** इति। सन् निर्दुष्टः, चित् ज्ञानरूपः, आनन्द आनन्दरूपः, आत्मा स्वामी इति सर्वैरपि मुमुक्षुभिः उपास्यः। मानुषैस्तु सच्चिदानन्त आत्मेति चतुर्गुणैरेवोपास्यो विष्णुरिति सम्बन्धः।।५।।

**ओं प्रियशिरस्त्वाद्यप्राप्तिः उपचयापचयौ हि भेदे ओं**

प्रियशिरस्त्वाद्यप्राप्तिः - प्रियशिरस्त्वादिगुणोपासनाप्राप्तिः। न सर्वेषां, कुतः ? हि यस्मात् भेदे मुक्तिफले भेदार्थं तारतम्यार्थमिति यावत् । उपचयापचयौ उपासनायाः वृद्धिह्रासौ तारतम्यमिति यावत् । अभ्युपेयाविति सूत्रार्थः।

अत्र "तस्य प्रियमेव शिरः" इत्यदौ श्रुताः प्रियशिरस्त्वादि गुणाः सर्वोपास्याः तेषामानन्दादिविशेषत्वात् आनन्दादीनां च सर्वोपास्यत्वादिति प्राप्ते -

न प्रियशिरस्त्वादयः सर्वोपास्याः आनन्दादिविशेषत्वेन तेषामुपासने सर्वेषां सर्वगुणोपास्ति-प्रसङ्गात्। सर्वगुणानामपि आनन्दादिचतुष्टयविशेषत्वस्य वक्तुं शक्यत्वात् । न च सर्वेषां सर्वगुणोपासास्त्विति वाच्यम् । आनन्दादिश्रुतिसिद्धफलभेदसिद्ध्यर्थ गुणोपासनेऽपि तारतम्यस्यापेक्षितत्वात् इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **मानुषैस्तु** इति। मानुषैस्त्वित्यत्र विद्यमानेन अवधारणार्थकेन तुशब्देनेत्यर्थः। स च इति शब्दात्परं सम्बन्ध्यते। तथा च सच्चिदानन्द आत्मेत्येवोपास्यः। न तु प्रियशिरस्त्वादिना इत्युक्तं भवति।।६।।

**ओं इतरे त्वर्थसामान्यात् ओं**

इतरे तु उक्तानन्दादिव्यतिरिक्ताः उपसंहार्याः एव । कुतः ? अर्थसामान्यात् । अर्थेन फलेन समान्यात्, उपासनाया इति शेषः। ततश्च स्वस्वप्राप्यफलानुसारेणोपासनायोग्यता-निश्चयोपपत्तेः इति सूत्रार्थः।

अत्र विरिञ्चेतरदेवादिभिः चत्वार एव गुणाः उपास्याः, न त्वधिकाः। सर्वमुमुक्षूणां चतुर्गुणोपासनायोग्यतायाः निर्णीतत्वात् । अधिकयोग्यतायाः अनिर्णयादिति प्राप्ते -

चतुर्गुणाधिकगुणाः देवादिभिरुपास्या एव । तदपेक्षिततत्तत्प्राप्यफलनिर्णयं प्रथमतः कृत्वा पश्चात्साधननिर्णयं विधाय ब्रह्मणः अन्यस्य वा सर्वज्ञस्य गुरोः उपदेशेन योग्यतानिर्णयोपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सुरेश्वरैः** - विरिञ्चेतरदेवादिभिः। **यथाक्रमं बहुगुणैः** इति । बहुत्वस्य सर्वेषां एकप्रकारत्वाभावात् यथाक्रमं इत्यक्तम् । योग्यताक्रमानुसारेणेत्यर्थः ।।७।।

**ओं आध्यानाय प्रयोजनाभावात् ओं**

आध्यानाय - सम्यक् सर्वगुणोपसंहारपूर्वकध्यानार्थं वेदे सर्वगुणा उच्यन्ते ।

अत्र न सर्वगुणोपसंहारः कर्तव्यः। प्रमाणाभावात् । न च तत्र विधिरस्तीत्युक्तमिति वाच्यम्। अनुपसंहारिणां अपि चतुर्गुणोपासकानां मोक्षस्य जायमानत्वात् व्यर्थविधेरनवधेयत्वात् । नापि कतिपयगुणोपसंहारः कार्यः। प्रमाणाभावात् इति प्राप्ते :

कर्तव्य एवायमुपसंहारः सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वात् । गुणाभिधानस्य च उपसंहारपूर्वकध्यानार्थत्वात् । न चोपसंहारो निष्फलः। विप्रकीर्णगुणोपसंहारेणोपासकस्य मुक्तावानन्दातिशयलक्षणफलसद्भावात् ।

''यावत्सेवा परे तत्त्वे तावत्सुखविशेषता'' इति स्मृतेः। तथा विरिञ्चेतरैः कतिपयगुणोपसंहारः कार्यः, ''आत्मेत्येवोपासीत'' (बृ.उ.३-४-७)इत्याद्यनुपसंहारप्रमाणस्य विद्यमानत्वादिति सिद्धान्तः कृतः।

एतदधिकरणतात्पर्यं उक्तप्रायमेव । प्राप्तेश्च समञ्जसं (ब्र.सू.३-३-१०)इति तृतीयाधि-करणेनैकविषयत्वात् । तत्र हि यस्य यावद्गुणाः स्पष्टं प्रतिभासन्तीति तयोः कर्तव्यत्वस्य प्रतिपादि-तत्वात् तत्रैव प्रमाणप्रतिपादकत्वात् अपुनरुक्तिश्च ।।८।।

**ओं आत्मगृहीतिरितरवदुत्तरात् ओं**

आत्मगृहीतिः - आत्मशब्देन आनन्दादिगुणानां गृहीतिः ग्रहणं, कथं एकेन अनेक ग्रहणमित्यत उक्तं - इतरवदिति। सत्यज्ञानादिवाक्यगतसत्यादयः शब्दाः ''सत्वं जीवनमेव च'' ''विशीर्णता च सत्वं स्यात्'' इत्युक्तरीत्या यथा जीवक त्वविनाशकत्वाद्यनेकगुणवाचकाः तथा आत्मशब्दः अपीत्यर्थः। कुतः? उत्तरात् । ''अत्र ह्येते सर्व एकीभवन्ति'' इति उत्तरवाक्यादिति सूत्रार्थः।।

अत्र आत्मत्वमेव सर्वोपास्यं नानन्दादयश्चत्वारः ''आत्मेत्येवोपासीत्'' इति साधारणवचनादिति प्राप्ते -

## ओं आनन्दादयः प्रधानस्य ओं

**प्रधानस्य मोक्षस्यार्थे आनन्दः** ज्ञानं निर्दोषत्वं स्वामित्वं चेति चत्वारो गुणाः प्रायशः सर्वोपास्याः इति सूत्रार्थः।

अत्र न सर्वमुमक्षूपास्याः क्लृप्तगुणाः सन्ति, नियामकाभावात् इति प्राप्ते –

सत्यानन्दादयः चत्वरो गुणाः सर्वोपास्याः, न च नियामकाभावः। "सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता। सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता। (ब्रह्मतर्क)इति स्मृतेरेव नियामकत्वादिति" सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह – **सच्चिदानन्द आत्मेति** इति। सन् निर्दुष्टः, चित् ज्ञानरूपः, आनन्द आनन्दरूपः, आत्मा स्वामी इति सर्वैरपि मुमुक्षुभिः उपास्यः। मानुषैस्तु सच्चिदानन्त आत्मेति चतुर्गुणैरेवोपास्यो विष्णुरिति सम्बन्धः।।५।।

## ओं प्रियशिरस्त्वाद्यप्राप्तिः उपचयापचयौ हि भेदे ओं

प्रियशिरस्त्वाद्यप्राप्तिः – प्रियशिरस्त्वादिगुणोपासनाप्राप्तिः। न सर्वेषां, कुतः ? हि यस्मात् भेदे मुक्तिफले भेदार्थं तारतम्यार्थमिति यावत् । उपचयापचयौ उपासनायाः वृद्धिह्रासौ तारतम्यमिति यावत् । अभ्युपेयाविति सूत्रार्थः।

अत्र "तस्य प्रियमेव शिरः" इत्यदौ श्रुताः प्रियशिरस्त्वादि गुणाः सर्वोपास्याः तेषामानन्दादिविशेषत्वात् आनन्दादीनां च सर्वोपास्यत्वादिति प्राप्ते –

न प्रियशिरस्त्वादयः सर्वोपास्याः आनन्दादिविशेषत्वेन तेषामुपासने सर्वेषां सर्वगुणोपास्ति-प्रसङ्गात्। सर्वगुणानामपि आनन्दादिचतुष्टयविशेषत्वस्य वक्तुं शक्यत्वात् । न च सर्वेषां सर्वगुणोपासास्त्विति वाच्यम् । आनन्दादिश्रुतिसिद्धफलभेदसिद्ध्यर्थ गुणोपासनेऽपि तारतम्यस्यापेक्षितत्वात् इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **मानुषैस्तु** इति। मानुषैस्त्वित्यत्र विद्यमानेन अवधारणार्थकेन तुशब्देनेत्यर्थः। स च इति शब्दात्परं सम्बन्ध्यते। तथा च सच्चिदानन्द आत्मेत्येवोपास्यः। न तु प्रियशिरस्त्वादिना इत्युक्तं भवति।।६।।

## ओं इतरे त्वर्थसामान्यात् ओं

इतरे तु उक्तानन्दादिव्यतिरिक्ताः उपसंहार्याः एव । कुतः ? अर्थसामान्यात् । अर्थेन फलेन समान्यात्, उपासनाया इति शेषः। ततश्च स्वस्वप्राप्यफलानुसारेणोपासनायोग्यता-निश्चयोपपत्तेः इति सूत्रार्थः।

अत्र विरिञ्चेतरदेवादिभिः चत्वार एव गुणाः उपास्याः, न त्वधिकाः। सर्वमुमुक्षूणां चतुर्गुणोपासनायोग्यतायाः निर्णीतत्वात् । अधिकयोग्यतायाः अनिर्णयादिति प्राप्ते -

चतुर्गुणाधिकगुणाः देवादिभिरुपास्या एव । तदपेक्षिततत्तत्प्राप्यफलनिर्णयं प्रथमतः कृत्वा पश्चात्साधननिर्णयं विधाय ब्रह्मणः अन्यस्य वा सर्वज्ञस्य गुरोः उपदेशेन योग्यतानिर्णयोपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सुरेश्वरैः** - विरिञ्चेतरदेवादिभिः। **यथाक्रमं बहुगुणैः** इति । बहुत्वस्य सर्वेषां एकप्रकारत्वाभावात् यथाक्रमं इत्यक्तम् । योग्यताक्रमानुसारेणेत्यर्थः।।७।।

## ओं आध्यानाय प्रयोजनाभावात् ओं

आध्यानाय - सम्यक् सर्वगुणोपसंहारपूर्वकध्यानार्थं वेदे सर्वगुणा उच्यन्ते ।

अत्र न सर्वगुणोपसंहारः कर्तव्यः। प्रमाणाभावात् । न च तत्र विधिरस्तीत्युक्तमिति वाच्यम्। अनुपसंहारिणां अपि चतुर्गुणोपासकानां मोक्षस्य जायमानत्वात् व्यर्थविधेरनवधेयत्वात् । नापि कतिपयगुणोपसंहारः कार्यः। प्रमाणाभावात् इति प्राप्ते :

कर्तव्य एवायमुपसंहारः सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वात् । गुणाभिधानस्य च उपसंहारपूर्वकध्यानार्थत्वात् । न चोपसंहारो निष्फलः। विप्रकीर्णगुणोपसंहारेणोपासकस्य मुक्तावानन्दातिशयलक्षणफलसद्भावात् ।

''यावत्सेवा परे तत्त्वे तावत्सुखविशेषता'' इति स्मृतेः। तथा विरिञ्चेतरैः कतिपयगुणोपसंहारः कार्यः, ''आत्मेत्येवोपासीत'' (बृ.उ.३-४-७)इत्याद्यनुपसंहारप्रमाणस्य विद्यमानत्वादिति सिद्धान्तः कृतः।

एतदधिकरणतात्पर्यं उक्तप्रायमेव । प्राप्तेश्च समञ्जसं (ब्र.सू.३-३-१०)इति तृतीयाधि-करणेनैकविषयत्वात् । तत्र हि यस्य यावद्गुणाः स्पष्टं प्रतिभासन्तीति तयोः कर्तव्यत्वस्य प्रतिपादि-तत्वात् तत्रैव प्रमाणप्रतिपादकत्वात् अपुनरुक्तिश्च।।८।।

## ओं आत्मगृहीतिरितरवदुत्तरात् ओं

आत्मगृहीतिः - आत्मशब्देन आनन्दादिगुणानां गृहीतिः ग्रहणं, कथं एकेन अनेक ग्रहणमित्यत उक्तं - इतरवदिति। सत्यज्ञानादिवाक्यगतसत्यादयः शब्दाः ''सत्वं जीवनमेव च'' ''विशीर्णता च सत्वं स्यात्'' इत्युक्तरीत्या यथा जीवक त्वविनाशकत्वाद्यनेकगुणवाचकाः तथा आत्मशब्दः अपीत्यर्थः। कुतः? उत्तरात् । ''अत्र ह्येते सर्व एकीभवन्ति'' इति उत्तरवाक्यादिति सूत्रार्थः।।

अत्र आत्मत्वमेव सर्वोपास्यं नानन्दादयश्चत्वारः ''आत्मेत्येवोपासीत्'' इति साधारणवचनादिति प्राप्ते -

आनन्दादयः चत्वारोप्युपास्या एव। आत्मशब्दस्य "अत्र ह्येते सर्व एकीभवन्ति" (बृ.उ.३-४-७) इत्युत्तरवाक्यबलेन सत्यज्ञानादिपदजातवदानन्दाद्यनेकार्थत्वेन स्वामित्वमात्रार्थकत्वाभावादिति सिद्धान्तः कृतः।

एतदधिकरणतात्पर्यमप्युक्तप्रायमेव। आनन्दादयः प्रधानस्येति पञ्चमाधिकरणेन गतार्थत्वात् ॥९॥

## ओं अन्वयादिति चेत्स्यात् अवधारणात् ओं

अत्रान्वयात् - आत्मशब्दे सर्वगुणानामन्वयात्, तस्य सर्वगुणवाचित्वादिति यावत् । अनुपसंहारप्रमाणत्वमयुक्तमिति चेत् स्यात् आत्मशब्दस्य सर्वगुणवाचकत्वं स्यात् - अङ्गीकृतमेव। किन्तु ब्रह्मादीन् प्रत्यल्पगुणाभिधायकः किं न स्यादित्यत उक्तं अवधारणादिति । आत्मेत्येवेत्यवधारणादित्यर्थः। अस्य विधेः ब्रह्मादिसर्वाधिकारिकत्वात् । अन्ययोगव्यवच्छेदकावधारणयुक्तात्मपदेन सर्वगुणानुक्तौ च चतुर्मुखस्यापि आत्मशब्दार्थभूतकतिपयगुणविशिष्टत्वेन उपासनाप्राप्तौ "गुणैस्सर्वैरूपास्योऽसौ ब्रह्मणा" इत्यादिविरोधात् । अतोऽयमात्मशब्दःयोग्यतानुसारेण गुणाभिधायक इति युक्तं तस्यानुपसंहारप्रमाणत्वमिति सूत्रार्थः॥

अत्र आत्मशब्दोक्तगुणाः न सर्वोपास्याः । तस्य सर्वगुणाभिधायकत्वात्, ततश्च नास्यानुपसंहारप्रमाणत्वमिति प्राप्ते -

सत्यमात्मशब्दः सर्वगुणाभिधायकः। तथापि न सर्वान् प्रति । किन्नाम तत्तद्योग्यतानुसारेण तान् तान् प्रत्यसाधारण्येन गुणाभिधायकः। ततश्च आत्मशब्दोक्तगुणाः सर्वोपास्याः इति युक्तमनुपसंहारप्रमाणत्वमिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सर्वैरपि यथाक्रमं आत्मेत्युपास्य** इति। सर्वैरप्यधिकारिभिः अयं आत्मशब्दः योग्यतानुसारेण गुणाभिदायकः इति ज्ञात्वा उपास्यो विष्णुरित्यर्थः॥१०॥

## ओं कार्याख्यानादपूर्वम् ओं

आनन्दादिगुणजातमपूर्वं अलौकिकत्वेनोपास्यम् । कुतः ? कार्याख्यानात् । कार्यस्य उपासनासाध्यस्य अलौकिकमोक्षस्य आख्यानात् । अलौकिकास्तस्य गुणा उपास्याः। "अलौकिकं मुक्तिकार्यं यतोऽस्य" इति श्रुतौ कथनादिति सूत्रार्थः।

अत्र भगवद्गुणाः लोकसदृशत्वेनैव ध्यातव्याः अन्यथाननुभूतत्वेन स्मृतिरूपध्यानाभावप्रसङ्गात् इति प्राप्ते -

अलौकिकाः एव भगवद्गुणाः ध्यातव्याः। तत्कार्यस्य मोक्षस्य अलौकिकत्वात् । न च तत्प्रतीत्यभावेन ध्यानाभावप्रसङ्गः। लक्षणमुखेनेन्द्रादेरिव यत्स्वपरगताखिलविशेषविषयतदीय-ज्ञानमित्युपदेशेन अलौकिकगुणप्रतीत्युपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **तु उपास्य** इति। तुशब्दो अलौकिकगुणवत्वरूपविशेषार्थकः। तथा च अलौकिकगुणवत्तया ध्यातव्यः इत्यर्थः ।।११।।

### ओं समान एवं चाभेदात् ओं

एवं चेशधर्माणामपूर्वत्वेऽपि ब्रह्माण्याः समाने – योग्यगुणविषये एवोपसंहारः नत्वयोग्ये त्रिविक्रमादौ क्रियाविशेषे । तर्हि तस्याः सर्वथा त्रिविक्रमत्वाद्युपसंहारो न स्यादित्यत उक्तं – अभेदादिति। तेषां नित्यविक्रान्त्यादिसामान्यक्रियास्वन्तर्भावादिति सूत्रार्थः।

अत्र भगवदुपासनं न स्वानुसारिफलप्रदम् । ब्रह्माणीब्रह्मोपासने तदभावात् । तथा हि तयोर्हि उपासनं समं विषमं वा भवेत् । न तु समविषमं विरुद्धत्वात् । फलन्तु समविषमं वैकुण्ठाख्यस्थानसाम्येऽपि आनन्दतारतम्यसद्भावात् इति प्राप्ते –

उपासन स्वानुसारिफलप्रदमेव। फलवत्तयोरुपासनस्यापि समविषमत्वात् । तथा हि ब्रह्माणी हि ब्रह्मवत् सर्वगुणानुपसंहृत्यैवोपास्ते। त्रिविक्रत्वादिकदाचिदभिव्यक्तक्रियास्तु नित्यविक्रान्त्यादि-क्रियास्वन्तर्भाव्यैव न तु पृथगुपसंहृत्यैव। न च वाच्यं त्रिविक्रमत्वादिक्रियाणां अलौकिकत्वेनात्या-श्चर्यत्वात्कथं ब्रह्माणी तदुपासनं हास्यतीति तासामपूर्वत्वेऽपि योग्यस्यैवोपास्यत्वात् । तस्याश्च तदुपास्तियोग्यताभावात् । ब्रह्मा तु त्रिविक्रमत्वादिक्रियाः पार्थक्येन सदोपसंहृत्योपास्त इति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह – **यथाक्रमम्** । स्वयोग्यताक्रमानुसारेण उपसंहृत्योपास्य इति। तथा चोपासनं स्वानुसारिफलप्रदमित्यर्थः ।।१२।।

### ओं न वा विशेषात् ओं

आत्मगृहीतिरित्यनुवर्तते। सर्वगुणानामिति योग्यतया सम्बन्धः। वाशब्दो व्यवस्थितविकल्पार्थः। न वा आत्मशब्देन सर्वगुणानां गृहीतिः। कुतः, विशेषात् । योग्यताविशेषानुसारेण बोधकत्वादिति सूत्रार्थः।

अत्र न आत्मशब्दोक्ताः गुणाः सर्वोपास्याः तस्य सर्वगुणाभिधायकत्वात् । अतो अनुपसंहारप्रमाणोक्तिः न युक्तेति प्राप्ते –

युक्तमेव सर्वेषामात्मशब्दोक्तगुणोपासनं तस्य सर्वान् प्रति सर्वगुणाभिधायकत्वाभावात् । कुतः? तस्य सर्वगुणाभिधानशक्तावपि योग्यताविशेषेण तत्तद्योग्यगुणाभिधायकत्वात् ।

"सर्वान् गुणान् आत्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैव" इत्यादि श्रुतेः। तस्मादुक्तं युक्तमिति सिद्धान्तः कृतः।

एतदधिकरणतात्पर्यं उक्तप्रायमेव। अन्वयादिति दशमाधिकरणेनैव एकविषयत्वात् । पुनरुक्तिपरिहारश्च ग्रन्थान्तरादवगन्तव्यः ।।१३ ।।

**ओं सम्भृतिद्युव्याप्त्यपि चातः ओं**

सम्भृतिः - सम्यक् भरणं, द्युव्याप्तिः - प्रकाशेन व्याप्तिः, सम्भृतिद्युव्याप्ती अपि न सर्वोपास्ये किन्तु देवाद्युपास्ये एव, कुतः अतश्च अत एव, योग्यताविशेषादेवेति सूत्रार्थः।

अत्र सम्भृतिद्युव्याप्ती सर्वोपास्ये मोक्षे च स्वाधमभरणस्य प्रकाशेन व्याप्तेश्च सर्वापेक्षितत्वात् । अतश्च चतुर्गुणोपासनानियमभङ्गः इति प्राप्ते -

न ते सर्वोपास्ये किन्तु देवाद्युपास्ये एव। मनुष्याणां योग्यताविरहात् । न चापेक्षितसिद्धिः। भगवद्रूपप्रतीत्यैव तत्सिद्धेः। ततश्च नोक्तचतुर्गुणोपासनानियमभङ्गः इति सिद्धान्तः कृतः।।

एतदधिकरणतात्पर्यमपि उक्तप्रायमेव। षष्ठाधिकरणतात्पर्यकथनेन कृतार्थत्वात् ।।१४।।

**ओं पुरुषविद्यायामपि चेतरेषामनाम्नानात् ओं**

सर्वविद्योत्तमायामपि पुरुषसूक्तविद्यायां इतरेषां केषाञ्चिद्गुणानां आनाम्नानात् च शब्देन तु केषाञ्चिदाम्नानात् सर्वतो गुणोपसंहारः कार्य इति सूत्रार्थः।

अत्र न सर्वतो गुणोपसंहारः कार्यः। प्रयोजनाभावात् । न च स्वस्वयोग्यगुणोपासनाय सर्वत उपसंहार इति वाच्यम्। सार्वत्रिकोपसंहारमन्तरेणापि ये हि बहुगुणोपासनयोग्याः तेषां बहुगुणाभिधायकैकैकविद्योक्तगुणोपसंहार मात्रेणैव तत्सम्भवादिति प्राप्ते -

कर्तव्य एव सर्वतो गुणोपसंहारः। एकस्यामेव विद्यायां सर्वगुणानामनुक्तत्वात् । सर्व-विद्योत्तमायामपि पुरुषविद्यायां सर्वगुणानामनाम्नानात् । मन्दापेक्षितानामपि एकत्रोक्तिनियमाभावाच्च इति सिद्धान्तः कृतः।

एतस्य तात्पर्यं उपसंहारोऽर्थाभेदादिति द्वितीयाधिकरणतात्पर्यकथनेनोक्तप्रायमेव। तत्र सर्ववेदोक्तगुणोपसंहारः कार्य इति प्रतिपादितत्वात् ।।१५।।

### ओं वेधाद्यर्थभेदात् ओं

वेधादि न सर्वोपास्याम्। कुतः ? अर्थभेदात् । फलभेदात्तु वेधाद्युपासनस्य दुष्टहिंसारूप-विलक्षणफलकत्वात् । तत्र यत्यादेरनधिकारादिति सूत्रार्थः।

अत्र "अग्ने त्वचं यातुधानस्य भिन्दि" इत्यादिनोक्ताः भेदनादिगुणाः सर्वोपास्याः। तत्फलस्य दुष्टनिग्रहस्य सर्वापेक्षितत्वात् । अतो न चतुर्गुणोपासननियम इति प्राप्ते -

न वेधादयः सर्वोपास्याः। यत्यादीनां तदुपासनायोग्यत्वात् । कुतः? तदुपासनाफलस्य दुष्टहिंसादेः यत्यादिफलाद्विलक्षणत्वात् अयोग्योपासनाच्चानर्थप्राप्तेः। अतः नाभिहितनियमो भज्यत इति सिद्धान्तः कृतः।।

एतदधिकरणतात्पर्यमपि उक्तरीत्या स्फुटमित्यवगन्तव्यम् ।।**१६**।।

### ओं हानौ तूपायशब्दशेषत्वात् कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ओं

हानौ - बन्धहानिरूपमुक्तौ स्वेच्छयैव मुक्ताः उपासनां कुर्वन्ति न विधितः। कुतः ? उपायनशब्दशेषत्वात् - मोक्षवाक्यशेषत्वात् । उपासनाविधीनामिति शेषः। "ब्रह्मविदाप्नोति परम्" (तै.उ.३-१) इति मोक्षवाक्ये ज्ञानान्मोक्ष इत्युक्ते उपासनाविधीनां प्रवृत्तत्वात् मोक्षप्राप्त्यर्थं प्रकृता विधयः कथं तदनन्तमपि भवेयुरिति भावः। स्वेच्छोपासनं कथमित्यत उक्तं कुशाछन्दस्तुत्युपगानवदिति। कुशग्रहणेन आछन्देन स्वेच्छया मन्त्रसामाध्ययनवदित्यर्थः। नियतब्रह्मयज्ञानन्तरमपि द्विजन्मनां स्वेच्छयैव कुशधारणेन मन्त्राध्ययनं यथा तथेति भावः। किमत्र मानं इत्यत उक्तं - तदुक्तमिति। "एतत्साम गायन्नास्ते" । "मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः" (ब्रह्माण्ड)इत्यादाविति सूत्रार्थः।

अत्र न मोक्षे भगवदुपासनं, विधिबन्धप्रसङ्गात् इति प्राप्ते -

अस्त्येव मोक्षे भगवदुपासनम् । "एतत्सामगायन्नास्ते" (तै.उ.३-१०) इति वचनात् । न च विधिबद्धत्वेन संसारसमानधर्मत्वं मुक्तेः, विनापि विधिं स्वेच्छयैवोपासनमित्यङ्गीकारादिति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **सर्वैरप्युपास्य** इति। संसारिभिः मुक्तैश्चोपास्य इत्यर्थः।।**१७**।।

### ओं छन्दत उभयाविरोधात् ओं

मुक्ताः छन्दतः स्वेच्छया कदाचित् कर्म कुर्वन्ति। कुतः उभयाविरोधात् - विधिप्रत्यवाययोः अभावादिति सूत्रार्थः।

अत्र मुक्ताः नियमेन कर्म कुर्वन्ति। विष्णुपूजात्मकत्वात्कर्मणः शक्तत्वाच्च तेषां इति प्राप्ते -

न मुक्तानां कर्मणि नियमः। अपि तु कर्मकरणशक्तावपि स्वेच्छयैव कदाचित् कुर्वन्ति। कदाचिन्न कुर्वन्ति। विधिप्रत्यवाययोरभावात् । न चात्र प्रमाणाभावः।

"कदाचित्कर्म कुर्वन्ति कदाचिन्नैव कुर्वते। प्रत्यवायस्य बन्धस्याप्यभावात् स्वेच्छया भवेत्" (ब्रह्माण्ड) इति प्रमाणादिति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। ज्ञाने - ज्ञानजन्ये मोक्षे, विशेषः स्यात् , संसार्यपेक्षया कर्मणि विशेषः स्यात्। मुक्ताः कदाचित् कर्म कुर्वन्ति । कदाचिन्न कुर्वन्तीत्यर्थः। संसारिणान्तु विधिबद्धत्वात् कर्मणि नियमः इति भावः।।१८।।

**ओं अनियमः सर्वेषामविरोधात् शब्दानुमानाभ्यां ओं**

सर्वेषां अपरोक्षज्ञानिनां अनियमः उपासने केषाञ्चिदुपसंहारः केषाञ्चिन्नेति नियमवत् केषाञ्चिन्मोक्षः केषाञ्चिन्नेति नियमो व्यवस्था नास्ति। कुतः? अविरोधात् । तन्निषेधाख्यबाधकाभावात् । उपलक्षणमेतत्। साधकसद्भावाच्च । किमत्र मानमित्यत उक्तं शब्दानुमानाभ्यामिति। "न कश्चित्" (कौण्डिण्य) इति श्रुतेः। ज्ञानित्वानुमानाच्चेति सूत्रार्थः।

अत्र न सर्वेषां ज्ञानिनां मोक्षः। ज्ञानिष्वपि केषाञ्चिन्मुक्त्ययोग्यत्वसम्भवात् । यथा खलु उपासकेष्वपि योम्यानामेव सर्वगुणोपसंहारो नायोग्यानां इति प्राप्ते -

अस्त्येव ज्ञानिनां सर्वेषां मोक्षः। तथाहि । केषाञ्चिदेव मोक्षः, न सर्वेषां इति वदन् प्रष्टव्यः। किं बाधकसद्भावात् न सर्वेषां मोक्षः इत्युच्यते। उत साधकाभावात् । नाद्यः तदभावात् । न द्वितीयः। "न कश्चित् ब्रह्मवित् सृतिमनुभवति मुक्तो ह्येव भवति" इति श्रुतेः। विप्रतिपन्नाः ज्ञानिनः मोक्षवन्तः ज्ञानित्वात् सम्प्रतिपन्नवत् इत्यनुमानाच्च। न चोपसंहारसमानयोगक्षेमता। "सर्वे गुणाः ब्रह्मणैव ह्युपास्याः नान्यैर्देवैः किमु सर्वैर्मनुष्यैः" इतिवद्बाधकाभावादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। तुशब्दो अवधारणार्थकः। ज्ञाने - अपरोक्षज्ञाने सति, विशिष्यते सर्वेभ्यः इति विशेषः मोक्षः स्यादेवेत्यर्थः। अन्यथा उक्तवचनविरोधादिति भावः।।१९।।

**ओं यावदधिकारमवस्थितिराधिकारिकाणाम् ओं**

आधिकारिकाणामधिकारो योग्यता तदनुसार्यनुष्ठाने शीलमेषान्ते आधिकारिकाः, तेषां ब्रह्मादीनां यावदधिकारं अधिकारानुसारेण मुक्ताववस्थितिः तारतम्येनावस्थानात् । मुक्तौ सुखादितारतम्यस्य प्राक्तनयोग्यतातारतम्यनिबन्धनत्वात्तदभावे तन्न स्यादिति भावः इति सूत्रार्थः।

अत्र नास्त्येवोपासनाधिकारे नियमः। **अयमेतावद्गुणोपासने** योग्योऽयं नेति प्रमाणाभावात् । न च मुक्तावानन्दतारतम्यं अधिकारनियमे प्रमाणमिति वाच्यम् । तस्य उपासनादिप्रयत्न-तारतम्येनैवोपपत्तेरिति प्राप्ते –

अस्त्येवोपासनाधिकारे नियमः। अयमेतावद्गुणोपासने योग्योऽयं नेति । तेन विना श्रुत्युक्तानन्दतारतम्यस्य कथमप्ययोगात् । न चोपासनाप्रयत्नतारतम्यमेनैवोपपत्तिः। तस्यापि योग्यतातारतम्याधीनत्वात् इति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह – **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्** इति । ज्ञाने ज्ञानजन्ये मोक्षे, उत्तरोत्तरं मनुष्योत्तममारभ्य ब्रह्मपर्यन्तं, विशेषः –तारतम्यं स्यात् अतः उपासनेऽपि तारतम्यं स्यात् । न हि साधने तारतम्यमन्तरेण फले तारतम्यं युक्तमिति भावः।।२०।।

## ओं इयदामननात् ओं

इयत् अधिकारिणां प्राणावसानत्वमेव, न तु प्राणादधिकोऽस्ति । कुतः ? "प्राणो वा" (कौण्ठरव्य)इति श्रुतौ तथा मननादिति सूत्रार्थः।

अत्र नाधिकारिणः प्राणावसानाः। प्राणः स्वोत्तमाधिकारिनियम्यः अधिकारित्वात्। नामादिवदित्यनुमानविरोधात् । अतो न सर्वगुणोपास्तियोग्यता तस्येति प्राप्ते –

प्राणावसानत्वमेवाधिकारिणां "प्राणो वा व सर्वेभ्यो भूयान्" इत्यामननात् । न चानुमानविरोधः। तस्य बाधितविषयत्वात् । अतः स एव सर्वगुणोपास्तियोग्य इति सिद्धान्त कृतः।

तस्य तात्पर्यमाह – **ब्रह्मणा त्वखिलैः गुणैः उपास्य** इति। तुरवधारणे। अतो अधिकारिणां प्राणावसनात्वमिति भावः। प्राणस्यैव भाविब्रह्मत्वाद्व्यामिश्रोक्तिरिति विज्ञेयम् ।।२१।।

## ओं व्यतिहारो विशिंषन्ति हीतरवत् ओं

युक्तं प्राणात्सत्याख्यविष्णोः उत्तमत्वम् । तयोः विषये प्रश्नप्रतिवचनयोः अश्रवणेऽपि व्यतिहारः – प्रश्नप्रतिवचनयोरध्याहारः कार्यः। कुतः ? हि यस्मात् प्राणवाय्वपेक्षया सत्याख्यविष्णुवादिनं "एष तु वा अतिवदति यः सत्येनातिवदति" (छां.उ.७-१६)इति। तुशब्देन विशिंषन्ति व्यवर्तयन्ति, छन्दोगाः सत्याख्यविष्णोः उत्तमत्वं ज्ञापयन्तीति यावत् । तत्र दृष्टान्तः इतरवदिति। यथा "अस्ति भगवो नाम्नो भूयः वाग्वाव नाम्नो भूयसी" इत्यादि प्रश्नप्रतिवचने नामादिभ्यो वागादेरुत्तमत्वज्ञापके तथा तुशब्दः प्राणात्सत्याख्यविष्णोरुत्तमत्वज्ञापकः। तद्बलादस्ति भगवः प्राणादयः सत्यं वा व प्राणाद्भूय इति प्रश्नप्रतिचनयोः अध्याहारः कर्तव्य इति ज्ञायते इति सूत्रार्थः।

अत्र न विष्णोः सर्वोत्तमत्वं युक्तम् । "प्राणो वा आशाया भूयान्" इति प्राणस्याशोत्त-मत्वमुक्त्वा तदुत्तमानभिधानात् इति प्राप्ते –

युक्तमेव विष्णोः सर्वोत्तमत्वम् । "एष तु वा अतिवदति यस्सत्येवातिवदति" इति सत्यपदोदितस्य विष्णोः प्राणाद्युत्तमत्वाभिधानात् । "न चास्ति भगवो नाम्नो भूयः। वाग्वाव नाम्नो भूयसी" इत्यादाविव प्रश्नप्रतिवचनाभावात् न श्रुतेः प्राणाद्युत्तमत्वाभिधाने तात्पर्यमिति वाच्यम् । प्रायपाठबलेन "अस्ति भगवः प्राणाद्भूय इति सत्य वा व प्राणाद्भूय" इति प्रश्नाद्यध्याहारस्य कर्तुं अशक्यत्वात् । न चाध्याहारे कारणाभावादेकप्रकरणत्वमेव वक्तुं युक्तमिति वाच्यम् । एष तु वेति तुशब्दस्य प्रकरणभेदकस्य सद्भावादिति सिद्धान्तः कृतः ।।

तस्य तात्पर्यमाह – **ब्रह्मणा विष्णरुपास्य** इति । अन्यथा यः उत्तमः तस्यैवोपास्यत्वेन विष्णोस्तत् न स्यादित्यर्थः ।।२२।।

## ओं सैव हि सत्यादयः ओं

प्राणादेकस्यैव विष्णोरुत्तमत्वम् । न बहूनाम् । कुतः ? हि – यस्मात् प्राणादूर्ध्वं आम्नाताः सत्यादयः सैव विष्ण्वाख्यपरदेवतैव। हिशब्दः प्रसिद्धिद्योतक इति सूत्रार्थः।

अत्र न केवलं प्राणात्सत्यपदोक्तो विष्णुरेवोत्तमः। अपि तु सत्यादप्युपरि विज्ञानमतिश्रद्धानिष्ठाकृतिसुखादीनां बहूनामुक्तत्वात् । न च सत्यादीनां अभेदः। प्रमाणाभावात् । अतो न प्राणाद्विष्णोरेवोत्तमत्वं इति प्राप्ते –

न प्राणाधिकाः बहवः। सत्यादीनां सर्वेषां परदेवतात्वात् । न च अभेदोक्त्यभावः। "सत्यं पूर्णं विज्ञानं पूर्णं कृतिः पूर्णा" इति श्रुत्यन्तरे सत्यादीनां सर्वेषामपि पूर्णत्वोक्तेः। पूर्णत्वस्य च भगवल्लक्षणत्वात् । "नामादिप्राणपर्यन्ताद्यो हि सत्यादिरूपवान् । तस्मै नमो भगवते विष्णवे सर्वजिष्णवे ।।" इति स्मृतेश्च । अतः सत्यादीनां भगवत्स्वरूपत्वेन स एक एव प्राणादुत्तमः न बहव इति सिद्धान्तः कृतः ।।

तस्य तात्पर्यमाह – **ब्रह्मणा विष्णुस्तु स एव सत्यादिरूपी विष्णुरेव उपास्य** इति। तथा च विष्णुरेक एव प्राणोत्तमो न बहवः इति भावः ।।२३ ।।

## ओं कामादितरत्र तत्र च आयतनादिभ्यः ओं

तत्र भगवत्समीपे मूलरूपेण स्थिता श्री इतरत्र भूम्यादौ कामात् ईश्वरेच्छानुसारिस्वेच्छयैव अवतारान् करोति । कुतः ? आयतनादिभ्यः। अनेन आयतनत्वादिभोधिका श्रुतिः गृह्यते। "सर्वायतना सर्वकाला सर्वेच्छा न बद्धा बन्दिका सैषा प्रकृतिरविकृतिः" (वत्स) इति सर्वायतनत्वादि बोधकश्रुतेः इति सूत्रार्थः।

अत्र भवत्येव प्रकृतिः अधिकारिणी संसारित्वे सति साधुत्वात् । न च तस्याः संसारित्वाभावः। रुक्मिण्यादिरूपायाः तस्याः जन्मादिदर्शनात् । किञ्च सा कृतार्था न वा । आद्ये न भगवदुपासनं स्यात्। द्वितीये कथं असंसारित्वं तस्याः। अतः संसारित्वेन प्रकृतेरप्यधिकारो अस्त्येव। अधिकारित्वे च तस्याः प्राणोत्तमत्वमेव वक्तव्यम् । ततश्च नाधिकारिणां प्राणावसानत्वं इति प्राप्ते-

न प्रकृतिरधिकारिणी, अबद्धत्वात् । न च जन्मादेः संसारित्वप्राप्तिः। जन्मादेः अवतारादित्वेन तद्धेतुत्वाभावात् । न च जन्माद्येव किन्न स्यादिति वाच्यम् । जननेऽपि मूलरूपेण भगवत्समीपे स्थितत्वात् । नापीन्द्रादिवत् । स्वेच्छयैव जननेन कर्मनिमित्तत्वाभावात् । न च तर्हि स्वातन्त्र्यम्। ईश्वरेच्छानुसारित्वात् । किमत्र मानमिति चेन्न । सर्वायतनत्वाद्यभिधायकश्रुतेरेव। ननु रमायाः असंसारित्वे कृतकृत्यत्वेन भगवदुपासनं न स्यात् इति चेन्न । नित्यमुक्तत्वेन कृतकृत्यत्वेऽपि निरुपाधिक भक्त्यतिशयेन तदुपपत्तेः। तदुक्तं -

यथा श्रीर्नित्यमुक्तापि प्राप्तकामापि सर्वदा ।
उपास्ते नित्यशो विष्णुमेवं भक्तो हरेः भवेत्।। (बृहत्तन्त्र)इति।

अतः प्रकृते अधिकारित्वाभावात् युक्तमधिकरणं प्राणावसानत्वमिति सिद्धान्तः कृतः

तस्य तात्पर्यमाह - **विशेषस्तु स्यात्** इति । उपासनासद्भावेऽपि नित्यमुक्तायाः प्रकृतेः प्रकृतेः निरुपाधिकभक्त्यतिशयेन उपसनं, न विधिबद्धत्वेन । इतरेषान्तु विधिबद्धत्वेनेति विशेषः स्यादित्यर्थः ।।२४।।

### ओं तन्निर्धारणार्थनियमः तद्दृष्टेः पृथक्ध्यप्रतिबन्ध फलम् ओं

तन्निर्धारणं अयमस्यार्थ इति तत्त्वनिश्चयः। तेन सहितो अर्थनियमः - अयमेव वेदार्थो नान्य इति निर्णयः। एवं श्रवणमननफलरूपं तद्द्वयमपि तद्दृष्टेः - ब्रह्मदर्शनात् पृथक् अपरोक्षज्ञानसाधनं न भवतीति यावत् । अतः ताभ्यां दृष्ट्यसिद्धेः दृष्ट्यर्थं ध्यानं कार्यमिति भावः। तर्हि मुक्तिहेतुदृष्टेः ध्यानादेव सिद्धौ किं ताभ्यामित्यत उक्तं अप्रतिबन्धः फलमिति। अज्ञानसंशयमिथ्याज्ञानलक्षणापरोक्षज्ञानप्रतिबन्धकनिवृत्तिः श्रवणमननयोः फलमित्यर्थः। किमत्र मानमित्यत उक्तं हीति तथा श्रुतेः स्मृतेश्चेति सूत्रार्थः।।

अत्र व्यस्तमेवोपासनं कार्यं, न समस्तम् । तथा हि उपासनं तावत् भगवद्दर्शनार्थं, तच्च दर्शनं श्रवणमननाभ्यां भविष्यतीति किं ध्येनेन? अथोच्येत । ज्ञानप्रतिबन्धकानां दृढत्वात् ध्यानेनैव प्रतिबन्धकनिवृत्तिरिति । तर्हि ध्यानेनैव दर्शनसम्भवात् अलं श्रवणादिना । न च समुच्चितानां दर्शनहेतुत्वे मानमस्तीति प्राप्ते -

**कर्तव्यमेव समस्तोपासनम् । न श्रवणमननमात्रम् । श्रवणादिमात्रेण दर्शनाभावात् । तत्त्वज्ञानं हि श्रवणफलम् । अयमेव वेदार्थो नान्य इति निर्णयस्तु मननफलम् । तदुभयञ्च ब्रह्मदर्शनात् पृथगेव, अतो ध्यानं दर्शनार्थं कर्तव्यमेव। न चैवं श्रवणमननाभावप्रसङ्गः। तयोः साक्षाद्धेतुत्वाभावेऽपि संशयादिनिवृत्तिद्वारा दर्शनोपयोगित्वेन आवश्यकत्वात् । न चात्र प्रमाणाभावः।** दर्शनार्थं "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति विहितत्वात् ।

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ।। इति स्मृतेश्चेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सर्वैरपि ज्ञेयो विष्णुः** इति । सर्वैरपि श्रवणमनननिदिध्यासनरूपैः समस्तोपासनैरपि विष्णुः द्रष्टव्यः नान्यतरेण।।२५।।

## ओं प्रदानवदेव हि तदुक्तम् ओं

तदित्यावृत्तिः। तत् - श्रवणादिकं प्रदानवदेव - दानमुपदेशः प्रसादपूर्वकगुरूपदेशयुतमेव ज्ञानाख्यफलवत् न श्रवणादिमात्रमित्यर्थः। कुत इत्यत उक्तं - तदुक्तं श्रुताविति सूत्रार्थः।

अथ श्रवणादिकमेव ज्ञानसाधनं न गुरुप्रदानपूर्वकम् । "आत्मा वा अरे द्रष्टव्य" इति श्रुतौ श्रवणादीनामेव ज्ञानसाधत्वाभिधानादिति प्राप्ते -

गुरूपदेशयुक्तमेव श्रवणादिकं ज्ञानसाधनम् । "आचार्यवान् पुरुषो वेद इति वचनात् " (छां.उ.६-१४-२)इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। ज्ञाने - ज्ञानसाधने श्रवणादौ गुरुप्रसादपूर्वकप्रदानरूपो विशेषस्तु स्यादित्यर्थः।।२६।।

## ओं लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ओं

तत् - प्रसादपूर्वक गुरुप्रदानं, बलीयः - श्रवणाद्यपेक्षया बलिष्ठं, कुतः, लिङ्गबाहुल्यात् । ऋषभादिभ्यो ज्ञातविद्यस्यापि सत्यकामस्य गुरुप्रार्थनं गौतमाभ्यनुज्ञानं तथाग्निभ्यः ज्ञातविद्यस्यापि उपकोसलस्य गुरुप्रार्थनं सत्यकामस्य प्रवचनमित्यादिलिङ्गबाहुल्यात् । किं तर्हि श्रवणादिनेत्यत उक्तं - तदपीति । श्रवणादिकमपि कार्यमेवेत्यर्थः। अत्र "श्रोतव्य" इत्यादि श्रुतिस्मृतिसूचको हिशब्दः इति सूत्रार्थः।

अत्र श्रवणादिरूपः शिष्यप्रयत्न एव बलवान् प्रधानत्वात् । न गुरुप्रसादः इति कर्तव्यतारूपत्वादिति प्राप्ते -

गुरुप्रसाद एव बलवान्। लिङ्गभूयस्त्वात् । तथा हि – ऋषभादिभ्यो विद्या श्रुत्वापि सत्यकामो "भगवां स्त्वेव मे कामे ब्रूयात्" (छां.उ.४-९-२) "आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयति" इति गुरुं प्रार्थयते तथा गुरुणा गोतमेन च "अत्राह न किञ्चन वियाय" इत्यनुज्ञा क्रियते। तथोपकोसलेनाग्न्यादिभ्यः श्रुतविद्येनापि गुरुः प्रार्थ्यते। गुरुणा च सत्यकामेन तं प्रति विद्योच्यते। श्रवणादेरपि प्राबल्येन शिष्येण गुरुः प्रार्थ्यते। गुरुणापि उच्यते। एवं लिङ्गबाहुल्यात् गुरुप्रसाद एव बलवान् । न चेति कर्तव्यतात्वाद्दौर्बल्यं, यागीयहिंसायां इतिकर्तव्यताया एव प्राबल्यदर्शनात् । न च तर्हि श्रवणादिवैयर्थ्यम् । "श्रोतव्यो मन्तव्य" (बृ.उ.४-४-५) इति श्रुतेः।

गुरुप्रसादो बलवान् न तस्माद्बलवत्तरम् ।
तथापि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये । इत्यादिस्मृतेश्चेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **विशेषस्तु ज्ञाने स्यात्** इति । ज्ञाने जननीये श्रवणादिशिष्यप्रयत्नापेक्षया प्रसादपूर्वकगुरुप्रदानस्य प्राबल्यरूपो विशेषस्तु स्यादित्यर्थः।।२७।।

**ओं पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ओं**

स्यात् – पश्चात्तनोऽपि गुरुः स्वीकार्यः स्यात्, कुतः? प्रकरणात् – प्रकृष्टानुग्रहकरणात् । उक्तस्यापवादमाह – पूर्वविकल्प इति पश्चात्तनः पूर्वेण समश्चेद्विकल्पः स्यात् । न तूत्तमवत् स्वीकारनियमः। तत्र दृष्टान्तः क्रियामानसवदिति परनिपातः मानसक्रियावत् यथा फलतः समानयोर्ध्यानयोः विकल्पः तथेति सूत्रार्थः।

अत्र प्रथमप्राप्त एव गुरुः स्वीकार्यो न तु तत्परित्यागेनान्यः स्वीकार्यः । "गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्" इत्युक्तेः इति प्राप्ते –

न पूर्वप्राप्तः एव गुरुरिति नियमः। पश्चात्तनोपि पूर्वस्मादुत्तमो गुरुः समग्रानुग्रहं करोति चेत् पूर्वस्यानुज्ञां विना स्वीकार्यः। अन्यथा न स्वीकार्यः। अधमो न स्वीकार्य एव। समग्रानुग्रहकर्ता पूर्वेण समश्चेत् पूर्वानुज्ञया स्वीकार्यः नो चेत् न स्वीकार्यः इति विकल्पः स्यात् ।

पूर्वसादुत्तमो लब्धः स्वयमेव गुरुर्यदि।
गृह्णीयादविचारेण विकल्पः समयोर्भवेत् ।। इति स्मृतेरिति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह – **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। यदि प्रथमप्राप्तगुर्वपेक्षया पश्चात्प्राप्तस्य उत्तमत्वादिरूपो विशेषः स्यात्तर्हि ज्ञाने तादर्थ्ये सप्तमी, ज्ञानार्थं उत्तरोत्तरं पश्चात्प्राप्तं गुर्वाख्यं वस्तु स्वीकार्यः स्यादित्यर्थः।।२८।।

## ओं विद्यैव तु निर्धारणात् ओं

विद्यैव मुक्तिसाधनं, न कर्म, कुतः? निर्धारणात् । "नान्यः पन्था" (श्वे.उ.३-८) इति अन्यनिरासेन ज्ञानस्यैव मुक्तिहेतुत्वनिर्धारणादित्यर्थः। तुशब्दः कर्मवचनात् "नान्यः पन्था" इत्यस्य प्राबल्यसूचक इति सूत्रार्थः।

अत्र न भगवदुपासनं कार्यं व्यर्थत्वात् । न च मोक्षसाधनज्ञानार्थं तदिति वाच्यम् । ज्ञानस्य मोक्षसाधनत्वानिश्चयात् । तथा हि, "तमेवं" इत्यादिना ज्ञानस्य मोक्षसाधनत्वं श्रूयते । तथा कर्मणोऽपि । "कर्मणैव हि संसिद्धिम्" (भ.गी.३-२०)इत्यादिना मोक्षसाधनत्वं स्मर्यते। अतो नोपासनं ज्ञानार्थं कार्यं इति प्राप्ते -

कार्यमेव ज्ञानायोपासनं , "नान्यः पन्था" इति सावधारणविद्यावचनस्य कर्मवचनादपि प्राबल्येन विद्ययैव मोक्ष इत्यवधारणसम्भवात् । अतो ज्ञानोपासनं कार्यमिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति । ज्ञाने तु - अपरोक्षज्ञाने सत्येव विशेषः स्यात् । न कर्मणेत्यर्थः।।२९।।

## ओं श्रुत्यादिबलीयस्त्वाच्च न बाधः ओं

विद्यावचनस्य कर्मवचनेन न बाधः। कुतः ? श्रुत्यादिबलीयस्त्वात् । बलवच्छ्रुतिलिङ्गादिभ्यो विद्यायाः एव मोक्षसाधनत्वावगमात् इति सूत्रार्थः।

अत्र कर्मसाध्य एव मोक्षः "कर्मणैव हि" इति वचनात् । न च वाच्यं विद्यावचनस्य सावधारणत्वेन प्राबल्यात्तद्विरोधः स्मृतेरिति। स्मृतेरपि सावधारणत्वात् । न चैतावता तयोः साम्यम्। भगवद्वाक्यत्वेन स्मृतेरेव प्राबल्यादिति प्राप्ते -

ज्ञानसाध्य एव मोक्षः। न चैवं प्रमाणान्तरबाधः। निरवकाशावधारणयुक्त "तमेवम्"(श्वे.उ.३-८) इति श्रुतेः।

> इन्द्रोऽश्वमेधांश्छतमिष्ट्वापि राजा ब्रह्माणमीड्यं समुवाचोपसन्नः।
> न कर्मभिः न धनैर्नैव चान्यैः पश्येत् सुखं तेन तत्वं ब्रवीहि।

इति बहुकर्मकृतोपीन्द्रस्य निरवकाश तत्वज्ञानप्रार्थनलिङ्गात् । "नास्त्यकृतः कृतेन" (मुं.उ.१-२-१२) इति अनित्येन कर्मणा नित्यपुरुषार्थो न भवतीति निरवकाशोपपत्तेश्च।

> कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते।
> तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः। इति युक्तिमद्भगवद्वचनाच्च ।

यत एवं मोक्षस्य ज्ञानसाध्यत्वे प्रत्येकं प्रबलश्रुत्यादिभावः अतो विद्यैव मोक्षसाधनम् । न चैवं तर्हि स्मृत्यप्रामाण्यप्राप्तिरिति वाच्यम् । अवधारणस्य कर्मायोगव्यवच्छेदार्थत्वादिति सिद्धान्तः कृतः ।।

तस्य तात्पर्यमाह – **विशेषस्तु ज्ञाने स्यात्** इति। विषयसप्तमी। यतो ज्ञाने ज्ञानविषय एव, ज्ञानस्य मोक्षसाधनत्वविषय एवेति यावत् । प्रत्येकं बलवच्छ्रुत्यादिसद्भावरूपो विशेषः स्यात् न कर्मविषये अतो विद्यैव मोक्षसाधनमित्यर्थः ।।३०।।

## ओं अनुबन्धादिभ्यः ओं

अनुबन्धो भक्तिः। शमादिरादिपदार्थः। न केवलं श्रवणादिना गुरुप्रसादेन च अपरोक्षज्ञानं किन्तु भक्त्यादिभिश्च। कुतः ? तथा स्मृतेरिति सूत्रार्थः।

अत्र न भक्त्यादिकं ज्ञानार्थमपेक्षितम् । गुरुप्रसादासाध्यस्यैवाभावात् । ''सम्यग्लक्षणसम्पन्नो यद्द्यात् सुप्सन्नधीः। शिष्याय सत्यं भवति तत्सर्वं नात्र संशयः'' इति वचनादिति प्राप्ते –

न केवलं श्रवणादेः गुरुप्रसादाच्च भगवद्दर्शनं किन्तु हरिगुरुभक्तिशमादेरपि । किमत्र मानमिति चेत् न

'भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम् । दद्याच्छमदमादींश्च तेन चैते गुणाः पुनः।

तैस्सर्वैः दर्शनं विष्णोः श्रवणादिकृतं भवेत् ।(नारायणाध्यात्म)इति वचनादिति' सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **विशेषस्तु ज्ञाने स्यात्** इति। न केवलं ज्ञानार्थं गुरुप्रसादादिरपेक्षितः किन्तु हरिभक्त्यादिरूपविशेषोप्यपेक्षितः स्यादित्यर्थः ।।३१।।

## ओं प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ओं

प्रज्ञान्तरं – प्रज्ञाविशेषः अविच्छिन्नपरोक्षज्ञानसन्तानरूपध्यानं, तस्य पृथक्त्ववत् नाना विधत्ववत् दृष्टिश्च नानाविधेत्यर्थः। कुत इत्यत उक्तं – तदुक्तमिति। तत्तु अपरोक्षज्ञाने तारतम्यं श्रुत्यादौ उक्तमिति सूत्रार्थः।

अत्र एकप्रकारमेव भगवद्दर्शनम् । ''दृष्ट्वैव तं मुच्यते नापरेण'' इति सर्वेषामविशेषितज्ञानेन मोक्षश्रवणादिति प्राप्ते –

अनेकप्रकारमेवाधिकारिणां भगवद्दर्शनं तत्साधनोपासनस्य अनेकप्रकारत्वात् । फलस्य साधनानुसारित्वात् । न चात्र प्रमाणाभावः। ''अन्तर्दृष्टयो बहिर्दृष्टय'' (कमठ) इति श्रुतेः।

दृष्ट्वैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा ।
दर्शनेनान्तरेणान्ये देवा सर्वत्र दर्शनात् ।। (आध्यात्म)इति स्मृतेश्च ।

न च ''दृष्ट्वैव'' इति श्रुतिविरोधः। यथायोग्यं दृष्ट्वेत्यर्थोपपत्तेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्** इति । मनुष्योत्तममारभ्य ब्रह्मपर्यन्तं ज्ञाने अपरोक्षज्ञाने, अन्तर्दृष्टित्वबहिर्दृष्टित्वादिरूपो विशेषः स्यादित्यर्थः ।।३२ ।।

**ओं न सामान्यादप्युपलब्धेः मृत्युवन्न हि लोकापत्तिः ओं**

सामान्यादुपलब्धेरपि सामान्यतो यत्किञ्चिद्रूपदर्शनादपि मुक्तिः न भवति, किन्तु स्वयोग्यदर्शनादेव। तत्र दृष्टान्तः -मृत्युवदिति। यथा मरणसामान्यन्यायान्न मुक्तिः किन्तु मरणविशेषात्तथेति। यदि न सामान्यदर्शनेन मुक्तिस्तर्हि तस्य वैफल्यं स्यात् । न च तद्युक्त म् । अतः तस्य यत्फलं सैव मुक्तिरित्यत उक्तं - न हि लोकापत्तिरिति । भगवद्रूपदर्शनफलभूतमहरादि-लोकप्राप्तिः मुक्तिः न हि भवतीत्यर्थः। महरादेः ज्ञानिप्राप्यत्वं तु ''ईयुः त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान्''() इति वचनसिद्धमिति सूत्रार्थः।

अत्र यत्किञ्चिद्रूपदर्शनमेव मोक्षसाधनं न बिम्बदर्शनमिति नियमः। भगवतः सर्वरूपेष्वपि साम्यात् । अतो न बिम्बोपासननियतिः इति प्राप्ते -

न भगवद्रूपाणां साम्येन यत्किञ्चिद्रूपदर्शनेन मुक्तिः। किन्नाम स्वबिम्बदर्शनादेव। ''समोऽपि भगवान् बिम्बदर्शन एवैनं मोचयति'' इति श्रुतेः।

दर्शनेनात्मयोग्येन मुक्तिर्नान्येन केनचित् । (आध्यात्म)इति वचनाच्चेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति । ज्ञाने - मोक्षसाधनापरोक्षज्ञाने बिम्बविषयकत्वरूपविशेषः स्यादेवेत्यर्थः ।।३३ ।।

**ओं परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ओं**

परेण च परमात्मनैवापरोक्षज्ञानं, न भक्त्या, कुतः ? एतैरुपायैरिति श्रुतेः। तर्हि ''भक्तिरेवैनम्'' (माठर) इति श्रुतिविरोध इत्यत उक्तं - उक्तं शब्दस्य ताद्विध्यमिति। यतः शब्दस्य भक्तिश्रुतेः ताद्विध्यं भक्तिस्थहरिप्रतिपादकत्वं अतो न विरोध इत्यर्थः। सत्स्वन्येषु साधनेषु भक्तेः विशिष्योक्तिः कुतः ? इत्यत उक्तं - भूयस्त्वात्त्वनुबन्ध इति। भूयस्त्वात् साधनेषु प्रधानत्वात् , अनुबन्धो भक्तिः श्रुतौ उक्त इति सूत्रार्थः।

अत्र भक्त्यैव दर्शनं न प्रसादेन ''भक्तिरेवैनं दर्शयति'' (माठर) इति श्रुतेः। ततश्च पुरुषस्य साधनसामर्थ्येनैव दर्शनसम्भवात् । न तस्याव्यक्तत्वमिति प्राप्ते -

भक्त्या प्रसन्नपरमात्मनैवापरोक्षज्ञानं "एतैरुपायैः यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम" इति श्रुतेः। न च भक्तिश्रुतिविरोधः। तस्याः साधनेषु प्राधान्याभिप्रायेण प्रवृत्तत्वात्। अतो दर्शनादेः पुरुषप्रयत्नसाध्यत्वाभावाद्युक्तमव्यक्तत्वं ब्रह्मणः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति । प्रवचनाद्युपायैः प्रसन्नो विष्णुरेव ज्ञाने दर्शनार्थं स्यात् । तर्हि भक्तिश्रुतिः कथमुपपद्यत इत्यत उक्तं - **विशेषस्तु स्यात्** इति। भक्तेः साधनेषु प्रधानत्वरूपो विशेषस्तु स्यात् । न च करणे कर्तृत्वव्यपदेशः कुत्रापि न दृष्ट इति वाच्यम्। ङ्कहन्ता रामशरङ्क इति करणेऽपि कर्तृत्वव्यपदेशदर्शनादिति ।।३४।।

**ओं एक आत्मनः शरीरे भावात् ओं**

अंशः अंशीत्येक एव, कुतः ? आत्मनः - अंशिनः सम्बन्धिनि शरीरे अंशिकर्मनिर्मितशरीरे अंशस्य भावात् सत्त्वात् । अतो जीवस्यानादित्वात् तद्योग्यतायाः अनादित्वमिति सूत्रार्थः।

अत्र नोपासना अनादियोग्यतासापेक्षा । इन्द्राद्यंशिगतसुखाद्यनुसन्धानाभावेन इन्द्रादिभ्यो भिन्नानां इन्द्राद्यंशानां अर्जुनादीनां उत्पत्तिमत्त्वेन तद्योग्यतायाः अनादित्वाभावादिति प्राप्ते -

अस्त्येव सर्वेषामुपासनादौ अनादियोग्यतापेक्षा । न चार्जुनादीनां उत्पत्तिमत्त्वेन तद्योग्यतायाः अनादित्वाभावादिति वाच्यम् । तेषामंश्यभिन्नत्वेन तद्योग्यताया एव तद्योग्यतात्वात् । न च अंशस्य अंशिगतसुखाद्यनुसन्धानाभावेन अंश्यभेद एव असिद्ध इति वाच्यम् । ईश्वराचिन्त्यशक्त्या अंशेनांशिगतस्य सर्वस्यानुसन्धीयमानत्वाभावेऽपि अंशगतज्ञानादेः अंशिनानुसन्धीयमानत्वेन तयोरभेदस्यैव सिद्धत्वात् । तदुक्तम् ।

अंशिनस्तु पृथग्जाताः अंशास्तस्यैव कर्मणा।
पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा।। (परमसंहिता)इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। ज्ञाने ज्ञानसाधनोपासने विशेषः अनादियोग्यतासापेक्षत्वरूपः स्यादित्यर्थः।।३५।।

**ओं अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ओं**

अङ्गावबद्धाः भगवदङ्गाश्रिताः ब्रह्मादिदेवताः उपास्या एव। कुतः ? वेदेषु तदुक्तेः फलान्तरभावात् । तदुपासने तुशब्दसूचितविशेषोऽस्ति । प्रतिवेदं सर्ववेदानां सर्वशाखासु ब्रह्माद्यङ्गदेवतासम्बन्धित्वेनोक्ताः गुणाः नाधमेषूपसंहारे न कश्चिद्विरोधः। तेषां तद्गुणित्वात् । कुत इत्यत उक्तं - हीति। तथा श्रुत्यादिसिद्धत्वादिति सूत्रार्थः।

**अत्र केवलमेव ब्रह्मोपासनं कार्यम् । न भगवदङ्गाश्रितब्रह्मादिदेवतोपासनम् । "तमेवेकं जानथ आत्मानं अन्या वाचो विमुञ्चथ" इति श्रुतेः। "पूजयेन्नान्यदेवता" इति स्मृतेश्च इति प्राप्ते –**

कार्यमेवङ्गदेवतोपासनम् । न च श्रुत्यादिविरोधः। प्राधान्येन तदुपासनस्य निषिद्धत्वात् इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **सुरेश्वरैः सहैव उपास्यो विष्णुः** इति । स्वाङ्गाश्रितैरितरैरिति शेषः। तथा च देवानां भगवदङ्गाश्रितत्वेनैव उपासनं कार्यं न प्राधान्येनेति भावः ।।३६।।

**ओं भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ओं**

भूम्नः – भूमगुणस्य, ज्यायस्त्वं – सर्वगुणेषु प्राधान्यं, तत्र दृष्टान्तः दीक्षाद्यात्मकक्रतुवदिति। कुतः इत्यत उक्तं तथा च दर्शयतीति । चशब्दो हेतौ। यतः भूमैवेति श्रुतिः तथा दर्शयतीति सूत्रार्थः।

अत्र भूमगुणः न सर्वोपास्यः वैय्यर्थ्यात् । आनन्दादिकं हि सर्वेष्टं न पूर्णत्वरूपं भूमत्वं येन तदुपासनं सार्थकं स्यात् । न चानन्दविशेषणत्वात्तदुपास्यत्वं, प्रियशिरस्त्वादौ व्यभिचारादिति प्राप्ते –

सर्वैरुपास्यो भूमगुणः। सर्वगुणेषु तस्य ज्यायस्त्वात् । यथा खलु दीक्षाप्राय-णीयोदयनीयाद्यात्मकस्य क्रतोः सर्वयागेष्वनुवर्तन एव साफल्यात् ज्यायस्त्वम् । तथा भूमत्वस्य सर्वत्रानन्दादिषु सहभावेनोपासन एव इष्टफलसिद्धेः ज्यायस्त्वम् । तदुक्तम् –

> भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते।
> तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः। (गौपवन)इति।

न च प्रियशिरस्त्वादौ व्यभिचारः। "भूमैव देव" इति श्रुति विहितत्वात् । अतः सर्वैः आनन्दाद्याः पूर्णत्वेनैवोपास्याः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **सर्वैरुपास्य** इति। भूमगुण इति शेषः। कुत इत्यत उक्तं – **विशेषस्तु स्यात्** इति । यत इति शेषः। सर्वगुणेषु भूमगुणस्य ज्यायस्त्वरूपो विशेषः स्यादित्यर्थः ।।३७।।

**ओं नानाशब्दादिभेदात् ओं**

भूमत्वमुपासने अधिकारिणो नानाप्रकारेण प्रतीयन्ते। कुतः ? शब्दादिभेदात् । शब्दादिप्रमाणानां अधिकारिणां योग्यताभेदेनानेकधा अर्थप्रत्यायकत्वात् इति सूत्रार्थः।

अत्र सर्वेषां पूर्णत्वं एकप्रकारेणैव प्रतीयते। भूमत्वे विशेषकल्पनायोगात् । विशेषाभावेऽपि तारतम्येन प्रतीत्यङ्गीकारे मिथ्योपासनाप्रसङ्गात् इति प्राप्ते –

भूमत्वमुपासने अधिकारिणां नानाप्रकारेणैव प्रतीयते। न चात्र प्रमाणाभावः।

"शब्दोऽनुमा तथैवाक्षो योग्यताभेदतः सदा। ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ।।

अतः पूर्णत्वमीशस्य नानैवेषां प्रदृश्यते।" (ब्रह्मतर्क)इति स्मृतेरेव प्रमाणत्वात् ।

न च भूमत्वे विशेषानुपपत्तिः। अतीतवत्सरवासराणां आनन्त्ये तारतम्यवत् भूमत्वे तारतम्योपपत्तिरिति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। अधिकारिणां उत्तरोत्तरं ज्ञाने भूमत्वप्रतीतौ विशेषः तारतम्यं स्यात् इत्यर्थः।।३८।।

## ओं विकल्पो विशिष्टफलत्वात् ओं

स्वयोग्योपासनान्तरं नृसिंहाद्युपासनस्य विकल्पः कर्तव्यत्वं न वेति। न तु कार्यमेवेति नियमः। कुतः ? विशिष्टफलत्वात् । दुरितनिवृत्तिरूपफलविशेषहेतुत्वात् यस्य तदपेक्षा जायते तेन कार्यं अन्येन न कार्यमिति सूत्रार्थः।

अत्र नाधिकारिणा नृसिंहाद्युपासनं कार्यम् । बिम्बोपासनस्यैव मोक्षहेतुत्वेन तस्य मोक्षहेतुत्वाभावात् । प्रत्युत मोक्षहेतुबिम्बोपासनविरोधित्वाच्चेति प्राप्ते -

नृसिंहाद्युपासनं न कर्तव्यमेवेति न भवति। किन्तु बिम्बोपसनमनुष्ठाय दुरितनिवृत्तिरूपविशिष्टफलापेक्षा चेत् कर्तव्यं, न चेन्न कर्तव्यमिति विकल्पः। न च नृसिंहाद्युपासनाभावे दुरुतनिवृत्त्यसिद्धिः। तीव्रया स्वबिम्बोपासनयापि दुरितनिवृत्तिसिद्धेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति । ज्ञाने उपासने नृसिंहादेरिति शेषः। विशेषः विकल्परूपः स्यात् । यस्य दुरितनिवृत्तिरूपविशिष्टफलापेक्षास्ति तेन कर्तव्यम् । यस्य तु नास्ति तेन नेत्येवंरूपो विशेषः स्यादित्यर्थः।।३९।।

## ओं काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ओं

काम्यास्तु कामसाधनभगवद्गुणास्तु यथाकामं वित्तादिकामानुसारेण समुच्चीयेरन् न वा, उपसंहार्या न वा, अमुमुक्षुभिः उपसंहर्तव्याः अन्यैर्नेति व्यवस्थितविकल्पार्थो वाशब्दः, कुतः ? पूर्वहेत्वभावात्, मोक्षेच्छातः पूर्वं यो हेतुः वित्तादिकामः तदभावात् - मुमुक्षूणां कामाख्यहेत्वभावात् इत्यर्थः। अथवा एतैरेव फलार्थं नोपसंहर्तव्याः ईश्वरप्रसादार्थं उपसंहर्तव्याः पूर्वहेत्वभावादिति सूत्रार्थः।

**अत्र कामसाधनभगवद्गुणोपासनं तदनुगुणगुणोपसंहारेणावश्यकम् । तत्साध्यस्य धनादेः ज्ञानादिद्वारा मोक्षहेतुत्वात् । "तुष्टोर्थेन गुरुर्यस्मात् कैवल्यं दातुमप्यलम्"** (म.ता.नि.२९-५२) **इति वचनादिति प्राप्ते -**

**कामसाधनभगवद्रूपे कामसाधनगुणाः स्वस्वकामानुसारेणोपसंहर्तव्याः न वेति विकल्प एव, न तु नियतिः। विकल्पश्चामुमुक्षुभिः कार्यः मुमुक्षुभिर्नेति। मुमुक्षूणां कामाख्यहेत्वभावात् । मुमुक्षुष्वेव वाऽयं विकल्पः। कुतः? कामाख्यहेत्वभावादिति सिद्धान्तः कृतः।**

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। ज्ञाने उपासने कामसाधनभगवद्रूपस्येति शेषः। विशेषः विकल्पः अमुमुक्षुभिः कार्यः । मुमुक्षुभिर्नेत्येवंरूपः स्यात् । अथवा मुमुक्षुभिरेव फलार्थं न कार्यः। ईश्वरप्रसादार्थं कार्यं इत्येवं विकल्परूपो विशेषः स्यादित्यर्थः ।।४० ।।

## ओं अङ्गेषु यथाश्रयभावः ओं

यथाश्रयभावः उक्तः श्रुतौ। सूर्याद्यङ्गदेवतानां यथा भगवदङ्गाश्रयत्वं उक्तं श्रुतौ तथैव तेषां भगवदङ्गेषूपासनं कार्यं तद्योग्यैरिति सूत्रार्थः।

अत्र न भगवदङ्गाश्रितत्वेन तदेवोपासनं कार्यं अविहितत्वादिति प्राप्ते -

सूर्यादिदेवानां "चक्षोस्सूर्योऽजायत" (ऋ.सं.१०-९०-१३) इत्यादिना यथा यथा भगवदङ्गाश्रितत्वं उक्तं तथा तथोपासनं कार्यं अन्यथा तदुक्तिवैय्यर्थ्यात् । "यस्मिन् यस्मिन् यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैव" ति पौत्रायणश्रुतौ तथा विहितत्वाच्चेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सुरेश्वरैरुपास्यो विष्णुः** इति। भगवदङ्गाश्रितैरिति शेषः। उक्त इति च ।।४१ ।।

## ओं न वा तत्सहभावश्रुतेः ओं

न वाङ्गेषु देवतोपासनं कार्यं, कुतः ? अतत्सहभावश्रुतेः। तथोपासनस्य सर्वशाखागतोपासनेन सहभावाश्रयणादिति नञो व्यत्यासेन अन्वयः कार्यः। वाशब्दः देवान्यापेक्षया । अयमाशयः। सर्वशाखासु सूर्याश्रय चक्षुष्मान् विष्णुः इत्यादिरूपेणोपासनस्यानुक्तत्वात् सर्वैः तथोपासनं न कार्यं कासुचिच्छाखासु उक्तत्वात् देवैस्तथोपासनं कार्यं इति सूत्रार्थः।

अत्र देवानां भगवदङ्गाश्रितत्वेन उपासनं केनापि न कर्तव्यम् । तथोपासनस्य कुत्राप्यनुक्तत्वात् इति प्राप्ते -

न कर्तव्य एव सर्वैः भगवदङ्गेषु अङ्गदेवतोपसंहारः। सर्वशाखासु तथोपासनस्याश्रवणात् । किन्नाम, देवैरेव कार्यः। "सर्वैः गुणैः देवगणा उपासते" इति श्रुतेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु स्यात्** इति। देवताश्रयाङ्गत्वेन भगवदुपासने विशेषः, देवदेवव्यतिरिक्तानां कर्तव्यात्वाकर्तव्यत्वलक्षणो विशेषस्तु स्यादित्यर्थः।

अत्राधिकरणानां पुनरुक्तिश्च भावबोदोक्तरीत्या परिहरणीया। एवं च ब्रह्मणा वेदोक्तानन्तगुणैः देवैः मनुष्योत्तमपर्यन्तं स्वस्वयोग्यबहुगुणैः मनुष्योत्तमैः उक्तगुणचतुष्टयेन तेभ्यो निकृष्टैः आत्मत्वाख्यैकगुणेनोपास्यो भगवान्नारायण इति सिद्धम् ।।४२।।

**मदाचार्यमनोधाममध्वमानसमश्चके।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां तृतीयाध्यायस्य तृतीयः पादः।।**

**ना.टी–**

## अथ तृतीयाध्यायस्य तृतीयः पादः

श्रीकृष्णाय नमः। उपासना अस्मिन्पादे उच्यते । सा च द्विविधा। तदुक्तं

"सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी। ध्यानरूपापरा चेति तदंगं धारणादिकम्।।

इति। तस्याश्च भक्तिसाध्यत्वज्ञानसाधनत्वाच्च भक्त्यनन्तरं ज्ञानात्पूर्वं निरूपणं क्रियते। तत्राद्यायाः ध्यानांगत्वात्सैव प्रथमाधिकणे अभिधीयते। तत्र स्वस्वशाखोक्तमेव ब्रह्म ज्ञातव्यम् । प्रतिशाखं नानारूपाणामर्थानामुक्तत्वात् । मन्दानां सर्वशाखाज्ञानाभावात् तेषां ध्यानानधिकारप्रसंगात् । अतः स्वस्वशाखागतस्यैवार्थस्य ज्ञेयत्वात् । सर्वशाखागतवाक्यार्थनिर्णायकन्यायग्रथनात्मकस्यास्य शास्त्रस्य न सर्वोपादेयतेति प्राप्ते सूत्रितं च भगवता बादरायणेन **ओं सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** । सर्वे च ते वेदाश्च सर्ववेदाः तेषामन्तो निर्णयः। तेन प्रतीयते ज्ञायत इति सर्ववेदन्तप्रत्ययं ब्रह्म । "आत्मेत्येवोपासीत्" (बृ.उ.३-४-७) "श्रोतव्यो मन्तव्यः सोन्वेष्टव्यः स जिज्ञासितव्यः" इत्यादिविधीनां तदुक्तयुक्तीनां चाविशिष्टत्वादिति सूत्रार्थः। उक्तमाक्षिप्य समादधत्सूत्रं **ओं भेदान्नेति चेदेकस्यामपि** ।(बृ.उ.५-९-२८) "विज्ञानमानन्दं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" (तै.उ.२-१)इत्यादिप्रतिशाखमुक्तिभेदान्नैकाधिकरिविषयाः सर्वशाखा इति चेन्न ।

एकस्यामपि शाखायां(बृ.उ.३-४-७) ''आत्मेत्येवोपासीत'' ''कं ब्रह्म खं ब्रह्म'' (छां.उ.४-१०-५) इत्यादिभेददर्शनात्।

हेत्वन्तरेणैतदर्थं प्रतिपादयत्सूत्रं **ओं स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च**। ''स्वाध्यायो अध्येतव्य'' (तै.आ.२-१५)इत्यध्ययनविधेयसर्वाधिकारिसाधारणत्वात् । न ह्यनेनायं स्वाध्यायोऽध्येतव्य इति विशेषविधिरस्ति। सर्वशाखोक्तकर्मसमाचरणे सर्वेषामधिकाराच्च । हिशब्दात् ''वेदः कृत्स्नोऽवगन्तव्यः सरहस्यो द्विजन्मना'' इति स्मृतेः। तथा

सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः।
आनन्दो हि फलं यस्माच्छाखाभेदो ह्यशक्तिजः(तः) ।

सर्वकर्मकृतौ यस्मादशक्ताः सर्वजन्तवः ।
शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्लृपत्।।

इति च । एतेनाधीयते इत्यध्ययनम् । अध्यायः स्वाध्यायः सोऽध्येतव्यः। स्वशाखा अध्ययनं कर्त्तव्यमिति व्याचक्षाणाः पूर्वमीमांसाभाष्यवार्तिककाराः परास्ताः। उक्तस्मृतिविरोधात्। स्वाध्यायशब्दस्यैव वेदवाचित्वेन तत्र स्वस्वाध्याय इति कुसृष्टिकल्पनायोगाच्च । यानि चेमानि विरुद्धकर्माणि सामगो वटु मुण्डोऽन्यः शिखीत्यादीनि तानि चैकशाखागतषोडशीग्रहणाग्रहणवद्विकल्पेन भवन्ति। नन्वेवं सति मन्दानां सर्वशाखोक्तप्रकारेण ज्ञानाभावात् ध्यानाधिकारो न स्यादित्यतः सूत्रं **ओं सलिलवच्च तन्नियमः**। यथा खलु सर्वासामपां समुद्रमेवैकायतनमिति नियमः प्रतिबन्धाभावमपेक्ष्यैव न तु निरपवादः। एवं मुमुक्षूणां सर्वशाखोक्तप्रकारेण ब्रह्म ज्ञातव्यमिति नियमोऽपि पुरुषशक्तिमपेक्ष्यैव।

यथा नदीनां सलिलं शक्ये सागरगं भवेत् ।
एवं वाक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तये।। (अग्नि.पु)।

उक्तमर्थं श्रुत्यापि समर्थयत्सूत्रं **ओं दर्शयति च** । ''सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिध्येत् । तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः'' इति चतुर्वेदशिखायाम्।।**१**।।

एतत्तात्पर्यमाह **सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः। यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः। उपास्यः स्ववेदैश्च सर्वैरपि** इति। विष्णुः सर्वैरप्यधिकारिभिः सर्वैर्वेदैर्ज्ञेय इति वक्ष्यमाणमपकृष्य सिंहावलोकनेन सम्बन्धनीयम् । ननु सर्ववेदज्ञानस्यापि किं फलमित्यतः उक्तं **अखिलैर्गुणैरुपास्य** इति। यस्मादखिलैः गुणैरुपास्यः । न चाखिला गुणा एकत्रोच्यन्ते अतः सर्वैर्वेदैर्ज्ञेय इत्यर्थः। उपासना च ज्ञानरूपा । ''सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपापरा च'' इति तदंगधारणादिकम् । ज्ञानं च श्रवणादि।

सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।

इति भाष्यलक्षणाक्रान्तत्वादणुभाष्यस्येत्यभिप्रेत्य सर्वैरिति स्वपदप्रतिपाद्यं वर्णयति **मानुषैः सुरेश्वरैर्ब्रह्मणा च** इति। मानुषैर्मनुष्योत्तमैः। मानुषादिब्रह्मपर्यन्तैः सर्वैरित्यर्थः। किं लक्षणैः ? एतैर्यथाक्रमं बहुगुणैः उत्तरोत्तरतारतम्यवद्भिरित्यर्थः। ननु ब्रह्मादिभिरतिसमर्थैरपि कुतोऽयमेवोपास्य इत्यतस्तस्योपास्यताप्रयोजकं वैशिष्ट्यमाह **सच्चिदानन्द आत्मा** इति। इतिशब्दो हेतौ। यस्मादुक्तगुणविशिष्टः निर्दोषनिरतियज्ञानानन्दपूर्णः स्वस्यादानादिकर्त्ता स्वामी च इति। अतो ब्रह्माद्युत्तमत्वात्तैरुपास्य इत्यर्थः। सर्ववेदैश्चेति चशब्देन इतिहासपुराणादिकं समुच्चिनोति। तदुक्तं "उपास्य एकः परतः परो यो वेदैश्च सर्वै सह चेतिहासैः। सपंचरात्रैः सपुराणैश्च देवैः सर्वैर्गुणैस्तत्र तत्र प्रतीतैः" इति। ननु सर्ववेदज्ञानं न सम्पादनीयं व्यर्थत्वाच्च । न चोपासनर्थत्वादव्यर्थमित्युक्तेति वाच्यम् । तस्याध्ययनरूपायाः कर्तुमशक्यत्वादित्यतः सूत्रं **ओं उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च**। सर्ववेदार्थभूतानामानन्दादिगुणानामपहतपाप्मात्वादिदोषा-भावानां वा भेदादविभागेनोपसंहारः कर्त्तव्यः । कुतः ? विधिप्राप्तेनाकरणे प्रत्यवायापत्तेः। विध्युक्त-संन्ध्यावन्दनादिवद्

विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि । यथा कार्याणि सर्वैश्च सर्वाण्येव विशेषतः।।

एवं सर्वगुणान्सर्वदोषाभावांश्च यत्नतः । योजयित्वैव भगवानुपास्यो नान्यथा क्वचित् ।।

इत्याग्नेये। तच्चोपासनं समाने एव विषये कर्त्तव्यम् । पूर्णत्वाविरोधिनः भगवति योग्या एव धर्मा उपास्याः। ननु "सोऽरोदीत्" (तै.सं.१-५-१)इत्यादिवेदोक्ता अपि रोदनादयो न अयोग्याः। अयोग्योपासनस्यानर्थहेतुत्वादिति भावः। तथा च संकर्षणसूत्रं अचेतनाऽसत्याऽयोग्यान्यनुपास्यान्य-फलत्वविपर्याभ्यां निष्फलत्वाद्विपरीतफलत्वाच्च एतान्यनुपास्यानि इत्यर्थः।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं अन्यथात्वं चशब्दादिति चेन्नाविशेषात्** । "आत्मेत्येवोपासीत" (बृ.उ.३-४-७)इत्यवधारणेन अनुपसंहारस्यापि विहितत्वेन विहितक्रियालोपप्रसंगान्नोपसंहारः कर्तव्य इति चेन्न । एते गुणा नोपसंहार्या इति विशेषप्रमाणाभावात्। अवधारणस्यानात्मत्वनिवृत्यर्थत्वेनोपपत्तेः। अन्यथा सर्वैर्गुणैरिति श्रुतावुपसंहारोक्तिविरोध इति भावः। ननूक्तमशक्यत्वात्कथं सर्वगुणोपसंहार स्यादित्यतः सूत्रं **ओं न वा प्रकरणभेदात्परोवीयस्त्वादिवत्**। न सर्वगुणोपसंहारः कर्त्तव्यः । परोवरीयो वैश्वानरादिप्रकरणभेदात् । यद्येकैकस्य सर्वगुणोपासनं स्यात्तर्हि प्रकरणानि न भिध्येरन् । कारणान्तराभावात्। परोवरीयस्त्वादिप्रकरणेषु "स एष परोवरीयानुद्गीथः। स एषोऽनन्त" इत्यादिकमेवोच्यते न सर्वगुणाः। अयं चाभ्युपगमवादः सूत्रकारस्य । उक्तमाक्षिप्य समादधत्सूत्रं **ओं संज्ञातश्चेत्तदुक्तमस्ति तु तदपि**। कर्तव्य एव सर्ववेदोक्तगुणोपसंहारः। सर्ववेदानां

**भगवन्नामत्वस्योक्तत्वात् । सौत्रसंज्ञाशब्दो नामार्थो** भावप्रधानः। नाम्नां च गुणाभिधायकत्वात् । **सर्वविद्यानां भगवन्नामत्वं** च "अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तं होवाच यद्वेत्थ ते तमोपासीदतस्तदूर्ध्वं वक्ष्यामीति स होवाच" "ऋग्वेदं भगवो अध्येमि यजुर्वेदसामवेदमाथर्वणं चतुर्थमितिहासं पुराणं पंचमं वेदानां वेदं" (छां.उ.७-१-१,२)इत्यादिना नारदेनात्मनः सर्वविद्यावेदित्वमुक्त्वा "सोऽहं भगवो मन्त्रविदेवास्मि तं निर्णयाज्ञानान्नात्मवित्" (छां.उ.७-१-३) इत्युक्ते सनत्कुमारेण तं प्रति "यद्वै किंचैतदध्यगीष्टा नामैवेतत्" इत्युक्तवादादवगम्यत इति चेत् । सत्यं, सर्वविद्यानां भगवन्नामत्वान्नाम्नां च गुणाभिधायकत्वात्सर्वगुणोपसंहारः कर्त्तव्य इति नास्माकं विरोधि। कुतः। अस्माभिरप्युपसंहारः कर्त्तव्य इत्युक्तत्वात् । न केवलमुक्तयुक्तिमात्रादेतदुक्तं किन्तु श्रुतिरूपप्रमाणमप्यत्रार्थे अस्तीति । "नाम वा एता ब्रह्मणः सर्वविद्यास्तस्मादेकः सर्वगुणैर्विचिन्त्य" इति कौण्डिण्यश्रुतेः। तत्तात्पर्यमाह **उपास्यः सर्ववेदैश्च सर्वैरपि** इति। चशब्दो भिन्नक्रमः उपास्य इत्यनेन सम्बध्यते । सर्वैरधिकारिभिः सर्ववेदैः सर्ववेदोक्तगुणैरुपास्यश्च। चशब्दादनुपास्यश्चेत्यर्थः ।।२।।

ननु एतदुपासनमनुपासनं च परस्परविरुद्धत्वात् व्याहतं कथमंगीकारार्हमित्यतो विषयभेदे-नोक्तार्थव्यवस्थापनाय सूत्रार्थं **प्राप्तेश्च समञ्जसम्**। यदुक्तमुपसंहारानुपसंहारौ कर्त्तव्याविति तत्समंजसमेव । न तु विरुद्धम् । कथं अधिकारियोग्यताविशेषस्य व्यवस्थापकस्य प्राप्तेः सम्भवात् । "यस्य यावद्गुणाः स्पष्टं प्रतिभासंत्युपासने। युगपत्स्वभुजौ यद्वद्ध्यायेत्तावत एव सः" इति श्रुतेः योग्यताविशेषनिर्णयोपपत्तेः।

गुणैः सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः।
अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु।। इति भविष्यत्पर्वणि ।

तस्य तात्पर्यमाह **यथाबलं** इति । उपास्यः सर्वैरित्यनुषज्यते। स्वयोग्यताबलमनतिक्रम्य स्वयोग्यतानुसारेण भगवानुपास्य इत्यर्थः। तद्विवरणार्थं सच्चिदानन्द इत्यादिवाक्यशेषः ।।३।।

नन्वल्पगुणोपासकानां मोक्षो अस्ति न वा । द्वितीये न तत्कर्त्तव्यम् । व्यर्थत्वात् । आद्ये तावन्मात्रेणैव मोक्षसिद्धिरिति व्यर्थमिति क्लेशसाध्यं सर्वगुणोपसंहारेणोपासनमित्यतः सूत्रं **सर्वाभेदादन्यत्रेमे**। अभेदो मेलनम्। सर्वगुणयुक्तत्वेनोपासनादेते तदुपासका ब्रह्मादयः। अन्यत्रैव फलो अल्पगुणोपासकैरप्राप्ये विशिष्टफले अधिकारिणो भवन्ति।

सम्पूर्णोपासनात् ब्रह्मा सम्पूर्णानन्दभाग्भवेत् ।
इतरे तु यथायोग्यं सम्यङ् मुक्तौ भवन्ति हि ।। इति पाद्मे ।।४।।

तदिदमाह **ब्रह्मणा त्वखिलैर्गुणैः** इत्यत्रविशेषार्थकतुशब्देन । अखिलैर्गुणैर्ब्रह्मोपास्य इति यदुच्यते तद्ब्रह्मण एव महाफलभाक्तरूपविशेषवत्वादित्यर्थः। अथ सर्वमुमुक्षुसाधारणगुणोपासन-प्रतिपादकं सूत्रं **ओं आनन्दादयः प्रधानस्य** । आनन्दादयश्चत्वारः सच्चिदानन्दा आत्मेति गुणाः सर्वैरुपास्याः। उपासनफलत्वेन प्रधानभूतस्य मोक्षस्यार्थे । अपेक्षितफलानुसारेणैव ईश्वरस्योपास्यत्वात् । "तं यथा यथोपासते तथैव भवति" इति श्रुतेः। तत्र सत्वं निर्दोषत्वं तस्य ज्ञानानन्दस्य सर्वस्येष्टत्वादात्मपदोदितस्वामित्वं तु सर्वापेक्षितभगवत्प्रीतिसाधनत्वात् उपास्यत्वम् । तदिदमाह **सच्चिदानन्द आत्मेति। मानुषैश्च** । चशब्दाद्वक्ष्यमाणैः सुरेश्वरैः । ब्रह्मणा चोपास्यः यथाक्रमं बहुगुणैः इदं सुरेश्वरविशेषणम् । अखिलैर्गुणैरिति इत्थं भूतलक्षणे तृतीया (पा.सू.२-३-२५) । स्वयोग्यतारतम्यक्रमेण बहुगुणयुक्तैः सुरेश्वरैः। तथा स्वयोग्यैः अखिलैर्गुणैर्युक्तेनापि ब्रह्मणाप्युक्तैश्चतुर्भिर्गुणैरुपास्य एव। गुणविशेषस्योपासाविशेषनिबन्धनत्वात्। विशेषगुणार्थमधि-कोपासेनापि एतद्गुणचतुष्टयं सर्वोपास्यमेव इति भावः। यद्वा यथाक्रमं बहुगुणैः बहुगुणयुक्तं तथा उपासकैरपि सुरेश्वरैः तथा अखिलैः गुणैर्युक्तत्वेन उपासकेनापि ब्रह्मणा मानुषैश्च सदादिगुणचतुष्टयेन उपास्य एव। तदुपासनाफलस्य सर्वेष्टत्वात् । अधिकं प्रविष्टं न तु तद्धानिरिति न्यायादिति भावः ।।५।।

इदानीं "तस्य प्रियमेव शिरः" (तै.उ.)इत्यादि श्रुत्युक्तप्रियशिरस्त्वादिगुणानां साधारण्यनिषेधार्थं सूत्रं **ओं प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे**। सर्वेषां प्रियशिरस्त्वादिगुणोपासनाप्राप्तिः नास्ति तेषां फले उपचयापचयरूपाधिक्यन्यूनतयोः सत्वात् । तत्र च उपासनायामुपचायापचयौ प्रयोजकौ। हिशब्देनात्र प्रमाणप्रसिद्धिं सूचयति। यथोक्तं वाराहे

नैव सर्वगुणाः सर्वैरुपास्या मुक्तिभेदतः। विरिंचस्यैव यन्मुक्तावानन्दस्य सुपूर्णता ।। इति।

एतत्तात्पर्यमाह **सर्वैरपि यथाबलम्। ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। सर्वैः स्वस्वयोग्यताबलमनतिक्रम्य विष्णुर्ज्ञेयः ध्येयः। नत्वयोग्यैरपि प्रियशिरस्त्वाद्यैः। कुतः? यतस्तेषामुपासकानामुत्तरोत्तरं फलविशेषोऽस्ति। स च साधनीभूते ज्ञाने ध्यानादिरूपे यदि विशेषस्तर्ह्येव स्यात्।।६।।

ननु देवादिभिरपि चतुर्गुणा एवोपास्याः । मोक्षफलस्य तावतैव सिद्धेः। अन्यथा मानुषाणामपि न स्यात्। न च योग्यतानियमादधिकोपसंहारः। उपासनतः प्राग्योग्यतायाः दुर्ज्ञेयत्वादधि-कोपासायामनर्थप्रसक्तेरित्यतः सूत्रं **ओं इतरे त्वर्थसामान्यात्** इति। इतरे गुणाः फलसामान्यापेक्ष-योपसंहर्तव्याः। फलोपासनयोः साम्यात् । भविष्यत्फलनिर्णयस्तु ब्रह्मणो अन्यस्य वा सर्वज्ञस्य गुरूपदेशेन युक्त एव। "यो यो भावो देवतानां विमुक्तौ तत्तत्प्राप्तौ तद्गुणानीशितुश्च। ब्रह्मादिशत्यथ तांस्ते विचिन्त्य तत्तद्भावं प्राप्नुवन्त्यात्मशक्त्या" इति श्रुतेः। तदिदमप्याह **सुरेश्वरैः। यथाक्रमं**

**बहुगुणैः ब्रह्मणा तु** इति। सुरेश्वरैः स्वयोग्यताक्रममनतिक्रम्य यद्भगवान्विष्णुः बहुगुणैरुपास्यस्तद्ब्रह्मणा ब्रह्मोपदेशेन तु तस्य तद्योग्यताज्ञानसद्भावरूपं विशेषं द्योतयति। अतो मध्यमगुणानां देवतोपास्यत्वं युक्तमिति भावः। तमेव विशेषं स्पष्टयति। **अखिलैर्गुणैः** इति। उपलक्षणे तृतीयैषा। उपासकस्वरूपयोग्यताज्ञातृत्वादिभिर्गुणैरुपलक्षितेनेत्यर्थः।।७।।

अथोपसंहारानुपसंहारौ प्रमाणेन प्रतिपादयितुं क्रमेण सूत्रद्वयं **ओं आध्यानाय प्रयोजनाभावात्**। आध्यानार्थं सर्वे गुणा उच्यन्ते प्रयोजनान्तराभावात्।

गुणाः सर्वे वेदितव्याः ध्यातव्याश्च न संशयः।
नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत्।। इति बृहत्तन्त्रे।

एतेन वेदेषु सर्वगुणवचनमुपसंहारे प्रमाणमुक्तं। **ओं आत्मशब्दाच्च**। "आत्मेत्येवोपासीत्" (छां.उ.३-४-७) इत्यवधारणमनुपसंहारे प्रमाणम्। अधिकारिभेदादविरोधः। प्राप्तेश्च समञ्जसमिति न्यायात्पूर्वोक्तविषयविभागव्यवस्थापि युक्ता। ननु सच्चिदानन्द आत्मेति चतुर्गुणानां सर्वोपास्यत्वे "आत्मेत्येवोपासीत्" इति श्रुतिविरोध इत्यतः सूत्रं **ओं आत्मगृहीतिरितरवदुत्तरात्**। (तै.उ.२-१) "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" (बृ.उ.५-९-२८)इत्यादि इतरनिर्देशवदात्मनिर्देशोऽप्युपपद्यते। न चावधारणविरोधः। स हि तदा स्याद्यद्यात्मशब्दोऽयं स्वामित्वमात्राभिधायकः स्यात्। न चैवं किं त्वानन्दादीनामप्यभिदायकः। कुतः? "अत्र ह्येते सर्व एकीभवन्ति" (बृ.उ.३-४-७)इत्युत्तरवाक्यात्। अत्रात्मगुणे सर्वेऽप्यानन्दादयो अन्तर्भवन्तीत्यर्थः।

आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते।
नित्यत्वाच्च तथात्मेति वेदवादिभिरीश्वरः।। इति बृहत्तन्त्रोक्तेः।

तदेतदाह **सच्चिदानन्दआत्मेति** इति। आत्मेति यन्मानुषैरुपास्य इत्युच्यते तत्सच्चिदानन्द इत्यपि भवति। उक्तविधया आत्मशब्दस्य तावदर्थकत्वादिति भावः।

अत्रोक्तमाक्षिप्य समादधत्सूत्रं **ओं अन्वयादिति चेत्स्यादवधारणात्** इति। तस्यार्थः "आप्तव्याप्तेरात्मशब्दः परमस्य प्रयुज्यते" इत्यात्मशब्द एव सर्वेषां गुणानामन्वयात्तत्र च ब्रह्मण एवाधिकारित्वान्नात्मेत्युपासनं सर्वसाधारणमिति चेन्न तस्यावधारणस्य ब्रह्मादिमानुषान्त-सर्वाधिकारिसाधारणत्वात्तेषां साम्याभावात्तांस्तानधिकारिणः प्रत्येव यथायथं तद्गुणगणप्रकाशकत्वादिति इतरान् प्रत्ययोग्यत्वात्प्रकाशकत्वादुक्तमुपपन्नम्। तदिदमप्याह **सच्चिदानन्द आत्मा** इत्यादिना। तत्र चैवं योजना। मानुषैरात्मेत्युपासने क्रियमाणे भगवान्सच्चिदानन्द आत्मेत्येवोपास्यः। उपासनार्हो भवति। अर्हे कृत्या तृचश्चेति स्मरणात्। तदुपासनायोग्यानां तावतामेव गुणानां आत्मशब्दः

प्रकाशको भवतीति भावः। सुरेश्वरैरात्मेत्युपासने क्रियमाणे यथाक्रमं स्वस्वयोग्यतानुसारैर्बहुगुणैर्भगवानुपास्यो भवति। तान्प्रति तदुपासनार्ह बहुगुणप्रकाशको भवति। ब्रह्मणा चात्मेत्युपासने क्रियमाणे भगवानखिलैगुणैरुपास्यो भवति। के ते सर्वगुणा इत्यतः उक्तं सर्ववेदैः इति। तस्यैव तत्राधिकारादिति भावः। ते च ज्ञानानन्दादयो गुणा अलौकिका एवोपास्या इत्यर्थप्रतिपादनाय सूत्रं कार्यख्यानादपूर्वं इति। कार्यस्य मोक्षरूपस्यालौकिकस्यैव आख्यानात्। साधनमपि उपासनमलौकिकविषयमेव इत्येतदप्याह सच्चिदानन्द आत्मा इत्यादिना। सदिति क्रियाविशेषणम् । ततश्चैवं योजना। मानुष्याद्यैः ब्रह्मान्तैर्यत्सच्चिदानन्द आत्मेत्युपासनीयः। तत्सद्यथा स्यात्तथा । सत्वं च लोकविलक्षणत्वमेव। प्राकृतस्य सर्वस्यापि ज्ञानसुखादेः सदोषत्वेनासत्वादिति भावः।।११।।

अत्र ब्रह्मवद् ब्रह्मण्या गुणोपसंहारे नाधिकारः। अन्यथा द्वयोः फलसाम्यापत्तिः। न च साऽस्ति। स्थानैक्येन गुणतारतम्येन च तयोः समविषमफलवत्वात् । अतः साधनतारतम्यमप्यावश्यकम्। तच्चैवं गुणोपासनायां साम्येऽपि क्रियोपासनायां वैषम्यात् । हिरण्यगर्भस्य हि विशष्य त्रिविक्रमत्वेन हिरण्यकशिपुविदारकत्वादिना भगवत्क्रियाणामुपासनम् । ब्रह्माण्यास्तु न तथा। किन्तु भगवान् नित्यविक्रान्त इति सामान्यरूपेण क्रियोपासनं गुणानां तु हिरण्यगर्भवत्तत्द्रूपेण विशिष्यैवोपासनमिति साधनस्य समविषमत्वात् फलमपि समविषममेव। साधनस्य स्वसदृशफलप्रदत्वनियमात् । अतः सर्वक्रियाणां अलौकिकत्वाविशेषेऽपि त्रिविक्रमत्वादीनां कदाचिदभिव्यक्तानां पृथक्त्वेन चतुर्मुखस्यैवोपास्यत्वम् ।

सरस्वत्यास्तु नित्यविक्रान्तित्वसामान्यरूपेणेत्यर्थप्रतिपादकं सूत्रं **ओं समान एवं चाभेदात्** इति। समान इति भावप्रधानो निर्देशः। यथा च सामान्यक्रियोपसंहारे एव ब्रह्माण्या अधिकारः। त्रिविक्रमत्वादिविशेषाणां सामान्यक्रियास्वभेदादन्तर्भावादित्यर्थः। ननु त्रिविक्रमत्वादीनां हिरण्यगर्भस्योपास्यत्वे सिद्धे भवेदेतत्सर्वम् । न च तत्संभवति। तासां कादाचित्कत्वेन अविद्यमानोपासनाप्रसंगादित्यतः सूत्रं **ओं सम्बन्धादेवमन्यत्रापि**। गुणोभ्योऽन्यत्र क्रियारूपेषु त्रिविक्रमत्वादिष्वपि परमात्मना सह गुणवत्तादात्म्यसम्बन्धेन तदैक्यान्नित्यत्वेन तदुपासनं युज्यत इत्यर्थः।

''गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते ।'' इति वचनात्तासामपि गुणवदेव नित्यत्वं शक्त्यात्मना सदा सत्वेऽपि व्यक्त्यपेक्षया कादाचित्कत्वोक्तिरिति भावः।

गुणास्त्रैविक्रमाद्याश्च संहर्त्तव्या न संशयः।
विरिंचस्यैव नान्येषां स हि सर्वगुणाधिकः।। इति बृहत्तन्त्रे।

तस्य तात्पर्यमाह **ब्रह्मणा त्वखिलैर्गुणैः। उपास्य** इति। भगवानखिलैः सरस्वत्यादिभिरधिकारिभिरखिलैः स्वस्वयोग्यैर्गुणैरुपास्यः। ब्रह्मणा तुशब्दो विशेषार्थः

सर्वगुणोपासनेऽपि त्रिविक्रमत्वादयो विशेषेण पृथक्त्वेनोपास्याः। अथ ब्रह्माण्या सामान्येनेति लभ्यते ।।१२।।

नन्वात्मशब्दोक्तगुणानां सर्वोपास्यत्वं प्रागुक्तमयुक्तं चतुर्मुखेतरेषां सर्वगुणोपसंहारेऽधिकाराभावात् । न चासावुत्तमाधिकारिणः प्रत्येव सर्वगुणोपपादको न सर्वान्प्रतीत्युक्तमिति वाच्यम्। अस्यैतावन्त एव अन्यस्यैतावन्त एवेति प्रतिस्विकनियामकाभावादित्यतो अधिकरणं **न वा विशेषात्** । सत्यमात्मशब्दः सर्वान् गुणान्वक्ति किन्तु न सर्वान्प्रत्यविशेषात्किंन्तु यस्य यावन्तो योग्यास्तं प्रति स तावत एव प्रतिपादयतीत्यतो युक्तमिति भावः। श्रुत्याप्येतमर्थं साधयत्सूत्रं **दर्शयति च**। ''सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैव'' इति भाल्लवेयश्रुतिः ।।१३।।

नन्वानन्दादिवत्सम्भृतिद्युव्याप्तिशब्दयोः स्वावरभरणप्रकाशमानत्वगुणयोरपि सर्वापेक्षितत्वात् ''उक्षा स द्यावा पृथिवी बिभर्त्ति'' ''एष हि सर्वेषु लोकेषु भरति'' इत्यादिवेदप्रतिपाद्ययोरपि भगवद्गुणयोः सर्वोपास्यत्वान्न चतुर्गुणोपासनानियमो युक्त इत्यतः सर्वापेक्षितत्वेऽपि नोपसनायामपेक्षाप्रयोजिका किन्तु योग्यतैव। तथा च देवादीनामेव तत्र योग्यत्वात् त एव तत्राधिकारिण इत्यर्थप्रतिपादकं सूत्रं **ओं सम्भृतिद्युव्याप्त्यपि चातः**। योग्यताविशेषादेव सम्भृतिश्च द्युव्याप्तिश्चेति समाहारात् क्लीबत्वमेकवचनान्तत्वं च । देवानामेवोपास्या इति सूत्रार्थः।

देवादीनां उपास्यास्तु भृतिव्यप्त्यादयो गुणाः। आनन्दाद्यास्तु सर्वेषामन्यथानर्थकृद्भवेत्।।

इति ब्रह्मतर्कोक्तेरुक्तएवार्थः। तदप्याह **सुरेश्वरैः। यथाक्रमं बहुगुणैः** इति स्वस्वजगद्भरण–कर्त्तृत्वयोग्यतामनतिक्रम्य सम्भृत्यादिभिः गुणैः भगवानुपास्य इति यत्तत्सुरेश्वरैरेव नान्यैस्तेषां तेन न प्राप्तेरिति भावः ।।१४।।

नन्वेवमपि न सर्वविद्योक्तगुणोपसंहारो युक्तः। यस्यां विद्यायां महागुणाः उक्ताः स्युः तत्तदेकैकविद्यास्वस्वापेक्षितगुणोपसंहारायैकैकविद्यावलम्बनेनैव विवक्षितार्थसिद्धेः सुरेश्वरैरपि न सर्वविद्योक्तगुणोपसंहारः कार्य इत्याशंकापरिहाराय सूत्रं **ओं पुरुषविद्यायामपि चैतरेषामनाम्नानात्** इति। सर्ववेदेषु श्रेष्टामपि पुरुषसूक्तरूपयां विद्यायां कतिपयगुणानामेवानाम्नानादितरेषामनाम्ना–नात्कर्त्तव्य एव सर्वगुणोपसंहाराय सर्वशाखाप्रत्यय इति सूत्रार्थः। तददिमप्याह **सुरेश्वरैः। यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः। उपास्यः सर्ववेदैस्तु** इति। सुरेश्वरैः स्वयोग्यताक्रमानुसारेण ब्रह्मणाप्यखिलैर्गुणैः। भगवानुपास्य इति यत्तत्सर्ववेदैः साधनभूतैः। एकैकस्मिन्वेदे स्वस्वोपासनायोग्यतत्तद्विवक्षितगुणानामनाम्नानादिति भावः। उक्तं च ब्रह्मतर्के ''सर्वतः पौरुषेसूक्ते गुणाः विष्णोरुदीरिताः। तत्रापि नैव सर्वेऽपि तस्मात्कार्योपसंहृतिः।'' इति ।।१५।।

नन्वेवमपि न पूर्वोक्तचतुर्गुणोपासनानियमो युक्तः। किन्तु "अग्ने त्वं च यातुधानस्य भिन्धि तं प्रत्यंच मार्चिषा विध्यमर्मन् । पराशृणीहि तपसा यातुधानान्" इत्यादिवेदोक्तभेदनवेधनादयोऽपि गुणाः सर्वोपास्या इति वक्तव्यम्। दुष्टनिग्रहस्य सर्वापेक्षितत्वात्। "प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्"। "आततायिनमायान्तं हन्यादेवाविचारयन्" ()इत्यादिश्रुतिस्मृत्योर्विधानाच्चेत्याशंकापरिहाराय सूत्रं **ओं वेधाद्यर्थभेदात्** इति। यत्यादीनामुपासनाफलरूपार्थविलक्षणफलकत्वान्नवेधादिसर्वोपास्यम् । तदिदमप्याह **सर्वैरपि यथाबलं ज्ञेयो विष्णुः** इति। सर्वैर्मानुषान्तैरपि स्वयोग्यताधिकाररूपबलमनतिक्रम्य विष्णुर्ज्ञेयः । उपास्य इत्यर्थः। वेधभेदादेश्च यत्याद्योग्यत्वान्न सर्वाधिकारिकत्वमिति भावः। उक्तं च बृहत्तन्त्रे

भिन्धि विद्धि शृणीहीति फलभेदेन सर्वशः।
यत्यादीनां तेष्वयोग्यान्नाधिकारैकता भवेत् ।
अयोग्योपासनादीयुरनर्थं चार्थनाशनम् ।।

इति प्राणस्त्वेत्यादि वचनान्यन्याधिकारिविषयाणि इति भावः **।।१६।।**

भगवदुपासनस्य सकलसाधनाधिक्यप्रतिपादनाय मुक्तावप्यनिवृत्तिसमर्थनार्थं सूत्रं **हानौ ओं तूपायनशब्दशेषत्वात् कुशाछन्दस्तुत्युपगानवत्तदुक्तं** इति। संसारहानौ मुक्त्यवस्थायामपि उपासना अस्त्येव। किन्तु न सा विधिबद्धा अपि तु स्वेच्छयैव। न चैवं तत्करणानुपपत्तिः। नियतब्रह्मज्ञानानंतरमपि कुशैः आछन्देन स्वेच्छयैव द्विजन्मनां मन्त्रसामाध्ययनवदुपपत्तेः। "एतत्सामंगायन्नास्ते" (तै.उ.३-१०)इत्युक्तं च मुक्तानामप्युपासनम् । "एतमानन्दमयमात्मानमुपसंक्रम्येति प्रागुक्तत्वात्। ननूक्तोपासनविधिनिबन्धनेनैव किं न स्यादित्यतः उक्तं शब्दशेषत्वादिति। सर्वोपासनाविधीनां "ब्रह्मविदाप्नोति परं" इति मोक्षवाक्यशेषत्वान्मुक्तानां च प्राप्तफलत्वान्न तत्र विधिरिति भावः। उक्तं च बर्ह्मतर्के

मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः। नियमानन्तरं विप्राः कुशाद्यैरप्यधीयते।। इति।

"कृष्णो मुक्तैरिज्यते वीतमोहैः" (म.ता.नि.२-६२)इति भारतोक्तेः। कर्मापि मुक्तानामस्ति सुतरामुपासनम्। तदिदमप्याह **सच्चिदानन्द आत्मा** इत्यादिना । मानुषैः सच्चिदान्द आत्मेति सुरेश्वरैः यथाक्रमं बहुगुणै ब्रह्मणा त्वखिलैर्गुणैरुपास्य इति यत्तन्न केवलं अमुक्तैरेवैतैः किन्तु सर्वैरपि मुक्तैश्च तत्रापि यथाबलं यथा सामर्थ्यं येषां यावन्तः प्रतिभासन्ते तादृग्गुणैः सर्ववेदोदितैः भगवानुपासितुं योग्यः। उपास्य इत्यर्हार्थे कृत्यप्रत्ययः। न तु विध्यर्थः। तुशब्दो विशेषार्थः। तेन यथा संसारावस्थायामुपासनानियमो विधिबद्धत्वान्न तथा मुक्त्यवस्थायां तत्र इच्छयैव प्रवृत्तेरिति

विशेषः सूचितो भवति। नन्वनिष्टनिवृत्यर्थं उपासनं मुक्तानामित्याशंकानिवृत्यर्थं सूत्रं **ओं साम्पराये तर्तव्याभावात्तथा ह्यन्ये** इति। ''तीर्णो हि तदा सर्वाच्छोकान् हृदयस्य भवति''(बृ.उ.६-३-२२) इत्यन्ये शाखिनः पठन्ति। हृद्ययनाद् हृदयः परमात्मा तस्य सकाशात्तत प्रसादेनेत्यर्थः। साम्पराये मोक्षे तर्तव्यस्यानिष्टस्याभावान्न तन्निवृत्यर्थमुपासनं किन्तु स्वेच्छैयवेत्यर्थः ।।१७।।

ननु मुक्ता अपि किं कर्म कुर्वन्ति न वेति जिज्ञासायां सूत्रं **ओं छन्दत उभयाविरोधात्**। प्रासंगिकत्वान्नाध्यायादिसंगतिः। स्वेच्छया कुर्वन्ति न वा। बन्धप्रत्यवाययोरभावात् । ननु मुक्तानां बन्धप्रत्यवाययोरभाव एव कुत इत्याशंकापरिहाराय सूत्रं **ओं गतेरर्थवत्वमुभयथाऽन्यथा हि विरोधः**। बन्धप्रत्यवायाभावे हि गतेर्मोक्षस्य पुरुषार्थत्वं अन्यथा मोक्षत्वमेव न स्यात् । कर्मानियमं युक्त्याप्युपपादयत् सूत्रं **ओं उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्** । उपपन्नश्चैवं भावो मुक्तानां यन्नियमेन कर्माकरणम्। ज्ञानद्वारा कर्मसाध्यस्य मोक्षरूपार्थस्य प्राप्तत्वात् । यथा लोके कर्मांगभूतविष्णुक्रमणाद्यंगकलापस्य कर्मसाद्गुण्याय करणेऽपि न समाप्तेकर्मणि कर्त्तव्यता-नियमस्तथेत्यर्थः। एतत्तात्पर्यमाह **ब्रह्मणा त्वखिलैर्गुणैः। उपास्य** इति । तुशब्दो विशेषार्थः। ब्रह्मणेत्यनेन सम्बध्यते। तेन विशिष्टब्रह्मणा परब्रह्मणेत्यर्थः। मुक्तेनेति यावत् । ''ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगाः। प्रकृतिः परमं ब्रह्म परमं महदुच्यते''इति वचनात्। तेन मुक्तेन अखिलैः स्वयोग्यगुणैरुपास्यः। अर्हे कृत्यतृचश्च (पा.सू.३-३-१६)इति अर्हार्थेयं ऋहलोर्ण्यत् (पा.सू.३-१-१२४) इति ण्यत्प्रत्ययः। भगवानुपासनार्हो भवति। न तु नियमेन उपास्य इति विध्यर्थो ण्यत् ।।१८।।

ननु यथा उपासकेष्वपि केषांचिद्योग्यानां सर्वगुणोपसंहारो नायोग्यानामिति नियमः तथा ज्ञानिनामपि केषांचिन्मोक्षः केषांचिन्नेत्यपि किं नियम इति जिज्ञासायां सूत्रं **ओं अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम्** । प्राप्तज्ञानानामपि केषांचिन्मोक्षः केषांचिन्नेति नियमो नास्ति। किन्तु सर्वेषामपीत्यनियम एव। ''सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैः'' इत्युपसंहारे विरोधात् । तत्र नियमः प्रकृते विरोधाभावात् अनियम एव। ''न कश्चिद्ब्रह्म-वित्सृतिमनुभवति मुक्तो ह्येव भवति तस्मादाहुः सृतिहा'' इति कौण्डिण्यश्रुतेः। यथा ज्ञानिनां मध्ये केषांचिन्मोक्षस्तथा ज्ञानित्वादेव अन्येषामपि मोक्ष इत्यनुमानाच्च ।।१९।।

ते च सर्वेऽप्युपासका अधिकारनियमवन्त एवेत्यर्थप्रतिपदाकं सूत्रं **यावदधिकार-मवस्थितिराधिकारिकाणाम्** इति। आधिकारिकाणां देवानां या मुक्तावानन्दतारतम्येन अवस्थितिः सा अधिकारमनुसृत्यैवोपासनया। न च प्रयत्नतारतम्येनोपपत्तिः। प्रयत्नस्यापि यथाधिकारं कर्त्तव्यत्वात् । अन्यथा अनिष्टप्राप्तेः।

अधिकाराधिको यत्नः प्रायशो नोपपद्यते।
कथंचिदधिके यत्ने दोषःकश्चित्समापतेत्।। (न्या.विव)इति वचनात् ।

ननु मुक्तावानंदतारतम्यमेव असिद्धम्। तदंगीकारे द्वेषेर्ष्यादिप्रसंगेन विरोधप्राप्तेरित्याशंकापरिहाराय सूत्रं **ओं अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तं** इति। मुक्तानां परस्परविरोधाभावः। सर्वेषां दोषाभावसाम्यात् । नीचोच्चभावसत्वाच्च शिष्यवत्तु । "नानाविधा जीवसंघाः विमुक्तौ न चैवेषां ब्रह्मधियां विरोधः। दोषाभावादुरुशिष्यादिभावाल्लोकेऽपि नासौ किमु तेषां विमुक्तेः" इति (तुर)श्रुतौ उक्तत्वादिति सूत्रार्थः। तदिदमाह सुरेश्वरैराधिकारिकैः यथाक्रमं स्वस्वाधिकारक्रममनतिक्रम्य बहुगुणैर्भगवानुपास्यः। कीदृशैस्तैः ब्रह्मणा पूर्णेन मुक्तरूपेणापि यथाक्रमं वर्त्तमानैरिति शेषः। मुक्तावपि तारतम्यसद्भावात्तस्य चोपासनातारतम्यनिबन्धनत्वात्तत्राप्यधि-कारतारतम्यं तन्त्रमिति भावः। अथवा ब्रह्मणा मुक्तरूपेणापि यथाक्रमं सुरेश्वरैरिति योज्यम् । स्वस्वावरसुरापेक्षया अमुक्तावप्यैश्वर्येण वर्त्तमानैः इत्यर्थः। नन्वानन्दतारतम्यं मुक्तावेवा-स्त्विति वाच्यम्।

नरादिब्रह्मपर्यन्तं विमुक्तानां शतोच्छ्रयः।
अप्यानन्दे मिथोप्युक्तस्त्वध्वर्यूणां श्रुतौ पृथक्।। (हरिवंश)इति वचनात्।

कीदृशेन ब्रह्माख्यमुक्तरूपेण अखिलैर्गुणैरुपलक्षितेन । तुशब्दो अवधारणे। मुक्तस्वरूपाणि गुणवन्त्येव न तु मत्सरादिदोषवन्ति येन द्वेषेर्ष्याद्यापत्तिः स्यात्। द्वेषादेर्दोषस्यैव विरोध-प्रयोजनकत्वात्तदभावे तदभाव इति भावः। एतेनाक्षरधियामिति द्वितीयसूत्रतात्पर्यमप्युक्तं ज्ञातव्यम् ।।२०।।

सर्वस्यापि भगवदुपासनाधिकारिवर्गस्य प्राणावासनत्वप्रतिपादनार्थं सूत्रं **ओं इयदामननात्** इति। नामाद्यधिकारिजातं प्राणावसानमेव। "प्राणो वा आशाया भूयान्न प्राणाद्भूयस्तस्माद्भूयान्नाम" (कौण्ठरव्य)इत्याम्नानात् । उक्तमाक्षिप्य समादधत्सूत्रं **ओं अन्तरा भूताग्रामवदिति चेत्तदुक्तम्**। नामादिप्राणपर्यन्तभूतसमूहे एकस्मादेको विशिष्टा दृष्टा इति दृष्टान्तेन प्राणं परमात्मानं वान्तरा प्राणादप्युत्तमस्य साधयितुं शक्यत्वादधिकारिणां प्राणावसानमयुक्तमिति चेन्न । "प्राणो वा व सर्वेभ्यो भूयान्नप्राणाद्भूयान्" इति प्राणादुत्तमाभावे प्राणस्योक्तत्वात्तद्बाधितमनुमानमिति भावः। उक्तमाक्षिप्य समादधत्सूत्रं **ओं अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्** । प्राणस्य सर्वोत्तमत्वे ईश्वरद्वयासम्भवात्परमात्मना तस्य भेदो अनुपपन्नः स्यादिति चेन्न श्रुत्युपदिष्टवदंगीकारात्तत्र चान्येभ्यः प्राणस्योत्तमत्वमुक्तं प्राणाच्च परमात्मनः अतः सर्वशब्दोऽयं संकुचितवृत्तिरिति भावः। तस्य तात्पर्यमाह **ब्रह्मणा त्वखिलैर्गुणैः उपास्यः। सर्ववेदैश्च** इति। तुशब्दो अवधारणे। सर्ववेदोक्तैरखिलैर्गुणैर्भगवानुपास्य इति यत्तद्ब्रह्मणैव नान्येन तस्य सर्वाधिकारिश्रेष्ठत्वात्। प्राणस्य

प्रक्रान्तत्वेऽपि ब्रह्मणेत्युक्तिस्तयोरभेदसूचनार्थः । तेन ब्रह्मणः एव सर्वाधिकारिवर्गोत्तमत्वात्कथं प्राणस्यैवोत्तमत्वमुच्यत इति शंका निरस्ता। यद्वा ब्रह्मणा तु भगवान् विशेषरूपेणोपास्यः । कुतः ? अखिलैर्गुणैः। इत्थं भूतलक्षणे तृतीया। तस्यैव विशिष्टोपासकताप्रयोजकसकलगुणवत्वादिति भावः।।२१।।

ननु विष्णोः सर्वोत्तमत्वं न युक्तम् । छान्दोगश्रुतौ प्राणस्यैव सर्वोत्तमत्वेनोक्तत्वात् । अथोच्येत प्राणानंतरमपि "एष तु वा अतिवदन्ति यः सत्येनातिवदन्ति" (छा.उ.७-२-१)इति सत्यपदोदितस्य विष्णोराधिक्यमुच्यत इति। मैवम् । "अस्ति भगवः प्राणाद्भूय" (छां.उ.)इति प्राणाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीतु इति। सत्यं वा व प्राणाद्भूय" इति पूर्वोक्तनामवागादि-प्रकरणान्तरवत्प्रश्नप्रतिवचनाभावात् । अतस्तस्यापि प्राणप्रकरणत्वेन् सत्यादिपदैरपि प्राण एवोच्यत इति न प्राणादुत्तमत्वं विष्णोरित्याशंकापरिहाराय सूत्रं **ओं व्यतिहारो विशिंषन्ति हीतरवत्** । सत्यम्। यद्यप्यत्र प्रकरणभेदकं प्रश्नप्रतिवचनादि न श्रूयते। तथापि इतरवत् नामादिप्रकणवदत्रापि प्रश्नप्रतिवचनयोः व्यतिहारः अध्याहारः कर्त्तव्यः। कल्पकाभावात्कुतो अध्याहार इति चेन्न। यतः प्राणस्योत्तमवादिनः "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादि भवति" इत्यतिवादि-त्वमुक्त्वा "एष तु वा अतिवदति यः सत्येनातिवदति इति सत्याख्यवस्तुवदतस्तुशब्देन विशेषणात्। प्राणातिवाद्यपेक्षया सत्यातिवादीविशिष्ट इति लभ्यते। अतः सत्यादेः प्राणादुत्तमत्वाद्विष्णुस्वरूपत्वेन प्रकरणभेदार्थं प्रश्नप्रतिवचनाध्याहारो युक्त इति भावः। तदेतदाह **ब्रह्मणा त्वखिलैर्गुणैरुपास्य** इति । अतस्तस्यैव ब्रह्मोपास्यतया सर्वोत्तमत्वं युक्तमिति भावः।।२२।।

ननु प्राणानन्तरं सत्यज्ञानविज्ञानमतिश्रद्धानिष्टाकृतिसुखभूममाहंकारात्मनां दशपदार्थानामुक्तत्वात्। प्राणस्य विष्णुं विना सर्वोत्तमत्वं विष्णोरेव निरुपचरितमुत्तमत्वमयुक्तम् । अन्तरां बहूनां सत्वादित्यतः सूत्रं **ओं सैव हि सत्यादयः**। सत्यादयः आत्मान्ताः सा परमेश्वराख्या परदेवतैव न तु ततो भिन्नाः। "सत्यं भगवो विजिज्ञास" इति सत्याख्यस्य भगवतो गुणजिज्ञासायां तद्गुणत्वेनोत्तरं जिज्ञासानुरोधेन विज्ञानसत्यादिगुणानामुक्तत्वात् ।

> सत्याद्या अहमात्मान्ताः यद्गुणाः समुदीरिताः।
> तस्मै नमो भगवते यस्मादेव विमुच्यते।। इत्यध्यात्मे।

एतत्तात्पर्यमाह **ब्रह्मणा त्वखिलैर्गुणैः**। सत्यविज्ञानादिगुणैरुपास्यत्वेनोक्तः स एक एव अतो न प्राणेश्वररयोरन्तरालोकमस्तीति भावः।।२३।।

ननु लक्ष्म्या अपि सीतारुक्मिण्यादिरूपेण संसारदर्शनात् साऽप्यधिकारिणी। अतो अधिकारिणां प्राणवसानत्वमुक्तयुक्तमित्यतः सूत्रं **ओं कामादितरत्र तत्र चायतनादिभ्यः**। सत्यं प्रकृतिरवतारान्करोति किन्तु सा मूलरूपेण भगवत्समीपे स्थिता भगवदिच्छानुसारिस्वेच्छयैव। न

तु कर्मादिना। इच्छयैव ''सर्वायतना सर्वकाला सर्वेच्छा न बद्धा बन्धिका सैषा प्रकृतिरविकृतिः'' इति वत्सश्रुतेरिति सूत्रार्थम्। ननु तस्या अनुपासकत्वे यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभि(ससात्विकैः)श्च सात्वतैः।(भा.१०-३६-८)

तथा - ''नान्यं ततः पद्मपलाशलोचनाद्भवच्छिदन्ते मृगयामि कर्हिचित् ।

यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरंगविमृग्यमाणया ।।'' (भाग.४-९-२४)

इत्यादि विरोधः स्यादित्यंशकापरिहाराय सूत्रं **ओं आदरादलोपः**। अबद्धत्वेऽपि भक्ति-विशेषादेवोपासनाद्यलोपस्तस्या भवति।

यथा श्रीर्नित्यमुक्तापि प्राप्तकामापि सर्वदा।
उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेत् ।। (बृहत्तन्त्र)

इति तदप्याह **ब्रह्मणा त्वखिलैर्गुणैरुपास्य** इति। ''मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दध्याम्यहं'' इति वचनाद्ब्रह्मशब्दोदितया महालक्ष्म्या तुविशेषेण चतुर्मुखोपास्यगुणेभ्योऽप्याधिक्येनोपास्यते भक्तिविशेषादेवेत्यर्थः। ननु श्रियो नित्यमुक्तत्वमेव कुत इत्यतः सूत्रं **ओं उपस्थितेस्तद्वचनात्** । अनादिकाले भगवत्सम्बन्धित्वेन स्थितत्वाद्युज्यते तस्या नित्यमुक्तत्वम्। ''द्वावेतावनादि-नित्यावनादियुक्तौ नित्यमुक्तौ नित्यकृतौ योऽयं परमो या च प्रकृतिः'' इति गौपवन-श्रुतावुक्तत्वात् ।।२४।।

ननु दर्शनार्थमुपासनमुक्तम् । तच्च दर्शनं श्रवणमननाभ्यामेवास्तु किं ध्यानरूपनिदिध्यासनेन इत्याशंकापरिहाराय सूत्रं **ओं तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलं** इति। तत्वनिश्चयो वेदार्थनियमश्च श्रवणमननयोः फलम् । तच्च न ब्रह्मदर्शनरूपा किं तु ब्रह्मदृष्टेः पृथगेव। दर्शनं तु ध्यानफलम्। अत एव हि यस्मात् ''आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'' (बृ.उ.४-४-५)इति त्रयाणां कर्तव्यतां श्रुतिराह। ननु त्रितयकर्त्तव्यतायाः श्रुत्युक्तत्वेऽपि पृथक् फलत्वात् आद्यद्वयं तत्वज्ञानार्थनियमार्थमस्तु ध्यानमेव दर्शनार्थं क्रियतां किं श्रवणमननाभ्यामित्यत उक्तं अप्रतिबन्धः फलमिति । ब्रह्मदर्शनप्रतिबन्धकाः अज्ञानसंशयविपयर्याः तन्निवृत्तिः श्रवणमननयोः फलम्। तदुक्तं

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ।। (ब्रह्मतर्क)इति।

तत्तात्पर्यमाह **उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम्** इति। सर्वैरधिकारिभिः सर्ववेदैः करणैर्विष्णुरुपास्य इति यत्तद्यथाबलमिति। तथा उपास्यः तेन किं बलं स्यादित्यत आह। **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। उत्तरोत्तरं श्रवणमननानन्तरं मननाख्यज्ञाने सम्पादिते हि

प्रक्रान्तत्वेऽपि ब्रह्मणेत्युक्तिस्तयोरभेदसूचनार्थः। तेन ब्रह्मणः एव सर्वाधिकारिवर्गोत्तमत्वात्कथं प्राणस्यैवोत्तमत्वमुच्यत इति शंका निरस्ता। यद्वा ब्रह्मणा तु भगवान् विशेषरूपेणोपास्यः । कुतः? अखिलैर्गुणैः। इत्थं भूतलक्षणे तृतीया। तस्यैव विशिष्टोपासकताप्रयोजकसकलगुणवत्वादिति भावः।।२१।।

ननु विष्णोः सर्वोत्तमत्वं न युक्तम् । छान्दोगश्रुतौ प्राणस्यैव सर्वोत्तमत्वेनोक्तत्वात् । अथोच्येत प्राणानंतरमपि "एष तु वा अतिवदन्ति यः सत्येनातिवदन्ति" (छा.उ.७-२-१)इति सत्यपदोदितस्य विष्णोराधिक्यमुच्यत इति। मैवम् । "अस्ति भगवः प्राणाद्भूय" (छां.उ.)इति प्राणाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीतु इति। सत्यं वा व प्राणाद्भूय" इति पूर्वोक्तनामवागादि-प्रकरणान्तरवत्प्रश्नप्रतिवचनाभावात् । अतस्तस्यापि प्राणप्रकरणत्वेन् सत्यादिपदैरपि प्राण एवोच्यत इति न प्राणादुत्तमत्वं विष्णोरित्याशंकापरिहाराय सूत्रं **ओं व्यतिहारो विशिंषन्ति हीतरवत्** । सत्यम्। यद्यप्यत्र प्रकरणभेदकं प्रश्नप्रतिवचनादि न श्रूयते। तथापि इतरवत् नामादिप्रकणवदत्रापि प्रश्नप्रतिवचनयोः व्यतिहारः अध्याहारः कर्त्तव्यः। कल्पकाभावात्कुतो अध्याहार इति चेन्न। यतः प्राणस्योत्तमवादिनः "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादि भवति" इत्यतिवादि-त्वमुक्त्वा "एष तु वा अतिवदति यः सत्येनातिवदति इति सत्याख्यवस्तुवदतस्तुशब्देन विशेषणात्। प्राणातिवाद्यपेक्षया सत्यातिवादीविशिष्ट इति लभ्यते। अतः सत्यादेः प्राणादुत्तमत्वाद्विष्णुस्वरूपत्वेन प्रकरणभेदार्थं प्रश्नप्रतिवचनाध्याहारो युक्त इति भावः। तदेतदाह **ब्रह्मणा त्वखिलैर्गुणैरुपास्य** इति । अतस्तस्यैव ब्रह्मोपास्यतया सर्वोत्तमत्वं युक्तमिति भावः।।२२।।

ननु प्राणानन्तरं सत्यज्ञानविज्ञानमतिश्रद्धानिष्टाकृतिसुखभूममाहंकारात्मनां दशपदार्थानामुक्तत्वात्। प्राणस्य विष्णुं विना सर्वोत्तमत्वं विष्णोरेव निरुपचरितमुत्तमत्वमयुक्तम् । अन्तरां बहूनां सत्वादित्यतः सूत्रं **ओं सैव हि सत्यादयः**। सत्यादयः आत्मान्ताः सा परमेश्वराख्या परदेवतैव न तु ततो भिन्नाः। "सत्यं भगवो विजिज्ञास" इति सत्याख्यस्य भगवतो गुणजिज्ञासायां तद्गुणत्वेनोत्तरं जिज्ञासानुरोधेन विज्ञानसत्यादिगुणानामुक्तत्वात् ।

सत्याद्या अहमात्मान्ताः यद्गुणाः समुदीरिताः।
तस्मै नमो भगवते यस्मादेव विमुच्यते।। इत्यध्यात्मे।

एतत्तात्पर्यमाह **ब्रह्मणा त्वखिलैर्गुणैः**। सत्यविज्ञानादिगुणैरुपास्यत्वेनोक्तः स एक एव अतो न प्राणेश्वररयोरन्तरालोकमस्तीति भावः।।२३।।

ननु लक्ष्म्या अपि सीतारुक्मिण्यादिरूपेण संसारदर्शनात् साऽप्यधिकारिणी। अतो अधिकारिणां प्राणवसानत्वमुक्तयुक्तमित्यतः सूत्रं **ओं कामादितरत्र तत्र चायतनादिभ्यः**। सत्यं प्रकृतिरवतारान्करोति किन्तु सा मूलरूपेण भगवत्समीपे स्थिता भगवदिच्छानुसारिस्वेच्छयैव। न

तु कर्मादिना। इच्छयैव "सर्वायतना सर्वकाला सर्वेच्छा न बद्धा बन्धिका सैषा प्रकृतिरविकृतिः" इति वत्सश्रुतेरिति सूत्रार्थम्। ननु तस्या अनुपासकत्वे यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभि(ससात्विकैः)श्च सात्वतैः।(भा.१०-३६-८)

तथा - "नान्यं ततः पद्मपलाशलोचनाद्भवच्छिदन्ते मृगयामि कर्हिचित् ।

यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरंगविमृग्यमाणया ।।" (भाग.४-९-२४)

इत्यादि विरोधः स्यादित्यंशकापरिहाराय सूत्रं **ओं आदरादलोपः**। अबद्धत्वेऽपि भक्ति-विशेषादेवोपासनाद्यलोपस्तस्या भवति।

यथा श्रीर्नित्यमुक्तापि प्राप्तकामापि सर्वदा।
उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेत् ।। (बृहत्तन्त्र)

इति तदप्याह **ब्रह्मणा त्वखिलैर्गुणैरुपास्य** इति। "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दध्याम्यहं" इति वचनाद्ब्रह्मशब्दोदितया महालक्ष्म्या तुविशेषेण चतुर्मुखोपास्यगुणेभ्योऽप्याधिक्येनोपास्यते भक्तिविशेषादेवेत्यर्थः। ननु श्रियो नित्यमुक्तत्वमेव कुत इत्यतः सूत्रं **ओं उपस्थितेस्तद्वचनात्** । अनादिकाले भगवत्सम्बन्धित्वेन स्थितत्वाद्युज्यते तस्या नित्यमुक्तत्वम्। "द्वावेतावनादि-नित्यावनादियुक्तौ नित्यमुक्तौ नित्यकृतौ योऽयं परमो या च प्रकृतिः" इति गौपवन-श्रुतावुक्तत्वात् **।।२४।।**

ननु. दर्शनार्थमुपासनमुक्तम् । तच्च दर्शनं श्रवणमननाभ्यामेवास्तु किं ध्यानरूपनिदिध्यासनेन इत्याशंकापरिहाराय सूत्रं **ओं तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलं** इति। तत्वनिश्चयो वेदार्थनियमश्च श्रवणमननयोः फलम् । तच्च न ब्रह्मदर्शनरूपा किं तु ब्रह्मदृष्टेः पृथगेव। दर्शनं तु ध्यानफलम्। अत एव हि यस्मात् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" (बृ.उ.४-४-५)इति त्रयाणां कर्तव्यतां श्रुतिराह। ननु त्रितयकर्त्तव्यतायाः श्रुत्युक्तत्वेऽपि पृथक् फलत्वात् आद्यद्वयं तत्वज्ञानार्थनियमार्थमस्तु ध्यानमेव दर्शनार्थं क्रियतां किं श्रवणमननाभ्यामित्यत उक्तं अप्रतिबन्धः फलमिति । ब्रह्मदर्शनप्रतिबन्धकाः अज्ञानसंशयविपयर्याः तन्निवृत्तिः श्रवणमननयोः फलम्। तदुक्तं

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ।। (ब्रह्मतर्क)इति।

तत्तात्पर्यमाह **उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम्** इति। सर्वैरधिकारिभिः सर्ववेदैः करणैर्विष्णुरुपास्य इति यत्तद्यथाबलमिति। तथा उपास्यः तेन किं बलं स्यादित्यत आह। **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। उत्तरोत्तरं श्रवणमननानन्तरं मननाख्यज्ञाने सम्पादिते हि

तत्वज्ञानप्रतिबन्धकनिरासक्षमतारूपो विशेषो स्यादेवेत्यर्थः। श्रवणमात्रजं ज्ञानं हि कोमलकण्टकायमानं संशयविपर्ययनिरासाय न प्रभवति।अतो बलवत् ज्ञानं मननादिजन्यमपि सम्पादनीयमित्यर्थः। ''तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्याथ बाल्येन तिष्ठासेत्'' इति श्रुतौ मननस्य बलशब्देन निर्देशात्तच्छ्रुतिसूचनार्थमत्र बलपदं प्रागुक्तम् ।।२५।।

तत्र श्रवणादिमात्रं यथाकथंचित्सम्पादितं न ज्ञानसाधनं किन्तु गुरुप्रसादपूर्वकगुरुप्रदानयुक्तमेवेत्यर्थं प्रतिपादकं सूत्रं **ओं प्रदानवदेव हि तदुक्तं** इति। ''आचार्यवान्पुरुषो वेद'' (छा.उ.६-१४-२) इत्युक्त्वादित्यर्थः **।।२६।।**

ननु प्रयत्नो वा गुरुप्रसादो वा साधनमित्याशंकापनोदार्थं उभयमप्यावश्यमपेक्षितम् । तत्र गुरुप्रसादो बलवानित्यर्थप्रतिपादकं सूत्रं **ओं लिंगभूयस्त्वात्तद्धि बलीयस्तदपि** इति। ऋषभादिभ्यो विद्यां प्राप्यापि सत्यकामेन ''भगवांस्त्वेव मे कामं ब्रूयात्'' (छां.उ.६-४-१२) ''श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति'' (छा.उ.४-९-२,३)इति वचनात्। ''अत्र ह न किञ्चन वीयाय'' इतिगुर्वनुज्ञानात् तथैव उपकोसलवचनाच्च लिंगभूयस्त्वाच्च गुरुप्रसादमेव बलवत् ''श्रोतव्यो मन्तव्यो'' इति विधानात्तदपि कर्त्तव्यम् ।

गुरुप्रसादो बलवान् न तस्माद्बलवत्तरम्।
तथापि श्रवणादींश्च कर्त्तव्यो मोक्षसिद्धये।। (वाराह)इति।

तत्तात्पर्यमाह **उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम्** । सर्वैरधिकारिभिः। सर्वैर्वेदैरुपास्य इति यत्तु गुरुप्रसादरूपं बलमनतिक्रम्यैव । तथाविधज्ञाने उत्तरोत्तरः विशेषः स्याद्यथायथा गुरुप्रसादाधिक्यं तथा तथा फलातिशय इति भावः **।।२७।।**

ननु प्रथमपरिगृहीत एव स्वीकार्यः ''गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्'' इति तत्परित्यागे प्रत्यवायोक्तेः । तथा च प्रथममेव बहुज्ञस्य गुरोरलाभे स्वापेक्षितविद्याप्राप्त्यभावात्स्वयोग्योपासनं प्रागुक्तमयुक्तं स्यादित्यतः सूत्रं **ओं पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत्** । न पूर्वप्राप्त एव गुरुरितिनियमः। पश्चात्तनश्चेत्समग्रानुग्रहं स्वयमेव करोति तदा विकल्पः स्यात् । समध्यानद्वयरूपमानसक्रियावत् । समग्रानुग्रहकरणमेव हि प्रकृष्टकरणं प्रकरणं नाम। स च पूर्वतनेव समेऽधिके वाऽयं विकल्पः। अधमस्तु नैव ग्राह्यः। समग्रानुग्रहस्यकर्त्ता अपि न स्वीकार्यः। समग्रानुग्रहकर्तुः स्वीकारे विकल्पः। पूर्वानुज्ञया च स्वीकार्यो न वा न तु स्वीकार्य एवेति नियमः। समग्रानुग्रहकर्ता उत्तमश्चेत्तदा स पूर्वानुज्ञां विनापि स्वीकार्यः। ''गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्'' इत्यादिनिन्दावचनं तु अधमस्वीकारविषयं वा व्यर्थस्वीकारविषयं वाऽनुज्ञाभावविषयं चेति ज्ञातव्यं ।

हेत्वन्तरेणोत्तमगुरुस्वीकारं समर्थयत्सूत्रं **ओं अतिदेशाच्च** । ''ब्रह्मोपास्व तच्छृणु हि तत्वामवतु । या ब्रह्मोपचरेर्यथा मामुपचरेर्ये चान्येऽस्माद्विधाः श्रेयसश्च तानुपास्व तेभ्यः श्रुणु हि ते त्वामवन्तु'' इति पौषयणश्रुतौ अतिदेशात्पूर्वगुरुणैव स्वोत्तमस्वीकाराय अतिदेशादाज्ञापनादित्यर्थः । इदमप्युक्तं **उपास्य सर्ववेदैश्च सर्वैरपि यथाबलं** इति। समग्रानुग्रहरूपं बलमनतिक्रम्य अधिकारिणा कर्ता सर्वैर्गुरुभिः कारणभूतैः परमात्मा स्वयोग्यसर्ववेदैरुपास्यः समग्रानुग्रहकर्तारः सर्वेऽप्युपासकेन गुरुत्वेन स्वीकार्याः । अर्थाद्विकल्पो व्रीहियववदिति भावः। पूर्वापेक्षया पश्चात्तनोऽधमश्चेत्तदा यथाबलं बलमनतिक्रम्योपास्यः। यत्र बलं श्रेष्टत्वं स एवेत्यर्थः। यत्र पूर्वापेक्षया उत्तमस्तत्रापि यथाबलं पूर्ववत्। अथ वा बलं स्वीयबलमनतिक्रम्य स्वेच्छानुसारेण पूर्वगुर्वाज्ञां विनैवोपास्यः **।।२८।।**

नन्वेतदुपासनं न कर्तव्यं प्रयोजनाभावात्। न चापरोक्षज्ञानमेव प्रयोजनम् । तस्याप्यकर्तव्यत्वात्। न च मोक्षो ज्ञानफलम्। कर्मणापि तत्सम्भवादित्यतः सूत्रं **ओं विद्यैव तु निर्धारणात्**। मोक्षसाधनं ज्ञानमेव नान्यत् । ''तमेवं विदित्वाऽतिमृत्त्युमेति नान्यः पन्था विद्यतेऽयनाय'' (श्व.उ.३-८)इति निर्धारणात् अवधारणात् । एतद्व्याचष्टे **ज्ञेयो विष्णुः** इति। उपास्य इति वर्त्तते ततश्च यतो ज्ञेयः साक्षात्कर्त्तव्यस्तत उपास्य इति योजना। ज्ञानार्थमुपास्य इत्यर्थः। ननु निष्प्रयोजनं ज्ञानम् । मोक्षस्य कर्मसाध्यत्वादित्यत उक्तं **विशेषस्तु ज्ञाने स्यात्** इति । ज्ञाने तु । तुशब्दोऽवधारणं तद्रूपो विशेषः स्यात् । ज्ञानादेव तु कैवल्यं ''तमेवं विदित्वा'' इत्यादि श्रुतौ मोक्षार्थं ज्ञानस्यैव वाऽवधारितत्वादित्यर्थः। ननु तर्हि ध्यानं न कर्त्तव्यं श्रवणमननाभ्यामेव विद्यासम्भवात्तत एव मोक्षस्योपपत्तेरित्यतः सूत्रं **ओं दर्शनाच्च** । नास्माभिः केवलं विद्यामात्रान्मोक्ष इत्युच्यते किन्तु भगवत्साक्षात्कारादतस्तदर्थं ध्यानोपासनापि कर्त्तव्या । अर्थात् तदप्याह **विशेषस्तु ज्ञाने स्यात्** अपरोक्षात्वाख्यो विशेषो मोक्षसाधनज्ञाने स्यात् । तदर्थं ध्यानमपि कर्त्तव्यमिति भावः। ननु ''नान्यः पंथा'' इति ज्ञानस्य सावधारणत्ववत्

''कर्मणैव हि संसिद्धिमास्थिता जनकादयः'' इति कर्मणोऽपि सावधारणत्वस्मृतेस्तद्विरोधः। श्रुतेरपौरुषेयत्वेन प्राबल्ये स्मृतेरपि भगवद्वचनत्वेन प्राबल्यं तुल्यमेवेत्यतः सूत्रं **श्रुत्यादिबलीय-स्त्वाच्च न बाधः**। ''तमेवं विदित्वा'' इति श्रुतेरपौरुषेयत्वेन बलवत्वात्तथा आदिशब्दोक्तं ''इन्द्रोऽश्वमेधांश्छतमिष्ट्वापि राजा ब्रह्माणमीड्यं समुवाचोपसन्नः । न कर्मभिर्न धनैर्नैव चान्यैः पश्ये सुखं तेन तत्वं ब्रवीहि'' इति श्रुतत्वेन बलवल्लिंगं ''नास्त्यकृतः कृतेन'' इत्युपपत्तिश्च श्रौतत्वाद्बलवती।

''कर्मणा बाध्यते जन्तुर्विद्यया च विमुच्यते'' (म.भा.शान्तिपर्व)इति भगवद्वचनम्। अतः कर्मणैवेति भगवद्वचनमात्राद्भगवद्वचनोपपत्तिलिंग-दर्शनसहकृतात् ''नान्यः पंथा'' इति श्रुतिबल-वत्तरात्तदुक्तम्। कर्मणैवेत्यवधारणस्य अयोगव्यवच्छेदपरतया संसिद्धिशब्दस्य ज्ञानार्थत्वाद्वा

सावकाशत्वेन नाप्रामाण्यम् । इदमप्याह **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। अत्र ज्ञानशब्देन तद्वाक्यं लक्ष्यते। ज्ञाने ज्ञानस्य मोक्षसाधनत्वप्रतिपादकश्रौतवचने कर्मणैवेति भगवद्वाक्यादुत्तरम् । अतिशयेनोत्कृष्टमतो न तद्बाधो युक्त इत्यर्थः ।।३०।।

अस्योपासनस्य भक्तिपूर्वकस्यैव साधनत्वोपपादनार्थं सूत्रं **अनुबन्धादिभ्यः**। ''अनुबन्धस्तु भक्तिः स्याद्बन्धः स्नेह उदाहृत'' इति वचनात्। हरिगुरुभक्तिशमदमादिपूर्वकस्यैव ध्यानस्य मोक्षहेतुत्वम्। ''द्वेषाच्चैद्यादयो नृपा'' इति तु भक्तिकारणभूतधर्मिज्ञानोद्बोधकत्वात्तदाविष्टा-सुरकृतद्वेषस्येत्युपपादितमन्यत्र।

सर्वलक्षणसम्पन्नः सर्वज्ञो विष्णुतत्परः। यद्गुरुः सुप्रसन्नः सन् दद्यात्तन्नान्यथा भवेत् ।।

तथाप्यनादिसंसिद्धभक्त्यादिगुणपूगतः। लभेद्गुरुप्रसादं च तस्मादेव च तद्भवेत् ।।

तदिदमप्याह **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। भक्त्यादिपूर्वकत्वाख्यो विशेषः उत्तरोत्तरं ज्ञाने स्यात् । श्रवणमननध्यानेष्वपि सहकारी स्यादिति।।३१।।

ननु साधनीभूतज्ञानस्यैकरूपत्वे तत्फले मुक्तौ कथं तारतम्यमित्यतः सूत्रं **ओं प्रज्ञान्तर-पृथक्त्ववद्दृष्टिश्च तदुक्तम्** । प्रज्ञान्तरं प्रज्ञाविशेषः। अविच्छिन्नपरोक्षज्ञानसन्ततिरूपध्यानं तस्य पृथक्त्ववदनेकप्रकारवत् तत्साध्यदृष्टिरपरोक्षज्ञानमपि अनेकप्रकारकमेव।

दृष्ट्यैव ह्यवताराणां मुच्यन्ते केचिदंजसा।
दर्शनेनान्तरेणाऽन्ये देवाः सर्वत्र दर्शनात् ।

तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गतः ।। इति।

अतो मुक्ततारतम्यमपि युक्तमेवेति भावः। एतदप्याह **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। ज्ञाने परोक्षज्ञाने तथा तत्साध्ये अपरोक्षज्ञाने च विशेषः स्यात् । अतो उत्तरोत्तरं विशेषः मोक्षे तारतम्यरूपोऽपि स्यादेवेत्यर्थः ।।३२।।

मोक्षसाधनं भगवद्दर्शनं न यत्किंचिद्रूपविषयं मोक्षसाधनं किन्तु स्वबिम्बविषयमेव इत्यर्थप्रतिपादकं सूत्रं **ओं न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः**। सामान्यदर्शनाद्य-त्किंचिद्रूपविषयान्मुक्तिर्न भवति किन्तु स्वबिम्बदर्शनादेव। यथा खलु मृत्युत्वाविशेषेऽपि मृत्युमात्रानन्तरं न मुक्तिः किन्तु चरमदेहवियोगानन्तरमेव। एवं सर्वरूपाणां भगवद्रूपत्वाविशेषेऽपि रूपविशेषदर्शनादेवमुक्तिः। ''समोऽपि भगवान्सर्वबिम्बदर्शनेनैवेनं मोचयति'' इति श्रुतेः। ननु तर्हि सामान्यदर्शनं व्यर्थं स्यात् । न च तद्युक्तं । अतो यत्तस्य फलं स एव मोक्ष इत्यतः उक्तं न हि लोकापत्तिरिति। महरादिलोकप्राप्तिर्हि तत्फलम् । न हि सा मुक्तिः। ''सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनात्'' इति नारायणतन्त्रे इति ।।३३।।

एतदप्याह **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति । ज्ञाने मोक्षजनकभगवत्साक्षात्कारे बिम्बविषयत्वरूपविशेषः स्यात्तेन उत्तरान् उच्चतरान्महदादिलोकादुत्तरं उच्चतरं उत्कृष्यं मोक्षरूपफलं स्यादिति। एतेन विशेषदर्शनान्महरादिप्राप्तिरिति सूचयति। ननु ''भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी'' इति माठरश्रुतौ भक्तेरेव स्वातन्त्र्यप्रतीतेर्न परमात्मप्रसादेन मुक्तिरिति प्राप्ते सूत्रं **ओं परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः**। प्रसन्नेन परमात्मनैव मुक्तिः। यतस्तथाविधशब्दः श्रूयते।

भक्तिस्थः परमो विष्णुस्तथैवैनं वशं नयेत् । तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया।।

इति मायावैभवे। तर्हि भक्तिरेवेति श्रुतौ भक्तेः स्वातन्त्र्यं कथमुच्यत इत्यतः उक्तं भूयस्त्वात्त्वनुबन्ध इति। अनुबन्धो भक्तिर्यत्स्वातन्त्र्येणोच्यत तद्भूयस्त्वात् । तस्याः साधनेषु प्राधान्यादेव। हन्ता रामशर इतिवत्करणे कर्तृत्वोपचार इति भावः। इदमप्याह **ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। ज्ञेयो भक्तिः पदार्थांतर्गतमाहात्म्यज्ञानादिविषयीभूतो विष्णुस्तु विष्णुरेव विशेषः। विशिष्यते इति विशेषः । स्वातन्त्र्येण मोक्षदः। अथ वा विशेषयत्यधिकारिणं मोक्षादिफलदानेन विशिष्टं करोतीति विशेषः। तर्हि भक्तेः स्वातन्त्र्योक्तिः कुत इत्यत उक्तं ज्ञाने माहात्म्यज्ञाने तत्पूर्वकस्नेहाख्ये भक्तौ साधनान्तरापेक्षया विशेषो अस्ति अतस्तदुत्तरादुत्कृष्टसाधनापेक्षयाप्युक्तं प्रधानम् । उपचारेण कर्तृत्वेनाप्युच्यत इत्यर्थः।।३४।।

अथ भगवद्दर्शनसाधनस्योपासनस्य जीवस्वरूपयोग्यता सापेक्षत्वे इन्द्राद्यंशभूतानामर्जुनादीनां सादित्वात्तेषां चोपासना दर्शनात् । योग्यता च भवत्यनादिर्भवेत् । न हि धर्मिणः सादित्वे अनादियोग्यता सम्भवत्यतो न योग्यतासापेक्षत्वमित्याशंका प्रतिक्षिपत्सूत्रं **ओं एक आत्मनः शरीरे भावात्** । अंशोंशी चैक एव। कुतः? अंशिन एवात्मनः कर्मनिर्मिते शरीरे अंशस्यापि भावात् । अतोंऽशिनो अनादित्वात्तद्योग्यताप्यनादिः साचांशिनैक्यादंशस्याप्युपपन्नेत्यर्थः। नन्वंशांशिनोरेकत्वे कथं ज्ञानादिभेदः स्यादतस्तयोरपि भेद एवेत्यतः सूत्रं **ओं व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्** । उपलब्धिवत् । ज्ञानवत् । ज्ञाने यथा व्यतिरेकस्तथा अंशांशिनोरपि व्यतिरेको भेद इति न मन्तव्यम् । अल्पे ज्ञानादौ अननुसन्धीयमानेपि प्रधानसाधनोपासनफलादेः तद्भावभावित्वात् तदन्वयानुविधायित्वात् अंशिन तदनुसन्धाने सति अंशस्यापि अनुसन्धानात् । अंशगतज्ञानादेः अंशिना अनुसन्धानाच्च । अंशिगतस्य सर्वस्यांशिनोननुसन्धानं त्वीश्वराचिन्त्य-शक्तिनिबन्धनमेवेति भावः। ''अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा। पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा'' इति परमसंहितायाम् ।।३५।।

इदमप्याह **ज्ञेयो विष्णुः** इत्यादिना । येन ज्ञानेन विष्णुर्ज्ञेयस्तस्मिन् ज्ञाने विशेषः अंशिगतस्यांशेनाप्यनुसन्धीयमानत्वरूपविशेषः स्यात् । अतस्तयोरैक्यमिति भावः। तथा च

भगवदुपासनादिविषये उत्तरोत्तरं तारतम्येन योग्यतारूपो अनादिर्विशेषःस्यादिति। अत्र परमात्मनोपासनवत् ब्रह्मादिदेवतोपासनं कर्त्तव्यम् । तच्च न स्वातन्त्र्येण किन्तु परमात्मावरत्वेन तदुपसर्जनत्वेन । तत्राप्यस्ति विशेषः । सर्ववेदे शाखासु यद् ब्रह्माद्युत्तमदेवतागुणजातमुक्तं तद्रुद्रादि जीवदेवेषु नोपसंहार्यं किन्तु यथायोग्यमेवेत्यर्थप्रतिपादकं सूत्रं **ओं अंगावबद्धास्तु न शाखासु हि प्रतिवेदम्** । ब्रह्मादिदेवता अंगावबद्धा एवोपास्याः परिचर्याश्च न तु स्वातन्त्र्येण। तत्रापि प्रतिवेदं शाखासूक्तगुणाः। सर्वे सर्वत्र नोपसंहार्याः। केषांचिदुत्तमत्वात्केषांचित्समत्वात् । यदि सर्वेषां साम्यमेव स्यात् तदा एकत्र दृष्टगुणानां सर्वेषां उपसंहर्त्तव्यता स्यात् । न चैवं तस्माद्व्यवस्था यथायोगं तत्तद्गुणा एवोपास्या इति हिशब्दार्थः। एवमुत्तमदेवतागुणानां नीचेष्वनुपसंहार्यत्वमुक्त्वा नीचदेवतागुणानां उत्तमेषु उपास्यत्वं सदृष्टान्तं प्रतिपादयत्सूत्रं **ओं मन्त्रादिवद्वाऽविरोधः**। यथाग्न्याद्यधमदेवताविषयमन्त्रविद्यादिकं ब्रह्माद्युत्तमदेवताविषयत्वेनाधीयते अध्येतृभिः उत्तमानां तत्प्रतिपाद्यत्वात् । एवमधमगुणानामुत्तमेषूपसंहारे न कश्चिद्विरोधः। उक्तं च

"देवता सर्वविद्यानां स्वयं नारायणः प्रभुः । ऋते तत्र प्रसिद्धांश्च देवताश्रीस्तथात्र च।

ऋते प्रसिद्धान् ब्रह्मैव ततस्तेन क्रमेण च। पूर्वप्रसिद्धवर्जन्तु शक्रान्ता देवता मताः।

इन्द्रावराविशेषेण लिंगेनैव पृथक् पृथक् ॥" इति।

इदमप्याह । **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्** । अंगदेवतानामिति विस्तृतभाष्ये व्याख्यातं भाष्यकारबुद्धिस्थं परामृश्यते। तासां ज्ञाने उपासनादौ यो विशेषः शास्त्रप्रतिपादितः स उत्तरोत्तरः स्यात् । न तु उत्तराधरमिति तुशब्दार्थः। नीचगुणाः उत्तमे उपसंहार्याः न तूत्तमगुणा नीच-देवतायामिति समुदायार्थः। अथवा विष्णुर्यस्मिन् ज्ञाने ज्ञेयः तस्मिन् ज्ञाने विशेषोऽपि विषयो भवति चेद्विष्णोर्विशेषः अंगदेवताकलापः। 'विपक्षिपरमात्मनोः' इत्यभिधानात् । 'अथातः शेषलक्षणं' इति मीमांसासूत्रे शेषशब्दस्यांगार्थतया व्याख्याततत्वात् । सोऽपि विशेषः उत्तरोत्तरं विषयो न तूत्तराधरमिति पूर्ववत्। उक्तं च बृहत्तन्त्रे

'उपासनाङ्गदेवानां परमांगतया भवेत्'

उपसंहृतिविशेषे तु फलानामन्यथा न तु।
पुरुषाणां विशेषाद्वा यथा योगं भविष्यति॥

उक्तविधं यथायोगमुपसंहृतिः पुरुषाणां अधिकारिणां विशेषादुत्तमत्वात्। उत्तमाधि-कारिभिः क्रियमाणेति यावत् । सफलानां विशेषे निमित्तं भवति। विशिष्टफलसाधनं भवतीत्यर्थः। ननु वाशब्दश्रवणात्फलविशेषः उक्तविधौ संहृतेर्वा अधिकारिविशेषाद्वेति फले साधनविकल्प-उत्तमाधिकारिणामेव विशिष्टफलभाक्तत्वात् । कुतः तर्हि वाशब्दार्थस्य विकल्पस्यान्वय इत्यत

उक्तं टीकाकारैरत्रैव सूत्रे एतद्वाक्यार्थकथनप्रस्तावे। 'उपासकप्रतिपत्तौ साधनविषय एवायं विकल्प' इति। नार्थफले साधनविकल्पो वाशब्दार्थः। किन्तु उपासकैः क्रियमाणायामङ्गदेवतानां यथायोगं गुणोपसंहाररूपप्रतिपत्तौ मयेदं कर्त्तव्यमित्यध्यवसाय इति यावत् । तत्र यत्साधनं यद्विषयेण वायं विकल्प इत्यर्थः। तथा हि उपासकेन स्वयोग्यतावद्गुणोपसंहारोः यः कर्त्तव्यः। सः स्वस्यतावत्फलविशेषसाधनत्वात् ।

अथ वा तावद्गुणोपसंहारे अधिकृतत्वादिति प्रतिसंधाय तावद्गुणोपसंहारः कर्त्तव्यः। तथा च मयेदं कर्त्तव्यमित्यत्र प्रत्येकमुभयोर्हेतुत्वं नत्वधिकृतत्वं फलसाधनत्वं चेति द्वयं समुचितं वा विशिष्टं च साधनमन्यतरस्य व्यभिचाराभावेनापरस्य वैय्यर्थ्यापत्तेरिति भावः। तेनैवं प्रमाणवाक्यप्रयोजनं सूचयति। या परमांगतया देवानामुपासनाकर्तव्यतयोक्ता तत्र गुणोपसंहृतिः। उत्तरोत्तरं यथायोगं कर्तव्या। नत्वन्यथा । उत्तराधरं न कर्तव्या यतः सा फलानां विशेषे निमित्तं भविष्यति। फलस्यैष्यत्वाल्लृट्प्रयोगः विशेषे इति चर्मणी द्वीपिनं हन्तीत्यादाविव निमित्तसप्तमी। तेन विशिष्टफलसाधनत्वादित्येको हेतुरुक्तो भवति। अथवा पुरुषाणामुपासकानां उत्तमत्वात् । तेन उत्तमाधिकारित्वादिति द्वितीयो हेतुर्लभ्यते। तेन उपासना न कर्त्तव्या अधिकारिविषय-प्रयोजनशून्यत्वादिति शंका परास्ता भवति। उक्तसाधनद्वयेनाधिकारिफलयोरुक्तत्वात् । अंगदेवतानामित्युक्त्या च विषयस्यापि प्रदर्शितत्वादिति।।३६।।

अथ भूमगुणस्य सर्वाधिकारिभिरुपास्यत्वप्रतिपादनर्थं सूत्रं **ओं भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति** । सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत्। यथा सर्वयोगेषु दीक्षाप्रापणीयोदयनीयमेव। न तत्र याऽवभृथादि क्रत्वंगकलापस्यानुस्यूतत्वमेव साफल्यमन्यथा वैफल्यमेव। एवं आनन्दादिगुणेषु भूमापरपर्यायपूर्णत्वानुप्रवेशेनैवोपासनं कर्त्तव्यं पूर्णानन्दः पूर्णज्ञानः पूर्णैश्वर्य इति। तथा च गौपवनश्रुतिः "भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते। तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः" इति। तस्य तात्पर्यमाह **ज्ञेयो विष्णुर्विशेषस्तु** इति। विष्णुः विशेषः विशिष्यत इति विशेषः पूर्ण इत्येव ज्ञेयः उपास्यः । तादृशज्ञाने सत्येव विशेषः फले इति शेषः स्यात् । भवेदित्यर्थः।

ननु सर्वाधिकारिणां पूर्णत्वोपासना चेत्फलतारतम्याभावप्रसंग इत्यतः सूत्रं **ओं नाना शब्दादिभेदात्**। उपास्यमानं भूमत्वमधिकारिणां योग्यतानुसारेण नानैव प्रतीयते। नत्वैकरूपम् । अतो न फलसाम्यम्। कुतो नाना प्रतीयते। शब्दादिभिः प्रमाणैः खलु तत्प्रतिपत्तव्यम् । शब्दादीनां च प्रमाणानामधिकारिवैचित्र्येण अनेकार्थप्रतिपत्तिजनकत्वात् । यथा लोके एक एव श्लोकः प्राज्ञेन केनचिदेकार्थपरतया व्याख्यायते ततः प्राज्ञतरेण ततोऽप्याधिक्येन ततोऽपि प्राज्ञतमेनेत्येवं प्रकृतेऽपि । तत्वनिर्णयो वेदार्थनियमो अपरोक्षज्ञानं चेति क्रमिकफलानि शब्दानुमानप्रत्यक्षसाध्यानीतिशब्दादिक्रमः

सूत्रो न तु पूर्णत्वमानन्त्यं तत्र कथं नानात्वमिति चेत् इत्थं। यथाकालावयवानां संवत्सरमासाहोरात्रघटीपलानां सर्वेषामानन्त्येऽपि नानात्वं तथेति न कश्चिद्विरोधः। इदमप्याह **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्** इति। भूमत्वज्ञाने उत्तरोत्तरं अधिकारतारतम्यानुसारेण विशेषो वैचित्र्यं स्यादित्यर्थः **।।३८।।**

अथ मुमुक्षुणा बिम्बातिरिक्तनृसिंहादिमृत्युपासनस्यापि कर्तव्यतां प्रतिपादयितुं सूत्रं **ओं विकल्पो विशिष्टफलत्वात्** । स्वमोक्षसाधनोपासनातिरिक्तं नरसिंहाद्युपासनं च कर्त्तव्यं वेति विकल्पः। यस्य विशिष्टफलापेक्षा अस्ति तेन कर्त्तव्यं यस्य नास्ति तेन नेति। मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम् ।

नृसिंह्यादिकमन्यच्च दुरितादिनिवृत्तये।
उपासते यथा योगं न (वा)चाफलविभेदतः ।। (ब्रह्मतर्क)इति।

नृसिंहादिकमन्यच्चेति सामानाधिकरण्यम्। इतरेषां तु स्वयोग्योपासनयैव तीव्रया दुरितादिनिवृत्तिरिति भावः **।।३९।।**

एतत्तात्पर्यमाह **ज्ञेयो विष्णुः** इति। विशेषोऽस्य अस्तीति विशेषः । भेदे हीनेऽप्यपचयी-शब्दान्तरनियमाकरूपविशेषवान् स्वमूलरूपादिभ्योऽभेदवान् । नृसिंहादिरूपोपि विष्णुः ज्ञेयः उपास्यः तस्य ज्ञाने सति उत्तरोत्तरो विशेषः फलविशेषः स्यादतो विशिष्टफलार्थिना कर्त्तव्यमर्थादन्ये नेति विकल्पः फलितो भवति। अथ ब्रह्मज्ञानसाधनोपासनस्य आवश्यकत्वसिध्यर्थं अर्थादिकामनार्था-नामुपासनानां इच्छया कर्त्तव्यत्वसमर्थनार्थं सूत्रं **ओं काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्** । कामसाधनभगवद्रूपे तत्तत्कामसाधनगुणाः कामानुसारेणोपसंहर्तव्याः न वेति विकल्प एव न तु नियतिः। विकल्पश्च मुमुक्षुभिःकार्यममुक्षुभिर्नेति। कुतः ? मुमुक्षूणां कामाख्यहेत्वभावात्। मुमुक्षुष्वेव वा विकल्पः। फलार्थं न कार्यमीश्वरप्रसादार्थं कार्यमिति। कामाख्यहेत्वभावात् ।

यस्य यस्य हि यः कामस्तस्य तस्य ह्युपासनम् ।
तादृशानां गुणानां च समाहारे प्रकल्पयेत्।

अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् ।
तुष्ट्यर्थमीश्वरस्यैव न चोपासा विदुष्यति।। इति बृहत्तन्त्रे **।।४०।।**

इदमप्याह **ज्ञेयो विष्णुः** इत्यादिना। विशिष्यत इति विशेषः। कामसाधनीभूतगुणिशिष्टतया विष्णुर्ज्ञेयः । तादृशज्ञाने सति तत्तत्फलप्राप्तिरूपो विष्णुप्रसादरूपश्च विशेषः स्यात् । अथ तत्वाभिमानिदेवानां भगवदंगाश्रिततया उपासनाविशेषप्रतिपादनार्थं अधिकरणं **ओं अंगेषु**

**यथाश्रयभाव**:। ''चक्षोः सूर्यो अजायत'' (ऋ.सं.१०-९०-१३) इत्यादिना यथा यथा भगवदंगाश्रयत्वमुक्तं तथा तथोपासना कार्यमेव। श्रुत्याप्येतमर्थं साधयत्सूत्रं **ओं शिष्टेश्च**। न केवलं तदाश्रितत्वोक्त्यन्यथानुपपत्योपासना किंतु ''यस्मिन्यस्मिन्यो हि चोंऽगे निविष्टः परस्य चिन्त्यः स तथा तथैव'' इति पौत्रायणश्रुतौ विधानाच्च । एतदुपासनायामधिकारिप्रतिपादनार्थं सूत्रं **ओं समाहारात्**। अंगेष्विति वर्तते। समाहारपदं तत्प्रतिपादकश्रुत्युपलक्षकम् । ततश्च योजना। तदुपासकानां भगवदंगेषु समाहारो मेलः अंगसायुज्यं फलं श्रूयते अतो मधुविद्यायां ''वसूनामेवैको भूत्वा'' इति फलश्रवणाद्धस्तादिदेवानामिवात्रापि सूर्यादिदेवानामधिकार इत्यर्थः। ''ध्यायेदंगेष्वंगदेवताः परस्य विशिष्टा हि गुणा मुक्तौ देवानां भवति'' इति श्रुतेः। किं च श्रुत्यन्तरेणाप्युक्तार्थसमर्थनार्थं सूत्रं **ओं गुणसाधारण्यश्रुतेश्च**। सूर्याद्याश्रयचक्षुषादिभगवद्गुणानां सर्वोपास्यत्वरूपसाधारण्यश्रुतेश्च कर्त्तव्यं तथोपासनं ''साधारण्याः सर्वगुणाः परस्य समाहार्यास्तत्वदृशो मुमुक्षोः'' इति माण्डव्यश्रुतेः ।।४१ ।।

एतदप्याह। **ज्ञेय** इत्यादिना। विष्णुः सूर्याद्याश्रयचक्षुष्वादिना ज्ञेय उपास्यः तथा ज्ञाने सति उत्तरोत्तरविशेषस्तदंगसायुज्यरूपप्राप्तिरूपः स्यादिति नन्वेतादृशोपासनस्य कर्त्तव्यत्वे ज्योतिष्टोमादिवत् सर्वशाखागतोपासनेन सहोक्तिः स्यात् । न च सा अस्ति अतो नावश्यं कर्त्तव्यत्व-मित्याशंकानिरासार्थं अधिकरणम् **ओं न वाऽतत्सह भावश्रुतेः**। सर्वशाखासु तथोपासनस्या-श्रवणादकर्त्तव्यतेति। तत्सत्यमेव। तच्चोक्तरीत्या देवैः कर्तव्यं नान्यैरिति। न केवलमुक्तान्यथानुपपत्या वाऽयमर्थसिद्धः किन्तु श्रुत्युक्तत्वाच्चेत्येतदर्थप्रतिपादकं सूत्रं **ओं दर्शनाच्च**। ''सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत्किंचित्समुपासीत धीरः सर्वैगुणैर्देवगणा ह्युपासते'' इति कमठश्रुतिः ।।४२।।

तत्तात्पर्यमाह **ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्** । विविधाः विशिष्टाः वा तत्वाभिमानिनो देवाः। शेषाः उपसर्जनीभूता आश्रिता यस्मिन्निति विशेषस्तादृशो विष्णुर्ज्ञेयः। इदमुक्तं भवति। अंगाश्रितदेवताकत्वेन विष्णुर्ज्ञेयः उपास्यस्तन्न सर्वाधिकारिसाधारण्यं किन्तु तथाविधज्ञाने उपासने अधिकारिणामुत्तरोत्तरं विशेषो देवत्वादिरूपः स्यात् । तस्मात्तथाविधोपासनं न सर्वाधिकारिभिः कर्त्तव्यं किन्तु तत्तदंगाश्रयणयोग्यैर्देवैरेव कर्त्तव्यमिति सिद्धम्।।

**।। इति श्रीमत्कृष्णद्वैपायनकृतश्रीमद् ब्रह्मसूत्राणुभाष्यविवरणे तृतीयाध्यायस्य तृतीयः पादः ।।**

**।। इति नारायणकृतावणुभाष्यप्रपंचने तृतीयाध्यायस्य तृतीयः पादः ।।**

**मळगी** – मनुष्योत्तमाद्युपासनाप्रकारमाह **सच्चित्** इति। **मानुषैः** मनुष्योत्तमैः। स्वतन्त्रं सदिति प्रोक्तमित्युक्तेः **सत्** पारतन्त्र्यादिदोषरहितः। **चित्** पूर्णज्ञानस्वरूपः। **आनन्द** पूर्णसुखस्वरूपः। **आत्मा** मम स्वामीति चतुर्गुणैः **उपास्यः** उपासितुं योग्यः। **सुरेश्वरैः** सुराणां देवानाम् **ईश्वराः** श्रेष्ठास्ते।

तथा तैः **बहुगुणैः** वेदोक्तानेकगुणैरुपास्यः। सुरादिकैरित्यपि पाठः। तत्पक्षे **सुरादिकैः** देवर्षिपितृचक्रवर्तिभिः **यथाक्रमं** स्वयोग्यतानुसारेण। **ब्रह्मणा** चतुर्मुखेन । तु भूमोपासनयोग्यस्तु ब्रह्मैव हि चतुर्मुखः इति छान्दोग्यभाष्योक्तेः। **अखिलैर्गुणैः** वेदोक्तसमस्तगुणैरुपास्यः।।४।। **सर्ववेदैः** समस्तवेदैश्च। **सर्वैरपि** समस्तमुक्तियोग्यैरपि **यथाबलं** स्वस्वशक्त्यनुसारेण। **विष्णुः ज्ञेयः** ज्ञातुं योग्यः। मनुष्योत्तममारभ्य । **ज्ञान इति** समुदायैकवचनम् । **ज्ञाने** वेदार्थज्ञानेषु **उत्तरोत्तरं** उत्तरोत्तरज्ञानानां । **विशेषः** अतिशयः **स्यात्** भवति।।५।।

**।। इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां तृतीतायाध्यायतृतीयः पादः ।।**

**लिंघेरी –** मनुष्योत्तमादिभिः उपासनाप्रकारमाह **सच्चित्** इति।। **सत्** सत्यः । **चित्** ज्ञानस्वरूपः। **आनन्दः** सुखस्वरूपः । **आत्मा** स्वामि इति। मानुषैः **उपास्यः** उपासितुं योग्यः। **सुरेश्वरैः** देवश्रेष्ठैः देवानां श्रेष्ठाः तथा तैः । **यथाक्रमं** बहुगुणैरुपास्यः । ब्रह्मणा त्वखिलैर्गुणैरुपास्यः।।४।।

सर्ववेदैः सर्वैरपि सर्वजीवैरपि यथाबलं बलमनतिक्रम्य विष्णुः ज्ञेयः। मनुष्योत्तममारभ्य उत्तरोत्तरं ज्ञाने विशेषः स्यात् भवति।।५।।

**।। इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यटीकायां तृतीयाध्यायस्य तृतीयः पादः ।।**

**नारायणपण्डित–** तद्भक्तितारतम्येन तारतम्यं विमुक्तगमिति आनन्दादयः प्रधानस्येति नयार्थः। सर्ववेदैः तदुक्तरीत्या सच्चिदानन्द आत्मेति चतुर्गुणैः मानुषैरधिकारिभिः उपास्यो विष्णुरिति। इतरे त्वर्थसामान्यादित्यादेरर्थः सुरेश्वरैस्तु अग्न्यादिभिर्यथाक्रमं तारतम्यक्रममित्यादेरर्थः। सर्ववेदैरखिलैर्गुणैर्ब्रह्मणा तु विशेषेण विष्णुरुपास्य इति। सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादित्यादेरर्थः सर्वैरधिकारिभिः यथाबलं स्वशक्तिमनतिक्रम्य सर्ववेदैश्च तदुक्तरीत्या विष्णुर्ज्ञेय इति। प्रज्ञान्तरपृथक्त्ववादित्यादेस्तात्पर्यार्थः अग्न्यादिदेवतानामन्येषां च उत्तरोत्तरं यथा तथा तारतम्यानुसारेण ज्ञाने परोक्षापरोक्षरूपे तु विशेषेण विशेषः तारतम्यमस्त्येवेत्यर्थः। **अधिकरणानि ४२ सूत्राणि ६८**

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यटीकायां तृतीयाध्यायस्य तृतीयः पादः ।।**

**गूढकर्तृक –** तृतीयपादार्थमपि संकुच्य संगृह्णात्यणुभाष्यकारः। **सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः। यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः। उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम् । ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्** । सर्ववेदैः तदुक्तरीत्या सच्चिदानन्द आत्मेति चतुर्गुणैर्मनुष्यैरधिकारिभिरुपास्यो विष्णरित्यानन्दादयः प्रधानस्य इत्याद्यधिकरणार्थः। इतरे त्वर्थसाम्यादित्यादेरर्थः सुरेश्वरैस्तु अग्न्यादिभिर्यथाक्रमं तारतम्यं क्रमनतिक्रम्य बहुगुणैर्विष्णुरुपास्य

इति। आध्यानायेत्याद्यर्थः सर्ववेदैरखिलैर्गुणैर्ब्रह्मणा तु विशेषेण विष्णुरुपास्य इति। सर्ववेदान्तप्रत्ययमित्यादेरर्थः सर्वैरधिकारिभिः यथाबलं स्वशक्तिमनतिक्रम्य सर्ववेदैश्च तदुक्तरीत्या विष्णुर्ज्ञेय इति। प्रज्ञान्तरपृथक्त्ववदित्यादेस्तात्पर्यार्थः अग्न्यादिदेवानामन्येषां चोत्तरोत्तरं यथा तथा तारतम्यानुसारेण ज्ञाने परोक्षापरोक्षरूपे तु विशेषेण तारतम्यं स्यादित्यर्थः।। अस्य संकोचत्वाद्विस्तृतस्तु अन्यत्र ज्ञेय इति तृतीये तृतीयपादार्थः।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यटीकायां तृतीयाध्यायस्य तृतीयः पादः ।।**

**अणुभाष्यम्**

**सर्वेऽपि पुरुषार्थास्स्युर्ज्ञानादेव न संशयः।**
**न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् ।।६।।**

**गुणदोषैस्सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ।**
**नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ।।७।।**

**सत्यनाथीया–** **पुरुषार्थोऽतश्शब्दात्** इति सूत्रार्थमाह । ज्ञानादेव मुख्यतो मोक्षम् । अन्ये स्वर्गादयः कर्मयुक्तज्ञानादेव स्युः। ज्ञानं मुख्यम् । कर्म त्वमुख्यम् । नात्र संशय इति। स्तुतयेऽनुमतिर्वा इत्यधिकरणतात्पर्यं आह **न लिप्यते** इति। सर्वदोषैः स्वकर्मभिः क्वचिदपि मनुष्यलोके ज्ञानवानपरोक्षज्ञानी न लिप्यते अशुचित्वनरकादिकं मोक्षाभावं च न प्राप्नोति। वैय्यर्थ्यपरिहाराय फलान्तरमाह **गुणदोषैः** इति। **गुणदोषैः** शुभाशुभकर्मभिः। **सुखस्यापि** ज्ञानिभोग्यसुखादेः। **विमुक्तिगौ** विशिष्टमुक्तिगतौ। विशेषोऽस्ति। वृद्धह्रासौ व्यक्त्यव्यक्तौ भवतः। केषाम् ? नृणामेव। तद्व्यावर्त्यमाह **सुराणां** इति। विशेषोऽस्ति। मुक्तौ यथाक्रमं तारतम्यमनतिक्रम्य तदनुसारेण सुखं क्लृप्तमेव अभिव्यक्तियुक्तमेव न ह्रासोपेतमित्यर्थः। अनुव्याख्यानादौ विशेषो ज्ञेयः

**।। इति श्रीसत्यनाथतीर्थमुनिविरचिताणुभाष्यविवरणे तृतीयाध्यायस्य चतुर्थः पादः ।।**

**तत्वमञ्जरी–** एतत्पादार्थो भाष्य एव व्यक्तत्वादिह नोक्तः। यद्वा "विशेषस्तु ज्ञाने" इत्यनुवर्त्य पूर्वपादोक्तोपासानाजन्यापरोक्षज्ञाने सामर्थ्यातिशयरूपविशेषस्तूच्यते अत्र पाद इत्यध्याहृत्यैतत्पादार्थोक्तिपरतया व्याख्येयम् ।

तत्र ज्ञानस्य मोक्षतदन्यसर्वपुमर्थहेतुत्वं वक्तुं **पुरुषार्थोऽतः** इत्यादिसूत्रनवकम् । तदर्थं भाषते – **सर्वेऽपि पुरुषार्थाः स्युः ज्ञानादेव न संशयः** इति। न कवेलं मोक्षः किन्तु पुरुषैरर्थ्यमाना यावन्तः कामाः ते सर्वेपीत्यर्थः।

ननु ''यदेव विद्यया'' इत्यादिना ज्ञानस्य मोक्षान्यस्वर्गादिपुमर्थविषये तद्धेतुकर्म प्रति शेषत्वावगमात् कथं ज्ञानादेवेत्युक्तिरित्यतो न संशय इत्युक्तिः।

का गतिर्ज्ञानस्य कर्मशेषत्वोक्तेरित्यतोऽपि **सर्वेऽपि पुरुषार्थाः स्युः ज्ञानादेव न** इति। उत्तरोत्तरमिति वर्तते। **सर्वेऽपि** प्रागुक्तमानुषादिसमस्ताधिकारिणोऽपि । ज्ञानादेव पुरुषार्थाः। अर्श आदिभ्योऽच् । स्वर्गादिपुरुषार्थवन्तो न भवन्ति। किन्तूत्तरोत्तरं पूर्वोक्ताधिकारिषूत्तरोत्तरं सुरेश्वराद्युत्तमाधिकारिण एव सर्वेऽपि ज्ञानादेव सर्वपुमर्थवन्तो भवन्तीत्यर्थः । तथा च ज्ञानस्य स्वर्गादौ कर्मशेषत्वादस्तु मानुषपरो वा प्रतिबद्धदेवविषयो वेति भावः।।१।।

यत्तु ज्ञानस्य स्वावच्छेदकदेहपातानन्तरमेव मुक्त्यहेतुत्वे कालान्तरेऽपि तद्धेतुत्वं न स्यादित्यतः प्राप्तं – एवं **मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः** इति चरमाधिकरणम् । तदर्थोऽपि ज्ञानादेव सर्वपुरुषार्थाः स्युः न संशय इत्युक्त्या सङ्गृहीतो ध्येयः। असति प्रतिबन्धे तद्देहानन्तरमेव। प्रतिबन्धे तु सति कालान्तर इत्यङ्गीकारे दोषाभावादिति भावः।।११।।

यच्च ज्ञाने सर्वेषां नाधिकारिता, किन्तु यथाशक्ति कृत्स्नाध्ययनवतामेव। साऽपि तारतम्येनैव नत्वेकप्रकारेणेत्येतत्प्रतिपादयितुं ''**असार्वत्रिकी**'' ''**नाविशेषात्**'' इति च नयद्वयम् । तदर्थसङ्ग्रहाय सर्ववेदैश्च सर्वैरपि यथाबलं ज्ञेयो विष्णुरित्यनुवर्त्य इहापि योज्यम् । तथा हि ज्ञेय इत्यपरोक्षज्ञानमत्राभिप्रेतम् । सर्वे वेदा येषां तैः सर्ववेदैरिति बहुव्रीहिः। चोवधारणे। यथाबलं सर्ववेदाध्यनवद्भिरेव। सर्वैरपि मानुषादिब्रह्मान्तैः यथाबलं विष्णुर्ज्ञेयोऽपरोक्षीकर्तव्य इत्यर्थः।।२–३।।

अत्र सर्वैरित्यावर्त्यम् । एकं उक्तरीत्या मानुषाद्यधिकारिपरम् । अन्यत्तु ज्ञानेतिकर्तव्य-तारूपधर्मपरम् । अनादिमुक्तियोग्यतादेवतादिरूपस्वोत्तमपदानाकांक्षत्वानाविष्करणादिरूपधर्मैः विष्णुर्ज्ञेयः साक्षात्कार्यो नान्यथेति। तेन योग्यानामेव ज्ञानप्राप्तिः नत्वयोग्यानां आसुरप्रकृतीनामित्येतदर्थकस्य **सर्वथापि तु त एवोभयलिङ्गात्** इति नयस्य, तथा ज्ञानस्य देवादिपदाकांक्षा शून्यैरेव प्राप्यत्वं वक्तुं प्राप्तस्य **न चाधिकारिकमपि** इत्यधिकरणस्य, तथा ज्ञानस्यायोग्येभ्योतिगोपनं वक्तुं प्रवृत्तस्य **अनाविष्कुर्वन्नन्वयात्** इत्यधिकरणस्य अर्थः सङ्गृहीतो ध्येयः।।५।।६।।९।।

यत्तु ज्ञानिनः सदसत्प्रवृत्तौ विशेषोक्त्यर्थं **स्तुतयेऽनुमतिर्वा** इत्यादिविंशतिसूत्रमधिकरणं तदर्थं भाषते **न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् । गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ। नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम्** इति। सर्वदोषैः सदा पापैरपि ज्ञानवान् अपरोक्षज्ञानवान् न लिप्यते च। न केवलं सर्वपुरुषार्थभागिति चार्थः। अयं च **कामकारेण चैके** इत्यादेरर्थः।

यद्वा ज्ञानित्वेऽपि मानुषदेवयोर्लेपाभावेऽपि विशेषद्योतकतया ज्ञानवांस्त्विति तुशब्दार्थकश्चकारः। स को विशेष इत्यतः **परमार्शं जैमिनिः** इत्यादिसूत्राभिप्रेतं मानुषाणां तावत्तं विशेषमाह – **गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ। नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम्** इति। ज्ञानानन्तरभाविपुण्यपापैः नृणां मुक्तौ स्वरूपसुखस्यापि स्रक्चन्दनवनितादिविषयभोग-हेतुकव्यक्त्यतिशय तदभावलक्षणवृद्धिह्रासौ भवत इत्यर्थः।

अत्र न लिप्यत इत्युक्तिः। **तदधिगम उत्तरपूर्वाघयोरश्लेषाविनाशौ** इति चतुर्थाध्यायाद्य-पादीयसूत्रोक्तिश्च मुक्तिप्रतिबन्धकताशुचित्वादिराहित्य मात्राभिप्रायेति भावः। तदुक्तमनुव्याख्याने–

"ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते। अशुचित्वादिकं तस्य न भवेदिति तत्फलम्।" अत्र ज्ञानफलस्यैव मुक्तेर्नियततोच्यते इति।

एवं मानुषाणामलेपे विशेषमुक्त्वा देवानां अनुष्ठेयं बादरायणः इत्यादिसूत्राभिमतं विशेषमाह – **सुराणां तु यथाक्रमं सुखं क्लृप्तं** इति। क्लृप्तमेव न ह्रासवदित्यर्थः। येन तारतम्यक्रमभङ्गः स्यादिति भावेनोक्तम् – **यथाक्रमम्** इति। सुराणां त्विति तुशब्दस्तु "देवानामपि न प्रायः क्लृप्तस्य तु कथञ्चन। प्राप्तह्रासो भवेत्क्वापि महता तु विकर्मणा ॥" इत्याद्यनुभाष्योक्त-विशेषद्योतकः ॥४॥

यत्तु तत्वाभिमानिदेवानामेव सम्पूर्णप्रजाकृतपुण्यफलमित्यर्थसाधकं **स्वामिनः फलश्रुतेः** इत्यधिकरणम्। तस्याप्यर्थो **नृणां सुराणां** इत्यादिना सङ्गृहीतो ध्येयः। तथा हि। गुणदोषैरित्यतो विभागेन गुणैरित्यन्वेति। नृणां प्रजानां गुणैः पुण्यैः क्लृप्तं सम्पूर्णमिति यावत्, सुखं तु सुराणां यथाक्रमं तत्तद्देवताधिक्यानुरोधेन भवेत्। प्रजानां त्वल्पमेवेति। अत्र फलमिति वाच्ये सुखमिति पुण्यफलमात्रोक्तिः प्रजाकृतपुण्यफलमेव देवानां न पापफलम्। तत्तु असुराणाम्। "पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति" इति श्रुतेरिति द्योतयितुम् ॥७॥

देवानां सम्पूर्णपुण्यफलोक्त्यैव तेषां सर्वाश्रमधर्मवत्त्वसूचनात् कृत्स्नभावात्तु गृहिणोपसंहार इति नयार्थोऽप्युक्तप्रायः ॥८॥

साधनसम्पत्तिजन्मन्येव देहेऽपरोक्षज्ञानोत्पत्तेरदर्शनात्, कालान्तरेऽप्युपासनया अपरोक्षज्ञानोदयो न स्यादित्यतो सति प्रतिबन्धे तज्जन्मनि, प्रतिबन्धे तु जन्मान्तर इति वक्तुं प्राप्तस्य **ऐहिकमप्रस्तुतप्रतिबन्धे** इति नयस्यार्थस्तु तेन यात्यपरोक्षतां इत्यग्रे व्यक्तत्वादिह नोक्तः। तथा चाग्रे विवरिष्यामः।

**सुधीन्द्रगुरुशिष्येण राघवेन्द्रेण भिक्षुणा ।**
**कृतायां तत्वमञ्जर्यां तृतीयोऽध्याय ईरितः ।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्यां तृतीयाध्यायस्य चतुर्थः पादः। इति तृतीयाध्यायः समाप्तः ।।**

**आनन्दमाला** – उक्तोपास्तिसिद्धस्य भगवदपरोक्षज्ञानस्य स्वभावसामर्थ्यमस्मिन्पादे उच्यते।

साधनान्तरविरोधेऽपि मोक्षपर्यवसायित्वं स्यादेवास्येति प्रत्याययितुम् – ''पुरुषार्थोऽतः शब्दादिति बादरायणः'' (३-४-१) इत्यधिकरणम् । **सर्वेऽपि पुरुषार्थाः स्युर्ज्ञानादेव न संशयः** इति। यदेतदुक्तोपास्तिसिद्धं निर्दोषं विष्णुविषयमपरोक्षज्ञानं तस्मादेव ज्ञानात् साधनान्तरमन्तरेणापि पुरुषार्थाश्चत्वारोऽपि स्युः। तद्दर्शिनामिति शेषः। तत्राप्यधिकानामाधिक्येनेति विशेषः प्रागेव तुशब्दात् सूचितः। स्वस्वजात्यनुसारेण प्रारब्धक र्माननतिक्रम्येत्यपि विशेषो ग्राह्यः । अपिशब्दो जैमिन्यादिमतेषु विवक्षितविशेषसूचकः। ज्ञानादेव मोक्षो नान्यद्वारेण स्यात्, स्वर्गादयः कर्मद्वारेणेति हि तद्विशेषः। तर्हि तत्पक्षे मोक्षोऽपि कर्मद्वारेणैव स्यादिति च संशयो मा भूदित्यभिप्रायेण न संशय इत्युक्तम् ।।१ ।।

न चैतादृशे ज्ञाने सर्वजन्तवोऽधिकारिणः शङ्क्याः। सोम इव कियन्त एवेति विभागश्रवणात्। एवं चेत् किंलक्षणास्त इति चेत् सर्ववेदैश्च ज्ञेयः इति पुरस्तादुक्तत्वादध्ययनवन्त एव ज्ञानाधिकारिण इति साधितं भवति। **यथाबलम्** इति विशेषणात् तत्तारतम्यं च तत्रैवोक्तम् । न चानधिकारिणस्तज्ज्ञानं क्वचित् गृह्णन्ति। सर्वथापि स्वभावस्यानभिभवात् । अधिकारिभिः अप्यत्यधिकारं न किञ्चिदप्याकांक्ष्यम् । पतनप्रसङ्गात् । तस्माद् योग्य एव सन्नयोग्येष्वनाविष्कुर्वन् योग्यायैव तद्योग्योपास्तिमुपदिशेत् । तच्चास्य साक्षाद् बिम्बरूपं ह्युपासितुं योग्यम् । बिम्बद्वारभूत एव च तदुपदेष्टुं योग्यः। प्रतिबिम्बभूत एव च श्रोतुम् । सामान्ययोग्यतायां च सामन्योपदेशादिः सम्भवेत्। उक्तलक्षणहीना एव ह्ययोग्याः। अत एव हि मानुषैस्तु ब्रह्मणा तु इत्यादिना तत्तद्योग्योपास्तिमुक्त्वा तुशब्दाभ्यामाद्यन्तयोरधिकारितावत्तां सूचयाम्बभूव ।।२ ।।४-५ ।।८ ।।

''स्तुतयोऽनुमतिवा'' (३-४-१४) इत्यादीनि कामचारश्रुतिसूत्राणि व्याख्याति – न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् इति।अपि च प्रारब्धकर्मवशात् क्रियमाणैः कामक्रोधादिभिर्ज्ञानदोषैः कर्मदोषैश्चाज्ञानिवदपरोक्षज्ञानी न लिप्यते च यल्लोपे तत्सामर्थ्याद्यथोक्तकालेऽपि मोक्षाभावः प्रसज्येत । कामचारवादभक्षादिसर्वदोषाणामपि ज्ञानफलप्रतिषेधशक्तिर्न स्यादित्यर्थः।

एवं सति गुणदोषाणामाचरणे वर्जने वा न कश्चिद् विशेषस्तस्येत्यत आह – ''शमदमाद्युपेतः स्यात् तथापि तु तद्विधेः तदङ्गतया तेषामवश्यानुष्ठेयत्वात्'' (३-४-२७) ''शब्दश्चातोऽकामकारे''

(३-४-३१) इत्यादीनि सूत्राणि व्याख्याति - **गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ** इति। यद्यपि ज्ञानादेव मोक्षसिद्धर्नियता तथापीत्यपिशब्दार्थः। ज्ञानिनः श्रुतिविहितैः शमादि-गुणैर्वर्णाश्रमधर्मसहितैर्यथाशक्त्यनुष्ठितैर्ज्ञानैकफले मोक्षे सुखस्य वृद्धिः स्यात् । श्रुतिनिषिद्ध-ब्रह्महत्यादिदोषैर्यथाकाममाचरितैस्तस्य ह्रासश्च स्यात् । वृद्धिह्रासौ तु यथालभ्यस्यापि ज्ञानफलस्य पुनर्महत्त्वाल्पत्वापत्ती एव। तस्माद् ब्रह्मदर्शिनोऽपि गुणानुष्ठानं दोषवर्जनं चावश्यं कार्यम्।

अत्रायं च विशेषो गवेषणीयः। बहुज्ञस्य हि देवगणस्य गुणाचरणप्राचुर्यं दृश्यते। अतो वृद्धिरेव तस्य प्रायेणानुमेया। अल्पज्ञस्य तु नरवरस्य विपर्ययप्राचुर्याद् विपर्ययः। विरिञ्चस्य तु परिपूर्तिरेव सुखस्य प्रमाणसिद्धा। विहिताखिलगुणानुष्ठानात् । नैव च हानिः काचिदपि भवेत् । निषिद्धाखिलदोषवर्जनात् । नीचस्य तूच्चापराधतो विशेषेण च हानिर्भवेत् । अतो दूरादेव परिहरणीयः स्वोच्चापराधः। परिचरणीयश्चाचार्यः। सतात्पर्यं यथाशक्तिप्रसत्त्यै विहितमेव सर्वथाप्यनुसरणीयम् । अनाचरणीयमेव च निषिद्धं मनसापि । अनापदि विशेषतोऽपि किमर्थम् ? क्लृप्तस्यापि ज्ञानफलस्य पुनः पूर्णत्वाय पुनरनल्पत्वाय चेति ।।३।।

"स्वामिनः फलश्रुतेरित्यात्रेयः" (३-४-४४) इत्याद्यधिकरणार्थं वदन्नध्यायार्थमपि निगमयति - **नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम्** इति। नरादीनां सुरान्तानां यथोक्ताल्प-बहुगुणोपसंहारिणामप्रारब्धप्रतिबन्धजन्मनि ब्रह्मदृशां तादृग्जन्मात्यय एव मुक्तिभाजां च सतां तत्र मुक्तौ यथा जातिक्रमं सुखं क्लृप्तम् , एषामियदेषामियदिति। तुशब्दान्नरावराणामसुराणां चाऽन्धेतमसि यथाक्रमं दुःखं क्लृप्तम् । पारिशेष्यान्नृमध्यमानां नित्यसंसारे यथाक्रमं तदुभयमपि मिश्रं क्लृप्तम्। ईशेनेति शेषः सर्वत्रापि ग्राह्यः। न च तत्क्लृप्तं क्वचित् कस्याप्यन्यथा भवति।

केषां तर्हि कियत्सुखं क्लृप्तमिति चेत्, उच्यते। प्रथमं स्वातन्त्र्यादिगुणेष्ववराणां नराणां न्यूनम्। उत्तमानां सुराणामधिकम् । तुशब्दादत्युत्तमस्य ब्रह्मणोऽत्यन्ताधिकम् । तच्चानन्दश्रुत्युदितप्रकारेण शताधिकं शताधिकं भवति। न हि भृत्यानां स्वामिनां च सतां सममेव फलं भवितुमर्हति। तस्मादपि नराणां भृत्यवदल्पं वेतनफलम् । सुराणां क्षेत्रग्रामविषयस्वामिवत् क्रमाधिकमायफलम्। ब्रह्मणः सार्वभौमवत् करफलम् । अथ सत्रयागेष्वृत्विजामिवाल्पमायफलम् । ब्रह्मणःसार्वभौमवत् करफलम् ।अथ सत्रयागेष्वृत्विजामिवाल्पफलमवराणाम् । यजमानानामिव महन्मध्यमानाम् । तद्गुरूणामिव महत्तममुत्तमानामिति वा । शिष्याणां नृणां यथाश्रुतं स्वालम्बुद्धिगोचरं सुखं फलम् , तद्गुरुपूर्वकाणां नृजातानां ततोऽष्टद्व्यष्टादिगुणम्, तन्नियन्तृणां देवानां सहस्रलक्षादिगुणम् , तेषामपि नियन्तुर्ब्रह्मणो महौघगुणमित्येषा हि तत्क्लृप्तिर्गुरुवृत्तोक्ता। तुशब्दोऽवधारणार्थश्च । तस्माद्यथोक्तसाधनं यथाशक्त्यनुष्ठेयमित्यध्यायार्थो निर्णीयते ।।६-७।।९-१०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां तृतीयाध्यायस्य चतुर्थः पादः तृतीयाध्यायः समाप्तः ।।

**नृसिंहतीर्थ** –ज्ञानफलमत्र निरूप्यते। **सर्वेऽपि पुरुषार्थास्युः** इति। सर्वे पुरुषार्था अपि स्वर्गसुखभोगादिपुरुषार्था अपि ज्ञानादेव योग्यापरोक्षज्ञानादेव सम्भवति संशयो न । ज्ञानवान् योग्यापरोक्षज्ञानवान् सर्वदोषैः श्रेष्टापराधेतरसर्वदोषैः क्वचिदपि कस्मिंश्चिज्जन्मन्यपि न लिप्यते। नृणां सुराणामपि सुखस्य गुणदोषैः श्रेष्टोपसत्तिश्रेष्टापराधलक्षणगुणदोषैः वृद्धिह्रासौ आनन्दानुभवातिशयानभिव्यक्तिलक्षणवृद्धिह्रासौ विमुक्तिगौ भवत इति शेषः । मुक्तौ क्लृप्तसुखं यथाक्रमं तारतम्यक्रममनतिक्रम्य वर्त्तत इति शेषः ।

**।। इति श्री तृतीये अनुभाष्यभावप्रकाशिके चतुर्थपादः ।।**

**श्रीनिवासतीर्थीया** – सकलनयार्थो भाष्ये दृष्टव्य इत्यभिप्रेत्य पुरुषार्थोऽतः शब्दादि- त्यधिकरणार्थमाह **सर्वेऽपि** इति। मोक्षस्वर्गादयः सर्वे पुरुषार्थाः ज्ञानादेव स्युः नात्र संशय इत्यर्थः। मुख्यतो मोक्षो ज्ञानादेव स्वर्गादयस्तु कर्मयुक्तज्ञानादेव । तत्र ज्ञानं मुख्यम् । कर्म त्वमुख्यमिति दृष्टव्यम् । स्तुतयेऽनुमतिर्वा अज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषाभावः समर्थ्यते। स चाज्ञानिनामपि समान इत्यतस्तात्पर्यमाह **न लिप्यत** इति। चशब्दः एवार्थे । न लिप्यत एवेति सम्बन्धः। क्वचिदपीति। तथा च ज्ञानवानपरोक्षज्ञानी सर्वदोषैः स्वकृतपापकर्मभिः क्वचिदपि मनुष्यलोके परलोके वा न लिप्यते। अशुचित्वं नरकादिकं मोक्षाभावं वा नाप्नोतीत्यर्थः। न ह्यज्ञानिनः सर्वदोषलेपाभावोऽस्तीति भावः। अनेन कामकारेण चैक इति मूलार्थः उक्तः। नन्वेवं सति तदधिगम इत्यनेन पौनरुक्त्यं स्यात् । तत्रापि ज्ञानोत्तराघस्याश्लेषोक्तेरिति चेत् । अत्र ज्ञानिकृतपापानां ज्ञानफलमोक्षाविघातकत्वे तात्पर्यात् । अत्र तु कर्मणां प्रतिबन्धकानां सत्त्वात् कथं मोक्ष इत्याशङ्कानिवृत्त्यर्थं ज्ञानात्पूर्वेषां विनाशः । उत्तरेषां अश्लेष इत्यत्रैव तात्पर्यात्। तदुक्तमनुव्याख्याने –

ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते। अशुचित्वादिकं वाऽस्य न भवेदिति तत्फलम् ।

अत्र ज्ञानफलस्यैव मुक्ते नियमतोच्यते। ननु ज्ञानिनो दोषलेपाभावे कथं सत्प्रवृत्या विशेषांगीकारः। योऽत्र प्रतिपाद्यते। न तावन्मोक्षः । विद्यैव तु निर्धारणादित्यत्र तस्य ज्ञानमात्रसाध्यतोक्तेः। नापि स्वर्गादिः। पुरुषार्थाधिकरणे तस्यापि ज्ञानसाध्यत्वस्य समर्थितत्वेन सत्प्रवृत्तिविशेषाभावात् । यस्य ज्ञानिनो न स्वर्गाद्यपेक्षा तदीयासत्प्रवृत्तिविशेषाभावप्रसंगाभावाच्चेत्यत आह **गुणदोषैः** इति। अत्र गुणदोषशब्दाभ्यां सदसत्प्रवृत्ती उच्येते। ज्ञानोत्तरं कृते इति शेषः। अपि शब्दोऽवधारणे । गुणदोषैः सदसद्वृत्तिभिः सुखस्यापि ज्ञानिभोग्यसुखादेरेव विमुक्तिगौ विशिष्टमुक्तिगतौ वद्धिह्रासौ व्यक्त्यव्यक्तीभवतीत्यर्थः। तथा च ज्ञानानन्तरभाविन्याः असत्प्रवृत्तेः मुक्तिगस्य सुखस्य ह्रासो विशेषः। न तु नरकादिदुःखप्राप्तिः। सत्प्रवृत्तेश्च मुक्तिगतस्य सुखस्यैव वृद्धिविशेषः, न तु विमुक्तिः। नापि स्वर्गादिरिति भावः। तत्रापि दोषमाह **नृणां** इति। गुणदोषैरित्यादिकं सर्वमनुवर्तते। अत्र ह्रासो नाम यावत्स्वरूपसुखानभिव्यक्तिः। वृद्धिस्तु यावत्स्वरूपाभिव्यक्तिः।

ननु कथं मोक्षे सुखानभिव्यक्तिः। आवरणाभावादिति चेत् । द्विविधं ह्यावरणं एकमीश्वरेच्छारूपं अपरं प्रकृत्यादि । तत्र द्वितीयं मुक्तौ नास्त्येव। आद्यं तु वर्तते। तच्च ज्ञानोत्तरं ज्ञानं निमित्तीकृत्यानन्दानुभवं प्रतिबध्नाति। यथोक्तं "अजे द्वे प्रकृति" इत्यादि। यावदनुभूयते मुक्तौ तावदेतत्स्वरूपमिति निरस्तम्। "स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः। व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तमः" इति श्रुतिप्रमाणानुसारेण अलौकिकार्थस्य कल्प्यत्वादिति।

ननु देवानामप्यसत्प्रवृत्तिरस्त्येव । तथा च तन्निमित्तह्रासोऽपि स्वीकर्तव्यः। न चैवं सम्भवति। तथात्वे अयमस्मादेतावन्न्यूनोऽस्मादेतावदधिक इति शास्त्रीयव्यवहारविलोपप्रसंगात् । तथा च शास्त्रस्याप्रामाण्यं स्यात् । न च तदेव प्रतियोगिपरम्परायामसत्प्रवृत्तिर्भवतीति न विरोध इति वाच्यम् । प्रमाणाभावात् । न च स्वरूपापेक्षया तद्व्यवहारः । तथाप्यानन्दानुभवतारतम्या- भावादित्यत आह **सुराणां** इति। सुराणां त्वित्यतः तुशब्दो मनुष्यापेक्षयाविशेषमाह। सुराणां विशेषोऽस्ति। मुक्तौ यथाक्रमं तारतम्यमनतिक्रम्य तदनुसारेण सुखं क्लृप्तमेवाभिव्यक्तियुक्तमेव। न ह्रासोपेतं इत्यर्थः।

अयमभिसंधिः। न सुराणामसत्प्रवृत्त्या मनुष्यवन्मुक्तिगतसुखह्रासो भवति। येनानन्दाद्यनु- भवतारतम्याद्यभावः स्यात् । किं तु सुराणां मुक्तौ यथाक्रमं सुखं क्लृप्तमेव। यस्य यावद्गुणत्वं तस्यासत्प्रवृत्या ह्रासो नास्तीति यावत् । न चैवं तर्हि तेषामसत्प्रवृत्या विशेषाभावप्रसंग इति वाच्यम् । क्लृप्तहान्यभावेऽपि स्वयोग्यपरिपूर्तये यावत्साधनमनुष्टेयं ततोऽतिरिक्तेनानुष्ठितेन साधनेन यदानन्दादिकं प्रसक्तं तदभावस्यैवासत्प्रवृत्तिविशेषत्वात् । यथोक्तमनुव्याख्याने(४-४-६) "चन्द्रसुग्रीवयोश्चैव सोच्चदारपरिग्रहात् । प्राप्तहानिरभून्नैव क्लृप्तहानिः कथंचन" इति । इदं च हिरण्यगर्भेतरदेवताविषयम् । हिरण्यगर्भस्यासत्प्रवृत्तेरभावेन प्राप्तहानेरभावादिति ज्ञेयम् ।

**।। इत्यणुभाष्यविवरणे श्रीमद्यदुपत्याचार्यपूज्यपादाराधकश्रीनिवासविरचित तृतीयाध्यायस्य चतुर्थः पादः ।।**

**छलारी –**

**हरिः ओम्**
**लक्ष्मीरूपद्वयेनालं गृहीत्वा कलशद्वयम् ।**
**चक्रेऽभिषेकं सुदया तं हयास्यमहं भजे ।।**

**ओं पुरुषार्थोऽतः शब्दादिति बादरायणः ओं**

अतः अपरोक्षज्ञानादेव अशेषपुरुषार्थो भवतीति बादरायणो मन्येत। कुतः ? शब्दात् , तथा श्रुतेरिति सूत्रार्थः।

अत्र ज्ञानं मोक्षमात्रसाधनं, न स्वर्गादिसाधनं ज्ञानिनां मोक्षेतरपुरुषार्थेषु विरक्तत्वेन तदिच्छाया एव अभावात् । इच्छाभावेऽपि तत्प्राप्तौ पुरुषार्थत्वमेव न स्यादिति प्राप्ते –

ज्ञानेन यावदपेक्षितं तत्सर्वमाप्यत एव। न तु मोक्षमात्रम् । कुत इति चेन्न । ''यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः'' (मुं.उ.३-१-१०)इति श्रुतेः। ''ज्ञानादेव स्वर्गः, ज्ञानादेवापवर्गः ज्ञानादेव सर्वे कामाः सम्पद्यन्ते'' इति श्रुत्यन्तराच्चेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **सर्वेऽपि** इति । न केवलं ''विद्यैव तु निर्धारणात्'' इत्युक्तरीत्या मोक्ष एव ज्ञानात् ,किन्तु पुरुषैरर्थ्यमानाः सर्वेऽपि पुरुषार्थाः ज्ञानादेव स्युः । न तत्र संशयः कार्यः इत्यर्थः ।।१ ।।

## ओं असार्वत्रिकी ओं

ज्ञानाधिकारितेति शेषः। असार्वत्रिकी सर्वजननिष्ठा न, किन्तु मुक्तियोग्यनिष्ठैवेति सूत्रार्थः।

अत्र सर्वेषामप्यस्ति ज्ञानाधिकारः। अर्थी समर्थो विद्वान् साधने अधिक्रियते। तत्रास्ति सर्वेषां ज्ञानफले मोक्षे अर्थिता । अस्ति च सर्वेषां श्रवणादौ सामर्थ्यं, तदुपयोगिनी विद्वत्ता च । एवं च कस्यचिदनधिकारे कस्यापि न स्यादिति प्राप्ते –

न सर्वेषां ज्ञानाधिकारः। किन्नाम यथा खलु देवत्वसाम्येऽपि नवकोटिदेवानां न सर्वेषां सोमाधिकारः किन्तु परापरब्रह्मद्वयाधिकशतस्यैव। तथा सर्वेषां पुरुषार्थापेक्षासाम्येऽपि न सर्वेषां ज्ञानाधिकारः। किन्तु हरिगुरुभक्त्यादिपूर्वकाध्ययनवतामेवेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **विशेषस्तु ज्ञाने स्यात्** इति। ज्ञाने अपरोक्षज्ञाने विशेषः उक्तरीत्या सर्वाधिकारिकत्वाभावरूपः स्यादित्यर्थः ।।२ ।।

## ओं नाविशेषात् ओं

न सर्वेषां देवादीनां साम्येन ज्ञानाधिकारः। कुतः? अविशेषात् । ज्ञानस्याप्यविशेषप्रसङ्गात् अधिकारानुसारित्वात्तस्येति सूत्रार्थः।

अत्र सर्वेषां देवादीनां एकप्रकारेणैव ज्ञानाधिकारः। अधिकारतारतम्यकल्पकाभावात् । न च प्रज्ञान्तरपृथक्त्ववद्दृष्टिः(३-३-५२) इति ज्ञाने तारतम्यस्य उक्तत्वात् तदधिकारेऽपि तारतम्यमिति वाच्यम् । अधिकारसाम्येऽपि प्रयत्नतारतम्यादेव ज्ञानतारतम्यसिद्धेः इति प्राप्ते –

न देवादीनां साम्येन ज्ञानाधिकारः। ज्ञानसाम्यप्रसङ्गात् । न च प्रयत्नतारतम्येन ज्ञानतारतम्यमिति वाच्यम् । अधिकारतारतम्यस्याभावे प्रयत्नतारतम्यस्यैवायोगात् इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरं** इति। अतः ज्ञानाधिकारेऽपीति शेषः। यतः ज्ञाने अपरोक्षाज्ञाने उत्तरोत्तरं विशेषः तारतम्यं अतः ज्ञानाधिकारेऽपि विशेषः तारतम्यं स्यात् ।

अधिकारतारतम्यानुसारित्वात् ज्ञानतारतम्यस्य, अन्यथा ज्ञानसाम्यप्रसङ्गादित्यर्थः ।।३।।

## ओं स्तुतयेऽनुमतिर्वा ओं

अस्त्येव सदसत्प्रवृत्तिभ्यां विशेषः। "केन स्याद्येन स्यात्" (बृ.उ.५-५-१) इति ज्ञानिनः यथेष्टाचारे न विधिः किन्तु स्तुतये - ज्ञानिनः स्तुत्यर्थं वा, अनुमतिर्वा - अनुज्ञामात्रं वा इति सूत्रार्थः।

> न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् । गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ।
> नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ।

अत्र न सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषोऽस्ति। "केन स्याद्येन स्यात्" इत्यस्य यथेष्टाचारविधित्वाभावात् । तर्हि किमर्थमुच्यते केन स्याद्येन स्यादिति। यथा कथञ्चित् भृत्यं प्रति स्तुतये कथ्यते । यथेष्टं कुर्विति। न तु विधिः। तथा एतदपि ज्ञानिनः स्तुतये एवोच्यते। अथवा यथेष्टाचारे अनुज्ञामात्रमेतत् । न विधिरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **न लिप्यते** इत्यादिना सार्धश्लोकेन । चोऽवधारणे। नैवेत्यनुषङ्गः। तथा च ज्ञानवान् अपरोक्षज्ञानी सर्वदोषैः ज्ञानोत्तरकृतपापैः। अपि शब्दाद्गुणैरपि क्वचिदपि मुक्तेः पूर्वं तदनन्तरं च न लिप्यत इत्यर्थः। उक्तस्यापवादमाह - **गुणदोषैः** इति। नृणां गुणदोषैः। ज्ञानोत्तरकृतमहापुण्यपापैः सुखस्य अपिशब्देन ज्ञानादेरपि विमुक्तिगौ वृद्धिह्रासौ भवत इति शेषः।

उक्तं च "ह्रासोऽपि मानुषादीनां आनन्दस्य विकर्मणा ।" इति अनुव्याख्यानसुधायां आनन्दस्येत्युपलक्षणं इति। सुराणान्तु मुक्तौ यथाक्रमं योग्यताक्रममनुसृत्य सुखं क्लृप्तं, न पुण्यपापैः वृद्धिह्रासवदित्यर्थः।

अयं भावः। ज्ञानोत्तरपापं द्विविधम् । अल्पं महच्चेति । तत्र ज्ञानिनां देवादीनां मनुष्याणां च अल्पपापलेपो नास्त्येव। तथा चोक्तं सूत्रकृता। तदधिगमसूत्रे महता पापेन च मनुष्याणां स्वयोग्यतापेक्षया क्लृप्तस्यैवानन्दस्य ह्रासो भवति। देवानां च महता पापेन क्लृप्तस्यैवानन्दस्य ह्रासो नास्ति। किन्तु स्वयोग्यतापेक्षया अधिकसाधनजन्यस्य प्राप्यस्यैवानन्दस्य हानिर्भवतीति। यद्यप्यत्र नये ज्ञानिनः सदसत्प्रवृत्त्या विशेषसद्भावः प्रतिपादितः। स च विशेषः वृद्धिह्रासरूप एव।

> ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु।
> आनन्दो ह्रसते अकार्याच्छुभं कृत्वा तु वर्धते।। इत्युक्तेः।

अतः गुणदोषैरित्याद्येव वक्तव्यं, तथापि न लिप्यते इत्येतत्प्रासङ्गिकमित्यदोषः ।।४।।

## ओं सर्वथापि तु त एवोभयलिङ्गात् ओं

सर्वथापि गुरूपसत्याद्यनेकोत्साहेऽपि त एव योग्याः एव ज्ञानमाप्नुवन्ति। न त्वयोग्याः, प्रत्युत विपरीतज्ञानमिति तुशब्दार्थः। कुतः? उभयलिङ्गात् । गुरूपदेशसाम्येऽपि योग्य इन्द्र एव सम्यज्ज्ञानमवाप, न अयोग्यो विरोचन इत्युभयविधलिङ्गदर्शनादिति सूत्रार्थः।

अत्र अनधिकारिभिः ज्ञानमाप्यते। अधिकाराभावेऽपि महाप्रयत्नेन प्राप्तुं शक्यत्वादिति प्राप्ते -

गुरूपसत्याद्यनेकोत्साहेपि योग्यानामेव ज्ञानप्राप्तिः नायोग्यानां, "य एषोन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच" (छां.उ) इति इन्द्रविरोचनयोरेकप्रकारेण चतुर्मुखोपदेशे अपि इन्द्र एव सम्यज्ज्ञानमाप विरोचनस्तु विपरीतज्ञानमापेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। अपरोक्षज्ञाने योग्यमात्रप्राप्यत्वरूपो विशेषः स्यादित्यर्थः ।।५।।

## ओं चाधिकारिकमपि पतनानुमानात् तदयोगात् ओं

आधिकारिकमपि देवतापदयोग्यैरेव प्राप्यं नायोग्यैः किमैश्वर्यमतः तन्नाकांक्ष्यम्। कुतः ? तदयोगात्स तदाकांक्षायाः अयोगात् । पतनानुमानात् - विमतो देवादिभिः पात्यते अशक्यस्वपदेच्छुत्वात् । राजपदेच्छुवदिति पतनानुमानात् । अतः ज्ञानमपि योग्यैरेव प्राप्यमिति सूत्रार्थः।

अत्र देवतापदं अयोग्यैरेव प्राप्यम् । "स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति" इत्यादेः। अतो अयोग्यैरपि ज्ञानं प्राप्यमिति प्राप्ते -

न देवतापदं अन्यैः प्राप्यं तदकांक्षामात्रस्य पातहेतुत्वेन तत्प्राप्तेः दूरोत्सारितत्वात्।

स्वकीयमिच्छमानन्तु राजाद्याः पातयन्ति हि।
एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकम् ।। इति वचनात् ।

अतो ब्रह्मादिपदस्य योग्यैकलभ्यत्वात् ज्ञानमपि देवादिपदाकांक्षाशून्यैः योग्यैरेव प्राप्यं इति सिद्धान्तः कृतः ।।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति । ज्ञाने - ज्ञानार्थं विशेषः- अयोग्यदेवादिपदाकांक्षाशून्यत्वरूपः अपेक्षितः स्यादित्यर्थः ।।६ ।।

## ओं स्वामिनः फलश्रुतेः इत्यात्रेयः ओं

स्वामिनः इत्येकवचनं जातौ। इन्द्रियस्वामिनां देवानामेव ज्ञानफलम् ? कुतः? ''यदु किञ्चेमा'' (माध्यन्दिनायन) इति फलश्रुतेः सूत्रार्थः।

अत्र ''ब्रह्मविदाप्नोति परम्'' (तै.उ.२-१) इत्यादिश्रुतिसिद्धब्रह्मप्राप्त्यादिज्ञानफलं देवानामेव न प्रजानां, इन्द्रियादिप्रवर्तकत्वेन तेषामेव ज्ञानस्वामित्वात् । लोके च स्वामिनामेव फलदर्शनात् । ''यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति। यदु किञ्चेमाः प्रजाः विजानते। देवा एव तद्विजानते। देवानां ह्येतद्भवति, स्वामी हि फलमश्नुते। नास्वामी कर्म कुर्वाण'' इति श्रुतेश्च। न च कर्तृत्वेन अस्वामिनामपि फलम् । कर्तृत्वस्य अप्रयोजकत्वादिति प्राप्ते -

न केवलं देवानामेव फलं, किन्तु प्रजानामपि । न चास्वामित्वात्फलाभावः। यथा खलु सत्रयागेषु अगृहपतीनां ऋत्विजां यः फलं, तथा अस्वामित्वेऽपि प्रजानां ज्ञानफलसम्भवात् । न च ''नास्वामी'' इति श्रुतिविरोधः। प्राजनामल्पफलाभ्युपगमात् । श्रुतेश्च तदभिप्रायकत्वात् । अल्पस्वे निस्व इति प्रयोगदर्शनादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। स्वामिनामिति शेषः। ज्ञाने ज्ञानफले स्वामिनां देवानां, विशेषः - अतिशयः स्यात् । प्रजानान्तु अल्पं स्यादित्यर्थः।।७।।

## ओं कृत्स्नभावात्तु गृहिणोपसंहारः ओं

यतेरेव सर्वाश्रमिषूत्तमत्वं न ग्रहिणः। न चैवं श्रुतौ गृहस्थस्य मोक्षमुक्त्वोपसंहारः कृत इति तद्विरोध इति वाच्यम् । कृत्स्नभावात्तु देवानां सर्वाश्रमधर्मभावात् । तथा च अस्योपसंहारस्य देवविषयत्वात् गृहिणा - गृहस्थेन युज्यत इति सूत्रार्थः।

अत्र गृहस्थो मुक्तावुत्तमः। तस्य यज्ञादिसर्वसत्कर्माधिकारित्वात् । न ह्यन्याश्रमिणां यज्ञादावधिकारोऽस्ति। किञ्च छन्दोगोपनिषदि ''स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते'' (छां.उ.८-१५-१)इति गृहस्थस्यैव मोक्षमुक्त्वा उपसंहारः क्रियते। तेन ज्ञायते मुक्तौ गृहस्थस्यैवाधिक्यमिति। न ह्याधिक्याभावे सर्वेषामपि मोक्षे समाने विशिष्योक्तिः युक्ता। उपसंहाराच्च तात्पर्यमवगम्यते। उपसंहारस्य तात्पर्यलिङ्गत्वात् । अतः कर्मिणामेवोत्तमत्वात् न ज्ञानस्यातिशयः इति प्राप्ते -

यतिरेव सर्वाश्रमिषूत्तमः, न गृहस्थः। यतिमोक्षस्य गृहिमोक्षादपि चिरकालसाध्यत्वात् । अल्पकालापादितसाधनसाध्याद्बहुकालीनसाधनसाध्यस्य मोक्षस्य आधिक्यनियमात् । गृहिणां बहुकर्माधिकारसद्भावेऽपि तदाचरणनियमो नास्ति। कतिपयानुष्ठानेनैव अपरोक्षज्ञानसिद्धेः। न चैवं गृहिणोपसंहारविरोधः। तस्य देवताविषयत्वात् । न च देवानामपि यतेरुत्तमत्वं कथमिति वाच्यम् ।

तेषु सम्पूर्णसर्वाश्रयधर्मसद्भावात् । अतो ज्ञानाधिकारिणां यतीनामेवोत्तमत्वात् युक्तो ज्ञानस्यातिशयः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। ज्ञाने ज्ञानाधिकारिणि यतौ विशेषः सर्वाश्रमिषूत्तमत्वरूपो विशेषः स्यादित्यर्थः ।।८।।

**ओं अनाविष्कुर्वन् अन्वयात् ओं**

अनाविष्कुर्वन्नेव उपदिशेत् । कुतः ? अन्वयात् । आविष्कारेणोपदेशे अयोग्यानामपि ज्ञानप्राप्तिरिति युक्तेः तथा श्रुतेश्चेति सूत्रार्थः।

अत्र परोक्षज्ञानं आविष्कारेणैवोपदेष्टव्य सभाचत्वरादौ उपविश्य विद्योपदेशे सर्वेषां ज्ञानलाभात् । आवश्यक्यश्च बहूपदेशः। "यथा यथा ह वै ब्रूयात् तथा तथा अधिको भवति" (माठर) इति श्रुतेरिति प्राप्ते -

अनाविष्कारेणैव विद्योपदेशः कार्यः। आविष्कारेणोपदेशे अयोग्यानामपि ज्ञानप्राप्तेः। न च तदिष्टम् । "विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेहमस्मि" इति तन्निषेधादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। ज्ञाने अपरोक्षज्ञाने अनाविष्कारेणो-पदेष्टव्यत्वरूपो विशेषः स्यादित्यर्थः ।।९।।

**ओं ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ओं**

अप्रस्तुतप्रतिबन्धे प्रारब्धप्रतिबन्धाभावे अपरोक्षज्ञानं ऐहिकं इह भवं ऐहिकं इह जन्मन्येव भवति। तत्सद्भावे जन्मान्तरे, कुतः? दर्शनात् तथा श्रुतेरिति सूत्रार्थः।

अत्र ज्ञानं श्रवणादिसाधनसम्पूर्तिजन्मन्येव भवति। साधनसम्पूर्तावपि ज्ञानानुदये कारणाभावात् । न च स्वर्गादिवदुपपत्तिः। तस्यैतच्छरीरेण भोगायोगात्तत्पातानन्तरं प्राप्त्युपपत्तेः। न चात्र तादृशं कारणं अस्तीति प्राप्ते -

ज्ञानं श्रवणादिसम्पूर्तिजन्मन्येव भवतीति न नियमः। किन्तु प्रारब्धकर्मसद्भावे जन्मान्तरे, तदभावे तज्जन्मन्येवेति अभ्युपगमात् । तत्कुतः ? "श्रुत्वात्मानं मतिपूर्वं ह्युपास्येहैव दृष्टिं परमस्य विन्देत्। यद्यारब्धं कर्म निबन्धकं स्यात् प्रेत्यैव पश्येत्" (सौपर्ण) इति श्रुतेरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यात्** इति। तुशब्दः प्रतिबन्धाभावसूचकः। प्रारब्धप्रतिबन्धाभावे ज्ञाने अपरोक्षज्ञाने विशेषः - श्रवणादिसम्पूर्तिजन्मन्येवोत्पत्तिरूपः स्यात् । तत्सद्भावे जन्मान्तरे उत्पत्तिरूपो विशेषः स्यादित्यर्थः ।।१०।।

**ओं एवं मुक्तिफलानियमः तदवस्थावधृतेः तदवस्थावधृतेः ओं**

यथा एवं ज्ञाने नियमाभावः तथा मुक्तिफलानियमः। मुक्तिलक्षणफलेऽपि यच्छरीरे ज्ञानमुत्पन्न तच्छरीरपातानन्तरमेव मोक्ष इति नियमो नास्ति। अप्रतिबन्धे तद्देहपातानन्तरमेव, प्रतिबन्धसद्भावे देहान्तरावसाने इत्यस्य प्रमितत्वात् । ज्ञानोत्पत्यनन्तरं मुक्त्यभावे कदापि नेति कुतो न कल्पते। प्रतिबन्धककल्पना कुतः इत्यत उक्तं तदवस्थावधृतेः तदवस्थावधृतेः इति। तस्मिन् ब्रह्मण्यवस्था स्थितिः यस्य तस्य ब्रह्मसंस्थस्य अवधृतेः ब्रह्मसंस्थो अमृतमेत्येवेति श्रुतौ ज्ञानिनः मुक्तिफलावधारणात् द्विरुक्तेः प्रयोजनन्तु पूर्वमेवोक्तमिति सूत्रार्थः।।

अत्र यच्छरीरे ज्ञानमुत्पन्नं तत्पातादनन्तरं एव मोक्षो भवति। कारणे सति कार्यविलम्बायोगात् । न च ज्ञानवदुपपत्तिः। तत्र प्रतिबन्धकसद्भावात् । न चात्र तादृशं प्रतिबन्धकं पश्यामः प्रमाणाभावात् इति प्राप्ते -

यथा ज्ञाने अनियमः तथा मुक्तिफलेऽपि। तच्छरीरपातानन्तरं एव वा, जन्मान्तरं प्राप्य वा भवति। न चानियमे कारणाभावः। प्रारब्धप्रतिबन्धकाभावाभावयोरेव अनिमयकारणत्वात् । तत्कुतः "अवसन्नं यदारब्धं कर्म तत्रैव गच्छति। न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशयः। (नारायणाध्यात्म) इति स्मृतेः" इति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम्** इति । तुशब्दः पूर्वोक्त एवार्थः। ज्ञाने अपरोक्षज्ञाने देहविशेषे उत्पन्ने सति प्रारब्धप्रतिबन्धाभावे विशिष्यते सर्वेभ्य इति विशेषो मोक्ष, तु तद्देहपातानन्तरमेव स्यात् , तत्सद्भावे जन्मान्तरं प्राप्य स्यात् इत्यर्थः।।११।।

**मदाचार्यमनोधाममध्वमानसमञ्चके।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां तृतीयाध्यायस्य चतुर्थः पादः।। तृतीयाध्यायः समाप्तः ।।**

**नारायणाचार्य-** श्रीविष्णवे नमः। ज्ञानसामर्थ्यं अस्मिन्पादे उच्यते **ओं पुरुषार्थोऽतः शब्दादिति बादरयाणः** । यस्यापरोक्षज्ञानस्योपासासाध्यत्वमुक्तं अतो अस्मादेव भगवदपरोक्षज्ञानात्सर्वपुरुषार्थो भवति। अत्र पुरुषार्थ एकवचनं समुदायाभिप्रायेण न केवलमपवर्गमात्रं अपि तु पुरुषैरर्थ्यमानो पदार्थाः सर्वे स्वर्गादयो अपीच्छया भवतीति बादरायणो मन्यते। "यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् ।तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम" (मुं.उ.३-१-१०)इति शब्दात् । एतमर्थमाक्षिपत्सूत्रषट्कं

जैमिनिमतावष्टम्भेन **ओं शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः**। सत्यं ज्ञानस्य स्वर्गादिसाधनत्वं किन्तु तत्साधनकर्मशेषत्वेनैवेति।

युक्त्यन्तरं चाह **ओं आचारदर्शनात्** । ज्ञानिनामपि देवानां कर्मानुष्ठानदर्शनात् । ज्ञानेनैवोपपत्तौ तन्न स्यादिति भावः। प्रमाणं च तथेत्याह **ओं तच्छ्रुतेः**। ''यदेव विद्या करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति'' (छां.उ.१-१-१०)इति ज्ञानस्य तत्तच्छेषत्वश्रुतेः **ओं समन्वारम्भणात्** । ''कर्मैव देहं दैविकं मानुषं वाप्यन्वारभेन्नापरस्तत्र हेतुः। भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यत्'' इति माठरश्रुतौ प्राधान्यपरसावधारणकर्मशब्दबलात्कर्मैव प्राधान्येनारभत इति लभ्यत इति भावः। किं च **ओं तद्वतो विधानात्** । ''ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत्'' इति कमठश्रुतौ ज्ञानवतोऽपि कर्मविधानात् । अपि च **ओं नियमाच्च** । ''कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'' (ई.उ.२)इति।

एवं जैमिनिमतावलम्बेन पूर्वपक्षिते स्वमतेन सिद्धान्तयत्सूत्रं **ओं अधिकोपदेशात्तु बादरायणस्यैव तद्दर्शनात्** । ज्ञानादेव प्राधान्येन सर्वपुरुषार्थप्राप्तिरित्येवं बादरायणस्य मतम् । ''ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामाः सम्पद्यन्ते । तथापि यथा यथा कर्म कुरुते तथा तथा अधिको भवति'' (कौण्ठरव्य)इति कर्मणामेव ज्ञानशेषत्वदर्शनात् । तच्छेषत्वं तत्फलेऽपवर्गे अतिशयाधायकत्वम्।

नन्वस्तु उक्तश्रुतेः कर्मणो ज्ञानशेषत्वम्। तत्तु ज्ञान एवातिशयाधायकत्वेनास्तु न तु फले अतिशयाधायकत्वेनेत्यतः सूत्रं **ओं तुल्यं तु दर्शनम्** । ज्ञानिनां युधिष्ठिरादीनां राजसूयादेः कृतावकृतौ च तुल्यमेव तेषां विज्ञानम्। अतः फल एव विशेषाधायकत्वं कर्मण इति भावः। ननु मुनिमतानां कथं परस्परविरोध इति चेन्न ।

इति केचिद्विदः प्राहुर्व्यासशिष्या इमेऽखिलाः। यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलम्।

यथाकाशस्त्वनन्तोऽपि व्यामो हस्तावधिस्तथा। प्रादेशोऽपि हि सत्येन तथैतेषां मतानि तु ।

स्वयं तु भगवान्व्यासो व्याप्तज्ञानमहांशुमान् । अनन्ताकाशवत्पश्यन्नखिलं पुरुषोत्तमः ।

ज्ञानेनैवाप्यते सर्वं कर्मणा त्वधिकं भवेत् । इति प्राह महायोगी पुमर्थानां विनिर्णयम्।।

इति भविष्यत्पर्वणि। तस्मात्सूत्रकृदुक्तिर्देवता विषया। जैमिन्युक्तिस्तु मनुष्यकृतकर्मविषयेति न विरोध इति भावः। अनन्ताकाशवदित्यन्वयदृष्टान्तः। तथा चोक्तं -

व्यत्यासोऽनन्वयश्चैव प्रसिद्धो भूत एव च। सर्वसंहारकश्चेति दृष्टान्तः पंचधा स्मृतः ।।

इति व्यत्यासो व्यतिरेकदृष्टान्तः। पर्वतो न ह्रद इव निर्वह्निरिति यथा । अनन्वयस्त्वयं अनन्ताकाशवत्पश्यतीति। श्रूयमाणेन पश्यन्नित्यनेन दृष्टान्तस्याकाशस्यान्वयाभावात्। आर्थिकार्थस्य व्याप्तत्वस्यैव पश्यन्नित्यत्र विशेषणीभूते ज्ञाने पाश्चात्यमानसविमर्शेनान्वयबोधात् । यथाकाशो व्याप्तस्तथा ज्ञानं व्याप्तमिति।प्रसिद्धो यथा महानसवत्पर्वतो अग्निमानित्यन्वयदृष्टान्तः । अभूतः औत्प्रेक्षिको यथा । उभौ यदि व्योम्नि पृथक् पतेत् आकाशगंगापयसः प्रवाहौ तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः इत्यादि। सर्वसंहारकः । यत्र साध्यादिमत्तया सिद्धानां पदार्थानां तद्वत्तेनासिद्धैः पदार्थैः सह सर्वोपसंहारेण निर्देशः क्रियते। यथा कृतकत्वविशिष्टौ शब्दघटौ च अनित्यावेव। तत्र सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यते इति न्यायदर्शने सिद्धस्यापि घटादेः साध्येन सहोक्तिर्दृष्टान्ते पर्यवस्यतीति । एतदधिकरणतात्पर्यमाह। **सर्वेऽपि पुरुषार्थास्युर्ज्ञानादेव न संशय** इति। मध्ये जैमिनिमतावष्टम्भेनान्यथोक्त्या प्रसक्तोऽपि संशयो न कार्यः यतो अधिकरणोपक्रमोपसंहारयोर्बादरायणमतत्वोक्त्यां संशयनिरासः सुघट एवेति।।१।।

अथ भगवत्प्राप्तिसाधनज्ञाने सर्वेषामधिकाराभावादिलक्षणमहिम्नः समर्थनार्थमधिकरणम् । अर्थी समर्थो विद्वान्साधनेऽधिक्रियते । मोक्षे चास्ति सर्वेषामर्थित्वम् । निर्दुःखसुखात्मकत्वात्तस्येति तत्साधनेऽपि सर्वेषामधिकारितेत्यतः सूत्रं **ओं असार्वत्रिकी**। ज्ञाने अधिकारिता सार्वत्रिकी सर्वपुरुषसाधारणी न भवति। नन्वर्थित्वादौ समाने कथं नाधिकार इत्यतः सूत्रं **ओं विभागः शतवत्**। यथा देवत्वसाम्येऽपि नवकोटीनां देवानां न साधारण्येन सोमाधिकारः किन्तु परापरब्रह्मद्वयाधिकस्येति विभाग एव । तथा ज्ञाने अर्थित्वाविशेषोऽपि केषांचिदेवाधिकारः। तदुक्तं –

नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु। सोमाधिकारो वेदोक्तो ब्रह्माणी द्वे शताधिके।

यथा तथैव संख्येयाः प्रजास्तासु कियाञ्जनः। ज्ञानाधिकारिसम्प्रोक्तो विष्णुपादैकसंश्रयः।। इति।

तर्हि कस्याधिकार इत्यतः सूत्रं **ओं अध्ययनमात्रवतः**। यथाशक्त्यखिलवेदाध्ययनमात्रवतो ज्ञाने अधिकारः। नन्वेवं सति विभागो अनुपपन्नः। सर्वैरपि अध्ययनस्य कर्तुं शक्यत्वादिति चेन्न।

अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते। गुरुभक्तिविहीनस्य शमादिरहितस्य च ।

न च वर्णावरस्यापि तस्मादध्ययनान्वितः। ब्रह्मज्ञाने तु वेदोक्तेऽप्यधिकारी सतां मतः।

इति ब्रह्मतर्के । ''पठेद्वेदानर्थान् अधीयीताथ विचार्य ब्रह्म विन्देत्'' इति कौषारवश्रुतेः। अवैष्णवकृतमध्ययनं तु शूद्रकृतयागतुल्यत्वादनर्थकमफलमित्यर्थः । एतत्तात्पर्यमाह **सर्वेऽपि पुरुषार्था स्युर्ज्ञानादेव न संशय** इत्यनेनैव । सर्वेऽपि फलार्थिनो जनाः। ज्ञानात् । ल्यब्लोपनिमिता

पंचमी ज्ञानं लब्ध्वा पुरुषार्थो मोक्षः स एषामस्तीति पुरुषार्थः । अर्शादित्वादच् । मोक्षभाजास्युरेवेति नियमो न नास्त्येवेत्यर्थः । किन्तु तत्र संशय एव। केचिद्भवन्ति केचिन्नेति विकल्प एवेत्यर्थः । न च भेदेऽपि विकल्पो युज्यत इत्यत्र विकल्पपदेन संशय इवात्र संशयपदविवरणात्। तत्र कस्याधिकार इत्यतः आह **सर्वेऽपि** इति। यत्र सर्वे पुरुषार्थाः पुरुषसूक्तोक्ताः परमपुरुषसंबन्धिनो अर्थाः पदार्थाः गुणाः प्रतिपादिताः तेषां वेदानां ज्ञानादेव अध्ययनार्थविधारणविचारणरूपादेव। पठेद्वेदानि इत्युदाहृतश्रुतेः। "वेदाः पुरुषसूक्तगा" इति वचनात्। अत्रार्थे संशयो नास्ति। पुरुषस्य गुणास्तत्र प्रतिपादिता इत्युक्त्या वेदानां विष्णुप्रतिपादकत्वज्ञानवान्वैष्णव एव तत्राधिकारीति लक्ष्यते । अथवा पुरुषः परमात्मा अर्थो वाच्यो एषां ते पुरुषार्थाः विदाः तेषां ज्ञानादेवेति योज्यम् ।।२।।

अथ ज्ञानाधिकारस्य संपूर्णस्य दौर्लभ्यरूपमहिम्नः प्रतिपादकं सूत्रं **ओं नाविशेषात्** । सर्वेषां देवादीनां नाधिकारसाम्यम् । "अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरम् । तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरम्" इति कौण्डिण्यश्रुतेः। एतदप्याह **सर्वेऽपि** इत्यादिना। सर्वे अधिकारिणः ज्ञानादेव वेदाध्यनादिमात्रादेव अपि पुरुषार्थाः। अपिरभिव्याप्तौ । पूर्णपुरुषार्थास्तुल्याधिकार इति न मन्तव्यम् । किन्तु तत्रापि संशय एव। तत्रापि संशयशब्देन विकल्पो लक्ष्यते। स्वशब्देनानुपादानं तु वाच्यार्थस्यापि अर्थान्तरेणान्वयबोधार्थम् । तथा च तत्राधिकारिष्वपि विकल्पो विविधः कल्पः प्रकारः। देवर्षिमनुष्यादिभेदेन वैचित्र्यमेव नत्वविशेषात्सर्वसाम्यमिति भावः ।।३।।

अथ मोक्षसाधनज्ञानस्य असत्प्रवृत्तावपि मोक्षसाधनत्वनियमलक्षणामहिम्नः प्रतिपादयितुं विंशति सूत्रात्मकमधिकरणम् । तत्र "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं निर्विद्याथ मुनिरमौनं मौनं च निर्विद्याथ ब्राह्मणः स ब्रह्मणः स ब्राह्मणः केन स्यात्येन स्यात्तेनेदृश एव" (छां.उ.५-५-१)इति ज्ञानिनो यथेष्ठाचरणं विधीयते इति प्रतिभाति। यो ब्रह्मप्राप्ति-योग्यासावागमजज्ञानं श्रवणरूपं लब्ध्वा युक्तिरूपं च बलज्ञानं मननरूपं सम्पादयेत् । तदुभयला-भानन्तरं "ध्यानी भवति तेनापरोक्षज्ञानं प्राप्नोति अथ जीवन्मुक्त उच्यते। स च सता वाऽसता वा केनापि प्रकारेण वर्तते" इति श्रुतेरर्थः। तस्यास्तात्पर्यमाह **ओं स्तुतयेऽनुमतिर्वा** इति। नायं विधिः किन्तु ज्ञानिस्तुतयेदमुच्यते। यथा प्रीतिपात्रं कंचित् भृत्यं प्रति स्तुतये उच्यते यथेष्टं कुर्विति । तथैतदपि। अथ वा यथेष्टाचारे तु अनुज्ञामात्रमेतत्। सर्वथा न विधिरिति भावः।

नन्वेवमसत्प्रवृत्या कुंठितशक्तेर्ज्ञानस्य मोक्षासाधनत्वप्रसंगादनियमःसर्वेषामित्युक्तमयुक्तं स्यादित्यतः आह **ओं कामकारेण चैके** । "कामचाराः कामभक्षाः कामवादाः कामेनैवेमं लोकमुत्सृज्याथ परात्परमीयुरनारम्भणं" इति चैके पठन्ति । अतो नासत्प्रवृत्या ज्ञानस्य कुण्टितशक्तिकत्वमिति

भावः। कैमुत्येनाप्येतमर्थं समर्थयत्सूत्रं **ओं उपमर्दं च** । ''ओमित्युच्चार्यान्तरिममात्मान-मभिपश्योपमृद्य पुण्यं च पापं च काममाचरन्तो ब्रह्मानुव्रजन्ति'' इति तुरश्रुतौ। ज्ञानिनोऽपि विषभक्षणान्मृतेरिवानिवर्त्यतया प्राप्तस्याराब्धकर्मणोऽपि किंचिद्भुक्तस्य ज्ञानेनोपमर्दं एके शाखिनः पठन्ति। तदोत्तरकालीनासत्कर्म न मोक्षप्रतिबन्धकर्मिति किं वर्णनीयमिति भावः। तदुक्तं ''न वै जनो जातु कथंचनाव्रजेन्मुकुन्दसेव्येन्यवदंगसंसृतिं'' इति। कामकारिणां ज्ञानिनां मुक्तियोग्यतोक्तेरित्येतावता कामकारिणां जिज्ञासूनामपि ज्ञानाधिकार इति न मन्तव्यमित्यर्थप्रतिपादकं सूत्रं **ओं ऊर्ध्वरेतस्सु च शब्दे हि**। ''य इमं परमं गुह्यं ऊर्ध्वरेतस्सु भाषयेत् । न तथा विद्यते भूयान् यं प्राप्यान्येऽपि भूयस''इति माठरश्रुतावुर्ध्वरेतस्त्वादिगुणवत्स्वेव ज्ञानोपदेशविधानात् । भूयसः भूयांसः इत्यर्थः।

केन स्यादित्यादिश्रुतेर्जैमिनिमतेनार्थान्तरं प्रतिपादयत्सूत्रं **ओं परामर्शं जैमिनिरचोदना चापवदति हि** । विहितकर्मणामेव नियमेनाचरणे यः श्रुत्युक्तः कामचारः स्वेच्छया चरणं न तु विधिबद्धत्वेन। ''प्रातरुत्थायाथ सन्ध्यामुपासीत् यत्सन्ध्यामुपासते ब्रह्मैव तदुपासतेऽथ देवान् नमेत् जहुयाद्वेदानावर्तयीत नान्यत्किंचिदाचरेन्न सुरां पिबेन्न पलाण्डुं भक्षयीत न भृशं वदेन्न विस्मरेदात्मानं सोमं पिबेद्धुहुतशेषेण वर्तयेत्'' इत्युक्ताचारपरामर्शमंगीकृत्य तत्रैव केन स्यादिति कामचारस्योक्तत्वात् । न च ज्ञानिना निषिद्धकर्मकर्तव्यमिति चोदना अस्ति प्रत्युत ''न सुरां पिबेत्'' इत्यपवादाच्च न सदसत्कर्ममात्रे कामचार इति जैमिनिर्मन्यते। एवमस्य वाक्यस्य जैमिनिमतानुसारेण सदाचारविधित्वमेवोक्त्वा तत्स्तुतये अनुमतिर्वेत्युक्तं तदेव प्रतिपादयितुं सूत्रं **ओं अनुष्ठेयं बादरायणः साम्यश्रुतेः**। श्रुत्यादौ यदनुष्ठेमुक्तं तन्मध्ये स्वेच्छया कस्यचिदाचरणमित्यनुज्ञानमेव कामचारमिति श्रुत्यर्थः। इति भगवान्बादरायणो मन्यते। केनापि प्रकारेण वृत्तावपि ज्ञानिनः साम्योक्तेः जैमिनिमतेन सर्वाचरणपक्षे साम्योक्तिरनुवादमात्रं स्यात् । विहितकर्मणां सर्वेषामाचरणे साम्यस्य सम्भवात् । केषांचित्परि-त्यागेऽपि साम्योक्तिरसम्भवनिवृत्यर्थत्वात्सम्यगुपपद्यते।

''यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते।'' (भ.गी.३-१७) इति ज्ञानिनां कार्याभावोक्तेः कर्त्तव्यपरित्यागेऽपि साम्यमित्येव श्रुत्यर्थ इति भावः । आत्मरतिः परमात्मदर्शननिमित्तसुखं प्राप्तः। आत्मतृप्तः परमात्मप्रसादेनैव विषयेष्वलंबुद्धिमान् । तत्कुतः ? यतः आत्मन्येव सन्तुष्टः वैषयिकसुखापेक्षयाप्यतिशयितपरमात्मदर्शनजन्यसुखं प्राप्त इत्यर्थः। एवं ''केन स्यात्'' (बृ.उ.५-५-१)इति वाक्यशेषस्य यथेष्टाचरणविषयत्वाभावमभ्युपेत्य स्तुतिर्वा विहितेष्वेव सर्वेषु कामेनाचरणनियमो वेत्यर्थद्वयमुक्तम् ।

अथवा अयं स्वेच्छाचरणविधिर्वा भवतीत्यर्थप्रतिपादकं सूत्रं **ओं विधिर्वा धारणवत्** । विधिर्यथेष्टाचरणविधिर्वा केन स्यादित्ययम् । यथा त्रैवर्णिकानां वेदधारणं विधीयते। एवं ज्ञानिनामेव

अनेन यथेष्टाचरणं विधीयते नात्राधर्मशंका कार्या । ''स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता। नाशंक्यं तन्मतं क्वापि विष्णोः प्रत्यक्षचोदनात् । इतरेषां न विहिता स्वेच्छावृत्तिः कथंचन'' इति ब्राह्मे। अत्र ब्रह्मण इत्युक्तेऽपि ज्ञानिनामित्येव ज्ञातव्यम् । ज्ञानिसामान्यविचारप्रक्रमाद्विषय-विभागस्याग्रेवक्ष्यमाणत्वात्। उक्तमाक्षिप्य समादधत्सूत्रं **स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्** । स्तुतिमात्रमेवेदं न विधिः। ज्ञानिभिरपि सन्ध्यामुपासीत इत्यादि सर्वजनसाधारणविधिस्वीकारात् इति चेन्न । अपूर्वत्वात् । तेषां स्वेच्छाचरणविध्यभावे सर्वविध्यतिदूरत्वेन परब्रह्मसाम्यरूपापूर्वत्वापत्तेः । न च तद्युक्तम् । ननु तैः सामान्यविधिस्वीकृतत्वात् इत्युक्तत्वात्कथमपूर्वत्वापदनमिति चेन्न । सामान्यविधीनां चतुर्मुखातिरिक्तविषयत्वात्स्वेच्छाविधेरप्यभावे सर्वविध्यतिदूरत्वापत्तेरपरिहारात् । सामान्यविधेर्ब्रह्मातिरिक्तविषयत्वमेव कुत इति चेत्

''विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ। परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरता ।'' इति ब्रह्मतर्कोक्तेः। ननु ज्ञानिनां स्वेच्छाचरणविधेः स्फुटप्रमाणसिद्धत्वे भवेदेतद्वाक्यं तदर्थम् । तदेव कुत इत्यतः सूत्रं **ओं भावशब्दाच्च** । ''यथाविधानमपरे विधिर्भावे प्रजापतेः। ब्रह्मणः परमस्यैव सर्वविध्यतिदूरता'' इति तुरश्रुतेः। भावे इच्छायां अतीतश्रुतेः स्वेच्छाचरणविधेरर्थतः सिद्धत्वादत्र चशब्दः। उक्तमाक्षिप्य समादधत्सूत्रं **ओं पारिप्लवार्था इति चेन्न विशेषितत्वात्** । एवमुक्तविधया ''केन स्यात्'' (बृ.उ.५-५-१)इत्यादिव्यपदेशाः पारिप्लवः अस्थिरोऽर्थो एषां ते तथाविधा जाताः। तथा हि प्रथमं जैमिनिमतानुसारेण ज्ञानिभिः समस्तं कर्म कर्तव्यमिति ''प्रातरुत्थाय'' इत्यादिवाक्यानुसृत्योक्तम्। अथ ''यस्त्वात्मररतिः'' (भ.गी.३-१७)इत्याद्यनुसारेण स्वेच्छाचरणे अभ्यनुज्ञेत्युक्तम् । पुनश्च ''यथाविधं'' इति श्रुत्यनुसारेण यथेष्टचरणो विधिरित्युक्तम्। तथा च प्रकारत्रयप्रतिपादकवाक्यानां परस्परविरुद्धत्वाद्वस्तुनि विकल्पासम्भवात् । अन्यतरार्थनिश्चयोयोगादिति चेत् न अधिकारिविशेषाभिप्रायेण आर्थविशेषस्य व्यवस्थितत्वात् । त्रेधा हि ज्ञानिनः। विधिनियताः अनियताः स्वेच्छानियता इति। ''विधिनियताः मनुष्याः अनियता इह देवाः ब्रह्मैव स्वेच्छानियत'' इति गौपवनश्रुतौ विशेषाभिधानात् । एवं ज्ञानिनामनेकप्रकारकत्वेन सिद्धमर्थं प्रतिपादयितुं सूत्रं **ओं तथा चैकवाक्योपबन्धात्** । एवं ज्ञानिनां त्रैविध्यात्प्रातरुत्थाय इत्यादिवाक्यानां यस्त्वात्मरतिरित्यादिस्वेच्छाचरणानुज्ञावाक्यानां यथाविधानमिति स्वेच्छा-चरणविधिवाक्यानां च परस्परविरोधो भवति। विषयभेदेन ''केन स्यात्'' इत्यादेः स्थिरार्थत्वसम्भवादिति भावः।

एवमुक्तप्रकारेण कामचरणाल्लब्धमर्थं प्रतिपादयत्सूत्रं **ओं अत एव चाग्नीन्धनाद्यनपेक्षा**। कामकाराणामपि मोक्षस्य पटित्वादेव ज्ञानस्य मोक्षसाधनत्वे अग्नीनामिन्धनं समिन्धनं धनमादिर्यस्येत्यग्नीन्धनादि अग्न्यन्वाधानादि। आहवनीयमुपसमिधे इत्यादिविधेः। तादृशं दर्शपूर्णमासाग्निहोत्रादिकर्म तदपेक्षा नास्ति। तदभावेऽपि ज्ञानस्य मोक्षहेतुत्वमिति भावः।

येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः। शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः।।

तर्हि कर्मापेक्षा कुत्रेति जिज्ञासायां सूत्रं **ओं सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** । तमेवं वेदानुवचने तु ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'' (बृ.उ.६-४-२२)इति श्रुतेः। ज्ञानोत्पत्त्यर्थमेव यज्ञादिसर्वापेक्षा न तूत्पन्नस्य ज्ञानस्य मोक्षोत्पादनार्थम् । यथा गतिनिष्पत्यर्थे अश्वादयो अपेक्ष्यन्ते नत्वनिष्पन्नगतेर्ग्रामादिप्राप्तौ ।

ननु ज्ञानिनः सदसत्प्रवृत्योरपि ज्ञानस्य मोक्षसाधनत्वं नियतं न कश्चिद्दोषः। तर्हि तेन कुतः सदनुष्ठेयं कुतश्चासत् त्याज्यमित्यतः सूत्रं **ओं शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदंगतया तेषामवश्यानुष्ठेयत्वात्** । तथापि ज्ञानेनैव मोक्षो नियतस्तथापि ज्ञानी शमदमाद्युपेतः स्यात् । ''आचार्यात् विद्यामवाप्येतमात्मानमभिपश्य शान्तो भवेद्दान्तो भवेदनुकूलो भवेदाचार्यं परिचरेत्परिचरेदाचार्यं'' इति माठरश्रुतौ ज्ञानिनोऽपि तद्विधेः। ''ब्राह्मीं वाव त उपनिषदमब्रूम'' (माठक) ''तस्यै तपो दमः कर्मेति प्रतिष्ठा'' (के.उ.४-७८-९)इति ज्ञानांगतया तेषामवश्यानु-ष्ठेयत्वात। तुशब्दः पूर्णफलार्थित्वं सूचयति ।

यस्य ज्ञानं तस्य मोक्ष इति नात्र विचारणा। तस्य शान्त्यादयोंऽगानि तस्मात्तेषामनुष्ठितिः।

अवश्यकरणीया स्यादन्यथाल्पफलं भवेत्(लभेत्)।। इत्याग्नेये ।

शमाद्यंगयुक्तेन चानेन सम्पूर्णानन्दाभिव्यक्तिः भवत्यतो अवश्यानुष्ठेयमिति भावः। नन्वेवं यदि ज्ञानिनोऽप्यस्ति सदसत्प्रवृत्तिभ्यां विशेषस्तर्हि कथमेवं प्रवृत्तिः ''अखिलं भक्षयीतैवमेव स भवति'' इति। तस्य निषिद्धान्नभोजनेऽपि ह्रासाभावोक्तिरित्यतः सूत्रं **ओं सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्** । ये यं सर्वान्नानुमतिः सा प्राणात्यय एव । कुतः? ''उषस्तिर्ह चाक्रायणः इभ्यग्रामे प्रद्राणक उवास। स ह इभ्यं कुल्माषान् खादन्तं बिभिक्षे'' ''तं ह उवाच न इतो अन्यो विद्यन्ते यच्च ये म उपनिहिता इति । एतेषां मे देहीति होवाच। तानस्मै प्रददौ। हन्तानुपानमित्युच्छिष्टं वै मे पीतं स्यादिति होवाच । न स्विदेतेऽप्युच्छिष्टा इति। न वा अजीविष्यमिमान् अखादन्निति होवाच। कामो म उदपानं'' (छा.उ.१-१०-२)इति लिंगदर्शनात् । किं च ज्ञानिनां निषिद्धाकरणे बाधकसद्भावाद्वा उत निषिद्धं कर्तव्यम्। किं वा करणे प्रमाणसद्भावाद्वा उत निषेधप्रमाणाभावाद्वा अथ करणे बाधकाभावद्वा। तत्राद्यं पराकुर्वत्सूत्रं **अबाधाच्च** । ''अन्यायचरणाभावे न हि ज्ञानस्य बाधनम् । अतो विद्वानपि न्याय्यं वर्तेतोत्कर्षसिद्धये'' इति ब्रह्मतर्के। न द्वितीयः असिद्धेः। न तृतीयः । निषेधकस्मृतिसद्भावादित्यर्थप्रतिपादकं सूत्रं **ओं अपि स्मर्यते**।

अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः। एतादृशोऽपि नाचारं श्रौतं स्मार्तं परित्यजेत् (विवर्जयेत्) ।।

न केवलं श्रुतिः स्मृतिश्च निषेधकोऽस्तीत्यर्थप्रतिपादकं सूत्रं **ओं शब्दश्चातोऽकामचारे**। "**स य एवंविदेवं मन्वान एवं पश्यन्न कामचरितं चरेन्न कामं भक्षयीत न काममनुवर्तेत्**" इति **कौण्डिण्यश्रुतेः**। चतुर्थं प्रतिक्षेप्तुं सौत्रोऽतःशब्दः। यतो निषिद्धाचरणे अल्पफलम् । "न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छया" इति पाद्मोक्तेः। अतो न निषिद्धं कर्तव्यमिति भावः। न केवलं ह्रासकारणात् निषिद्धं परित्याज्यं किन्तु तत एव विहितमप्यनुष्ठेयमित्यर्थप्रतिपादकं सूत्रं **ओं विहितत्वाच्चाश्रमकर्मापि**। अपिशब्दाद्वर्णधर्मोऽपि कर्तव्यः। "पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन्। यदात्मनः सुनियतमानंदोत्कर्षमाप्नुयात्" इति कौषारवश्रुतेः । नन्वेवं सति ज्ञानकर्मसमुच्चयवादापत्तिरित्यतः सूत्रं **ओं सहकारित्वेन च** । "यथा राज्ञः सहकार्येव मन्त्री तथाप्यृते तं क्षितपः कार्यमृच्छेत् । एवं ज्ञानं कर्म विनापि कार्यं सहायभूतं न विचारः कुतश्चित्" इति कमठश्रुतौ सहकारित्वोक्तेः समप्रधानभावाभावान्न समुच्चयापत्तिरिति भावः ।

सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि।
उपासया कर्मभिश्च भक्त्या चानन्दचित्रता।। इति बृहतन्त्रे ।

सर्वदुःखनिवृत्तिज्ञानसाध्यो मोक्ष इति भावः।

नन्वसत्प्रवृत्त्या आनन्दह्रासश्चेद्ब्रह्मादीनां पुत्रिकाकामाद्यसत्प्रवृत्या आनन्दह्रास इति चेन्न ।

धर्मस्वरूपचित्रत्वाद्यो यो देवमनोगतः। स एव धर्मो विज्ञेयो न ह्येते लोकसंम्मिता ।।

इति पाद्मोक्तेर्नासावसत्प्रवृत्तिः किन्तु धर्म एव स इति भावः। तस्मादानन्दवृद्धिह्रासरूपविशेषस्य सदसत्प्रवृत्तिनिमित्तकत्वेऽपि ज्ञानमात्रेण मोक्षनियम इति सिद्धम् । तदयं निर्गलितो अधिकरणार्थः। मनुष्यान्प्रति "प्रातरुत्थाय" इत्यादिश्रुतेः सर्वनित्यनैमितिकविहितानुष्टानं निषिद्धपरिवर्जनं कामकारेण कर्तव्यमिति जैमिन्यभिमतः केनेति श्रुत्यर्थः। अस्मिंश्च पक्षे साम्यश्रुतेरनुवादकत्वमिष्टमेव। देवादीन्प्रति तु विहितेष्वेव इच्छया कस्यचित्कर्तव्यत्वं कस्यचिन्नेति अभ्यनुज्ञानं स्तुतिर्वेति तदर्थः। ब्रह्माणं प्रति अयं च यथेष्टचरणविधिस्तदर्थः। तदीययथेष्टाचरणस्यापि सद्विषयत्वनियमात् । "न मे हृषीकाणि पतन्त्यसत्पथे" इति तद्वचनात् । तदेतदधिकरणस्य तात्पर्यार्थं संकलय्य आह **न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित्** । असत्प्रवृत्तावपि ज्ञानी दोषैर्न लिप्यते। ज्ञानस्य मोक्षजनने कुण्ठितप्राप्तिकत्वं नास्तीत्यर्थः। तर्हि किं विधिनिषेधोल्लंघनेनैव यथेष्टं वर्तितव्यम्? नेत्याह **गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ**। **नृणां** इति। सत्कर्मानुष्टानुगुणेन मुक्तावानन्दवृद्धिः तत्परित्यागरूपेण निषिद्धानुष्ठाने च दोषेण मुक्तावानन्दह्रासो भवति। किं च सर्वेषामित्यत उक्तं नृणामिति। अतो ज्ञानिभिरपि मानुषैर्यथोक्तं कर्म स्वेच्छया कार्यमिति भावः। नृणामित्युक्तव्यावर्त्यमाह **सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम्** । अतः सुराणां विहितेष्वपि कस्यचिदनुष्टानेऽपि फलसाम्यात्तान्प्रति न सर्वानुष्ठाननियमः। तुशब्देन सुरेष्ववान्तरविशेषो अस्तीति

सूचयति। तेन चतुर्मुखं प्रति यथेष्टाचरणविधानात्तस्य कृत्यं पूर्णं सुखमेवेति सिध्यति। अथ वा सुराणां मध्ये क्लृप्तं समर्थं कृपू सामर्थ्यमिति धातोः तदपरब्रह्म यथाक्रमम् । स्वयोग्यं सुखं पूर्णं लभत इति शेषः। अथवा सुखमस्यास्तीति सुखं अर्श आदिभ्यो अच् (पा.सू.५-२-१२७) प्रत्ययः। भूमनिन्दाप्रशंसासु भवन्ति मतुवादय इति वचनात् ।।४।।

अथ भगवत्प्राप्तिसाधनज्ञानस्याधिकारिमात्रप्राप्यत्वमहिमावर्णनार्थमधिकरणं **ओं सर्वथापि तु त एवोभयलिङ्गात्** । देशकालगुरूपसत्तिश्रवणाद्यनेकोत्साहेऽपि योग्यानामेव ज्ञानप्राप्तिर्नायोग्यानाम् । कुतः ? अथ ''इन्द्रो ह वै देवानामभिप्रवव्राज। विरोचनो असुराणाम् । तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः। तौ ह द्वात्रिंशद्वर्षाणि ब्रह्मचर्यमूषतुः। तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति। तौ होचतुर्य आत्मा अपहतपाप्माऽविजरोऽविमृत्युऽर्विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोन्वेष्टव्यः । स विजिज्ञासितव्यः। स सर्वांश्च लोकानाप्नोति सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् । यस्तमात्मानमनुविद्य विजानतीति भगवतो वचो हरन्तो वेदयन्ते तमिच्छन्ताववास्तं इति। तौ ह प्रजापतिरुवाच य एष पुरुषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच। एतदमृतमभयमेतद् ब्रह्म इति। यथा साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेवेक्षां चक्राते। तौ ह प्रजापतिरुवाच किं पश्यथ इति। तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्वयमेवेमौ भगवः साध्वलंकृतौ सुवसनौ परिष्कृतावित्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तौ ह शान्तहृदयौ प्रव्रजतुः। तौ हान्वीक्ष्य प्रजापतिरुवाच अनुपलभ्यात्मानमनुविद्य वृजतो यत एतदुपनिषदो भविष्यन्ति देवा वासुरा वा ते पराभविष्यन्ति इति। स ह शान्तहृदय एव विरोचनो असुरान्जगाम। तेभ्यो हैनामुपनिषदं प्रोवाच आत्मैवेह महैय्यः आत्मा परिचर्यः। आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमंचामुंच इति। तस्मादप्येद्येहाद-दानमश्रद्धधानमयजमानमाहुः असुरो बत इति। असुराणां ह्येषोपनिषत्। प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति संस्कुर्वन्ति । एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते। विरोचनः प्रतिबिम्बमेव ब्रह्मेति बुबुधे। इन्द्रस्तु नाहं भोग्यं पश्यमीति पुनः प्रजापतिमागस्म तत्रैकशतं वर्षाणि ब्रह्मचर्यमुषित्वा-सम्यक् तत्वज्ञानमवाप'' (छां.उ.८-२-६) इत्यधिकार्यनधिकारिणोरुभयोरपि लिंगात्त एव योग्या एव ज्ञानमाप्नुवन्ति नायोग्या इत्यर्थः।

ननु महतां तपआदिना प्रयत्नेन विश्वामित्रादिभिरिव क्षत्रियत्वापगमेनेन विप्रत्वस्यैव अयोग्यतापगमेन योग्यताया अपि लब्धुं शक्यत्वात् अयोग्यज्ञानप्राप्तिः किं न स्यादित्यतः सूत्रं **ओं अनभिभवं च दर्शयति**। क्षत्रियत्वादेरस्वभावत्वेनाभिभवायोगात् । ''दैवीमेव सम्पत्तिं देवा अभिगच्छन्त्यासुरीमेव चासुरा नैतयोरभिभवः कदाचित्स्वभाव एव ह्यवतिष्ठन्ते इति स्वभावानभिभवं

च दर्शयति। नन्वस्तु देवासुरयोः स्वभावस्यात्यन्तदृढत्वात् तदनभिभवः मध्यमानुषस्वभावस्यातथा-त्वात्तदभिभवो भविष्यतीत्यतः सूत्रं **ओं अन्तरा चापि तु तद्दृष्टेः**। सम्यग्ज्ञानविपरीतज्ञान-योरन्तरास्थितानामपि मिश्रज्ञानस्वभावस्यापि दार्ढ्यदृष्टेर्न तस्याप्यभिभवः।

ननूक्तत्रैविध्यस्य स्वभावत्वमेव कुतः सिद्धमित्यतः सूत्रं **ओं अपि स्मर्यते**।

असुरा आसुरेणैव स्वभावेन च कर्मणा। ज्ञानेन विपरीतेन तमो याति विनिश्चयात् ।

देवा दैवस्वभावेन कर्मणा चाप्यसंशयम्। सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ।

नानयोरन्यथाभावः कदाचित्क्वापि विद्यते। मानुषा(मनुष्या) मिश्रमतयो विमिश्रगतयोऽपि च।

इति स्कान्दे । हेत्वन्तरेण देवानामेव सम्यग्ज्ञानफलं नान्येषामित्यर्थप्रतिपादकं सूत्रं **ओं विशेषानुग्रहंच** । "अज्ञानां ज्ञानदो विष्णुः" इत्यादेर्ज्ञानस्य भगवदनुग्रहसाध्यत्वादनुग्रहश्च देवेष्वेव विशेषतः श्रुतिसिद्ध इति देवानामेव सम्यग्ज्ञानम्। "श्रण्वे वीरमुग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमान" (ऋ.सं.६-४७-१६)इत्यादिश्रुतिर्देवेष्वेव विशेषानुग्रहं दर्शयति। उग्रं असुरजीवं दमायन् तद्विरुद्धं देवं जीवं संसारमतिक्रम्य पुनः पुनर्नयतीत्यर्थः। दैत्यानां तत्स्वभावाभिभवेन न देवत्वप्राप्तिरित्युक्तमर्थं युक्त्यापि साधयितुं सूत्रं **ओं अतस्त्वितरज्ज्यायो लिंगाच्च** । देवभागादसुरभागो बहुलः।

"असुरा बहुला यस्मात्तस्मान्न जनतामियात्"(ब्रह्म.पु)इति लिङ्गात्। "ततः कानीयसा एव देवा ज्यायसा असुरा" (बृ.उ.३-३-१)इति श्रुतेश्च। इदमुक्तं भवति। यद्यसुराणामासरुत्वापगमेन देवतापत्तिः स्यात्तर्हि तेषां कदाचिद्देवभागादूनता स्यात् । न चैतदस्ति। अतो युक्तमुक्तमिति जैमिनिमतेनाप्येतमर्थं समर्थयत्सूत्रं **ओं तद्भूतस्य तु तद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः**। असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जैमिनेरपि सिद्धमेव। "नासुरा दैवीं न देवा आसुरीं न मनुष्या दैवीमासुरीं च गतिमीयुरात्मीयामेव जातिमनुभवन्ति" इति नियमश्रुतेः। "तं भूतिरिति देवा उपासांचक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः" (ऐ.आ.२-१-८)इति देवासुराणां भावाभावश्रुतेश्च ।

देवाः शापाभिभूतत्वात् प्रल्हादाद्या बभूविरे।<br>
अतः सुगतिरेतेषां नान्यथा व्यत्ययो भवेत्।। इत्यध्यात्मे

अतः स्वभावः देवदैत्यानां नान्यथाभाव इति भावः। तस्य तात्पर्यमाह **गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ। नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमं** इति । सुराणामित्यत्रापि अपीत्यनुषज्यते। ततश्चैवं योजना। सुराणामपि शब्दादसुराणां यथाक्रमं गुणदोषैः स्वाभाविकैः गुणदोषैश्च सुखस्यापिशब्दादुःखस्य च वृद्धिह्रासौ विमुक्तिगौ मुक्तावप्यनुवर्त्तमानौ दृष्टौ । देवानां

स्वाभाविकैर्गुणैर्योग्यतादिलक्षणैरेव मुक्तौ दुःखस्य ह्रासः सर्वात्मना निवृत्तिः सुखस्य च वृद्धिः परिपूर्णता। तथा असुराणां संसारान्मुक्तौ दोषैस्तत्वज्ञानाद्ययोग्यतादिलक्षणैः सुखस्य ह्रासः सर्वात्मना निवृत्तिः। दुःखस्य च वृद्धिः परिपूर्णता। एवं नृणां मध्यमानां गुणदोषैर्मिश्रैः सुखदुःखयोर्वृद्धिह्रासोभयमपि ह्रासते च वर्धते च नत्वन्यतरदेवेत्यर्थः। तदेतत्प्रमेयं सुखं यथा स्यात्तथोदाहृश्रुतिस्मृत्यादिभिः भगवता सूत्रकारेण क्लृप्तं समर्थितं न तु यथा कथंचित् क्लिष्टकल्पनया हठादाकृष्टमिति भावः। कृपू सामर्थ्ये इति धातोः कृपो रो ल (पा.सू.८-२-१८)इति लत्वम्। एवं च मोक्षज्ञानान्दादेर्योग्यतानिबन्धनत्वात्तद्धेतुभूतज्ञानमपि योग्यतैकसाध्यमिति सिद्धम् ॥५॥

अथ भगवत्प्राप्तिसाधनज्ञानस्य देवादिपदाकांक्षाशून्यैरेव प्राप्यत्वरूपमहिम्नः समर्थनार्थमधिकरणं **ओं न चाधिकरिकमपि पतनानुमानात्तदयोगात्** । अधिकारिणां ब्रह्मादीनां पदमपि नाकांक्ष्यम्। भगवदैश्वर्यादिकं नाकांक्ष्यमिति किं वक्तव्यमित्यर्थः। ज्ञानार्थिभिरयोग्यफलाकांक्षारहितैः भवितव्यमिति फलितोऽर्थः। कुतः ? लोके अयोग्यमारोढुं प्रवृत्तस्य पतनदर्शनादत्रापि पतनानुमानात्। तथाविधेऽर्थे आकांक्षाया एवायोगात् । अत्रायं प्रयोगः। ब्रह्मादिपदाकांक्षावान्पतति अयोग्यारोहप्रयत्नवत्वात् । अयोग्यवृक्षारोहणप्रयत्नयुक्तवदिति।

न देवपदमन्विच्छेत्कुत एव हरेर्गुणान् ।
इच्छन्पतति पूर्वस्मादधस्ताद्यत्र नोत्थितिः।। इति ब्रह्मांडे।

"मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः। अव दस्यूरधूनुथाः" (ऋ.सं.८-१४-१४)इति श्रुतेः।

कैमुत्येनापि देवतापदाकांक्षाभावं प्रतिपादयितुं सूत्रं **ओं उपपूर्वमपीत्येके भावशमनवत्तदुक्तम्** । उपदेवपदमपि पदवन्नाकांक्ष्यं तदा किं वा वाच्यं देवपदं नाकाक्ष्यमिति। भावशमनाः ऋषयः तत्पदस्य दृष्टान्तीकरणात्तदप्यनाकांक्ष्यमिति सूचयति। तदुक्तमिन्द्रद्युम्नशाखायां "अथ यथर्षीन्प्रजापतीन्नाकांक्षेदेवं न गन्धर्वान्न विद्याधरान्न सिद्धान्"। एक इत्युक्त्या ऋष्यादिषु अहं वसिष्टः स्यामित्यादिविशेषाकांक्षायामेव दोषो न त्वहं कश्चिदृषिः स्यामिति सामान्याकांक्षायामिति दर्शयति। "ऋष्यादिषु विशेषे तु दोषो नैवाविशेषत" इति वचनात्। यथा देवादिपदानाकांक्ष्यमेव विशिष्टज्ञानादिकमात्मनः शुभमपि किं नाकांक्ष्यमित्याशंकापनोदाय सूत्रं **ओं बहिस्तूभयथापि स्मृतेराचाराच्च**। देवर्षिगन्धर्वादिपदेभ्यो अन्यत्र उभयथा आकांक्षायामनाकांक्षायां च न पतनम्।

"देवर्षिगन्धर्वाणां पदाकांक्षी पतेद् ध्रुवम् । अन्यत्र शुभमाकांक्षन्न पतेदविरोधतः।।" इति स्मृतेः। "नानात्वमेव कामानां नाकामः क्व च दृश्यते। अतोऽविरुद्धकामः स्यादकामस्तेन भण्यते ।।" इत्याचारवाक्यदर्शनाच्च ।।६।।

तस्य तात्पर्यमाह **गुणदोषैः** इत्यादिना **यथाक्रमं** इत्यन्तेन । यथा अक्रममिति पदच्छेदः। यथाशब्दश्रवणात्तथेत्यध्याहारः। ततश्चैवं योजना। सुराणां ब्रह्मादीनां यत्सुखं तन्नृणां नीचाधिकारिणामयोग्यानां मुक्तावपि यथा अक्रमं क्रमितुं योग्यं न भवति तथा क्लृप्तं समर्थितं सूत्रकृता न चाधिकारिकमपीत्यादिना । कर्मणां चात्र मानसं विवक्षितं। मुक्तावप्यनाकाक्ष्यं संसारे तु किमु वक्तव्यमित्यर्थः। कथं समर्थितमित्यतः पतनानुमानादित्याशयेनोक्तं गुणदोषैरित्यादिना। यतः स्वायोग्यराजपदानाकांक्षारूपगुणदोषैर्विमुक्तिगौ विशेषेण मुक्तिनिगडादि-बन्धतो येषां ते । विमुक्तयो निगडबन्धनशून्याः। तथा विगताविमुक्तिर्निगडबन्धाः येषां ते विमुक्तयोनिगडबद्धास्ते च ते चेत्येकशेषेण विमुक्तयो निगडबन्धरहिताः। निगडबन्धाश्च तेषु विद्यमानौ सुखस्य वृद्धिह्रासौ दृष्टौ यत इति शेषः। इदमुक्तं भवति। ये स्वायोग्यराजादि-पदाद्यकांक्षाशून्यास्तेषां न कदापि निगडादिबन्ध इति। ते सदा सुखिन एव। ये तु तदाकांक्षावन्तस्ते राज्ञा निगडैर्बध्यन्ते अतः क्षीणसुखाः। अपिशब्दाद्दुःखिनश्च भवन्ति।

यद्वा दुरारोहवृक्षारोहणप्रयत्नशून्यास्तद्वन्तश्च तेषां तादृशप्रयत्नराहित्यतद्वत्वादिगुणदोषै किं मुक्तिगौ आद्यानां तादृशवृक्षान्स्वतः सिद्धैव विमुक्तिः अन्येषां ततः पतनेन विमुक्तः तस्यामवस्थायां वर्त्तमानौ सुखस्य शोभनं च तत् सुखं चेति सुखं हस्तपादादीन्द्रियजातं तस्य वृद्धिस्वरूपेणावस्थितत्वात् । अभिवृद्धिः पूर्वस्य गुणिनः अपरस्य दोषिणो वृक्षात्पतनेन ह्रासः हस्तपादादिभंगश्च दृष्टो यत इति। तेन पूर्वोक्तानुमानमन्वयव्यतिरेकिदर्शितं भवति। तदयं प्रयोगः। ब्रह्मपदाद्याकांक्षावन्तो बध्यन्ते अयोग्येच्छत्वात् । य एवं स एवं यथा राजपदेच्छवः । ये न बध्यन्ते न ते तदिच्छवो यथासंप्रतिपन्ना इति यथा ब्रह्मादिपदारोहप्रयत्नवन्तः पतन्ति दुःखिनश्च भवन्ति । अशक्यविषयप्रयत्नवत्वात् । य एवं त एवं यथा दुरारोहवृक्षात्पतितभग्नहस्ताद्यवयवाः। ये नैवं ते नैवं यथा स्वच्छाः इति । अथ भगवत्प्राप्तिसाधनस्यास्वामिनोऽपि संन्नधिमात्रेण फलदानमहिम्नो वर्णयितुं सूत्रमधिकरणं **ओं स्वामिनः फलश्रुतेरित्यात्रेयः**। "ब्रह्मविदाप्नोति परं"(तै.उ.२-१) इत्यादिश्रुतिसिद्धं भगवत्प्राप्त्यादिज्ञानं फलं तत्स्वामिनां देवानामेव भवति। "यदु किंचेमाः प्रज्ञाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किं चेमाः प्रजाः विजानते देवा एव तद्विजानते देवानां ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्मकुर्वाण" इति माध्यन्दिनायनश्रुतेरित्यात्रेयो मन्यते।

एवमात्रेयमतावलम्बेन पूर्वपक्षिते सिद्धान्तयत्सूत्रं **ओं आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते**। यथा सत्रयागेषु यजमानकर्मकुर्वाणानामप्यृत्विजां फलं भवति तथा प्रजानामल्पफलं भवति। देवैः प्रजार्थमेव क्रियमाणत्वात् । न चैवं मुनिमतश्रुतिभ्यां विरोधः। आत्रेयेणाप्य-ल्पफलमेवाभ्युपगमात् । श्रुतेश्च तदभिप्रायकत्वात्। अल्पस्वेऽपि निस्व इति प्रयोगदर्शनादि-त्यौडलोमिराचार्यो मन्यते। यद्यपि सत्रयागे य एव यजमानास्त एव ऋत्विज इत्युक्तत्वात्तत्रत्या ऋत्विजोऽपि यजमाना एव। तथापि सप्त दशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्निितिविधेः।

अवराश्चेत्सप्तदशातन्यूनाः परमाः चतुर्विंशन्नाधिका भवन्ति। तत्र षोडशतत्तदा ऋत्विजो व्याप्रियन्ते। चत्वारो ब्रह्मगणश्चत्वारोऽध्वर्युगणश्चत्वारोहोतृगणश्चत्वारो उद्गातृगण इति ते तत्तदृत्विजकर्मण्येव कुर्वते दीक्षां च लभन्ते अध्वर्युर्गृहपतिदीक्षयित्वा ब्रह्माणं दीक्षयति इत्यादेः। हविरग्निस्वामित्वान्न ममेति द्रव्यत्यागं च कुर्वतो यस्तेष्वभ्यर्हितो ज्ञानादिगुणैर्विशिष्टो स सप्तदशो गृहपतिः सर्वे क्रियते। यजमनकर्माकरणात् गृहपतित्वाभावाच्च । टीकायां न चास्वामित्वात्फलाभावः इति शंकावाक्ये स्वामित्वोक्तिर्यथा खलु सत्रयोगोष्वयजमानानामप्यृत्विजां यज्ञफलमिति समाधानवाक्ये चायजमानत्वोक्तिश्चोपपन्ना। सर्वेषां सत्रफलभावेऽपि गृहपतेः सकलकर्मकर्तुविशिष्टफलमित्यभिप्रायेण भाष्येऽपि अल्पफलं प्रजानामित्युक्तम् । गृहपतिनापि क्रियमाणं सर्वार्थमपि भवतीत्याशयेन तस्मै परिक्रियते इति सूत्रशेषोऽप्युपपन्नः। न तु तेषां सर्वथा यजमानत्वाभावेत्यभिप्रायः। संमतं चैतन्मीमांसकानामपि । यतो द्वादशे अध्याये अन्त्यपादे सत्रगृहपतिरसंयोगादित्यधिकरणे तैरुक्तम्। इतरे ह्यार्त्विज्यं कुर्वाणाः कर्मकरा इव भवन्ति अयं तु केवलयाजमानकरणात्स्वामिवाचिना गृहपतिशब्देनोच्यते। तस्यैव हि फलभूयस्त्वम् । ''स हि भूयिष्टामृध्विर्मध्नोति'' इति वचनात्। एतेन महाशयानामाचार्याणां आशयमजानानः देवानां प्रियो अप्पयदीक्षित सत्रयजमानानां एवं ऋत्विक्त्वात्वयजमानानामप्यृत्विजामित्युक्तिः मीमांसाविरुद्धा इति स्वग्रन्थे यज्जल्पनं तदुन्मत्तप्रलापमात्रत्वात् उपेक्षणीयम् । यस्त्वपेय एव दीक्षितो भवति स कथमतोन्मत्तप्रलापी स्यादित्यलम् ।

उक्तं च ''त्वरयैव मनुष्याणां सिद्धिरत्वरयैव तु। देवानां तत्प्रसादेन मुक्तिरेव सतां नृणाम् ।।'' इति । यदि देवैः प्रजार्थमेव क्रियते। तर्हि प्रजानामेव फलं स्यान्न तु देवाानामित्यतः सूत्रं **ओं सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** । एतद्वक्ष्यमाणमौडलोमिना नाज्ञातं किन्तु पक्षेण तृतीयम् । प्रकृत्यादिभ्यस्तृतीया। तृतीयः पक्ष इत्यर्थः। स च भगवतो बादरायणस्य कोऽसौ देवानां ज्ञानदानं कर्त्तव्यत्वेन भगवता विहितम् । तस्मिंश्च कर्तव्ये प्रजाः सहकारित्वेन परिगृह्यन्ते। अतो देवानामेव मुख्यकारणत्वात्पूर्णं फलं प्रजानां तु सहकारित्वमात्रेणास्य फलं भवति। यथा प्रजावतो राज्ञः कर्तव्ये प्रजापालने प्रजाः सहकारित्वेन विधीयन्ते। यथा वा आचार्यस्य कर्तव्ये व्याख्याने शिष्याः सहकारित्वेन विधीयन्ते। तत्र च महाफलं राज्ञः गुरोश्च प्रजानां शिष्याणां च अल्पमेव। सहकारित्वात् । एवमेवात्रापि प्रजार्थं देवैर्ज्ञानस्यापाद्यमानत्वेऽपि न तासामेव फलं किन्तु देवानामेवेति भावः। यथा चोक्तं वाराहे –

ज्ञानादिदानं देवानां विष्णुना साधु चोदितम् । वेदेषु तेषां विहितं तत्राचार्यो महत्तरः।।

विहितः सहकारित्वेन सहकार्यंतरं प्रजाः। पात्रत्वेन यथा राज्ञो यथा शिष्या गुरोरपि।।

तस्माच्छ्रुतफलं तासामाचार्याणां महत्तरम् । ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरम् ।। इति।।७।।

एतत्तात्पर्यमाह **नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम्** । अत्र सुराणामित्यावर्त्तनीयम्। ततश्चायमर्थः। नृणां प्रजानामर्थे सुष्ठु ज्ञानादिकं राति ददातीति सुराः । रा दान इति धातोः। आतोनुपसर्गे इति कः (पा.सू.३-२-३)। सुशब्दस्य ज्ञानादिरूपशोभनकर्मार्थत्वेन उपसर्गत्वाभावात्। सम्यग्ज्ञानादिदातारो ये सुराः देवास्तेषामेव मुक्तौ सुखरूपं फलं क्लृप्तं समर्थं पूर्णमिति यावत् । तच्च यथाक्रमं उत्तरोत्तरं शिष्यापेक्षया आचार्यस्याचार्यापेक्षया देवानामित्यर्थः। अर्थात् नृणामल्पफलमिति भावः ।।८।।

अथ भगवत्प्राप्तिसाधने ज्ञाने विशेषाधिकारिणां यतीनां सर्वाश्रमिभ्योऽतिशयितत्वसमर्थनेन ज्ञानमहिम्नो वर्णयितुमधिकरणम् । तत्र छान्दोग्योपनिषदि उपसंहारे ''आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधात्मनि सर्वेन्द्रियाणि संप्रतिष्टाप्याहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते । न च पुनरावर्तते न च पुनरावर्तते''(छा.उ.८-१५-१) इति गृहस्थस्यैव विशिष्य अपुनरावृत्तिवचनात् गृहस्थस्यैव मुक्तावाधिक्यमित्यशंकापनोदार्थं सूत्रं **ओं कृत्स्नभावात्तु गृहिणोपसंहारः**। यतेरेवाश्रमिषु उत्तमत्वं न गृहिणः। यतिमोक्षस्य गृहिमोक्षादपि चिरकालसाध्यत्वेन तस्यैव बहुसाधनसम्पत्त्यपेक्षस्य तदाधिक्यौचित्यात् । गृहिणां बहुकर्माधिकारसद्भावेऽपि तेषां सागोपांगतावत्कर्माचरणनियमाभावत् । न हि तत्रोक्तं कृत्स्नं कर्म सांगोपांगं यावदायुषं मनुष्यैरनुष्ठातुं शक्यम् । नन्वेवं गृहस्थेभ्यो देवेभ्यः कथं यतीनामुत्तमत्वमिति चेत् सम्पूर्णयतिधर्मस्यापि तेष्वेव सद्भावात् । अतो गृहीभ्यो यतीनामुत्तमत्वं तेभ्योऽपि देवर्षीनामित्याशयः। ''कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना ह्येते यतयो त एषां न पुत्रादयमुपयन्ति। न चैते गृहान्विसृजन्त्यरागाः अद्वेषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्तार'' इति पौत्रायणश्रुतिः।

युक्त्यन्तरेणैतमर्थं समर्थ्ययत्सूत्रं **ओं मौनवदितरेषामप्युपदेशात्** । न चाश्रमद्वयमेव देवानाम् । ''देवा एव ब्रह्मचारिणो देवा एव गृहस्थाः देवा एव वनस्था यथा ह्येते मुनय'' इति कौंठरव्यश्रुतौ मुनित्वापरपर्याययतित्वदृष्टान्तेन अन्येषामप्याश्रमाणामुपदेशात् । एवं यदैषामाश्रमद्वयमात्रेणैकाश्रमिभ्यो गृहस्थेभ्यो उत्तमत्वं तदा किं वाच्यं सर्वाश्रमवत्वादुत्तमत्वमिति भावः। अतो अधमाधिकारिषु ज्ञानप्रचुराणां यतीनामेवोत्तमत्वादुक्तं तदुत्तमता प्रयोजकस्य ज्ञानस्य माहात्म्यमिति स्थितम् । एतत्तात्पर्यमाह **नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमं** इति। नृणां मनुष्याणां सकाशात्सुराणां दैवानां मुक्तौ सुखं क्लृप्तं समर्थं पूर्णमिति यावत्। कीदृशानां सुराणां? सुष्टुरायन्ति पठन्ति ते सुराः। रयिशब्दे इति धातोः आदेच उपदेशेशितीत्यात्वे कप्रत्ययः। वेदाध्येतारः ब्रह्मचारिण इति यावत् । तथा सुष्टु रमन्ति क्रीडन्ति स्वस्वभार्याभिः सहेति सुराः गृहस्थाश्रमिण इत्यर्थः। यमन्ता ड इति डः। नन्वयं डो न इत्संज्ञकः किन्तु श्रवणार्थम् । अत एवोदाहतं गुणादिवृद्धौ रण्डेति तत्कथमत्र

टित्वप्रयुक्तषिट्लोप इति चेत् । न च ड इति प्राप्तायामित्संज्ञायां अपवादाभावात् । कथं तर्हि रंडासिद्धिः । इत्थं । चुटुषाप्रत्ययस्येत्येकयोगसम्भवे चुटु इति पृथक् योगकरणादस्यानित्यत्वं ज्ञायते। तेन विद्यावचुर्विद्याचरण इत्यादिसिध्यतीत्युक्तत्वेन अत्रापि तु संज्ञायाः उदाहरणभेदेन व्यवस्थानादिति। यद्वा सुष्टुरातिददाति लान्ति आददते चेति । रलयोरभेदात्। रा दाने ला आदान इति धातोः दानप्रतिग्रहादिषट्कर्मोपेताः गृहिण इत्यर्थः। तथा सु सुखं विषयादिभोगं रहयन्ति विसृजन्ति ते सुराः। रह विसर्गे तस्मादन्येभ्योऽपि दृश्यते इति डः। तथाविधवानप्रस्था इत्यर्थः। तथा सुतरां रहयन्ति विसृजन्ति सर्वं सन्यस्यन्ति तथाविधाः यतयः इत्यर्थः। सर्वाश्रमवन्त इत्यर्थः। तत्रापि नृणां मध्येऽपि यथाक्रमं मुक्तौ सुखं मनुष्यगृहस्थापेक्षया मनुष्ययतेरधिकं । ततोऽपि सुराणां सुरेष्वपि यथाक्रमं यथोत्तरं सुखमधिकमिति ।।८।।

अथ भगवत्प्राप्तिसाधनज्ञानस्याप्यतिगोप्यत्वरूपमहिम्नो वर्णनार्थं सूत्रं **ओं अनाविष्कुर्वन्नन्वयात्**। अनाविष्कुर्वन्विद्यां गोपयन्नेव उपदिशेत् । यद्यपि आविष्कारे सति बहूनां श्रवणादुपकारो भवति। तथापि सभाचत्वरादावितस्तत आविष्कारे अयोग्येष्वप्यन्वयप्रसंगात्। तच्च निषिद्धं "विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि। अनार्यकायानृजवे शठाय न मां ब्रूया ऋजवे ब्रूहि नित्यं" इति श्रुतेः। "अनसूयकाय ऋजवेऽशठाय मां ब्रूयाद्वीर्यवती तथास्यां" इति शाखान्तरपाठः। तत्तात्पर्यमाह **नृणां सुराणां** इत्यादिना। नृणां नीतिमतानां न्यायसर्गे वर्तमानानामित्यर्थः। नृ नये इति धातोस्तेषामर्थे ये सुरा सुष्टुरायन्ति पठ्यन्ति। रै शब्दे । रान्ति प्रयच्छन्ति ज्ञानोपदेशं कुर्वन्ति। तेषामेव मुक्तौ यथाक्रमं सुखं क्लृप्तं समर्थितं श्रुतिस्मृतिभिरित्यर्थः। नीतिमतां सुराणामध्यापकानामध्ययनधर्मरूपनीतिमनुसंदधानामिति नीतिमत्वमध्यापकविशेषणमेव। "विद्या ह वै ब्राह्मणमाजगाम गोपाय मां सेवधिष्टेऽहमस्मि" इति श्रुत्यर्थानुसन्धानं ह्यध्यापक-नीतिरिति भावः।

यद्वा सुराणां नृणां सुरसदृशानां सात्विकानामित्यर्थः। सिंहो देवदत्त इतिवदभेदव्यपदेशो गुणयोगात् । तेषामर्थे मुक्तौ मीयते प्रमीयते तत्वं येनेति म् । मामानय इत्यस्मात्करणे ड्विप्रत्ययः। वेरपृक्तस्येतिप्रत्ययलोपः। डित्वाट्टिलोपः। अमीति णिजन्तात्क्विपि तस्मिन्परतः प्रत्ययलक्षणत्वेनेट् प्राप्तौ नेड्वशीकृतीति तत्प्रतिषेधे णेरनिटीति णिलोपः। तथाविधं श्रुतितन्मीमांसादि तस्योक्तिः मुक्तिस्तस्यां सत्यां यथाक्रममुत्तरोत्तरं सुखं समर्थितमित्यर्थः। यद्वा सुराणां मुक्तावित्येकपदम् । रणशब्दे अस्माद्भावे घञ् । तेन राणः शब्दः। शोभनश्चासौ राणश्चेति सुराणः। निर्दोषः शब्दः वेदाद्यागमः। अत एव अनुस्वाराकारवाच्यः परमात्मा । "अ आ अं अः पुराणर्षिरिति" तन्नामसु पाठात् । तस्य मा आमं तात्करोतीत्यं मयतीत्यम् । तत्करोति तदाचष्ट इत्यमाशब्दात् णिचि द्व्यच्कत्वेन प्रकृत्यैकाजित्यस्याप्रवृत्तेर्णविष्टवत्प्रातिपादिकस्येतिष्टवद्भावेन टेरिति टिलोपे

वृक्षवृश्चमाचष्ट वृक्ष वयतीति वृक्ष इतिवत्परमात्मज्ञापक इत्यर्थः। सुराश्चासावंमुचेति सुराणां तस्यानुक्तिः सुराणां मुक्तः तस्यां नीतिमतां वेदार्थगोपनादिधर्मशालिनो शिष्याणामर्थे परमात्मप्रतिपादकागमस्योक्तौपाध्यासकागममध्ये नृणां च यथायोग्यं पूर्णसुखं भवतीत्यर्थः ।।९।।

अथ भगवत्प्राप्तिसाधनज्ञानस्य प्रतिबन्धकाभावे सति साधनसम्पत्तिजन्मन्येवोदयसमर्थ-नार्थमधिकरणं **ओं ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्** । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ.उ.४-४-५)चेति दर्शनार्थं श्रवणादि विधीयते। तत्र दर्शनमैहिकमेव। साधनसम्पत्तिसम्पूर्तिजन्मन्येव भवति। यदि प्रारब्धकर्मादिकं प्रतिबन्धकं न स्यात् । तत्सद्भावेऽपि जन्मान्तरेऽपि भवतीति भावः। "श्रुत्वात्मानं मतिपूर्वं ह्युपास्येहैव दृष्टिं परमस्य विन्देत् । यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्य" इति सौपर्णश्रुतौ दर्शनात् ।।१०।।

एतत्तात्पर्यमाह। नृणां सुराणामित्यादिनां सुष्टुरान्ति लान्ति रायंतीति वा सुराः । शिष्येभ्य उपदिशन्ति स्वयं चोत्तमेभ्य आददते पठन्ति चेति सुरास्तेषां साधनसम्पत्तिमतामिति यावत् । तथाविधानां नृणां यथाक्रमं "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्युक्तक्रममनतिक्रम्य श्रवणमनननिदिध्यासनरूपं क्रमिकं साधनमनपेक्ष्य। मुक्तौ प्रतिबन्धकात् । प्रारब्धकर्मादि-रूपज्ञानप्रतिबन्धकात् । मुक्तौ मोचने सतीत्यर्थः। प्रतिबन्धकाभावे सतीति यावत् । सुखं शोभनं ज्ञानं अपरोक्षरूपं भवतीति क्लृप्तम् । श्रुतिभिः समर्थितम् । "खं ब्रह्म" इति श्रुतेर्ज्ञानं ब्रह्मेति व्याख्यातत्वात् खशब्दो ज्ञानवाची। प्रतिबन्धकमुक्तौ सत्यां ध्यानपरिपाकानन्तरमेव ज्ञानं भवति। तच्च तज्जन्मनि जन्मान्तरे वेति भावः। एतेनापरोक्षज्ञानोत्तरकालं न मोक्षप्रतिबन्धकं भुज्यमानकर्मेव प्रारब्धमिति वदतो परास्ताः। भोक्तुं प्रकर्षेण आरब्धमेव प्रारब्धं कर्म। अथ भगवत्प्राप्तिसाधन-ज्ञानस्य उत्पत्तिजन्मन्येव प्रतिबन्धाभावे मुक्तिसाधनत्वमहिम्नो वर्णनार्थमधिकरणं **ओं एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः**। एवमेव प्रतिबन्धकप्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षाख्यं फलं भवति। तत्सद्भावे तु तद्भोगानन्तरं जन्मान्तरमेव। नत्वस्मिन्नेव जन्मनीति नियमः। प्रागुक्तज्ञानोत्पादवत् । ननु प्रारब्धकर्मणः कुतः प्रतिबन्धकत्वं कल्प्यते शारीरपातानन्तरं मोक्षानुपलम्भे ज्ञानं साधनमेव न भवतीति किं न स्यादित्यत उक्तं तदवस्थावधृतेरिति। तस्मिन्ब्रह्मण्यवस्था यस्येति तदवस्थो ब्रह्मसंस्थः । तस्य श्रुतौ मोक्षावधारणात् । "धर्मी स्वर्गं विधर्मो निरयमेत्येव ब्रह्मसंस्थोऽमृतत्वमेत्येव" इति ब्रह्मापरोक्षज्ञानिनो मोक्षावधारणश्रुतेः।

"विद्वानमृतमाप्नोति नात्र कार्या विचारणा। अवसन्नं यदारब्धं कर्म तत्रैव गच्छति।
न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशयः।।" इति च नारायणाध्यात्मे।।११।।

एतत्तात्पर्यमाह **नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमं** इति । नृणां मनुष्योत्तमानां च मुक्तौ यथासुखं क्लृप्तं तत्तथास्वयोग्यानुसारेण भगवत्येक एव किन्तु। अक्रमं न विद्यते क्रमनियमो ह्यस्मिंस्तत्तथाविधम् । एतद्देहपातानन्तरमेवेति क्रमनियमो नास्ति । तदेवप्रतिबन्धकक्षयः। इह जन्मनि जन्मान्तरे वा तदा भवत्येवेति नियमोऽस्ति । नत्विह जन्मन्येवेति वा जन्मान्तर एवेति वा नियमः। तदिदमाह सुखं क्लप्तं निर्णीतमेवेत्यर्थः ।।

**।। इति नारायणकृतावणुभाष्यप्रपंचने तृतीयाध्यासम्बन्धश्चतुर्थश्चरणोत्यगात् ।।**

**मळगी** – इतोऽपि ज्ञानमेव सम्पादनीयमित्याह **सर्वेऽपि इति। ज्ञानादेव** ब्रह्मापरोक्षज्ञानादेव। **सर्वे** समस्ता **अपि पुरुषार्थाः** स्वर्गमोक्षादयः **स्युः** भवन्ति। निश्चयेन **ज्ञानवान्** ब्रह्मापरोक्षज्ञानी **क्वचित्** कस्मिंश्चित्काले। **सर्वदोषैरपि** सत्कर्मत्यागदोषकरणैरपि। **न लिप्यते** मोक्षाभावाख्यलेपयुक्तो न भवति। यद्वा **सर्वेऽपि** अधिकारिणः **ज्ञानादेव पुरुषार्थाः** पुरुषार्थवन्तः स्युर्निश्चयेन। **ज्ञानवान्** अधिकारी **सर्वदोषैरपि** अपरोक्षज्ञानान्तरं स्वोत्तमसेवादिभिः गुणैः दोषैः स्वोत्तमद्रोहादिरूपैः। **सुखस्यापि** मुक्तिगतस्वरूपसुखस्यापि । **वृद्धिह्रासौ विमुक्तिगौ** मोक्षगौ भवतः। **सुराणां** देवानां **तु मुक्तौ** मोक्षे । **सुखं** स्वरूपसुखं । **यथाक्रमं** योग्यतानुसारेण **क्लृप्तं** नियतम् ।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां तृतीयाध्यायस्य चतुर्थः पादः ।।**

**लिंघेरी** – इतोऽपि ज्ञानमेव सम्पादनीयमित्याह **सर्वेऽपि** इति। सर्वेऽप्यधिकारिणः ज्ञानादेव पुरुषार्थवन्तो भवन्ति। अत्र संशयो न । **ज्ञानवान्** अधिकारी । **सर्वदोषैरपि** अपरोक्षज्ञानानन्तरं **क्वचित्** कदाचित् **न लिप्यते** लिप्तो न भवति ।।६।। अपरोक्षज्ञानान्तरं **गुणैः स्वोत्तमसेवादिगुणैः दोषैः** स्वोत्तमद्रोहरूपैः **सुखस्य** मुक्तिगतसुखस्यापि वृद्धिह्रासौ विमुक्तिगौ भवतः। **नृणां** मानुषाणाम्। **सुराणां** देवतानाम् । **मुक्तौ तु** यथाक्रमं सुखं **क्लृप्तं** नियतम् ।।७।।

**।। इति श्रीमदानन्दतीर्थविरचित अणुभाष्यस्य लिंघेरीश्रीनिवासकृतव्याख्यायां तृतीयोध्यायः ।।**

**नारायणपण्डित**– पुरुषार्थोऽतः शब्दादिति बादरायण इत्यस्यार्थः ज्ञानादेव मुख्यतो मोक्षः। अन्ये स्वर्गादयः कर्मयुक्तज्ञानादेव स्युः। ज्ञानं मुख्यम् । कर्म त्वमुख्यम् । नात्र संशय इति स्तुतयेऽनुमतिर्वेत्यधिकरणतात्पर्यम्। सर्वदोषैः स्वकृतदुष्कर्मभिः क्वचिदपि मनुष्यलोके ज्ञानवानपरोक्षज्ञानी न लिप्यते। नाम अशुचित्वं नरकादिकं मोक्षाभावं च न प्राप्नोति। वैयर्थ्यपरिहाराय फलान्तरमाह गुणदोषैः शुभाशुभकर्मभिः सुखस्यापि ज्ञानिभोग्यसुखादेर्विमुक्तिगौ विशिष्टमुक्तिगतौ वृद्धिह्रासौ व्यक्त्यव्यक्तीभवतः। केषाम्। नृणामेव । तद्व्यावृत्तिमाह सुराणामिति। सुराणां तु विशेषोऽस्ति। सः कः । मुक्तौ यथाक्रमम् तारतम्यक्रममनतिक्रम्य तदनुसारेण सुखं क्लृप्तमेव वाऽभिव्यक्तियुक्तमेव । न ह्रासोपेतमित्यर्थः। अनुव्याख्यानादौ विशेषो ज्ञेयः।
**अधिकरणानि ११ सूत्राणि ५१**

**।। इति श्रीमदानन्दतीर्थविरचित अणुभाष्यस्य टीकायां तृतीयाध्यायस्य चतुर्थः पादः ।।**

**गूढकर्तृक** – चतुर्थपादतात्पर्यार्थमाहाणुभाष्यकारः। **सर्वेऽपि पुरुषार्थाः स्युर्ज्ञानादेव न संशयः। न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित्। गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ। नृणां** सुराणां मुक्तौ तु **सुखं क्लृप्तं यथाक्रमं** इति। ज्ञानादेव मुख्यतो मोक्षः। अन्ये स्वर्गादयः कर्मयुक्तज्ञानादेव स्युः। ज्ञानं मुख्यम्। कर्म तु अमुख्यम्। नात्र संशय इति पुरुषार्थाधिकरणतात्पर्यार्थः। स्तुत्याद्यधिकरणतात्पर्यं सर्वदोषैः स्वकृतदुष्कर्मभिः क्वचिदपि मनुष्यलोके परलोके ज्ञानवान् अपरोक्षज्ञानी न लिप्यते अशुचित्वनरकादिकं मोक्षाभावं च नाप्नोति। वैयर्थ्यपरिहाराय फलान्तरमाह। गुणदोषैः शुभाशुभकर्मभिः सुखस्यापि ज्ञानिभोग्यसुखादेः विमुक्तिगौ विशिष्टमुक्तिगतौ वृद्धिह्रासौ व्यक्त्यव्यक्तीभवतः। केषाम्? नृणामेव। तद्व्यावृत्तिमाह। सुराणां तु विशेषोऽस्ति। सः कः? मुक्तौ यथाक्रमं तारतम्यक्रममनतिक्रम्य तदनुसारेण सुखक्लृप्तमेवाभिव्यक्तियुतमेव न ह्रासोपेतमिति अर्थः। अनुव्याख्यानादावत्र विशेषो ज्ञेयः।

**।। इति श्रीमदानन्दतीर्थविरचित अणुभाष्यस्य टीकायां तृतीयाध्यायस्य चतुर्थः पादः ।।**

# अथ चतुर्थोऽध्यायः

**अणुभाष्यम्**

**विष्णुर्ब्रह्म तथाऽऽदातेत्येवं नित्यमुपासनम्।**
**कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् ।।१।।**

**सत्यनाथीया–** ओं ब्रह्मदृष्टिरुत्कर्षादित्यस्यार्थमाह **विष्णुः** इति। **विष्णुः ब्रह्म** सर्वगुणपूर्णः । आत्मेति तूगच्छन्ति ग्राहयन्ति चेत्यस्यार्थमाह **आपद्यपीति** । आध्याद्यापत्कालेऽप्येवं पूर्वोक्तमुपासनं नित्यं कार्यमिति । आवृत्तिरसकृदुपदेशादित्यस्यार्थमाह **तेन** इति। तेनैवोपासनेनैव ब्रह्मापरोक्षताम-परोक्षविषयतां यातीति। तदुपासनस्यादरनैरन्तर्याभ्यां अवश्यकर्तव्यत्वमुक्त्वा ज्ञानस्य फलमुच्यते ।

**तत्वमञ्जरी–** अस्मिन्नध्याये आद्यसूत्रस्थातः पदोक्तकर्मक्षयोत्क्रान्तिमार्गभोगरूपमोक्षाख्यं फलं निरूप्यत इति श्रीमद्भाष्यादेव अत्रैवाग्रे प्रतिपादनदिशा वा अध्यायार्थः सुज्ञानः। तथैव पादार्था अपि । तत्रान्त्यनये कर्मक्षयाख्यं फलं वक्ष्यन् सप्तभिर्नयैः अत्यावश्यकान्तरङ्गसाधनं ज्ञानस्योच्यते। तदर्थं भाषते। **विष्णुर्ब्रह्म तथा दातेत्येवं नित्यमुपासनम् । कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम्** इति।

तत्रायं विवेकः। सकृदनुष्ठिताग्निष्टोमादिना स्वर्गफलदर्शनात् श्रवणादिनापि सकृदनुष्ठितेनैव ज्ञानमस्त्वित्यतः प्राप्तस्य **आवृत्तिरसकृदुपदेशात्** इति नयस्यार्थो – **नित्यमुपासनं कार्यम्** इति। श्रवणादिरूपमुपासनं नित्यं कार्यं न तु सकृदेवेत्यर्थः। व्रीह्यवघातादिवत् दृष्टार्थत्वेन यावज्ज्ञानोदयं श्रवणादेरावर्त्यत्वादिति भावः ।।१।।

यत्तु हरेः स्वामित्वस्यातिप्रसिद्धत्वात् नित्यं तदुपासनं नावश्यकमित्यतः प्राप्तं **आत्मेतितूपगच्छन्ति ग्राहयन्ति च** इति तदर्थः। आदातेत्येवं नित्यमुपासनम् । विष्णुरादाता स्वामीत्येवं प्रकारेण नित्यमुपासनं कार्यम् । नित्यमित्यस्य विवरणमापद्यपीति।

आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः।
नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत् ।। (भविष्यतपर्व)इत्युक्तेरिति भावः।

स्वामीति वाच्ये आदातेत्युक्तिः आदत्ते भृत्यानीत्यात्मा इत्यात्मशब्दो योगेन स्वामिवाचीति सौत्रात्मपदं व्याख्यातुम् । ''आदानार्थत्वतश्चायमात्मशब्दः पतिं वदेत्'' (४-१-१६) इत्यनुव्याख्यानोक्तेः। आदातेतीत्येव पूर्तौ प्रकारवाच्येवंशब्दोक्तिः आत्मत्वं विशेषणमित्येवं रूपेणोपासनं कार्यं न तु जीवत्वेनेति वक्तुम् । ''आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः ।'' (ब्राह्म)इत्यादेः। तेन विष्णुः आत्मतया जीवत्वेनोपास्य इत्येवं वदन्तो निरस्ताः ।।२।।

एतेन "नाम ब्रह्मेत्युपासीत्" इत्यादौ नामाद्यभिमानिरूपप्रतीकतादात्म्येन उपासनमपाकुर्वतो **न प्रतीके न हि सः** इति नयस्याप्यर्थः सङ्गृहीतः। विष्णुरादातेत्यनन्तरं विष्णुर्नामादावित्यस्याप्यभिप्रेतत्वेन विष्णुनामादावित्येवं नित्यमुपासनं कार्यं न तु विष्णुर्नामेत्येवं रूपेणेति व्याख्यानसम्भवात् ॥३॥

यत्तु विष्णोरतिप्रीतिहेतुत्वेन उत्कृष्टत्वरूपब्रह्मत्वोपासनस्यावश्यकत्वं वक्तुं **ब्रह्मदृष्टिः उत्कर्षात्** इति सूत्रं तदर्थं भाषते **विष्णुब्रह्मेत्येवं नित्यमुपासनं कार्यमापद्यपि** इति पूर्ववद्व्याख्यानम् ।

आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु । गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु ।

स्मर्तव्यं ............. इत्यादेः।

अत्र विष्णुरादाता ब्रह्मेत्येवमिति सौत्रक्रमेऽनुसर्तव्येऽप्येवमुक्तिः आत्मत्वोपासनमपि ब्रह्मत्वयुक्तमेव कार्यमिति सूचयितुम् । "आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता । कार्यैव सर्वथा" इत्यादेः। अत एव द्वयोः समुच्चये तथाशब्दः ॥४॥

देवानां स्वाश्रयाङ्गकत्वगुणवत्त्वेन ईश्वरोपासनस्याङ्गेषु यथाश्रयभाव इत्युपासनापाद एवोक्तस्यात्र आदित्यादिमतयश्च इत्यनेनावश्यकत्वमात्रोक्त्या सुरेश्वरैः यथाक्रमं बहुगुणैर्विष्णुरुपास्यः इत्युपासनापादीयभाष्येणैव सङ्गृहीतप्रायत्वात् अत्र तदर्थस्यानुक्तिः। यद्वा आदातेत्यनन्तरमितिशब्दं प्रभृत्यर्थकमपि वा समुच्चयार्थं वा व्याख्याय स्वस्वोत्पत्त्यङ्गकश्च विष्णुरेवमित्यर्थमुक्त्वा आदित्यादिमतयश्चाङ्ग उपपत्तेः इत्येतदर्थसङ्गृहोऽपि ध्येयः ॥५॥

तथा स्मरणध्यानसाधारण्येन उपासनमात्रस्य नित्यं कार्यत्वभाषणात् ध्यानमात्राङ्गासीनादीत्थंभावोक्तिपरस्य **आसीनः सम्भवात्** इति नयस्यार्थोऽत्र नोक्तः। यद्वा एवमित्यनेनैव आसीनादीत्थंभावमपि परामृश्यासीन इति नयार्थोऽपि संग्राह्यः। यद्वा, उपासनमित्यावर्त्यम् । एवं नित्यमुपासनं कार्यम् । किं कृत्वा? उपासनं, आसनस्योप उपासनम् । आसने उपविश्येत्यर्थः ॥६॥ यदपि मुक्तिपर्यन्तमुपासनस्य कार्यत्वोक्तिपरं **आप्रायणात्तत्रापि हि दृष्टं** इति सूत्रं तदर्थोऽपि नित्यं यावन्मुक्ति उपासनं कार्यमित्युक्त्यैव सङ्गृहीत इति ॥७॥

ननु साधनाध्याये वक्तव्यस्योपासनस्यात्र कर्मक्षयाख्यफलोक्तिपरपादे निरूपणमसङ्गतमित्यतो ज्ञानस्यान्तरङ्गसाधनत्वद्योतनायात्र निरूपणमिति भावेन तत्फलमाह –**ब्रह्म तेन यात्यपरोक्षताम्** इति। तेन ब्रह्मत्वाद्युपासनेन ब्रह्म कर्तृ अधिकारिणामपरोक्षविषयतां यातीत्यर्थः। एतेन यदुपासनपादे तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् इति श्रवणमनननिदिध्यासनानां साक्षात्परम्परया साक्षात्कारहेतुत्वमुक्तं, यदपि ज्ञानपादे ऐहिकमप्रस्तुतप्रतिबन्धे इत्यत्र व्यभिचारनिरासेन ज्ञानफलकत्वमुक्तं तदत्र स्फुटीकृतं भवति।

**आनन्दमाला** – उक्तः साधनभेदः प्रायेण । फलमाहास्मिन्नध्याये। प्रथमपादे अनिष्टकर्म-क्षयाख्यम् । नित्यशो अत्यन्तं कार्यमवश्यं भाव्यं च यत् तत् साधनं प्रथमतो निगद्यते।

''आवृत्तिरसकृदुपदेशात्''(४-१-१) ''आत्मेति तूपगच्छन्ति ग्राहयन्ति च'' (४-१-३) ''ब्रह्मदृष्टिरुत्कर्षात्'' (४-१-५) इत्यादीनि व्याख्याति - **विष्णुर्ब्रह्म तथा दातेत्येवं नित्यमुपासनम् । कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम्** इति। विष्णुः ब्रह्म परिपूर्णः, आदाता सर्वस्य स्वामीत्येवं नित्यमुपासनं कार्यं मुमुक्षुभिः। अयं चात्र विशेषः - यथा विष्णुर्ब्रह्मा दातेत्युपास्यं तथा आदाता च ब्रह्म विष्णुरित्युपास्यमित्येज्ज्ञापनार्थं तथाशब्दः। एवंशब्द-स्त्वन्यथोपास्तिनिराकरणार्थः।

अयमिह मथितार्थः - विष्णुर्मे परिपूर्णः स्वामी, स्वामी मे परिपूर्णो विष्णुः इत्यन्योन्यविशेषणविशेष्यतयोभयप्रकारेणाप्युपासनं कार्यम् । नत्वन्यथेति। ननु ''अहं ब्रह्मास्मि'' ''ब्रह्माहमस्मि'' इत्येवोभयप्रकारेणोपास्यमिति च मा शङ्कि। तादृगुपास्तेरन्यथाविषयत्वात् । न हि जीवस्य ब्रह्मत्वं प्रमाणसिद्धम् । पृथक्त्वस्यैवोपदेशात् ।

सिद्धं हि तत्त्वमस्यादिवाक्ये तदैक्यमिति चेत् मैवम् । तस्यातत्त्वमस्यादित्वात् । तथापि ''अहं ब्रह्मास्मि'' (बृ.उ३-५-४) इति वाक्ये कथमिति चेत्, तत्र हि स्वात्मानमेव तद् ब्रह्म अहं ब्रह्मास्मि इत्यवेत् न तु जीवम् । नापि जीवस्तदस्मीत्यवेत् । उपक्रमादिविरोधात् । न च ''ब्रह्म वेद ब्रह्मैव भवति'' (आथ.३-२-९)इत्युक्तिविरोधः। ब्राह्मणपूजकोऽपि ब्रह्मणो भवेदितिवत् तद्भावं विना तदन्तर्भावस्यैव विवक्षितत्वात् । न हि ब्राह्मणपूजकः स एव ब्राह्मणो भवति इति हि तत्त्वनिर्णये भगवतैवोक्तम् । अपरथा ''तदेव ब्रह्म परमम्'' (म.ना.उ.२) इत्यवधारण-विरोधाच्च । तस्मान्नाहं तद् ब्रह्मेत्युपास्यम् ।

अपि च, यदेतदादेयं चराचरं विष्णोः प्रतीकमेव सत् तच्च ब्रह्मेति नोपास्यम् । तस्याप्य-तद्भावात्। तस्मादस्मदुक्तप्रकारेणैव तदुपासनं कार्यम् । तच्च आदर्शनादा मोक्षाच्चैवं विधीयत इति नित्यमित्युक्तम् । न चैतत् कदाचिदप्युपरन्तव्यम् । किन्तु ? अत्यन्तायामापद्यपि यथाशक्त्यनुष्ठेयमेव। अपि शब्दाद् देवैस्तु स्वोत्पत्त्यादिस्थानं भगवदङ्गं च तादृगित्युपास्यमिति सिद्ध्यति। स विष्णुः यथा यस्मात् स्वाङ्गान्ममादाता स्रष्टा तस्मिन्नेव स्वाङ्गे ममादाता स्थापयिता संहर्ता चेत्युपास्यमिति योजनयैव वा तत्सिद्धिः। तच्चादित्यादीनां सृष्ट्यादिस्थानं भगवदङ्गं चक्षुरादीति श्रुतम्।

ध्यानोपासनमासीनैः कार्यमिति विशेषः सर्वेषामिति समः। तेनेत्थं कृतेनोपासनेन ब्रह्मशब्दितो विष्णुस्तेषामपरोक्षतां याति। यत्तदुत्तरोत्तरं सविशेषमुक्तमपरोक्षज्ञानं तदनेन जायते इत्यर्थः।

॥१-४॥

**नृसिंहतीर्थ** – एवं वैराग्याद्यपरोक्षज्ञानान्तसाधनैः प्रसन्नः परमेश्वरः कीदृशं पुमर्थं प्रयच्छतीत्याशंकापरिहाराय कर्मक्षयादिभेदेन भिन्नमोक्षस्वरूपप्रतिपादनाय चतुर्थाध्यायः प्रवृत्तः। तत्र कर्मक्षयाख्यफलप्रतिपादकपादेऽपि अन्तरङ्गत्वेनावश्यकसाधनत्वज्ञापनाय उपासनादि-ज्ञानसाधनप्रतिपादनार्थं आद्याधिकरणसप्तकतात्पर्यमाह **विष्णुः** इति। श्रवणावृत्तेः कर्तव्यत्वप्रति-पादकस्य आवृत्तिरसकृदुपदेशादिति प्रथमाधिकरणस्य तात्पर्यम् **नित्यमुपासनं कार्यं** इति। नित्यं सर्वदा पुनः पुनरिति यावत् । उपासनं श्रवणादिकं कार्यमिति। आत्मत्वोपासनस्य नित्यदा कर्तव्यत्वप्रतिपादकस्य द्वितीयाधिकरणस्य तात्पर्यं **विष्णुः आदाता** इति। नित्यमुपासनं कार्यमिति। आदाता ज्ञानमोक्षयोरिति शेषः। स्वामीति यावत् । विष्णोः प्रतीकैक्योपासन-व्यावर्त्तनस्यावश्यकत्वप्रतिपादकस्य तृतीयाधिकरणस्य तात्पर्यं **इति** इति। नित्यमुपासनं कार्यमिति। सर्वं वाक्यं सावधारणमिति एवशब्दो ह्याहार्यः। इत्येवं पूर्वोक्तप्रकारेण स्वामित्वेन नित्यमुपासनं कार्यं न प्रतीकैक्येनेत्यर्थः।

ब्रह्मत्वोपासनस्यावश्यकत्वप्रतिपादकस्य चतुर्थाधिकरणस्य तात्पर्यम् **विष्णुर्ब्रह्म** इति। नित्योपासनं कार्यमिति। ब्रह्मेति पूर्णमित्यर्थः। देवानां स्वस्योत्पत्तिस्थानभूतभगवदंगाश्रितत्वेन उपासनस्यावश्यकत्वप्रतिपादकस्य पंचमाधिकरणस्य तात्पर्यम् **तथा नित्यमुपासनं कार्यं** इति। यथा भगवदंगेषु आश्रितास्तथेत्यर्थः। ध्यानार्थं आसनस्यावश्यकत्वप्रतिपादकस्य आसीन इति षष्टाधिकरणस्य तात्पर्यम् **एवं नित्यमुपासनं कार्यं** इति। एवंशब्दःस्मृत्युक्तपरामर्शकः। "उपविश्यासने युंज्यात्" इत्यादिस्मृत्युक्तप्रकारेण आसने उपविश्य नित्यमुपासनं कार्यमित्यर्थः।

उपासनस्य मोक्षपर्यन्तत्वप्रतिपादकस्य सप्तमाधिकरणस्य तात्पर्यम् **आपद्यपि उपासनं** इति। आ सम्यक् पठ्यते प्राप्यत इति आपत् मोक्षस्तस्मिन्नपि उपासनं दृष्टमिति शेषः। तत्पर्यन्तं उपासनं कार्यमिति किमु वक्तव्यमिति कैमुत्यद्योतनार्थं तत्रापि हि दृष्टमिति सूत्रानुसारेणैव मुक्तिः। अन्यथा मोक्षपर्यन्तं कार्यमित्युक्तिः स्यादिति। तेन एवमुपासनेन ब्रह्म अपरोक्षतां अपरोक्षविषयतां यातीत्यर्थः। यद्वा एतदधिकरणसप्तकस्य तात्पर्यं न वक्तव्यमेव। पूर्वोक्तार्थस्य प्रतिपादकत्वात् । उक्तार्थप्रतिपादकाधिकरणतात्पर्यस्य अत्र पृथगनुक्तेः। तथाहि। सर्ववेदान्तप्रत्ययमित्यत्र श्रवणाद्यावृत्तेः कर्तव्यत्वं आनन्दादयः प्रधानस्येत्यत्रात्मत्वोपासनस्य कर्तव्यत्वम्। तत्रैव सर्वस्वामित्वेनोपासनोक्त्या विष्णुप्रतीकैक्योपासनस्य वर्जनीयत्वम् । भूम्नः क्रतुवदित्यत्र ब्रह्मत्वोपासनस्य कर्तव्यत्वम्। अंगेषु यथाश्रयभाव इत्यत्र आदित्यादीनां भगवच्चक्षुराद्याश्रितत्वेन उपासनस्य देवैः कर्तव्यत्वम् । अनुबन्धादिभ्य इत्यत्रादिपदेन आसनादेरावश्यकत्वम् । "अन्यैर्गुणैर्देवगणा उपासते" इति श्रुतिग्राहकदर्शनाच्च यत्र उत्पन्नापरोक्षज्ञानिनां देवानामप्युपासनोक्त्या उपासनस्य प्रायणान्तत्वं चोक्तमेव। अतोऽत्र नोक्तः। विष्णुपासनापरोक्षज्ञानवत् चतुर्मुखोपासनापरोक्षज्ञानमपि सम्पादनीयम्।

कार्यं बादरीरिति तत्प्राप्तेरपि वक्ष्यमाणत्वात् । अन्यथा विष्णुप्राप्तिरेव स्यान्न चतुर्मुखप्राप्तिः। अत एव वक्ष्यति। न च कार्ये प्रतिपत्यभिसन्धिरिति भावेन प्रवृत्तेः।

अस्यैवं योजना। विष्णुर्यथा दाता ज्ञानमोक्षयोरिति शेषः। तथा ब्रह्मा चतुर्मुखश्च दाता ज्ञानमोक्षयोः। विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञयेति वचनात् । इत्येवं आपद्यपि महापत्प्राप्तावपि नित्यमुपासनं कार्यम् । तेनोपासनेन परं ब्रह्म यथा अपरोक्षतां याति तथा ब्रह्म चतुर्मुखाख्यं अपरोक्षतां यातीत्यर्थः। न च चतुर्मुखे नपुंसकब्रह्मशब्दानुपपत्तिः। " स एनान्ब्रह्म गमयति" इति श्रुतिगतनपुंसकब्रह्मशब्दस्य चतुर्मुखपरतायाः कार्यं बादरीरित्यादिसूत्रैः सूत्रकारेणैव साधितत्वादिति।

**श्रीनिवासतीर्थीया–** एतत्पादार्थं संकुच्याह **विष्णुः** इति। ब्रह्मदृष्टिरुत्कर्षादित्यधिकरणार्थः **विष्णुर्ब्रह्म** इति। ब्रह्म सर्वगुणैः पूर्ण इत्यर्थः। आत्मेति तूपगच्छन्ति ग्राहयन्तीति सूत्रार्थः **तथादाता** इति। आदाता स्वामीत्यर्थः। आवृत्तिरसकृदुपदेशादित्यधिकरणतात्पर्यम् **इत्येवं** इति। इत्येवं पूर्वोक्तामुपासनामापद्यपि व्याध्यादिना आपत्कालेऽपि नित्यं कार्यं इत्यर्थः। विष्णूपासन-स्यादरनैरन्तर्याभ्यामावश्यकर्तव्यत्वमुक्त्वा फलमाह **ब्रह्म तेन** इति। तेनोपासनेन ब्रह्मापरोक्षता अपरोक्षविषयतां यातीत्यर्थः।

**छलारी –**

**हरिः ओम्**
**यस्य मूर्ध्नि करं न्यस्य मनुं धन्वन्तरेर्जपेत् ।**
**स वीतरोगोऽरोगी स्यात् तं हरिं सततं भजे ॥१॥**

एवं वैराग्यादिसाधनैः सम्प्रसन्नः परमेश्वरः कीदृशं फलं प्रयच्छतित्यतः कर्मक्षयोत्क्रान्ति-मार्गभोगाख्यफलनिरूपणार्थं चतुर्थाध्यायः प्रवृत्तः।

तत्र कर्मक्षयाख्यं फलमस्मिन्पादे निरूप्यते। तत्राप्यत्यावश्यकान्तरङ्गसाधनं प्रथमतो निरूप्यते।

**ओं आवृत्तिरसकृदुपदेशात् ओं**

श्रवणादीनामावृत्तिः कार्या । कुतः? "स आत्मातत्त्वमसि श्वेतकेतो" (छां.उ.) इत्युद्दालकेन श्वेतकेतुं प्रति असकृदुपदेशादिति सूत्रार्थः।

अत्र श्रवणादिकं सकृदेवानुष्ठेयं, तावतैव श्रवणादिविधिपर्यवसानात् । अन्यथा सकृदेव ज्योतिष्टोमादिकं अनुष्ठाय कृती न स्यात् । एवं च विहितश्रवणाद्यनुष्ठानेन ज्ञानादर्शनात् न श्रवणादि ज्ञानसाधनमिति प्राप्ते –

आवृत्तरेव श्रवणादीनां फलहेतुः । न सकृदनुष्ठानं , अपरोक्षज्ञानसिद्धये उद्दालकेन नवकृत्वः श्वेतकेतुं प्रति तत्वस्योपदिष्टत्वात् । श्रुतविद्यस्यापि भृगोः "स तपोतप्यत। पुनरेव वरुणं पितरमुपससार" (तै.उ.३-१-२) इति पुनः पुनः वरुणं प्रति आवृत्तिलिङ्गाच्च ।

"नित्यशः श्रवणं चैव मननं ध्यानमेव च। कर्तव्यमेव पुरुषैः ब्रह्मदर्शनमिच्छुभिः।। (बृहत्तन्त्र) इति स्मृतेश्च ।"एवञ्चावृत्तौ नियमेन फलोपलम्भात् श्रवणादिकं ज्ञानसाधनमिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **नित्यमुपासनं कार्यम्** इति। नित्यं सर्वदा बहुवारमिति यावत् । उपासनं शास्त्राभ्यासादिरूपश्रवणादिकं कार्यम् । "उपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी। ध्यानरूपा परा चेति" इति युक्तेः। विष्णुर्बह्मेत्यादेस्तु उत्तराधिकरणेषूपयोगं वक्ष्यामः ।।१ ।।

## ओं आत्मेति तूपगच्छन्ति ग्राहयन्ति च ओं

विष्णुरात्मेत्युपदेशः उपासनं च सर्वदा सर्वथा मोक्षार्थिभिः कार्यमेव। कुतः ? यतो महान्तः तथोपगच्छन्ति उपासते ग्राहयन्ति च शिष्यान् प्रति उपदिशन्ति चेति सूत्रार्थः।

अत्र आत्मत्वं न सर्वोपास्यम् । हरेः जगत्स्वामित्वस्य शश्वदतिप्रसिद्धत्वात् । प्रसिद्धस्योपासनं व्यर्थमेव। किन्तु अप्रसिद्धगुणोपासनस्य ज्यायस्त्वेन तदेव नित्यशः कर्तव्यमिति प्राप्ते -

विष्मुरात्मेत्युपासनं सदा कार्यमेव। तस्यैव मोक्षसाधनत्वात् ।

आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः।
नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत् ।। (भविष्यत्पर्व)इति स्मृतेः।

न केवलं तथोपासनमावश्यकं किन्तु तथोपदेशश्च कर्तव्यः। तदभावे मोक्षासिद्धेः। कुतः?

"आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः। सर्वेषां च मुमुक्षूणां उपदेशश्च तादृशः।
कर्तव्यो नास्य हानेन कस्यचिन्मोक्ष इष्यते।" (ब्राह्म)इति स्मृतेः।

न च प्रसिद्धत्वादनुपास्यत्वम् । उपासनस्य फलहेतुतायाः प्रामाणिकत्वेन प्रसिध्यप्रसिद्धिभ्यां अकर्तव्याद्यसिद्धेरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विष्णुरादाता** इति। एवं नित्यमुपासनं कार्यमिति। आदाता मोक्षस्येति शेषः। स्वामीति यावत् । "विष्णुर्हि दाता मोक्षस्य" इत्युक्तेः। केचित्तु विष्णुरादाता आत्मा स्वामीत्येवं नित्यमुपासनं कार्यम् । आत्मेति वाच्ये आदातेत्युक्तिः आदत्ते भृत्यानित्यात्मेति आत्मशब्दो योगेन स्वामिवाचीति सौत्रात्मेतिपदं व्याख्यातुम् । तदुक्तमनुव्याख्याने (४-१-१६)- "आदानार्थत्वतश्चायं आत्मशब्दः पतिं वदेत्" इत्यपि व्याचक्षते।।२।।

## ओं न प्रतीके न हि सः ओं

नामादिप्रतीके ब्रह्मदृष्टिः न कार्या। कुतः? हि यस्मात् सः विष्णुः प्रतीकं न भवतीति सूत्रार्थः।

अत्र नामवागादिकं ब्रह्मतयोपास्यं "नाम ब्रह्मेत्युपासीत" (छां.उ.७-१-५) इत्यादि सामानाधिकरण्यश्रुतेः इति प्राप्ते -

न प्रतीके ब्रह्मदृष्टिः कार्या । मिथ्योपासनस्य अनर्थहेतुत्वात् । कथं तर्हि तदुपासना कार्या इति चेत् नामादिस्थत्वेनैवेति ग्रहाण। प्रथमाश्रवणात् कथमस्यार्थस्य लाभः इति चेन्न । "सप्तसु प्रथमा" इति वचनेन प्रथमायाः सप्तम्यर्थत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **एवं तथा नित्यमुपासनं कार्यम्** इति। तथाशब्दोऽवधारणार्थः। अव्ययानामनेकार्थत्वात् । तथा च एवं तथा एवमेव स्वामित्वेनैव नित्यमुपासनं कार्यं न प्रतीकैक्येनेत्यर्थः ।।३ ।।

## ओं ब्रह्मदृष्टिरुत्कर्षात् ओं

आत्मनि ब्रह्मदृष्टिः ब्रह्मत्वोपासनं कार्यं, कुतः? उत्कर्षात् । तथोपासनस्य भगवत्प्रसादोत्कर्षसाधनत्वादिति सूत्रार्थः।

अत्र ब्रह्मत्वं सर्वदोपास्यं, भगवत्प्रसादार्थं हि तदुपासनं कार्यं तस्य च विविधगुणोपासनेनापि सम्भवादिति प्राप्ते -

कार्यमेव सर्वदा ब्रह्मत्वोपासनम् । यतः ब्रह्मत्वोपासनं नाम सर्वोत्कृष्टत्वोपासनमेव। सर्वोत्कृष्टत्वोपासनं च अन्योपासनेभ्यो अतिशयेन भगवत्प्रसादहेतुः तदुक्तम् ।

ब्रह्मदृष्ट्या सदोपास्यो विष्णः सर्वैरपि ध्रुवम् ।
महत्त्ववाची शब्दोऽयं महत्वज्ञानमेव हि ।
सर्वतः प्रीतिजनक अतस्तत्सर्वथा भवेत् ।। (ब्रह्मतर्क)इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विष्णुर्ब्रह्म** इति। सर्वोत्कृष्ट इत्युपासनं कार्यमिति। नित्यं आपद्युपासनं कार्यमिति।

आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु ।
गुणानां स्मरणाशक्तौ विष्णोब्रह्मत्वमेव तु ।
स्मर्तव्यं सततं तत्तु न कदाचित्परित्यजेत् । (नारायणतन्त्र)इति स्मृतेः ।।४ ।।

## ओं आदित्यादिमतयश्चाङ्ग उपपत्तेः ओं

अङ्गे भगवदङ्गेषु आदित्यादिमतयश्च – आदित्यादिदेवैः स्वाश्रयत्वेनोपासनाश्च कार्याः। कुतः? उपपत्तेः। मुक्तौ तत्र प्रवेशस्य अपेक्षितत्वं इत्युपपत्तेरिति सूत्रार्थः।

अत्र न देवैः स्वाश्रयत्वेन सदा भगवदङ्गोपासनं कार्यं सूर्यादीनामितस्ततः सञ्चरणेन सदा भगवच्चक्षुराद्याश्रितत्वाभावात् । तथाप्युपासने अन्यथोपासनत्वेनानर्थप्रसङ्गादिति प्राप्ते –

कार्यमेवादित्यादिदेवैः स्वाश्रयत्वेन सदा भगवदङ्गोपासनम् । मुक्तौ तत्र प्रवेशस्य अपेक्षितत्वेन तथोपासनस्य तत्साधनत्वेनावश्यकत्वात् । "स्वोत्पत्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु" (नारायणतन्त्र)इति स्मृतेश्च । न चान्यथोपासनेनानर्थप्रसङ्गः। नित्यं रूपान्तरेणाङ्गानां स्वाश्रयत्वादिति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह – **तथा नित्यमुपासनं कार्यं** इति। यथा भगवदङ्गेषु आश्रितः तथेत्यर्थः।।५।।

## ओं आसीनः सम्भवात् ओं

आसीनः आसने उपविष्टः ध्यानं कुर्यात् । कुतः? सत्येवासने सम्यगुपासनस्य सम्भवादन्यथा असम्भवादिति सूत्रार्थः।

अत्र नासनं सर्वथापेक्षितं, तत्कृत्याभावात् । भगवद्दर्शनार्थं हि उपासनाद्यन्वेष्टव्यं, उपासनादिकं च विनाप्यासनेन सिध्यति । अन्यथा "स्मर्तव्यः सततं विष्णुः विस्मर्तव्यो न जातुचित्" इति सर्वदोपासनाविधीनामनुपपत्तिप्रसङ्गादिति प्राप्ते –

पद्माद्यासनयुक्तेनैव जिज्ञासुना विशेषतः उपासनं कार्यम् । सत्येवासने उपासनस्य सम्यक् सम्भवात् । न चैतावाता "स्मर्तव्यः सततं विष्णुः" इत्युक्तसर्वदोपासनासम्भव इति मन्तव्यम्। ध्यानोपासनार्थमेवासननियमाभिधानात् । उपासनं हि द्विविधं, स्मरणं ध्यानं चेति। तत्र स्मरणं सर्वदा योग्यं ध्यानोपासनन्तु आसन एवेति ।

"स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा। स्मरणं सर्वदा योग्यं ध्यानोपासनमासने" (नारायणतन्त्र)इति स्मृतेरिति सिद्धान्तः कृतः। तस्य तात्पर्यमाह – **तथोपासनं कार्यम्** इति। "उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये" इति स्मृतौ यथोक्तं तथा – तदुक्तप्रकारेण आसने उपविश्य ध्यानोपासनं कार्यमित्यर्थः।।६।।

## ओं आ प्रायणात् तत्रापि हि दृष्टम् ओं

आ प्रायणं मोक्षपर्यन्तं ध्यानं कार्यं, कुतः? दृष्टं हि, दृष्टं श्रुति हि यस्मात् प्रायणान्तमिति श्रुतिः अस्ति। कैमुत्यन्यायेनाप्याह - तत्रापीति। मुक्तावीपीति । मुक्तावपि ध्यानं कुर्वन्ति किमु ततः प्रागित्यर्थः। तदपि कुतः इत्यत उक्तं दृष्टं हीति। "मुक्तावपि ह्येनमुपासे" इति श्रुतिः यतः इति सूत्रार्थः।

अत्र मुमुक्षुणा ज्ञानपर्यन्तमेव ध्यानं कार्यं, तद्दर्शनार्थमेव श्रवणादिविधानात् । ज्ञानार्थं विहितस्य मुक्तिपर्यन्तमनुष्ठाने प्रमाणाभावादिति प्राप्ते -

कर्तव्यमेव मुमुक्षुणा मोक्षपर्यन्तं ध्यानम् । " प्रायणान्तमोङ्कारमभिध्यायीत्" (प्र.उ.५-१)इति श्रुतेः। ओंङ्कारो हरिः। "आविमुक्तेः विधिर्नित्यं स्वत एव ततः परम्" (ब्रह्माण्ड) इति स्मृतेश्चेति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **आपद्युपासनं कार्यम्** इति। आपद्यपि लिङ्गभङ्गरूपमहापद्यपि मुक्तावपीति यावत् । उपासनं दृष्टमिति शेषः। मुक्तिपर्यन्तं उपासनं कार्यमिति किमु वक्तव्यमिति कैमुत्यद्योतनार्थं अपिशब्दः। एवमुपासनस्यावश्यानुष्ठेयत्वमुपपाद्य उपासनस्य फलमाह - **तेन** इति। तेनोपासनेन ध्यानरूपेणापरोक्ष्यतां अपरोक्षज्ञानविषयतां अधिकारिणमिति शेषः। यातीत्यर्थः।।७।।

**नारायणाचार्य-** फलं निगद्यतेऽस्मिन्नध्याये। तच्च कर्मक्षयस्तथोत्क्रान्तिमार्गो भोग इति चतुर्विधं क्रमेण पादचतुष्टये विचार्यते। अत्रोत्क्रान्तिपदेन लयो वक्ष्यते । तत्र प्रथमपादे कर्मक्षयाख्यं फलमुच्यते। तत्रापि कतिपयैरधिकरणैर्ज्ञानसाधनं विचार्यते। यद्यप्यतीताध्याये एव तद्विचारितम् । तथापि तस्यैव नित्यशः कार्यत्वमत्रोच्यते । तस्यात्रोक्तिस्तु मोक्षं प्रत्यन्तरंगज्ञापनार्थम् । प्रायिकत्वाच्च पादव्यवस्था। तत्र ज्योतिष्टोमादेः सकृदनुष्ठितस्यैव स्वर्गादिफलसाधनत्वदर्शनात् । श्रवणमननादेरपि तथात्वमेवेति न मन्तव्यमित्यर्थप्रतिपादकं सूत्रं **ओं आवृत्तिरसकृदुपदेशात्** । श्रवणादेरावृत्तिः पुनः पुनरनुष्ठानं कर्तव्यम् । कुतः? "स आत्मा तत्वमसि श्वेतकेतो" इत्याद्यसकृदुपदेशात् ।

हेत्वन्तरेणाप्यावृत्तिं साधयत्सूत्रं **ओं लिंगाच्च** । "स तपोऽतप्यत । पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच ।" (तै.उ.३-१)पुनः पुनः भृगोः प्रश्नाद्वरुणस्य प्रतिवचनाच्च प्रथमत एव "अन्न प्राणं चक्षुः श्रोत्रं मनो वाचं" इति श्रुतस्य पुनः पुनरालोचनेनापरोक्षितत्वलिंगदर्शनाच्च नित्यं कर्तव्यम् । उक्तं च बृहत्तन्त्रे "नित्यशः श्रवणं चैव मननं ध्यानमेव च। कर्तव्यम्येव पुरुषैः ब्रह्मदर्शनमिच्छुभिः ।" इति।

एतत्तात्पर्यमाह **विष्णुर्ब्रह्म तथादातेत्येवं नित्यमुपासनम् । कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षतां** इति। अत्रानेकाधिकरणतात्पर्यसंग्रहात्मकश्लोके छित्वा छित्वा वाक्यं भेदेन योजना कार्या। तत्रैतच्छ्लोकद्वितीयपादमारभ्यैतदधिकरणार्थमाह। तस्यायमर्थः। पूर्वाध्यायोक्तमुपासनं तत्सकृदनुष्ठितं न फलदं किन्तु परमापद्यपि देशकालावस्थाद्यनानुगुण्येऽपि शक्तितः निरंतरं कार्यमेव। तेनैव ब्रह्म विष्णुरपरोक्षतां याति । तदभावे न भगवदापरोक्ष्यमिति भावः ।।१ ।।

अथोपास्येषु भगवद्गुणेषु सर्वाधिकारिसाधारणस्य आत्मत्वगुणस्य अवश्योपास्यत्वं प्रतिपादयत्सूत्रं **ओं आत्मेति तूपगच्छन्ति ग्राहयन्ति च**। प्रतिज्ञायां विधेयांशो अध्याहार्यः। सौत्रादाहृतात्मशब्देन रूढ्या धर्म्यंशस्योक्तत्वात् "दत्तं दूर्वाससं सोममात्मेशब्रह्मसम्भवान् ।" इति भागवते। तस्यादिमत्वेनोक्तत्वात्पुनस्तेनैव वृत्तेनादानाद्यर्थे यौगिकेन स्वामित्ववाचिना इति शब्दशिरस्केन विधेयस्वामित्वरूपप्रकारस्योक्तत्वात्स्वामीह भृत्यान्स्वीयतयादत्ते। कुत इत्याकांक्षायामनुक्त-समुच्चयार्थचशब्देन मोक्षस्य तदन्वयव्यतिरेकानुविधायित्वादिसूचितं प्राबल्यमपि अपिशब्देन । आत्मेत्युपासनं उपदेशश्च मोक्षार्थिभिः सर्वथा कार्यमेवेति। "नान्यं विचन्तय आत्मानमेवाहं विजानीयामात्मानमेवोपासे आत्मा हि ममैष भवति" इत्युपगच्छन्ति। "आत्मेत्येवोपास्व आत्मेत्येव विजानीहि। नान्यत्किंचन विजानथ आत्मा ह्येवैष भवति" इति ग्राहयन्ति चेति श्रुतिस्मृती उक्तार्थेमानमित्यर्थः।

आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः।
नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत्।। इति भविष्यत्पर्वणि।

"आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः। सर्वेषां च मुमुक्षूणां उपदेशश्च तादृशः। कर्तव्यो नास्य हानेन कस्यचित् मोक्ष इष्यते" इति ब्राह्मे।।२ ।। एतत्तात्पर्यमाहोदाहृतश्लोकैकदेशेन। विष्णुरादातेति उपासनमापद्यपि कार्यम् । आत्मशब्दार्थकथनं विष्णुरादातेति च। उक्तं च "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततोभावस्तेनात्मत्वं विधीयते" इति । अनुव्याख्याने च -

आदानार्थतश्चायमात्मशब्दः पतिं वदेत् । स्वामी मे विष्णुरित्येव नित्यदोपास्यमंजसा ।। इति।

तच्चादनादिकर्तृत्वं विष्णुविशेषणस्वेनैवोपास्यं तेनैव ब्रह्मापरोक्षतां याति। अन्यथा नेत्येवकारार्थः। ततः श्रुतिसद्भावोऽपि सूचित इति तेनानुक्तसमुच्चयार्थसौत्रश्चशब्दो विवृतः। उपासनं कार्यं कर्तव्यमिति विध्यर्थकृत्प्रत्ययेन भाष्योदाहृतं सर्वं वाक्यं साधारणमिति न्यायात् अत्रात्मेति सौत्रात्मशब्दस्यादत्तेत्यर्थकथनेन आत्मा जीव इत्यर्थमंगीकृत्य अत्राहंग्रहोपासना विधीयत इत्यपव्याख्या पराचष्टे आत्मा विष्णुरित्युदाहृतप्रमाणविरोधात्। नानाक्लेशसमायुक्तोऽपीति

प्रमाणवाक्यानुसारेणोक्तं कार्यमापद्यपीति । अथ (छां.उ.७-१-५) ''नाम ब्रह्मेत्युपास्ते'' ''मनो ब्रह्मेत्युपासीत'' इति सामानाधिकरण्यश्रवणात् । प्रतीकाभेदेनोपासनमिति प्रतीयते इत्यतः सूत्रं **न प्रतीके न हि सः**। नामादिप्रतीके ब्रह्मदृष्टिर्न कार्या किन्तु तत्स्थितेनैव । हि यतः स विष्णुः प्रतीकं न भवति। तथात्वे असदुपासनया अनर्थ एवस्यादिति भावः।

नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः। ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति।

नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते। सर्वार्था प्रथमा यस्मात्सप्तम्यर्था ततो मता।।

इति ब्रह्मतर्कोक्तेः। नामेति प्रथमा सप्तम्यर्थे । सप्तसु प्रथमेति महाव्याकरणात् । सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः (७-१-३९)इति पाणिनयीसूत्राच्च । यद्यपि ''नाम ब्रह्म'' इत्यादौ नामादिशब्दाद्द्वितीयानां एव तत्प्रकरणे ''संकल्प ब्रह्मेत्युपासीत'' ''आपो ब्रह्मेत्युपास्ते'' ''आकाशो ब्रह्म'' इत्यादेरप्युक्तत्वात् । नामादेरुपासनाकर्मत्वाच्च । तथाप्यन्यत्र क्वचिदाकाशो ब्रह्मेत्युपासीत् । ''आदित्यो ब्रह्म'' इत्यादौ प्रथमान्ततोऽप्युभयोर्दृश्यते। तथा च क्वचित्प्रथमा क्वचिद्द्वितीये समानाधिकरण्यादुभयत्रापि न कश्चिद्विशेषः। एवं चोभयोः प्रथमात्वत इत्यत्र प्रथमाशब्देन द्वितीयापि गृह्यते। प्रथमयोः पूर्वसवर्ण (पा.सू.६-१-१०२)इत्यत्र यथा। तेन प्रथमयोर्भावः प्रथमात्वं तस्मात्प्रथमात्वतः इति विग्रहः। न प्रतीके न हि सः इत्यस्य सूत्रस्यैवं जातीयकप्रकरणनिर्णयार्थं प्रवृत्तत्वात् । यत्र प्रथमा तत्र सा सप्तम्यर्थः । यत्र च द्वितीया तत्रापि सा सप्तम्यर्था मतेति योज्यम् । अत एवात्र टीकायां सप्तसु प्रथमा षट्सु द्वितीयेति सूत्रद्वयमुदाहृतम् । ताभ्यां सूत्राभ्यामुभयोरपि सप्तम्यर्थत्वं लभ्यते। ततश्चैवं ब्रह्मतर्कवाक्ययोजना। नामादिप्राणपर्यन्तमुभयोः पदयोः प्रथमान्तत्वात् । प्रथमाविभक्तिद्वयान्तत्वात्क्वचित्प्रथमान्तत्वं ''प्राणो ब्रह्म'' इत्यादौ । क्वचिच्च द्वितीयांतत्वं प्राणं ब्रह्मेत्यादौ उभयथापि समानाधिकरण्यात्। अबुधानां व्याकरणप्रतिसंधानरहितानामत्रैक्यदृष्टिरेव कर्तव्यतया विधीयते इति भ्रान्तिः भविष्यति। सा न कार्या। यतस्तयोः सप्तम्यर्थत्वान्नामादिषु ब्रह्मस्थितिरेव विधीयते इति। एतत्तात्पर्यमाह **आपद्यपि ब्रह्मोपासनं कार्यम्** । आपद्यते विपद्यते जननमरणादिक्लेशैरित्यापत् । परमात्मातिरिक्तं यत्सर्वं नामवागादिरूपं वस्तुजातं तत्र ब्रह्मास्तीत्युपासनं कार्यं न तु तदेव तदितीत्यर्थः। नामादावित्यनुक्त्वा आपदीति वदता विष्णुविरुद्धधर्मस्फोरणकृतम् । तथा च तादृशोपासना मिथ्योपासनेन अनर्थफलकैवेति सूचितम् । अपिशब्दाज्जननादिरहितलक्ष्म्या अपि तथैवोपासनं कार्यमिति समुच्चिनोति । तस्या अप्यस्वातन्त्र्यादिविष्णुधर्मविरुद्धधर्माधिकरणत्वादिति भावः।।३।।

आत्मत्वोपासनवत् ब्रह्मत्वोपासनमपि मुमुक्षुणा अवश्यं कर्त्तव्यमिति प्रतिपादयितुं सूत्रं **ओं ब्रह्मदृष्टिरुत्कर्षात्** । ब्रह्मदृष्टिः परमेश्वरे सर्वथा कार्या। ब्रह्मशब्दस्य पूर्णत्वरूपोत्कर्षार्थत्वा-त्परमेश्वरस्य च सर्वोत्कर्षात् ।

**ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् । महत्ववाची शब्दोऽयं महत्वज्ञानमेव हि। सर्वतः प्रीतिजनकमतस्तत्सर्वथा भवेत् ।। (ब्रह्मतर्क)।**

एतत्तात्पर्यमाह विष्णुर्ब्रह्मेत्युपासनं नित्यं कार्यम् । ननु सौत्रक्रमेण प्रथममात्मेति सूत्रेणात्मोपासनमुक्तम् । एतदनन्तरं च ब्रह्मदृष्टिरुत्कर्षेति अस्मिन्नपि भाष्ये विष्णुरात्मा तथा ब्रह्मेति तेनैव क्रमेण व्याख्येयम् । विष्णुर्ब्रह्मेति व्यत्यासः कुतः कृत इति चेत् मैवम् । यदाप्यत्मतया अत्रोपासना कर्तव्या तदप्यत्मविशेषणं पूर्णत्वरूपं ब्रह्मत्वमप्युपास्यं न तु केवलत्वमिति सूचनाय तथा निरदिक्षत् । ततश्चैवं योजना। विष्णुरादाता आत्मेति यदुपासनं तथा तेन समुच्चितं ब्रह्म इत्युपासनं कार्यं न केवलमित्यर्थः। तथाशब्दः समुच्चये । उक्तं च ब्रह्मतर्के – ''आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता। कार्यैव सर्वथा विष्णौ ब्रह्मत्वं न परित्यजेत् ।'' इति।।४।।

अथ देवानां भगवदंगाश्रितत्वेनोपासना अवश्यं कर्तव्यताप्रतिपादनार्थं सूत्रं **ओं आदित्यादि–मतयश्चांग उपपत्तेः**। ''चक्षोः सूर्यो अजायत'' (ऋ.सं.१०–९०–१३)इत्याद्युपासनं देवानां कार्यमेव। भगवदंगानां स्वोत्पत्तिस्थानत्वात् । यद्यप्येतत्सर्वमतीताध्याये उक्तं अंगावबद्धा इति सूत्रे । तथाप्यत्रापि यत्पुनरुच्यते तन्मोक्षं प्रत्यन्तरंगसाधनमत एवावश्यं कर्तव्यमिति ज्ञापयितुम् । उक्तं च नारायणतन्त्रे

''आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु। गुणानां स्मरणाशक्तो विष्णोर्ब्रह्मत्वमेव तु। स्मर्तव्यं सततं तत्तु न कादाचित्परित्यजेत्। अत्र सर्वगुणानां च यतोऽन्तर्भाव इष्यते। स्वोत्पत्यंगं च देवानां विष्णोरित्थं सदैव तु। तेषां तच्च प्रवेशो हि मुक्तिरित्युच्यते बुधैः। तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः।।'' इति ।।५।।

एतत्तात्पर्यमाह **विष्णुर्ब्रह्म तथा दातेत्येवं नित्यमुपासनम्** । कार्यं न केवलमेतावत् किन्तु तेनोपासकेन पुरुषेण यद्यपि आपद्यते उत्पद्यते यत इति वा आपद्यते प्राप्यते यत इति वा आपद्यते सम्पद्यते लीयते यस्मिन्निति वा। आपतु चक्षुरादिभगवदंगम् । सूर्यादिदेवा–नामुत्पत्तिस्थितिलयस्थानम् । गुणादयो बहुलमिति बाहुल्यादनेकेषु अर्थेषु क्विप् । तत्रापि तदाश्रिततयाप्युपासनं नित्यं कार्यम् । तेनैव ब्रह्मा अपरोक्षतां यातीत्यर्थः। अंगेष्वित्यनुक्त्वा आपदीति वदता तेषां तदुत्पत्यादिस्थानत्वेन तत्रैव लयरूपमोक्षस्यापेक्षितत्वादिति सूत्रस्थ उपपत्तिशब्दोऽपि व्याख्यातो वेदितव्यः।

अथोक्तविधभगवदुपासने आसनस्यावश्यकत्वप्रतिपादनाय पंचसूत्रात्मकमधिकरणं **ओं आसीनः सम्भवात्** । जिज्ञासुरसीन एवोपासनं विशेषतः सर्वथा कुर्यात् । उपासनस्यैव ज्ञानसाधनत्वेऽपि चित्तविक्षेप परिहारार्थमासनम् । तस्मिन्सति चित्तविक्षेपपरिहारसम्भवात् । ननूपासनं सदा विधीयते

"सर्वदैनमुपासीत् यावद्विमुक्तिः" इति श्रुतेः। "श्रवणादि विना नैव क्षणं तिष्ठेदपि द्विजः ।" इत्युक्तेश्च न चासनं सर्वदा सम्भवतीत्यतः सूत्रं **ओं ध्यानाच्च**। द्विविधमुपासनं स्मरणं ध्यानं च । तत्र स्मरणार्थमासनस्यानपेक्षितत्वेऽपि ध्याने तन्नियमोपपत्तेरित्यर्थः। ननु ध्यानेऽपि कथमासनस्योपयोग इत्यतः सूत्रं **ओं अचलत्वं चापेक्ष्य**। मनसो अचलत्वं च ध्याने अपेक्षितम्। तच्च शरीराचलत्वेन। तच्चासने सत्येव भवतीत्यर्थः। उक्तं च ब्रह्माण्डे "अचलं चेच्छरीरं स्यान्मनसश्चाप्यचालनम् । चलने तु शरीरस्य चंचलं च मनो भवेत्।।" इति। तत्स्मृत्याप्येतमर्थं साधयत्सूत्रं **ओं स्मरणाच्च** ।

"समं कायशिरोग्रीवं धारयन्नचलं स्थिरः। सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्।।" इति । ननु यथा आसननियमो ध्याने अपेक्षितस्तथा पर्वताग्रे नदीतीरे ब्राह्मे मुहूर्ते इत्यादि देशकालनियमोऽपि किमपेक्षित इति जिज्ञासायां सूत्रं **यत्रैकाग्रता तत्राविशेषात्** । देशकालावस्थादिषु यत्रैकाग्रता भवति। तत्रैव स्थातव्यम्।

तमेवदेशं सेवेत तं कालं तामवस्थितिम् । तानेव भोगान्सेवेत मनो यत्र प्रसीदति।।
न हि देशादिभिः कश्चिद्विशेषः समुदीरितः। मनः प्रसादनार्थं हि देशकालादिचिन्तनम् ।।

इति वाराहोक्तेर्देशादिनिमित्तकविशेषाभावात् । एतत्तात्पर्यमाह **विष्णुर्ब्रह्म तथा दातेत्येवं नित्यमुपासनम्** । आपद्यपि नित्यं निश्चलं ध्यानमिति यावत् । कार्यं कर्तव्यमित्युक्तं तत् । उपासनमासन उपविश्येत्युपासनम्। आसनारूढेन कार्यम् । तेन किं स्यादित्यत उक्तं नित्यमिति। अचलत्वमित्यर्थः। ....इति शब्दादचलत्वेऽर्थे इत्यधित्यभिधानात् । ते तं तथाविधेनाचलेन ध्यानेन ब्रह्मापरोक्षतां यातीति ।।६।। एतच्च ध्यानादिकं किं ज्ञानपर्यन्तमेव कर्तव्यतदुत्तरकालमपि कियत्कालपर्यन्तमित्याशंकापनोदाय सूत्रं **आप्रायणात्तत्रापि हि दृष्टम्**। न केवलमपरोक्षज्ञानपर्यन्तं किन्तु तत्रापि भगवत्साक्षात्कारे जातेऽपि प्रायणं मोक्षस्तत्पर्यन्तं कर्तव्यम् । कुतः ? हि यतो दृष्टं श्रुतिसद्धम् । किं च तत्रापि मोक्षे जातेऽपि मुक्तैरपि स्वेच्छया क्रियमाणं श्रुत्यादौ दृष्टमित्यर्थः। "सर्वदैनमुपासीत यावद्विमुक्तिः मुक्ता अपि ह्येनमुपासते" इति सौपर्णश्रुतेः।

"श्रुणुयाद्यावदाज्ञानं मतिर्यावदयुक्तता। ध्यानं च यावदीक्षा स्यान्नेक्षा क्वचन बाध्यते।
दृष्टतत्वस्य च ध्यानं यदा दृष्टिर्न विद्यते। भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटाः।
आविमुक्तेविधिर्नित्यं स्वत एव ततः परम् ।।" इति ब्रह्माण्डे।

एतत्तात्पर्यमाह। यस्य पुरुषस्य ब्रह्मापरोक्षतां याति तेनापि अपरोक्षज्ञानिनापि विष्णुर्बह्मा तथा दातेत्येवं नित्यमुपासनं कार्यमिति। कियत्कालपर्यन्तमित्यत उक्तं **आपदि** इति। पदनं पदिः ब्रह्मप्राप्तिः तां तां मर्यादीकृत्यैत्यापदी। मर्यादार्थकेन अव्ययीभावः। पदिरित्यत्र जनिरित्यादाविव

भावे डः । तेनाप्रायणादिति सूत्रखण्डो व्याख्यातः। तथा वष्टिभागुरिरल्लोपं अवाप्योरुपसर्गयोः इति वचनात् आपेः आकारलोपेन पदीति पदच्छेदः। ततः पूर्वमापद्येति पदच्छेदः। यतस्तेनोपासकपुरुषेण ब्रह्म आपद्य प्राप्यापि उपासनं कार्यं कारणार्हम् । अर्हार्थे यत्प्रत्यये न तत्करणं स्वेच्छयैव न तु विधिबद्धत्वेनेति सूचयतीति। ब्रह्मविदः मुक्ता अपि ह्येनमुपासत इति भाष्योदाहृतसौपर्णश्रुतिरूपो अस्तीत्यर्थः। मुक्तैरपि यत् क्रियते तदपरोक्षज्ञानिनापि मुमुक्षुणा मोक्षपर्यन्तं कार्यमिति किं वक्तव्यमिति भावः ।।७।।

**मळगी** – अतीताध्याये विष्णोः सर्वोत्तमत्वमभिधाय अस्मिन् चतुर्थाध्याये उपासकानां फलं वक्तुं विष्णोरुपासनाप्रकारं दर्शयति **विष्णुः** इति। **विष्णुः** व्याप्तः। **ब्रह्म** पूर्णानन्दः। **तथा दाता** सर्वाभीष्टदाता। यद्वा **आदाता** आदानादिकर्तृत्वेन सर्वस्वामीत्येवम् । **नित्यं** निरन्तरम् । **आपद्यपि** आधिव्याधिमहापद्यपि। **उपासनं** ध्यानं **कार्यम्** । **तेन** ध्यानेन **ब्रह्म** विष्ण्वाख्यं परं ब्रह्म। **अपरोक्षतां** अपरोक्षज्ञानविषयतां याति प्राप्नोति ।।१।।

**लिंघेरी** – अतीताध्याये विष्णोः सर्वोत्तमत्वं अभिधायेदानीं चतुर्थाध्याये उपासनाफलं वक्तुं विष्णोरुपासनाप्रकारं दर्शयति **विष्णुः** इति ।। हरिः **विष्णुः** व्याप्तः । **ब्रह्म** पूर्णानन्दः। **तथा दाता** सर्वाभीष्टदाता । इत्येवं निरन्तरं **आपद्यपि** आपत्कालेऽपि उपासनं कार्यम् । तेनोपासनेन **ब्रह्म** परं ब्रह्मापरोक्षतां याति ।।१।।

**नारायणपण्डित–** ब्रह्मदृष्टिरुत्कर्षादित्यस्यार्थः विष्णुर्ब्रह्म सर्वगुणपूर्ण इति। आत्मेति तूपगच्छन्ति ग्राहयन्ति चेत्यस्यार्थः तथा दाता आत्मा स्वामीति। आपद्यपि व्याध्यादिना आपत्का-लेऽपि एवं पूर्वोक्तमुपासनं कार्यं नित्यमिति। तेनोपासनेन ब्रह्मापरोक्षतां अपरोक्षविषयतां यातीति।

**गूढकर्तृक** – चतुर्थे प्रथमपादतात्पयार्थःसंगृह्णात्यणुभाष्यकारः। **विष्णुर्ब्रह्म तथा दातेत्येवं नित्यमुपासनम् । कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् । प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः। अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगत इति।** विष्णुः **ब्रह्म** सर्वगुणपूर्णः इति ब्रह्मनयार्थः। **तथा दाता** आत्मा स्वामीति आत्मेतिनयार्थः। **आपद्यपि** व्याध्यादिनाना-पत्कालेऽपि। एवं पूर्वोक्तमुपासनं नित्यं कार्यमिति आवृत्तिनयार्थः। तेन उपासनेन ब्रह्म **अपरोक्षतां** अपरोक्षविषयतां यातीति।

**अणुभाष्यम्**

**प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः।**
**अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ।।२।।**

**सत्यनाथीया–** अपरोक्षज्ञानादेव प्रारब्धकर्मणोऽन्यस्यानिष्टस्य काम्यपुण्यस्य पापस्य च परिक्षयो भवतीति पूर्वनाशः उत्तरस्याश्लेषरूपो नाश इति तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादित्यस्यार्थो उक्तो भवति। भोगेन क्षपयित्वाऽथ सम्पत्स्यते इत्यस्यार्थमाह **अनिष्टस्य** इति। उभयस्य पापपुण्यस्यान्यस्य प्रारब्धस्यापि भोगतः क्षयो भवतीति। द्वेषिणः सञ्चितपुण्यस्यान्यस्य नाशः। प्रारब्धस्यापि भोगः पूर्वपापस्य द्वेषहेतुत्वं पश्चात्तनस्य तमोऽनुप्रवेश इत्यादि ज्ञेयम् ।

**।। अणुभाष्ये चतुर्थाध्यायस्य प्रथमःपादः ।।**

**तत्वमञ्जरी–** यत्तु ज्ञानस्य मुक्तिहेतुत्वमयुक्तम् । येन तदर्थमुपासनमावश्यकं स्यात् । चिरकालीनचीर्णकर्मणां भूयसां भावेन तेषां भोगेन विना निवृत्त्ययोगात् कर्मणां चिरकालभोगे च सति जीर्णबीजवत् ज्ञानस्याहेतुत्वापत्तेरित्यतः प्राप्तं **तदधिगमे** इत्यादिसूत्रसप्तकम्। तदर्थं भाषते – **प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः। अरिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगत** इति।

उभयस्यापि ज्ञानात्पूर्वोत्तरकालीनस्यापि सर्वस्य ज्ञानादेव परिक्षयो भवति । प्राचीनस्य नाशः। उदीचीनस्य चोत्तमानां सर्वात्मनाऽश्लेषः। अधमानां नृणां तु उत्तरारिष्टस्य परिक्षयो नाम अशुचित्वास्पृश्यत्वासम्भाष्यत्वाद्यनापादकत्वं तु प्रागुक्तरीत्या पापस्यास्त्येव। अतो न तेन विरोधः।

नन्वेवं ''नाभुक्तं क्षीयते'' इत्यादिवचनविरोध इत्यतः **अनारब्धकार्ये एव तु** इति सूत्रोक्तं विशेषमाह – **प्रारब्धकर्मणोऽन्यस्यारिष्टस्य** इति। वचनं तु प्रारब्धपरमिति भावः। अत्र पुण्यापुण्यपापसाधारण्येन कर्मण इति वाच्ये अरिष्टस्यैवेति पापस्यैवोक्तिस्तु प्राचीनपुण्यस्यानिष्टस्य त्याग इष्टस्य भोगः। उत्तरस्य चात्याग इति विशेषद्योतनाय । अन्यस्याप्रारब्धारिष्टादन्यस्य प्रारब्धपुण्यस्य च भोगतो भोगेन परिक्षय इत्यर्थः। प्रारब्धस्येति वाच्ये अन्यस्येत्युक्तिः प्रारब्धपुण्यपापोभयग्रहणाय। एतच्चोपलक्षणम् । मिथ्याज्ञानिपुण्यस्याप्येवं ध्येयम् ।।८।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्याख्यायां चतुर्थाध्यायस्य प्रथमः पादः ।।**

**आनन्दमाला –** एवं साधनशेषो निःशेषोऽप्युक्तः। अथेदानीं तज्ज्ञान उदितमात्रे भवत् फलमुच्यते। ''तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्'' (४-१-१३) ''अनारब्धकार्ये एव तु पूर्वे तदवधेः'' (४-१-१५) ''अतोऽन्यदपीत्येकेषामुभयोः'' (४-१-१७) इत्यादीनि व्याख्याति – **प्रारब्धकर्मणोऽन्यस्य ज्ञानेन स्यात् परिक्षयः। अनिष्टस्योभयस्यापि सर्वस्य** इति। उक्तोपासनेन ब्रह्मदृशां यदेतत् प्रारब्धफलमघं पुण्यं वा कर्म तस्मादन्यस्य कर्मणः पुण्यपापोभयस्याप्यनिष्टस्य ब्रह्मदृष्ट्यैव नाशः स्यात् । तथाप्यनादिकालकृतस्यात्यन्तानन्तकर्मणः

सर्वनाशो न प्राप्यत इत्याशङ्कापरिहारार्थं सर्वस्य इत्युक्तिः। ज्ञानोत्तरकालीनस्य तदुभयस्य अनिष्टस्याश्लेषोऽपि स्यादित्यपिशब्दार्थः।

अथ वा यत्तदिष्टापूर्तव्यतिरिक्तत्वादप्रियत्वाच्चानिष्टशब्दितमघं ज्ञानादुत्तरं पूर्वं च तदघस्योभयस्यापि ज्ञानेनैव परिक्षयः स्यात् । परिक्षयो नामोत्तराघस्य परितोऽपगमात् कर्तर्यसङ्गः। पूर्वस्य भस्मीभाव इत्युभयथापि स्यात् । अथोत्तरस्य परितोऽभावः पूर्वस्य क्षयश्चेत्युभयसमुच्चयो वा परिक्षयः। पश्चादनिच्छाविषयत्वादनिष्टशब्दितस्य पूर्वोत्तरपुण्यस्योभयस्यापि कर्तुरपगम एव परिक्षयः। किञ्च, उत्तराघविवक्षायां परिवारादिषु द्विषत्सु स्वस्मादपगमः परिक्षयो नाम। पुण्यविवक्षायां परिवारेषु सुहृत्स्विति विशेषः।

किमेतत्पूर्वमुत्तरं वा पुण्यमनिष्टम् ? न तावत्पूर्वम् । "सर्वापेक्षा" (३-४-२६) इति विधेः। नाप्युत्तरम् । अग्निहोत्रादिसूत्रविरोधात् । तस्मादभीष्टमेव पुण्यं सर्वमपीति चेत् , सत्यमकाम्यम् । काम्यमपि किञ्चित् पुनरार्जने भोजने वा सावसरं चेत् तदिच्छायामिष्टम् । नो चेत् तदनिष्टम् । स्वार्जितभोजने वा सावसरं चेत् तदिच्छायामिष्टम् । नो चेत् तदनिष्टम् । स्वार्जितमहासुख-प्रतिबन्धकत्वात् । न हि स्वालम्बुद्धिगोचरसुखे सुसाधिते सत्यपि पुनरार्जनेच्छा जायते। नैरवकाश्यात् । नापि न्यूनभोगेच्छा, पूर्णसौलभ्यात् । अतो अनिष्टत्वात् क्षीयत एव तादृशं पुण्यमपि पापवत् । तस्मादेतद्विवक्षयैव उभयस्यापि इत्युक्तम् । अपिशब्दाद् ब्रह्मद्विषां पुण्यस्यापि तद्वत् परिक्षयः स्यात् ।।५-१०।।

प्रारब्धकर्मक्षयः कथमित्यत आह - "भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते" (४-१-१९) इति सूत्रम् । **अन्यस्य भोगतः** इति। ज्ञानस्वभावादेव परिक्षयिण उक्तादन्यस्य प्रारब्धकर्मणः पुण्यादेरनिष्टत्वेऽपि भोगादेव परिक्षयः स्यात् । अनारब्धेष्टशुभसद्भावे पुनरारभ्य भुक्त्वैवास्यापि क्षपणम् । नो चेत् प्रारब्धस्य भोगत इत्येव वक्तव्यत्वात् , तत्क्षपणस्य गत्यन्तरानुक्तेश्च । अत्र परिक्षयः शोषणमल्पीकार इत्युपमर्दोऽप्युक्त एव स्यात् । भोगोपमर्दाभ्यां तत्क्षपणमित्यर्थः। उपमर्दे भोगलाघवमघादेः, नो चेत् कृत्स्नभोग इत्येव विशेषः। सर्वथा तत् क्षपयित्वा हि ब्रह्म सम्पत्स्यते। एवं सर्वकर्मक्षयवचनात् पादार्थनिगमनं च कृतं भवति।।११।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां चतुर्थाध्यायस्य प्रथमः पादः ।।**

**नृसिंहतीर्थ** – इदानीं कर्मक्षयाख्यफलप्रतिपादकस्याष्टमाधिकरणस्य तात्पर्यमाह **प्रारब्ध** इति। भोक्तुं प्रारब्धं तच्च तत्कर्म च तस्मादन्यस्य उभयस्य संचितस्य आगामिनश्च अनिष्टस्य इष्टपुण्यव्यतिरिक्तस्य सर्वस्यापि काम्यपुण्यस्य च ज्ञानादेव परिक्षयः नाशो अश्लेषश्च भवतीति शेषः। अन्यस्य उक्तादिति शेषः। प्रारब्धकर्मण इति यावत् । सर्वस्यापि भोगतः परिक्षयो भवतीति अर्थः।

अयं भावः। ज्ञानिनां कर्म त्रिविधं संचितं प्रारब्धं आगामि चेति। संचितं द्विविधं पुण्यं पापं चेति। पुण्यं द्विविधम् । काम्यमकाम्यं चेति। तत्राकाम्यपुण्यस्य अपरोक्षज्ञाने उपयोगः। काम्यपुण्यस्य ज्ञानेन नाशो नास्ति किन्तु प्रारब्धवद्भोगेनैव नाशः। अतः संचितमध्ये काम्यमनिष्टं पुण्यं समग्रं पापं च ज्ञानादेव नश्यति। प्रारब्धं द्विविधं पुण्यं पापं च। पुण्यं द्विविधं इष्टं अनिष्टं च। अत्र काम्याकाम्यविभागो नास्ति। अस्य सर्वस्य काम्यत्वात् । अकामत्वे ज्ञानजननेन चरितार्थत्वं स्यात् । अस्य सर्वस्यापि भोगेनैव नाशः। "नाभुक्तं क्षीयते कर्म" इति वचनात्। भोगेऽपि विशेषः । विषभक्षान्मृतेरिव ज्ञानिनोऽनिवृत्यतया प्राप्तस्य प्रारब्धस्य कर्मणोऽपि किंचिद्भुक्तस्य ज्ञानेनैवोपमर्द इति। अयमेव स्तुत्यधिकणे उपमर्दं चेति सूत्रोक्तः।

आगामि द्विविधं पुण्यं पापं च। पुण्यमपि द्विविधम् । काम्यं च अकाम्यं च। काम्यं द्विविधम्। इष्टमनिष्टं च। तत्राकाम्यं पुण्यं आनन्दातिशये हेतुः। काम्यं पुण्यं इष्टं भुज्यते। अनिष्टस्याश्लेषः। अस्मिन्नधिकरणे अतोऽन्यदपीति सूत्रोक्तः। तच्च सुहृद्भिर्भुज्यते। "सुहृदः साधुकृत्याम्" इति वचनात् । पापमपि द्विविधम्। महदल्पं च । तत्र स्वोत्तमद्रोहादिजनितमहापापस्य मुक्तेः पूर्वमशुचित्वादिकमेकं मुक्त्यनन्तरं आनन्दह्रासादिकमपरम् । फलं तत्र देवानां मनुष्याणां च पूर्वभाविफललेपो नास्त्येव। अयं च तदधिगमसूत्रोक्त लेपः। किन्तु महता पापेन स्वयोग्यतापेक्षया अधिकसाधनकरणेन यदानन्दादिकं मोक्षे भोक्तव्यतया प्रसक्तं तस्य यश्च अशुभाभावे सति क्लृप्तस्यैव समुद्रतरलोपमः उन्नाहः मोक्षे प्राप्यः तस्यापि भावो देवानां भवति। अयं च स्तुत्यधिकरणोक्तः। असत्प्रवृत्यादि दोषः मनुष्याणां तु महता दोषेण क्लृप्तस्यैवानन्दस्य मोक्षे ह्रासो भवति। अयमपि स्तुत्यधिकरणोक्तः। असत्प्रवृत्यादिदोषः। देवानां मनुष्याणां चाल्पपापफलस्य मोक्षात्पूर्वभाविनः नरकादिप्राप्तिरूपस्य अशुचित्वासम्भाष्यत्वादिरूपस्य च लेपो नास्त्येव। अयमपि तदधिगमसूत्रोक्तलेपः। तस्याप्यल्पत्वादेव आनन्दप्रसादासाधनत्वं नास्त्येव । देवानां मनुष्यणां च यस्य पापफलस्याश्लेषः उक्तः तद्द्वेषिणां भवति। "द्विषन्तः पापकृत्याम्" इति वचनात्। मिथ्या ज्ञानिनोप्येवं कर्म त्रिविधम् । सञ्चितं प्रारब्धं आगामि चेति। संचितं द्विविधम्। पुण्यं पापं च। पुण्यं द्विविधम् । इष्टमनिष्टं च। एतेषां त्रिविधकर्मण्यपि काम्याकाम्यविभागो नास्ति। तेषां पुण्यस्य सर्वस्यापि काम्यत्वात् । संचितं पापं सर्वं मिथ्याज्ञानहेतुः। इष्टं पुण्यं मिथ्याज्ञानादेव नश्यति। अनिष्टं न नश्यति। किन्तु प्रारब्धवद्भोगेनैव नश्यति। प्रारब्धं द्विविधं पुण्यं पापं च । पुण्यं द्विविधम्। इष्टमनिष्टं च। तत्सर्वं भोगेनैव नश्यति। इष्टपुण्यभोगोऽनुपमर्दः। आगामि द्विविधं पुण्यं पापं च । तत्र पापस्य द्वेषाभिवृद्धिहेतुत्वेन तमोऽभिवृद्धिहेतुत्वम् । पुण्यस्येष्टस्याश्लेषः। अनिष्टस्य संश्लेष इति। अत्र सर्वत्र यस्य कर्मणः फलं भोक्तुं प्रारब्धं तत्प्रारब्धम्। यस्य फलं भोक्तुं अप्रारब्धं तत्संचितम् । ज्ञानोत्तरकृतं आगामीत्युच्यते इति ज्ञातव्यम् ।

अथवा कर्म द्विविधम् । ज्ञानात्पूर्वभावि ज्ञानोत्तरभावि चेति। पूर्वभावि द्विविधं पुण्यं पापं च। पुण्यं द्विविधम् । अकाम्यं काम्यं च । अकाम्यं ज्ञानहेतुः। काम्यं द्विविधं संचितमप्रारब्धं च। द्विविधमपि पुण्यं द्विविधं इष्टमनिष्टं च। पापमपि संचितप्रारब्धभेदेन द्विविधम् । तत्र संचितपापस्य अनिष्टपुण्यस्य ज्ञानादिना क्षयः। संचितेष्टस्य प्रारब्धस्य च सर्वस्य भोगेनैव क्षयः। उत्तरभाव्यभोगः पूर्ववदिति ज्ञानभोगाभ्यां क्षीणकर्मणां अत्र देहक्षयक्रमो वक्तव्यो भवति। स च द्विविधः देवानां स्वोत्तमप्रवेशेन तत्र देहलयः। अन्येषां तु ब्रह्मनाड्योत्क्रान्तिरिति। तदुक्तमस्मिन्पादे अधिकार्याधिक्यक्रमेण प्रतिपाद्यते। न चैवं सति पादभेदप्रसंगः। यथा वेदोक्तसकलगुणोपासनं बहुगुणोपासनं चतुर्गुणोपासनमिति चतुर्मुखाद्यधिकारिभेदेन अवान्तरवैचित्रे विद्यमाने उपासना-त्वेनैकीकृत्य तत्प्रतिपादकत्वेनैकपादत्वम् । तथात्राप्युक्तप्रकारेणैव वैचित्र्यसद्भावेऽपि देहक्षयत्वेनैकीकृत्य तत्प्रतिपादकत्वे नैकपादत्वं संभवतीति।

**श्रीनिवासतीर्थीया–** तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादित्यधिकरणतात्पर्यमाह **प्रारब्धकर्मण** इति। प्रारब्धकर्मणः सकाशात् **अन्यस्य** अप्रारब्धस्यानिष्टस्योभयस्यापि। अपिः समुच्चये। पुण्यपापोभयस्याप्यनिष्टस्य पापं सर्वथाऽप्यनिष्टमेव। काम्यं पुण्यमपि द्विविधम्। इष्टमनिष्टं च। तत्र यदनिष्टं काम्यं पुण्यं पापं चेत्युभयथाप्यनिष्टस्य **ज्ञानादेव** अपरोक्षज्ञानादेव परिक्षयो भवतीत्यर्थः। भोगेन त्वितरे क्षययित्वाऽथ सम्पत्स्यते इति सूत्रार्थस्यानुवादः **सर्वस्यान्यस्य** इति। अन्यस्येत्यस्यावृतिः। **अन्यस्य** अप्रारब्धान्यसर्वस्य पुण्यपापरूपप्रारब्धरूपकर्मणस्तथा **अन्यस्य** अनिष्टव्यतिरिक्तेष्टकाम्यस्यापि भोगतः परिक्षय इत्यर्थः। इष्टकाम्यस्यापि नाशे ज्ञानस्येष्ट-विघातित्वेनापुरुषार्थत्वप्रसंगः। प्रारब्धस्यापि नाशे वातपुत्रीयाः ब्रह्मोपदेशाः प्रसज्येरन्निति भावः। ज्ञानिनः पूर्वपुण्यस्य ज्ञानहेतुत्वं पश्चात्यस्य मुक्त्यनुप्रवेश इत्यादि द्रष्टव्यम् ।

**।। इत्यणुभाष्यविवरणे चतुर्थाध्यायस्य प्रथमः पादः ।।**

**छलारी –**

**ओं तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ओं**

तदधिगमे ब्रह्मापरोक्षज्ञाने उत्तरार्धस्याश्लेषः पूर्वार्धस्य विनाशः कुतः? तद्व्यपदेशात् । ''तद्यथा पुष्करपलाश आपः'' (छां.उ.४–१४–३) इति श्रुतौ अश्लेषस्य ''तद्यथेशीका तूलम्'' (छां.उ.५–२४–३) इति श्रुतौ नाशस्य च व्यपदेशादिति सूत्रार्थः।

अत्र न ज्ञानेन मोक्षः प्रागापादितकर्मणां भावात् । न च तानि ज्ञानजन्मनि भुज्यन्ते। विभिन्नानेकशरीरफलकर्मणां भावात् । न चैकत्र कायव्यूहेन युगपद्भोगः विभिन्नदेशकालविपा-कत्वात्। न च क्रमेण भोगः। बहुकालान्तरितस्य ज्ञानस्य जीर्णधान्यवत् क्षीणशक्तिकत्वेन

मोक्षजनकत्वासम्भवात् । न च वाच्यं ज्ञानेनैव प्राचीनकर्मणां क्षय इति। "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति स्मृतिविरोधादिति प्राप्ते –

स्मभवत्येव ज्ञानेन मोक्षः। ज्ञानेनैव पूर्वपापविनाशात् उत्तरस्याश्लेषाच्च । ननु "नाभुक्तं" इति स्मृतिविरोध इति चेन्न । यथा खलु प्रायश्चित्तविधिबलादेतत्स्मृतेः अकृतप्रायश्चित्तविषयत्वं कल्प्यते तथा अज्ञानिविषयत्वस्यापि सम्भवात् । न चात्र मानाभावः "तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" "तद्यथेषीका तूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते" इति श्रुतेः। न चैवं सति ज्ञानोदयान्तरमेव मोक्षापत्तिः। अप्रारब्धानामेव कर्मणां विनाशाङ्गीकारेण प्रारब्धभोगाय विलम्बस्य भाव्यत्वादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **प्रारब्ध** इति। यस्य कर्मणः फलं भोक्तुमारब्धं तत् प्रारब्धं, यस्य कर्मणः फलभोक्तुं नारब्धं तत्सञ्चितम् । ज्ञानोत्तरकृतं कर्म आगामीत्युच्यते, इति विज्ञेयम् । तत्र प्रारब्धकर्मणः अन्यस्योभयस्य सञ्चितस्यागामिनश्च सर्वस्यानिष्टस्य अनिष्टफलस्य पुण्यस्य समग्रस्य पापस्य च ज्ञानादेव अपरोक्षज्ञानादेव परिक्षयः – अश्लेषश्च भवतीति शेषः। अन्यस्य उक्तोभयान्यस्य प्रारब्धकर्मण इत्यर्थः। सर्वस्यापि प्राब्धपुण्यस्य प्रारब्धपापस्य च भोगतः भोगेनैव परिक्षयो भवतीत्यर्थः। प्रारब्धस्यैवेति वक्तव्ये अन्यस्येत्युक्तिः प्रारब्धपुण्यपापोभयग्रहणाय। अयं भावः। ज्ञानिनां कर्म त्रिविधम् । सञ्चितं प्रारब्धं आगामि चेति। सञ्चितं द्विविधम् । पुण्यं पापं चेति। पुण्यं द्विविधम् । अकाम्यं काम्यं चेति। काम्यं द्विविधम् । इष्टमनिष्टं चेति। तत्र अकाम्यपुण्यस्यापरोक्षज्ञाने उपयोगः। काम्यं द्विविधम् । इष्टमनिष्टं च । तत्र काम्येष्टपुण्यस्य ज्ञानेन नाशो नास्ति किन्तु प्रारब्धवत् भोगेनैव नाशः। अतः सञ्चितमध्ये काम्यमनिष्टं पुण्यं समग्रं पापं च ज्ञानादेव नश्यति।

प्रारब्धं द्विविधं पुण्यं पापं चेति। अस्य सर्वस्य भोगेनैव नाशः। आगामि द्विविधम् । पुण्यं पापं चेति। पुण्यं द्विविधम् । अकाम्यं काम्यं चेति। काम्यं द्विविधम् । इष्टमनिष्टं चेति। तत्राकाम्यं पुण्यं आनन्दातिशयहेतुः, काम्येष्टपुण्यं ज्ञानिना भुज्यते। अनिष्टपुण्यस्याश्लेशः। तच्च सुहृद्भिः भुज्यते। "सुहृदः साधुकृत्याम्" इति श्रुतेः। पापमपि द्विविधम् । अल्पं महच्चेति। तत्र देवानां मनुष्यादीनां च अल्पपापस्याश्लेषः। तच्च द्वेषिभिः भुज्यते। "द्विषन्तः पापकृत्याम्" इति श्रुतेः। महता पापेन च मनुष्याणां स्वयोग्यतापेक्षया क्लृप्तस्यैवानन्दस्य ह्रासो भवति। देवानां च महता पापेन क्लृप्तस्य हानिर्नास्ति। किन्तु स्वयोग्यतापेक्षयाधिकसाधनेन यदानन्दादिकं मोक्षे भोक्तव्यतया प्रसक्तं तस्य यश्च क्लृप्तस्यैवानन्दादेः समुद्रतरलोपमः उन्नाहः मोक्षे प्राप्यः। तस्याप्यभावो भवतीति ॥८॥

**मदाचार्यमनोधाममध्वमानसमश्चके ।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां चतुर्थाध्यायस्य प्रथमः पादः ।।**

**नारायणाचार्य-** एवं प्रासंगिकीचिन्ता समाप्याधुना पादप्रतिपाद्यं कर्मक्षयरूपं प्रमेयं प्रतिपादयितुं उत्तराधिकरणम् । तत्रेयमाशंका। नन्वपरोक्षज्ञानान्मोक्षो भवतीति न युक्तम् । अनादिकालार्जितानामनन्तकर्मणां प्रतिबन्धकानां सत्वात्। न च भोगेन क्षयः। तद्भोगार्थं जन्मनामपर्यवसानापत्तेः। तत्तज्जन्मनि च क्रियमाणैः कर्मभिराधिक्यमेव स्यात्। अत एव न प्रायश्चित्तेन विनाशः। किं च भोगप्रायश्चित्तादिनैव कर्मक्षये स्वयमेव मोक्षो भविष्यतीति कृतमुपासना साध्यज्ञानेन। तथा ज्ञानोत्तरकर्मणामप्येवमेव। न च ज्ञानी न कुर्यादेवेति वाच्यम् । ''न हि कश्चित्क्षणमपि जातु तिष्टत्यकर्मकृत् ।'' इति वचनादित्यतः सूत्रं **ओं तदधिगम उत्तरपूर्वाघयोरश्लेशविनाशौ तद्व्यपदेशात्** । तस्य ब्रह्मणो अधिगमे साक्षात्कारे सति उत्तरस्याघस्याश्लेषो लेपाभावः। पूर्वस्य विनाश्च भवति। ''तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते'' (छा.उ.४-१४-३)इति श्लेषाभावश्च ''तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्त'' इति विनाशस्य व्यपदेशात्।

एवं ब्रह्मज्ञानिनो मुक्तिसिध्यर्थज्ञानादेव अघविनाशाश्लेषौ उक्त्वा तत्समानन्यायत्वात् भगवद्वेषिकृतपुण्यस्यापि मिथ्याज्ञानादेव विनाशाश्लेषौ तमः सिध्यर्थं प्रतिपादयत्सूत्रं **ओं इतरस्याप्येवमसंश्लेषः पाते तु** । भगवद्वेषिणस्तमसि पाते सति यथा ज्ञानिपापस्यैवं तदितरस्य पुण्यस्यासंश्लेषो विनाशश्च भवतीत्यर्थः। तुशब्देन तत्र पाते अनुत्थानलक्षणो विशेषो द्योतयते।

यथाश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः।
एवं सुकर्मणश्चापि पततस्तमसि ध्रुवम् ।। इति चाग्नेये।

आसुराणां तमः पातकाले लिंगदेहभंगस्तत्कारणं चोक्तं विष्णुरहस्ये संकर्षणमुख-ज्वालाद्दग्धभूमण्डलं यदा वायोर्गदाप्रहारेण तदा तल्लिंगभेदनम्।

''वायूद्गतैः परे नीता यथा स्थानं निवेशिताः। भुंजानाः परमं दुःखं तेष्वेकोऽपि कदाचन।
नैव याति बहिस्तस्मादेवं तामसदुर्गतिः।।'' इति।

नन्वेवं सर्वकर्मणां ज्ञानादिनैव क्षये ज्ञानह्युत्पत्तिसमनन्तरमेव मोक्षः स्यादित्यतः सूत्रं **ओं अनारब्धकार्ये एव तु पूर्वे तदवधेः**। नास्माभिः सर्वपापादिक्षयो ज्ञानादिनोच्यते येन तदैव

मुक्त्यादिप्रसंगः। किन्तु यस्य पापस्य कार्यं दुःखं भोक्तुमारब्धं तस्यैव ज्ञानेन विनाशः। यस्य तु पुण्यस्य कार्यं सुखं भोक्तुमारब्धं तस्यैव मिथ्याज्ञानेन विनाशः । कुतः? "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते" (छां.उ.६-१४-२)इति श्रुतौ यावद्धन्ति बन्धनेन विमोक्ष्येथ तावदेव ज्ञानिनो मोक्षाय चिरं विलम्ब इति मोक्षस्य प्रतिबन्धकनिवृत्यवधेः श्रवणात् ज्ञानोत्तरमपि कर्मसद्भावो ज्ञायते । तुशब्देनात्र स्मृतिसद्भावं द्योतयति। उक्तं च नारायणतन्त्रे -

"यदनारब्धपापं स्यात्तद्विनश्यति निश्चयः। पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः।

द्विषतो वा भवेत्पुण्यनाशो नास्त्यत्र संशयः । तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् ।

आरब्धयोश्च नाशः स्यादल्पयोःपुण्यपापयोः ।।" इति।

ननु ज्ञानिकृतपूर्वोत्तराघयोरश्लेषविनाशावुक्तौ न तु पूर्वोत्तरपुण्ययोः । तथा च पुनः प्रतिबन्धानिवृतेः कथं ज्ञानस्य मोक्षसाधनत्वमित्यतः सूत्रं **ओं अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्** । पूर्वोत्तरानुष्टितमग्निहोत्रादिनिष्कामं पुण्यं कर्म तत्कार्याय ज्ञानकार्यायैव भवति। ज्ञानात्पूर्वमनुष्टितं ज्ञानपूर्वकार्यजनकं भवति। तदुत्तरमनुष्टितं तु ज्ञानस्य कार्यसमो मोक्षस्तत्रातिशयाधायकं भवति। "स एनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्येनेवंविन्महत्पुण्यं करोति तद्धास्यां ततः क्षीयन्त एवात्मानमेवं लोकमुपासीत स य आत्मानमेवमुपास्ते न हास्य कर्म क्षीयते अस्माद्ध्येवात्मना यद्यत्कामयते तत्तत्सृजते" इति दर्शनात् । तुशब्देन प्रक्रान्तयोर्ज्ञानिद्वेषिणो मध्ये द्वेषिणां व्यवच्छिनत्ति। ननु भवतु निष्कामकर्मणामेवं व्यवस्था। काम्यानां का गतिः। तैरपि प्रतिबद्धुं शक्यत्वादित्यतः सूत्रं **ओं अतोऽन्यदपीत्येकेषामुभयोः**। अतः पूर्वोक्तरीत्या मोक्षप्रवेशिनो निष्कामकर्मणोरन्यत्काम्यं कर्म पुण्यमपि नश्यति न श्लिष्यते। प्रारब्धमनभीष्टं च । तथा ह्येकेषां पाठः उभयोस्त्यागेन। "तस्य पुत्राः दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यां" इति। अत्र साधुकृत्या शब्देन काम्यारब्धमनिष्टं पुण्यमुच्यते। अकाम्यस्य विनियुक्तत्वात्। प्रारब्धस्य भोक्तव्यत्वात् । इष्टनाशस्यापुरुषार्थत्वात् ।

इदमुक्तं भवति। पूर्वतनं काम्यं कर्म द्विविधम्। प्रारब्धमप्रारब्धं च। अत्र प्रारब्धं न नश्यति। अप्रारब्धं च द्विविधम् । इष्टमनिष्टं च अत्रानिष्टमेव नश्यति नत्विष्टम् । इष्टनाशस्यापुरुषार्थत्वात्। तथोत्तरकालीनमपि द्विविधम् । तत्रेष्टस्य संश्लेषो अनिष्टस्यासंश्लेषः। इष्टत्वं च मुमुक्षोरिव तत्फलं मोक्ष्यामीति इच्छाविषयत्वमिति।

अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति। किमु पापं परं ब्रह्मज्ञानिनो नात्र संशयः।। इति पाद्मे।

ननु कर्मणो नाशशिरस्काल्पफलकत्वनियमात् ज्ञानिकृतस्यापि कर्मणः कथं मोक्षानुप्रवेश इत्यत सूत्रं **ओं यदेव विद्ययेति हि**। ब्रह्मदर्शिकृतमल्पमपि पुण्यं महत्तममनन्तं च भवति। "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" (छां.उ.१-१-१०)इति श्रुतेः। "न हास्य कर्म क्षीयते" (बृ.उ.३-४-१५) इति च । अल्पमात्रकृतो धर्मो भवेज्ज्ञानवतो महान् । महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेत्" इति भारते।

ननु तथापि न ब्रह्मज्ञानिद्वेषिणो मुक्तितमसी सिध्यतः। उभयोरपि प्रत्येकं प्रारब्धपुण्यपापस्य सद्भावादित्याशंकापरिहाराय सूत्रं **ओं भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते** । विनष्टादितरे प्रारब्धपुण्यपापे भोगेन क्षपयित्वाथ ब्रह्म सम्पत्स्यते। ज्ञानिनः प्रारब्धभोगे विशेषसूचकस्तुशब्दः। यथोक्तमुपमर्दं चेति। "आरब्धपुण्यपापस्य भोगेन क्षपणादनु। प्राप्नोत्येव तमो घोरं ब्रह्मवान्नात्र संशयः"। प्रारब्धभोगस्य निरवधिकत्वेन पुनर्ब्रह्मादिप्राप्त्यनुपपत्तिरिति न मन्तव्यम् । यतः "ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः । नियमेन भवेन्नात्र कार्या काचिद्विचारणा" इति नारायणतन्त्रे। तथा

"ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः । ब्रह्मणस्त्वेव तावत्वं पंचाशद्ब्रह्मणस्तथा।
रुद्रस्य विंशदेव स्यादिन्द्रस्यार्कादिके दश। अन्येषां ब्रह्ममात्रस्य त्वन्त आरब्धसंक्षयः।
ब्रह्मणैव सहातश्च परं नारायणं व्रजेत्। इति सतत्त्ववचनं स्वयं भागवतोदितम् ।।" इति।

एतत्तात्पर्यमाह। **प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः। अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगत** इति।प्रारब्धकर्मान्यस्य उभयस्य उत्तरस्य पूर्वस्य च कर्मणः पापस्य ज्ञानदेव परिवर्जनम् । अश्लेष क्षयः नाशश्च भवति। परीति भिन्नं पदम् । वर्जनार्थं अपपरीवर्जन इति स्मरणात् । अव्ययादाप्सुप (पा.सू.२-४-८२)इति विभक्तिलोपः। तथा प्रारब्धकर्मणो अन्यस्य पुण्यस्याप्युभयस्योत्तरस्य पूर्वस्य च मोक्षप्रतिषेधकस्य काम्यस्य कर्मणो ज्ञानादेवाश्लेषो विनाशश्च भवति। कीदृशस्य पुण्यस्यानिष्टस्य। इष्टहानेरपुरुषार्थत्वादिति भावः। अन्यस्य पूर्वोक्तत्वात् प्रारब्धस्य सर्वस्य पापस्य च भोगतः क्षयो भवति। ततश्च ज्ञानिनां ब्रह्मप्राप्तिर्विद्वेषिणां च तमःप्राप्तिर्भवतीति सर्वमनवद्यम् ।

।। इति नारायणकृतावणुभाष्यप्रपंचने चतुर्थध्यायसम्बन्धप्रथमश्चरणोऽभ्यगात् ।।

**मळगी** – अपरोक्षज्ञानफलमाह **प्रारब्ध** इति। **प्रारब्धकर्मणोऽन्यस्य** प्रारब्धकर्मव्यतिरिक्तसंचितागामिरूपोभयपापस्य । **अनिष्टस्य** अनभीष्टपुण्यस्येत्येतत् **उभयस्य। ज्ञानादेव** अपरोक्षज्ञानादेव । **परिक्षयः** विनाशः अश्लेषश्च भवति। संचितागामिभ्यां **अन्यस्य** अतिरिक्तस्य । **सर्वस्य** प्रारब्धपुण्यपापस्य इष्टपुण्यस्य गुरुद्रोहादिमहापापस्य **भोगतः** अनुभवादेव नाशः ।।२।।

।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां चतुर्थाध्यायस्य प्रथमः पादः ।।

**लिंघेरी** – अपरोक्षज्ञानफलमाह **प्रारब्ध** इति। अपरोक्षज्ञानादेव **प्रारब्धकर्मणोऽन्यस्य** सञ्चितागामिरूपोभयस्य सर्वस्याप्यनिष्टस्य **परिक्षयः** नाशो भवति। सञ्चितागामिभ्यां अन्यस्य प्रारब्धकर्मणः। **भोगतः** भोगादेवपरिक्षयः ।।२।।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यटीकायां चतुर्थाध्यायस्य प्रथमः पादः ।।**

**नारायणपण्डित–** तदुपासनस्यादरनैरंतर्याभ्यामावश्यकर्तव्यत्वमुक्त्वा ज्ञानाख्यं फलमुच्यते प्रारब्धेति। अपरोक्षज्ञानादेव प्रारब्धकर्मणोऽन्यस्य अनिष्टस्य कार्यस्य पुण्यस्य पापस्य च क्षयो भवति। पूर्वस्य नाशः उत्तरस्याश्लेषरूपो नाश इति तदधिगममुत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादित्यस्यार्थ उक्तो भवति। भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यत इति नयार्थः उभयस्य पापस्य पुण्यस्य च अन्यस्य प्रारब्धस्य सर्वस्यापि भोगतः क्षयो भवतीति। द्वेषिणः सञ्चितपुण्यस्य नाशः प्रारब्धस्य भोगः। पूर्वपापस्य द्वेषहेतुत्वं पश्चात्यस्य तमोऽनुप्रवेश इत्यादि ज्ञेयम् । **अधिकरणानि ८ सूत्राणि १९**

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यटीकायां चतुर्थाध्यायस्य प्रथमः पादः ।।**

**गूढकर्तृक** – तदुपासनस्य आदरनैरन्तरर्याभ्यामवश्यकर्तव्यत्वमुक्त्वा ज्ञानाख्यं फलमुच्यते। **ज्ञानादेव** अपरोक्षज्ञानादेव। **प्रारब्धकर्मणोऽन्यस्य** अनिष्टस्य काम्यपुण्यस्य पापस्य च परिक्षयो भवति। पूर्वस्य नाशः उत्तरस्याश्लेषरूपो नाश इति तदधिगमनयार्थः। **उभयस्य** पापपुण्यरूपस्य प्रारब्धस्य सर्वस्यापि भोगतः क्षयो भवतीति भोगेन त्वितर इति सूत्रार्थः। द्वेषिणः संचितपुण्यनाशः प्रारब्धस्य भोगः पूर्वपापस्य द्वेषहेतुत्वं पश्चात्यस्य तमोऽनुप्रवेश इत्यादिज्ञेयम्।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यटीकायां चतुर्थाध्यायस्य प्रथमः पादः ।।**

**अणुभाष्यम्**

**उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः(वायुर्विमुक्तिगः)।**
**प्रविश्य भुंजते भोगांस्तन्दतर्बहिरेव वा।।३।।**

**सत्यनाथीया–** वाङ् मनसि दर्शनाच्छब्दाच्चेत्यादिनोक्तस्यार्थमाह **उत्तरेषु** इति। विमुक्तिगाः अवश्यास्सुराः स्वबिम्बभूतेषूत्तरेषु भूताभिमानिषु देहक्षयात् देहलयात् ततः तेषु प्रविश्य ते च स्वावरेषु देहक्षयमाप्येव **यावद्वायुं** विरिंचपर्यन्तं तेषूत्तमेषु क्रमाद्देहं प्राप्यं तेषु ते च प्रविश्यैव तदन्ततयोत्तमानामन्तर्वा बहिर्वा भोगानानन्दादीन् भुंजते एवेति।

**तत्वमञ्जरी–** एवं ज्ञानभोगाभ्यां क्षीणकर्मणामधिकारिणां कायत्यागप्रकारं वक्तुमयं द्वितीयः पादः प्रवृत्तः। तदर्थस्तु **उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात्सुराः** इति वक्ष्यमाणार्धेन व्यक्तः। अधिकारिभेदेनावान्तरभेदेऽपि देहत्यागरूपैकार्थ्यात् पादैक्यमिति भावः।

तत्र कथं सुराणां देहलय इत्यतः तं प्रकारं वक्तुं **वाङ्मनसि दर्शनाच्छब्दाच्च, तन्मनः प्राण उत्तरात्, भूतेषु तच्छ्रुतेः, नैकस्मिन् दर्शयतो हि** इति नयचतुष्टयम् । तत्र पूर्वपूर्वदेहानां स्वस्वजनकदेवेषु देहलय उच्यते। सत्वयुक्त इव। तथात्वे स्वोत्तमदेहान् प्रविष्टानां कूपपतितजन्तूनामिव क्लेशापत्तेरित्यतः तत्तात्पर्यमाह **–उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः। प्रविश्य भञ्जते भोगान् तदन्तर्बहिरेव वा** इति। पूर्वे पूर्वे इति योज्यम् । पूर्वे पूर्वे अवरा अवरा देवाः उत्तरेषूत्तरेषु स्वस्वजनकोत्तमदेवेषु प्रविश्य भोगान् भञ्जते। कुत्र? तदन्तर्बहिरेव वा। सर्वे देवाः स्वस्वतारतम्यक्रमानुरोधेन उत्तमदेवेषु प्रविश्य तद्देहान्तर्बहिर्निर्गत्य च स्वयोग्यानेव भोगान् भुञ्जते। भोगानेव न तु क्लेशानिति वाऽवधारणान्वयः। तत्र हेतुः विमुक्तिगाः इति। कर्मादिबन्धात् विशेषेण मुक्तिं मोचनं प्राप्ता इत्यर्थः। उत्तरेषूत्तरेष्विति वीप्सा स्वस्वोत्तमदेवेषु प्रवेश इति सूचनाय। कियत्पर्यन्तमवराणां उत्तमानुप्रवेशेन भोगा इत्यत उक्तम् - **एवं यावद्वायुम्** इति। वायुशब्दितचतुर्मुखपर्यन्तमेवं प्रविश्य भोगान् भुञ्जत इत्यर्थः। संज्ञापूर्वको विधिरनित्य इति स्वमोर्लुङ् न कृतः। तेन यावद्वायुमित्यादि साध्वित्याहुः ।।**१–२**।।**४–५**।।

यद्येवं तर्हि सर्वेषां मुक्तत्वं न स्यादीशप्राप्तेरेव मुक्तित्वात् । वायोरेव वा सर्वोत्तमत्वप्राप्तेश्चेत्यतः **सोऽध्यक्षे तदुपगमादिभ्यः** इत्येतन्नयार्थमाह - **वायुर्विष्णुं प्रविश्यैव** इति। तदन्तर्बहिरेव वा भोगान् भञ्जत इत्यन्वेति। एवेति शङ्काद्वयं निराह । किं सर्वेषां भोग एकप्रकार इत्यतो नेत्याह - **भोगश्चैवोत्तरोत्तरम्** इति। चस्त्वर्थे। भोगस्तूत्तरोत्तरमेव। स्वस्वतारतम्यानुरोधेनैवेति ।।**३**।।

एतेन सपादश्लोकेन वायुद्वारा सर्वदेवानामीशे प्रवेशोक्तिपरस्य **तानि परे तथा ह्याह** इत्येतन्नयस्याप्यर्थः सङ्गृहीतो ध्येयः ।।**७**।।

तथा वायुर्विष्णुं प्रविश्यैवेति वायोरपि ईशवशत्वोक्त्यैव मुक्तानां ईशाधीनत्वस्य कैमुत्यसिद्धतया मुक्तानामीशाधीनत्वोक्तिपरस्य **अविभागो वचनात्** इत्येतन्नयस्याप्यर्थः सङ्गृहीतो भवति।।**८**।।

तथा च वाय्वान्तानां विमुक्तिगानां प्रवेशितृत्वस्य विष्णोः प्रवेश्यत्वस्य चोक्त्या श्रीदेव्याः द्वयोरप्यत्राभाषणेन तस्या लयाभावस्वातन्त्र्याभावयोः सूचनात् श्रियो लयाभावाद्युक्तिपरस्य **समना चासृत्युपक्रमादमृतत्वं चानुपोष्य** इत्यादिसूत्राष्टकस्यापि तात्पर्यार्थः संक्षिप्तो ध्येयः ।।**६**।।

यत्तु मनुष्याणां कायत्यागप्रकारं वक्तुं **तदोकोग्रज्वलनं** इत्यादि सूत्रपञ्चकं तदर्थमाह - **उत्क्रम्य मानुषा मुक्तिं यान्ति** इति। ज्ञानिमानुषाः ब्रह्मनाड्या देहान्निर्गत्य मुक्तिं यान्तीत्यर्थः। उत्क्रामन्ति

मानुषा इत्येव वाच्ये मुक्तिं यान्तीत्युक्तिः मुक्तिगमन एवोत्क्रमणं अन्यदा तु नैवम् । "तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति" इत्यादेरिति सूचयितुम् । अत्र मानुषा इति प्रायिकत्वभिप्रायम् । तेन "इहैव केचित् मुच्यन्ते नोत्क्रामन्ति कदाचन" इति वचनविरोधो नेति ध्येयम् । यद्वेदं वचनं मानुषजीवविषयमिति बोध्यम् ।।९।।

अत्रोत्क्रम्य यान्ति मुक्तिमित्युक्त्यैव उत्क्रमणपूर्वकगमनाङ्गस्य गत्यनुस्मरणस्यावश्यकत्वोक्तिपरस्य योगिनः प्रतिस्मर्येते इति नयस्याप्यर्थः सङ्गृहीतो भवति ।।१०।।

उत्क्रम्य मानुषा मुक्तिं यान्तीत्युक्त्या देवाः कथमित्याकांक्षायां **वाङ्मनसि** इत्याद्यधिकरणानां प्राक् तात्पर्यार्थमात्रोक्तावपि इह प्रस्तावात् प्रतिपाद्यमर्थमाह – **देहक्षयात्सुरा** इति। मुक्तिं यान्तीत्यन्वेति। एतेन विमुक्तिगा इत्युक्तमुक्तिगतत्वप्रकारो विवृतः। तत्र सुरा लीनदेहा इत्येव वाच्ये मुक्तिं यान्तीत्युक्तिः मुक्तिगमन एव सुराणां देहलयोऽन्यदा अवन्यां अवतारदशायां उत्क्रमणमप्यस्तीति सूचयितुम् । अत एव देहक्षयात्सुरा उत्क्रम्य मानुषा इत्यनुक्त्वा उत्क्रम्येत्युत्क्रमणस्य पूर्वमुक्तिः। उक्तं चानुव्याख्याने जातानां मानुषे लोके देवानां च कदाचन । उत्क्रान्तिमार्गौ भवतो न तदा मुक्तिरिष्यते । इति।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्याख्यायां चतुर्थाध्यायस्य द्वितीयः पादः ।।**

**आनन्दमाला** – यथोक्तानिष्टकर्मक्षयिणां ज्ञानिनां देहमोक्षो अस्मिन् पादे उच्यते।

"वाङ्मनसि दर्शनाच्छब्दाच्च" (४-२-१) "अत एव च सर्वाण्यनु" (४-२-२) "तन्मनः प्राण उत्तरात्" (४-२-३) इत्यादीन्युत्तरोत्तरप्रवेशसूत्राणि व्याख्याति – **उत्तरेषूत्तष्वेव यावद् वायुं विमुक्तिगाः। प्रविश्य भुञ्जते भोगांस्तदन्तर्बहिरेव वा** इति। जीवन्मुक्तिं प्रागेव गतवन्तो देवा विशिष्टामपि मुक्तिं गच्छन्तः परान्तकाले उत्तरेषूत्तरेषु स्वस्वबिम्बभूतेष्वेव देवेषु प्रविश्य स्वं स्वं लिङ्गदेहं तत्र क्षपयित्वा चिदानन्दात्मकदेहेन तांस्तानभीष्टभोगान् भुञ्जते। यावद्वायुं प्रविशन्ति तावदन्तश्चायं प्रवेशः। नातोऽधिकः। न हि ततोऽधिकोऽधिकारी कोऽप्यस्ति । इयदेवेत्यामननात्। तस्मात् तत्तद्द्वारेण तमेव प्रविश्य भुञ्जते। न च तत्प्रवेशं विना तदन्येषां भोगः सम्भवति। लिङ्गभङ्गसापेक्षत्वात् । अतस्तदनन्तरमेव भोग इति नियमः। अथ विकल्पः तदन्तः स्थित्वा तद्बहिर्निर्गत्य वेति ? उभयथापि, तदन्तर्बहिरेव वा इति। पुनरपि, वाशब्दादेवशब्दाच्च पुनश्चायं नियमः – प्रलये सर्वेषामप्यन्तरेव स्थितिः। पुनः सृष्टौ केषाञ्चिद्बहिरेवेति। पुनरपि वाशब्दात् सृष्टिकाले केषाञ्चिदन्तर्वा बहिर्वा इति च विकल्पो भवति।।१-३।।५-६।।९।।

एवं चेत् सर्वाधिको वायुः कथं भुङ्क्त इत्यत आह - "सोऽध्यक्षे तदुपगमादिभ्यः" (४-२-४) इति सूत्रम् । **वायुर्विष्णुं प्रविश्यैव** इति। अयं भावः - सोऽयं वायुशब्दितो विरिञ्चः किं स्वात्मानमेवाश्रित्य भुङ्क्ते, उत परं प्रविश्येति संशयः। न तावदाद्य उपपद्यते। मुख्येश्वरत्वप्रसङ्गात् । न ह्यवान्तरेश्वरस्यापि मुख्येश्वरत्वं मनसापि प्राप्तुं शक्यम् । "न ते महित्वम्" (ऋ.७-११-१) इत्यादिश्रुतेः। नैव चास्य तदिच्छा जायते। "न कर्हिचिन्मे मनसो मृषा गतिः" (भाग.२-६-३३) इत्याद्युक्तेः। तस्मात् परमेवाश्रयं प्रविश्येति निश्चीयते। स च परो विष्णुरेव। तत्र परमान्तरस्याभावोक्तेः। अतः सोऽयं वायुः श्रीप्रेरितो विष्णुमेव प्रविश्य तत्र स्वकीयं लिङ्गशरीरं भंक्त्वा, ततः सच्चिदादिशरीरत्वेन तत्पुत्रो भूत्वा, तस्मिन्नेव विष्ण्वाख्याश्रये स्थित्वा, तत्सहभोगनामकान् सर्वानपि भोगान् भुंक्ते। न च पुनस्तदन्तर्बहिर्वेति विकल्पः। ततो निर्गमेऽपि सर्गे तस्मिन्नेव रूपान्तरेण स्थित्वोपपत्तेः ।।४।।७-८।।

"अविभागो वचनात्" (४-२-२६) इति सूत्रम् । **भोगश्चैवोत्तरोत्तरं** इति। उक्तप्रकारेण भगवन्तं प्रविष्टानां तत्कामसङ्कल्पापेक्षया सत्यकामसङ्कल्पानां च सतामेतेषां योऽसौ पूर्ववाक्ये भुञ्जत इति सामान्योक्तो भोगः सोऽयमुक्तक्रमादुत्तरोत्तरमधिकाधिक एव भवति। चशब्दात् सत्यकामत्वाद्यपि तथा। न च तेषामुक्तगुणतारतम्ये साम्यवाक्यविरोधः शङ्क्यः। दोषाभावसाम्यस्याभ्युपगतत्वात् ।।१०।।

**श्रीनिवासतीर्थीया-** एतत्पादार्थं संक्षिप्य संगृह्णाति **उत्तरेषूत्तरेषु** इति। वाङ्मनसि दर्शना-च्छब्दाच्च इत्यधिकरणतात्पर्यमाह **उत्तरेषुत्तरेषु इति। विमुक्तिगाः** विशिष्टमुक्त्यै गन्तारोऽवराः सुराः उत्तरेषु स्वबिम्बभूतभूताभिमानिषूत्तमेषु प्रविश्यन्ते। ते च स्वोत्तरेषु उत्तमेषु देहक्षयाद्देहक्षयमाप्य एवंक्रमेण यावद्वायुम् । **वायुः** विरिञ्चः। विरिञ्चपर्यन्तेषु उत्तमेषु क्रमाद्देहलयं प्राप्य तेषु च प्रविश्यैव तदन्तस्तेषां स्वोत्तमानां अन्तर्वा बहिर्वा भोगान्सुखादीन् भुंजत इत्यर्थः।

**छलारी -**

**हरिः ओम्**
**पद्मासने सन्निषण्णं रत्नकल्पसमश्चितम् ।**
**सुन्दरं पीतवसनं वामनं भावयाम्यहम् ।।**

देवानां स्वोत्तमप्रवेशेन लयरूपं तदितरेषां चोत्क्रान्तिरूपं देहक्षयाख्यं फलमस्मिन्पादे निरूप्यते।

तत्र यत्र देवतालये विवादः सः विचार्यते।

**ओं वाङ्मनसि दर्शनाच्छब्दाच्च ओं**

वाक् मनसि लीयते । कुतः ? वाचो मनोवशत्वदर्शनात् । तथा श्रुतेरिति सूत्रार्थः।

तत्र वाङ्मनसि न लीयते। तथा हि तदधीनस् तत्र लयो वक्तव्यः। न च वाङ्मनसो नियमत्वादि निश्चेतुं शक्यते। नियामकाभावेन वैपरीत्यस्यापि सुवचत्वादिति प्राप्ते -

अस्त्येव वाचो मनसि लयः। प्रत्यक्षतो वाचो मनोवशत्वदर्शनात् । "मनसा वाऽग्रे सङ्कल्प-यत्यथ वाचा व्याहरति" इति श्रुतिसिद्धयुक्तेश्च। यावन्न वाङ्मनसि सम्पद्यत इति शब्दाच्चेति सिद्धान्तः कृतः।

अत्र वाक्शब्देन उमोच्यते। मनश्शब्देन रुद्र उच्यते।

"उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः। तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद्विहीयते।" (स्कान्द)इति वचनादिति ज्ञेयम् ।।१।।

### ओं तन्मनः प्राण उत्तरात् ओं

तत् पूर्वोक्तं मनः प्राणे चतुर्मुखे विलीयते। कुतः ? उत्तरात् । मनः प्राणे इति वाङ्मनसि सम्पद्यत इति पूर्वोदाहृतवाक्यादिति सूत्रार्थः।

अत्र न प्राणे मनो विलीयते। तत्समत्वात् । दृश्यते हि प्राणस्य सर्वप्रवृत्तिहेतुत्ववत् मनसोऽपि सर्वप्रवृत्तिहेतुत्वम् । न च तज्जन्यत्वात्तत्र लयः मानाभावादिति प्राप्ते -

लीयत एव मनः प्राणे। "वाङ्मनसि सम्पद्यते मनः प्राण" (छां.उ.६-१५-१) इति श्रवणात्। न च तदनुत्पन्नत्वात्तत्र लयासम्भवः। "वायोर्वाव रुद्र उदेति" (कौण्डिण्य) इति श्रुतेः। न च तयोः श्रेष्ठत्वसाम्य "मनः उदक्रामत् मीलित इवाश्नन् पिबन्नास्ते। प्राण उदक्रामत् तत्प्राण उत्क्रान्ते प्रपन्न उदतिष्ठत् इत्यादेः" इति सिद्धान्तः कृतः।।२।।

### ओं सोऽध्यक्षे तदुपगमादिभ्यः ओं

स प्राणः अध्यक्षे लीयते। कुतः ? तदुपगमादिभ्यः। तदुपगमः तत्प्राप्तिः। आदिपदेन तदधीनत्वादि ग्राह्यम् । तेन च तद्बोधकश्रुत्यादिकं गृह्यते। "प्राणः परमुपगच्छति। प्राणः परमनुप्राणिति"। "अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु। आविश्य परमात्मानं भुंक्ते भोगांस्तु बाह्यकान्" इत्यादि तदुपगमादिप्रतिपादकश्रुतिस्मृतिभ्यः इति सूत्रार्थः।

अत्र न प्राणः परमात्मनि लीयते। तस्य तदधीनत्वात् । न च वाच्यं चक्षुरादिवत् तत्सहशिष्ट्यादिभ्यःइत्यादौ प्राणस्य तदधीनत्वं उक्तमिति तस्यानन्दाधीनत्वं बहुश्रुतिसद्भावादिति प्राप्ते-

प्राणः परमात्मनि लीयते एव। तस्य तदधीनत्वात् । न च तदनिर्णयः। तदधीनत्वेऽपि बहुश्रुतिसद्भावात् । न च साम्यम् । तदधीनत्वश्रुतीनां निरवकाशत्वात् । तदनधीनश्रुतीनां तु

ईश्वरान्याधीनत्वाभावपरत्वेन सावकाशत्वात् । सावकाशनिरवकाशयोः निरवकाशस्य प्राबल्यादिति सिद्धान्तः कृतः ।।३ ।।

## ओं भूतेषु तच्छ्रुतेः ओं

ये विशिष्योक्तेभ्यो अन्ये देवाः ते सर्वेषु भूतेषु विलीयन्ते। नैकस्मिन्नग्नौविति बहुवचनार्थः। कुतः? तथा श्रुतेरिति सूत्रार्थः।

अत्र अग्नावेव सर्वेषां देवानां लयः। नान्यभूतेषु। 'अग्नौ सर्वे देवा विलीयन्ते' इति श्रुतेः इति प्राप्ते–

नाग्नावेव सर्वेषां लयः। ये विशिष्योक्तेभ्यो अन्ये देवास्तेषां पञ्चसु भूतेषु लयः। न त्वेकस्मिन्नग्नावेव। "भूतेषु देवा लीयन्ते" (बृहच्छ्रुति) इति श्रुतेः। न च "अग्नौ सर्वे देवाः" इति श्रुतिविरोधः। भूतेष्विति निरवकाशबहुवचनश्रवणबलेन पूर्वश्रुतेः सङ्कोचनीयत्वादिति सिद्धान्तः कृतः ।।४ ।।

## ओं नैकस्मिन् दर्शयतो हि ओं

एकस्मिन्नग्नौ न सर्वे देवा विलीयन्ते। कुतः ? हि यस्मात् महोपनिषच्चतुर्वेदशिखे च तथा दर्शयतः । तस्माद्यो यत्र निर्दिष्टः तस्य तत्र लयः । अन्येषां सर्वदेवानां अग्नौ लयः इति सूत्रार्थः।

अत्र अग्नावेव सर्वेषां देवानां लयः। "अग्नौ सर्वे देवा विलीयन्ते" इति श्रुतेः। न च "भूतेषु विलीयन्ते" इति श्रुतिविरोधः। सर्वेषां देवानामग्नौ, अग्नेः वायौ, वायोराकाशे लयाङ्गीकारेण भूतेषु लयस्याङ्गीकृतत्वादिति प्राप्ते –

नैकस्मिन्नग्नावेव भूते सर्वेषां देवानां लयो वाच्यः। "पृथिव्या ऋभवो विलीयन्ते, वरुणे अश्विनावग्नावग्नयो, वायाविन्द्रः"। तथा "मृत्यवः पृथिव्यां, वरुणे आपो, अग्नयस्तेजसि मरुतो मारुते आकाशे विनायका विलीयन्त" इति श्रुतिभ्यां प्रत्येकं भूतेषु देवतालयस्योक्तत्वादिति सिद्धान्तः कृतः।

तदेतदधिकरणपञ्चकस्य समानाभिधेयत्वात् युगपदेव तात्पर्यमाह – **उत्तरेषूत्तरेषु** इत्यादिना **वायुर्विष्णुं प्रविश्यैव** इत्यन्तेन । प्रविश्येत्यर्धस्य उत्तरत्र वा उपयोगं वक्ष्यामः। वक्ष्यमाणं मुक्तिं यान्तीत्यादिकं अत्राप्यनुषज्यते । विमुक्तिगाः मुक्तिगन्तारः, सुराः अधमदेवाः उत्तरेषूत्तरेषु इति वीप्सायां द्विर्वचनम् । स्वस्वोत्तमदेवेषु यथानिर्देशं यावद्वायुं वायुपर्यन्तं प्रविश्य देहलयं प्राप्य, तदन्तः तद्देहान्तः बहिर्वा निर्गत्य च भोगानेव भुञ्जते न क्लेशानित्यर्थः। अनेन ओं वाङ्मनसि दर्शनाच्छब्दाच्च, ओं तन्मनः प्राण उत्तरात्, ओं भूतेषु तच्छ्रुतेः, ओं नैकस्मिन् दर्शयते हि इति चतुर्णां अधिकरणानां तात्पर्यमुक्तमिति वेदितव्यम् । वायुः विष्णुं प्रविश्येत्यत्र वायुशब्देन चतुर्मुखो

ग्राह्यः। वायुस्तु विष्णुं प्रविश्यैव तदन्तः बहिर्वा भोगान् भुङ्क्ते इत्यर्थः। अनेन ओं सोऽध्यक्षे तदुपगमादिभ्यः इत्यधिकरणतात्पर्यं उक्तमित्यवगन्तव्यम्। प्रलयकालेऽपि देवानां दिव्यविषयभोगोऽस्तीति ज्ञापयितुं प्रवेशमार्गे भोगोक्तिरित्यवगन्तव्यम् । एवमेवोत्क्रान्तस्य ज्ञानिसंघस्यापि तत्काले अर्चिरादिमार्गे दिव्यविषयभोगोस्तीत्यपि ज्ञेयम् । तदुक्तं भागवते द्वितीयस्कन्धे द्वितीयाध्याये - ''घ्राणेन गन्धं रसनेन वै रसम्'' इति ।।३।।

**नारायणाचार्य-** एवं ज्ञानभोगाभ्यां क्षीणकर्मणां देहक्षयक्रमो वक्तव्यः। स च द्विविधः। देवानां स्वोत्तमप्रवेशेन तत्र देहलयः । अन्येषां तु ब्रह्मनाड्या देहादुत्क्रान्तिरिति। तदुभयमस्मिन्पादे उच्यते। देहक्षयरूपैकार्थप्रतिपादकत्वादेकवाक्यत्वम् । तत्र प्रकृतज्ञानिनामन्तर्गतवाग्देवता मनोदेवातायां लीयते इत्यर्थप्रतिपादकं सूत्रं **ओं वाङ्मनसि दर्शनाच्छब्दाच्च** । वागभिमानिन्युमा मनोभिमानिनि रुद्रे लीयते । वाचो मनोवशत्वदर्शनात् । ''तस्य यावन्न वाङ्मनसि सम्पद्यते'' (छा.उ.६-१५-१)इति शब्दाच्च ।

उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः। तदेतन्मिथुनं ज्ञात्वा न दाम्पद्याद्विहीयते।

अत्रोमापदेन वारुणी सुपर्णी चोच्यते। रुद्रपदेन शेषसुपर्णाविति ज्ञातव्यम् । उमारुद्रयोस्तद्रूपापत्तिं विना मोक्षाभावादितरदेवानामपि स्वनियमाकदेवेषु लयप्रतिपादनाय सूत्रं **ओं अत एव च सर्वाण्यनु**। अत एव च शब्दादेव सर्वाण्यपि दैवतानि स्वनियम्यनियामकतानुसारेण लीयन्ते। नियमबाहुल्येपि श्रुत्या निर्णयोपपत्तेरिति भावः। ''अग्नौ सर्वे देवा विलीयन्ते अग्निरिन्द्रे इन्द्र उमायां उमा रुद्रे विलीयते एवमन्यानि दैवतानि यथानुकूलं विलीयन्ते'' इति गौपवनश्रुतिः। अत्र उमारुद्रपदाभ्यां सुपर्णिसुपर्णश्चोच्यते। न वारुणीशेषौ तयोः कामलयाधिकरणत्वेनेन्द्र-लयाधिकरणत्वाभावात् । अग्नेस्तु सूर्यद्वारा इन्द्रे लयः। एतत्तात्पर्यमाह **उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः**। प्रविश्य भुंजते भोगानित्यपकृष्यते । ततश्च स्वापेक्षयोत्तरोत्तरेषूत्कृष्टेषु इन्द्रसुपर्णादिषु योग्यतया अधराधराः विमुक्तिगाः अग्निसूर्यादयः निकृष्टदेवाः प्रविश्य भोगान्भुंजते इत्यर्थः।।१।।

अथ मनोदेवतायाः प्राणे लयसमर्थनार्थं सूत्रं **ओं तन्मनः प्राण उत्तरात्**। मनः प्राणे लीयते इति उत्तराद्वचनान्मनोभिमानी रुद्रः प्राणे वायौ लीयते। ''वार्योर्वाव रुद्र उदेति वायौ विलीयते तस्मादाहुर्वायुर्देवतानां श्रेष्ठ'' इति कौण्डिन्यश्रुतेः। अत्र प्रमाणपदेन चतुर्मुखः मनसो लयो वाणीद्वारकम्। एतत्तात्पर्यमाह **उत्तरेषु** इति । ''वाङ्मनसि संपद्यते'' इति पूर्वोदाहृतवाक्यापेक्षयोत्तरेषु ''अग्निमेषभूय एव मा भगवान्विज्ञापयतु'' इति श्वेतकेतुकृतप्रश्नस्य प्रत्युत्तरवाक्येषु ''मनः प्राणे'' (छा.उ.६-१५-१)इत्यादिषु यावद्वायुं वायुपर्यन्तं वाण्यन्तं विमुक्तिगा वायुं प्रविश्य भोगान्भुंजते।

ननु मुक्तौ वायोरेवाभावात्कथमेतदित्यत उक्तं **विमुक्तिगं** इति। वायुविशेषणां विमुक्तौ विद्यमानो यो वायुश्चतुर्मुखस्तं इत्यर्थः। अत एवोक्तं टीकायां 'अत्र प्राणशब्देन चतुर्मुखो गृह्यते' इति ।

श्रुत्यादौ तत्र प्राणवाय्वादिशब्दैर्व्यवहारस्तु गृहीतसन्यासस्य पूर्वाश्रमनाम्ना व्यवहारवदुपपन्न इति। तत्र मनसो लयो वाणीद्वारेति वा। ननु एतासां देवतानां उत्तरोत्तरेषु प्रवेशेनैव भोगे निरोधश्च प्रसज्येतेत्यत उक्तं **तदन्तर्बहिरेव च** इति। नायं नियमः प्रवेश्यैवेति किन्तु स्वेच्छया बहिरागत्यापि यथेष्टभोगान्भुंजत इत्यर्थः ।।२।।

अथ प्राणस्य परमात्मनि लयप्रतिपादनाय सूत्रं **ओं सोऽध्यक्षे तदुपगमादिभ्यः**। स प्राणो हिरण्यगर्भः सर्वाध्यक्षे परमेश्वरे लीयते कुतः? तस्य परमात्मन उपगमः उपगमनं तदधीनत्वमिति यावत् । आदिशब्दाच्छ्रुतिस्मृतयः। ताश्च "सर्वे प्राणमुपगच्छति प्राणः परमुपगच्छन्ति। प्राणं देवा अनुप्राणन्ति प्राणःपरमनुप्राणिति। तस्मादाहुः प्राणस्य प्राणः" इति। "प्राणः परस्यां देवतायां" इति च

"मुक्ताः संतोऽग्निमाविश्य देवाः सर्वेऽपि भुंजते। अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु। आविश्य परमात्मानं भुंक्ते भोगांश्च बाह्यकान् । न ह्यानन्दो निजस्तेषां परैर्लभ्यः कथंचन। किमु विष्णोः परानन्दो न ते विष्णाविति श्रुतेः" इत्यादयः।

"प्राणस्य तेजसि" इति तेजः शब्दवाच्यायां लक्ष्म्यां लयवचनं तु मार्गमात्रपरम् । "प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम्। सर्वेशितुश्च सर्वादेस्तस्यान्यत्र लयः कथं" इति स्मृतेः। एतत्तात्पर्यमाह **वायुर्विष्णुं प्रविश्यैव** इति। भोगान्भुंक्ते इति विपरिणतेनान्वयः। स च भोग उत्तरोत्तर एव बाह्यविषयक एव न तु तत्स्वरूपानन्दस्येत्यर्थः। उत्तरेत्युद्गच्छतीत्युत्तरः। उपर्युपर्येव वर्तते न तु तदीयस्वरूपानन्दे प्रविशति। सर्वेषामपि प्रविष्टानामेवमेवेति विष्णुमेव प्रविश्येत्येवकारान्वयेन लक्ष्म्यां मार्गमात्रत्वमित्यप्यर्थो ज्ञातव्यः ।।३।।

ननु "अग्नौ सर्वे देवा विलीयन्ते" इति श्रुतौ सर्वशब्दापादनादुत्तमानामधमेषु लयः प्रतीयते। कथमन्यत्र लयोक्तिरित्यतः सूत्रं **भूतेषु तच्छ्रुतेः**। भूतेष्वन्येषां देवानां लयः । "भूतेषु देवाः विलीयन्ते भूतानि परे न पर उदेति नास्तमेत्येकल एव मध्ये स्थाता" इति बृहच्छ्रुतेः। अत्र भूतानि पर इति न साक्षात्किंत्वाकाशोर्व्योर्बृहस्पति द्वारा भूतवायोः प्रवाहस्येन्द्रद्वारा अपां सोम द्वारेति। तथात्र च ये अत्र विशिष्योक्ता देवास्तदितरेषामग्नौ लयः सर्वशब्दश्चोक्तः प्रमाणविरोधात्संकुचितवृत्तिरिति भावः। एतदप्याह **उत्तरेषूत्तरेष्वेवं प्रविश्य भोगान्भुंजते नत्वपकृष्टेष्विति** ।।४।।

नन्वग्नौ सर्वेषां लयांगीकारेऽपि भूतेषु लयश्रुतिरुपपद्येत। व्युत्क्रमेण वायौ लयांगीकारात् । मुक्तेश्च लयविशेषत्वात् । "आकाशाद्वायुर्वायोरग्निरित्युत्पत्तिक्रमः। तथा चाग्नेर्वायोराकाशे लयेन भूतेष्विति बहुवचनस्याप्यग्निवाय्वाकाशरूपत्रितयविषयतयोपपन्नत्वादित्यतः सूत्रं **ओं नैकस्मिन्दर्शयतो हि**। नैकस्मिन्नग्नावेव सर्वदेवानां लयः । "पृथिव्यामापो विलीयन्ते वरुणे

अश्विनावग्नावग्नयोयाविन्द्रः सोमआदित्योबृहस्पतिः इति आकाश एव साध्या विलीयन्ते" "मृत्यवः पृथिव्यां वरुण आपो अग्नयस्तेजसि मरुतो मारुत आकाशे विनायकाः विलीयन्ते" इति महोपनिषच्चतुर्वेदशिखेदर्शितो हि। अत्र वायुमारुतपदाभ्यां हिरण्यगर्भ उच्यते। तत्रेन्द्रस्य लय उत्तक्रमेण सुपर्णे सुपर्णस्य वाणीद्वारेण। सोमस्य चानिरुद्धकामवारुणीशेषवाणीद्वारेण सूर्यस्य बृहस्पतिशक्रसौपर्णसुपर्णवाणीद्वारेण । मरुतामपीन्द्रादिद्वारेण इति ज्ञातव्यम् । अतो अग्नौ विलीयमानत्वेन निर्दिष्टानामेवाग्नौ लयो न सर्वेषामिति भावः ।।५।।

**मळगी –** मुक्तानां मुक्तौ भोगप्रकारमाह उत्तरेषु इति। **यावद्वायुं** वायुपर्यन्तं । **विमुक्तिगाः** गरुडशेषमार्गस्थाः समस्तदेवाः। **उत्तरेषूत्तरेषु** श्रुतिस्मृतिषु लयाधिष्ठानत्वेन क्लृप्तस्वोत्तमदेवेषु। **प्रविश्यैव** प्रवेशं कृत्वैव। **तदन्तर्बहिरेव वा** तेषां देवानामन्तर्बहिर्वा। **भोगान् भुंजते** अनुभवन्तीत्यर्थः। यावद्वायुर्विमुक्तिग इत्यपि पाठः। तत्पक्षे **मुक्तजीवानां** स्वोत्तमप्रवेशद्वारा वायुशब्दवाच्यमुक्तब्रह्माणं प्रविश्य। **तदन्तर्बहिरेव** तस्य मुक्तब्रह्मणः अन्तःप्रविश्य बहिरेव वा भोगान् भुंजते ।।३।।

**लिंघेरी –** मुक्तानां मुक्तौ भोगप्रकारमाह **उत्तरेषु** इति। मुक्तजीवः **उत्तरेषु उत्तरेषु** उत्तमेषु उत्तमेषु प्रविश्येति यावत् । वायुः विमुक्तिगः। अत्र वायुशब्देन मुक्त ब्रह्मोच्यते । तदन्तःप्रविश्य मुक्तब्रह्मणः अन्तप्रविश्य। बहिरेव वा भोगान् भुञ्जते ।।३।।

**नारायणपण्डित –** विमुक्तिगाः अवरा सुराः स्वबिम्बभूतेषु उत्तरेषु भूताभिमानिषु देहक्षयादेह-लयात्। ततस्तेषु प्रविश्य ते च स्वावरेषु देहक्षयादेहक्षयमाप्य एवं यावद्वायुम् ।

**गूढकर्तृक –** एतत्पादतात्पर्यार्थं संगृह्णात्यणुभाष्यकारः। **उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः। प्रविश्य भुंजते भोगांस्तदन्तर्बहिरेव वा। वायुर्विष्णुं प्रविश्यैव भोगांश्चैवोत्तरोत्तरम् । उत्क्रम्य मानुषाः मुक्तिं यान्ति देहक्षयात्सुरा** इति। विमुक्तिगाः अवराः सुराः स्वबिम्बभूतेषु उत्तरेषु भूताभिमानिषु उत्तमेषु देहक्षयादेहलयात् । ततस्तेषु प्रविश्य तेषु स्वोत्तरेषु **देहक्षयात्** देहक्षयमाप्य एवं यावद्वायुम् ।

**अणुभाष्यम्**

**वायुर्विष्णुं प्रविश्यैव भोगांश्चैवोत्तरोत्तरम् ।**
**उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात्सुराः ।।४।।**

**सत्यनाथीया–** सोऽध्यक्षे तदुपगमादिभ्य इत्यादेरर्थमाह **वायुः** इति। वायुर्विरिंचस्तु विष्णौ देहक्षयं प्राप्य तं प्रविश्यैव तद्भिन्नभोगान् भुंक्ते इति। अविभागो वचनादित्यादेरर्थमाह **भोगांश्च**

इति। स च तैः भुज्यमानो भोगो विषयानुभव उत्तरोत्तरं तारतम्यं श्रुत्यनुसारि तरतमभावेन भवतीत्यर्थः। तदोकोग्रज्वलनमित्यादेस्तात्पर्यमाह **उत्क्रम्य** इति। मानुषास्तु देहादुत्क्रम्य सूत्रोक्तरीत्योत्क्रमणं प्राप्य मुक्तिं यान्तीति॥

**॥ अणुभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥**

**आनन्दमाला** – "तदोकोग्रज्वलम्"- (४-२-१७) इत्यादिकमधिकरणम् । **उत्क्रम्य मानुषा मुक्तिं यान्ति** इति। मुक्तिकालात् प्रागेव कदाचिन्मानुषलोके जाता देवाश्चात्र मानुषशब्देनोच्यन्ते। न केवलं मनुष्यचेतनाः। ते तावदुभयेऽपि ज्ञानसामर्थ्यात् । स्वसुषुम्नयार्कसुषुम्नमनुसृत्य स्वदेहादुत्क्रम्य तन्मुक्तिं यान्ति। उत्क्रान्त्यैव देहमुक्तिं यान्तीत्यभिप्रायः। अस्माच्च देशादुत्क्रम्य अर्चिरादिमार्गेण गत्वा ब्रह्मलोकप्राप्तिरूपां च मुक्तिं यान्ति। मोचकत्वान्मुक्तिशब्दितं ब्रह्मापि यान्ति।

एवं स्थूलदेहिनां मनुष्याणां तत उत्क्रान्त्यैव तन्मुक्तावुक्तायां सूक्ष्मदेहिनां देवानां देहस्य का गतिरित्यत आह – **देहक्षयात् सुराः** इति। (प्रवे)ष्टारः सुराः प्रवेश्येषु देवेषु स्वदेहस्य क्षयात् तन्मुक्तिं यान्तीति। देवतादेहः प्रवेशकाले क्षीयते। मनुष्यचेतनाश्च प्रागेवोत्क्रम्य ब्रह्मलोकं गताः कथञ्चित् सुरशब्देनोच्यन्ते। तस्मात् तेषामपि लिङ्गभङ्गो बिम्बदेवप्रवेशादिति सिद्धम् ॥११॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां चतुर्थाध्यायस्य द्वितीयः पादः ॥**

**नृसिंहतीर्थ** – तत्र तत्र देवतालये विवादो यः स विचारितः सूत्रकारेण। तत्र वाचो मनसि लयप्रतिपादनार्थं आद्यमधिकरणम् । अत्रोमावाक् शब्देन वारुणीसुपर्णी चोच्यते। रुद्रवाचक-मनःशब्देन शेषसुपर्णाविति ज्ञातव्यम् । मनसः प्राणे लयप्रतिपादनार्थं तन्मन इति द्वितीयाधिकरणम् । प्राणस्य परमात्मनि लयप्रतिपादनार्थं तृतीयमधिकरणम् । अत्र प्राणो हिरण्यगर्भः। ननु "प्राणस्तेजसि तेजः परस्याम्" इत्युक्तत्वात् कथं प्राणस्य परमात्मनि लय इति चेन्न । प्राण-शब्दस्य चतुर्मुखपरत्वे तस्य तेजसि प्रकृतौ लयो नाम तत्प्राप्तिमात्रं न तु तत्र देहलयः। "प्रकृतौ विलीनः संसारेमेति" इति वचनात् । तस्य लयानन्तरमेव मुक्तियोग्यत्वेन परमात्मन्येव लययोग्यत्वात् । प्राणत्वावस्थायामस्त्यैव तेजसि लय इति। सर्वदेवानां पंचस्वपि भूतेषु लयप्रतिपादनार्थं भूतेष्वित्यादि चतुर्थपंचमाधिकरणद्वयम् ।

प्रकृतेः विष्णौ लयाभावप्रतिपादनार्थं षष्टाधिकरणम्। अस्याधिकरणस्यान्तर्भावप्रकारस्तु एतदधिकरणभावबोधे दृष्टव्यः। सोऽध्यक्षेणेत्यत्र चतुर्मुखस्य परात्मनि लये सिद्धे तदितरसर्वदेवानां परमात्मनि लयप्रतिपादनस्य तानि परे तथा ह्याहेति सप्तमाधिकरणम् । देवानां मुक्तौ भगवदधीन-त्वप्रतिपादनस्य अविभागो वचनादित्यष्टमाधिकरणम् । एवं देवानां देहलयरूपमोक्षमुक्त्वा मनुष्याणां

देहादुत्क्रान्तिप्रतिपादकं नवमाधिकरणम् । पूर्वाधिकरणप्रसक्तगत्यनुस्मरणस्य आवश्यकत्वप्रतिपादकं दशमाधिकरणम् । तत्राद्याधिकरणाष्टकतात्पर्यम्। उत्क्रम्य मानुषा मुक्तिं यान्तीत्येतद्व्यतिरिक्तं सर्वे विमुक्तिगाः मुक्तिं गन्तारः सुराः देवाः उत्तरेषु उत्तरेषु। वीप्सायां द्विवचनम् । स्वस्वोत्तमेषु देवेषु यावद्वायुं वायुपर्यन्तं प्रविश्य तत्र देहक्षयात् । देहनाशान्मुक्तिं यान्ति। वायुशब्देनापि चतुर्मुख उच्यते। वायुर्विष्णुं प्रविश्य देहक्षयान्मुक्तिं यातीति आद्याधिकरणपंचकस्य तात्पर्यम् । विष्णुमेव प्रविश्येत्येवकारेण प्रकृतौ लयव्यावृत्तकेन षष्ठाधिकरणस्य तात्पर्यमुक्तं भवति। किमनेन प्रवेशेनेत्याशंकापरिहारार्थं सुराः विमुक्तिगाः सन्तः वायुद्वारेति शेषः। विष्णुं प्रविश्येत्येतदन्तर्बहिर्वा भोगान् भुंजते इति सप्तमाधिकरणतात्पर्यम् ।

तेषां भोगे तारतम्यमाह भोगश्च इति। चशब्दोऽत्र निर्देश्यार्थः। एवशब्दो अध्याहृतेन अधिक इत्यनेन सम्बध्यते। तेषां भोगस्तूत्तरोत्तरमधिक इत्यर्थः । यद्यपि भोगश्चतुर्थपादार्थः। अस्य च लयप्रतिपादकत्वेन सप्तमाधिकरणे वायुद्वारा परमात्मनि लयः प्रतिपाद्यते इत्येवं वक्तव्यम् । तथापि देहलयार्थं उत्तमोत्तमद्वारा परमात्मप्रवेशे वक्तव्ये तत्र हेतुत्वेन वक्ष्यमाणमेव भोगमुक्तवान्भाष्यकारः। नन्वथापीदं प्रमेयं सप्तमाधिकरणसम्बन्धित्वेनैव भाष्यकारेणोक्तमिति कुतो ज्ञायते इति चेन्न । अनुव्याख्याने तत्सम्बन्धित्वेनोक्तत्वात् । भोगस्य प्रवेशोपपादकस्य तद्व्याख्यानं सुधायामुक्त-त्वाच्चेति। विष्णुं प्रविश्यैव भोगान्भुंजते इत्यनेन मुक्तभोगस्य परमात्माधीनत्वप्राप्त्या अष्टमाधिकरणस्य तात्पर्यं उक्तं भवति। उत्क्रम्य देहादिति शेषः। मानुषाः उपलक्षणमेतत् देवव्यतिरिक्तः। उक्तं च "देवानां च मनुष्याणामेतावत्सममेव हि ।" इत्यनुव्याख्यानसुधायां मनुष्यशब्देन देवव्यतिरिक्तानुपलक्षयतीति। मुक्तिं यान्तीत्यनेन नवमाधिकरणस्य तात्पर्यमुक्तं भवति। अनेनैव एतदधिकरणसम्बन्धि दशमाधिकणस्यापि तात्पर्यमुक्तप्रायम्। य शरीरादुत्क्रान्ताः देवव्यतिरिक्ताः तेषां भगवल्लोकगमनार्थो मार्गः। ये कर्मणा देहाच्च मुक्ताः तेषां सर्वेषामपि गम्यम् तदुभयप्रतिपादनार्थमयं द्वितीयः पादः।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां चतुर्थाध्यायस्य द्वितीयः पादः ।।**

**श्रीनिवासतीर्थीया** – सोऽध्यक्षे तदुपगमादिभ्य इत्यधिकरणतात्पर्यार्थमाह **वायुर्विष्णुं प्रविश्यैव** इति। वायुर्विरिंचस्तु विष्णुदेहे क्षयमाप्य प्रविश्यैव तद्भिन्नभोगान् भुंक्ते इत्यर्थः। अविभागावचनादित्यस्य तात्पर्यमाह **भोगांश्चैवोत्तरोत्तरं** इति। तैर्भुज्यमानो आनन्दादिभोगः विषयानुभवो वा उत्तरोत्तरं तारतम्यश्रुत्यनुसारात्तरतमभावेन तदधीनतया च भवतीत्यर्थः। तदेकोऽग्रज्वलनादित्यर्थः **उत्क्रम्य मानुषाः मुक्तिं यान्ति** इति। मानुषास्तद्देहात् । चरमशरीरात् । हृदयाग्रज्वलनादिविशिष्टोत्क्रमणं प्राप्य मुक्तिं लिंगभंगाख्यां यान्तीत्यर्थः।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यविवरणे चतुर्थाध्यायस्य द्वितीयः पादः ।**

**छलारी –**

**ओं समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ओं**

न रमा परमात्मनि लीयते। कुतः ? यतः अनुपोष्य च परमुपास्यैव अमृतत्वं नित्यमुक्तत्वम् । कुतः ? असृत्युपक्रमात् – कदापि संसारोपक्रमणाभावात् । तदपि कुतः? समना – देशतः – कालतश्च व्याप्त्या समः समानः न परमपुरुषो यस्याः सा तथोक्ता, हेतुगर्भमेतत् । ईशवत् नित्यत्वात् सर्वगत्वाच्चेति सूत्रार्थः।

अत्र प्रकृतिः परमात्मनि लीयते। ''तेजः परस्यां देवातायाम्'' इति श्रुतेरिति प्राप्ते –

न प्रकृतिर्लीयते, नित्यमुक्तत्वात् । तदेव कुतः? कदापि संसाराभावात् । तदपि कुतः ? परमपुरुषवन्नित्यत्वात् । सर्वगतत्वाच्च। न च श्रुतिविरोधः। अतिसामीप्यार्थतयोपपत्तेः।

''हरेरत्यन्तसामीप्यं लयो लक्ष्याः प्रकीर्तितः'' इति वचनादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – **वायुर्विष्णुमेव प्रविश्य** इति । चतुर्मुखः विष्णुमेव प्रविश्य मुक्तिं याति । न तु प्रकृतिमित्यवधारणार्थः। कुत इति चेन्न । परमात्मविलयस्यैव मुक्तिहेतुत्वेन प्रकृतिविलयस्य मुक्तिहेत्वाभावात् । ''विलीनो हि प्रकृतौ संसारमेति । विलीनः परमे ह्यमृतत्वमेति'' (सौपर्ण) इति श्रुतेः। तथा च प्रकृतेः परमात्मनि लयसत्वे चतुर्मुखः तत्रैव लीनो भवेत् । अतः तस्याः देहलयः तत्र नास्तीति भावः ।।६।।

**ओं तानि परे तथा ह्याह ओं**

तानि सर्वाणि दैवतानि प्राणद्वारेण परमात्मनि लीयन्ते। कुतः? हि यस्मात् ''सर्वे देवाः प्राणमाविश्य'' (कौषारव)इति श्रुतिस्तथाहेति सूत्रार्थः।

अत्र न देवाः परमात्मनि लीयन्ते, तेषां तत्प्रतिबिम्बत्वाभावात् । प्राणस्यैकस्यैव तत्प्रतिबिम्बत्वात् । ''प्रतिबिम्बो हरेः प्राणः प्राणस्यान्या कलाः क्रमात्'' इति वचनात् । प्रतिबिम्बस्य च बिम्बे लयनियमादिति प्राप्ते –

देवाः परमात्मनि लीयन्त एव । न च प्राणप्रतिबिम्बत्वविरोधः। तेषां तत्प्रतिबिम्बत्वेन तद्वारा परमात्मनि लयाङ्गीकारात् । ''सर्वे देवाः प्राणमावेश्य देवे मुक्ता लयं परमे यान्त्यचिन्त्यः'' इति श्रुतेरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह – सुराः वायुद्वारा विष्णुं प्रविश्यैव तदन्तर्बहिर्वा भोगान् भुञ्जत इति। तेषां भोगे तारतम्यमाह – **भोगाश्च** इति । एवशब्दोऽध्याहृतेन अधिक इत्यनेन सम्बध्यते। चशब्दो व्यक्तिनिर्देशार्थः। तेषां भोगस्तु उत्तरोत्तमधिक एवेत्यर्थः ।।७।।

## ओं अविभागो वचनात् ओं

मुक्तानां सत्यकामत्वादेरविभागः भगवदिच्छया विभागो नास्ति। तदिच्छानुसारित्वमिति यावत्। कुतः ? वचनात् – तथा श्रुतेरिति सूत्रार्थः।

अत्र मुक्ताः स्वतन्त्रा एव न पराधीनाः मुक्तत्वादेव। अस्वातन्त्र्ये संसारवत् दुःखादिप्रापेः। "एते देवा एतमात्मानमनुप्रविश्य सत्याः सत्यकामाः" (गौपवन) इति सायुज्यं प्राप्तानां देवानां सत्यकामत्वादिश्रुतेश्च । न हि परतन्त्रेषु सत्यकामादि सम्भवतीति प्राप्ते –

परमात्माधीना एव मुक्ताः । न तु स्वतन्त्राः। न चोक्तश्रुतिविरोधः। श्रुतिर्हि यत्सत्यकामत्वं वक्ति । तत्तेषां सत्यकामत्वं परमेश्वरेच्छानुसारेणैवेत्यङ्गीकारात् । "कामेन मे काम आगात्" (तै.आ.३-१५-४) इति श्रुतेः। अत एव न दुःखप्राप्तिः। यदा खलु भगवदिच्छानुसारेणेच्छन्ति तदा तदलाभेन दुःखादिः स्यात् । मुक्तास्तु भगवत्कामानुसारेणैव कामयन्ते इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह– विष्णुं प्रविश्यैव । "तं अनुसृत्यैव भोगान् भुञ्जते" इति। न तु स्वातन्त्र्येणेत्येवार्थः ।।८।।

## ओं तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ओं

उत्क्रान्तिकाले तदोकोग्रज्वलनं तदोकसः भगवदोकसः हृदयस्याग्रे ज्वलनं प्रकाशो भवति। तदा ज्ञानी तत्प्रकाशितद्वारः तेन प्रकाशेन प्रकाशितनाडीद्वारः सन् विद्यासामर्थ्यात् – तदपरोक्षज्ञानसामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च अपरोक्षज्ञानाङ्गभूतगत्यनुस्मरणयोगाच्च । हार्दानुगृहीतः – हार्देन हृदिस्थेन विद्याप्रसन्नेन भगवतानुगृहीतः सन् शताधिकया सुषुम्नानामक-ब्रह्मनाड्या निष्क्रामतीति सूत्रार्थः।

अत्र ज्ञानिचरममरणं अज्ञमरणसदृशं तस्यापि अन्यमरणवत् प्रारब्धनिबन्धनत्वात् । न च तदा प्रारब्धाभावः। तस्य देहत्यागावसानत्वादिति प्राप्ते –

न ज्ञानिचरममरणस्य अज्ञमरणसाम्यं यतः उत्क्रान्तिकाले ज्ञानसामर्थ्यात् हृदयस्याग्रे प्रकाशे सति ज्ञानी तेन प्रकाशितनाडीद्वारः सन् ज्ञानप्रसन्नभगवदनुग्रहेण सुषुम्ना नाड्या गत्यनुस्मृतिपूर्वकं देहादुत्क्रामति। न तु तथा अज्ञानी। अतो न साम्यम् । न च ज्ञानसामर्थ्यात् पूर्वमरणस्याप्येवं विधित्वप्रसङ्गः। मार्गानुस्मरणरूपसहकारिविरहादिति सिद्धान्तः कृतः ।।९।।

## ओं योगिनः प्रति स्मर्येते स्मार्ते चैते ओम्

एते ब्रह्मचन्द्रगती ज्ञानयोगिनः कर्मयोगिनश्च प्रति स्मर्येते। "अग्निर्ज्योतिः" " धूमो रात्रिः" इत्यादौ स्मृतौ उच्येते। ज्ञानादिसाध्यतया स्मर्येते इति यावत् । न कालादिकृत इत्यर्थः। एते स्मार्ते च - स्मृतेरिमे स्मार्ते, गत्यनुस्मृतिसाध्ये चेति स्मर्येते गत्यनुस्मरणादिति स्मृत्या उच्येते इति सूत्रार्थः।

अत्र उत्क्रमणयोग्यज्ञानिनः न ब्रह्मादिप्राप्त्यर्थं विद्यागत्यनुस्मृती अपेक्षेते। "अग्निर्जोतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः। धूमोरात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिः योगी प्राप्य निवर्तते।"(भ.गी.८-२४,२५)इत्यादिस्मृतौ केवलकालाधीनत्वस्योक्तत्वात् । न ह्यनयोः श्लोकयोः ब्रह्मचन्द्रगत्योः प्राप्तौ उत्तरायण-कालदक्षिणायनकालमरणं विनान्यत्कारणमुच्यते इति प्राप्तौ -

ब्रह्मादिप्राप्त्यर्थं विद्यागत्यनुस्मृती अपेक्ष्येते एव । यतः गत्योः विद्यादिकृतत्वमेव स्मर्यते। न कालादिकृतत्वम् । "अग्निर्ज्योतिः" इति श्लोके ब्रह्मविद इति विशेषणात् । "धूमो रात्रिः" इति श्लोके योगीति विशेषणात् । न च गत्यनुस्मृतौ विशेषप्रमाणाभावः। "गत्यनुस्मरणाद् ब्रह्म चन्द्रं वा गच्छति ध्रुवम्" (अध्यात्म) इति स्मृतेरिति सिद्धान्तः कृतः।।

तदेतदधिकरणद्वयतात्पर्यमाह - उत्क्रम्य मानुषा इति। गत्यनुस्मरणपूर्वकमिति शेषः।

अत्र मानुषशब्दः देवेतरज्ञान्युपलक्षकः। तदुक्तम् । "देवानां च मनुष्याणाम्" इत्यनु-व्याख्यानसुधायां मानुष्यशब्दो देवव्यतिरिक्तानुपलक्षयतीति । तथा च ज्ञानिनः गत्यनुस्मरणपूर्वकं ब्रह्मनाड्या देहादुत्क्रम्य मुक्तिं यान्ति, नाज्ञानिन इत्यर्थः।

"उत्क्रम्य मानुषा" इत्येतत् प्रायिकत्वाभिप्रायं, तेन "केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन" इति वचनविरोधो नेत्यवगन्तव्यम् ।

नन्वेवं तर्हि देवानां सर्वथोत्क्रान्तिर्नास्तीति प्राप्तम् । बाढमिति चेन्न, देवानां उत्क्रान्तेः प्रमितत्वात् इत्यत आह - **देहक्षयात् सुरा** इति। मुक्तिं यान्तीत्यनुवर्तते। मुक्तिं यान्तीत्युक्त्या मुक्तिं प्रति गमनकाले एव सुराणां देहलयः। भूमाववतारदशायां तु उत्क्रमणमप्यस्तीति सूचयति। तदुक्तमनुव्याख्याने "जातानां मानुषे लोके देवानां च कदाचन । उत्क्रान्तिमार्गौ भवतो न तदा मुक्तिरिष्यते।" इति।।१०।।

**मदाचार्यमनोधाममध्वमानसमश्चके ।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां चतुर्थाध्यायस्य द्वितीयः पादः ।।**

**नारायणाचार्य–** अथ प्रकृतेर्विष्णौ लयाभावं प्रतिपादयितुं सूत्रं **ओं समना चासृत्युपक्रमादमृतत्वं चानुपोष्य।** अत्र आद्येन चशब्देन पूर्वसूत्रान्नञो अनुकर्षः। न प्रकृतिः विलीयते यतस्तस्याः अनुपोष्य उपासनां विना स्वत एवामृतत्वं नित्यमुक्तत्वमित्यर्थः। यद्यपि तं सा सदोपास्ते तथापि न तत्फलार्थं किन्तु स्वभाव एवास्याः स इति। न हि नित्यमुक्तायाः लक्ष्म्याः लयः सम्भवति। कुतो नित्यमुक्तत्वम् ? असृत्युपक्रमात् । संसारोपक्रमाभावात् । तदपि कुतः यतः सा समाना समस्तुल्यो देशतः कालतश्च ना परमपुरुषो यस्याः सा समना। ईश्वरवत्सर्वगता नित्या चेत्यर्थः। न हि संसारित्वे तदुपपद्यते इति भावः। ''तेजः परस्यां देवतायां'' इति लयवचनं तु अत्यन्तसामीप्यार्थम् । उक्तं च ''हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तिता ।'' इति। समनेत्यत्र पुंवच्छक्तियुतत्वेन स्त्रीत्वस्याविवक्षितत्वादन्यतो ङीषिति(पा.सू.४-१-४०) न ङीष् । नद्यृतश्च (पा.सू.५-४-१५३)इति कप्प्रत्ययस्तु समासान्तविधेः अनित्यत्वान्न कृता । उक्तं च '' पुंवच्छक्तियुतास्त्री च पुंशब्देनैव भण्यते ।'' इति ।

तथा च श्रुतिः ''द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ नित्यौ सर्वगतौ चैतौ ज्ञात्वा विमुच्यते'' इति। नैतावता द्वयोः साम्यमित्यर्थप्रतिपादकं सूत्रं **ओं तदपीतेः संसारव्यपदेशात्**। तस्यां प्रकृतौ अपीतिः लयो अस्यासौ तदपीतिः। प्रकृत्यां लीनः तस्य पुरुषस्य संसारव्यपदेशात्। अर्थादीश्वरे लीनस्य मोक्षोपदेशादित्यर्थः। मोचकत्वामोचकत्ववतो न सर्वसाम्यमिति भावः। ''असमावेतौ प्रकृतिश्च परमश्च विलीनो हि प्रकृतौ संसारमेति विलीनः परमे ह्यमृतत्वमेति'' इति सौपर्णश्रुतिः। हेत्वन्तरेणैतमर्थं समर्थयत्सूत्रं **ओं सूक्ष्मं प्रमाणतश्च तथोपलब्धेः**। प्रकृतेरपि ब्रह्म सूक्ष्मं ज्ञानानन्दादिगुणपरिमाणेन चाधिकम्।

सर्वतः प्रकृतिसूक्ष्मा प्रकृतेः परमेश्वरः ।
ज्ञानानन्दौ तथैश्वर्यं गुणाश्चान्येऽधिका प्रभोः।। इति तुरश्रुतावुपलब्धेः

तर्हि साम्योक्तिः किंनिबन्धनेत्याकांक्षायां सूत्रं **ओं नोपमर्देनातः**। अतस्तस्य ये स्वतन्त्रादयो विशेषगुणास्तेषामनुपमर्देनैव साम्यम्।

''देशतः कालतश्चैव समा प्रकृतिरीश्वरे। उभयोरप्यबद्धत्वं तदबन्धः परात्मनः।

स्वत एव परेशस्य सा चोपास्ते सदा हरिम् । प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु विष्णुना ।

नियता नैव केनापि नियता हि हरेर्गुणाः ।'' इति भविष्यत्पर्वणि ।

युक्त्यन्तेरण किंचत्साम्यं समर्थयत्सूत्रं **ओं अस्यैव चोपपत्तेरूष्मा** । प्रकृतेर्भगवता किंचित्साम्यस्योपपादनार्थं ऊष्माश्रुतौ चोच्यते । ''द्विधाहीदमवदृश्यते ऊष्मावदनूष्मावच्च । तत्रोष्मावत्परं ब्रह्म यन्न जिघ्रन्ति न पश्यन्ति न श्रृण्वन्ति न विजानन्ति । अथनूष्मावत्प्रकृतिः प्राकृतं यन्न जिघ्रन्ति जिघ्रन्ति च यन्न पश्यन्ति पश्यन्ति च यन्न श्रृण्वन्ति श्रुण्वन्ति च यन्न जानन्ति जानन्ति च'' इति सौपर्णश्रुतिः । अत्रोष्मा नाम अप्रधृष्यताप्रयोजकस्तेजोविशेषः । किंचित्साम्यमाक्षिप्य समादधत्सूत्रं **ओं प्रतिषेधादिति चेन्न शारीरात्** । ''असमो वा एष परो न हि कश्चिदेवं दृश्यते सर्वे ह्येत अणवो जायन्ते च म्रियन्ते च छिद्रा ह्येते भवन्ति । अथ परो न जायते न म्रियते पूर्णश्चैष भवति'' इति चतुर्वेदशिखायां साम्यप्रतिषेधान्न लक्ष्म्याः परेण साम्यमिति चेन्न । शारीराद्धि साम्यं प्रतिषिध्यते कुत इत्याकांक्षायां प्रमाणं दर्शयत्सूत्रं **ओं स्पष्टो ह्येकेषाम्** । ''अथातः समाश्चा-समाश्चाभिधीयन्ते समासमाश्चाथ समानि ब्रह्मणो रूपाणि यैरुत्पत्तिस्थितिलयो नियतिरायतिश्चैकं ह्येवैतद्भवत्यथासमा ब्रह्मेन्द्ररुद्राः प्रजापतिबृहस्पतिर्ये के च देवा गन्धर्वा मनुष्या पितरोऽसुरा यत्किंचेदं चरमचरं चाथसमासमाप्रकृतिर्वाव समाऽसमा सैषा हि नित्याऽजरा तद्वशा च'' इति स्पष्टो हि माध्यन्दिनायनानां समादिवादः । स्मृत्याप्येतं अर्थं समर्थयत्सूत्रं **ओं स्मर्यते च** ।

मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः ।
ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमा । इति वाराहे ।

एतत्तात्पर्यमप्याह **भोगांश्चैवोत्तरोत्तरं** इति । उत्तरायाः वागादिप्राणपर्यन्तेभ्यो बहिर्भूतायाः सम्बन्धी उत्तर एव बहिर्भूतस्तद्विलक्षण एव भोग इति योज्यम् । तेषां विष्णुप्रवेशेनास्यास्तु तदप्रवेशेन । तत्र लयं विना इत्यर्थः । अथ वा लयक्रमे सर्वापेक्षया उत्तरा चरमा प्रकृतिस्तस्याः । उत्तरोत्तरमिति पाठेन उत्तरा प्रकृतिः उत्तरं भोगं भुंक्ते इत्यन्वयः । कुत इत्याकांक्षायां श्रिय इत्यनुक्त्वा उत्तरेत्युक्तम् । उदुत्कर्षेण प्राणाद्यपेक्षयाप्यतिशयेन तरति संसारमित्युत्तरा । प्राणाद्या उपासनया मुच्यन्ते । अस्यास्त्वनुपोष्यैवामृतत्वम् । तदपि कुतः? यतः सा उत्तरा उत्कर्षेण तीर्णा नित्युमुक्तेत्यर्थः । तदपि कुतः? यतः उत्तरा उदा निर्दोषत्वेनोच्छब्दवाच्यः परमात्मा तस्योदितिनामा ''स एषः सर्वेभ्यः पाप्मेभ्यः उदित'' इति श्रुतेः तेन सहैव तरति प्लवते सर्वत्र गच्छति प्रलयार्णवे वा तरति तृ प्लवनतरणयोरिति धातोः देशतः कालतश्च परमात्मना समव्याप्ता इत्यर्थः । तत्किं तेन समैव । न यतः उत्तरा उदा परमात्मना तदीयानाद्यनन्तप्रसादेनैव तरति संसारं तत्प्रसादादेव नित्यमुक्तेत्यर्थः ।

अथ चतुर्मुखेतरदेवानां मोक्षसिध्यर्थं विष्णुप्रवेशाप्रवेशप्रतिपादनाय सूत्रं **ओं तानि परे तथा ह्याह**। एषां देवानां भूतेषु लय उक्तस्तानि प्राणद्वारा परे परमात्मनि लीयन्ते। ''सर्वे देवाः प्राणमाविश्य देवे मुक्ता लये परमे यान्त्यचिन्त्ये'' इति कौषारवश्रुतिराह। एतत्तात्पर्यमाह उत्तरेषु इत्यादि प्रविश्यैव इत्यन्तेन सपादश्लोकेन । यावद्वायुं वायुपर्यन्तदेवा उत्तरेषूत्तरेषु स्वापेक्षया उत्तमोत्तमेषु प्रविश्य तद्वारा वायुं प्रविशन्ति वायुश्च विष्णुं प्रविश्य एवं परंपरया विष्णुं प्रविश्य भोगान्भुंजते इत्यर्थः ।।७।।

अथ देवानां मुक्तावपि भगवदधीनत्वं प्रतिपादयत्सूत्रं **ओं अविभागो वचनात्**। यन्मुक्तानां सत्यकामादित्वं तत्परमेश्वरकामाविभागेन तदिच्छानुसारेणैव न तु स्वातन्त्र्येणेत्यर्थः। ''कामेन मे काम आगात् हृदयाद् हृदयं मृत्योः'' (तै.आ.३-१५-४)इति वचनात् ''मुक्तानां सत्यकामत्वं सामर्थ्यं च परस्य तु। कामानुकूलकामत्वं नान्यत्तेषां विधीयते'' इति ब्राह्मे । एतत्तात्पर्यमाह विष्णुं प्रविश्यैव भोग इति। यो यं मुक्तानामुत्तरोत्तरो भोगः स विष्णुं प्रविश्यैव प्रवेशश्चेच्छाद्वारकः। तदिच्छाविषयभावेनैव न तु स्वातन्त्र्येणेत्यर्थः।।८।।

एवं देवानां साक्षात्परंपरया भगवति लयरूपं मोक्षमुक्त्वा मनुष्याणां मुक्त्यर्थं देहोत्क्रमणस्य अज्ञजनमरणविलक्षणत्वेन वैशिष्ट्यप्रतिपादनार्थं अधिकरणमारभते **ओं तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया** । ज्ञानिनामुत्क्रान्तिकाले तदोकसः भगवदोकसः हृदयस्याग्रं तस्य प्रज्वलनं प्रकाशनं भवति। ''तस्य हृदयस्य अग्रं प्रद्योतते'' (बृ.उ.६-४-२)इति श्रुतेः। ततो ज्ञानी तेन प्रकाशेन प्रकाशितनाडीद्वारा सन्दोहान्निष्क्रमति। कुत एतत् ? विद्यासामर्थ्यात् भगवत्साक्षात्कारसामर्थ्यात् । यदि विद्यासामर्थ्यादेवं उत्क्रमणं तर्हि ज्ञानिनश्चरमदेहत्याग एवैतत्कुतः प्रथममरणेऽपि तत्कुतो न भवतीत्यत उक्तं तच्छेषागत्यनुस्मृतियोगाच्च इति। तस्या विद्यायाः शेषभूतात्तदंगरूपायाः गत्यनुस्मृतित्वं हृदयमारभ्य ब्रह्मपर्यन्तं या गतिरर्चिरादिमार्गेण गम्यं च तस्योत्क्रमणकाले स्मरणाच्च गत्यनुस्मृतिश्च प्रारब्धकर्मावसान एव न तु मरणान्तरे।

ज्ञानिनां कर्मयुक्तानां कामत्यागक्षयो यदा।
विष्णुमाया तदा तेषां मनो बाह्यं करोति हि।। इति स्मृतेः।

''यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः (भ.गी.८-६)इति वचनात् । गत्यनुस्मरणमपि प्राप्तिकारणं ज्ञानशेषत्वेनैव न तु तत्समकक्षितयेति । न केवलमेतावन्मात्रेणैवमुत्क्रमणं किं तर्हि हार्दानुगृहीतः। हृदयस्थपरमात्मानुग्रहबलात् कया नाड्या शताधिकया। हृदयस्थशतनाड्यपेक्षया अधिकया सुषुम्नानाडीतयेत्यर्थः। ''शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति'' इति

ज्ञानिन एव ब्रह्मनाड्योत्क्रमणस्योक्तत्वात् । ननु प्रकाशितद्वारा गच्छतीत्युक्तम् । तत्र नाड्यन्तः किं तमसैव गच्छति तर्हि अज्ञमरणसाम्यं यदि तत्रापि प्रकाशस्तर्हि द्वारपदवैय्यर्थ्यमित्यतः सूत्रं **ओं रश्म्यनुसारी**। निष्क्रामति । "सहस्रं वा आदित्यस्य रश्मयः आसु नाडीष्वाततास्तत्र श्वेतः सुषुम्नो ब्रह्मयानः सुषुम्नायामाततस्तत्प्रकाशेनैष निर्गच्छति" इति पौत्रायणश्रुतिः। अत एव नाड्यन्तर्गतस्य प्रकाशान्तरत्वान्न द्वारपदवैय्यर्थ्यम्। तदुक्तं " निष्क्रामति यदा ज्ञानी तदा विष्णोः स्वतेजसा। द्योत्यते हृदयस्याग्रं तेन द्वारेण केशवः । निष्क्रान्तो जीवमादाय प्राण एनमनुव्रजेत्" इति।

उक्तमाक्षिप्य समादधत्सूत्रं **ओं निशि नेति चेन्न सम्बन्धात्** । रात्रौ रश्म्यभावात्तदा ज्ञानिन एवमुत्क्रमणं न युक्तम् । न च तदा ज्ञानि नोत्क्रामतीति वाच्यम् । कर्मपर्यवसाने क्षणमप्यवस्था-नायोगादिति चेन्न । रश्मीनां सर्वदा सम्बन्धात्कियत्कालं सम्बन्ध इति जिज्ञासायां सूत्रं **यावद्देहभावित्वाद्दर्शयति च**। यावद्देहो विद्यते तावद्रश्मि सम्बन्धो अस्त्येव। "संसृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यत्येतैः प्रवर्त्तते इति माध्यन्दिनायनश्रुतिः। एतेन सर्वत्र रश्मिसम्बन्धप्रतिपादनेनान्यदपीत्थं सिद्धमित्यर्थप्रतिपादकं सूत्रं **ओं अतश्चायनेऽपि हि दक्षिणे**।

"दक्षिणे गमनाद्याति स्वर्गं ब्रह्मोत्तरायणे ।" इत्युक्तावपि ज्ञानिनो दक्षिणायनेऽपि मरणं युज्यते । "शतं पंचैकसूर्यस्य दक्षिणायनरश्मयः। तावन्त एव निर्दिष्टा उत्तरायण रश्मयः। ते सर्वे देहसम्बद्धा सर्वदा सर्वदेहिनाम् । महर्लोकादिगंतारः उत्तरायणरश्मिभिः। निर्गच्छन्तीतरैश्चापि यैरेष्टव्येतरा गतिः। उत्तरं दक्षिणमिति ते एव तु निगद्यते। न तु कालविशेषोऽस्ति ज्ञानिनां नियमात्फलम् । ददाति कालेऽनुगुणैः फलं किंचिद्विशिष्यते। अत्युत्तमानां केषांचिन्न विशेषोऽस्ति कालत" इति नारायणतन्त्रे। भीष्मादीनामुत्तरायणप्रतीक्षणं तु किंचित्कालकृतविशेषार्थमेव। तदुत्तमानामपि सर्वकाले गतिदर्शनादिति भावः ।।९।।

एतत्तात्पर्यमाह **उत्क्रम्य मानुषा मुक्तिं यान्ति** इति। मनुष्योत्तमाः ब्रह्मनाड्योत्क्रम्य विमुक्तिं यान्ति प्राप्नुवन्तीत्यर्थः। मानुषा इत्यस्य व्यावर्त्यमाह देहक्षयात्सुरा यान्तीति स्वोत्तमेषु प्रवेशरूपलयेन देहक्षयात्सुरा विष्णुं यान्तीति सर्वलयक्रमो पूर्वमेवोक्तमिति भावः। अथ ब्रह्मप्राप्तौ गत्यनुस्मरणादेरवश्यत्वप्रतिपादनाय सूत्रं **ओं योगिनः प्रति स्मर्येते स्मार्ते चैते**। न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते किन्तु ज्ञानयोगिनः कर्मयोगिनश्च ज्ञानकृर्मकृते अपि । "अग्निर्जोतिरहः शुक्ल षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः। धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते" (भ.गी.८.२४-२५)इत्यत्र ब्रह्मविद इति योगीति विशेषणात् । एते च गती स्मार्ते स्मृत्यारूढे एव भवतः मरणसमये स्मृते एव प्राप्येते नान्यथेत्यर्थः।

गत्यनुस्मरणाद्ब्रह्म चन्द्रं वा गच्छति ध्रुवम् ।
अननुस्मरतः काले स्मरणं प्राप्य वै गतिः ।। इत्यध्यात्मे।

एतत्तात्पर्यमाह **उत्क्रम्य मानुषा मुक्तिं यान्ति** इति। उत् ऊर्ध्वं क्रम्यते आक्रम्यते तदुक्तं मुमुक्षुणा गम्यते ऊर्ध्वतो गत्यादिकम्। ऋहलोर्ण्यत् (पा.सू.३-१-१२४)इति ण्यत्प्रत्यये अत उपधायां (पा.सू.७-२-११६)इत्युपधा वृद्धौ मितां ह्रस्वः (पा.सू.६-४-९२) इत्युपधाह्रस्वः। तस्योत्क्रमस्य मा ज्ञानं मरणकालीनमनुसन्धानं एषान्ते उत्क्रम्यमाः। ते च ते अनुषाश्चेत्युत्क्रम्यमानुषाः। वसनं उषुः वास इत्यर्थः। नास्ति उषो येषां ते अनुषाः। वस निवास इत्यस्मात् घञर्थे कविधानमिति भावे कः। कित्वात् वचिस्वपियजादीनां किति(पा.सू.६-१-१५) इति यजादित्वेन सम्प्रसारणम्। यजिर्वापि बहिश्चैव तसिर्वेञ इत्यपि । वेञ् वदिश्वयति चैव यजाद्याषुरिमे न वा इति यजादिषु पाठात् । ततः शासिवसिघसीनां च (पा.सू.८-३-६०) इति षत्वम् । स्वर्गेभ्योर्ध्वलोकमार्गाद्यनु-सन्धानवतस्तत्र तत्र चिरवासरहिताः प्रारब्धकर्मणः क्षीणत्वेन देहे च वासरहिताःसन्तो मुक्तिं यान्ति। के यान्तीत्यतो यान्ति देहक्षयात्सुरा इत्युक्तत्वादर्थान्मनुष्या एवैवंविधा यान्तीत्युक्तं भवति।।

**।। इति नारायणकृतावणुभाष्यप्रवचने चतुर्थ्यध्यासम्बन्धो द्वितीयश्चरणोत्यगात् ।।**

**मळगी –** मुक्तजीवानामुत्तरोत्तरभोगप्रकारमुक्त्वा इदानीं ब्रह्मणो भोगप्रकारमाह **वायुः** इति। **वायुः** ब्रह्मपदं ततो लक्ष्मीं प्राप्य अथवा वायुशब्देन मुक्तब्रह्मरूपवायोर्ग्रहणे सोऽपि मां प्राप्य तदाज्ञया **विष्णुं प्रविश्यैव** भोगाननुभवतीति पूर्वेणान्वयः। **उत्तरोत्तरं** उत्तरोत्तरकल्पेषु मोक्षं गन्तारो ये सुराः देवाः। ते देहक्षयादिति ल्यब्लोपनिमित्ता पंचमी । "आग्नेय्यान्ये धारणया देहं दग्ध्वा परं पदम्। यान्ति देवाः समस्ताश्च" इति प्रमाणप्रदर्शितदेहक्षयं देहनाशं प्राप्य। वायुद्वारा लक्ष्मीं प्रविश्य भोगाननुभवन्ति। **भोगाश्च उत्तरोत्तरमेव** उत्तमोत्तमानामेवेत्युत्तरोत्तरपदमावृत्य योज्यम् । **मानुषाः** मनुष्योत्तमाः। **उत्क्रम्य** विशिष्टोत्क्रमणं प्राप्य **मुक्तिं** मोक्षं **यान्ति** प्राप्नुवन्ति।।४।।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां चतुर्थाध्यायस्य द्वितीयः पादः ।।**

**लिंघेरी –** मुक्तजीवस्योत्तरोत्तरभोगप्रकारमुक्त्वा इदानीं ब्रह्मणो भोगप्रकारमाह **वायुः** इति। **वायुः** मुक्तरूपः विष्णुं प्रविश्य भोगान्भुञ्जते। एवं उत्तरोत्तरं भवति । मानुषाः देहादुत्क्रम्य मुक्तिं यान्ति । **सुराः** देवाः । **देहक्षयात्** देहनाशात् मुक्तिं यान्ति।।४।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां चतुर्थाध्यायस्य द्वितीयः पादः ।।**

**नारायणपण्डित–** वायुर्विरिंचः । तत्पर्यन्तेषु उत्तमेषु क्रमात् देहक्षयं प्राप्य तेषु च प्रविश्यैव तदन्तः ते स्वोत्तमानामन्तर्वा बहिर्वा भोगानानन्दादीन् भुञ्जते एवेति वाङ्मनसिदर्शनाच्छब्दाच्च इत्यादिनयार्थः। वायुर्विरिंचिस्तु विष्णौ देहक्षयमाप्य तं प्रविश्यैव तद्भिन्नभोगान् भुंक्ते इति सोऽध्यक्षे

तदुपगमादिभ्य इति नयार्थः। स च तैर्भुज्यमानो भोगो विषयानुभवः उत्तरोत्तरं तारतम्यश्रुत्यनुसारात् तरतमभावेन भवतीत्यर्थः अविभागो वचनाच्चेति नयार्थः। मानुषास्तु देहादुत्क्रम्य सूत्रोक्तरीत्या उत्क्रमणं प्राप्य मुक्तिं यान्तीति तदोकोग्रज्वलनमित्यादेरर्थः। **अधिकरणानि १० सूत्राणि २२**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां चतुर्थाध्यायस्य द्वितीयः पादः ।।**

**गूढकर्तृक – वायुः** विरिंचः। विरिंचपर्यन्तेषु उत्तमेषु क्रमाद्देहलयं प्राप्य ते चाप्रविश्यैव तदन्तस्तेषां स्वोत्तमानामन्तर्वा बहिर्वा भोगानानन्दादीन् भुंजते एवेति वाङ्मनसीत्यादिनयार्थः। वायुर्विरिंचस्तु विष्णौ देहक्षयमाप्य तं प्रविश्यैव तद्भिन्नभोगान् भुंजते इति सोऽध्यक्ष इति नयार्थः। स च तैर्भुज्यमानो भोगविषयानुभवः उत्तरोत्तरं तारतम्यश्रुत्यनुसारात्तरतमभावेन भवतीत्यर्थः। अयं चाविभागादिनयार्थः। मानुषास्तु देहादुत्क्रम्य सूत्रोक्तरीत्या उत्क्रमणं प्राप्य मुक्तिं यान्ति तदोकोग्रज्वलमित्यादेरर्थः।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां चतुर्थाध्यायस्य द्वितीयः पादः ।।**

**अणुभाष्यम्**

**अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।**
**यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात्सहामुना ।।५।।**

**सत्यनाथीया–** अर्चिरादिनेतिषट्कसमुदायार्थमाह **अर्चिरादि** इत्येकश्लोकेन । प्रतीकालम्बनाः नरोच्चाद्या । **उत्क्रम्य** जीवाः देहोत्क्रमणानन्तरं अर्चिरादिना मार्गेण **वायुं प्राप्य** कार्यं प्राप्य। ब्रह्मलोके तिष्ठन्ति । अप्रतीकालम्बना अर्चिरादिमार्गेण वायुं प्राप्य । तेन च परं परमसमीपे तिष्टन्ति। उभये काले कार्यं प्राप्य तदुपदेशं च प्राप्य ब्रह्मलोकात् ब्रह्मलोकं विहायामुना कार्यब्रह्मणा सहैव जनार्दनम् जनननाशकं मुक्तिप्रदं वासुदेवं प्राप्यतीति।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां चतुर्थाध्यायस्य तृतीयः पादः ।।**

**तत्वमञ्जरी–** मार्गो गम्यं चैतत्पादार्थ इति भावेन एतत्पादीयाधिकरणानां संग्रहेणार्थमाह – **अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् । यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात् सहामुना** इति।

अयं विवेकः। द्विविधो हि मार्गः। अर्चिर्मार्गो देवानां लयमार्गश्चेति। तद्द्वयमपि अर्चिरादि-पथेत्यनेन संगृह्यते। आदिपदेन प्रवेशमार्गस्य ग्रहणात् । पथिभ्यामिति वाच्ये पथेत्येकवचनं जात्यभिप्रायम् । ऋक्पूरब्धूः पथामानक्षे (पा.सू.५-४-७४) इति समासान्तोऽनित्यः। ''स्रष्टृष्वेव तु सृज्यानां प्रवेशो ब्रह्मणो लये । देवानां मार्ग उद्दिष्टो नार्चिरादिर्न चोत्क्रम'' इत्यनुभाष्योक्तेः।

तथा चायमर्थः। उत्क्रान्ता नरोच्चाद्या हि उत्क्रान्तस्तु शरीरात् स्वात् गच्छत्यर्चिषमेव तु इत्यादिभाष्यस्थस्मृत्युक्तार्चिर्मार्गेण, उत्तमदेवाद्यास्तु "तस्मादशेषा गिरिजां प्रविश्य तयैव रुद्रं सह तेन वार्णी" इत्याद्यनुभाष्योक्तप्रवेशमार्गेण वायुं प्राप्येति। अनेन अर्चिर्मार्गमात्रस्यैव एतत्पादोक्तत्वेऽपि प्रवेशमार्गः पूर्वपादार्थः प्रसङ्गादत्रानूदितो ब्रह्मप्राप्तिकथनार्थमिति बोध्यम् ।।१-४।।

**वैद्युतेनैव ततस्तच्छ्रुतेः** इति नयस्यार्थः **तेन जनार्दनं यान्ति** इति। तेन वायुना नान्येनेत्यर्थः। "स एनान् ब्रह्म गमयति" इति श्रुतेरिति भावः ।।५।।

यत्तु गम्यनिरूपणार्थं **कार्यं बादरिः** इत्यादिसूत्रदशकमधिकरणं तत्र परं जैमिनिः मुख्यत्वात् इत्याद्युत्तरसूत्रपञ्चकस्याप्यर्थः - **तेन जनार्दनं यान्त्युत्तमाः** इति।

"अप्रतीका देवतास्तु ऋषीणां शतमेव च । राज्ञां तु शतमुद्दिष्टं गन्धर्वाणां शतं तथा।" इत्युक्तदेवादिरूपाप्रतीकालम्बना उक्ताः तेन वायुना साक्षादेव जनार्दनं यान्ति, जन्मरहितं संसारार्दनं परं ब्रह्म यान्तीत्यर्थः। **कार्यं बादरिः** इत्यादिसूत्रपञ्चकस्यार्थो **नरोच्चाद्याः ब्रह्मलोकात्सहामुना** इति। देवाद्यन्ये मानुषोत्तमाद्याः ब्रह्मलोकात्, ल्यब्लोपे पञ्चमी, ब्रह्मलोकं चतुर्मुखाधिष्ठितं लोकं प्राप्यामना चर्तुमुखब्रह्मणा सह तेन वायुना जनार्दनं यान्तीत्यर्थः।

अप्रतीकाश्रया ये हि ते यान्ति परमेव तु ।
स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद् ब्रह्मसलोकताम् ।
ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदम् ।। इति गारुडोक्तेरिति भावः ।।६।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्याख्यायां चतुर्थाध्यायस्य तृतीयः पादः ।।**

**आनन्दमाला** - उत्क्रान्तानां मार्गस्तद्गम्यं चास्मिन्पाद उच्यते।

"अर्चिरादिना तत्प्रथितेः" (४-३-१) इत्यारभ्य "वैद्युतेनैव ततस्तच्छ्रुतेः" (४-३-६) इत्यन्तानि मार्गसूत्राणि, "परं जैमिनिर्मुख्यत्वात्" (४-३-१२) "अप्रतीकालम्बनान् नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च"(४-३-१५) "कार्यं बादरिरस्य गत्युपपत्तेः"(४-३-७) "कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्" (४-३-१०) इत्यादीनि गम्यसूत्राणि चेति पादपरिपठितानि सर्वाणि व्याख्याति - **अर्चिरादि पथा वायुं प्राप्य तेन जनार्दनम् । यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात् सहामुना** इति। अयं भावः - अतीतपादे सर्वेषामप्यधिकारिणां स्थूलदेहादुत्क्रमणमस्तीत्युक्तम् । ते चात्र व्याप्तिदृष्टयो अव्याप्तिदृष्टयश्चेति द्विविधाः। तत्र व्याप्तिदृष्टयस्तु ऋषिगन्धर्वप्रवरपूर्वका देवपर्यन्ता उच्यन्ते । अव्याप्तिदृष्टयो मनुष्योत्तमाद्या ऋषिगन्धर्वान्ता एव। उत्तमा अधमाश्चेति यावत् । ते तावदुभयेऽपि अर्चिरादिना पथा ऊर्ध्वं गत्वा

अन्ततः विद्युत्पतिमेव परं वायुं प्राप्नुवन्ति। ततस्तेनैव गमयित्रा ब्रह्माख्यं गम्यं यान्तीत्येतावत् समम्। तत्र विशेषः - व्याप्तिद्रष्टार उत्तमाः साक्षात् परमेव ब्रह्म जनार्दनं प्रथमत एव यान्ति। अन्ये नरोत्तमपूर्वकाः कार्यमेव ब्रह्म चतुर्मुखं तत्काले यान्ति। तत्र पुनर्यावद्ब्रह्मलयं स्थित्वा तल्लोकादमुना ब्रह्मणा सह गच्छन्तस्तं जनार्दनमपि यान्तीत्येव विशेषः।

अर्चिरादि इति क्रियाविशेषणम् । तदादिप्रथितेन पथेत्यर्थः। तत्रादिशब्दपरिगृहीताश्चाति-वाहिकाद्या विद्यन्ते। तथा हि ब्रह्मतर्के

उत्क्रान्तस्तु शरीरात् स्वाद् गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नातिवाहिकः।

ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा । तटितं वरुणं चैव प्रजापं सूर्यमेव च ।

सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा । ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् । इति।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां चतुर्थाध्यायस्य तृतीयः पादः ।।**

**नृसिंहतीर्थ** – तत्र ब्रह्मप्राप्तिमार्गेण अर्चिषः आदित्वप्रतिपादनाय अर्चिरादिना तत्प्रथितेरिति अद्यमधिकरणम्। ब्रह्मप्राप्तिमार्गे तटितः संवत्सरानन्तर्यप्रतिपादकं तृतीयमधिकरणम् । द्वितीयप्राप्यस्य वायोरातिवाहिकत्वसमर्थनाय चतुर्थमधिकरणम् । ब्रह्मप्राप्तौ मुख्यवायोरुत्तमत्वोपपादनाय पंचमाधिकरणम्। तेषां तात्पर्यमाह **अर्चिरादिपथा वायुं प्राप्य** इति। एवं मार्गं निरूप्य तेन मार्गेण गतानां च देहलयं च तेषां गम्यस्य प्रतिपादकस्य षष्ठाधिकरणस्य तात्पर्यम् **तेन जनार्दनं** इत्यादिसमग्रं वाक्यम् । **नरोच्चाद्याः** मनुष्योत्तमाद्याः प्रतीकालम्बनाः। तेन वायुना ब्रह्मलोकात्। ल्यब्लोपनिमिता पंचमी। ब्रह्मलोकं प्राप्य अमुना ब्रह्मणा सह जनार्दनं प्रलये इति शेषः। यान्तीत्यर्थः। उत्तमाः अप्रतिकालम्बनाः तेन वायुना जनार्दनं प्रथमं प्राप्य इति शेषः। अनन्तरं बह्मलोकं प्राप्य अमुना ब्रह्मणा सह जनार्दनं यान्तीत्यर्थः। उत्तमाः देवाः। ब्रह्मलोकं प्राप्य ब्रह्मशरीरं प्राप्य तत्र लीनदेहा इति यावत् । अमुना ब्रह्मणा सह जनार्दनं यान्तीति योज्यमिति।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने चतुर्थे तृतीयः पादः ।।**

**श्रीनिवासतीर्थीया–** अर्चिरादिना तत्प्रथितैरित्यधिकरणषट्कार्थं तात्पर्यतः संगृह्णाति। **अर्चिरादिपथा वायुं** इति। नरोच्चाद्याः मुक्तियोग्याः उत्तमजीवाः उत्क्रोत्क्रमणानन्तरं अर्चिरादिना पथा मार्गेण वायुं भारतीपतिं प्राप्य तेन वायुना कार्यब्रह्म प्राप्य ब्रह्मलोके तिष्ठन्ति प्रतीकालम्बनाः। अप्रतीकालम्बनास्तु अर्चिरादिपथा वायुं तेन च परं ब्रह्म प्राप्य कार्यब्रह्मसमीपे तिष्ठन्ति। ते उभये

च लयकार्यकाले कार्यं ब्रह्म तदुपदेशं प्राप्य ब्रह्मलोकादिति ल्यप्लोपनिमित्ता पंचमी। ब्रह्मलोकं विहायामुना कार्यब्रह्मणा सहैव जनार्दनं जनान् अर्दयतीति जनार्दनो वासुदेवस्तं यान्तीत्यर्थः। ''साकांक्षाणि वाक्यानि भवन्ति'' इति न्यायाद्योग्याध्याहारो न दोषायेति ज्ञातव्यम् ।

।। इत्यणुभाष्यविवरणे चतुर्थाध्यायस्य तृतीयः पादः ।।

**छलारी –**

**हरिः ओम्**
**समुद्गिरन्तं श्वसतो नस्तो विद्या अशेषतः।**
**मुखादपि हयग्रीवं वन्दे सर्वेष्टसिद्धये।।१।।**

ब्रह्मनाड्योयत्क्रान्तानां ज्ञानिनां ब्रह्मप्राप्तौ मार्गो गम्यं च अस्मिन्पादे निरूप्यते ।

**ओं अर्चिरादिना तत्प्रथितेः ओं**

ज्ञानी अर्चिरादिना मार्गेण गच्छति। कुतः? तस्य उक्तार्थस्य प्रथितेः श्रुतौ स्मृतौ च प्रसिद्धेः इति सूत्रार्थः

अत्र प्राणिनां ऊर्ध्वगमनार्थं द्वौ मार्गौ । तत्र एकस्मिन् मार्गे अर्चिर्लोकः प्रथमः। मार्गान्तरे वायुलोकः प्रथमः। ''तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरन्ह आपूर्यमापक्षम्'' (छां.उ.५-१०-१) ''यदाह वै पुरुषो अस्माल्लोकात् प्रैति स वायुमागच्छति'' (बृ.उ.७-१०-१) इति उभयविधश्रुतेः। अतो मार्गानिर्णयात् गत्यनुस्मृत्ययोग इति प्राप्ते –

न मार्गभेदेनोभयोः प्राथम्यं कल्प्यम् । किन्तु एक एव विपश्चितां मार्गः। स च अर्चिरादिः। ''द्वावेव मार्गौ प्रथितौ अर्चिरादिर्विपश्चिताम् । धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात्'' इति स्मृतेः।

न च ''स वायुमागच्छति'' इति श्रुतिविरोधः। स्मृतिसहितैतच्छ्रुतिविरोधेन अर्चिरनन्तरार्थ-त्वोपपत्तेः। अतो गत्यनुस्मृतिसम्बन्धः इति सिद्धान्तः कृतः।।१।।

**ओं वायुशब्दादविशेषविशेषाभ्याम् ओं**

वायुलोकस्यैव द्वितीयप्राप्यत्वं, कुतः ? अविशेषविशेषाभ्यां – सामान्यतः विशेषतश्च वायुशब्दात् वायोः प्राप्यत्वश्रुतेरिति सूत्रार्थः।

अत्र पूर्ववदधिकारिभेदेन मार्गभेदात् वायुलोकस्येव अहर्लोकस्यापि द्वितीयप्राप्यत्वं अस्माल्लोकात्प्रैति। ''स वायुमागच्छति'' (छां.उ.५-१०-१) इति ''अर्चिषो अहः'' (बृ.उ.७-१०-१) इत्युभयत्रापि श्रुतिसद्भावादिति प्राप्ते –

अन्ततः विद्युत्पतिमेव परं वायुं प्राप्नुवन्ति। ततस्तेनैव गमयित्रा ब्रह्माख्यं गम्यं यान्तीत्येतावत् समम्। तत्र विशेषः – व्याप्तिद्रष्टार उत्तमाः साक्षात् परमेव ब्रह्म जनार्दनं प्रथमत एव यान्ति। अन्ये नरोत्तमपूर्वकाः कार्यमेव ब्रह्म चतुर्मुखं तत्काले यान्ति। तत्र पुनर्यावद्ब्रह्मलयं स्थित्वा तल्लोकादमुना ब्रह्मणा सह गच्छन्तस्तं जनार्दनमपि यान्तीत्येव विशेषः।

अर्चिरादि इति क्रियाविशेषणम् । तदादिप्रथितेन पथेत्यर्थः। तत्रादिशब्दपरिगृहीताश्चातिवाहिकाद्या विद्यन्ते। तथा हि ब्रह्मतर्के

उत्क्रान्तस्तु शरीरात् स्वाद् गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नातिवाहिकः।

ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा । तटितं वरुणं चैव प्रजापं सूर्यमेव च ।

सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा । ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् । इति।

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्री ब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां चतुर्थाध्यायस्य तृतीयः पादः ।।**

**नृसिंहतीर्थ** – तत्र ब्रह्मप्राप्तिमार्गेण अर्चिषः आदित्वप्रतिपादनाय अर्चिरादिना तत्प्रथितेरिति अद्यमधिकरणम्। ब्रह्मप्राप्तिमार्गे तटितः संवत्सरानन्तर्यप्रतिपादकं तृतीयमधिकरणम् । द्वितीयप्राप्यस्य वायोरातिवाहिकत्वसमर्थनाय चतुर्थमधिकरणम् । ब्रह्मप्राप्तौ मुख्यवायोरुत्तमत्वोपपादनाय पंचमाधिकरणम्। तेषां तात्पर्यमाह **अर्चिरादिपथा वायुं प्राप्य** इति। एवं मार्गं निरूप्य तेन मार्गेण गतानां च देहलयं च तेषां गम्यस्य प्रतिपादकस्य षष्टाधिकरणस्य तात्पर्यम् **तेन जनार्दनं** इत्यादिसमग्रं वाक्यम् । **नरोच्चाद्याः** मनुष्योत्तमाद्याः प्रतीकालम्बनाः। तेन वायुना ब्रह्मलोकात् । ल्यब्लोपनिमिता पंचमी। ब्रह्मलोकं प्राप्य अमुना ब्रह्मणा सह जनार्दनं प्रलये इति शेषः। यान्तीत्यर्थः। उत्तमाः अप्रतिकालम्बनाः तेन वायुना जनार्दनं प्रथमं प्राप्य इति शेषः। अनन्तरं बह्मलोकं प्राप्य अमुना ब्रह्मणा सह जनार्दनं यान्तीत्यर्थः। उत्तमाः देवाः। ब्रह्मलोकं प्राप्य ब्रह्मशरीरं प्राप्य तत्र लीनदेहा इति यावत् । अमुना ब्रह्मणा सह जनार्दनं यान्तीति योज्यमिति।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यव्याख्याने चतुर्थे तृतीयः पादः ।।**

**श्रीनिवासतीर्थीया–** अर्चिरादिना तत्प्रथितैरित्यधिकरणषट्कार्थं तात्पर्यतः संगह्णाति। **अर्चिरादिपथा वायुं** इति। नरोच्चाद्याः मुक्तियोग्याः उत्तमजीवाः उक्तोत्क्रमणानन्तरं अर्चिरादिना पथा मार्गेण वायुं भारतीपतिं प्राप्य तेन वायुना कार्यब्रह्म प्राप्य ब्रह्मलोके तिष्ठन्ति प्रतीकालम्बनाः। अप्रतीकालम्बनास्तु अर्चिरादिपथा वायुं तेन च परं ब्रह्म प्राप्य कार्यब्रह्मसमीपे तिष्ठन्ति। ते उभये

च लयकार्यकाले कार्यं ब्रह्म तदुपदेशं प्राप्य ब्रह्मलोकादिति ल्यप्लोपनिमित्ता पंचमी। ब्रह्मलोकं विहायामुना कार्यब्रह्मणा सहैव जनार्दनं जनान् अर्दयतीति जनार्दनो वासुदेवस्तं यान्तीत्यर्थः। ''साकांक्षाणि वाक्यानि भवन्ति'' इति न्यायाद्योग्याध्याहारो न दोषायेति ज्ञातव्यम् ।

**।। इत्यणुभाष्यविवरणे चतुर्थाध्यायस्य तृतीयः पादः ।।**

**छलारी –**

**हरिः ओम्**
**समुद्गिरन्तं श्वसतो नस्तो विद्या अशेषतः।**
**मुखादपि हयग्रीवं वन्दे सर्वेष्टसिद्धये ।।१ ।।**

ब्रह्मनाड्योयत्क्रान्तानां ज्ञानिनां ब्रह्मप्राप्तौ मार्गो गम्यं च अस्मिन्पादे निरूप्यते ।

## ओं अर्चिरादिना तत्प्रथितेः ओं

ज्ञानी अर्चिरादिना मार्गेण गच्छति। कुतः? तस्य उक्तार्थस्य प्रथितेः श्रुतौ स्मृतौ च प्रसिद्धेः इति सूत्रार्थः

अत्र प्राणिनां ऊर्ध्वगमनार्थं द्वौ मार्गौ । तत्र एकस्मिन् मार्गे अर्चिर्लोकः प्रथमः। मार्गान्तरे वायुलोकः प्रथमः। ''तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरन्ह आपूर्यमापक्षम्'' (छां.उ.५-१०-१) ''यदाह वै पुरुषो अस्माल्लोकात् प्रैति स वायुमागच्छति'' (बृ.उ.७-१०-१) इति उभयविधश्रुतेः। अतो मार्गानिर्णयात् गत्यनुस्मृत्ययोग इति प्राप्ते –

न मार्गभेदेनोभयोः प्राथम्यं कल्प्यम् । किन्तु एक एव विपश्चितां मार्गः। स च अर्चिरादिः। ''द्वावेव मार्गौ प्रथितौ अर्चिरादिर्विपश्चिताम् । धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात्'' इति स्मृतेः।

न च ''स वायुमागच्छति'' इति श्रुतिविरोधः। स्मृतिसहितैतच्छ्रुतिविरोधेन अर्चिरनन्तरार्थ-त्वोपपत्तेः। अतो गत्यनुस्मृतिसम्बन्धः इति सिद्धान्तः कृतः।।१।।

## ओं वायुशब्दादविशेषविशेषाभ्याम् ओं

वायुलोकस्यैव द्वितीयप्राप्यत्वं, कुतः ? अविशेषविशेषाभ्यां – सामान्यतः विशेषतश्च वायुशब्दात् वायोः प्राप्यत्वश्रुतेरिति सूत्रार्थः।

अत्र पूर्ववदधिकारिभेदेन मार्गभेदात् वायुलोकस्येव अहर्लोकस्यापि द्वितीयप्राप्यत्वं अस्माल्लोकात्प्रैति। ''स वायुमागच्छति'' (छां.उ.५-१०-१) इति ''अर्चिषो अहः'' (बृ.उ.७-१०-१) इत्युभयत्रापि श्रुतिसद्भावादिति प्राप्ते –

नात्र मार्गभेदः किन्तवेक एव मार्गः। तत्रापि अर्चिषो वायुं गच्छति । न च "अर्चिषोऽहः" इति श्रुतिविरोधः वायोरनन्तरं अहर्लोकस्य प्राप्तिसम्भवात्। कुत एतदिति चेन्न । "अस्माल्लोकात्प्रैति स वायुमागच्छति" इति श्रुतौ सामान्यतः वायोः प्रथमप्राप्यत्वोक्तेः। तस्माच्च पूर्वोक्तविशेषवचनबाधेन वायोः अर्चिरनन्तरप्राप्यत्वार्थत्वस्य न्याय्यत्वात् । "स इतो गतो द्वितीयां गतिं वायुमागच्छति" इति विशेषश्रुतेश्चेति सिद्धान्तः कृतः ।।२।।

## ओं तटितोऽधिवरुणः सम्बन्धात् ओं

तटितः - तटिल्लोकात् अधि उपरि वरुणः लोकः प्राप्यः। कुतः? सम्बन्धात् । "तटिता ह्यूह्यत" इति तस्योपरि सम्बन्धत्वश्रुतेः इति सूत्रार्थः।

अत्र वरुणतटिल्लोकयोरुभयोरपि संवत्सरलोकानन्तर्यम् । "मासेभ्यः संवत्सरात् वरुणलोकम्" (कौण्डिण्य) तथा "संवत्सरात् तटितमागच्छति" (गौपवन) इति उभयथापि श्रुतेः। मार्गभेदेनोभयोरपि संवत्रानन्तर्योपपत्तौ अन्यतरस्वीकारे कारणाभावात् । अतो मार्गानिर्णयात् तदनुस्मरणानुपपत्तिरिति प्राप्ते -

नोभयोरपि संवत्सरानन्तर्यं ग्राह्यम् । किन्तु एक एव मार्गः। तत्र संवत्सरानन्तरं तटितमेव गच्छति। न च श्रुत्यन्तरविरोधः। तटितोऽनन्तरं वरुणस्य प्राप्यत्वेन श्रुतेः तदर्थत्वोपपत्तेः। कुतः? "तटितो वरुण गच्छति। तटिता ह्यूह्यते वरुणलोकः" इति श्रुतेः। अतो मार्गैक्येनानुस्मरणमुपपद्यत इति सिद्धान्तः कृतः ।।३ ।।

## ओं आतिवाहिकस्तल्लिङ्गात् ओं

पूर्वोक्तो वायुः आतिवाहिकाख्यः न मुख्यः। कुतः ? पूर्वप्राप्यत्वलक्षणतल्लिङ्गादिति सूत्रार्थः। अत्र स वायुमागच्छतीति अर्चिरनन्तरं प्राप्यतयोक्तो वायुर्मुख्यः। वायुशब्दस्य तत्रैव मुख्यत्वात्। बाधकं विना मुख्यार्थत्यागायोगात् इति प्राप्ते -

आतिवाहिक एवायं वायुः न तु मुख्यः। कुतः? पूर्वप्राप्यत्वलिङ्गात् । मुख्यवायोश्च चरमप्राप्यत्वात् । किमत्र मानमिति चेत् । "उत्क्रान्तो विद्वान् परमभिगच्छन् विद्युतमेवान्तत उपगच्छति द्यौर्वाव विद्युत् । तत्पतिं वायुं उपगम्य तेनैव ब्रह्म गच्छति" इति श्रुतेः।

उत्क्रान्तस्तु शरीरात् स्वात् गच्छन्त्यर्चिषमेव तु।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः।

ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ।

सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ।

(ब्रह्मतर्क)इति स्मृतेरिति सिद्धान्तः कृतः ।।४।।

**ओं वैद्युतेनैव ततस्तच्छ्रुतेः ओं**

वायोरूर्ध्वं ईशादर्वाक् प्राप्योऽस्तीति च शङ्क्यम् । कुतः ? वैद्युतेन – विद्युत्पतिना वायुनैव, तच्छ्रुतेः – ब्रह्मगमनस्य श्रवणात् । ततः – तस्माद्धेतोः स एवान्ततः प्राप्य इति सूत्रार्थः ।

अत्र ब्रह्मणो अधस्तात् वायोरूर्ध्वं प्राप्योऽस्ति, तथाङ्गीकारे बाधकाभावादिति प्राप्ते –

विद्युत्पतिः वायुरेवान्तिमः प्राप्यः । तस्यैव ब्रह्मप्रापकत्वात् । अन्यस्य तदभावात् । कुतः ? "स एनान् ब्रह्म गमयति" (छां.उ.४-१५-६) इति श्रुतेः ।

"विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः । कुतोऽन्यस्य भवेच्छक्तिः तमृते प्राणनायकम् । (बृहत्तन्त्र)इति स्मृतेश्चे"ति सिद्धान्तः कृतः ।

तदेतदधिकरणपञ्चकस्य तात्पर्यमाह – **अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् । यान्ति** इति । उपलक्षणमेतत् । स्वोत्तमप्रवेशमार्गेणेत्यपि ज्ञेयम् । न चात्र मानाभावः ।

स्रष्टृत्वेन तु सृष्टानां प्रवेशो ब्रह्मणो लये ।
देवानां मार्ग उद्दिष्टः नार्चिरादिर्न चोत्क्रमः ।। इत्यनुव्याख्यानात् ।

इयमत्र योजना । उत्क्रान्ता नरोच्चाद्याः । सर्वेऽपि ज्ञानिनः अर्चिरादिमार्गेण । उत्तमाः देवास्तु तस्मादशेषा गिरिजां प्रविश्य तथैव रुद्रं सह तेन वाणीं इत्याद्यनुव्याख्यानोक्तस्वोत्तमप्रवेशमार्गेण विद्युत्पतिं वायुं प्राप्यं तेन चतुर्मुखं प्राप्य जनार्दनं यान्तीति ज्ञेयम् । अर्चिरादिमार्गस्यैव एतत्पादोक्तत्वेऽपि प्रवेशमार्गः पूर्वपादार्थः प्रसङ्गादत्रानूदितो ब्रह्मप्राप्तिकथनार्थमित्यवधेयम् ।।५।।

**ओं कार्यं बादरिरस्य गत्युपपत्तेः ओं**

"स एनान् ब्रह्म गमयति" (छां.उ.४-१५-६) इति श्रुतौ कार्यं ब्रह्म चतुर्मुखाख्यं वायुर्गमयतीत्युच्यते । इति बादरिराचार्यो मन्यते । ब्रह्मशब्दस्य ईशे मुख्यत्वात् कथमेवं व्याख्यानं इत्यत उक्तं अस्येति । चतुर्मुखमुक्तिपर्यन्तं बन्धस्य सत्वेन ततो अर्वाक् चतुर्मुखस्यैव गत्युपपत्तेरिति सूत्रार्थः ।

अत्र अर्चिरादिमार्गेण गतानां सर्वेषां कार्यब्रह्मप्राप्तिरेव, न परब्रह्म प्राप्तिः । "स एनान् ब्रह्म गमयति" इति श्रुतेः । न च वाच्यं ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात् परब्रह्मस्वीकारो युक्त इति ।

तथा प्रकृतेः बन्धो "ब्रह्मणा सह भिद्यते" इत्यादिना चतुर्मुखमुक्तिपर्यन्तं बन्धस्य सन्ततत्वेन ततो अर्वाक् चतुर्मुखस्यैव गत्युपपत्तेः। "यदि ह वा व परमभिपश्यति। प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखम्" इति श्रुतेः। सर्वेषां परब्रह्मप्राप्त्ययोग्यत्वस्य

"ऋते देवान् परं ब्रह्म कः पुमान् प्राप्नुयात् क्वचित्" (अध्यात्म) इति स्मृतिसिद्धान्तत्वाच्च इत्येकः पूर्वः पक्षः ।

सर्वेषां परब्रह्मप्राप्तिरेव न कार्यब्रह्मप्राप्तिः। "स एनान् ब्रह्म गमयति" इति ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात्। मुख्यार्थे च सम्भवति अमुख्यार्थस्वीकारायोगात् इत्यपरः पूर्वपक्षः।

एवं उभयथा पूर्वपक्षे प्राप्ते -

न सर्वान् कार्यं नयतीति श्रुत्यर्थो, नापि परमेवेति किन्तु मनुष्योत्तमादि प्रतीकालम्बनान् कार्यं ब्रह्म नयति। अप्रतीकालम्बनान् परं ब्रह्म नयति। कुतः ? सर्वेषां परब्रह्मप्राप्तिपक्षे गत्यनुपपत्यादिदोषस्य उक्तत्वात् । सर्वेषां कार्यब्रह्मप्राप्तिपक्षे च ब्रह्मशब्दामुख्यत्वादिदोषाणां उक्तत्वात् । न चोभयप्राप्तिपक्षे दोषद्वयापातः। "स प्रतीकाश्चतुर्मुखप्रतीकाः परमा हैते गच्छन्ति" इत्यादि प्रमाणबलेन सर्वस्योपपत्तेरिति सिद्धान्तः कृतः।।

तस्य तात्पर्यमाह - **तेन जनार्दनम्** इत्यादिना **अमुना** इत्यन्तेन । नरोच्चाद्याः मनुष्योत्तमाद्याः प्रतीकालम्बनाश्चेति शेषः। तेन - वायुना ब्रह्मलोकात् । ल्यब्लोपनिमित्ता पञ्चमी। ब्रह्मलोकं - सत्यलोकं प्राप्यं कार्यं ब्रह्म प्राप्येति यावत् । प्रथममिति शेषः। मुक्तवैकुण्ठस्थानगतं हरिं यान्ति। उत्तमाः - मुख्याः अप्रतीकालम्बनाः तेन वायुना साक्षादेव जनार्दनं अमुक्तवैकुण्ठस्थानगतं हरिं प्राप्य, प्रथममिति शेषः। अनन्तरं अमुना ब्रह्मणा सह लिङ्गभङ्गं प्राप्य जनार्दनं मुक्तवैकुण्ठस्थानगतं हरिं यान्तीत्यनुषङ्गः। तदुक्तमनुव्याख्याने

> सिद्धान्तनिर्णीतिकराः प्रतीकं देहादिकं तद्गतमेव ये नराः।
> उपासते ते पुरतः समाप्नुयुः ब्रह्माणमस्मान्मतिमाप्य विष्णुम् ।
> प्राप्स्यन्त्यतोऽन्येऽपि तमाप्य तस्मात् हरिं गताः मुक्तिभाजः परान्ते।। इति ।

देवास्तु प्रवेशमार्गेण ब्रह्मणा सह जनार्दनं यान्तीति अर्चिरादिपथेत्यत्रैवोक्तं इति द्रष्टव्यम् ।।६।।

**मदाचार्यमनोधाममध्वमानसमञ्चके।**
**शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां चतुर्थाध्यायस्य तृतीयः पादः।।**

**नारायणाचार्य-** श्रीगुरुभ्यो नमः। ब्रह्मनाड्योत्क्रान्तानां मार्गो गम्यं वास्मिन्पादे उच्यते। तत्र "तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्" (छां.उ.५-१०-१) इत्यर्चिषः प्राथम्यं प्रतीयते । श्रुत्यन्तरे च "यदा ह वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति"(बृ.उ.७-१०-१) इति वायोः प्राथम्यम् । अतो अन्यतरनिर्णयाभावात्कथमुत्क्रमणकाले तदनुस्मृतिरित्यत सूत्रं **ओं अर्चिरादिना तत्प्रथिते**:। अर्चिरादिः प्रथमो यस्य मार्गस्य तेनैव याति। देवयानमार्गे अर्चिष एव प्राथम्यमित्यर्थः। कुतः?

द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम् । धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात्।

इति तत्प्राथम्यस्यैव प्रथितत्वात्। वायुप्राथम्यश्रुतेरनन्तरार्थत्वेनोपपत्तेः। अतो अन्यतरपक्ष-निर्णयाद्युक्तमनुस्मरणमिति भावः। एतत्तात्पर्यमाह **अर्चिरादिपथा** इति। अर्चिरेवादिः प्रथमो यस्येत्येतादृशेन पथा यान्तीत्यर्थः। समासान्तविधेरनित्यत्वात् प्रसिद्ध ऋक्पूरब्धूःपथामनक्षे (पा.सू.५-४-७४) अप्रत्ययो न भवति । तस्यानित्यत्वे च पथामित्येतत्सूत्रस्थनिर्देश एव ज्ञापकः। अन्यथा पथानामित्यवक्षत् ।।१।।

नन्वेवमपि भवति सन्देहः "स वायुमागच्छति" (बृ.उ.७-१०-१)इति वायोर्द्वितीयत्वं श्रूयते। अर्चिषोऽहः इति अहर्लोकस्य द्वितीयत्वमित्यतः सूत्रं **ओं वायुशब्दादविशेषविशेषाभ्याम्** । "स वायुमाच्छति" इति श्रुतेः। वायोः सामान्यतः प्राथम्यावेदिकायाः प्रथितबलेन सर्वप्राथम्यस्य बाधितत्वेन द्वितीयस्थानापन्नस्य तस्य बाधकाभावात् । क्रत्वर्थहिंसाविधिबाधितस्य सामान्य-हिंसानिषेधस्य क्रतुबाह्यहिंसाविषयत्वेन व्यवस्थितिवत् । न केवलं सामान्यवचनादेवैतत्सिद्धं किन्तु "स इतो गतो द्वितीयां गतिं वायुमागच्छति। वायोरहरह्न आपूर्यमाणपक्षम्" इति विशेषवचनाच्च। एतत्तात्पर्यमाह **अर्चिरादि पथा वायुं** इति। अत्रार्चिरादीति भिन्नं पदम् । क्रियाविशेषबलमादौ अर्चिः प्राप्य वायुं प्राप्नोतीत्यर्थः ।।२।।

ननु तथाप्यापूर्यमाणपक्षाद्यान् "मासेभ्यः संवत्सरं संवत्सराद्वरुणलोकं वरुणलोकात्प्रजापतिलोकं" इति कौण्डिन्यश्रुतौ संवत्सरानन्तर्यं वरुणलोकस्य प्रतीयते। तथा "संवत्सरात्तटितमागच्छति तटितः प्रजापतिलोकं" इति गौपवनश्रुतौ तटितस्तदानन्तर्यं प्रतीतेः संदेह इत्यतः सूत्रं **ओं तटितोऽधि वरुणः सम्बन्धात्** । संवत्सरानन्तरं तटितमेव गच्छति ततो वरुणलोकमित्येव निर्णयः। कुतः? अधि उपरि वरुणसम्बन्धस्य श्रुतिसिद्धत्वात् । "तटिता ह्यूयते वरुणलोकस्तटिदुपरि मुक्तामयो राजते तत्रासौ वरुणो राजा सत्यानृते विविश्चति" इत्युपरिसम्बन्धश्रुतेः। मक्तामयो वीतरोगः रत्नमयो वा विचिन्वति विवेचयति । तस्य तात्पर्यमाह **अर्चिरादिपथा** इति। अर्चिः ज्योतिः। अग्निरूपं तत् आदिः कारणमस्येत्यर्चिरादिः उदकम् । "अग्नेराप" इति श्रुतेः। तस्य तदभिमानिनो वरुणस्य पथा मार्गेण याति। कीदृशेन वरुणलोकेन। अर्चिर्ज्योतिस्तटिद्रूपं तत् आदिः प्रथमं प्राप्यं

यस्येत्येतादृशः **स चासौ** पंथाश्चेति तेन अर्चिरादिपथेत्यावृतेन विशेषणविशेष्यभावः। तपरस्त-त्कालस्येतिवत्तन्त्रेण वा निर्देशः। प्रथमं तटितं प्राप्य ततो वरुणलोकं गच्छतीति समुदायार्थः ।।३।।

नन्वर्चिरनन्तरं प्राप्यत्वेनोक्तो वायुः किं मुख्यो अमुख्यो वा इति सन्देहादनुस्मृत्यनुपपत्तिरेवेत्यतः सूत्रं **आतिवाहिकस्तल्लिंगात्** । पूर्वप्राप्यत्वलिंगादसावातिवाहिको वायुर्न मुख्यवायुरित्यर्थः। ननु प्रथमप्राप्ये चरमप्राप्ये च वायुशब्दश्रवणादुभयत्र सन्देह एव भवति किमयं स वायु आतिवाहिक इति। मुख्यस्यापि प्रथमप्राप्त्यसम्भवादित्यतः सूत्रं **ओं उभयव्यामोहात्तत्सिद्धेः**। पूर्व-सूत्रात्तल्लिंगादित्यनुवर्त्तते। एवमुभयत्र व्यामोहे सत्यपि उत्तरत्रोच्यमानस्य दिवस्पतित्वलिंगात् मुख्यवायुत्वे सिद्धे परिशेषात्प्रागुक्तस्यैवातिवाहिकत्वसिद्धिः। दिव् शब्दवाच्यवाणी मुख्यवायुभार्या। "उत्क्रान्तो विद्वान्परमभिगच्छन् विद्युतमेवान्तत उपगच्छति द्यौर्वाव विद्युत्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति" इत्युत्तरप्राप्ये दिवस्पतित्वलिंगस्योक्तत्वात् । ब्रह्मतर्के च "उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु । ततो हि वायोः पुत्रं च योऽसौ नाम्नातिवाहिकः। ततोऽहः पूर्वपक्षं वाप्युदक्संवत्सरं तथा। तटितं वरुणं चैव प्रजापं सूर्यमेव च । सौमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा। ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमं" इति । एतत्तात्पर्यमप्याह। अर्चिरादिपथा परंपरामार्गेण वायुं प्राप्य तेन वायुना जनार्दनं याति इति । अत्र जनार्दनस्यासन्नत्वेन चरमप्राप्येनिरूपपदवायुपदोक्त्या दिवस्पतिरूपो मुख्यवायुरर्थात् प्राचीन एवातिवाहिक इत्यवगम्यते ।।४।।

अथ ब्रह्मप्राप्तौ मुख्यवायुरेवान्तिमद्वारं न तु पूर्ववद्ब्रह्मवाय्वोर्मध्येऽपि प्राप्यान्तरं अस्तीत्यर्थ-प्रतिपादकं सूत्रं **ओं वैद्युतेनैव ततस्तच्छ्रुतेः**। विद्युतो यं पतिर्वैद्युतो मुख्यवायुस्तेनैव ब्रह्मप्राप्तिर्भवति। अतः स एवान्तिमः। चन्द्रमसो वैद्युतस्तत्पुरुषो मानवः। "स एनान् ब्रह्म गमयति" (छां.उ.४-१५-६)इति श्रुतेः। "विद्युत्पतिर्वायुरेव नयेद् ब्रह्म न चापरः। कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम्" इति बृहत्तन्त्रे। एतत्तात्पर्यमाह। वायुं प्राप्य तेन जनार्दनं यान्तीति। तेनेति सावधारणम् । तेनैव यान्ति नत्वांतरालिकमन्यत्किंचिदस्तीत्यर्थः ।।५।।

एवं मार्गं विचार्यात्र तेन मार्गेण गतानां गम्यनिरूपणं क्रियते **ओं कार्यं बादरिरस्य गत्युपपत्तेः**। "स एनान्ब्रह्म गमयति" इति कार्यमुत्पत्तिमद्ब्रह्म चतुर्मुखाख्यं गमयतीति बादरिर्मन्यते।

ऋते देवान्परं ब्रह्म कः पुमान्प्राप्नुयात्क्वचित् ।
यद्यपि ब्रह्मदृष्टिः स्याद् ब्रह्मलोकमवाप्नुयात् ।।

इत्याध्यात्मवचनात्तस्यैव गत्युपपत्तेः । हेत्वन्तरेणाप्येतमर्थं समर्थयत्सूत्रं **ओं विशेषितत्वाच्च**। "यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखम्" (कौषारव)इति चतुर्मुखत्वेन

विशेषितत्वाच्च कार्यमेव ब्रह्म । कथं तर्हि ''ब्रह्मविदाप्नोति परं'' (तै.उ.२-१)इति व्यपदेश इत्यतः सूत्र **ओं सामीप्यात्तु तद्व्यपदेशः**। ज्ञानी चतुर्मुखं प्राप्य अचिरेणैव परब्रह्मापि प्राप्नोतीति कालसामीप्येनैव तद्व्यपदेशः । न तु चतुर्मुखप्राप्तिं प्रतिषेधति। सामीप्यं च कियत्कालपर्यन्तमिति जिज्ञासायां सूत्रं **ओं कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्** । समस्तकार्याणां विनाशरूपे प्रलये तेषां कार्याणामध्यक्षेण स्वामिना चतुर्मुखेन सह अतः अनन्तरं अतश्चतुर्मुखद्वारा ''परं ब्रह गच्छति'' इति श्रुतावभिहितत्वाच्च । तावत्पर्यन्तं सामीप्यमिति भावः। ''ते ह ब्रह्माणम-भिसम्पद्य यदैतद्विलीयतेऽथ सह ब्रह्मणा परमभिगच्छति'' इति सौपर्णश्रुतेर्ब्रह्मणा सह गच्छन्ति। स्मृत्याप्येतमर्थं प्रतिपादयत्सूत्रं **ओं स्मृतेश्च**।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे। परस्यां ते परात्मानः प्रविशन्ति परं पदम् ।। इति।

पक्षान्तरं च प्रतिपादयितुं सूत्रं **ओं परं जैमिनिर्मुख्यत्वात्**। ब्रह्मशब्दस्य तत्रैव मुख्यत्वात्परमेव ब्रह्म गमयतीति जैमिनिर्मन्यते । हेत्वन्तरेणाप्येतमर्थं साधयत्सूत्रं **ओं दर्शनाच्च** । श्रवणादिसाधनैः परब्रह्मण एव दृष्टत्वात्तस्यैव प्राप्तिरुपपन्ना। हेत्वन्तरेणाप्येतत्साधयितुं सूत्रं **ओं न च कार्ये प्रतिपत्त्यभिसन्धिः**। कार्ये ब्रह्मणि प्रतिपत्तिः श्रवणाद्युपास्तिकार्यं प्राप्तवानीति मुमुक्षोरभिसन्धिश्च नास्ति किन्तु परब्रह्मण्येवातस्तदेव गमयतीत्यर्थः। एवं परस्परविरुद्धपक्षद्वयप्रतिपादकमुनिमत-योरधिकारिभेदेनाविरोधं सूचयन् स्वसिद्धान्तमाह **ओं अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च**।

''प्रतीके देह उद्दिष्टो येषां तत्रैव दर्शनम् । न तु व्याप्ततया क्वापि प्रतीकालंबनास्तु ते ।
अप्रतीका देवतास्तु ऋषीणां शतमेव च। राज्ञां तु शतमुद्दिष्टं गन्धर्वादि शतं तथा।
एतेऽधिकारिणो व्याप्तदर्शनेऽन्ये न तु क्वचित् । अयोग्यदर्शने यत्नाद् भ्रंशः पूर्वस्य चापि तु।
अप्रतीकाश्रया ये तु ते यान्ति परमेव च। स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद् ब्रह्मसलोकताम् ।
ब्रह्मणा सह संहारे सम्प्राप्ते परमेव तु(परमं पदं)''

इति गारुडवचनात् अप्रतीकालम्बनान्देवादिनेव वायुः परं ब्रह्म नयतीति । ''स एनान्ब्रह्म गमयति'' अर्थात्प्रतीकालम्बनान् मनुष्योत्तमादीन् कार्यं ब्रह्म गमयतीति भगवान्बादरायणो मन्यते। कुतः? परप्राप्तिपक्षे गत्यनुपपत्यादिदोषस्य उक्तत्वात् । कार्यप्राप्तिपक्षे एव ब्रह्मशब्दामुख्यत्वादि-दोषाणामुक्तत्वात् । अधिकारिभेदेन व्यवस्थांगीकारे तु प्रमाणबलेन ब्रह्मशब्दः मुख्यार्थत्वादेरपि त्याज्यत्वात् । गत्यनुपपत्तेरपि नीचाधिकारिविषयत्वौचित्यात् । तव प्रतिपत्यभिसन्ध्यभावदोषः। ''स हि यथा कामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्मकुरुते यत्कर्मकुरुते तदभिसम्पद्यते'' (बृ.उ.६-४-५)इति श्रुतेः। सोऽधिकारी तत्क्रतुश्च भवति। चशब्दात् तत्कामकर्मसम्पत्तिमानपि

भवति। सोऽधिकारी यत्प्राप्तिकामो भवति । तत्क्रतुस्तदीयज्ञानं सम्पादयति। क्रतुशब्दो ज्ञानवाची। तदीयमुपासनारूपकर्मकुरुते तमेव सम्पद्यते प्राप्नोतीति श्रुत्यर्थः। प्रतीकालम्बनाः कार्यब्रह्म-प्राप्तिकामाः। तदीयज्ञानोपासनादिना तत्प्राप्नुवन्ति । अयोग्यकामस्यानर्थहेतुत्वात्ते तद्वारैव भगवत्प्राप्तिं कामयन्ते । अप्रतीकालम्बना उत्तमाधिकारिणस्तु परं ब्रह्मोपास्त्यादिना परमेव प्राप्नुवन्तीति श्रुत्यर्थः। नन्वेते एव प्रतीकालम्बना एत एवाप्रतीकालम्बना इति नियमाकाभावात् । पुनरव्यवस्थैवापन्नेत्यतः श्रुत्यैव तद्भेदं प्रतिपादयत्सूत्रं **ओं विशेषं च दर्शयति**। "अन्तःप्रकाशाः बहिःप्रकाशाः सर्वप्रकाशाः । देवा वाव सर्वप्रकाशाः ऋषयोऽन्तःप्रकाशाः मानुषा एव बहिःप्रकाश" इति चतुर्वेदशिखायाम् । सौत्रश्चशब्दो भिन्नक्रमः दर्शयति चेति। तेन पूर्वोदाहृतगारुडवचनरूपां स्मृतिं समुच्चिनोति। पूर्वसूत्रस्थाप्रतीकालम्बनशब्दस्य प्रमाणमुखेनैवार्थकथनाय भाष्यकारैः सा पूर्वमेवोदाहृता। तेनाप्रतीकालम्बना ......स्मृत्युक्ता देवर्षिराजगन्धर्वादयः परं ब्रह्म गच्छन्ति तदन्ये अन्तःप्रकाशाः ऋषयो बहिप्रकाशा मानुषाश्च कार्यं गच्छन्तीत्युक्तं भवति। एतत्तात्पर्यमाह तेन जनार्दनं यान्त्युत्तमा इति। उत्तमाः देवादयो प्रतीकालम्बनास्तेन वायुना नीयमानाः सन्तो जनार्दनं यान्ति। नरोच्चाद्याः मनुष्योत्तमादयो बाह्यदर्शनो मनुष्याः आदिशब्द व्याप्तिदर्शनपरिगणित-ऋषिगन्धर्वादिभ्यो अन्ये ऋषिगन्धर्वादयो अन्तःप्रकाशास्तेऽपि कार्यब्रह्मलोकं यान्ति वायुना तत्रैव नीयन्त इति वाक्यशेषः। तत्किं तत्रैव सर्वदा तिष्ठन्ति? न किन्तु ब्रह्मलोकादमुना ब्रह्मणा सह जनार्दनं यान्तीत्यन्वयः। ब्रह्मप्रलयपर्यन्तं ब्रह्मलोके उषित्वा ब्रह्मणा सह मुक्ताः परमात्मानं प्राप्नुवन्तीत्यर्थः ।।

**।। इति नारायणकृतावणुभाष्यप्रपंचने चतुर्थाध्यायसम्बन्धस्तृतीयश्चरणोत्यगात् ।।**

**मळगी** – उत्क्रान्तजीवानां गमनप्रकारमाह **अर्चिः** इति । **उत्तमाः** उत्कृष्टज्ञानभक्त्यादि-भगवत्प्रसादवन्तः। **नरोच्चाद्याः** नरोच्चः मनुष्योत्तम आद्यो येषां ते तथोक्ताः। "प्रतीकं देहमुद्दिष्टं येषां तत्रैव दर्शनम् । न तु व्याप्ततया क्वापि" इत्युक्तलक्षणाः प्रतीकालम्बनाः। **अर्चिरादिपथा** अर्चिरादिमार्गेण **वायुं** मुख्यप्राणं **प्राप्य** तेन **ब्रह्मलोकात्** ब्रह्मणः चतुर्मुखस्य लोकात् **लोकं** प्राप्य सत्यलोकं प्राप्येत्यर्थः। **तेन** चतुर्मुखेन समं **जनार्दनं** श्रीनारायणं। **यान्ति** प्राप्नुवन्ति, मुक्ता भवन्तीत्यर्थः **।।५ ।।**

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यकंजमालिकायां चतुर्थाध्यायस्य तृतीयः पादः ।।**

**लिंघेरी** – उत्क्रान्तजीवानां गमनप्रकारमाह **अर्चिरादि** इति। उत्तमाः **नरोच्चाद्याः** मनुष्योत्तमा एव आद्याः येषां ते तथोक्ताः। **अर्चिरादिपथा** अर्चिरादि मार्गेण । वायुं प्राप्य । **तेन** वायुना सह ब्रह्मलोकं प्राप्य । ब्रह्मलोकात् **अमुना** ब्रह्मणा सह जनार्दनं प्राप्य मुक्ता भवन्ति **।।५।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां चतुर्थाध्यायस्य तृतीयः पादः ।।**

**नारायणपण्डित–** प्रतीकालम्बनाः नरोच्चाद्या उत्तमजीवाः देहादुत्क्रमणानन्तरं अर्चिरादिना पथा मार्गेण वायुं प्राप्य तेन च कार्यं प्राप्य ब्रह्मलोके तिष्ठन्ति । अप्रतीकालम्बना अर्चिरादिमार्गेण वायुं प्राप्य तेन च परं प्राप्य परमसमीपे तिष्ठन्ति। उभये लयकाले कार्यं प्राप्य तदुपदेशं च प्राप्य ब्रह्मलोकं विहाय अमुना कार्यब्रह्मणा सहैव जनार्दनं जनननाशकं मुक्तिप्रदं वासुदेवं यान्तीति अर्चिरादिनेति नयार्थः। **अधिकरणानि ६ सूत्राणि १६**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां चतुर्थाध्यायस्य तृतीयः पादः ।।**

**गूढकर्तृक –** एतत्पादं तात्पर्यतः संगृह्णात्यणुभाष्यकारः। **अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् । यान्त्युत्तमा नरोच्चाद्याः ब्रह्मलोकात्सहामुना** इति। नरोच्चाद्याः उत्तमाः जीवाः देहोत्क्रमणानन्तरमर्चिरादिना पथा मार्गेण वायुं प्राप्य तेन च कार्यं प्राप्य ब्रह्मलोके तिष्टन्ति प्रतीकालम्बनाः। अप्रतीकालम्बना अर्चिरादिमार्गेण वायुं प्राप्य तदुपदेशं च प्राप्य ब्रह्मलोकाद्ब्रह्म लोकं विहायामुना कार्यब्रह्मणा सहैव जनार्दनं जनननाशकं मुक्तिप्रदं वासुदेवं यान्तीति अर्चिरादिनेति नयषट्कसमुदायार्थः।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यटीकायां चतुर्थाध्यायस्य तृतीयः पादः ।।**

**अणुभाष्यम्**

**यथासंकल्पभोगांश्च चिदानन्दशरीरिणः।**
**जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते ।।६।।**
**(यथेष्टशक्तिमन्तश्च)**

**सत्यनाथीया–** सम्पद्याविहाय स्वेनशब्दात् , संकल्पादेव च तच्छ्रुतेरित्यादेरर्थमाह । ज्ञानभोगाभ्यां क्षीणकर्माणः देहादुत्क्रम्यार्चिरादिमार्गेण वायुं कार्यब्रह्म परं च प्राप्तः प्रलयानन्तरं विष्णुं प्राप्य स्थिता मुक्ताः विष्णिवच्छानुसारिभोगयुक्ता इत्यर्थः। चो विशेषणसमुच्चयेऽवधारणे वा। चिदानन्दरूपविद्धा बद्धा इति चितिमात्रेण तदात्मकत्वादित्यस्यार्थः। जगद्व्यापारवर्जमित्यादेरर्थमाह जगत्सृष्ट्यादिकं अयोग्यं महासामर्थ्यं विना स्वेच्छानुसारेण स्वावरनियमनादिशक्तिमन्त इत्यर्थः।

**तत्वमञ्जरी–** अर्चिरादिपथा ब्रह्म प्राप्तानां भोगं वक्तुं चतुर्थः पादः। तदर्थमाह – **यथासङ्कल्पभोगाश्च चिदानन्दशरीरिणः** इति। नरोच्चाद्याः उत्तमा इति वर्तते। नरोच्चाद्या उत्तमाः चिदानन्द शरीरिणो मुक्ताः सन्तः यथासङ्कल्पभोगाश्च यथेष्टभोगवन्तश्चेत्यर्थः। न केवलं जनार्दनं यान्तीत्येवेति चार्थः। मुक्तानां भोगवत्त्वमेतत्पादप्रतिपाद्यमिति यावत् ।

यत्तु मुक्तानां परब्रह्मानतिक्रमेणैव भोगं वक्तुं **सम्पद्याविहाय स्वेन शब्दात् इति सूत्रं तदर्थमाह – यथासङ्कल्पभोगाश्च चिदानन्दशरीरिणः** इति। सहामुनेति वर्तते। उत्तमा नरोच्चाद्याश्च चिदानन्दशरीरिणः मुक्ताः सन्तोऽमुना सह पूर्वं प्राप्यत्वेन प्रकृतजनार्दनेन सह तमविहायैव, तमनतिक्रम्येति यावत् , यथासङ्कल्पभोगाश्चेत्यर्थः ।।१।।

यत्तु "स तत्र पर्येति" इत्यादौ ब्रह्म प्राप्य भोगं भुञ्जानस्य मुक्तत्वं वक्तुं **मुक्तः प्रतिज्ञानात्** इति सूत्रं तदर्थोऽपि चिदानन्दशरीरिणो मुक्ताः सन्तो यथासङ्कल्पभोगाश्चेत्युक्त्यैव सङ्गृहीतो ध्येयः। सूत्रादावेकवचनं तु समुदायाभिप्रायमिति भावः ।।२।।

अमुना जनार्दनेनेत्युक्त्यैव "सूर्यमगन्म ज्योतिः" इति, "स तेजसि सूर्ये सम्पन्नः" इति समाख्यानात् "परंज्योतिरुपसम्पद्य" इत्यत्र ज्योतिःशब्दितः सूर्य एव न ब्रह्मेत्यतः तस्य ब्रह्मत्वं वक्तुं प्राप्तस्य **आत्मा प्रकरणात्** इत्यस्याप्यर्थः सङ्गृहीतो ध्येयः ।।३।।

यत्त्वीश्वरस्य सर्वभोक्तृत्वसिद्धये सायुज्यभाजां ईशभुक्तभोक्तृत्वं वक्तुं **अविभागेन दृष्टत्वात्** इति सूत्रं तस्याप्यर्थोऽमुना सहोत्तमा यथासङ्कल्पभोगाश्चेत्युक्त्यैव सङ्गृहीतो ध्येयः ।।४।।

यत्तु मुक्तानामदेहत्वेन अभोगमाशङ्क्य ब्रह्मदेहेन चिन्मात्रस्वरूपदेहेन भोगोपपादकं ब्राह्मणेत्यादिसूत्रत्रयं तस्याप्यर्थः **अमुना यथासङ्कल्पभोगाश्च चिदानन्दशरीरिणः** इति। उत्तमा नरोच्चाद्याश्च चिदानन्दशरीरिणो ज्ञानाद्यात्मकस्वरूपदेहवन्तः सन्तो यथासङ्कल्पभोगा इत्यर्थः। उत्तमास्तु अमुना च प्राप्यत्वेनोक्तजनार्दनेनापि यथासङ्कल्पभोगा इत्यर्थः। तद्देहेनापि भञ्जत इति वाच्येऽपि देहदेहिनोरभेदादमुनेत्येवोक्तिः। "सम्पद्य ब्रह्मणाऽभिपश्यति ब्रह्मणाऽभिशृणोति आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति" इत्यादेः ।।५।।

यथासङ्कल्पभोगाः इत्युक्त्यैव **सङ्कल्पादेव च** इत्यस्याप्यर्थः सङ्गृहीतो व्यक्तः ।।६।।

यत्तु विष्णोरेव सर्वोत्कर्षसिद्धये मुक्तानां भोगेयत्तां वक्तुं जगद्व्यापारवर्जं इत्यादिसूत्रचतुष्टयं तदर्थमाह – **जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते । यथेष्टशक्तिमन्तश्च** इति। उत्तमा नरोच्चाद्याश्च जगत्सृष्ट्यादिविषये महासामर्थ्यमपि स्वयोग्याधिकानन्दादिकं च ऋते यथेष्टशक्तिमन्तश्च । न केवलं यथासङ्कल्पभोगा इति चार्थः ।।९।।

**नृसिंहतीर्थ –**ब्रह्मप्राप्तानां भोगप्रतिपादनार्थं तुरीयपादः प्रवृत्तः । तत्राद्यमधिकरणम् । तस्य च प्रसंगादुक्तेन विमुक्तिगाः प्रविश्य भुंजते भोगानित्यादिनोक्ततात्पर्यकत्वात् अत्र पुनस्तात्पर्यानुक्तिः। अथ वा अमुना सहेत्येतद्देहलीदीपन्यायेनैतत्पादसम्बन्धित्वेनापि योज्यम् । तथा च अमुना परब्रह्मणा सह यथासंकल्पं स्वेच्छानुसारेण भोगो एषां ते तथा इत्यनेन वा अधिकरणपंचकस्य तात्पर्यमुक्तं भवति।

यद्वा मुक्तस्य ब्रह्मानतिक्रमेण भोगप्रतिपादकस्य प्रथमाधिकरणस्य तात्पर्यं **यथासंकल्पभोगा** इति। कल्पः समर्थः सम्यक् कल्पः अतिसमर्थः परमात्मानमनतिक्रम्य यथासंकल्पं भोगो एषां ते तथेति। ब्रह्मप्राप्य तदविहायैव भोगभोक्तुः मुक्तत्वसाधकस्य मुक्तप्रतिज्ञानादिति द्वितीयाधिकरणस्य तात्पर्यम् । चशब्दः न केवलं यथा संकलपभोगाः किन्तु मुक्ताश्चेत्यर्थः। अन्यथा ब्रह्मानतिक्रमेण भोगानुपपत्तिरिति भावः।

मुक्तप्राप्यस्य ज्योतिषो ब्रह्मत्वप्रतिपादकस्य आत्मप्रकरणादिति तृतीयाधिकरणस्य तात्पर्यम् **यथासंकल्पभोगा** इति। यथावस्थितः सत्य इति यावत् । संकल्पो यस्य स तथा भोगो येषां ते तथेत्यनेन "सत्यकामः सत्यसंकल्प" इति श्रुतिसूचकेनास्य परमात्मप्रकरणत्वात्परंज्योतिः परमात्मैवेत्युक्तं भवति। सायुज्यादिभाजां भगवदुक्तभोगभोक्तृत्वसाधकस्य अविभागेन दृष्टत्वादिति चतुर्थाधिकरणस्य तात्पर्यम् **यथा संकल्पभोगा** इति। भोगशब्दः आवर्त्तनीयः। आद्ये भुंजते इति भोगा इति भुक्तपरः। द्वितीयो भोगपरः। पूर्ववत्संकल्पः परमात्मा तेन भुक्तः संकलपभोगाः ताननतिक्रम्य भोगो एषां ते तथा संकल्पभोगाः। भगवद्भुक्त भोगवन्त इति यावत् ।

सायुज्यमुक्तस्य भोगोपपादनाय देहसद्भावप्रतिपादकस्य ब्राह्मेण जैमिनिरूपन्यासादिभ्य इति पंचमाधिकरणस्य तात्पर्यम् **चिदानन्द शरीरिण** इति। चिदानन्दस्य ज्ञानानन्दस्वरूपस्य विष्णोः शरीरमेषामस्तीति चिदानन्दशरीरिणः। चिदानन्दावेव शरीरमेषामस्तीति चिदानन्दशरीरिण इति वा। तथा च मुक्तस्य बाह्यदेहाभावेऽपि परमात्मानं प्रविश्य गृहवत्तद्देहेन वा चिदानन्दात्मकस्वदेहेन वा भोगः सम्भवतीति भावः। मुक्तस्य संकल्पमात्रसाध्यभोगत्वसाधकस्य संकल्पादेव च तच्छ्रुतेरिति षष्टाधिकरणस्य तात्पर्यम् **यथासंकल्पभोगाश्च** इति। संकल्पः स्वेच्छामनतिक्रम्य भोगो एषां ते तथा। चोऽवधारणे। स्वेच्छामात्रसाध्यभोगवन्त एवेत्यर्थः। अत एव संकल्पादेवास्येति श्रुतिं सूचयितुं सूत्रानुसारेण संकल्पशब्दः। मुक्तस्य स्वाधमनियामकराहित्यस्य प्रतिपादकस्य अत एव चानन्याधिपतिरिति सप्तमाधिकरणस्य तात्पर्यं **विना स्वाभाविकोत्तमान्** । **अनन्यवशगाश्चैव** इति । पूर्वोत्तरविशेषणसमुच्चायकः चशब्दः। एवशब्दो विपक्षव्यावृत्यर्थः। अतः एवेत्युक्तम् । क्लृप्तपतिभ्यो अन्यपतिनिवारणायैव सूत्रानुसारेण अनन्यवशगा इत्युक्तम् । अन्यथा अवशगा इत्येवावक्ष्यत् । अस्यैव विवरणम् **स्वाभाविकोत्तमान्विना** इति। स्वरूपोत्तमान्विनेत्यर्थः। यद्वा सूत्रे अनधिपतिरित्यनक्त्वा अनन्यशब्दप्रयोगस्य तात्पर्यकथनाय **विना स्वाभाविकोत्तमान्** इत्युक्तम् । मुक्तमात्रस्य भोगानुपपत्तिनिरासाय कर्मनिर्मितदेहाभावमभ्युपगम्य स्वेच्छागृहीतकादाचित्कबाह्यदेहसद्भाव प्रतिपादकस्य अभावं बादरिराह ह्येवमिति अष्टमाधिकणस्य तात्पर्यम् **चिदानन्दशरीरणश्च** इति। चशब्दो बाह्यदेहसमुच्चायकः उक्तं चैतदधिकरणभाष्ये "चिता वाचिता वा" इत्यादिमुक्तभोगेयत्तासाधकस्य जगद्व्यापारवर्जमिति नवमाधिकरणस्य तात्पर्यम्

**जगत्सृष्ट्यादिविषयं महासामर्थ्यमप्यृते। यथेष्टशक्तिमन्तश्च** इति। अपिशब्दः स्वाधिकानन्द-प्राप्तिसमुच्चायकः। अमुक्तनियामकत्वसमुच्चायकश्च। महासामर्थ्यं ईश्वर इति शेषः।

**श्रीनिवासतीर्थीया-** अत्रैतत्पादीयानां केषांचिदधिकरणानां तात्पर्यमाह **यथासंकल्पभोगांश्च** इति । **सम्पद्याविहाय स्वेन शब्दात्** । **संकल्पादेव च तच्छ्रुतेरित्यधिकरणतात्पर्यमाह** **यथा** इति। विष्णुं प्राप्य स्थिताः मुक्ताः इति शेषः ।**यथासंकल्पभोगाः** विष्ण्विच्छानुसारिस्वेच्छानुसारि भोगयुक्ता इत्यर्थः। चितिमात्रेण तदात्मकत्वादित्यौडुलोमिरित्यादेस्तात्पर्यार्थः **चिदानन्द इति**। चिदानन्दरूपशरीरवन्तश्च शब्दात् अप्राकृतशरीरिण इत्यर्थः। जगद्व्यापारवर्जमित्यस्यार्थो **जगत्सृष्ट्यादि** इति। जगतो मुक्तवर्गस्य सृष्टिस्थित्यादिकर्तृत्वविषयं महासामर्थ्यमिति। अयोग्यमन्यदप्यृते विना यथेष्टशक्तिमन्तः मुक्तस्वकीयावरयन्तृत्वाद्यनेकशक्तियुक्ता इत्यर्थः ।

**छलारी -**

**हरिः ओम् ।**
**सालग्रामशिलाचक्रे देवग्रामैरमावसत् ।**
**समग्रैः कलादेव्या समग्राघं हरेद्धरिः।**

एवं चतुर्मुखेन सह ब्रह्म प्राप्तानां भोगात्मकमोक्षस्वरूपं निरूप्यतेऽस्मिन्पादे।

## ओं सम्पद्याविहाय स्वेन शब्दात् ओं

ज्ञानी परं ब्रह्म सम्पद्य - प्राप्य, अविहाय ब्रह्मानतिक्रमेण स्वेन रूपेण स्थितस्सन् भोगान् भुङ्क्ते। कुतः? शब्दात् , तथा श्रुतेरिति सूत्रार्थः।

अत्र मुक्तः परब्रह्म अतिक्रम्य भोगान् भुङ्क्ते । ''एतं सेतुं तीर्त्वा'' (छां.उ.८-४-२) इति ब्रह्मातिक्रमानन्तरं स्वरूपाविर्भावस्योक्तत्वादिति प्राप्ते -

मुक्तः परं ब्रह्म प्राप्य तदविहायैव भोगान् भुङ्क्ते। ''एवं पश्यन्नात्मानमभिसम्पद्यैतेनात्मना यथा कामं सर्वान् कामान् अनुभवति'' (सौपर्ण)इति श्रुतेः। ''परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'' (छां.उ.८-४-३)इति श्रुतेश्च । न च ''एतं सेतुं तीर्त्वा'' इति श्रुतिविरोधः। तत्र एतं सेतुं गन्तुं अन्यत्तीर्त्वा इति ब्रह्मप्राप्तये अन्यतरणस्यैव तदर्थत्वात् । न चात्र प्रमाणाभावः। ''इमां घोरमशिवा नदीं तीर्त्वैतं सेतुं आप्यैतेनैव सेतुना मोदते प्रमोदत'' (मौद्गल्य)इति श्रुतेरिति सिद्धान्तः कृतः।

देहलीदीपन्यायेन प्रयुक्तममुना सहेत्येतत् एतत्पादसम्बन्धित्वेनापि योजनीयमित्यभिप्रेत्य अस्य अधिकरणस्य तात्पर्यमाह - **अमुना सह** इति । अमुना परमात्मना सह परमात्मानमविहाय तमनतिक्रम्येति यावत् । मुक्ताः भोगान् भुञ्जत इत्यनुवर्तते। जनार्दनं यान्तीति प्राप्यत्वेन परमात्मनोऽपि प्रकृतत्वात् नानुपपत्तिरिति बोध्यम् ।।१।।

## ओं मुक्तः प्रतिज्ञानात् ओं

स तत्र इति श्रुत्युक्तो मुक्तः, कुतः ? ''अहरहरेनम्'' इति श्रुतौ अमुक्तानां दिव्यभोगा-भावमुक्त्वा मुक्तानां दिव्यभोगप्रतिज्ञानादिति सूत्रार्थः।

अत्र ''स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा'' इति श्रुत्युक्तो न मुक्तः। ''पर्येति'' इत्यादिना अनेकविधक्रीडाप्रतीतेः। न च क्रीडावत्त्वं कृतकृत्यस्य मुक्तस्योपपद्यत इति प्राप्ते -

स तत्र पर्येतीत्यत्र मुक्त एवोच्यते। अन्यस्य एतादृशभोगानुपपत्तेः। न च ब्रह्मप्राप्त्या तदुपपत्तिः। ''अहरहरेनमनुप्रविशति उपसङ्क्रमे च न तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष तदा भवति। अथ यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवति'' इति श्रुतौ ब्रह्मप्राप्तानमपि सुप्तानामुक्ततया दिव्यभोगाभावमुक्त्वा मुक्तस्यैव तत्प्राप्त्या दिव्यभोगप्रतिज्ञानात् । न च कृतकृत्यत्वेन क्रियावत्वानुपपत्तिः। आनन्दोद्रेकात् कृतकृतस्यापि भगवत इव स्वेच्छया तदुपपत्तेरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - अमुना सहेति। अवधारणार्थचशब्दस्य अत्र उत्तरत्रापि अनुषङ्गः। तथा च मुक्ता एव भोगान् भुञ्जते। नामुक्ता इत्यर्थः। एवं च स तत्र प्रेयतीति श्रुत्युक्तो मुक्त एव। नामुक्त इति भावः ।।२।।

## ओं आत्मा प्रकरणात् ओं

आत्मा परमात्मैव परं ज्योतिश्शब्देनोच्यते । कुतः ? ''य आत्मा'' इति परमात्मप्रकरणादिति सूत्रार्थः।

अत्र परं ज्योतिरुपसम्पद्येति श्रुत्युक्तं ज्योतिः न विष्णुः । ज्योतिश्शब्दस्य आदित्येऽपि प्रयोगदर्शनात् । एवं च न मुक्तस्य ब्रह्मसमीपे भोग इति प्राप्ते -

अत्र परं ज्योतिश्शब्देन परमात्मैवोच्यते। न आदित्यः। ''य आत्मा अपहतपाप्मा'' इति परमात्मनः एवारभ्याधीतत्वेन अस्य तत्प्रकरणत्वात् ।'' परं ज्योतिः परं ब्रह्म परमात्मादिका गिरः। सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथञ्चन।'' इति स्मृत्या परंज्योतिः शब्दस्यान्यत्राभावाच्च । अतः परं ज्योतिः ब्रह्मैवेति तत्प्राप्याविहायैव मुक्तो भोगान् भुङ्क्ते इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सह अमुना** इति। तथा च अमुनैव परंज्योतिः शब्दवाच्येन परब्रह्मणैव सह उपसम्पद्य मुक्ताः भोगान् भुञ्जते। एवं च परं ज्योतिरिति श्रुत्युक्तो विष्णुरेव नादित्य इति भावः ।।३ ।।

## ओं अविभागेन दृष्टत्वात् ओं

**अविभागेन ये भोगाः परमात्मना भुज्यन्ते त एव भोगाः सायुज्यभाग्भिः भुज्यन्ते। न विभागेन। कुतः? तथा श्रुतेरिति सूत्रार्थः।**

अत्र मुक्ताः परमात्माभुक्तभोगान् भुञ्जते अन्यथा कदाचिन्मुक्तानां भोगेच्छायामपि अवाप्तकामत्वादीश्वरस्य तदनिच्छायां मुक्तानां भोगो न स्यात् । ततश्च भगवदभुक्त-भोगभोक्तृत्वान्मुक्तानां न तस्य भोगभोक्तृत्वमिति प्राप्ते -

मुक्ताः भगवद्भुक्तभोगान् भुञ्जते। "यानेवाहं श्रुणोमि यान् पश्यामि यान् जिघ्रामि तानेवैत इदं शरीरं विविच्यानुभवन्ति" (चतुर्वेदशिखा) इति श्रुतेः।

मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित् ।
बहिष्ठान् भुञ्जते नित्यं नानन्दादीन् कथञ्चन । इति स्मृतेश्च ।

न च कदाचित् इत्युक्तरीत्या भोगाभावः। "पूर्णानन्दः पूर्णभुक्" इति ईश्वरस्य पूर्णानन्द-त्वेऽपि पूर्णभोगश्रवणात् । अतो युक्तं तस्य सर्वभोक्तृत्वमिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **सहामुना** इति। मुक्ताः अमुना परब्रह्मणा सहैव अविभागेनैव भोगान् भुञ्जत। ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैः भुज्यन्ते । न तु तदभुक्ताः उक्तश्रुतेरित्यर्थः ।।४।।

## ओं ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ओं

मुक्तस्य स्वदेहाभावेऽपि ब्रह्मसम्बन्धिना देहेन भोगो अस्तीति जैमिनिराचार्यो मन्यते। कुतः? श्रुतौ तथोपन्यासात् । आदिपदेन स्मृतेः युक्तेश्चेति सूत्रार्थः।अत्र न मुक्तानां भोगः। न च शरीरभावः। मुक्तस्य स्वदेहाभावेऽपि परमात्मानं प्रविष्टस्य तद्देहेनैव ग्रहवत् भोगसम्भवात् । न च अत्र प्रमाणाभावः। "स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति, ब्रह्मणा श्रुणोति, ब्रह्मणैवेदं सर्वं अनुभवति" (माध्यन्दिनायन) इति श्रुतेः।

"आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति। गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत्।"

इति बृहत्तन्त्रोक्तयुक्तेश्च। अथ वा मुक्तानामपि चिन्मात्रदेहो विद्यते एव । "सर्वं वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति। चिन्मात्रेवावतिष्ठते। तामेतां मुक्तिरित्याचक्षते" इति श्रुतेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **चिदानन्दशरीरिण** इति। चिदानन्दस्य चिदानन्दादिरूपस्य विष्णोः शरीरं एषामस्तीति चिदानन्दशरीरिणः। अथवा चिदानन्दावेव शरीरं एषामस्तीति चिदानन्दशरीरिण इति

विग्रहः। तथा च मुक्तस्य ब्राह्मदेहाभावेऽपि परमात्मानं प्रविष्टस्य ग्रहवत्तद्देहैनैव वा चिदानन्दाद्यात्मकस्वदेहेन वा भोगः सम्भवतीति भावः ।।५ ।।

**ओं सङ्कल्पादेव च तच्छ्रुतेः ओं**

मुक्तानां सङ्कल्पादेव भोगसिद्धिः। कुतः? तच्छ्रुतेः - तथा श्रुतेरिति सूत्रार्थः।

अत्र मुक्तभोगः न सङ्कल्पमात्रसाध्यः भोगत्वात् संसारिभोगवदिति प्राप्ते -

सङ्कल्पमात्रसाध्य एव मुक्तभोगः। "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ते" (छां.उ.८-२-१) इति श्रुतेः । न चोक्तयुक्तिविरोधः। श्रुतिविरोधेन युक्तेराभासत्वादिति सिद्धान्तः कृतः ।।

तस्य तात्पर्यमाह - **यथा सङ्कल्पभोगाश्च** इति। विशेषणसमुच्चये चशब्दः। यथासङ्कल्पं स्वेच्छामनतिक्रम्य भोगो येषान्ते यथोक्ताः स्वेच्छामात्रसाध्यभोगवन्तः इत्यर्थः ।।६ ।।

**ओं अत एव चानन्याधिपतिः ओं**

मुक्तः अनन्याधिपतिः - क्लृप्तपतिभ्योऽन्याधिपतियुक्तो न भवति। कुतः? अत एव सत्यसङ्कल्पत्वादेवेति सूत्रार्थः।

अत्र मुक्ताः स्वावरनियम्याः सर्वाधिपतिसदननिविष्टत्वात् राजसदननिविष्टामात्यवदिति। दृश्यन्ते हि अमात्या अपि राजसदननिविष्टाः नीचैरपि प्रतीहारैः नियम्यमानाः अतो मुक्तेः संसारसाम्यमिति प्राप्ते -

न मुक्ताः स्वावरनियम्याः किन्तु स्वोत्तमनियम्याः। कुतः ? सत्यसङ्कल्पात् । लोके स्वावरनियम्यत्वं ह्यनपेक्षितमेव भवति तच्च तस्य मुक्तस्य सत्यसङ्कल्पत्वादेव न युज्यते।

परमोऽधिपतिस्तेषां विष्णुरेव न संशयः। ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् ।

एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशयः । इति स्मृतेः।

अतो युक्तः मुक्तेः संसारवैलक्षण्यं इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **विना स्वाभाविकोत्तमान् , अनन्यवशगाश्चैव** इति। चशब्दः पूर्वोक्तविशेषणसमुच्चायकः। क्लृप्तपतिभ्यो अन्यपतिनिवारणायैव सूत्रानुसारेणैवानन्यवशगा इत्युक्तम् । अन्यथा अवशगा इत्येवावक्ष्यत् । तस्यैव विवरणं - स्वाभाविकोत्तमानिति स्वरूपोत्तमान् विनेत्यर्थः ।।७ ।।

## ओं अभावं बादरिराह ह्येवम् ओं

**अभावं चिन्मात्रदेहातिरिक्तदेहाभावं बादरिराचार्यो मन्यते।** कुतः ? हि यस्मात् "अशरीरो वा व तदा भवति" इति श्रुतिरेवमाहेति सूत्रार्थः।

अत्र न मुक्तानां भोगो युज्यते। देहभावाभावपक्षयोः विरुद्धत्वात् । तथा हि , मुक्तस्य बाह्यदेहो वर्तते न वा । नाद्यः। दुःखप्रसङ्गात् । द्वितीये भोगासम्भवः। अशरीरिणो भोगायोगात् । न च चिच्छरीरेण भोगोपपत्तिः। सुप्त्यादौ सतोऽपि तस्य भोगानायतनत्वदर्शनात्। न च ब्राह्मेण देहेन तदुपपत्तिः। सायुज्यभाजां कथञ्चिदुपपत्तावपि तदन्येषां अनुपपत्तेरिति प्राप्ते-

युक्त एव मुक्तानां भोगः । चिन्मात्रदेहसद्भावात् । न च सुप्त्यादौ तस्य विद्यमानस्यापि भोगायतनत्वादर्शनात् मुक्तावपि तदसम्भवः। अज्ञानाद्यावृतत्वेन तदा भोगायतनत्वाभावेऽपि अज्ञाननिवृत्यनन्तरं तत्सम्भवात् । अथवा युक्त एव मुक्तानां भोगः, बाह्यदेहसद्भावात् । न च तत्र मानाभावः। "चिता वाऽचिता वा नित्येन वाऽनित्येन वा अथानन्दी ह्येवैष भवति" इति श्रुतेः। न च दुःखप्रसङ्गः। "दुःखादिरहिता नित्यम्" इति वक्ष्यमाणत्वेन कर्मारब्धदेहस्यैव दुःखाविनाभावादिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **चिदानन्दशरीरिणश्च** इति। अत्र चशब्दोऽनुक्तबाह्यदेहसमुच्चायकः। "चिता वाऽचिता वा" इति श्रुतेः।।८।।

## ओं जगद्व्यापारवर्ज्यम् ओं

जगत्सृष्ट्यादिव्यापारं वर्जयित्वा सर्वकामावाप्तिः मुक्तस्येति सूत्रार्थः।

अत्र मुक्ता अपि पारमेश्वरं सृष्ट्यादिव्यापारं कुर्वन्त्येव। "सर्वान् कामान्"(ऐ.आ.२-५-४) इति श्रुतेः। सृष्ट्यादिव्यापारस्यापि काम्यत्वात् । न च सर्वशब्दशङ्कोचः बाधकाभावादिति प्राप्ते -

न मुक्तानां जगद्व्यापारः प्रमाणाभावात् । न च "सर्वान् कामान्" इति प्रमाणमिति वाच्यम् । योग्यकामावाप्तेरेव श्रुत्यर्थत्वात् । सर्वश्रुतेः कुतः सङ्कोच इति चेन्न ।

स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि।
मुक्तानां नैव कामः स्यात् अन्यान् कामांस्तु भञ्जते।
न चायोग्यं विमुक्तोऽपि प्राप्नुयात् न च कामयेत् ।

(वाराह)इति स्मृतेरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते। यतेष्टशक्तिमन्तश्च** इति। अपि - मुक्ताः अपि । चशब्दः अयोग्यकामनाराहित्यसमुच्चायकः। जगत्सृष्ट्यादिविषय इति क्वचित्पाठः ।।९।।

**नारायणाचार्य–**

**श्रीमध्ववल्लभोऽनेन कृष्णद्वैपायनप्रभुः ।**
**प्रीयतां श्रीपतिश्चासौ भक्ताभीष्टप्रदायकः ।।**

अथ चतुर्मुखेन सह परं ब्रह्मप्राप्तानां मुक्तानां भोगो अस्मिन् पाद उच्यते। तत्रादौ मुक्तस्य अर्चिरादिवद्ब्रह्मणोऽप्यतिक्रम इति नास्ति किन्तु ब्रह्मसमीप एवं भोगान् अनुभवति इत्यर्थप्रतिपादकं सूत्रं **ओं सम्पद्याविहायस्वेन शब्दात्** । ज्ञानी ब्रह्म प्राप्य तदविहायैव अन्यथारूपं परित्यज्य स्वेन रूपेनावस्थितः सन्भोगान्भुंक्ते। "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" (छा.उ.८-३-४) इति श्रुतेः। "स एवंविदेवं मन्वान एवं पश्यन्नात्मानमभिसम्पद्य तेनात्मना यथाकामं सर्वान्कामाननुभवति" इति सौपर्णश्रुतेः। न तमतिक्रम्य भुंक्ते इत्यर्थः। तर्हि "एवं सेतुं तीर्त्वाऽन्धस्सन्ननन्धो भवति" (छा.उ.८-४-२)इति तरणश्रुतिविरोध इति चेत् न । "एतं सेतुं धारकं परमात्मानं गन्तुं अन्यं तीर्थ्वा इति तत्प्राप्तये अन्यतरणस्यैवोक्तत्वात् । कुत एतदध्याहारसापेक्षव्याख्यानमिति चेन्न "इमां घोरमशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेनैव सेतुना मोदते प्रमोदते आनन्दीभवति" इति मौद्गल्यश्रुतावस्यार्थस्य स्फुटमुक्तत्वात्तदनुरोधेनैव व्याख्यानं युक्तमिति भावः। एतत्तात्पर्यमाह **यथासंकल्पभोगांश्च चिदानन्दशरीरिण** इति। सहामुना इति वर्तन्ते। विमुक्तिगा इति च विमुक्तिगमिति पाठविपरिणामः। विमुक्तिगाः अत एव चिदानन्दशरीरिणः स्वरूपेणाभिसम्पन्नः। अमुना परब्रह्मणा सह तत्समीप एव यथासंकल्पं यथेच्छं भोगो एषान्ते तथाविधा भवन्तीत्यर्थः।।१।।

स्यादेतत्, यदि मुक्तस्य भोग एव भवेत् । न च सोऽस्ति । मानाभावात् । "स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इति श्रुतेर्दहरविधोपासकस्यामुक्तस्यैव भोगाभिधायकत्वात् इत्यतः सूत्रं **ओं मुक्तः प्रतिज्ञानात्**। "स तत्र पर्येति" इति श्रुतौ मुक्त एव भोक्ता प्रतीयते । "अहरहरेवमनुप्रविश्यत्युपसंक्रमते न च मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष तदा भवत्यथ यदैनं मुक्तौऽनुप्रविशति मोदते च कामांश्चानुभवति कामांश्चैवानुभवति" इति बृहच्छुतौ प्रतिज्ञानात्।एतत्तात्पर्यमाह **यथासंकल्पभोगांश्च चिदानन्दशरीरिणः**। जक्षन् इत्यादिश्रुतौ यथासंकल्पभोगाः उच्यन्ते चिदानन्द शरीरिणः। मुक्ता एवेत्यर्थः। अत्र बहुवचननिर्देशात् सूत्रे मुक्त इति श्रुतौ च स इत्येकवचननिर्देशः समुदायाभिप्रायक इति सूचयति।।२।।

स्यादेतत् । मुक्तस्य परब्रह्म समीपे भोग इति। यदि तस्य ब्रह्म प्राप्तौ प्रमाणं स्यात्। परं ज्योतिरुपसम्पद्यते इति श्रुतौ ज्योतिशब्दस्यादित्यपरत्वात् । मुख्यवृत्या विष्णोस्तद्वाच्यत्वेऽपि अत्रामुख्यवृत्या सूर्यग्रहणस्यैव न्याय्यत्वात्। "स तेजसि सूर्ये सम्पन्नौ यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव पाप्मना विमुच्यते" इति। सूर्यशब्दोपेतश्रुतिसमाख्यानादित्याशंकां परिहरत्सूत्रं

**ओं आत्मा प्रकरणात्** । अत्र परंज्योतिःशब्देन परमात्मैवोच्यते। "य आत्मा अपहतपाप्माऽविजरोऽविमृत्युऽर्विशोकोऽविजिघत्सोऽपिपासा सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य" इति तत्प्रकरणात् । समाख्यातोऽपि प्रकरणस्य बलीयस्त्वात् । तस्याश्च सर्वशब्दवाच्ये विष्णौ सावकाशत्वाच्च। "परंज्योतिः परंब्रह्म परमात्मादिका गिरः। सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथंचन" इति ब्रह्माण्डोक्तेः। केवलस्य ज्योतिःशब्दस्य कथंचिदन्यत्र वृत्तावपि परंज्योतिः शब्दस्य विष्णुमात्रवाचकत्वाद्युक्ता मुक्तानां परब्रह्मसमीपे यथेष्टकामोपभुक्तेरिति भावः। एतत्तात्पर्यमाह **सहामुना** । **यथासंकल्पभोगा** इत्यादिना । अमुना परमात्मनैव सह संगताः। नत्वादित्येन । तादृशाः सन्तः चिदानन्दशरीरिणो मुक्ता यथासंकल्पं यथाकामं भोगो येषां ते तथाविधा इत्यर्थः। तेन परं ज्योतिःशब्दवाच्यः परमात्मैवातो न कोऽपि विरोध इति सूचयति ।।३।।

अथ सायुज्यभाजां भगवदुक्तभोगभोक्तत्वसमर्थनार्थमधिकरणं **ओं अविभागेनैव दृष्टत्वात्** । ये भोगा परमात्मना भुज्यन्ते त एव मुक्तैः भुज्यन्ते। न तद्विभक्ताः "यानेवाहं श्रुणोमि यान्पश्यामि यान् जिघ्रामि तानैवैत इदं शरीरं मुच्यानुभवन्ति" इति चतुर्वेदशिखायां दृष्टत्वात् ।

"मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित् ।
बहिष्ठान्भुंजते नित्यं नानन्दादिन्कथंचन ।।" इति भविष्यत्पुराणे।

अत्र तद्भोगानित्येतद्बहिष्टानंदादीनित्यस्यापि विशेषणम् । तेन परमात्मना भुज्यन्ते तद्भोगाः भुज्यमानाः विषयाः । ते च द्विविधाः तत्स्वरूपानन्दात्मकाः तन्मूर्तयः कामिन्याद्याः यथा विमलोत्कर्षणिज्ञानादयः । "आत्ममिथुन आत्मक्रीडा" इत्यादौ भगवतः स्वभोगस्यापि कथनादत एवासौ स्वरतः स्वरमण इत्युच्यते। तदन्ये बाह्याः। तेऽपि द्विविधाः। लक्ष्म्याद्यास्तदितरे च। मुक्तोर्वशीकल्पवृक्षफलादयः। गरुडारोहणादयश्च। तत्राद्याः आविष्टानामपि नास्ति किमुतान्येषां । चरमास्तु मुक्तसाधारणस्ते भगवदनुमत्या तारतम्येन भुज्यन्ते। तत्रापि रसगन्धादिसारांशो भगवदेकभोग्य एव। तस्यैव सर्वसारभोक्तृत्वात्। तदिदमाह सर्वालेशतः क्वचित्(?)यथासङ्कल्पभोग इति। तेन परानन्दस्य परवेद्यत्वासम्भवादप्रसक्तप्रतिषेधोऽयमिति चोद्यानवकाशः। एतत्तात्पर्यमाह **सहामुना** इत्यादिना। ये चिदानन्दशरीरिणो मुक्ताःअमुना परमात्मना सह संगतः सायुज्यं प्राप्तास्ते अमुना सह तदविभागेनैव यथासंकल्पभोगा भवन्ति न तु तमपहाय तदभुक्तभोगभाज इत्यर्थः ।।४।।

स्यादेतत्, यदि मुक्तानां भोग उपपद्येत न चोपपन्नः । तथा हि, तेषां शरीरमंगीक्रियते न वा। आद्ये मुक्तत्वव्याघातः। द्वितीये तदभावादेव भोगासम्भव इत्याशंकापरिहर्तुमधिकरणं **ओं ब्राह्मेण जैमिनिरुपन्यासादिभ्यः**। युज्यते मुक्तस्य भोगः। तस्य स्वशरीराभावेऽपि परब्रह्मप्रविष्टस्य परब्रह्मशरीरेणैव आविष्टग्रहवद्भोगोपपत्तेरिति जैमिनिर्मन्यते। कुतः? "स वा एष ब्रह्मनिष्ट इदं शरीरं

मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा श्रुणोति ब्रह्मणैवेदं सर्वमनुभवति'' इति माध्यन्दिनायनश्रुतौ उपन्यासात्।

'' आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति। गच्छेच्च हरिपादेन मुक्तस्यैषा स्थितिर्भवेत्।।'' इति स्मृतेः। '' गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्यानुदर्शनम् । इत्यादिपूर्वं स्मरणान्मुक्तस्यैवं (स्यैतत्) भविष्यति।'' इति बृहत्तन्त्रोक्तयुक्तेश्च।

एतत्तात्पर्यमाह **यथा** इत्यादिना। चिदानन्दः परमात्मा स एव शरीरस्तस्यास्तीत्येतादृशस्य चिदानन्दशरीरिणः। मुक्तस्य यथासंकल्पभोगा उपपन्नाः। भाष्योदाहृतश्रुतिस्मृतियुक्तिभिरुपपादित्वादिति भावः। यद्वा चिदानन्दशरीरिणः परब्रह्मरूपदेहवन्तो यथासंकल्पभोगा इति सामानाधिकरण्येनान्वयः। एवमभ्युपेत्य शरीराभावं भोगः समर्थितः।

इदानीं शरीरमंगीकृत्यापि भोगं समर्थयत्सूत्रं **ओं चितिमात्रेण तदात्कमत्वादित्यौडुलोमिः**। ब्रह्मस्वरूपातिरिक्तेन चितिमात्रेण केवलज्ञानस्वरूपेण भोगान्भुक्ते। प्राकृतदेहसम्बन्धस्यैव संसारापादकत्वात्तेषां च तदभावः। कुतः? मुक्तस्य तदात्मक्तवाच्चितिमात्रात्मकत्वादित्यडुलोमिराचार्यो मन्यते। ''सर्वं वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षते'' इत्युद्दालकश्रुतेः। एतत्सूत्रतात्पर्यमाह **यथा** इत्यादिनैव। चिदानन्दरूपं ब्रह्मस्वरूपातिरिक्तं शरीरं तद्वन्तः सतो मुक्ता यथासंकल्पभोगा इति । चिदानन्देत्युक्त्या श्रुतौ सूत्रे च चित् वित् शब्दावानन्दादेरुपलक्षकौ मात्रशब्दो चिदानन्दप्राकृतादिव्यवच्छेदार्थ इति सूचयति। एवमनयोर्मतयोरविरोधं प्रतिपादयत्सूत्रं **ओं एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः**। नैतयोर्मतयोर्विरोधमस्ति औडुलोमिनोक्तस्य चिन्मात्रेण भोगस्य जैमिन्युक्तस्य च ब्रह्मणा देहेन भोगस्य प्रामाणिकत्वात्प्रामाणिके अर्थे च विरोधासम्भवात् ।

ननु जैमिनिना स्वोक्तार्थे उपन्यासादिभ्य इत्युक्तत्वेन श्रुतिस्मृतियुक्तयः प्रमाणान्युपन्यस्तानि। औडलोमिना तु प्रतिज्ञामात्रमुक्तं न तु किंचित्प्रमाणमुपन्यस्तमित्यत उक्तं एवमप्युपन्यासादिति। औडुलोम्युक्तस्यार्थस्य ''स वा एष एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रीभवत्यथ तेनैव रूपेणाभिपश्यत्यभिश्रुणोत्यऽभिमनुतेऽभिविजानाति तामाहुर्मुक्तिः इति सौपर्णश्रुतावौडलोमिनोक्तस्याप्युपन्यासादित्यर्थः। पूर्वोक्तस्य च पूर्वोदाहृतप्रमाणेन सद्भावादित्यविरोधं भगवान्बादरायणो मन्यते। अविरोधप्रकारस्तु श्रुतावुक्तः।

''मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः। चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ।
तदंगानुगृहीतैश्च स्वांगैरेव प्रवर्त्तनम्। कुर्वन्ति भुंजते भोगांस्तदन्तर्बहिरेव वा।
यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिता ।।'' इति नारायणाध्यात्मे।

सायुज्यभाजां विष्णुप्रवेशकाले तच्छरीरेणैव भोगानुभवः इच्छया बहिरसंगमनकाले इतरेषां च मुक्तानां चितिमात्रेण स्वशरीरेणापि भोग इति अतो अविरोध इति भावः। एतत्तात्पर्य-माह **यथासंकल्पभोगांश्च चिदानन्दशरीरिण** इति । अत्र पूर्वोक्ततदन्तर्बहिरेव वेति मण्डूकप्लुत्या अनुवर्तते। ततश्च यदा मुक्तास्तदन्तःप्रविशन्तस्तदा चिदानन्दः परमात्मा तस्य शरीरं तद्वन्तो यथासंकल्पभोगाः भवन्ति। यदा नु बहिरायान्ति ये च बहिरेव सायुज्यानधिकारिणस्ते सर्वेऽपि चिदानन्दरूपस्वशारीरवन्तो यथासंकल्पभोगा भवन्तीति योजनीयम् ।।५।।

अथ मुक्तेः पुरुषार्थत्वंसिध्यर्थं तत्रत्यभोगः न ऐहिकभोगवत्तत्तदुपायसाध्यसाधनसाध्याः किन्तु संकल्पमात्रसाध्या इति साधयितुमधिकरणं **ओं संकल्पादेव च तच्छ्रुतेः**। न तेषां भोगादिषु प्रयत्नापेक्षा ''स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्टन्त्यथा यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्टन्त्यथ यदि भ्रातृलोककामो भवति संकल्पदेवास्य भ्रातरः समुत्तिष्टन्त्यथा यदि सखिलोककामो भवति संकल्पादेवास्य सखायः समुत्तिष्टन्त्यथ यद्यन्नपानलोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्टतोऽथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गंधमाल्ये समुत्तिष्टतेऽथ यदि गीतवादित्रलोककामो भवति संकल्पादेवास्य गीतवादित्रे समुत्तिष्टतोऽथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्टन्ति यं यमन्तमभिकामो भवति सोऽस्य संकल्पादेवास्य समुत्तिष्टते तेन कामेन सम्पन्नो महीयत'' (छा.उ.८-२)इति श्रुतेः। एतत्तात्पर्यमाह **यथा** इत्यादिना। चिदानन्दशरीरिणः मुक्ताः यथासंकल्पं संकल्पमनतिक्रम्य संकल्पानुसारेणैव भोगो एषां ते तथोक्ता इति ।।६।।

अथ मुक्तानां स्वाधमनियामकराहित्येन भोगसमर्थनार्थमधिकरणम् । तत्र लोके राजग्रहगतानां अधमा अपि प्रतीहारादयः प्रहर्त्तारो दृश्यन्ते तथैव यदि मुक्तावपि स्यात्तर्हि संसारसाधर्म्या-पत्तिरित्याशंकायां सूत्रं **ओं अत एव चानन्याधिपतिः**। सत्यसंकल्पादेव मुक्तः विष्ण्वादिस्वोत्तमातिरिक्तनियामकरहितः ।

परमोऽधिपतिस्तेषां विष्णुरेव न संशयः। ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः ।।

ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् । आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितिम् ।।

एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशयः ।। इति वाराहे ।

एतत्तात्पर्यमाह **यथा संकल्पभोगांश्च चिदानन्दशरीरिणः**। चिदानन्दशरीरिणः मुक्ताः यथासंकल्पभोगा इत्यन्वयः। सम्यक् संकल्पः समर्थः संकल्पः स्वापेक्षया समर्थः । कृपू सामर्थ्ये। कर्त्तरि पचाद्यच् । कृपो रो लः (पा.सू.८-२-१८)इति लत्वम् । तमनतिक्रम्यं तदधीन एव भोगो येषां ते तथाविधाः। नत्वधमनियम्या इत्यर्थः ।।७।।

नन्वेवमपि मुक्तानां भोग न युक्तः बाह्यदेहाभावत् । तदंगीकारेऽपि तत्राभिमानोऽस्ति न वा। आद्ये तदुत्पत्त्यादिना दुःखापत्तेः संसारित्वापातात् । ''न ह वै सशरीरस्य सतः प्रियाप्रिय-योरपहतिरस्ति'' इति श्रुतेः। द्वितीये सुषुप्तिवद्भोगयोगाभावः। चिन्मात्रदेहोऽप्यत एव भोगानुपयुक्तः। न च बाह्येन देहेन तदुपपत्तिः। सायुज्यभाजां यथा कथंचित्संभवेपीतरेषां तदभावेन भोगासंभव एवेत्याशंकापरिहाराय देहाभावमंगीकृत्यापि तावद्भोगसमर्थनाय सूत्रं **ओं अभावं बादरिराह ह्येवम्**। बादरिराचार्यः बाह्यदेहस्याभावं मन्यते। एवमपि तदभावेऽपि चिन्मात्रेण देहेन यद्देहाभावमङ्गीकृत्यापि तावद्भोगसमर्थनाय सूत्रं **ओं भावं जैमिनिर्विकल्पाम्नानात्** । ''स वा एष एवं-वित्परमाभिपश्यत्यभिश्रुणोति ज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथानन्दी ह्येवैष भवति नानानन्दं कंचिदुपस्पृशति'' इत्युद्दालकश्रुतौ विकल्पाम्नानात् । अन्यदेहस्यापि भावं जैमिनिराचार्यो मन्यते। अथैतयोर्मतयोर्विरोधाभावप्रतिपादनाय सूत्रं **ओं द्वादशाहवदुभयविधं बादरायणोऽतः**। मुक्तानां देहभावाभावाख्यमुभयविधमपि स्वमतमेव। कुतः? उभयत्रापि प्रमाणसद्भावात् । स्वेच्छासदसद्भावाभ्यामविरोधोपपत्तेः। यथा खलु द्वादशहः क्रत्वात्मकः सत्रात्मकश्च यजमानेच्छया। एकयजमानकर्तृकत्वे क्रत्वात्मको भवति। अनेकयजमानकर्तृत्वे च तत्तदिच्छयैव सत्रात्मको भवति। एवं मुक्तेच्छया भोगार्थं बाह्यदेहभावाभावयोरविरोधेनोपपत्तेरिति भगवान्बादरायणो मन्यते।

तत्र बाह्यदेहाभिमानाभावे भोगमुपपादयितुं सूत्रं **ओं तन्वभावे सन्ध्यवदुपपत्तेः**। यथा बाह्यदेहाभिमानाभावेऽपि स्वप्ने भोगस्तथा तत्राप्युपपद्यते जाग्रत्स्वप्नावस्थासधौभावत्त्वात् । स्वन्ध्या स्वप्नः। बाह्यदेहमंगीकत्य भोगोपपादनाय सूत्रं **ओं भावे जाग्रद्वत्** । बाह्यदेहसद्भावे तु जाग्रदवस्थायामिव तत्रापि भोगोपपत्तेः।

स्वप्नस्थानां यथा भोगो विना देहेन युज्यते।
एवं मुक्तावपि भवेद्विना देहेन भोजनम्।
स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।
स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचन । (ब्रह्मवैवर्त) इति स्मृतेः।

ननूक्तं खलु देहसद्भावे दुःखमप्यापद्यत इत्यतः सूत्रं **ओं प्रदीपवदावेशस्तथा हि दर्शयति**। शरीरमनुप्रविश्यापि तत्प्रकाशयन्तः पुण्यानेव च भोगाननुभवन्ति न तु दुःखादीन् । यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थतैलाद्येव भुंक्ते न तु तत्कार्ष्ण्यादि। ''तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति'' (बृ.उ.६-३-२२)इति श्रुतेः। न कर्म स्वर्गादीनि इति श्रुतेः। साधूनेव भोगान् भुङ्क्ते नासाधून् । तीर्णो हि तदा सर्वान् इति वाक्येन स्वर्गस्य विषयं किं न स्यात् इत्यतः सूत्रं **ओं स्वाप्ययसंपत्योरन्यतरापेक्षमाविष्कृतं हि**। स्वाप्ययः सुषुप्तिः सम्पत्तिः ब्रह्मप्राप्तिलक्षणो

**मोक्षस्तद्विषयो हि । तीर्णो हीति वाक्यं पठ्यते ।** "अत्र पिताऽपिता भवत्यनन्वागतं पुण्येनानन्वागतं पापेन" (बृ.उ.६-३-२२)इत्यादिवचनात् । स्वर्गस्थस्य तु न पितृत्वादिसम्बन्धराहित्यम् । पुत्रादिकृतश्राद्धादिभोक्तृत्वात्तस्येति। अतः न स्वर्गस्थविषयम् । तस्मात् इच्छागृहीततेजोमयादिदेहैः स्वरूपदेहैर्वा मुक्तानां भोगः उपपन्नः। न ह वै शरीरस्य इति श्रुतिस्तु कर्मनिर्मित-देहविषयत्वेनोपपन्नाः ।।८।।

एतत्तात्पर्यमाह **यथासंकल्पभोगा** इति। भुज्यते अनेनेति भोगः। भोगसाधनं शरीरम् । यथासंकल्पः इच्छानुसारं भोगः शरीरं येषां ते तथाविधाः । वस्तुतच्चिदानन्दशरीरिणोऽपि इच्छया देहान्तराण्यपि गृहीत्वा भोगाननुभवन्तीत्यर्थः। अथ परमेश्वरस्यैव सर्वोत्तमत्वसिध्यर्थं मुक्तस्य भोगेयत्तासमर्थनाय सूत्रं **ओं जगद्व्यापारवर्जम्** । "सर्वान्कामानाप्त्वाऽमृतः समभवत्" इति यदुच्यते तज्जागृत्सर्जनाद्यतिरिक्तकामविषयकमेव। कुतः श्रुतेः संकोच इत्यतः सूत्रं **प्रकरणादसन्निहितत्वाच्च** । एतस्य जीवप्रकणात् जीवानां च तादृशसामर्थ्यविदूरत्वात् ।

स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि।
मुक्तानां नैव कामः स्यादन्यान्कामांश्च भुंजते ।।

उक्तं समाक्षिप्य समादधत्सूत्रं **प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः** । "ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति" इति श्रुतेर्जागृदैश्वर्यमपि तेषामस्तीति चेन्न । आधिकारिकमण्डलाधिपतिब्रह्मा हि तत्रोच्यते । मुक्तहिरण्यगर्भस्य मुक्तदेवतामण्डल-पूज्यत्वात् । उक्तं च गारुडे

आत्मेत्येव पदं देवमुपास्य हरिमीश्वरम् (मव्ययम्) ।
केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन।। इति।

उत् ऊर्ध्वं वैकुण्ठादिलोकं न क्रामन्ति न गच्छन्ति इत्यर्थः। न चानन्दादयः प्रधानस्येत्युक्ति-विरोधः। तदुपासनस्य सम्पूर्णमोक्षार्थत्वात् । अत्र नोत्क्रामन्तीति सम्पूर्णमोक्षाभावोक्तेः। न च "बहुनात्र किमुक्तेन यावत् श्वेतं न गच्चति। योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णय" इत्युक्तिविरोधः। सकृच्छ्वेतद्वीपगमनाभ्युपगमात् ।

"श्वेतद्वीपं तथा गत्वा दृष्ट्वा विष्णुं च ते ततः। अनुज्ञाताः प्रमोदन्ते धरादिषु यथासुखम् ।।" इति वचनात्।

अत्रैव च स्थितिस्तेषामन्तरिक्षे च केचन। केचित्स्वर्गे महर्लोके जने तपसि चापरे।
केचित्सत्ये महात्मानो गच्छन्ति क्षीरसागरम् । तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः।
सालोक्यं तत्समीपत्वं सारूप्यं योग एव च । इमामारभ्य सर्वत्र यावत्सु क्षीरसागरे।

पुरुषोऽनन्तशयनः श्रीमन्नाराणाभिधः।

इमां भूमिमारभ्यानन्तासनपर्यन्तमवस्थितानां मुक्तानां सालोक्यान्यस्त्येव। सर्वस्थानेष्वपि भगवदवस्थितेः। अन्यथा मुक्तत्वाभावप्रसंगादिति भावः।

मानुषा वर्णभेदेन तथैवाश्रमभेदतः। क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः।
आजानजा कर्मजाश्च तात्विकाश्च शचीपतिः। रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तमोत्तमाः।
नित्यानंदे च भोगे च ज्ञानैश्वर्यगुणेषु च । सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम् ।
पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतुर्मुखः । स्वजगद्व्यापृतिस्तेषां पूर्ववत्समुदीरिता।
सयुजः परमात्मानं प्रविश्य च बहिर्गताः। तद्रूपान्प्राकृतांश्चपि विना भोगांस्तु कांश्चन।
भुंजते मुक्तिरेवं ते विस्पष्टं समुदाहृताः ।। इति।

ननु मुक्तब्रह्मादीनां मुक्तजगद्व्यापार इव अमुक्तजगद्व्यापारोऽपि किं न स्यादित्यतः सूत्रं **ओं विकारावर्ति च तथाहि दर्शयति**। मुक्तानां विक्रियन्ते ते विकाराः अमुक्तास्तद्वर्त्ती तद्विषयको व्यापारो न विद्यते। कुतः? एतेन खलु ब्रह्मप्रतिपाद्यमाना "इमं मानवमावर्त्तं नावर्तन्ते" (छां.उ.४-१५-६)इति हि श्रुतिः । वाराहे च "स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम् । बलिं हरन्ति मुक्ताय विरिंचाय च पूर्ववत् । सब्रह्मकास्तु ते देवा विष्णवे च विशेषता। न विकाराधिकारस्तु मुक्तानमन्य एव तु। विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुना" इति। एतत्तात्पर्यमाह **जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते। यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान् । अनन्यवशगाश्चैव** इति । ये अथ एव चानान्याधिपतिरिति पूर्वाधिकरणे स्वाभाविकोत्तमान्विना नान्यवशगाः। स्वावरानियम्यत्वेनोक्ताः। मुक्तास्ते जगत्सृष्ट्यादिविषयं अपिशब्दाल्लक्ष्म्यादिभोगादिरूपं भगवदेकनिष्ठमाह। सामर्थ्यं विना यथेष्टशक्तिमन्त इत्यर्थः। विना स्वाभाविकेत्यनुवादेन प्रागस्पष्टतया व्याख्यातं सूत्रमत्र स्पष्टतया व्याख्यातं वेदितव्यम् ।।९।।

**मळगी** – ते मुक्ताः मोदन्त इति व्यवहितक्रियापदेनान्वयः। ते कीदृशाः। **यथासंकल्पभोगाश्च** संकल्पमनतिक्रम्य भोगो येषां ते तथोक्ताः। भगवत्संकल्पानतिक्रान्तस्वसंकल्पानुसृतभोगवन्त इत्यर्थः। पुनः कीदृशाः। **चिदानन्दशरीरिणः** ज्ञानानन्दशरीरिणः। **यथेष्टशक्तिमन्तश्च** यथेष्टा स्वेच्छादीना या शक्तिस्तद्वन्तः।

**लिंघेरी** – ते मुक्ताः । मोदन्त इति दूरस्थक्रियापदेनान्वयः। ते कीदृशाः ? संकल्पमनतिक्रम्य भोगा येषां ते तथोक्ताः । पुनः कीदृशाः? **चिदानन्दशरीरिणः** चित् च आनन्दश्च चिदानन्दौ, चिदानन्दावेव शरीरं येषां ते तथोक्ताः ।।६।।

**नारायणपण्डित–** सम्पद्याविहाय स्वेनशब्दात् संकल्पादेव च तच्छ्रुतेरित्यादेरर्थमाह यथा इति। ज्ञानभोगाभ्यां क्षीणकर्माणो देहादुत्क्रम्य अर्चिरादिमार्गेण वायुं कार्यब्रह्म परं च प्राप्ताः प्रलयानन्तरं विष्णुं प्राप्य स्थिताः मुक्ताः विष्णिवच्छानुसारेण भोगयुक्ता इत्यर्थः। विशेषणसमुच्चये अवधारणे वा चशब्दः। चिदानंदरूपशरीरवन्त इति चितिमात्रेण तदात्मकत्वादित्यौडुलोमिरित्यादेरर्थः। जगद्व्यापारवर्जमित्यादेरर्थमाह जगत्सृष्ट्यादीति। जगत्सृष्ट्यादिविषयकं अयोग्यमहासामर्थ्यं विना स्वेच्छानुसारेण स्वावरनियमनादिशक्तिमन्त इत्यर्थः।

**गूढकर्तृक –** चतुर्थपादार्थं तात्पर्यतः संगृह्णात्यणुभाष्यकारः। यथा संकल्पभोगांश्च चिदानन्द-शरीरिणः। जगत्सृष्ट्यादिविषये महासमर्थ्यमप्यृते। यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान्। अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः। दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम्। पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः। कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः। नमो नमोऽशेषदोष-दूरपूर्णगुणात्मने। विरिंचशर्वपूर्वेड्य वन्द्याय श्रीवराय ते। इति। संकल्पेति संकल्पादेवेत्यादेरर्थः। यथा इति ज्ञानिभोगाभ्यां क्षीणकर्मणः देहादुत्क्रम्य आर्चिरादिमार्गेण वायुं कार्यं ब्रह्म परं च प्राप्ताः। प्रलयानन्तरं विष्णुं प्राप्य स्थिताः मुक्ताः। विष्णिवच्छानुसारेण स्वेच्छानुसारिभोगयुक्ता इत्यर्थः। चो विशेषणसमुच्चयेऽवधारणे वा। चिदानन्दशरीरिणः चिदानन्दरूपशरीरवन्तः इति चितिमात्रेणेत्यादेरर्थः। जगद्व्यापारवर्जमित्यादेरर्थः जगत्सृष्टि इति। जगत्सृष्ट्यादिविषयकमयोग्यं महासामर्थ्यं विना। स्वेच्छानुसारेण स्वावरनियमनादिशक्तिमंत इत्यर्थः।

**अणुभाष्यम्**

**विना स्वाभाविकोत्तमान्॥**

**अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः।**
**दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम् ॥७॥**

**सत्यनाथीया –** अत एव चानन्यादिरित्यादेरर्थमाह **विना** इति। स्वभावत एव स्वोत्तमादीन्गुर्वादीन् विना अन्यवशगा न भवन्तीति। उपाधिनापि स्वावरसमाधीना नेत्यर्थः। एवेत्यन्ययोगादिव्यवच्छेदार्थः। स्थिति माहेत्यादेरर्थमाह **वृद्धि** इति। दुःखचिन्ताश्रमालस्यादिदोषहीना विषयभोगेऽपि वृद्धिह्रासविवर्जिताः। सर्वदापि समानन्दा सन्तः अविरतं विरामरहितं नित्यं सुखं मोदन्ते अनुभवन्तीत्यर्थः। यद्वा सुखं यथा भवति तथा मोदन्ते हृष्यन्ति न संसारिवत्परवशेनेत्यर्थः।

तत्वमञ्जरी– यत्तु मुक्तानां लोकदृष्टान्तेन अवरनियम्यत्वशङ्कां व्युदासितुं सूत्रं **अत एव चानन्याधिपतिः** इति तदर्थमाह – **विना स्वाभाविकोत्तमान्**। अनन्यवशगाश्चैव इति। एवकारो भिन्नक्रमः। स्वभावानुगतानुत्तमान् विनैव अनन्यवशगा न तु सर्वथानन्यवशगा इत्यर्थः।

"परमोऽधिपतिस्तेषां" इत्यादेरिति भावः। यद्वा यथान्यास एवैवकारः। अनन्यवशगा न तु लोके राजगृहं प्रविष्टस्य स्वावरनियम्यत्वदृष्ट्या अत्रापि तथात्वं कल्प्यम् । सत्यसङ्कल्पत्वादि-वैलक्षण्यादिति भावः।

यत्तु मुक्तानामप्युपासनभावात् भोगविशेषभावाच्च आनन्दादिवृद्धिह्रासौ संसारिवत्स्यातां इत्यतः प्राप्तं **स्थितिमाह** इत्यादिसूत्रद्वयं तदर्थमाह - **वृद्धिह्रासविवर्जिताः** इति। मुक्तावुपासनस्य फलरूपत्वेन साधनरूपत्वाभावात् भोगस्य च क्रीडारूपत्वादिति भावः ।।१०।।

यत्तु सायुज्यभाग्भ्यः उत्तमेभ्योऽन्येषां नरोच्चाद्यानां चिच्छरीरेण सुप्तौ भोगादृष्टेः मुक्तावपि तस्य भोगायतनत्वायोगेन भोगाय बाह्यदेहाभ्युपगतौ दुःखादिकमाशङ्क्य समाधानार्थं **अभावं बादरिः** इत्यादि सूत्रसप्तकं तदर्थं प्राग्वक्तव्यमपि इह वृद्धिह्रासवर्जितत्वोक्तिप्रसङ्गाद्वा पूर्वोत्तरहेतुकत्वद्योतनाय वा अत्राह - **दुःखादिरहिताः** इति। "ज्योतिषैव रूपेण चिता वाऽचिता वा" इत्यादि श्रुत्या स्वेच्छया कदाचिद्बाह्यदेहोपादानेन भोगाङ्गीकारेऽपि न दुःखादिकम् । "तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति" इत्यादेरिति भावः।।८।।

यत्तु स्वर्गिणां पुनः संसारप्राप्तिं दृष्ट्वा मुक्तानामपि पुनरावृत्तिरिति शङ्काव्युदासाय सूत्रं **अनावृत्तिः शब्दादनावृत्तिः शब्दात्** इति तदर्थमाह - **नित्यं मोदन्तेऽविरतं सुखं** इति। अविरतं विरामरहितं सुखं नित्यं सर्वकालं मोदन्ते अनुभवन्ति । मोदनस्य सुखानुभवरूपत्वेऽपि इह सुखमिति श्रवणादनुभवमात्रं ग्राह्यम् । ज्ञानग्राह्यमितिवत् । यद्वा नित्यं मोदन्ते। कुतः? यतोऽविरतं सुखमिति योजना ।।११।।

**आनन्दमाला** – उक्तप्रकारेण मुक्तानां तदुभयेषां भोगमाह अस्मिन्पादे

"सम्पद्याविहाय स्वेन शब्दात्" (४-४-१) "सङ्कल्पादेव च तच्छ्रुतेः" (४-४-८) "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" (४-४-५) "चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः" (४-४-६) "प्रदीपवदावेशस्तथा हि दर्शयति" (४-४-१५) "जगद्व्यापारवर्जम्" (४-४-१७) "अत एव चानन्याधिपतिः" (४-४-९) "स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने" (४-४-२१) "भोगमात्रसाम्यलिङ्गाच्च" (४-४-२२) "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" (४-४-२३) इत्येतानि तदन्तरितानि च सूत्राणि व्याख्याति -

यथासंङ्कल्पभोगाश्च चिदानन्दशरीरिणः । जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते।

यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान् ।अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः।

दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम् । इति

अत्रायमभिसन्धिः - उक्तप्रकारेण भगवन्तं नारायणं सम्पद्यानादिसंसारसागरान्मुक्ता अविहायैव हरिमविरतं सुखं मोदन्ते। यथाकामं रमन्ते यथाकाममुपरमन्ते। तत्रोभयत्रापि सुखमेव। यथाकामत्वात् । न चैतेषां भोगस्तदा तदोत्साहसाध्यः । किन्तु यथासङ्कल्प एव। यो यो भोगस्तैरिष्यते स सङ्कल्पादेव समुत्तिष्ठति, प्रयत्नमकृत्वापीत्यर्थः। चशब्दोऽवधारणे।

न च तेषां भोगस्यैवासम्भवः शरीरराहित्यादिति वाच्यम् । यतश्चिदानन्दसन्दोहात्मकस्य ब्रह्मणस्तादृशमेव शरीरमेतेषां स्वभोगायतनमविरोधेन सम्भवति। अपि च, ततः पृथगेव चिदानन्दात्मकं स्वशरीरं च तेषां सर्वेषामस्ति। तेनैव अन्येनापि वा भुञ्जते। उभयथा च श्रुत्युक्तेः।

अचिच्छरीरमपि किञ्चित् तेजिष्ठं सुखैकायतनं स्वेष्टत्वेन प्रवेष्टुं शक्यम् । नान्यथा तदस्ति। तथा च योजना - आनन्दार्थं शरीरिणश्चिदित्यन्वयः। सुखैकभोगार्थं जडशरीरिणो वेत्यर्थः। एतद्भावाभावपक्षयोर्जाग्रत्स्वप्नयोरिव भोगः सम्भवति। न च तत्र दुःखस्पृष्टिराशङ्कनीयेति दुःखादिरहिता इत्युक्तम् । आदिशब्दात् तत्कारणभूतं पापं सुखानुत्पत्तिः तन्नाशश्चेत्यादिदोषा गृह्यन्ते। अतस्तैरपि रहिता इत्यर्थः। युक्तं चैतन्मुक्तानां प्रदीपवत् , शुभस्यैव भोगो नान्यस्येति। दीपस्य स्वभावशक्त्या तथात्वं सम्भवति, न हि मुक्तानामिति मा भूत् । यथेष्टकर्मणि यथेष्टा च स्वभावशक्तिर्मुक्तानामप्यस्ति। चशब्दान्न च काचिदशक्तिः। सर्वकामावाप्तिश्रुतेः। एवं चेत् यदा कदाचिज्जगन्निर्माणकर्मापि कुर्वन्ति, इच्छायां सत्यां सुकरत्वादित्येतदपवदति। जगदित्यादिना । यत्तज्जगत्सृष्टिस्थित्यादिव्यापारविषयं महासामर्थ्यमीश्वरैकाश्रयं प्रसिद्धं तदृत एव तेषामेषा यथेष्टशक्तिः प्रतिज्ञायते। अपिशब्दाज्जीवयोग्यमपि विकारविषयमृते। तयोरत्युच्चनीचत्वेनायोग्यत्वात् । न चायोग्यमपि मुक्ता इच्छन्ति। निर्दोषत्वनियमात् । मनोदोषादेव ह्ययोग्यमिच्छन्तो हन्यन्ते । तस्मात् तदुभयमतेऽपि यदात्मयोग्यं सामर्थ्यं शुभाशुभयोर्भोजनवर्जनादौ निर्विघ्नकरत्वादिना निर्वाहकं स्यात् तदेवात्राभिप्रेयत इति नातिप्रसङ्गः।

न च मुक्तानामन्येऽधिपतयो भवन्ति। अनिष्टत्वात् । स्वयमेव स्वाधिपतय इति स्ववशगा एव। अतः शुभानुभवादेर्नियमविपर्ययः परतोऽपि नापद्यते। न च बद्धा मुक्ताधिपत्यमर्हन्ति, अयोग्यत्वादिति चशब्दार्थः। न तावता नैराधिपत्यमधिमुक्त्याशङ्क्यम्। योग्यान् विनैवान्याधिपतिनिषेधात् । के तर्हि केषां गुरवः। ये येभ्यः स्वाभाविकगुणैरुत्तमा गुरुपरमगुर्वादयः परमपुरुषो विष्णुश्च ते तेषामधिपतय एव क्रमाधिका अभिधीयन्ते। यत्प्रेरिताः शिष्यप्रशिष्याद्यास्तरुणतराः सुरतरुसुरभिसुमनोमालभारिणः सुखमविरतमपि सरामा मोदन्ते। अतस्तान् विनैवान्याधिपतिनिषेधः कृतः।

न च जीवन्मुक्ताविव मुक्तावपि पुनःपुनरुपास्तौ फलस्य वृद्धिः स्यात् । नापि विपर्ययेण ह्रासः। विधिनिषेधयोर्मुक्तेष्ववृत्तेरित्येदभिप्रायेण "वृद्धिह्रासविवर्जिताः" इत्युक्तम् । वृद्धिह्रासाभ्यां विशेषतो

वर्जिताः सामान्यतः सहिता इत्युपसर्गार्थः। तस्मादेवं सम्प्राप्तसम्पदां क्रमाधिकानामब्धिवदेव वृद्धिह्रासावतिमर्यादौ कदाचिदपि न भवेताम्। समर्यादौ स्यातामेव। अप्रतिषिद्धत्वात्।

तस्माद् यथायोग्यपरिपूर्णत्वेन संस्थितिरेव मुक्तानामिति नियमः । न च कदाचित् ततः पुनरावर्तन्त इति वक्तुं नित्यम् इति विशेषणम्। अविरतमिति तु यावत्संस्थितिनैरन्तर्यमेव मोदस्य दर्शयति। नत्वनन्तकालीनत्वं इत्यपुनरुक्तिः ।।१-९।।

उक्तार्थनिगमनार्थं चैतन्नित्यपदम् । यदेतदध्यायचतुष्टय्यामादित आन्तादुदितं सर्वार्थजातं तन्नित्यं निर्णीतम्, न तु सन्दिग्धम्, कुतः? अपरिमितवेदसिद्धत्वादिति सकलमनाकुलम् ।।

**नरसिंहतीर्थ –** मुक्तानां भोगादिना वृद्धिह्रासाभावसाधकस्य स्थितिं आह हि दर्शयतः चैवं प्रत्यक्षानुमाने इति दशमाधिकरणस्य तात्पर्यम् **वृद्धिह्रासविवर्जिता** इति। ब्रह्मप्राप्य भोगान् भुंजानस्यापुनरावृत्तिसाधकस्यानावृत्तिः शब्दादित्येकादशाधिकरणस्य तात्पर्यम् **दुःखादिरहिता** इति समग्रम्। आदिपदेन अज्ञानादिग्रहणम् । विशेषेण रतं रतिः भावे क्तः क्रीडेति यावत् । यत्तद्विरतं स्वरूपसुखं लब्धेति शेषः। नित्यं सर्वदा पुनरावृत्तिरहिता इति यावत् । मोदन्ते विषयाभिव्यक्ति-सुखमनुभन्तीत्यर्थः। उक्तं चानन्दमयाधिकरणे तत्वप्रकाशिकायां प्रकृष्टाप्रकृष्टविषयोत्थौ मोदप्रमोदौ इति। भगवद् ज्ञानभोगाभ्यां निवृत्तसमस्तानिष्टकर्माणः स्वोत्तमप्रवेशेन ब्रह्मनाड्योत्क्रमणेन परित्यक्तदेहाः। स्वोचितेनार्चिरादिना वा वैकुण्ठलोकवासिनं भगवन्तं हिरण्यगर्भेण सह प्राप्ताः भिन्नलिंगशरीराः। विध्वस्तप्रकृतयो अत्यन्तनिवृत्तानिष्टाः सम्यगाविर्भूतानन्दादिगुणाः भगवत्समीप एव तमुपसीनाः स्वरूपेण वा लीलागृहीतविग्रहैर्वा संकल्पमात्रसाध्यान् दिव्यभोगान् तारतम्येन भुंजानाः न कदाचित्पुनरावर्तन्त इति मोक्षस्वरूपं एतदध्यायप्रतिपाद्यमिति ज्ञातव्यम् ।

एवं विरक्तिभक्त्युपास्तिजनितभगवत्साक्षात्कारोदितप्रसादात् अशेषपुरुषार्थप्रवरोक्तरूपकैवल्यसिद्धेः अशेषगुणपूर्णतया निर्दोषतया च भगवान्नारायणो जिज्ञास्य इत्येषमतिमंगलम् ।।

**छलारी –**

**ओं स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ओं**

न जायत इति श्रुतिः, स्थितिं मुक्तानामेकप्रकारेण अवस्थामाह । महत्तां प्रत्यक्षं कारणशून्यत्वानुमानं च एवमेकप्रकारेण अवस्थितिं दर्शयत इति सूत्रार्थः।

अत्र मुक्तस्याप्यानन्दादीनां वृद्धिह्रासौ विद्येते। "एतत्सामगायन्नास्ते" (तै.उ.३-१०)इति तस्याप्युपासनादिसाधनश्रवणादिति प्राप्ते –

न मुक्तानन्दादीनां वृद्धिह्रासौ विद्येते। किन्त्वेकप्रकारेणैवावस्थानम् । कुतः ? "स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते न ह्रसते स्थित एव सर्वदा भवति" (जाबाल)

इति श्रुतेः। वृद्ध्यभावग्राहिमहत्प्रत्यक्षात् । मुक्तो न वृध्यादिमान् कारणशून्यत्वादिति अनुमानाच्च। न चोपासनाविरोधः। मुक्तिगतोपासनादेश्च फलरूपत्वेन साधनरूपत्वाभावात् ।

हरेरुपासना चात्र सदैव सुखरूपिणी।
न च साधनभूता सा सिद्धिरेवात्र सा यतः। इति स्मृतेरिति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **वृद्धिह्रासविवर्जिता इति।।१०।।**

**ओं अनावृत्तिशब्दात् अनावृत्तिश्शब्दात् ओं**

मुक्तानामनावृत्तिः। न स्वर्गिवत् पुनरावृत्तिः। कुतः ? शब्दात् - तथा श्रुतेः। समस्तशास्त्रावधारणार्था सूत्रस्य द्विरुक्तिरिति सूत्रार्थः।

अत्र मुक्तः पुनरावृत्तिमान् स्वस्थानं विहाय अन्यत्र गतत्वात् । स्वर्गादिगतवदिति प्राप्ते -

न मुक्तः पुनरावृत्तिमान् ''न च पुनरावर्तते न च पुनरावर्तते'' इति श्रुतेः इति सिद्धान्तः कृतः।

तस्य तात्पर्यमाह - **दुःखादि** इति । आदिपदेन अज्ञानादिपरिग्रहः। अविरतं सन्ततं अविच्छिन्नमित्यर्थः। सन्तताविरतानिशम् इत्यमरः। सुखं स्वरूपानन्दं नित्यं सर्वदा पुनरावर्तिरहिता इति यावत् । मोदन्ते अनुभवन्ति। मोदनस्य आनन्दानुभवरूपत्वेऽपीह सुखमिति श्रवणादनुभवमात्रं ग्राह्यम्। तदेवं विरक्तिभक्तिउपास्तिजनितभगवत्साक्षात्कारोदिततत्प्रसादात् अशेषपुरुषार्थप्रवर-कैवल्यसिद्धेः अशेषगुणपूर्णतया निर्दोषतया ज्ञेयतया गम्यतया च श्रीभगवान्नारायणो जिज्ञास्य इति सिद्धम्।।११।।

**श्रीनिवासतीर्थीया-** अत एव चानन्याधिपतिरित्यस्य तात्पर्यमाह **विना स्वाभाविकोत्तमान्** स्वभावत एवोत्तमान् विष्णुदेवतागुर्वादीन् विना अनन्यवशगा अन्यवशगा न भवन्ति। स्वाधमाधीना नैवेत्यर्थः। स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमान इत्याद्यधिकरणतात्पर्यमाह **वृद्धिह्रास** इति । दुःखचिन्तालेशादिदोषरहिताः। विषयभोगेऽपि वृद्धिह्रासविवर्जिताः सर्वदेकप्रकारानन्दा इत्यर्थः। अनावृत्तिः शब्दादित्यधिकरणस्य फलितमर्थमनुवदति **मोदन्त** इति। अविरतं विरामरहितम् । पुनरावर्तिवर्जितमिति यावत् । सुखं मोदन्ते अनुभवन्तीत्यर्थः। अविरतं यथा भवति इति क्रियाविशेषणं वा।

**नारायणाचार्य-** ननु ''इमाल्लोकान्कामान्नी कामरूप्यनुसंचरन् । एत्सामगायन्नास्ते'' (तै.उ.३-१०) इति श्रुतौ मुक्तानामप्युपासना श्रूयते। तस्याश्च फलं वक्तव्यम् । तच्चानन्दवृध्यादि-कमेव नान्यदतो मुक्तावथानन्दवृद्धिह्राससद्भावात्संसारसाम्यमापन्नमित्यतः सूत्रं **ओं स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने**। नोपासनाश्रवणान्मुक्तानां वृद्धिह्रासौ वाच्यौ किन्तु एक एव प्रकारेणैव

स्थितिः। यतः श्रुतिरेकप्रकारेण स्थितिमाह। योगिप्रत्यक्षेणानुमानेन च तथैव प्रतीतेरिति सूत्रार्थः। "स एष तस्मिन्ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सदा भवति दर्शन्नेव ब्रह्म दर्शन्नेवात्मानं तस्यैवं दर्शयतो ग्गपत्तिर्न विपत्तिः" इति जाबालिश्रुतिराह । दर्शन्पश्यन्नुपासन इत्यर्थः। परप्रत्यक्षस्यास्मान्प्रत्यप्रत्यक्षत्वेऽपि तद्वचनात् ज्ञायते।

यत्र गत्वा न म्रियते यत्र गत्वा न जायते।
न यत्र गत्वा हीयते यत्र गत्वा न वर्धते ।। इति मोक्षधर्मोक्तेः।

वृद्धिह्रासकारणाभावलिंगात् वृद्धिह्रासाभावानुमानाच्च । एतेनोपसनावृद्ध्यादिकारणमेव न किन्तु स्वभावादेव क्रियते जगत्सृष्ट्यादीश्वरलीलावदिति सूचयत्यतो हेतोर्नासिद्धिः। उक्तं च ब्रह्मवैवर्ते

न ह्रासो न च वृद्धिश्च मुक्तानां विद्यते क्वचित् । विद्वत्प्रत्यक्षसिद्धत्वात्कारणा-भावतोऽनुमा।

हरेरुपासना चात्र सदैव सुखरूपिणी। न च साधनभूता सा सिद्धिरेवात्र सा यतः।। इति।

ननु मुक्तानां भोगविशेषस्तावच्छ्रूयते । "स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा" इत्यादिश्रुतेः। तदन्यथानुपपत्या आनन्दवृद्ध्यादिकमपि कल्पनीयमेव। अन्यथा प्रामाणिक-त्वहानापत्तेरित्यतः सूत्रं **ओं भोगमात्रसाम्यलिंगाच्च** । भोगमात्रस्य विशेषे सत्यपि मुक्तानां साम्यमेव श्रूयते । तेन लिंगेनानुमीयते न भोगविशेषो वृध्यादिकारणमिति। "एतमानन्दमयमात्मान-मनुविश्य न जायते न म्रीयते न वर्धते न ह्रसते यथाकामं चरति यथाकामं पिबति यथाकामं रमते यथाकाममुपरमते" इति श्रुतौ भोगविशेषमुक्त्वापि साम्यमेवोच्यते। भोगविशेषस्तु फलाभावेऽपि लीलयैवेति भावः। अत्र

वृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।
कादाचित्कविशेषस्तु नैव तेषां निवार्यते।।
प्रवाहतस्तु वृद्धिर्वा ह्रासो वा नैव कुत्रचित् ।
नाप्रियं किंचिदपि तु मुक्तानां विद्यते क्वचित्।।
कुत एव तु दुःखं स्यात्सुखमेव सदोदितम् ।
भोगादीनां विशेषे तु वैचित्र्यं विद्यते क्वचित्।। इति नारायणतन्त्रे।।१०।।

एतत्तात्पर्यमाह **वृद्धिह्रासविवर्जिताः। दुःखादिरहिता** इति । चिदानन्दशरीरिणो मुक्ता इति वर्त्तते। स्पष्टार्थमेतत् । नन्वेवमपि मुक्तस्यापि कदाचित्स्वर्गस्थस्येव पुनरावृत्तिर्भवेत् । न चानन्तकालवासित्वश्रवणात्कथं सेति वाच्यम्। अनन्तस्यापि कालस्य क्वचिद्युगपत्क्षयसम्भवात्। न चैतदसम्भावितं भारतयुद्धे अनेकोत्पातकथनावसरे क्रमिकतिथित्रयरूपकालस्य युगपत्क्षय-स्योक्तत्वात्।

चतुर्दशीं पंचदशीं भूतपूर्वां चतुर्दशीम् ।
इमां तु नाभिजानेहममावास्यां त्रयोदशीम् ।। इति भारते।

भूता तु चतुर्दश्याः पूर्वां त्रयोदशीमित्यर्थः। पूर्वार्धोक्तं प्रमेयमेकैकतिथिक्षयरूपं यद्यपि जाने तथापि पंचदश्या अमावास्यास्त्रयोदशित्वमद्भुतं प्रागननुभूतमिदानीं दृश्यत इति श्लोकार्थः। एवमसंभावितोऽपि सर्वस्य कालप्रवाहस्य युगपत्क्षयः किं न स्यात् । अत एवाहुः अर्थोऽसंभवनीयस्तमपि घटयति क्रूरकर्मा विधाता इति। इत्याशंकापरिहाराय सूत्रं **अनावृत्तिः शब्दादनावृत्तिः शब्दात्** इति। "न च पुनरावर्तते न च पुनरावर्तते" (छा.उ.८-१५-१) इति श्रुतेः। न मुक्तस्य पुनरावृत्तिः। किंच "सर्वान्कामानाप्त्वा अमृतः समभवत्समभवत्" (ऐ.आ.२-५-१-१५)इति श्रुतौ मुक्तस्य सर्वकामावाप्तिः श्रूयते। न हि प्रेक्षावतः शुभात्पुनरावृत्तिकामः सम्भवति। कदाचिद्युगपत्सर्वकालक्षयाशंका तु स्वव्याहता कादाचिदित्युक्त्यैव कालमंगीकृत्य पुनस्तदभावांगीकारे कथं न व्याहतिरत उन्मत्तशंकात्वादुपेक्षणीयैवेति भावः।

**मळगी – स्वाभाविकोत्तमान्** क्लप्तस्योत्तमदेवान् **विना** ऋते। **अनन्यवशगाश्च** न अन्यवशं गच्छन्ती ते तथोक्ताः। स्वावरानायत्तत्वेन स्वोत्तमाधीना इत्यर्थः। **वृद्धिह्रासविवर्जिताः** वृद्धिश्च ह्रासश्च तौ तथा, ताभ्यां विवर्जिता एव। मुक्तस्थाने चीर्णफलरूपध्यानै आनन्दवृद्धिह्रासरहिताः। **दुःखादिरहिताश्च** असंस्पृष्टसमस्तचिन्तसन्तापादिदोषाः। अत एव **नित्यं** पुनरावृत्तिशून्यलोके । **अविरतं** निरन्तरं । **सुखं** सुखं यथा स्यात्तथा **मोदन्ते** सुखमनुभवन्ति। कथमित्याकांक्षायामाह **जगत्सृष्ट्यादि** इति। जगत्सृष्ट्यादिविषयं जगतः सृष्टिः सा। तथा सैव आदिर्यस्य सः । तथा स विषयो यस्य तत्तथोक्तं **महासामर्थ्यं** । **ऋते** विना।।६,७।।

**लिंघेरी –** पुनः कीदृशाः ? **यथेष्टशक्तिमन्तः** यथेष्टा शक्तिः सा येषां अस्तीति ते तथोक्ताः । पुनः कीदृशाः ? **अनन्यवशगाः** न विद्यते अन्यवशता ते तथोक्ताः । स्वाभाविकोत्तमान् **विना** ऋते । पुनः कीदृशाः ? **वृद्धिह्रासविवर्जिताः** वृद्धिश्च ह्रासश्च वृद्धिह्रासौ ताभ्यां विवर्जिताः । पुनः कीदृशाः? **दुःखादिरहिताः** दुःखमेवादिर्येषां तैः दुःखादयः, दुःखादिभिः रहिताः अस्पृष्टदुःखा सन्तः। **नित्यं** अविरतम्। सुखं यथा भवति तथा मोदन्ते । कथमित्याकांक्षायामाह। **जगत्सृष्ट्यादिविषये** जगतः सृष्टिः जगत्सृष्टिः, जगत्सृष्टिरेव आदिः यस्य सः जगत्सृष्ट्यादिः, तस्य विषयं तथोक्तं तस्मिन् । महासामर्थ्यं । **ऋते** विना।।७।।

**नारायणपण्डित –** अत एव चानन्याधिपतिरित्यादेरर्थः विनेति। स्वभावत एव स्वोत्तमान्विष्णुदेवतागुर्वादीन् विना अन्यवशगा न भवन्ति। उपाधिनापि स्वसमाधमाधीनाः नेत्यर्थः। एवशब्दः अन्ययोगादिनिरासार्थः। स्थितमाहेत्यादेरर्थमाह वृद्धीति। दुःखचिन्ताश्रमालस्यादिदोषहीनाः विषयभोगेऽपि वृद्धिह्रासविवर्जिताः। सर्वदा समानानन्दाः सन्तः अविरतं विरामहीनं नित्यं सुखं

मोदन्ते अनुभवन्तीत्यर्थः। यद्वा सुखं यथा तथा मोदन्ते हृष्यन्ति संसारिवत्परवशं नेत्यर्थः ।
**अधिकरणानि ११ सूत्राणि २३**

**गूढकर्तृक** – अत एव चानन्याधिपतिरित्यादेरर्थः। **विना इति।** स्वभावत एव स्वोत्तमान् विष्णुदेवतागुर्वादीन् विना अन्यवशगाः न भवन्ति। उपाधिनापि स्वसमाधमाधीनः नेत्यर्थः। एवकारो अन्ययोगादिनिरासार्थः। स्थितिमाहेत्यादेरर्थः **वृद्धि** इति। दुःखचिन्ताश्रमालस्यादिदोषहीनाः। विषयभोगेऽपि वृद्धिह्रासविवर्जिताः। सर्वदा समानंदाः सन्त अविरतं विरामहीनं नित्यं सुखं मोदन्ते। अनुभवन्तीत्यर्थः। यद्वा सुखं यथा तथा मोदन्ते हृष्यन्ति। न संसारिवत्परवशेनेत्यर्थः।

**सत्यनाथीया–** स्वकृतग्रंथस्वरूपं तस्याप्तिमूलत्वं च दर्शयन् तेन विष्णुप्रीतिमाशास्ते **पूर्णप्रज्ञेन** इति।

**आनन्दमाला** – अथेदानीमेव परिसमापितं (संग्रहभाष्यं भगवानाचार्यः शिष्यशिक्षायै) विज्ञापयन्नात्मकृतं स्वस्वामिनि विष्णौ समर्पयत्युत्तरपद्येन । तदुत्तरेण तु ग्रन्थावसानेऽपि क्रियासमभिहारेण तस्मै नमस्क्रियामाचरति।

**अणुभाष्यम्** –

**पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः।**
**कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः ॥८॥**

**सत्यनाथीया–** विवक्षिततत्वज्ञानादिमत्ता मुनिना करणापाटवादिदोषरहितेन पूर्णप्रज्ञनामकाचार्येण सर्वशास्त्रार्थं पूर्णविष्णुविषयब्रह्ममीमांसाशास्त्रं तदर्थस्य संग्रहोऽयं बुद्धिवाग्यतः कृतः संकुच्य पिंडीकृत्य बुद्ध्यारोहार्थं उक्त इत्यर्थः। तेन ग्रंथेन मत्कृतेन रमापतिः रमायुतपरमात्मा सर्वस्वामी विष्णुः प्रीयतां प्रीतस्स्यादित्यर्थः।

**नरसिंह** – एवं समापितभाष्यो भगवानानन्दतीर्थमुनिः अस्य भाष्यस्य परमाप्तप्रणीतत्वेन प्रामाण्यादिसिद्धये स्वकृतत्वं ज्ञापयन् भगवत्प्रीतिमेवाशास्ते **पूर्ण** इति। पूर्णा ईशादन्यत्र स्वपरगताखिलविशेषविषया ईशे अन्यजीवेभ्यो अधिकविषया प्रज्ञा ज्ञानं यस्य स तथोक्तः। तेन सर्वशास्त्राणामर्थः तस्य संग्रहो येन स तथोक्तः। अयं ग्रंथः तेन ग्रंथेन परमात्मेति विशेष्यसिद्धौ रमापतिरिति वचनं तत्सहितस्यैव प्रीत्याशासनार्थम् । अन्तेऽपि मंगलस्य कर्तव्यत्वात् ।

**श्रीनिवासतीर्थीया–** स्वस्वरूपमधिकारिणां सूचयन् स्वप्रणीताणुभाष्येण परमात्मप्रीतिरूपफल-माशास्ते **पूर्णप्रज्ञेन** इति। ईशादन्यत्रालोचने सर्वविषये प्रज्ञासम्पन्नेन **मुनिना** विप्रलम्भादिदोषशून्येन। अनेन ऋजुत्वं सूचितम् । पूर्णप्रज्ञेन मुनिना सर्वप्रमेयविषयत्वात् सर्वशास्त्रं मीमांसाशास्त्रं तदर्थस्य

संग्रहरूपोऽयं अणुभाष्याख्यो ग्रन्थः कृतः। तेन मत्कृतेन ग्रंथकरणेन मे रमापतिः **परमात्मा** सर्वस्वामी विष्णुः **प्रीयतां** प्रीतस्यादित्यर्थः।

**छलारी –** अथायं भाष्यकारः स्वभाषितभाष्यस्य अत्याप्तिमूलत्वसमर्थनाय श्रुतिप्रसिद्धं स्वस्य परमाप्तत्वं दर्शयन्, तथा शिष्याणां आदरातिशयजननाय ग्रन्थाणुत्वेऽपि अर्थाधिक्यं च दर्शयन् स्वकृतग्रंथस्य हरिप्रीतिमेव फलत्वेन प्रार्थयते। **पूर्णप्रज्ञेन** इति । दशप्रमतिशब्दपर्याय-पूर्णप्रज्ञशब्दप्रयोगेण स्वस्य "तृतीयमस्य ऋषभस्य दोहसे दशप्रमतिं जनयन्त योषणः। निर्यदीं बुध्नान्महिषस्य वर्पसा ईशानासः श्रवसा क्रन्त सूरयः" इत्यादि श्रुतिप्रसिद्धिं सूचयति। तदुक्तं स्थानान्तरे "यस्य त्रीण्युदितानि वेदवचने" इति। **पूर्णप्रज्ञेन** इत्यनेन विवक्षितार्थतत्वज्ञानं, **मुनिना** इत्यनेन अविप्रलम्भकत्वं, **सर्वशास्त्रार्थसंग्रहः अयं ग्रन्थः कृत** इत्यनेन विवक्षाकरणपाटवावपि सूचयति। रमापतिरित्यनेन रमायाः सकल वाङ्मनसदेवतात्वेन तत्सहितस्यैव परमात्मनः प्रीत्याशासनं युक्तमिति सूचयति।

अयमत्र तृतीयमित्यादिश्रुत्यर्थः। ऋषभस्य देवश्रेष्ठस्य अस्य वायोः तृतीयं दशप्रमतिं पूर्णप्रज्ञनामकं रूपं "दशेति पूर्णमुद्दिष्टम्" इति वचनात् । योषणः योषितः आचार्याणां मातृत्वेन पूज्यत्वात् बहुवचनम् । दोहसे ज्ञानदोहनार्थं जनयन्त अजनयन्त । ईशानासः रुद्राद्याः सूरयः ज्ञानिनः महिषस्य महितषड्गुणस्य हरेः वर्पसः वरणीयत्वात् पालकत्वात् वर्योनामकान् गुणान् ज्ञानादीन् यत् यस्मात् ईं एव यस्मादेवेत्यर्थः। बुध्नात् बोधरूपात् पूर्णबोधाख्यावतारात् । शवसा सुखेन निरक्रन्त नितरां ज्ञातवन्तः। तत्तृतीयं वपुरिति पूर्वेण सम्बन्धः। अतः परमाप्ततमप्रणीतत्वादिदं भाष्यं सर्वसज्जनैरादरेण अङ्गीकार्यमिति भावः।

**नारायणाचार्य–** सर्वशास्त्रार्थावधारणार्थं समस्तसूत्रस्य द्विरुक्तिः। अतो मुक्तानां पुनरावृत्यभावन्मुक्तेःपुरुषार्थत्वमिति सिद्धम् । एतत्तात्पर्यमाह **नित्यं मोदन्तेऽविरतं सुखं** इति। अविरतं विच्छेदरहितं सुखं मोदन्ते अनुभवन्ति तन्नित्यं अनन्तकालम् । अतो न मुक्तानां पुनरावृतिरिति भावः। एवंविधग्रंथनिर्माणस्य शिष्यानुग्रहो अवान्तरफलं तच्चशिष्याणां पुरुषार्थहेतुत्वात्। शिष्यगामि आत्मगामिफलं तु मुख्यं भगवत्प्रसाद एवेति सूचयन् तमेवाशास्ते। **पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः। कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः** इति । सर्वस्य चतुर्लक्षणीरूपस्य ब्रह्ममीमांसाशास्त्रस्येत्यर्थः। संगृह्यते संक्षेपेण प्रतिपाद्यतेऽनेनेति सर्वशास्त्रार्थसंग्रहोऽयं ग्रंथः। पूर्णप्रज्ञनाम्ना योऽयं कृतस्तेन रमापतिः परमात्मा प्रीयतामित्यन्वयः। पूर्णप्रज्ञ इति नाम न डित्थादिवत्सांकेतिकं किन्तु अन्वर्थकमेवेत्याशयेनोक्तं **मुनिना** मननशीलेन । तेन चाशेषशास्त्रार्थस्यैव तावता अविस्तरेण ग्रंथेन संग्रहणे अनन्यसाधारणं सामर्थ्यं सूचितम् । तेन यान्यत्रत्याक्षराणि तत्रैव सर्वोऽपि शास्त्रार्थः संगृहीत इति सूधीभिः परिभाव्य ज्ञातव्यम् ।

नत्वापाततेति। न दृश्यत इत्यतोऽत्र नोक्त एवेति न मन्तव्यमित्यपि ध्वनितं बोद्धव्यम् । ननु सुखं दुःखाभावो वा आशास्यः रमापतिप्रीतिस्तु तदुभयबहिर्भूता। अतस्तस्या अपि फलान्तरं वक्तव्यमित्यतः परमात्मेति रमापतेर्विशेषणमुक्तम् । "तदेतत्पुत्रात्प्रेयो मित्रात्प्रेयो वित्तात्प्रेयो सर्वस्मादन्यस्मादन्तरं यदयमात्मा" इति श्रुतेः। ततोऽन्यः पुरुषार्थो नास्तीत्यर्थः।

ननु तर्हि मोक्षं कुतः परमफलत्वेन कामयन्ते इत्यतोऽप्युक्तं **परमात्मा** इति। परमाणां परमैकान्तानां आत्मा । आदीयते उपादीयते इत्यात्मा। इतरेषां मोक्षस्य काम्यत्वेऽपि परमैकान्तशिरोमणेः स्वस्य रमापतिरेवेष्ट इत्यतः स एव परमपुरुषार्थ इति भावः।

**मळगी –** उपसंहरति **पूर्णप्रज्ञेन** इति। पूर्णा प्रज्ञा यस्य यस्मादिति वा तथोक्तः। यद्वा पूर्णे हरौ प्रज्ञा यस्येति । हर्यासक्तबुद्धिरित्यर्थ इति वा । यद्वा "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमदुच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुत्युक्तपूर्णं भगवद्रूपम् । रुद्राद्यपेक्षया प्रकर्षेण जानातीति वा तथोक्तस्ते। **मुनिना** "स हि लोके मुनिर्नाम यः कामक्रोधवर्जितम्" इत्युक्तलक्षण-श्रीमदाचार्यमुनिना। **अयं** प्रसिद्धः। **सर्वशास्त्रार्थसंग्रहः** समस्तब्रह्मसूत्रशास्त्रार्थसंग्रहः कृतः । **तेन** ग्रन्थकरणेन। **परमात्मा** क्षराक्षरचेतनोत्तमः **रमापतिः** लक्ष्मीपतिः **प्रीयतां** प्रीतो भवतु ॥८॥

**लिंघेरी –** उपसंहरति **पूर्ण** इति। पूर्णप्रज्ञेन मुनिना अयं सर्वशास्त्रार्थसंग्रहः कृतः । तेन संग्रहेण **रमापतिः परमात्मा प्रीयतां** प्रीतो भवतु ॥८॥

**नारायणपण्डित–** स्वकृतग्रंथस्वरूपं तस्याप्तिमूलत्वं च दर्शयन् तेन विष्णुप्रीतिमाशास्ते पूर्णप्रज्ञेति। विवक्षितार्थतत्वज्ञानादिवता मुनिना करणपाटवादिदोषरहितेन पूर्णप्रज्ञनामकाचार्येण सर्वशास्त्रं पूर्णविष्णुविषयं सर्वप्रमेयविषयं वा तद् ब्रह्ममीमांसाशास्त्रं तदर्थस्य संग्रहः। अयं बुद्धिवाग्गतः कृतः संकुच्य पिंडीकृत्य बुध्यारोहार्थमुक्त इत्यर्थः। तेन मत्कृतेन ग्रंथेन रमापतिः रमायुतः परमात्मा सर्वस्वामी विष्णुः प्रीयतां प्रीतः स्यादित्यर्थः।

**गूढकर्तृक –** स्वकृतग्रन्थस्वरूपं तस्याप्तिमूलत्वं च दर्शयन् तेन विष्णुप्रीतिमाशास्ते **पूर्णप्रज्ञेन** इति। विवक्षितार्थतत्वज्ञानवता मुनिना करणापाटवादिदोषरहितेन पूर्णप्रज्ञनामकाचार्येण सर्वशास्त्रं पूर्णं विष्णुविषयं सर्वप्रमेयविषयं ब्रह्ममीमांसाशास्त्रं तदर्थस्य संग्रहः अयं बुद्धिवाग्गतः कृतः संकुच्य पिंडीकत्य बुद्ध्यारोहार्थमुक्त इत्यर्थः। तेन ग्रंथेन मत्कृतेन मे रमापतिः रमया युक्तः परमात्मा सर्वस्वामी विष्णुः प्रीयतां प्रीतस्स्यादित्यर्थः।

**अणुभाष्यम्**

**नमो नमोऽशेषदोषदूरपूर्णगुणात्मने ।**
**विरिंचशर्वपूर्वेड्य वन्द्याय श्रीवराय ते ॥९॥**

**सत्यनाथीया–** एवं समाप्तभाष्यः भगवान् आचार्यवर्यः शिष्यशिक्षणाय अन्ते अपि सदा स्वान्तर्दृष्टहरिं सम्बोध्य क्रियासमभिव्याहारेण स्वकृतग्रन्थोक्तगुणकं प्रणमति **नमो नम** इति। हे विरिंचशर्वपूर्वेड्य स्तुत्य अशेषदोषेभ्यो दूर हे नारायण पूर्णगुणात्मने स्वस्वरूपदेहाय श्रीवराय लक्ष्मीपतये नमः

**।। इति श्री सत्यनाथमुनिविरचिताणुभाष्यविवरणे चतुर्थाध्यायस्य चतुर्थः पादः श्रीकृष्णार्पणमस्तु ।।**

**तत्वमञ्जरी–** एवं समापितभाष्यो भगवान् शिष्याणामादरातिशयजननाय ग्रन्थाल्पत्वेऽप्य-र्थाधिक्यं दर्शयन् कृतग्रन्थमीश्वरे अर्पयति – **पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः। कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः।** परमात्मा परमचेतनः इत्युक्तं व्यञ्जयन् आदरातिशयेनान्तेऽपि तदुक्तगुणवैशिष्ट्येन भगवन्तं नमति – **नमो नमोऽशेषदोषदूरपूर्णगुणात्मने । विरिञ्चशर्व-पूर्वेड्यवन्द्याय श्रीवराय ते** इति।

पूर्वार्धेन पूर्वाध्यायद्वयार्थः। उत्तरार्धेन वन्द्यत्वोक्त्या सर्वाभीष्टदातृत्वस्यापि लाभेन उत्तराध्यायद्वयार्थोऽप्युपात्त इति ।।७।।

**पूर्णचित्सुखदेहाय दोषदूराय विष्णवे।**
**नमः श्रीप्राणनाथाय भक्तमुक्तिप्रदायिने ।।**

**सुधीन्द्रगुरुशिष्येण राघवेन्द्रेण भिक्षुणा।**
**कृतायां तत्वमञ्जर्यां तृतीयोऽध्याय ईरितः।।**

**संक्षेपभाष्यविवृतिः या कृता तत्वमञ्जरी ।**
**तया दयालुर्लक्ष्मीशः प्रीयतां मध्ववल्लभः।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्राणुभाष्यस्य विवृतौ राघवेन्द्रयतिकृतायां तत्वमञ्जर्याख्यायां चतुर्थाध्यायस्य चतुर्थः पादः ।।**

**आनन्दमाला –**

यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बलादौ।
दशप्रमत्याख्यतृतीयरूपी संक्षेपभाष्यं कृतवान् रमेशे।।

सम्प्रीयतां तेन कृतेन सोऽयं रमापतिर्मे परमेष्टदेवः।
विरिञ्चवाणीविपवासवानां परात्पराणामपि यः परात्मा।।

अज्ञानदुःखप्रमुखैः समस्तैर्दोषैर्विहीनाय गुणार्णवाय।
विरिञ्चशर्वेन्द्रमुखैरपीड्य नमो नमः श्रीरमणाय तुभ्यम् ।।

सत्सौख्यविज्ञानपुरोगपूर्ण गुणैकदेहाय पुमर्थदोग्ध्रे।
अशेषवन्द्याय विशेषतो मे व्यासाय देवाय नमो नमस्ते।।

आपादतलमस्तिष्कं निभृतानन्दचिद्घनः ।
नारायणो रमानाथो रमतां मे मनोरथे ।।१ ।।

नन्दयन्मन्दहासेन सुन्दरीमिन्दिरां हरिः ।
अमन्दानन्दनिष्यन्दी रमतां मे मनोगृहे ।।२ ।।

दोर्दण्डख(ण्डिता) रातिः पालयन् भुवनत्रयम् ।
आनन्द ....................रे ।।३ ।।

ज्ञानिभिर्हृदयाम्भोजे निर्मले रत्नविष्टरे ।
दृष्टं निविष्टं मुख्येष्टं सन्दिदृक्षे रमेश्वरम् ।।४ ।।

नन्तारोऽनन्तगरुडब्रह्मरुद्रपुरोगमाः ।
यस्यामुं सततं देवं शुश्रूषेहं रमावरम् ।।५ ।।

सत्सूत्रनिकरार्थो यः सर्ववेदार्थबृंहितः ।
तं सद्भिः प्रोदितं सन्तं प्रविविक्षे रमापतिम् ।।६ ।।

येनायं सकलोऽप्यर्थो भाषितोऽप्यनुभाषितः ।
प्रोदितश्चापि तं मध्वं प्राणेशं प्रणमाम्यहम् ।।७।।

विष्णोः प्रसादैकबलात् सर्वशास्त्रार्थसंग्रहम् ।
यश्चकार नमस्तस्मै पूर्णप्रज्ञाय नित्यशः ।।८ ।।

यत्प्रसादप्रासारेण दारुयोषेव मे मतिः ।
तट्टीकां रचयामास लेशेनापि सुदुष्कराम् ।।९ ।।

इमामानन्दमालाख्यां स्वरूपानन्दमालिने ।
दीपमालामिवात्यल्पां जगद्दीपांशुमालिने ।।१० ।।

सुरैः सम्पद्भिरर्च्याय मानुषैरम्बुविप्लुषा ।
समर्पयामः पूर्णाय विष्णवे सर्वजिष्णवे ।।११ ।।

आ मेरोराण्डभाण्डात्सुरवरनिकरास्थानसंस्थानमान्यात्
अन्यान्यानेकविद्वत्प्रवरशतशतीकीर्तिकर्पूरपूरात् ।
आग्रंथादार्द्धवर्णाद् रथचरणधरार्थाद् विशेषैः समर्थात्
क्वासौ वादीन्द्रसिंहः पटुतम उत यः खण्डयेन्मध्वशास्त्रम् ।।१२ ।।

आ देवादा च मर्त्याद्बहुदिवसमणेः ...........प्रभायां
को वा वादीन्द्रसिंहः कविकुलतिलकः कोऽथवा मध्वशास्त्रे ।
जल्पे जाज्वल्यमानो ..........पक्षपाती
जिज्ञासुर्ज्ञानसारं सकलमनुपिबेन्मानुषो वा लयाब्धिम् ।।१३ ।।

**आब्जोत्थादा प्रधानात्सकलचिदचितो भाविताः सत्पदार्थाः**
**क्षुद्रार्थं वै दिशेयुः परपुरुषवशा ह्यातृणादा करीषात् ।**
**सर्वेषां योग्यसृष्टिस्थितिलयनियमाज्ञानदृग्बन्धमोक्षं**
**कुर्यादेकः स्वतन्त्रो हरिरिति सुमते तच्च शास्त्रं प्रमाणम् ।।१४।।**

**सत्यं सत्यं तदित्थं शपथशतयुतं वच्मि हस्तावुदस्तौ**
**स्तव्यस्तोक्तिरास्तां शृणुत शृणुत हे मानवा मावमान्य ।**
**स्वामी सर्वस्य विष्णुः क्वचन च सदृशो नाधिकस्तस्य हि स्यात्**
**सत्ये भातीति सत्यं श्रुतिपतिलिखिता वैजयन्ती जयन्ती।।१५।।**

**वन्दे विष्णुं सुरेशं स्वजनपरिवृतं तांश्च वन्दे क्रमेण**
**श्रीभूरूपां तदिष्टामथ विधिपवनौ तत्प्रिये वाग्द्युदेव्यौ।**
**पक्षीशाहीशरुद्रांस्तदुदितदयिता याः सुपर्ण्यादिसञ्ज्ञाः**
**शक्रादीन् काममुख्यानपि सकलसुरान् तद्गुरून् मद्गुरूंश्च ।।१६।।**

**नमस्ते श्रीशास्तु प्रियतम समस्तादपि सदा**
**नमस्ते प्राणेश प्रणतसुरसङ्घेष्ट शुभद।**
**नमस्तद्दासा वः परमगुरवस्तत्वमतिदा**
**नमस्तद्दासा वः पुनरिति गुरुभ्यो मुहुरपि ।।१७।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीब्रह्मसूत्रसंग्रहभाष्यस्य टीकायां त्रैविक्रमार्यदासकृतावानन्दमालायां चतुर्थाध्यायस्य चतुर्थः पादः ।। चतुर्थोध्यायः समाप्तः।**

**नरसिंह –** एवं समाप्तभाष्यो भगवानाचार्यवर्यः शिष्यशिक्षणायान्तेऽपि सदा स्वान्तर्दृष्टहरिं सम्बोध्य क्रियासमभिव्याहारेण स्वकृतग्रंथोक्तगुणकं प्रणमति **नमो नम** इति। एतद्ग्रन्थप्रतिपाद्यगुणविशिष्टत्वेन भगवन्नतिस्तुतिरूपं मंगलमाचरति **नमो नम** इति । द्विरुक्तिरादरार्था। अशेषदोषैः दूराः तदसमानाधिकरणा इति यावत् । पूर्णाः निरवधिकाः अशेषदोषदूराश्चते पूर्णगुणाश्च त एवात्मा स्वरूपं यस्य स तथोक्तः। विरिंचश्च शर्वश्च तौ पूर्वौ एषां ते तथा तै ईड्यः स्तुत्यश्चासौ वन्द्यश्च तथा तस्मै । यद्वा विरिंचशर्वपूर्वैः यदीड्यं स्तुत्यं श्रीतत्वं तेन वन्द्याय नम्याय स्तुत्याय चेति । लक्ष्मीवन्द्यत्वे हेतुः **श्रीवराय** इति। श्रीयः उत्तमायेत्यर्थः। तैरुत्तमत्वात्तद्वंद्यत्वम् । युक्तमिति भावः। अपरोक्षीकृतभगवत्वात्त इत्यपरोक्षनिर्देश इति। श्री।।

**मध्वहृद्गो भगवान् प्रीयतां तेन यत्सदा।**
**नृसिंहेनाणुभाष्यस्य कृतं भावप्रकाशनम् ।।**

।। इति श्री अणुभाष्यभावप्रकाशने चतुर्थोध्यायः।। श्रीकृष्णार्पणमस्तु।।

**श्रीनिवासतीर्थीया–** अथ सर्वज्ञचूडामणिराचार्योऽपि क्रियासमभिहारेण शास्त्रोक्तगुणकं श्रीपतिं प्रणमति **नमो नम** इति। हे अशेषदोषदूर सकलदोषात्यन्ताभावाधार । विरिंचिशर्वपूर्वेड्यस्तुत्य विष्णो पूर्णगुणाश्रय। वन्द्याय स्तुत्याय श्रीवराय लक्ष्म्युत्तमाय ते तुभ्यं नमो नम इत्यन्वयः। निर्दोषादिविशिष्टो विष्णुः मीमांसाशास्त्रप्रतिपाद्य इत्यनेनाभिप्रेति इत्यशेषमतिमंगलम् ।

**गुणपूर्णं दोषदूरं ज्ञेयं गम्यं नमो हरिम् ।**
**यादवाचार्य हृत्पद्मस्थितश्रीमध्वहृद्गतम् ।।**

**अणुभाष्यं मया श्रीनिवासेन विवृतं गुरोः।**
**यादवाचार्यसन्नाम्नः कृपामालम्ब्य लेशतः।।**

**तेन प्रीतो मयि हरिर्यद्दद्यात्सा फलं गुरोः।**
**दद्यादशेषं सर्वज्ञोपास्योऽयं बादरायणः।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभाष्यस्य टीकायां श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां चतुर्थाध्यास्य चतुर्थ पादः।।।**

**छलारी –** अथ स्वस्वरूपप्रतिपादनेनैव ग्रंथो न परिसमापनीय इत्याशयेन अन्तेऽपि मङ्गलाचरणस्य आवश्यकत्वात् एतद्ग्रंथप्रतिपाद्यगुणविशिष्टतया भगवन्नतिस्तुतिरूपमङ्गलमाचरति। **नमो नम** इति। द्विरुक्तिरादरार्था । अशेषदोषैः दूराः तदसमानाधिकरणा इति यावत् । पूर्णाः निरवधिकाः गुणाः एव आत्मा स्वरूपं यस्य स तथा तस्मै । विरिञ्चशर्वपूर्वैः ईड्यः स्तुत्यः इति सम्बुद्धिः। अथ वा विरिञ्चशर्वपूर्वेड्यैः वन्द्यायेत्यर्थः। वन्द्याय ज्ञेयाय गम्याय चेत्यर्थः। धातूनामनेकार्थत्वात् । यद्वा विरिञ्चशर्वपूर्वैः ईड्याय वन्द्यायेत्यर्थः। ब्रह्मादयः तत्त्वज्ञानार्थं भगवन्नत्यादिकं कुर्वन्तीति यावत् । श्रीवराय, श्रियः सर्वाभीष्टदात्र्याः लक्ष्म्याः वराय उत्तमायेत्यर्थः। सर्वदा अपरोक्षीकृतभगवत्त्वात्त इति अपरोक्षनिर्देशः। पूर्वार्धेन पूर्वाध्यायार्थः। उत्तरार्धेन उत्तराध्यायद्वयार्थोऽपि प्रदर्शित इति अशेषमिति मङ्गलम् ।

प्रत्यध्यायं प्रतिनयं प्रतिपादं च वर्णशः।
वासुदेवादिरूपेण प्रोक्तो विष्णुः प्रसीदताम् ।।

मदाचार्यमनोधाममध्वमानसमञ्चके।
शयानः श्रीधराश्लिष्टः तुष्येन्मत्कृतितो हरिः।।

बहुग्रंथान् समालोच्य बहुज्ञैः संविचार्य च ।
कृतत्वात् बुद्धिशुद्ध्यर्थं कृपयन्तूत्तमा मयि।।

**छलारिनरसिंहार्यशिष्यशेषविनिर्मिता ।**
**अणुभाष्यस्य टीका स्यात् सतां सन्तोषकारिणी ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद् ब्रह्मसूत्राणुभाष्यस्य टीकायां श्रीमच्छलारीनरसिंहाचार्यस्य निजशिष्येण शेषेण विरचितायां तात्पर्यप्रकाशिकायां चतुर्थाध्यायस्य चतुर्थः पादः ।।**
**चतुर्थाध्यायश्च समाप्तः ।। श्रीकष्णार्पणमस्तु ।।**

**नारायणाचार्य-** एवं समापितग्रंथो भगवानाचार्यो ग्रंथनिर्माणेनाशंसितपरमप्रीत्या प्रत्यक्षीभूतस्य भगवतो ग्रंथप्रतिपाद्यगुणवत्तया स्तवनमत्यादरेण नमनरूपं मंगलमाचरति। **नमो नमोऽशेषदोषदूरपूर्णगुणात्मने। विरिंचिशर्वपूर्वेड्य वन्द्याय श्रीवराय ते** इति । अत्राद्यविशेषणेन गुणपूर्णत्वनिर्दोषत्वविशिष्टो भगवानिति आद्यद्वितीयाध्यायोऽर्थो वर्णितः। द्वितीयविशेषणेन मुमुक्षुपास्यत्वेन तृतीयाध्यायार्थविशिष्टः। सकलभाग्यदेवतायाः श्रियोऽपि पतित्वोक्त्या सकलपुरुषार्थप्रदत्वरूपचतुर्थाध्यायप्रमेयविशिष्टत्वेनापि स्तुतः। (भक्ति)तदुत्पादनाय द्विरुक्तिर्नमोनम इत्यशेषमतिमंगलम् ।

**संसारकालानलकीलकीटं योनोद्धृतं वागमृतेन विश्वम् ।**
**सोऽयं जगन्मंगलदावतारः प्रीतोऽस्तु नः सत्यवतीकुमारः।**

**अज्ञानाद्वा प्रमादाद्यदचरीकृमचापलम् ।**
**तद्भक्तकरुणासिन्धुश्चक्षमीडे गुरुः स नः ।।**

**पूर्णप्रज्ञमुनीन्द्रसागरसमुद्धूताणुभाष्यस्फुरत्**
**वाग्रत्नानि विधाय कृष्णादयिते प्रोतानि सूत्रेंजसा।**
**मालेयं गुरुभक्तितो विरचिता नारायणाख्यायुजा**
**तामेतां हृदये निधाय सदये प्रीतोऽस्तु लक्ष्मीपतिः।**

**।। अनेन सकलदुरितनिवारकश्रीहनुमभीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-श्रीभूवराहात्मकश्रीलक्ष्मीनरसिंहः प्रीतो भवतु ।।**

**मळगी –** ग्रंथसमाप्तावपि मंगलमाचरति नमो नम इति। आदराद्विरुक्तिः अशेषदोषदूरपूर्ण-गुणात्मने। अशेषाश्च ते दोषाश्च ते तथा। चिन्तासंतापपारतन्त्र्यादयः तैः दूरास्ते च ते पूर्णगुणाश्च । त एवात्मा स्वरूपं यस्य स तथा तस्मै। यद्वा अशेषाः दोषाः येषु ते तथोक्ताः। हरिविमुखा इति यावत् । तेषां दूरः अविषयः। पूर्णाः ये गुणा ज्ञानानन्दादयः त एव आत्मा स्वरूपं यस्य स तथा अशेषदोषदूरश्चासौ पूर्णगुणात्मा चेति स तथा तस्मै । पुनः कीदृशाय **विरिंचशर्वपूर्वेड्यवंद्याय**। विरिंचिश्च शर्वश्च तावेव पूर्वो येषां ते तथोक्ताः। ते च ते ईड्याश्च तैः वंद्याय। वदि अभिवादनस्तुत्योरित्यस्मात् नम्याय स्तुत्यायेति वा । यद्वा विरिंचिशर्वौ ब्रह्मरुद्रौ

तौ पूर्वौ येषामिन्द्रादीनां ते तथा तैरीड्यः स्तुत्यः स चासौ वन्द्यश्चेति स तथा। तस्मै श्रीवराय श्रीयः लक्ष्म्याः वराय श्रेष्ठाय लक्ष्मीपतये इत्यर्थः। ते तुभ्यं **नमो नमः** अनन्तप्रणतयः ।।९।।

**कृष्णद्वैपायनाचीर्णसूत्रसत्तनुभाष्यकम् ।**
**यन्मोदतीर्थरचितं तद्व्याख्याकंजमालिका ।।**

**रचिता सज्जिता चेयं सुब्रह्मण्येन सादरम् ।**
**लसत्कौस्तुभाभासिग्रीवायां मुरवैरिणः ।।**

**मन्दोपकृतये व्याख्या कृता मन्दमनीषिणा ।**
**विद्वत्केसरिनिन्द्यापि किं भवेत्फेरुनिन्दिता ।।**

**......कञ्जमाला हरेः प्रिया ।**
**सुब्रह्मण्यार्यरचिताणुभष्यविवृतिश्शुभा ।।**

प्राचीनानेकमहाविवृतिकृदाचार्यप्रदर्शिताध्यायचरणाधिकरणसंगत्यादिसर्वहृदयं स्वतो जानन्तः प्राज्ञाः निःशेषमेतावतैव जानन्त्यज्ञा न कथमपीत्यतस्तेषां तत्तत् हृदयप्रबोधनप्रयत्ने महानायासो ग्रन्थबाहुल्यं चेति भियैतरत्रोक्तानां तत्संगत्यादीनां न कृतं प्रदर्शनम् । अपि च प्रासंगिकत्वेनावश्योदाहर्त्तव्यान्यनेकप्रमाणान्यप्युक्तभियैव प्रायशस्तत्र तत्र संकुचितानीत्यतीव सन्तोष्टव्यमित्यभ्यर्थना ।।

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रश्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिताणुभष्यकंजमालिकायां सुब्रह्मण्यविरचितायां चतुर्थाध्यायस्य चतुर्थः पादः ।।**

**लिंघेरी** – ग्रंथसमाप्तावपि मंगलमाचरति **नमो नम** इति। आदराद्विरुक्तिः । **अशेषदोषदूरपूर्णगुणात्मने** अशेषाश्च ते दोषाश्च अशेषदोषाः, तैः अशेषदोषैः दूराः, अशेषदोषदूराश्चते पूर्णगुणाश्च अशेषदोषदूरपूर्णगुणाः, अशेषदोषदूरपूर्णगुणा एव आत्मा स्वरूपं यस्य सः । तस्मै श्रीवराय । ते नमो नमः। कीदृशाय ते ? **विरिंचिशर्वपूर्वेड्यवंद्याय** विरिंचिश्च शर्वश्च विरिंचिशर्वौ, विरिंचिशर्वाविव पूर्वौ येषां ते तथोक्ताः। पूर्वाश्च ते ईड्याश्च पूर्वोड्याः पूर्वेड्यैर्वन्द्यः। तस्मै ।।९।। श्रीरामचन्द्रप्रसीद।

**लिंघेरीश्रीनिवासेन रुग्मिणीशार्यसूनुना ।**
**व्याख्यानं त्वणुभाष्यस्य कृतं श्रीहरितुष्टये ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य लिंघेरीश्रीनिवासकृतं व्याख्यानं समाप्तमभवत् ।**

**नारायणपण्डित–** एवं समापितभाष्यो भगवानाचार्यः शिष्यशिक्षणायान्तेऽपि सदा स्वान्तर्दृष्टं हरिं सम्बोध्य क्रियासमभिहारेण स्वकृतग्रन्थोक्तगुणकं प्रणमति **नमो नम** इति। हे विरिंचिशर्वपूर्वकैरीड्य स्तुत्य अशेषदोषेभ्यो दूर हे नारायण पूर्णगुण स्वरूपदेहाय श्रीवराय लक्ष्मीपतये सर्वैः वन्द्याय ते तुभ्यं नमो नम इत्यन्वयार्थः।

अनेन सर्वदोषरहितः सर्वगुणपरिपूर्णः विरिंचादिदेवैस्तुत्यः नमस्कार्यः लक्ष्मीपतिर्विष्णुः स्वामी इति ध्येय इत्यादिमाहात्म्योपेतो ब्रह्ममीमांसाशास्त्रप्रतिपाद्यः इति सद्भिः सदा स्तुत्यो नाऽन्यश्चेत्युक्तं भवतीत्यशेषमतिमंगलम् ।

**नारायणेन विदुषा ह्यणुभाष्यार्थसंग्रहः ।**
**कृतस्त्वनेन भगवान् प्रीयतां मे रमापतिः ।।**

**।। इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणुभाष्यस्य श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्यार्थसंगहे नारायणपंडिताचार्यविरचिते चतुर्थाध्यायस्य चतुर्थपादोऽध्यायश्च समाप्तः।।**
**।। श्रीकृष्णार्पणमस्तु ।।**

**गूढकर्तृक** – एवं समापिताणुभाष्यो भगवानाचार्यो शिष्यशिक्षणाय अन्तेऽपि सदा स्वांतहृष्टं हरिं सबोध्य क्रियासमभिहारेण स्वकृतग्रंथोक्तगुणकं प्रणमति **नमो नम** इति। हे विरिंचशर्वपूर्वकैः **ईड्य** स्तुत्य अशेषदोषेभ्यः दूर हे नारायण पूर्णगुणस्वरूपदेहाय श्रीवराय लक्ष्मीपतये सर्वैः वन्द्याय ते तुभ्यं नमो नम इति ।श्रीः।

अनेन सर्वदोषरहितः सर्वगुणपूर्णः पद्मापद्मभवादिवृन्दारकैन्द्रैः स्तुत्यो नमस्कार्यः। लक्ष्मीपतिर्विष्णुः मम स्वामी सर्वस्वामीति ध्येयः। इत्यादिमाहात्म्योपेतो ब्रह्ममीमांसाशास्त्रप्रतिपाद्यो नारायणः सद्भिः सदा स्तुत्यो नम्यश्चेति उक्तं भवतीत्यशेषमतिमंगलम् ।

**।। श्रीकष्णार्पणमस्तु। सर्वज्ञगुरवे नमः।।**

# श्लोकार्धानुक्रमणिका


अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः ........................................ 459
अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ........................................ 405
अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ........................................ 433
अवान्तरं कारणं च प्रकृतिश्शून्यमेव च ........................................ 128
अव्यक्त कर्मवाक्यै(च्यै)श्च वाच्य एकोऽमितात्मकः ........................................ 116
असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् ........................................ 153
आकाशादिसमस्तं च तज्जं तेनैव लीयते ........................................ 190
इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः ........................................ 128
उक्ता गुणाश्चाविरुद्धास्तस्य वेदे न सर्वशः ........................................ 248
उच्यते विष्णरेवैकः सर्वैस्सर्वगुणत्वतः ........................................ 43
उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात्सुराः ........................................ 422
उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः(वायुर्विमुक्तिगः) ........................................ 414
उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम्(क्रमम्) ........................................ 309
कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् ........................................ 392
कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः ........................................ 466
गुणदोषैस्सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ ........................................ 362
जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते ........................................ 444
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ........................................ 1
ज्ञेयो न वेदैः शूद्राद्यैः कम्पकोऽन्यस्य जीवतः ........................................ 99
ज्ञेयो विष्णुर्विशेषश्च ज्ञाने स्यादुत्तरोत्तरम् ........................................ 309
तदाभासो हरिः सर्वरूपेष्वपि समः सदा ........................................ 205
तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ........................................ 280
दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम् ........................................ 459
देवतावचनादापो वदन्तीत्यादिकं(दिना) वचः ........................................ 149
न तद्विरोधाद् वचनं वैदिकं शंक्यतां(शंकितां) व्रजेत् ........................................ 173
न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् ........................................ 362
नमो नमोऽशेषदोषदूरपूर्णगुणात्मने ........................................ 468
नायुक्तवाद्यसन्नैव कारणं दृश्यते क्वचित् ........................................ 149
नारायणं गुणैसर्वैरुदीर्णं दोषवर्जितम् ........................................ 1
निषेद्धुं शक्नुयुर्वेदा नित्यत्वान्मानमुत्तमम् ........................................ 142
नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ........................................ 362
पतित्वादिगुणैर्युक्तः तदन्यत्र च वाचकैः ........................................ 100
पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसंग्रहः ........................................ 466

प्रणेता ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु ........ 43
प्रविश्य भुंजते भोगांस्तन्दतर्बहिरेव वा ........ 414
प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः ........ 405
भ्रान्तिमूलतया सर्वसमयानामयुक्तितः(क्तता) ........ 173
भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ........ 160
मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् ........ 252
मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः ........ 116
मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा ........ 226
मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः ........ 226
यथाक्रमं बहुगणैर्ब्रह्मणा त्वखिलैर्गुणैः ........ 309
यथासंकल्पभोगांश्च चिदानन्दशरीरिणः ........ 444
याति तस्माद्विरक्तस्सन् ज्ञानमेव समाश्रयेत् ........ 252
यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात्सहामुना ........ 433
वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः ........ 153
वायुर्विष्णुं प्रविश्यैव भोगांश्चैवोत्तरोत्तरम् ........ 422
विना स्वाभाविकोत्तमान् ........ 459
विरिंचशर्वपूर्वेड्य वन्द्याय श्रीवराय ते ........ 468
विश्वजीवान्तरत्वाद्यैर्लिंगैस्सर्वैर्युतस्स हि ........ 46
विष्णुरेव विजिज्ञास्यस्सर्वकर्ताऽऽगमोदितः ........ 11
विष्णुर्ब्रह्म तथाऽऽदातेत्येवं नित्यमुपासनम् ........ 392
शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः ........ 128
शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा ........ 252
श्रौतस्मृतिविरुद्धत्वात्स्मृतयो न गुणान्हरेः ........ 142
सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः(सुरादिकैः) ........ 309
समन्वयादीक्षतेश्च पूर्णानन्दोऽन्तरः खवत् ........ 11
सर्वगोऽत्ता नियन्ता च दृश्यत्वादुझ्झितः सदा ........ 56
सर्वदेशेषु कालेषु स एक परमेश्वरः ........ 280
सर्वदोषोझ्झितस्तस्माद्भगवान् पुरुषोत्तमः ........ 248
सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान् ........ 280
सर्वाश्रय पूर्णगुणः सोऽक्षरः सन् हृदब्जगः ........ 77
सर्वेऽपि पुरुषार्थास्स्युर्ज्ञानादेव न संशयः ........ 362
सूर्यादिभासकः प्राणप्रेरको दैवतैरपि ........ 77
सोऽनुत्पत्तिलयःकर्ता जीवस्तद्वशगः सदा ........ 205
स्वातन्त्र्यात्सर्वकर्तृत्वान्नायुक्तं तद्वेच्छ्रुतिः ........ 159